॥ अर्हम् ॥

श्रीलब्धिसूरीश्वरजैनग्रन्थमालायाः पञ्चत्रिंशत्तमो मणिः [ ३५ ]

तार्किकशिरोरत्नवादीन्द्रश्रीमल्लवादिक्षमाश्रमणविरचितम्

# द्वादशारनयचक्रम् ।

तर्कागमपारङ्गतश्रीसिंहसूरगणिवादिक्षमाश्रमणसन्दृब्धया
न्यायागमानुसारिणी-व्याख्यया विभूषितम् ।



एतस्य

व्याख्याधारेण मूलं विशोध्य, विषमपदविवेचनाख्यव्याख्यया
चालङ्कृत्य सम्पादकः संशोधकश्च

आचार्यश्रीमद्विजयलब्धिसूरीश्वरः ।



तस्य चायं
सप्तम-अष्टमारात्मकः
तृतीयो विभागः ।

प्रकाशयिता

छाणीस्थ-श्रीलब्धिसूरीश्वरजैनग्रन्थमाला-सञ्चालकः
शाहेत्युपाह्वः जमनादासात्मजश्चन्दुलालः ।



प्रथम संस्करणे ५०० प्रतयः

वीरसं० २४८३ आत्मसं० ६१ विक्रमसं० २०१३

मूल्यं षड् रूप्यकाः

*Shri Labdhisurishwar Jain Granthamala No. 35*

# THE DVADASHARANAYACHAKRAM

OF

## SRI MALLAVADI KSHAMASRAMANA

WITH

THE NYAYAGAMANUSARINI COMMENTARY

BY

SRI SIMHASURAGANI VADI KSHAMAŚRAMANA

**PART III**

Edited with

Critical Introduction, Index & Vishamapadavivechana

BY

ACHARYA VIJAYA LABDHI SURI





PUBLISHED BY

CHANDULAL JAMNADAS SHAH



SECRETARY SHRI LABDHI SURISWAR JAIN GRANTHAMALA

CHHANI ( BARODA DIST. )

*FIRST EDITION 500 COPIES*

*A. D. 1957* ] **PRICE 6 RUPEES** [ *V. S. 2013*

# धन्यवाद अने आभार



जैनतर्कशास्त्रना अतिमहत्त्वना आ ग्रन्थरत्न श्री द्वादशारनयचक्रना प्रथम अने द्वितीय भागने वांचकोना करकमलमां सादर कर्या पछी, आजे आ तृतीय विभाग समर्पित करतां अत्यन्त आनंद थाय छे. प्रथमना भागोनी जेम आ तृतीय भागने पण उंचा लेझर पेपरमां सुघड, स्वच्छ अने शुद्ध मुद्रणपूर्वक तैयार करवामां आव्यो छे. ग्रन्थमुद्रणमां वपरातां कागलो विगेरे साधनोनी मूल्यवृद्धि, कल्पनामां पण न आवे तेवी उंची सपाटीए रोज-ब-रोज वधतीज जाय छे. प्रथमना भागो करतां पण आ भागना मुद्रणमां आ कारणे घणो व्यय करवो पड्यो छे. आ भागना मुद्रणकार्य माटे, जे उदारचित्त श्रुतभक्त सज्जनोए, श्रुतभक्तिना अमारा आ महान अने पुनीत कार्यमा साहाय्य करी छे, तेमनां शुभनामो आ नीचे आपीने, अमे तेमने आभारपूर्वक धन्यवाद आपीये छीए. साहाय्य आपवा माटे प्रेरणा आपनार पू. गुरुभक्त श्रुतप्रेमी उपाध्यायजी श्रीमद् जयंतविजयजी गणिवरनो पण, अमे अनेकशः उपकार मानीए छीए.

**साहाय्यक सज्जनोनां शुभनामो आ प्रमाणे छे.**

**१००१ श्री जैनश्वेताम्बर संघ.**

( ज्ञानद्रव्यनी उपजमांथी )

**हा. शेठ आणंदजी मंगलजीनी जैन पेढी. इडर**

**३०१ इडरना श्रावीकाओना उपाश्रयनी उपजमांथी.**

**हा. शेठ आणंदजी मंगलजीनी जैन पेढी. इडर**

**२०० श्रीयुत् सोमचंदभाई पानाचंद खंभात**

वांचको यथायोग्य लाभ लई सौनो परिश्रम सफल करे.

**—प्रकाशक.**

# प्राक्कथनम्



अयि नैकविद्याविद्योतितान्तरङ्गाः वाणीनैपुण्यावधीरितत्रिदशाचार्याः साधुसमुदयशिरोऽलङ्कारा धीधनाः सूरयः!

भवतां पुरतः सुनिर्मलमेधासम्पत्तिपरिजृम्भमाणमनीषिजनविचारचातुरीसर्वङ्कषकर्कशतर्कालङ्कृताऽऽचार्य-श्रीमन्मल्लवादिक्षमाश्रमणपूज्यपादप्रतिभाफलद्वादशविधविध्यादिभङ्गात्मकनयचक्रशास्त्रग्रन्थस्य श्रीसिंहसूरगणिविरचि-तव्याख्यापरिभूषितस्य पर्यायार्थिकनयप्रभेदान्तर्गतविधिनियमोभयारोभयनियमारात्मक. तृतीयो भागः समुपस्थाप्यते।

अत्यन्तदुरवगाहदर्शनपयोराशिममुन्मथनसमदञ्चितपीयूषरसास्वादपुरस्सरतदीयहालाहलदूरीकरणकारण-जैनेन्द्रशासनभेषजावलम्बनोपदेष्ट्राचार्यवर्योपपादितसाधकबाधकप्रमाणप्रचुरसमुल्लसितस्यास्य नयचक्रशास्त्रस्य विधिनियमोभयनये उभयनियमनये च वैशेषिकसौगतमतशिक्षणात्मके तत्तत्पूर्वपक्षमतोपपादनाय कटन्दीग्रन्थः प्रमाणसमुच्चयश्च प्रधानतया परिगृहीतौ, तत्र कटन्दीग्रन्थ. प्रायेण प्रशान्तमतिनाविष्कृतोऽधुना वैशेषिकदर्शन-वेदितॄणामविदिताभिधानो दरीदृश्यते, न खलूदयनाचार्यादिवैशेषिकदर्शनप्रभञ्चकैरपि क्वचिदपि तद् ग्रन्थनाम निर्दिष्टम्, केवलमनर्घराघवनाटक एव तन्नाम रावणकर्तृकतया कविना रूपकीकृतमत एवास्माकं परिशोधनकर्मणि तदभावप्रयुक्ताऽनौचिती सम्भाव्येत, प्रमाणसमुच्चयो नाम दिङ्नागीयः प्रबन्धोऽपि मुद्रितप्रत्यक्षमात्रपरिच्छेदः पालीभाषायामेव सम्पूर्णो लिखित आस्त इति श्रूयते, तत कारिकाणामुद्धरणप्रयासो मया नादृतः, न हि ततोऽपि याथातथ्येन समुद्धृता भवन्ति कारिका इति प्रमाणीकर्तुं पार्यते, एकस्य पालीपदस्य छायारूपेणानेकसंस्कृतपदस-म्भवात्, तत्रापि तर्क एवाश्रणीयः स्यात, अतो वयं केवलं टीकाप्रस्तावानुरोधेनैव यावच्छक्यं तावत् प्रतर्क्य निष्कासिताः कारिकादय, तत्र मदीयपरिशोधनानुसारेण पर्यायार्थिकनयप्रभेदसप्तमाष्टमारयोर्मूलकृता परिगृही-तानि परवचनानि आगमानि चेत्थम्—

अनुमितमूले उपन्यस्तपरवचनान्यागमानि च यथा—

अगणिझूसिता अगणिसेविय अगणिपरिणामिता अगणिजीवसरीरेति वत्तव्वं सियत्ति भ० श० ५ उ० २. सू० १५

अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे कौ० उ० २. ११

तैरारब्धे कार्यद्रव्ये नियमत एव गुणान्तरमारभन्ते (                )

वर्त्तमानसामीप्ये वर्त्तमानवद्वा (पा० अ० ३ पा० ३ सू० १३१)

शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते (                )

आता भंते! परमाणुपोग्गले णो आता, गोयमा! सिया आता परमाणुपोग्गला, सिआ णो आता, से केणट्ठेणं भंते! एवं वुच्चइ सिआ आता, सिआ नो आता, गोयमा! अप्पणो आदिट्ठे आता, परस्स आदिट्ठे णो आता (भ० श० १२ उ० १० सू० १६–२४)

वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ( वाक्य० कां० १ श्लो० १४३ )

सव्वजीवाणंपिय णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ ( नं० सू० ५१ )

अनेकार्था धातवः (                    )

आगमतो जाणए अणउवत्ते दव्वसुतं ( अनु० ३२ सू० )

नहि मूर्त्तममूर्त्तत्वं नामूर्तं याति मूर्त्तताम् । द्रव्यं त्रिष्वपि कालेषु नात्मभावं जहाति हि ॥ (          )

द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्, ( पा० १–४–२१–२२ )

प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्रधानम्, ( महाभा० ३–१–६७ )

प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव प्रकृतिः, ( महाभा० ३–१–२ )

आधारोऽधिकरणम् ( पा० १–४–४५ )

यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहारकाले ।

सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥ ( महाभा० १–१ पस्पशा )

क्रियाकारकभेदेन                    (                    )

वाग्दिग्भूरश्मि                    (                    )

अर्थप्रवृत्तितत्त्वानां शब्दा एव निबंधनम् । तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥ ( वाक्य० कां० १ श्लो० १३ )

सोऽयमित्यभिसम्बन्धाद्रूपमेकीकृतं यदा । शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥ ( वाक्य० कां० श्लो० १३० )

तयोरपृथगात्मत्वे रूढेरव्यभिचारिणि । किंचिदेव कचिद्रूपं प्राधान्येनावतिष्ठते ॥

लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्त्तते । शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥ ( वाक्य० कां० श्लो० १३१–१३२ )

अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता । एकस्यार्थस्य नियता क्रियादिपरिकल्पना ॥ ( वाक्य० कां० २ श्लो० १३३ )

वृद्धिरादैच् ( पा० १–१–१ )

यथार्थाभिधानञ्च शब्दः ( तत्त्वा० भा० प्र० १ सू० ३५ )

यत्र ह्यर्थो वाचं व्यभिचरति नाभिधानं तत् ( तत्त्वार्थभाष्यटी० )

णामं ठवणा दविये त्ति एस दव्वट्ठियस्स णिक्खेवो । भावोउ पज्जवट्ठियस्स परूवणा एस परमत्थो ( संम० कां० १–६ )

असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम् ( वाक्य० कां २ श्लो० १२९ )

न जातिशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् (प्रमा० सा० )

स्वलक्षणमनिर्देश्यं ( प्रमा० स० श्लो० ५ )

भेदो भेदान्तरार्थं तु विरोधित्वादपोहते ( प्रमा० स० )

नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात् सामान्यन्तूपदेक्ष्यते ( प्रमा० स )

अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात्, सामान्यादुपसर्जनात् ( ग्रंथकृत् )

विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः । विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिनः ॥ ( वाक्य० कां० ३ श्लो० )

तद्वतो नास्वतंत्रत्वाद्भेदाज्जातेरजातितः । ( प्रमा० स० )

मंचशब्दो यथाऽऽधेयं मंचेष्वेव व्यवस्थितः । तत्त्वेनाह तथापोहशब्दो द्रव्येषु वर्त्तते ॥ ( भर्तृहरिकारिकापरिवर्त्तनम् )

नापोहशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् ॥ ( प्रमा० स० )

न जातिशब्दो भेदानामानन्त्यव्यभिचारतः । वाचको नियमार्थोक्तेः सत्ताद्यर्थोऽप्यतो न सः ( परिवृत्य पाठः ) अयञ्च ( )

तन्मात्राकांक्षणाद्भेदः स्वसामान्येन नोज्झितः । नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः (प्रसा०स०)

भेदो भेदान्तरार्थं तु विरोधित्वादपोहते । सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः ( प्रमा० स० )

स्वार्थावबद्धशक्तिश्च भेदो भेदमपोहते । सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेः ॥ ( ग्रन्थकृतः )

अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात् । श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता ॥ (प्रमा० स०)

बहुत्वेऽप्यभिधेयस्य न शब्दात् सर्वथा गतिः । स्वसम्बन्धानुरूप्येण व्यवच्छेदार्थकार्यसौ ॥

अनेकधर्मा शब्दोऽपि................( प्रमा० स० )

अन्यापोहार्थनैर्मूल्यात्स्वार्थस्यांशेऽप्यदर्शनात् । श्रुतेः सम्बन्धसौकर्यात्तथापि व्यभिचारिता ॥ (ग्रन्थकृतः)

लिङ्गानुबन्धिनः स्वार्थाः.............( ग्रन्थकर्त्तुः )

नाप्रमाणान्तरं शाब्दमनुमानात्तथाहि तत् । कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत् ( ग्रंथकर्तुः )

किमङ्गं...............( )

सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः । आधाराधेयवद्वृत्तिः तस्य संयोगिवन्न तु ॥ ( प्रमा० स० )

लिङ्गं लिङ्गि भवत्येव लिङ्गिन्येवेतरत्पुनः । नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः ॥ ( प्रमा० स० )

कामं लिङ्गमपि व्यापि लिङ्गिन्यङ्गि न तत्त्वतः । व्यापित्वान्ननु तत्तस्य गमकं गोविषाणवत् ॥ ( प्रमा० स )

प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपोहते । लिङ्गे लिङ्गिनि च व्याप्तिस्तस्मात् सत्यप्यकारणम् ॥ ( प्रमा० स० )

नाशिनः कृतकत्वेन......( प्रमा० स० )

विषाणित्वेन गोव्याप्तिः............( प्रमा० स० )

तद्भावदर्शनादेव साध्यसाधनधर्मयोः । विधेः संयोगिवद्वृत्तिर्नाधाराधेययोरिव ॥ ( ग्रन्थकर्त्तुः )

एकस्मात् प्रत्यक्षात्............(                    )

कश्चिदर्थः कस्यचिदिंद्रियस्य प्रत्यक्ष· . .........अविशिष्टस्याग्नेरस्तित्वं प्रतिपद्यते । (                    )

न धर्मो धर्मिणा साध्यः सिद्धत्वात्तेन धर्म्यपि । धर्मेण धर्मः साध्यः स्यात् साध्यत्वाद्धर्मिणस्तथा ॥ (      )

साध्यत्वापेक्षया चात्र धर्मधर्मिव्यवस्था न गुणगुणित्वेनेत्यदोषः (                    )

तद्भावदर्शनानुबन्धेन हि बुद्ध्युत्पत्तिरनुमानम्        (                    )

यथालिङ्गमपि व्यापि लिङ्गिन्यप्यपि तत्तथा । व्यापित्वादुभयोर्लिङ्गलिङ्गिता गोविषाणवत् ॥ ( ग्रन्थकृतः )

*विधेयार्थप्रचारेण यस्माद्व्याप्तिरपेक्ष्यते । लिङ्गे लिङ्गिनि च व्याप्तिः तस्मात् सत्येव कारणम् ॥ (ग्रन्थकृतः )*

साध्ये नानुगमो हेतोः साध्याभावे च नास्तिता ।............( प्रमा० स० )

मूलग्रन्थसमुद्धरणकरणपरमौपयिकान्तर्गर्भीकृतनयचक्रशास्त्रविश्रुतयशोराशिनिखिलविद्याधुरन्धरसिंहसूरगणिवादिक्षमाश्रमणसन्दब्धन्यायागमानुसारिणीव्याख्योल्लसद्बहुप्रमाणवचनानि यथावसरं समुद्धरिष्यामः समुद्धरणकर्मण्यस्मिन्नपि निर्दिष्टप्रतिव्यतिरेकेण बहुशः प्रतयोऽक्षिलक्षीकृता अपि सर्वासु सदृशाशुद्धिगर्मतया प्रतिविशेषावलम्बनमत्र नादृतम्,

परिश्रमबाहुल्यसम्पादनीयेऽस्मिन् सम्यक्परिनिष्ठितमतीनामपि याथातथ्येन मनोविषयं कर्त्तुमक्षस्यास्य संशोधनादिविधेये तन्त्रसौष्ठवात् प्रमादादिजादोषाद्यत्रकुत्रापि स्खलनं भवेत्तद्गुणैकानुरागिण उदाराशया विद्वद्वरेण्याः प्रशान्तान्तरङ्गेण निभाल्य समीकृत्य च विचारयन्त्वित्याशास्यते

विजयलब्धिसूरिणा

न्यायागमानुसारिणीसमलङ्कृतस्य

# द्वादशारनयचक्रस्य विस्तरतो विषयक्रमः

## [ तृतीयो विभागः ]



- अथोभयनियमारः -

इति तृतीयभागस्यानुक्रमणिका समाप्ता

# श्रीलब्धिसूरीश्वरजैन ग्रन्थमाला

## प्रकाशित-ग्रन्थ-सूची



| | | |
|---|---|---|
| १ | जैनव्रतविधिसङ्ग्रह | ०-८-० |
| २ | हीरप्रश्नोत्तराणि | ०-१२-० |
| | श्रीपालचरित्रम् | भेट |
| ४ | तत्त्वन्यायविभाकरः ( मूलः ) | ०-८-० |
| ५ | पञ्चसूत्रम् | भेट |
| ६ | हरिश्चन्द्रकथानकम् | भेट |
| ७ | वैराग्यरसमञ्जरी | भेट |
| ८ | चैत्यवन्दनचतुर्विंशतिः | ०-२-० |
| ९ | विकुलकिरीट ( १ भाग ) | ०-८-० |
| १० | मूर्तिमंडन ( गुजराती ) | ०-४-० |
| ११ | मूर्तिमंडन ( हिन्दी ) | भेट |
| १२ | आरम्भसिद्धिः ( सटीका ) | २-८-० |
| १३ | तत्त्वन्यायविभाकरः ( सटीकः ) | ५-०-० |
| १४ | दीपालिकाकल्पः ( विनयचन्द्रसूरि ) | भेट |
| १५ | सम्मतितत्त्वसोपानम् | ५-०-० |
| १६ | सूत्रार्थमुक्तावली | ५-०-० |
| १७ | सकलार्हत्स्तोत्रम् ( सटीकम् ) | भेट |
| १८ | आत्मानन्दस्तवनावली | ०-४-० |
| १९ | धन्यनारी | भेट |
| २० | द्वादशारनयचक्रम् ( १ भाग ) | ६-०-० |
| २१ | प्रगतिनी दिशा | २-०-० |
| २२ | नूतनस्तवनाली | ४-०-० |
| २३ | श्राद्धविधिप्रकरण ( गुजराती ) | ५-०-० |
| २४ | श्रेयांसनाथचरित्रम् | भेट |
| २५ | जैनमतका स्वरूप | भेट |
| २६ | द्वादशारनयचक्रम् ( २ भाग ) | ६-०-० |
| २७ | आवश्यकमुक्तावली | भेट |
| २८ | भगवतीजी सूत्रनां व्याख्यानो ( १ भाग ) | ३-०-० |
| २९ | कविकुलकिरीट ( २ भाग ) | २-०-० |
| ३० | दीपालीका कल्पः ( जिनसुंदरसूरि ) | भेट |
| ३१ | मलयसुंदरीचरित्रम् | भेट |
| ३२ | अन्तरनां अजवालां | भेट |
| ३३ | सिद्धहैम-मध्यमवृत्तिः ( १ भाग ) | ६-०-० |
| ३४ | शान्तिश्लोकः ( सटीक ) | भेट |
| ३५ | भगवतीजी सूत्रनां व्याख्यानो ( २ भाग ) | ३-०-० |
| ३६ | स्तुतितरंगिणी ( १ भाग ) | ४-०-० |
| ३७ | द्वादशारनयचक्रम् ( ३ भाग ) | ६-०-० |
| ३८ | मुनिसुव्रतस्वामीचरितम् | ५-०-० |



## मुद्यमाण-ग्रन्थाः ।

ललितविस्तरा ( गुजराती अनुवाद )

# सप्तमो विधिनियमोभयम्

अथ विधिनियमविधिनियमनयः

इदानीं पर्यायनयप्रथमशिराप्रदिदर्शयिषयाऽनन्तरनिर्दिष्टवैशेषिकोभयविधिनिराचिकीर्षया चोत्तरः, समनन्तरानुलोमत्वात् पूर्वविरुद्ध[त्व]ान्निवृत्तिनिरनुशयत्वाच्च नयानामसत्कार्यवादमेव दूषयितुमाह—

**यद्यसत् कार्यं तर्हि न तदुत्पद्येत, असन्निहितभवितृकत्वात् खपुष्पवत्, खपुष्पमपि वोत्पद्येत, असन्निहितभवितृकत्वात् कार्यवत् ।**

**यद्यसदित्यादि,** आस्तां तावदसन्मतं पूर्वनयमतेनैवैतत्त्वद्दर्शनमनुपपन्नमिति ब्रूमः, द्रव्यार्थिकनयानां सन्निहितभवितृकभवनाभ्युपगमात्, नासत्कार्यमुत्पत्तुमर्हति, असन्निहितभवितृकत्वात्, खपुष्पवत्, खपुष्पमपि वोत्पद्येत, असन्निहितभवितृकत्वात् कार्यवत्, षट्पदार्थसंसर्गवादस्य सत्तासमवायबलेन प्रवृत्तत्वात् सत्तासमवायोन्मूलनात् तस्यैवोन्मूलनमित्यभिप्रायेणायं सत्तासमवायविचारप्रस्ताव इति ।

**खपुष्पं सत्त्वस्याश्रयो नास्तीति चेत्, इतरत्रापि तुल्यत्वात् कार्यस्य मृदोऽसत्त्वात् त्वन्मते पिण्डादेः कार्यसमत्वात्, असतः सत्तासमवायित्वात् ।**

एवं द्रव्यास्तिकनयान्निरूप्याथ पर्यायास्तिकनयान्निरूपयितुं पातनिकामाह—**इदानीमिति,** द्रव्यार्थिकनयनिरूपणोत्तरकालमित्यर्थः, 'नाडी तु धमनिः शिरा' इति कोशः, पर्यायनयषट्केषु शिरारूपेषु प्रथमशिरायाः प्रदर्शनसमीहयैव नयो निरूप्यत इति द्रव्यार्थिकनयनिरूपणेन महास्यावसरस्सङ्गतिः प्रदर्शिता, तथा द्रव्यार्थिकान्तिमनयेन पर्यायार्थिकप्रथमारम्भः सङ्गतिः मन्यते **अनन्तरेति,** नय आरभ्यत इति शेषः, उत्तरमिति वा पाठे नयमिति शेषः तस्याऽऽहेत्यनेन सम्बन्धः, पूर्वोपदर्शितो नयो वैशेषिकस्य सोऽहि षट्पदार्थसंसर्गवादी सत्तासम्बन्धात् द्रव्यादि सद्भवति परन्तु सत्ता तु स्वयमेव सती, एवञ्चासदपि पश्चात् सद्भवतीति स्वीकृतत्वात्तदेतन्मतं पूर्वं विस्तरत उपपादितं तदधुना निराक्रियते, असदुत्पन्नं सत् पश्चात् सत्तासम्बन्धात् सद्भवतीत्यभ्युपगमो न युक्तोऽसन्निहितभवितृकत्वात् खपुष्पादिवत्, सतोऽसतः सदसतो वा पश्चात्तदानीं वा सताऽसता सदसता वा सम्बन्धाभावात् सत्ताधीना सत्करत्वाभावाच्चासदुत्पत्तिस्वीकारस्यायुक्तेः प्रत्यन्तरूपमितरेतराभावलक्षणं वास्त्विति विधिनियमविधिनियमनयस्यास्य मतमत एवायं पूर्वनयविरोधीति भावः । नयानां स्वरूपं दर्शयति **समनन्तरेति,** द्वादशानां नयानां यथोदितानां पूर्वपूर्वनयापेक्षयोत्तरोत्तराणां सूक्ष्मविषयत्वात् समनन्तरानुपूर्विकत्वम्, पूर्वपूर्वनिराकरणात् पूर्वविरुद्धत्वं तत्राप्येकान्तताग्रहस्यैव निवर्त्तनेन सर्वथा निवर्त्तनेऽभिप्रायाभावाच्च निवृत्तिनिरनुशयत्वमिति भावः । द्रव्यार्थिकमतेषु कार्यकारणयोस्तादात्म्यात् भवितृ कार्यं कारणे द्रव्ये सदा द्रव्यात्मना सन्निहितमेव, वैशेषिकस्तु कार्यकारणयोस्तादात्म्यं नेच्छति, अत एव कारणे कार्यमसदेव केनापि रूपेणेति भवितृ न सन्निहितमतो नोत्पद्येतेत्याशयेनाह—**यद्यसदिति ।** तत्–कार्यं तदेव साध्यधर्मि । सामान्यतः पर्यायार्थिकनयेष्वसत्कार्यवादस्यैवेष्टत्वादाह—**आस्तां तावदिति ।** अनुपपत्तौ हेतुमाह—**द्रव्यार्थिकेति,** यदि द्रव्ये प्रागपि भावि सन्निहितं तदेव तस्य भवनं व्यक्तिराविर्भावो युज्यत इति वैशेषिकातिरिक्तद्रव्यार्थिकनयानामभ्युपगम इति भावः । विपक्षेऽतिप्रसक्तिमादर्शयति—**खपुष्पमपि वेति ।** असत्कार्यवादस्यैवादौ निराकरणे बीजमाह—**षट्पदार्थेति,** द्रव्यगुणकर्मसामान्यविशेषसमवायपदार्थेत्यर्थः, तेषां संसर्गः–साधर्म्यवैधर्म्यसम्बन्धः, तत्प्रधानो वादः षट्पदार्थसंसर्गवादः, तेषां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसाभ्युपगमात्, तत्र साधर्म्यं सत्तादि, तत्संसर्गोन्मूलने तदुन्मूलनं भविष्यतीति सत्तासंसर्गोन्मूलनमेवादौ विधेयमित्यभिप्रायः । विपक्षेऽतिप्रसक्तिं निवारयितुं शङ्कते—**खपुष्पमिति** सत्तासमवायात् सदाश्रयत्वाच्च कार्यं सद्भवति, खपुष्पस्य नास्त्याश्रयः सद्भूतः कश्चिद्,

१ सि. °गमनात् । २ सि. क. °नात्तत्स्यैवो ।

**( खपुष्पमिति )** खपुष्पं सत्त्वस्याश्रयो नास्तीति चेत्- स्यान्मतं कारणद्रव्येष्वाश्रयभूतेषु सत्स्वेव सत्तासमवायात् कार्यं प्रागसत् पश्चादुत्पद्यते, खपुष्पं तु निराश्रयत्वान्नोत्पत्स्यते, कार्यवैधर्म्यादित्येतच्च न, इतरत्रापि तुल्यत्वात्-कार्यमपि हि निराश्रयमसत्त्वादेव, खपुष्पवत्, अतो न कश्चित् कार्यखपुष्पयोर्विशेषः किं कारणम्? घटस्य कार्यस्य मृदोऽसत्त्वात्-मृद्द्रव्यस्य पिण्डादिरूपैर्भवितृणो न सत्त्वम्, त्वन्मते पिण्डादेः[1] कार्यसमत्वात्, तस्माद्घटादि सत्त्वस्याश्रयो नास्त्येव, खपुष्पादिसत्त्वस्येव[2] त्वन्मतेनैवोत्पत्स्यमानस्य पिण्ड-घटादेः कार्यस्य निःसत्तासमवायस्यासतः सत्तासमवायित्वात्-सत्तासमवायित्वाभ्युपगमात्, 'उत्पन्नं ह्याश्रयमाश्रयन्त्याश्रयिणः सत्तादय' इति सिद्धान्तात्, तस्यां ह्यवस्थायां स्वयमसतः कार्यस्याश्रयत्वाभावात् खपुष्प[तुल्यत्व]म्, उत्पन्नमाश्रयन्त्याश्रयिण इत्यहो! परमतकिङ्करत्वं भवतामिति सत्तायाः समवायाभावे च कुतः कार्योत्पत्तिरिति।

**अथाश्रयिसमवायादृतेऽपि सत् कार्यं स्वेनैवास्तित्वेनाश्रयो भवति, एवं तर्हि किं तद-तिरिक्तसत्तासम्बन्धकल्पनया? तदनभ्युपगमे कार्यखपुष्पयोराश्रयकृतविशेषाभावो वा।**

**अथाश्रयीत्यादि**, अथैवं तस्मात् खपुष्पतुल्यत्वापत्तिदोषभयात् सत्ताया आश्रयिण्या[ः] सम्वा-याहतेऽपि सत्कार्यं तदाश्रयभूतं स्वेनैवास्तित्वेन-स्वभावसत्तयैवोत्पन्नमाश्रयो भवति, कदाचिदप्यनुत्पत्स्य-मानस्य खपुष्पस्य वैधर्म्येणेतीष्यते ततः, एवं तर्हीत्यादि, इष्यत एवैतदस्माभिः स्वेनैव महिम्ना तत् सदिति न[3] तु त्वया, त्वया चैवमस्माभिरिष्यमाणे खरविषाणादसद्विलक्षणस्य तस्य कार्यस्य स्वत एव सतः किं तदतिरिक्तसत्तासम्बन्धकल्पनया प्रयोजनम्? न किञ्चित्तेन कल्पितेनेत्यर्थः, सत्तासम्बन्धानर्थक्यमतः सर्वद्रव्यगुणकर्मादिकारणसमवायिकार्यसंसर्गवादो निवर्तते, तस्मादेव तदनिष्टानभ्युपगमे यो मया प्रागुक्तः

---

तस्मान्न तदुत्पद्यते कार्यस्य तु घटादेराश्रयो मृत्पिण्डादि सद्रूपोऽस्तीति तदुत्पद्यते इति भाव। तमेवाभिप्रायं वर्णयति-**स्यान्मतमिति**। खपुष्पं सत्त्वस्याश्रयो न भवति, सदाश्रयत्वाभावादित्यत्र सदाश्रयत्वाभावं हेतुं स्फुटयति-**कारणेति**। सदाश्रयत्वाभाव' कार्येऽपि तिष्ठत्याश्रयस्य मृत्पिण्डादेरपि कार्यत्वेन सद्रूपताविरहात सत्ताया आश्रयो न स्यादित्याशयेनाह-**घटस्येति**। पिण्डादे. कार्यसमत्वात-कार्यसदृशत्वात, तदेव घटयति-**त्वन्मतेनैवेति,** असत सत्तासमवायित्वे तस्यैव वचनं प्रमाणयति-**उत्पन्नमिति**। सत्तासम्बन्धात पूर्वमाश्रयत्वेनाभिमतस्य कार्यस्यासत्त्वेन कमाश्रयन्ति सत्तादय इत्याशयेनाह-**तस्यां हीति,** असतोऽप्याश्रयत्वे खपुष्पमप्याश्रयं स्यादिति खपुष्पतुल्यत्वापत्तिदोष इति भाव। एवं सर्वथाऽसत खपुष्पतुल्य-स्योत्पत्त्या सत्त्वाभ्युपगमे एकान्तासत उत्पत्तिमभिलषता बौद्धानामनुकरणमेव त्वया कृतमिति ते परमतकिङ्करत्वमेवेति परिहसति-**अहो इति**। यदि तु कार्यं सत्तासम्बन्धपूर्वमपि स्वयमेव सदिष्यते तत सत्तासम्बन्धाभ्युपगमो व्यर्थ इत्याशयेनाह-**अथाश्र-यीति**। खपुष्पं तु न कदाचिदप्युत्पद्यत इति तन्न स्वरूपसदिति कार्यखपुष्पयोर्वैधर्म्यमित्याशयेनाह-**कदाचिदपीति**। कार्यस्य स्वरूपत. सत्त्वाभ्युपगमे सत्तासम्बन्धवैयर्थ्यात षटपदार्थससर्गवाद कार्यकारणयो समवायेनाऽऽश्रयाश्रयिभाववादश्च निवर्तेत इत्या-शयेन समाधत्ते०**त्वयेति**। स्वतस्सत्त्वानभ्युपगमे च प्रागुक्तकार्यखपुष्पयोरविशेष एवेति दर्शयति-**तदनिष्टानभ्युपगम इति**।

---

१ सि. क. °दिकार्य°। २ क. सि. क्ष. °दिसत्त्वस्येव, त्वन्म०। डे० दिसत्वन्म०। ३ सि. न तु त्वया चैवं। क्ष. क. × ×।

कार्यखपुष्पयोराश्रयकृतविशेषाभावो वा तत्र तुल्ये तयोरसत्त्वे कार्यमेवोत्पद्यते खपुष्पमेव नोत्पद्यत इति को विशेषहेतुः ? ।

तद्व्यक्तिः —

**यद्यसत् कस्मात् खपुष्पमेव नोत्पद्यते घटादि कस्मादुत्पद्यत इति । अथोच्येत कारणवदकारणविशेषादिति, यद्यकारणं नोत्पद्यते तत्पुरुषे वाच्ये, अथ बहुव्रीहिसमाश्रयणं तन्नोत्पद्यते तस्याविद्यमानकारणत्वात् खपुष्पवद्घटवद्वा ।**

**यद्यसदित्यादि** गतार्थं यावद्घटादि कस्मादुत्पद्यत इति, इत्यतः कार्यखपुष्पयोरविशेषदोषस्तदवस्थः । अथान्यथैतद्दोषपरिहारार्थमुच्येत-कारणवदकारणविशेषात्—यथासंख्यं सकारणं घटादि खपुष्पमकारणमित्यस्ति विशेषः, कारणैः समवाय्यसमवायिभिर्घटादि सम्बध्यते, न तु खपुष्पादीति, स एव स्वाभिप्रायं विवृणोति—यद्यकारणं नोत्पद्यते तत्पुरुषे[3] वाच्य इति-न भवति कारणमित्यकारणमित्थं तत्पुरुषसमासश्चेदिष्टः ततः कार्यं नोत्पद्यत एव, कारणमेवोत्पद्यते तस्यैव विधिविध्यादिप्राच्यनयदर्शनात् कार्यतयोत्पादात्, स एव कारणवादः परिगृहीतः स्यात्, स च मया नेष्टः, तस्मात्तत्पुरुषे[ण]नैव विचारः कार्यः, अथ यस्य न कारणं तदकारणमिति बहुव्रीहिसमाश्रयणं तन्नोत्पद्यते कार्यम्, तस्य बहुव्रीहिकल्पन[ा]यामविद्यमानकारणत्वात् खपुष्पवत् घटवदिति वैधर्म्य यथा घट उत्पद्यते न तथेति, ततः किं ? ततोऽनुत्पन्नत्वात् तदनाश्रयः सत्तायाः, सत्तानाश्रयत्वात् सम्बन्धाभावाच्च न तत् कार्यमिति ।

अत्रोच्यते —

**एवं तर्हि सर्वासत्त्वप्रसङ्गः परमाण्वादयोऽकारणत्वान्नोत्पद्यन्ते, अनुत्पन्नत्वान्नाश्रयः**

अविशेषमेव व्यक्तीकरोति **यद्यसदिति** । नन्वस्ति विशेषः कार्यखपुष्पयोरसत्त्वतुल्यत्वेऽपि, कारणवत् कार्यं खपुष्पन्त्वकारणमितीति शङ्कते—**अथोच्येतेति** । भावयति **यदीति** । अन्यथा—अन्येन प्रकारेणोच्यत इति भावः, यस्य कारणं विद्यते पटादेस्तन्त्वादि तत्कार्यं पटादि कारणवत् तदेवोत्पद्यते, यत्त्वकारणमुपादानादिकारणरहितं खपुष्पादि तन्नोत्पद्यत इत्याशयमाचष्टे—**यथासंख्यमिति** । यदकारणं तन्नोत्पद्यत इति वाक्यं स्वाभिप्रायप्रकाशनाय समासभेदाश्रयेण व्याकरोति—**यद्यकारणमिति,** न कारणमकारणम् 'नञ्' (पा० २-२-६) इति सूत्रेण तत्पुरुषसमासः पर्युदासार्थकः, न तु प्रसज्यप्रतिषेधार्थकः, तदर्थेऽव्ययीभावसमासापत्तेः, एतदर्थसूचनायैव न भवति कारणमिति भवतिपदघटितवाक्यमुक्तम्, कारणभिन्नमित्यर्थः, तथा च यत् कारणादन्यत् तन्नोत्पद्यत इति वाक्यार्थः कारणं तु उत्पद्यत इति भावार्थः स्यात्, तथा च विधिविध्याद्युक्तः कारणवाद एवास्मदनभिमतः प्रसज्यत इति न तत्पुरुषसमास आश्रयणीय इति भावः, मया नेष्ट इति भूते क्तः, न वर्तमाने, 'क्तस्य च वर्तमाने' (पा० २-३-६७) इति षष्ठीप्रसङ्गात्, न विद्यते कारणं यस्य तदकारणं खपुष्पादि नोत्पद्यते घटादिकार्यन्तु नाकारणमपि तु कारणवत्, तदुत्पद्यत एवेति कार्यखपुष्पयोर्विशेषः सम्भवतीत्याशयेनाह—**अथ यस्येति । तन्नोत्पद्यते कार्यमिति** अकारणं नोत्पद्यते-न उत्पत्त्याश्रयं—न कार्यमिति भावः, अकारणं न कार्यम्, अविद्यमानकारणत्वात् यदविद्यमानकारणं तन्नोत्पद्यते न कार्यम्, यथा खपुष्पम्, यत्तूत्पद्यते तद्विद्यमानकारणं कारणवत्, घट इव तस्मात्तयोर्विशेष इति भावार्थः, ततश्च किं स्यादित्यत्राह—**ततोऽनुत्पन्नत्वादिति,** एवञ्चाकारणस्यानुत्पन्नत्वात् तत् सत्ताया नाश्रयः, उत्पन्नस्यैव सत्ताश्रयत्वात्, ततश्च सत्तासम्बन्धो नास्ति सत्ताश्रयस्यैव सत्तासम्बन्धात्, अतो न तत् कार्यमिति भावः । यद्येवं बहुव्रीहिसमाश्रयणेन कार्यखपुष्पयोर्विशेष उच्यते सोऽपि न सम्भवतीत्याशयेन समाधत्ते—**एवं तर्हीति,** सर्वं वस्तु-असत् प्रसज्येत, सर्ववस्तुशून्यताप्रसक्तिरिति भावः । तत्कथमित्यत्राह—**परमाण्वादय इति** । यदविद्यमानकारणं

१ सि. यान्मयैत० । २ सि. क. घटादिभि. । ३ सि क. तत् पुरुषो । ४ सि. नासत् ।

सत्तायाः, ततश्च समवायाभावात् खपुष्पवत् कारणानामभावात् कार्यं क्व समवैतु? ततः कार्यसमवायिनां खपुष्पान्न कश्चिद्विशेष इति सर्वशून्यतेति सर्वविरोधाः ।

**एवं तर्हि सर्वासत्त्वप्रसङ्ग इत्यादि** यावत् सर्वशून्यतेति सर्वविरोधा इति—परमाणवोऽकारणत्वाद्वियदादीनि च नोत्पद्यन्ते, अनुत्पन्नत्वान्नाश्रयः सत्तायाः, तदनाश्रयत्व[ात्]सत्तासमवायाभावः, तेषां ह्याश्रयत्वे सत्त्वसमवाय इष्ट इति तद्वैधर्म्यं दर्शयति—ततश्च समवायाभावात् खपुष्पवत् कारणानां—परमाण्वादीनामभावः, तदभावात् कार्यमकारणत्वात् अनाधारं क्व समवैतु? तस्मात् कारणासमवायित्वात् खपुष्पोत्तस्य न कश्चिद्विशेषः, अतः प्रागुक्ताविशेषदोषस्तदवस्थः कार्यसमवायिभिः परमाणुभिः सहितस्य कार्यस्येदानीं प्रापितस्त्वयैव, कार्ये समवेतानां रूपादिघटाद्युत्क्षेपणादीनाम्, कार्ये समवायिनाञ्चेति विग्रहान्तरात्, ततः किमिति चेत्, उच्यते, इति सर्वशून्यतेति,—सर्वभावा न सन्तीति ब्रुवतः परमशून्यवादिता भवतः, इतिशब्दस्य निगमनार्थत्वात्, इति सर्वविरोधाः—इत्थं स्ववचनाभ्युपगमप्रत्यक्षानुमानरूढिविरोधाः सर्वासद्वादिनः, प्रमाणाभावात् कारणाकारणकार्याकार्यविरोधाविरोधलक्षणभेदसूत्राणां सत्ताविशेषसूत्रस्य च सत्तासमवायप्राणोत्थानत्वात् किमवशिष्टं स्याच्छास्त्रस्य तत्त्वानाञ्च प्रयोजनस्य वैशेषिकाख्यस्य, कार्यकारणयोश्च खपुष्पाविशेषादिति ।

— — — —

तन्नोत्पद्यन्त इति उत्पन्नमाश्रयमाश्रयन्त्याश्रयिण इति च भवताऽभ्युपगतम्, तथा च त्वन्मतेन नित्यद्रव्याणां परमाण्वाकाशादीनामविद्यमानकारणत्वादनुत्पादेन सत्ताश्रयत्वाभावात् खपुष्पवदभावप्रसक्तया द्व्यणुकादिघटादिकार्यं क्व समवायेन समवेयात्? ततश्च सर्ववस्त्वभाव एवेति शून्यवादः प्रसज्यत इत्याशयं प्रकाशयति–**परमाणवोऽकारणत्वादिति** । अनुत्पन्नत्वान्नाश्रयः सत्ताया इति व्यतिरेकतो भावयति–**तेषां हीति** । कारणवदकारणाविशेषादिति विशेषोऽपि कार्यखपुष्पयोर्नास्ति, अविद्यमानकारणत्वस्य कार्येऽपि तुल्यत्वादित्याह–**तस्मादिति** । परमाणुभिः सहितस्य कार्यस्य खपुष्पाविशेषता त्वयैव वदता प्रापितेत्याह–**कार्यसमवायिभिरिति** । ननु कार्यसमवायिनामिति पदेन कार्यस्य ये समवायिनः आधारास्तेषामविशेषः खपुष्पेण साकं प्रापितो भवति, न तदितरेषामिति सर्वशून्यतानुपपत्तिरित्यत्राह–**कार्ये समवेतानामिति,** कार्ये समवायिनः समवायसम्बन्धेन सम्बन्धिनः कार्यसमवायिन इति विग्रहान्तरस्याश्रयणेन कार्यगतद्रव्यगुणकर्मणामप्यविशेषः प्रापित एवेति भावः । सर्वासत्त्वप्रसङ्ग इति पूर्वप्रतिज्ञातमेव इतिशब्देन हेत्वपदेशपूर्वकं पुनर्वदन् निगमयतीत्याशयं सूचयति–**इतिशब्दस्येति,** निगमनघटकहेतुप्रतिपादकत्वेन निगमनप्रयोजकत्वादित्यर्थः । सर्वशून्यत्वमपि न त्वयाऽभ्युपगन्तुं शक्यमित्याशयेनाह **इत्थमिति** । **कारणाकारणेति,** 'द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्' ( वै० अ० १ आ० १ सू० १८ ) 'संयोगविभागाश्च कर्मणाम्' ( वै० अ० १ आ० १ सू० ३० ) 'द्रव्याणां द्रव्यं कार्यं सामान्यम्' ( वै० अ० १ आ० २ सू० २३ ) 'गुणवैधर्म्यान्न कर्मणां कर्म' ( वै० अ० १ आ० २ सू० २४ ) 'न द्रव्यं कार्यं कारणञ्च बधति' 'उभयथा गुणाः' 'कार्यविरोधि कर्म' 'क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्' 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्' 'एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्' ( वै० अ० १ आ० १ सू० १२–१७ ) 'सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' ( वै० अ० १ आ० १ सू० ८ ) इत्यादिसूत्रप्रतिपाद्यार्थविशेषाणां सत्तासमवायमूलकत्वेन प्रोक्तक्रमेण सर्वशून्यताप्रसक्तेर्निराकार्यविषयविशेषाभावात् शास्त्रमिदं निर्विषयमेव, शास्त्रस्य तत्प्रतिपाद्यद्रव्यादितत्त्वस्य साधर्म्यवैधर्म्याभ्यां तत्तत्त्वज्ञानस्वरूपस्य विशेषलक्षणस्य वा प्रयोजनस्य वैशेषिकसंज्ञितस्य कार्यकारणयोश्च खपुष्पवदसत्त्वाविशेषादिति भावः ।

१ सि. क. कारणात् स० । २ क. खपुष्पवत् । ३ सि. क्ष. क. डे. घटत्वाद्यु० । ४ सि. क. कार्य । ५ सि. क. तत्त्वानांच । ६ सि. क. कारणाखपु० ।

इत्थं प्रागसतः सकारणस्य कार्यस्य खपुष्पाविशेषो मा भूदिति –

**अथोच्येत नित्योत्पन्नत्वात् कार्यद्रव्यगुणकर्मणामेव सत्तासमवायात्सत्त्वमिति, एवं तर्हि कार्यद्रव्यगुणकर्माण्यपि सत्तास्वरूपत्वादनुपनिपातिस्वरूपत्वाच्चात्माभेदात् केनचित्सम्बन्धेऽसति स्वात्मस्वरूपं स्वात्मन्यादधति, तत्पदार्थत्ववदिति हेतुफलसंबन्धित्वाभावः स्यादिति सत्तादिसम्बन्धात् सन्ति द्रव्यादीनीत्ययुक्तम् ।**

**अथोच्येत नित्योत्पन्नत्वादित्यादि,** स्वसद्भावेनैव सन्ति पृथिव्यादिचतुर्विधपरमाण्वाकाशकालदिगात्ममनांसि द्रव्याणि सत्तासमवायौ गुणाश्च विभुपरिमण्डलादयः, किन्तु कार्यद्रव्यगुणकर्मणामेव सत्तासमवायात्सत्त्वमिति, अत्रोच्यते– एवं तर्हीत्यादि यावत् तत्पदार्थत्ववदिति, यथाऽऽकाशपरमाण्वादिषु नोपनिपतितुं शीलमस्याः सत्तायास्तथा कार्यद्रव्यगुणकर्मस्वपि सत्तास्वरूपत्वादनुपनिपातिस्वरूपत्वाच्चात्माभेदः तस्याः सर्वपरमाण्वाकाशादिपदार्थेषु आत्माभे[दा]च्च न केनचित्सम्बन्धोऽस्याः स्यात्, असति च सम्बन्धे यथा सत्ता सत्ताद्रव्यत्वगुणत्वादिसम्बन्धाभावे सत्येव, पदार्थत्वा[त्] स्वरूपसद्भावाच्च स्वात्मस्वरूपं स्वात्मन्यादधातीत्येवंस्वरूपा तथा सत्तादिसमवायमन्तरेण तान्यपि कार्यद्रव्यगुणकर्माणि भवन्तु, आकाशपरमाण्वादिवत् सत्तावच्चेति किं तद्व्यतिरिक्तसत्ताद्रव्यत्वादिसमवायकल्पनया ? तस्माद्धेतुफलसम्बन्धित्वाभावः स्यात् सत्तासमवाययोः खपुष्पवदिति, इति सत्ता[दि]सम्बन्धात् सन्ति द्रव्यादीनीत्ययुक्तम् – तस्मात् सत्तासम्बन्धाद्द्रव्यं सत्, गुणः सन्, कर्म सच्चेत्ययुक्तम् आदिग्रहणात्– द्रव्यत्वाभिसम्बन्धाद्द्रव्याणि पृथिव्यादीनि गुणत्वाभिसम्बन्धाद्गुण[ा] रूपादयः, कर्मत्वाभिसम्बन्धात् कर्माणि गमनादीनीत्ययुक्तम् । इतिशब्दस्य निगमनार्थत्वात्, एवं तावत् यत् प्र[त्यजि]ज्ञास्महि[अ]सन्निहितभावितृकत्वात् खपुष्पवत् कार्यमसदिति पूर्वनयदर्शनेनैव तदुपापीपदाम ।

तदेव कार्यकारणयोः परमाण्वादिद्व्यणुकाद्योः खपुष्पेणाविशेषत्वे प्रसाधितेऽपि यदि वादी नित्यद्रव्यादीन् स्वरूपसतो, न तु सत्तासम्बन्धात्, कार्यद्रव्यादीनि च सत्तायोगात् सन्ति न तु स्वरूपसन्ति, खपुष्पादि तु न स्वरूपसत् नापि सत्तासम्बन्धात् सत्, किन्त्वसदेवेति विशेष स्यादिति शङ्केत तामपि प्रतिविधातुं पर्युपक्रमते– **अथोच्येतेति,** नित्योत्पन्नत्वात् –सततोत्पत्तिमत्त्वात्, एवशब्दव्यावर्त्यमाह। व्याचष्टे– **स्वसद्भावेनैव,** स्वेन सद्रूपेणैव न सत्तासमवायेनेत्यर्थः । पदमिदं पदार्थेषु अनित्यद्रव्यव्यावर्त्यं द्रव्यं प्रकाशयति– **पृथिव्यादीति** पृथिव्यादीनां चतुर्विधानां परमाणव आकाशादिपञ्चकञ्च नित्यद्रव्याणि, सत्तासमवायौ– सामान्यसमवायौ, द्रव्यपदेनोपलक्षितावेतौ, जातिमत्त्वात् द्रव्यस्य, अनित्यगुणव्यावर्त्याश्च गुणाः विभुत्वं परममहत्परिमाणं पारिमाण्डल्यमणुपरिमाणादयो विशेषाश्चेति । **कार्यद्रव्येति** कार्यपदं द्रव्यगुणयोरेव सम्बध्यते, अकार्यकर्मानभ्युपगतत्वात् । अथ यथा सत्ताया नित्यद्रव्यादिसम्बन्धित्वस्वभाववैधुर्यं तथा कार्यद्रव्यादिसम्बन्धित्वस्वभाववैधुर्यमपि स्यात्, सत्ताया परमाण्वादेः स्वरूपसद्रूपताभ्युपगमात् सत्तापरमाण्वादेर्न कश्चिद्भेदः, न वा केनचित् सम्बन्धोऽपेक्ष्यते सत्तया स्वसद्भावे, पदार्थत्वात् स्वरूपसत्त्वाच्च तथैव कार्यद्रव्याण्यपि सत्तारूपाणि भवन्तु नापेक्षन्तां केनचिदपि सम्बन्धमिति द्रव्यादिव्यतिरिक्तसामान्यकल्पनाऽनर्थिकेत्याशयेन समाधत्ते– **यथेति । सत्तास्वरूपत्वात्** स्वरूपसद्रूपत्वात्, अयमनुपनिपातिस्वरूपत्वे हेतुः, अनभिसम्बध्यमानस्वरूपत्वादिति तदर्थः, तस्मा च्चात्माभेदः, तत्साध्यस्य स्वात्मस्वरूपं स्वात्मन्यादधतीति, दृष्टान्तश्च तत्पदार्थवदिति आकाशपरमाण्वादिवत् सत्तावच्चेति तदर्थः, स्पष्टमन्यत् । इतिशब्दस्य निगमनप्रयोजकत्वादेव न सत्तादिसमवायात् सन्ति द्रव्यादीनीति दर्शयति– **इतिशब्दस्येति । एव तावदिति,**

१ सि. क. व्यावर्त्तत् पदा० । २ सि क्ष. क परमाण्वादिष्वगमनादि०, डे० परमाण्वाकाशादिष्वगमनादि० ।
३ सि. क. डे. वन्ध्यत्वाभावः । ४ प्रज्ञासिष्महि सर्वासु प्रतिषु ।

इत उत्तरमस्मादेव न्यायात् **कटन्द्यां** टीकायाञ्च यैः पूर्वपक्षस्तं तैथैव समर्थयितुमाह –

**ततोऽनुपपन्नविकल्पत्वात् सत्तासमवायात् सत्, द्रव्यत्वसमवायाद्द्रव्याणि, गुणत्वसमवायाद्गुणाः कर्मत्वसमवायात् कर्माणि रूपत्वाद्रूपमित्यादिना द्रव्यादीनां लक्षणविरोधाविरोधाऽऽरम्भानारम्भकार्यकारणादिभिश्च सत्तादिभ्यश्च षडविशेषमुखेन विशेषाभिधानं सर्वमयुक्तं कर्त्तुम्, सर्ववाक्यानृतत्ववत् ।**

**ततोऽनुपपन्न[विकल्प]त्वादित्यादि,** उद्देशवाक्यं–सत्तासम्बन्धात् सन्ति द्रव्यत्वाद्द्रव्याणि गुणत्वाद्गुणाः कर्मत्वात् कर्माणि रूपत्वाद्रूपम् आदिग्रहणात् पृथिवीत्वादिभ्यः पृथिव्यादयः, रसत्वादिभ्यो रसादयो गमनत्वादिभ्यो गमनादय इत्यादि, 'क्रियावद्गुणवत्समवायिकारणं द्रव्यलक्षणम्' (वै० सू० अ० १ आ० १ सू० १५) 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्' (वै० अ० १ आ० १ सू० १६) 'एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्' (वै० अ० १ आ० १ सू० १७) इत्यादिना द्रव्यादीनां नानात्वं विरोध्यविरोध्यारम्भानारम्भकार्यकारणादिभिश्च सत्तादिभ्यश्च 'सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' (वै० अ० १ आ० १ सू० ८) इति षडविशेषमुखेन विशेषाभिधानं सत्तासमवायबीजं सर्वत्र तत्सर्वमयुक्तं कर्त्तुम्, कस्मात्? अनुपपन्नविकल्पत्वात् सर्ववाक्यानृतत्ववत्, यथा सर्वं मदीयं त्वदीयमन्यदीयञ्च वाक्यमनृतमिति ब्रुवाणस्य तस्य वाक्यं सत्यमनृतं सत्यानृतं वा स्यात् सर्वथा नोपपद्यते, यदि तद्वाक्यमप्यनृतं सत्यानृतं वा ततः सर्ववाक्यानृतत्वप्रतिपादनासमर्थम्, स्वयमप्रमाणत्वात्

---

आस्तां तावदस्मन्मतं पूर्वनयमतेनैवैतत् त्वद्दर्शनमनुपपन्नमित्याशयेन यत् प्रतिज्ञातं तदेभिर्हेतुभिरुपपादितमिति भावः । अथ कटन्दीति ख्यातायाः रावणकृतायाः वैशेषिकदर्शनव्याख्यायाः तट्टीकायाश्चामुमेव न्यायमुक्तमवलम्ब्य योऽसौ वैशेषिकसिद्धान्तोपरि पूर्वपक्षः प्रदर्शितः तमेव तत्रोक्तनिराकरणयुक्तीर्निरस्य समर्थनं विधातुं प्रतिजानीते–**तत इति,** सत्तासमवायोन्मूलनात् असन्निहितभवितृकत्वाच्चेत्युक्तन्यायादित्यर्थः, अस्य पदस्यायुक्तं कर्त्तुमित्यनेनाभिसम्बन्धः, अत एवावतरणिकायामस्मादेव न्यायादित्युक्तम्, अनुपपन्नविकल्पत्वादिति तु कटन्द्याः पूर्वपक्षिणोक्तो हेतुः । उक्तहेतोः प्रतिज्ञाबोधकं वाक्यमादर्शयति–**उद्देशवाक्यमिति । आदिग्रहणादिति,** रूपत्वाद्रूपमित्यादीत्यत्रादिग्रहणादित्यर्थः, एतेन द्रव्यत्वकर्मत्वावान्तरधर्मयोगैर्द्रव्यकर्मावान्तरवस्तूनामप्रदर्शनलक्षणन्यूनताशङ्का निरस्ता । **इत्यादिनेति,** आदिना विरोध्यविरोध्यारम्भानारम्भकार्यकारणबोधकसूत्राणि प्रागुपदर्शितानि ग्राह्याणि, एभिर्वचनैर्द्रव्यादीनां नानात्वमुच्यते, सत्तादिभ्यश्च षड्भ्योऽविशेषत्वमुच्यत इति सत्तादिषड्धर्मप्रकाशकं सूत्रं दर्शयति–**सत्तादिभ्यश्चेति ।** सर्वेषां सत्तासमवायात् सद्रूपतायामेव विशेषाभिधानसम्भवादाह–**सत्तासमवायबीजमिति । अनुपपन्नविकल्पत्वादिति,** विविधाः कल्पाः विकल्पाः, अनुपपन्नाः विकल्पाः यस्य तद्वाक्यमनुपपन्नविकल्पं तद्भावस्तस्मात्, एतद्वाक्यप्रतिपाद्यविषयसम्भवद्विकल्पसमर्थकप्रमाणराहित्यादिति भावः । दृष्टान्तं घटयति–**यथा सर्वमिति** दृष्टान्ते विकल्पाः किमिदं वाक्यं सत्यं वा? असत्यं वा? सत्यानृतं वा स्यादिति । तत्र विकल्पानुपपत्तिं दर्शयति–**यदीति ।**

---

**१ ग्रन्थोऽयमधुना न क्वापि समुपलभ्यते, अतोऽत्र मया यथाशक्ति पाठः संशोधितः व्याख्यातश्च, मुरारिकविविरचिते अनर्घराघवनाटके पञ्चमेऽङ्के 'भो भो लक्ष्मण, वैशेषिककटन्दीपण्डितो जगद्विजयमानः पर्यटामि, क्वासौ रामः, तेन सह विवदिष्ये' इति दृश्यते, रावणवचनमिदम्, तेन कटन्दीकर्त्ता रावणनामा कश्चित् कोविद इत्यनुमीयते । २ सर्वत्र यं इति दृश्यते । ३ तदेव इति सर्वत्र ।**

अप्रमाणत्वमसत्यत्वात्, अ[थ] सत्यं न तर्हि सर्वमनृतम्, तस्य सर्वान्तःपातित्वात्, तत्सत्यत्ववच्छेषस्यापि सत्यत्वात् सर्वथानुपपन्नं वाक्यम्, एवं सत्तासमवायात् सदित्यादिसर्वद्रव्यविशेषलक्षणविरोधारम्भादिविशेषधर्मोपादनवाक्यानि नोपपन्नानि, सर्वपदार्थानां वैशेषिकीयाणां सत्तासमवायमूलविशेषात्मकत्वात् द्रव्यादिकार्योत्पत्तिविचारप्रकृतेश्च तदेव विचार्यते, तत्प्राणत्वात् वैशेषिकमतस्येति ।

स्यान्मतं कथं पुनरनुपपन्नविकल्पत्वं सत्तासमवायस्येत्यत्रोच्यते –

**इह प्राक् सत्तासम्बन्धात् सतां वा सत्तासम्बन्धः, असतां वा, सदसतां वा ? न तावदसताम्, खपुष्पाविशेषप्रसङ्गात्, नापि सतां भूतत्वात्, सत्तावत्, प्रकाशितप्रकाशनवैयर्थ्यवत्, सताञ्च पुनः सत्तासम्बन्धात् सत्त्वादनवस्थाप्रसङ्गात्, प्राक् सत्तासम्बन्धात् तच्च किमात्मकमिति स्वरूपावधारणं कार्यम्, अन्यथाऽसत्त्वात्, नापि सदसताम्, ऐकात्म्यानुपपत्तेः सदसतोर्वैधर्म्यात् घटखपुष्पवत्, उभयदोषप्रसङ्गाच्च–यदसत्तत् खरविषाणाविशिष्टम्, यत्सद्भवति तत्र सत्तासम्बन्धवैयर्थ्यम्, सदसतोर्वैधर्म्यात् कार्ये सदसत्ता नेति च त्वन्मतसिद्धानुपपत्तिरेवायं विकल्प इति ।**

**इह प्राक् सत्तासम्बन्धात् सतां वेत्यादि** विकल्पत्रयोपन्यासो गतार्थः, एवं भवन्मतं स्यात्, तदुत्तरं–न तावत् [अ]सतामित्यादि, लघुत्वादुत्क्रमेणासतां सत्तासम्बन्धात्सदभिधानप्रत्ययप्रतिषेधः प्रागिति, नापि सतामिति वैयर्थ्यापादनं भूतत्वात् सत्तावदिति गतार्थम्, प्रकाशितप्रकाशनवैयर्थ्यवदिति द्वितीयमुदाहरणं लोकसिद्धं शास्त्रसिद्धात् सत्तोदाहरणाद्भेदेनोपन्यस्तमिति विशेषः, न वैयर्थ्यदोष एवास्मिन् विकल्पे, किं तर्हि ? सताञ्च पुनः सत्तासम्बन्धात् सत्त्वादनवस्थाप्रसङ्गादिति–विद्यमानानामेव पुनरपि सत्तासम्बन्धात् सत्त्वेष्टौ सत्ताया अपि तत्सत्त्वाभिधानप्रत्यय[ाः]कार्याः सत्तान्तरसम्बन्धात्, तस्या अपि तथेत्यनवस्था स्यात्, किञ्चान्यत्–प्राक् सत्तासम्बन्धादित्यादि यावदन्यथाऽसत्त्वादिति–तच्च द्रव्यादि पूर्वं

दार्ष्टान्तिकं समीकरोति–**एवमिति** । के तेऽत्र विकल्पा येऽनुपपन्ना इत्यत्राह–**इह प्रागिति,** यदा कार्यद्रव्यादेः सत्तया सम्बन्धोऽभिमतः, ततः पूर्वं तत् कार्यद्रव्यादि किं सत् ? किमसत् ? किं सदसत् ? यत् पश्चात् सत्तया सम्बध्यत इति भावः । सत्तासम्बन्धवादिना गत्यन्तराभावादेषामन्यतम एव विकल्पो मतः स्यादित्याशयेनाह–**एवमिति** । क्रममुल्लङ्घ्यादावसत्पक्षप्रतिक्षेपे बीजमाह–**लघुत्वादिति,** व्योमसारसादीनामसतां सत्तासम्बन्धस्य केनाप्यस्वीकृतत्वाद्वादाभावाल्लघुत्वादिति भावः । सतां सत्तासमवायविकल्पं दूषयति–**नापीति** सत्तासमवायात् पूर्वमपि तद्वस्तु यदि सदिति ज्ञायतेऽभिधीयते वा तर्हि सत्तासमवायफलस्य प्रागेव भूतत्वात् सत्तावत् पुनः सत्तासम्बन्धकल्पनाऽनर्थिकेति भावः । सत्तासमवायात् प्राक् वस्तु किं स्वतः सत् ? सत्तासम्बन्धाद्वा ? तत्राद्ये यथा स्वतः सत्याः सत्तायाः सत्तासम्बन्धो व्यर्थः तथा स्वतः सतो वस्तुनोऽपीति सत्तोदाहरणम्, यदि तदा सत्तासम्बन्धात् सत् तर्हि यथा प्रकाशेन प्रकाशितस्य वस्तुनः पुनः प्रकाशेन प्रकाशनमनर्थकं तथा पुनः सत्तासम्बन्धो व्यर्थ इति द्वितीयोदाहरणम्, प्रकारान्तरेण उदाहरणद्वयप्रदर्शनाभिप्रायमादर्शयति–**प्रकाशितेति** । सतामपि सत्तासम्बन्धे दोषान्तरमपि, अप्रामाणिकापरापरसत्तासमवायकल्पनाऽविश्रान्त्या अनवस्थापत्तिरित्याह–**न वैयर्थ्यदोष एवेति** । सत्तासम्बन्धात् प्राग् वस्तु न सत् नाप्यसत्, सत्तासम्बन्धात् सदित्यभ्युपगमादित्यत्राह–**प्राक् सत्तासम्बन्धादिति** यदि तदानीं न सत् नाप्यसत् तर्हि किमात्मकं तदित्यवधार्यम् । अनवधारणे चानवधृत-

१ क. सर्वदान्यविशेष० ।　२ सि. क. °सतं च तस्य० ।　३ सि. क. न्धात् सत्त्वं तस्या ।

सत्तासम्बन्धात् किमात्मकमिति स्वरूपावधारणं कार्यम्, तस्यामवस्थायां सत्तासम्बन्धशून्यत्वान्नैवास्ति तत्, अनवधृतात्मकत्वात् खपुष्पवत्, अन्यथाऽसत्त्वात्—अनवधृतात्मकत्वे तस्यासत्त्वादिति, नापि सदसतामिति तृतीयविकल्पस्योत्तरं—ऐकात्म्यानुपपत्तेरिति—अनेकान्तवादाभ्युपगमस्य पूर्वाभ्युपगमेन विरोधात्, अथवैकात्म्यानुपपत्तेरित्यनार्हतनयेन, प्रकाशतमसोरिवात्यन्तवैधर्म्यात्—सत् सोपाख्यमसन्निरुपाख्यम्, तयोः सदसतोर्वैधर्म्यादेकत्र न युज्यते सदसत्त्वं, घटखपुष्पवदिति—घटः सोपाख्यः सत्त्वात्, असत्त्वात् खपुष्पं निरुपाख्यमिति वैधर्म्यादेकत्राभावस्तयोरेवं सदसदात्मकं कार्यमित्ययुक्तम्, किञ्चान्यत्, उभयदोषप्रसङ्गाच्च, तद्व्याचष्टे—यदसत्तत् खरविषाणेत्यादि यावत् त्वन्मतसिद्धानुपपत्तिरेवायं विकल्प इति, असत्पक्षे खपुष्पाविशेषः, सत्पक्षे सत्तासम्बन्धवैयर्थ्यम्, सदसतोर्वैधर्म्यात् कार्ये सदसत्ता नेति च त्वन्मतविरुद्धमेवानुपपन्नत्वं तस्माद्विकल्पानुपपत्तेर्न सत्तासम्बन्धोऽभिधानप्रत्ययहेतुरिति निगमन[मा]ह।

आह—

**नन्वगुणगुणवत् स्वभावसद्भावेन सन्नेव भावोऽसन्नित्युच्यतेऽतो नैवासतां सत्करी सत्ता, त्वयैव तर्हि कृतमेवं ब्रुवता एतदस्मदनुष्ठेयम्, अत्र वयं निश्चिन्ताः संवृत्ताः, अपि चैवमपि नैवैतत्, किन्त्वसतामेव सत्तासम्बन्धः स्याद्वा न वेति विचार्यम्।**

**नन्वगुण[गुणव]दित्यादि** यावन्नैवासतां सत्करीति, अस्तु तावत् सतामेव सत्करी सत्ता नासताम्, यथा मया प्रागुक्तो दृष्टान्तः स्वभावसद्भावप्रतिपादनार्थं भावस्य, यथा नास्य गुणोऽस्तीत्यगुणो गुण एव सन्नगुण इत्युच्यते तथा स्वभावसद्भावसन्नेव भावो नास्त्यस्य सन्नित्यसन्नुच्यते न तु स्वयमसन्निति तथा द्रव्यादयोऽपि सन्तः, तेषान्तु सत्तया सह सम्बन्धः प्रतिषिध्यते, न तु स्वरूपसद्भाव इत्यतो नैवासतां

स्वरूपत्वात् खपुष्पवत्तन्नैव भवेदिति भाव । यदि तदा सदसदात्मकमभ्युपगम्येत तदाप्याह—**नापीति।** सत्त्वस्यासत्त्वस्य चैक आत्मा स्वरूप न सम्भवति त्वन्मतेन, यदि तथा स्वीक्रियते तर्हि अनेकान्तवादाभ्युपगम. प्रसक्त., स च त्वदीयपूर्वाभ्युपगतैकान्तविरोधीत्याशयेनाह—**अनेकान्तेति।** मतान्तरेण समाधानकरणमनुचितमिति मत्वा तन्मतेनैव हेतुं व्यावर्णयति—**अथवेति,** एकश्चासावात्मा च एकात्मा तस्य भाव ऐकात्म्यं तस्मात्, सत्त्वासत्त्वयोर्यत एक आत्माऽनुपपन्न इत्यर्थ । कुत एक आत्माऽनुपपन्न इत्यत्राह—**प्रकाशेति।** अत्यन्तवैधर्म्यमेव दर्शयति—**सत् सोपाख्यमिति,** उपाख्या—अभिधानं तत्सहितं सोपाख्यम्, तद्रहितं तु निरुपाख्यम्, घट सदित्युपाख्येयत्वात सोपाख्य. खपुष्पं तु सदित्युपाख्यातुमयोग्यत्वान्निरुपाख्यमिति सदसतो प्रकाशतमसोरिव वैधर्म्यान्नैकस्योभयात्मता युक्तेति भाव । ननु सत्त्वात सोपाख्यमसत्त्वात निरुपाख्यमित्युक्त्या कथं सदसत्त्वयोर्वैधर्म्यं सिद्ध्यति हेत्वभावात, तथा च स्यात् कार्यं सदात्मकमित्याशङ्काया दोषान्तरमाह—**उभयदोषेति,** खपुष्पाविशिष्टत्वं सत्तासम्बन्धवैयर्थ्यञ्चोभयपक्षे दोषावुक्तौ, विलक्षणदोषप्रसञ्जकत्वादेव वैधर्म्ययो· सदसत्त्वयोरेकत्रासम्भव इति भाव । अनुपपन्नविकल्पत्वादिति प्रतिज्ञातमेव त्वन्मतसिद्धानुपपत्तिरेवायं विकल्प इति निगमयतीत्याह—**तस्मादिति** । ननु असतां सत्तासमवाय इत्यत्रासत्पदे नञा प्रसज्यप्रतिषेध सन् नास्तीत्येवंरूपो न विवक्षित., किन्तु पर्युदास एव सद्ग्राही विवक्ष्यते तेन स्वरूपसदेव वस्तु असदित्युच्यते, यथा स्वरूपसन् गुण एव गुणसमवायाभावादगुण इत्युच्यत इति शङ्कते—**नन्वगुणगुणवदिति।** सत्ता स्वसमवायात स्वरूपसतामेव वस्तुत· सत्करी भवति, नात्यन्तासताम्, भाव. स्वरूपतः सन्नेवेति प्रदर्शनाय दृष्टान्तो गुणोऽगुण इति प्रदर्शितस्तथैव प्राक् स्वरूपसन्त एव द्रव्यादय. सत्तायोगाभावादसन्त उच्यन्ते, तथा च तदानीं सत्तासम्बन्धप्रतिषेध एव क्रियतेऽसच्छब्देन, न तु स्वरूपसत्त्वमपि निराक्रियत इत्याशयं वर्णयति—**अस्तु तावदिति। मया प्रागुक्त इति,**

१ क० तथा।

सत्करी सत्ता, किं तर्हि ? सतामेव, तस्मादसतां सम्बन्धानभ्युपगमाददोष इत्यत्रोच्यते–एष विकल्पोऽनुपपन्न इति, त्वयैव तर्हि कृतमेवं ब्रुवता–त्वयैव तर्हि असतां सत्करी सत्ता न भवतीत्येतदस्मदनुष्ठेयमनुष्ठितमतोऽस्य सिद्धत्वादत्र वयं निश्चिन्ताः संवृत्ताः, अपि चैवमपि नैवैतदित्यादि, यद्यपि मया त्वदनभिज्ञताख्यापनार्थमुक्तमसतां सत्तासम्बन्धो नास्तीति, नैतदप्येवम्, किन्त्वसतामेव सत्तासम्बन्धः स्याद्वा नवेति विचार्यम्, किं कारणमिति चेदुच्यते–शशविषाणादेः सत्करत्वप्रसङ्गः,–सत्तासम्बन्धात् प्राक्तु विषयो द्रव्यादिकार्यं तत्स्वभावेनैव किं सत्, उत सत्तासम्बन्धात् सदित्येतस्मिन् सन्देहे स्वभावमङ्गतस्य कार्यस्यासत्त्वप्रतिपादनद्वारेणायं विचारः प्रस्तुत एवेति कथं प्रस्तुतपरित्यागेन परिहारो युज्यत इत्यभिप्रायः।

**अपि च ननु सः प्राग् विषयसद्विकल्पोपपादनायागुणगुणत्वदृष्टान्तो योऽपि चावयवार्थविकल्पेष्वन्त्यो व्युत्पत्तिविकल्पः सुष्ठु व्युत्पाद्य व्यावर्तितः सोऽप्येवमनुपपन्नः ।**

**अपि च ननु स प्राग्विषयेत्यादि** योऽयमस्माभिः प्रागुद्ग्राहितो यत्सद्भवतीत्यादिनोपपत्तिग्रन्थेनागुणगुणस्थानीयसत्ताया एवाभाव इति, यद्यविद्यमानद्रव्यादिविषयं सत्ता स्वयमसती सत्त्वं कुर्याच्छशविषाणादीन् वन्ध्यापुत्रादिः सत्त्वं कुर्यादित्येकः प्रसङ्गः आपिपादयिषितस्तथाधस्थः, एतदनिच्छतो द्रव्यादीनां स्वत एवास्तित्वे सत्तासम्बन्धो व्यर्थः स्यादित्येष वा दोषः, निर्विषयत्वात् सत्तासम्बन्धस्य, अनिष्टश्चैतत्, अतोऽसत्सत्करत्वमेव सत्ताया इत्येष एव विकल्पो भवितुमर्हति । तथाप्येवमनुपपन्नमसत्सत्करत्वं विचारितविधिनेत्युपसंहरति -योऽपि चावयवार्थेत्यादि, अनुपपन्नविकल्पत्व[ा]दित्यस्य साधनस्यावयवार्थाः–सतामसतां सदसतां वा द्रव्यादीनां सत्करी सत्तेति विकल्पाः, तेषु नासतामित्यस्य विकल्प-

कटन्द्यां पूर्वपक्षतया वैशेषिकमतोपन्यासे वैशेषिक पूर्वोक्त गुणागुणत्वदृष्टान्त स्मारयतीति भाति। असता सत्तायोगान्न सत्त्वं सम्भवतीति यन्मयाऽनुष्ठेयं तत्त्वयैवानुष्ठितमिति न किञ्चिदत्रास्माभि कर्तव्यमस्तीति न पुनर्वयं सिद्धं साधयितु प्रयतामहे इत्याशयेन समाधत्ते–**त्वयैव तर्हीति** । ननु सत्तासम्बन्धादुत्पत्तेर्वा प्रागसत् कार्यमुत्पत्त्यनन्तर सत्तया सम्बध्यते इत्याशयेन त्वया यो वाद आरब्ध. सोऽस्मद्विकल्पाविषयोऽपि त्वदनभिज्ञताख्यापनायैव प्रतिवाद कृत', वस्तुतस्तु सत्तासम्बन्धाव्यवहितप्राक्कालावच्छिन्नत्वविशिष्टकार्यत्वावच्छिन्नधर्मिकसदादिविषय एव विकल्प , तस्यैव परिहार त्वया कार्य', त्वदीयपरिहारस्तु नैतद्विषय इत्याशयेनाह–**अपि चैवमपीति । त्वदनभिज्ञतेति** त्वयाऽस्मदुक्तविकल्पस्यार्थो न ज्ञात इति ख्यापनार्थमित्यर्थ । पूर्वमसता पश्चात् सत्तासम्बन्धो न सम्भवतीत्युक्तं परन्त्वस्मद्विकल्पविषयो नैष इत्याशयेनाह–**नैतदप्येवमिति** । उत्पत्तिप्राक्कालावच्छिन्ने धर्मिणि तत्कालावच्छेदेनैव सदादिविषयो विचारोऽस्मदभिमत इत्याशयेनाह–**किन्त्वसतामेवेति । परिहार इति** उत्पत्तिप्राक्काले कार्यं सद्वाऽसद्वेति प्रस्तुतं विचारं विहायोत्पत्त्यनन्तरकालिकसत्तासमवायविषयकपरिहारोऽत्र कथं युज्यत इति भाव । अथ कटन्द्या टीकायाञ्च वैशेषिकेणात्र विषये विकल्पानारचय्यानारचय्य वा सम्यक् पूर्वपक्षं विधाय स प्रतिविहित , तत्र सत्तासमवायोन्मूलनेन च तत्प्रतिविधानस्यानुपपत्तौ तेनोद्भावितः पूर्वपक्ष एवोत्तरपक्षो भवतीति प्रदर्शनायाह–**अपि चेति । प्रागुद्ग्राहित इति** यदसद्भवति तत्र सत्तासम्बन्धवैयर्थ्यमित्येक प्रसङ्ग , यदसत्तत् खरविषाणाविशिष्टमित्यपर प्रसङ्ग पूर्वमुपदर्शित इत्यर्थ , उभयथाऽपि सत्तासम्बन्धस्य निर्विषयत्वमतो गुणस्यैव सतोऽगुणत्ववत् सत्त्वेव भावोऽसन्नित्युच्यत इत्यशक्य वक्तुम् , एव च त्वदीयस्यास्य प्रतिविधानस्येत्थमनुपपन्नत्वे उद्भाविते त्वदुद्भावित. पूर्वपक्ष एवासता सत्करी सत्तेत्येवरूप उत्तरपक्षो भवतीति भाव । भवतु असता सत्करी सत्तेति विकल्प', तथापि मदिष्टसिद्धेरित्याशङ्कायामाह–**तथाप्येवमिति** । एवं कटन्दीकृदुक्तं प्रतिविधानं निरस्य पूर्वपक्षमेव व्यवस्थाप्य

१ सि. क. °स्यानिष्वार्थैतवतो ।

स्योपपादनार्थं यानि साधनानि व्युत्पादितानि पूर्वपक्षीकृत्य व्यावर्त्तितानि च, तेषु योऽन्यो व्युत्पत्तिविकल्पः सुष्ठु व्युत्पाद्य व्यावर्त्तितः पूर्वपक्ष इत्यभिमतः सोऽप्येवमनुपपन्न इति विचारपर्यन्तस्यास्योत्तरस्यानुपपत्तौ तुषकण्डवत् सर्वविचारनैरर्थक्यात् पूर्वपक्ष एवोत्तरपक्षो भवतीत्यभिप्रायः ।

यत्तावदुक्तं नासतां सत्करी सत्ता, शशविषाणादीनां सत्करित्वप्रसङ्गात्, नासावन्येनानभिसम्बन्धात्.........असाधनत्वम्, प्रतिज्ञाविशेषो वा.........प्रतिविशिष्टत्वम्, अथ द्रव्यादीनां तदानीमसत्त्वमिति चेत्, तेषामसत्त्वमसिद्धं द्रव्याद्यभ्युपगमे सत्त्वात्, प्रागुत्पत्तेरिति चेत् सिद्धसाधनमेतत्, तदा तेषां सत्तासम्बन्धानभ्युपगमात्, नासता सम्बध्यते सत्ता, विशेषणत्वात्, दण्डवत्, यथा विशेषणस्य दण्डादेः सता देवदत्तेन एवं सत्ताया अपि, अथ सम्बध्यते शशविषाणादौ सत्तासम्बन्धस्तदवस्थः, अथ तव मतमसदपि द्रव्यादि सम्बध्यते सत्ताया एवंस्वरूपत्वात्, तत्प्रतिपाद्यसत्ताया एव हि हेतुभूतायाः सामर्थ्यात् तस्या आधारो भवति सद्द्रव्यादीति तद्वच्छशविषाणादिरपि तत्सामर्थ्यात्तस्या आधारः स्यात्, नैवम् शशविषाणादिवदत्यन्तनिरात्मकत्वानभ्युपगमात् कार्यद्रव्यगुणकर्मणाम्, नन्वसदित्युत्तरपदाभिधेयनिवारकत्वात् कथमस्य सात्मकत्वम्? न, अनेकान्तात्, नास्य सदित्यसत्, न स्वयमसत्, यथाऽपुत्रब्राह्मणवत् नास्य पुत्रोऽस्तीत्यपुत्रो न तु पुत्रो न भवतीति प्रतिषिध्यते, अगुणगुणवद्वा नास्य गुणोऽस्तीति गुण एव सन्नगुण उच्यते तथेहापि, न च तदपि निरात्मकं सत्तासम्बन्धात् वैधर्म्येण शशविषाणवत्.........त्वन्मते दृष्टान्ताभाव इति चेत् सामान्यवद्वा......सामान्यवदेव सात्मकं न घटादिवत् सात्मकम्, सामान्यादीनां सात्मकत्वमसिद्धमिति चेन्न स्वरूपभिन्नत्वे सत्यभिन्नवाग्बुद्धिव्यवहारविषयत्वात्, विशेषणं सामान्यं सात्मकश्चेति, अत्राप्युत्तरे बह्वेव सम्प्रधार्यम् ।

(यदिति) यत्तावदुक्तम् नासतामित्यादि पूर्वपक्षो यावत् सत्करित्वप्रसङ्गादित्यत्र प्रक्रान्तं प्रशस्तमतिना नासावन्येनानभिसम्बन्धादित्युत्तरं यावदसाधनत्वमित्येवं प्रथमो व्युत्पत्तिविकल्पः, प्रतिज्ञाविशेषो वेत्यादि द्वितीयो गतार्थः सोत्तरो यावत् प्रतिविशिष्टत्वम्, अथ द्रव्यादीनामित्यादिस्तृतीयः सोत्तरो यावत् तेषामसत्त्वमसिद्ध[म्]द्रव्याद्यभ्युपगमे सत्त्वादि[ति], अत्र चोद्यं–प्रागुत्पत्तेरिति चेत्–प्रागुत्पत्तेर्न सन्ति द्रव्यादीनि तस्मादसत्त्वं सिद्धमिति, अत्रोत्तरं सिद्धसाधनमेतत् तदा तेषां सत्तासम्बन्धानभ्युपगमादिति, एतेषु त्रिषु व्याख्याविकल्पेष्वसारबुद्ध्या–नासता सम्बध्यते सत्ता विशेषणत्वात्, दण्डवत्, यथा विशेषणस्येत्यादि

टीकाकृतः प्रशस्तमतेरप्युत्तरसाधनानि निराकरोति–**यत्तावदुक्तमिति** । नासता सत्करी सत्ता, शशविषाणादीनामपि सत्करित्वप्रसङ्गादिति मूलं व्याख्यातुकामः प्रशस्तमतिराह–**नासाविति** । **अथेति**, सम्बध्यमानावस्थायामाश्रयस्यासिद्धत्वात् कमाश्रयन्त्याश्रयिण इति भाव । तदा स्वरूपतो द्रव्यादयः सन्तीत्याशयेनाह–**तेषामसत्त्वमिति** द्रव्यादीनामसत्त्वमित्यर्थ, उत्पत्तिप्राक्काले तु द्रव्यादीनामसत्त्वं सिद्धमेवेत्याशंक्य सत्तासम्बन्धस्य तदानीमनभ्युपगमादिष्टमेवासत्त्वमिति समाधत्ते–**प्रागुत्पत्तेरिति** । अथ यद्विशेषणं तत्सता सम्बध्यमानं दृष्टम्, यथा दण्ड. देवदत्तेन सता, सत्ताऽपि विशेषणमत. सतैव सम्बध्यते नासता, यद्यसताऽपि सम्बध्येत तदा शशविषाणादिनाऽपि सम्बध्येत, न चैवमिष्टमिति पूर्वपक्षयति–**नासतेति** । ननु सत्ताया एवंविधं

१ सि. क. सत्ताव० । २ सि. क. नाश्यान्यना । ३ सि. °न्धाभ्यु० ।

साधनव्याख्या यावत् सत्ताया अपीति, अथ सम्बध्यत इत्यादिना यावत् तदवस्थ इति, पूर्वपक्षिक एव परमतमाशङ्क्योत्तरमाह–अथ तव मतमसदपि द्रव्यादि सम्बध्यते, सत्ताया[1] एवंस्वरूपत्वात्, तत्प्रतिपा-[दयति–]सत्ताया एव हि हेतुभूतायाः सामर्थ्यात् तस्या[2] आधारो भवति सद्द्रव्यादीति, एतदपि नोपपद्यते, यस्मात् तद्वच्छशविषाणादेरिति गतार्थम्, एवं व्युत्पाद्य पूर्वपक्षं प्रशस्तमतिराहात्राप्युत्तरं–शशविषाणादिवदत्यन्तनिरात्मकत्वानभ्युपगमात्, केषां? कार्यद्रव्यगुणकर्मणाम्, द्विविधो हि भाव उक्तः–स्वभावसद्भावः सम्बन्धसद्भावश्च, इतरेतरामतां सात्मकानामेव सविशेषणामस्त्वादन्योन्य[3]चन्द्रादि[त्व]वदित्यादिपूर्वं तस्माच्छशविषाणादीनामेवात्यन्तासतामसत्त्वम्, न प्राक् पश्चादितरेतराद्यमतामनात्मकत्वम्, अतो द्रव्यादिसत् तन्तुषु कारणेषु समवेतं वस्त्वेव सत्तासम्बन्धरहितमपि सात्मकमेव, न खरविषाणवन्निरात्मकम्, तस्माद्युक्तः सत्तासम्बन्धो द्रव्यादीनां न खपुष्पादीनामिति. अत्राह–नन्वसदित्यादि यावत् कथमस्य सात्मक[त्व]मिति द्रव्यादे[4]र्निरात्मकत्वापादनार्थो ग्रन्थो गतार्थः, उत्तरपदाभिधेयनिवारकत्वात् सत्प्रतिषेधार्थत्वादनात्मकमिति, अत्रोत्तरं–नानेकान्तादित्यादि यावत् तथेहापि, नास्य सदित्यसदिति लौकिकशास्त्रीयदृष्टान्तद्वयेन व्यभिचारप्रदर्शनार्थो बहुव्रीहिसमाश्रयेणापुत्रब्राह्मणवदगुणगुणवदिति च गतार्थो ग्रन्थः, एवमनात्मकत्वे स्थिते तस्य[5] व्यभिचार उच्यते–न च तदपि निरात्मकमित्यादि, वैधर्म्येण शशविषाणवदिति. सत्तासम्बन्धरहितत्वान्निरात्मकं खरविषाणवदित्येतत् सांख्यबौद्धकल्पितप्रधानपुरुषपञ्चस्कन्धवत् स्यात्, अथ वा सत्तासम्बन्धात् सात्मकमित्येवमुच्यमाने च प्रधानादिवत् सत्तासम्बन्धादृतेऽपि सात्मकत्वदर्शनादित्यव्यापिता तथेहापि स्यादिति, त्वत्पक्षे दृष्टान्ताभाव इति चेदित्यादि पूर्वपक्षीकृत्य तदुत्तरं सामान्यवद्वेत्यारभ्य

सामर्थ्यमस्ति यदसदपि द्रव्यादि आधारत्वेनाभ्युपैति, नात कश्चिद्दोष इत्याशङ्कते–**अथ तव मतमिति**। असदपि यद्याश्रयेत सत्ता शशविषाणादीनप्याश्रयेत, अविशेषादिति पूर्वपक्षी प्राह–**यस्मादिति**। शशविषाणादि यथा अत्यन्तनिरात्मकं अत्यन्तासत् तथा सद्द्रव्यादि नात्यन्तासदिति समाधत्ते- **शशविषाणादिवदिति**। अत्यन्तनिरात्मकत्वाभावमेव दर्शयति–**द्विविध इति**। परस्परभिन्नानां सात्मकानामेव वस्तूनां स्वरूपसद्भावः सम्बन्धसद्भावश्च, न त्वत्यन्तासतां शशविषाणादीनाम्, तस्य कालत्रयेऽप्यननुभवेन निरात्मकत्वात्, द्रव्यादि वस्तु च प्राक् पश्चादितरेतररूपतयाऽसत् प्राक् तन्तुरूपेणेदानीं पटरूपेण पश्चाच्च खण्डपटादिरूपेण सात्मकमेव, अतस्तत्र सत्तासम्बन्धः स्यान्न शशविषाणादाविति भावः। तन्तुषु द्रव्यादिरूपेण सात्मकं पटादि सत्तासम्बन्धाभावेऽपि, सत्तासम्बन्धाच्च सद्भवति, सत्तासमवायरहितानामपि सामान्यविशेषसमवायानां सात्मकत्वादित्याशयेनाह **अतो द्रव्यादीति** द्रव्यादि सत्–द्रव्यादिरूपेण पटादि सात्मकमित्यर्थः, ननूत्पत्तेः पूर्वं द्रव्यादेरसत्त्वे कथमस्य सात्मकत्वम्, न सत् असदिति नञ उत्तरपदाभिधेयनिवारकत्वात्, सत्प्रतिषेधात् सात्मकत्वानुपपत्तेरिति शङ्कते–**नन्वसदिति**। नास्य सत् असदिति बहुव्रीह्याश्रयेण समाधत्ते–**नानेकान्तादिति** स्वरूपसत एव द्रव्यादेः सत्तासम्बन्धस्य प्रतिषेधः क्रियते, तस्मादसदपि सात्मकं सत्तावत् प्रकाशितप्रकाशनवैयर्थ्यवत्, अतो यदसत् तन्निरात्मकमिति नियमोऽनैकान्तिकः, अथवाऽपुत्रब्राह्मणवदिति लौकिकः अगुणगुणवदिति शास्त्रीयो दृष्टान्त इति। ननु सत्तादिरपि असत्त्वान्निरात्मक एव भवतु, अतोऽनैकान्तिकत्वं तदवस्थमेवेत्याशङ्कते–**न च तदपीति**। सत्तासम्बन्धरहितोऽपि सात्मक इत्यत्र विपरीतदृष्टान्त एवास्ति, यः सत्तासम्बन्धरहितः स निरात्मकः यथा शशविषाणादिरिति, अथवा सांख्याभिमतप्रधानवत् पुरुषवद्वा, बौद्धकल्पितपञ्चस्कन्धवदिति निरात्मकताया दृष्टान्ता इति भावः। एते न वैधर्म्यदृष्टान्तरूपाः किन्तु व्यभिचारनिरूपका इत्याशयेनाह–**अथवेति**। यत् सत्तासम्बन्धरहितं तत्सात्मकमित्यत्र नास्ति वैशेषिकस्य दृष्टान्त इत्याशङ्कते–**त्वत्पक्ष इति** वैशेषिकपक्ष इत्यर्थः सन्ति सामान्यविशेषादयः सत्तासम्बन्धरहितस्य सात्मकत्वे दृष्टान्ता इति प्रतिविधत्ते–

१ सि. क. °वाचेयं। २ सि. क. तस्याचारी भ०। ३ सि. क. अनन्य०। ४ सि. क. °दर्निरात्मकत्वादेर्नि०। ५ सि. क. तस्याभ्य०।

यावत् सामान्यवदेव सात्मकं न घटादिवत्सात्मकमिति, वाशब्दोऽवधारणार्थः तद्व्याख्यानसहितो ग्रन्थः, वैशेषिकपक्षे सत्तासम्बन्धरहितसात्मकदृष्टान्ताभावे चोदिते सामान्यविशेषसमवायानां सात्मकत्ववत् स्यादिति गतार्थम् । सामान्यादीनां सात्मकत्वमसिद्धमिति चेदिति दृष्टान्ते साध्यधर्मासिद्धिचोदना, तत्परिहारो-न, स्वरूपभिन्नेत्यादि यावद् विशेषणं तत् सामान्यमिति दृष्टान्तसाधनम्, छत्रवस्त्रकम्बलादिविशेषणैः छत्रिवस्त्रिकम्बलिनां सात्मकैरात्मरूपप्रत्ययकैर्विशेषणत्ववत् स्वरूपभिन्नत्वे सत्यभिन्नवा[ग्]बुद्धिव्यवहारविषयत्वात् विशेषणं सामान्यं सात्मकञ्चेत्यन्तमुत्तरमेतदिति, अत्राप्युत्तरे बह्वेव सम्प्रधार्यम्-अस्मात् प्रत्येतदप्युत्तरं न निश्चलमेवेत्यभिप्रायः, यस्मादेतदप्युत्तरं द्रव्यादीनां शशविषाणवदत्यन्तनिरात्मकत्वानभ्युपगमबलेन सप्रसङ्गमुत्थापितं शशविषाणादीनामपि सत्करत्वप्रसङ्गस्तदवस्थ इत्यत प्रभृति समानप्रचर्चं च ।

**अन्यदप्यत्र वक्ष्यामः, अत्यन्तनिरात्मकत्वानभ्युपगमादिति वचनेन सदसत्त्वयोरपि विकल्पवत्त्वं वर्ण्यते किञ्चित्सत् समस्तं सदिति, एवमसदपीति, सम्पूर्णनिरतिशयस्वात्मन एव तु सत्त्वात् कुतो विकल्पः सत्त्वे? अस्तु वा विकल्पवत् तत्पुनर्निरूप्यं त्वया ।**

**( अन्यदपीति )** अन्यदप्यत्र वक्ष्यामः-अत्यन्तनिरात्मकत्वानभ्युपगमादित्यनेनैव तावद्वचनेन सदसत्त्वयोरपि विकल्पवत्त्वं वर्ण्यते, द्विधा सत्-किञ्चित्सत् समस्तं सदिति, एवम[स]दपीत्याभ्यां विकल्पाभ्याम्, सम्पूर्णनिरतिशयस्वात्मन एव तु सत्त्वात्-तुशब्दः परमतव्यावर्त्तनार्थः, यद्यपि मतं परस्य सदसतोः विकल्पवत्त्वमस्तु को दोष इति, तन्न भवति, सत् सत्तरं सत्तममिति सतोऽतिशयाभावात् कुतो विकल्पः सत्त्वे, तस्मात् सम्पूर्णमेव सत्त्वम्, एवमसत्त्वमपि, ततो नात्यन्तानात्मकं सात्मकञ्चेत्ययुक्तं

**सामान्यवद्वेति** सामान्यवदेवेत्यर्थ. एतदेव व्याचष्टे-**सामान्यवदेवेति** । दृष्टान्ते साध्यासिद्धिमाशङ्कते-**सामान्यादीनामिति** । उत्तरयति वैशेषिक-**नेति,** यत स्वरूपभिन्न सदाभिन्नवाग्बुद्धिव्यवहारविषयं तत्सात्मकं दृष्टम्, ये च छत्रवस्त्रकम्बलदण्डादय. स्वानुरूपं प्रत्ययं छत्री वस्त्री कम्बली दण्डीत्येवंरूपमादधति, एवं सामान्यादिरपि, सर्वमेव हि सामान्यं स्वव्यक्तीरनुवर्त्तत स्वानुरूपं प्रत्ययं जनयति, स्वानुरूपञ्चाभिधानं कारयति, यथा घटत्वं स्वव्यक्तीरनुवर्त्तते घट इति प्रत्ययमभिधानञ्च जनयति, एवं छत्रवस्त्रादिवत् सात्मकञ्चेति न सामान्यादीनां सात्मकत्वमसिद्धमिति भाव. । तदेवं प्रशस्तमतिना पूर्वपक्षनिरसनपूर्वकं स्वमते व्यवस्थापिते आचार्य आह-**अत्राप्युत्तर इति,** प्रशस्तमतीयोत्तर इत्यर्थ, कुत आरभ्य तदीयउत्तर इत्यत्राह-**यस्मादेतदपीति** । अनिश्चलत्वे कारणमाह-**शशविषाणादीनामपीति** । कार्यद्रव्यादीनामत्यन्तनिरात्मकत्वानभ्युपगमादिति त्वदीयवचनेनेदमवगम्यतेऽर्थापत्त्या, निरात्मकतायामत्यन्तेति विशेषणेन हि किञ्चिन्निरात्मकताप्यस्तीति, यद्व्यावर्त्तनायात्यन्तेति विशेषणं सार्थकं भवेत्, एवञ्च किञ्चिन्निरात्मकं समस्तं निरात्मकमिति तथा तत्प्रतिद्वन्द्विनोऽपि किञ्चित् सात्मकं समस्तं सात्मकमिति भेदद्वयवत्त्वमवगम्यत इत्याशयेनाह-**अन्यदपीति** । अभिप्रायमेव वर्णयति-**अत्यन्तेति** । सत सर्वदा सम्पूर्णमेव, न तत्र कश्चनातिशयोऽस्तीति किञ्चित्त्वसमस्तत्वादिना वैलक्षण्याभ्युपगमोऽयुक्त इत्याशयेनोत्तरयति-**सम्पूर्णेति,** इतरन्यूनीकरणरूपोऽभिभवोऽतिशय., तस्मान्निर्गतः स्वात्मा यस्य तदेवभूतं सत्त्वं, प्रतियोग्यसमानाधिकरणरूपमिति भाव । अत एव सत् सत्तर सत्तममिति व्यवहारो नास्ति, तस्मात सद्विकल्पो नोचित इत्याह-**सदिति,** यद्यपि प्रवृत्तिनिमित्तसम्बन्धप्रतियोगिगुणक्रियाप्रकर्षापेक्षः सत्तर. सत्तम इत्यादिव्यवहारो भवति तथापि द्रव्यसामान्ययो. प्रकर्षो नास्तीति ज्ञापनाय नपुंसकनिर्देश. कृत. । तस्मादत्यन्तनिरात्मकमिदमिदमत्यन्तसात्मकमित्यभिधानमनुचितमतोऽत्यन्तनिरात्मकत्वानभ्युपगमादिति हेतुरयुक्त इत्यभिप्रायं प्रकाशयति-**सत इति** । सत्त्वा-

**१ सर्वासु प्रतिषु सत्वरत्व० । २ सर्वत्र समस्तमस्तदिति. एवमदपी० ।**

वक्तुमित्यभिप्रायः, अस्तु वा विकल्पवत् सत्त्वमसत्त्वञ्च, तत् पुनर्निरूप्यं त्वया कतमत्तत् स्वरूपतः, क वाऽऽश्रये किञ्चित् सत्त्वमसत्त्वञ्चेति विकल्प्यम् ।

अत्राह —

**एतर्हि निरूप्यते एकसत्तासदसदपि, असमर्थगोवत्, एवं तर्हि सामान्यसत्तासत्ताऽव्यक्तिः किञ्चित्सती न सम्पूर्णा सती, एकसद्भावत्वात् यदेकया सत्तया सत् तत् सच्चासच्च दृष्टम्, स्वसत्तावत्, स्वभावसद्भावत्वाद्वा, असमवेतसत्ताकानि द्रव्यादीनि यथा स्वभावसद्भावत्वात् सत् सम्बन्धसत्तयाऽसत् तथा सत्तापि स्यात् सा असर्वगता च व्यक्तिरेव वा, एकजातीयापेतस्वरूपत्वात् घटवत् वक्ष्यमाणदुर्निरूपविकल्पत्वाच्च ।**

(**एतर्हीति**) एतर्हि निरूप्यते, किमत्र निरूप्यं ? नन्विदमेव तदेकसत्तासदसदपि—एकया स्वभावसत्तया सत् तदेवासत् सम्बन्धसत्तया, ततस्तत् किञ्चित् सत् किञ्चिदसत्, किमिव ? असमर्थगोवत्—यथा गोकार्यासमर्थो गौरेव सन्न गौरित्युच्यते- असौ गौर्न भवति, तथेदमपि द्रव्यादि सदेवासदिति, अत्र ब्रूमः—एवं तर्हीत्यादि, सामान्याख्यायाः सत्तायाः—सामान्यसत्तायाः सत्ता सा चाव्यक्तिः—द्रव्यादिव्यक्तिरहिता किञ्चित्सती, न सम्पूर्णा सती—स्वभावसत्तामात्रेण सती सम्बन्धसत्तया न सती—सती चासती च विकल्पवतीत्यर्थः, कस्मात् ? एकसद्भावत्वात्—यदेकसत्तया सत् तत् सच्चासच्च दृष्टम्, तद्यथा स्वसत्तावत्—यथा द्रव्यादि स्वभावसत्तया सत् एकया, सम्बन्धसत्तयाऽसत् तथा महासत्तापि स्यादिति, एष एव

सत्त्वयो द्रव्यसामान्ययो प्रतियोगिसमानाधिकरणत्वेऽभ्युपगतेऽपि, कतमत् सत् प्रतियोग्यसमानाधिकरणे क वाऽधिकरणे सत्त्वासत्त्वसामान्ययोः प्रतियोगिसमानाधिकरणत्वं तत्प्रदर्शनाय भवतेत्याचष्टे—**अस्तु वेति** । सत्त्वं हि द्विविधं प्रागुपदर्शितं स्वभावसत्त्वं सम्बन्धसत्त्वञ्चेति, यदुभयविधसत्तायुतं तत् सम्पूर्णसातिशयसदुच्यते, यत्र तु केवलं स्वरूपसत्त्वं तत्र किञ्चित्सत्त्वमसत्त्वञ्चेत्याशयेन शङ्कते—**एतर्हीति । एकसत्तेति,** या व्यक्तिरेकया सत्तया युता सैकसत्ता सती असती चेति भावः, समासस्तु एका चासौ सत्ता च एकसत्ता एकसत्तया युतं सत् एकसत्तागतं तदेवासत् एकसत्तासदसदिति, न त्वेकासत्ता यस्येति बहुव्रीहिः, 'गोस्त्रियोरुपसर्जनस्य' (पा० १-२-४८) इति ह्रस्वत्वापत्तेः । **असमर्थेति,** गवर्थक्रियाऽसमर्थेत्यर्थः । सदसत्त्वयोरव्याप्यवृत्तित्वे निदर्शनमाह—**असमर्थेति । एवं तर्हीति,** सामान्यरूपा सत्ताऽपि सत्तासम्बन्धरहिता एकसद्रूपत्वान्नसम्पूर्णा, या च स्वयमसम्पूर्णा सा न परान् सम्पूरयितुं प्रभवति, स्वरूपसत्तावत् स्वरूपसद्धि द्रव्यादि एकविधसत्तया सत्, अत एव सदसच्च दृष्टम्, तथैव महासत्ताऽपि स्वभावसत्तयैकया सतीति सती चासती च स्यात् न चेष्टापत्तिः सामान्यादेरनवस्थाभयेन निःसामान्यत्वात् स्वरूपसद्रूपताया एवाभिमतत्वादिति वाच्यम्, तथा सति स्वरूपसद्रूपस्य द्रव्यादेर्यथा न सन्ति व्यक्तयः, न चानुवर्त्तनशीलत्वं तथा महासत्ताया अपि स्वरूपसद्रूपत्वात् व्यक्तिरहितत्वं स्वाश्रययावद्विषयानुवर्त्तनशीलत्वं च स्यादिति व्यक्तितुल्यैव स्यात् सा, न सामान्यमिति निष्कृष्टार्थः । **सामान्यसत्ताया इति,** महासत्तायाः सत्ता सद्रूपता स्वभावः स्वरूपमिति यावत्, सा कीदृशी ? अव्यक्तिः—व्यक्तिरहिता, न तस्याः काऽप्याश्रयभूता व्यक्तिरस्ति, अत एव किञ्चित् सती, न सम्पूर्णा सतीति भावः । तत्र हेतुमाह—**एकसद्भावत्वादिति,** सच्चासौ भावश्च, सतो वा भावः सद्भावः सत्तेत्यर्थः, एकेन सद्भावः एकसद्भावः, एकया सत्तया सद्रूप इत्यर्थः, यद्वा एकञ्च तत् सच्च, एकसत्, भावप्रधानो निर्देशः, एकसत्त्वेत्यर्थः, तेन भावः एकसद्भावः, तस्य भावस्तस्मादिति विग्रहः, एकसत्तासत्ता अव्यक्तिरिति प्रतिज्ञा, साध्यमव्यक्तित्वम्, तस्यैव भाष्यं किञ्चित् सती न सम्पूर्णा सतीति, हेतुरेकसद्भावत्वादिति । व्याप्तिं ग्राहयति—**यदेकसत्तयेति,** स्वसत्तावत् स्वरूपसत्त्ववदित्यर्थः । स्वरूपसत्त्वञ्च द्रव्यादिसत्तासम्बन्धप्राक्कालीनमिति दृष्टान्तं व्याचष्टे—**यथेति ।** हेतोर्भाष्यमाह—**स्वभावेति ।** स्वभावेनैव सद्रूपो भावः, तस्य भावस्तस्मात्, असमवेतसत्ताकत्वादित्यर्थः, न

१ सर्वासु प्रतिषु एष एव हेत्वर्थोऽन्यथा वा योज्यते० ।

हेत्वर्थोऽन्यया वाचोच्यते–स्वभावसद्भावत्वाद्वा, असमवेतसत्ताकानि द्रव्यादीनि यथेति गतार्थम्, एतदनिष्टापादनम्, सा–सामान्यसत्ता असर्वगता च स्वविषयसर्वगता च न भवतीत्येतदपि दोषापादनम्, न सर्वस्वविषयानुवृत्तिरित्यर्थः, व्यक्तिरेव वा–द्रव्यादिव्यतिरिक्ता न भवतीति दोषापादनप्रतिज्ञान्तरम्, उभयत्रैक एव हेतुः–एकजातीयापेतस्वरूपत्वादिति, एकप्रकारमेकजातीयम्, 'प्रकारवचने जातीयर्' ( पा० ५-३-६९ ) न तु 'जात्यन्ताच्छबन्धुनि' ( पा० ५-४-९ ), मा भूद्व्यत्वसत्तादिवदनैकान्तिकत्वम्, तत एकजातीयादपेतं–व्यावृत्तं स्वरूपं यस्याः सा एकजातीयापेतस्वरूपा, तद्भावादेकजातीयापेतस्वरूपत्वात्, घटवत्, सजातीयासजातीय[1]व्यावृत्तस्वरूपत्वादित्यर्थः, यथा घट एकप्रकारेण[2] व्यावृत्तस्वरूपो देशकालवर्णाकारादिभिर्विशिष्टत्वात् घटान्तरस्वविषयव्यापी न भवति व्यक्तिरेव च न भवति तथा सत्तापि स्यादिति, तस्मादयुक्तमसमर्थगोवदेकसत्तासदसत्त्वं द्रव्यादेस्तथा सत्तायाश्चेति । इतश्चायुक्तं–वक्ष्यमाणदुर्निरूपविकल्पत्वात्, खपुष्पवदसत्त्वादिति ।

अनुपपन्नविकल्पत्वहेतोरथै[3]तानि व्याख्यानान्तराणि तद्यथा—

**उभयासम्पूर्णतायां वा तन्निरूप्यमेव किं सदसम्पूर्णता, उतासत्, आहोस्वित् सदसदिति, तत्र यदि तावत् सत् तत्सन्न भवति, असत्त्वात् खपुष्पवत्, नासत् सत्त्वाद्घटवत्, न सदसत् त्वन्मतेनैव सदसतोर्वैधर्म्यात् सदसत्ताऽभावाच्च, अहं पुनरेवं तर्कयामि सदसद्वैधर्म्यनिराकरणायैव तु प्राय इयं प्रतिपत्तिर्भवत उभयासम्पूर्णतायां तदेव सच्चासच्चेति साधर्म्यमेव ।**

**उभयासम्पूर्णतायां वेत्यादि**, वस्तुनो द्रव्यादेः सामान्यस्य वा सत्त्वेनासत्त्वेन च किञ्चित्समस्तत्वाभ्यामसम्पू[र्ण]तायां पुनरपि तन्निरूप्यमेव किं सदसम्पूर्णता ? उतासत् ? आहोस्वित् सद-

हि सामान्यसत्ताया सत्ता समवैतीति भावः । दृष्टान्तमुक्तमेव सङ्गमयति–**असमवेतेति** । असमवेतसत्ताकं द्रव्यादि यथा सदसच्च तथा महासत्तापीत्यनिष्टापादनं विज्ञेयम् । अथ सामान्यसत्ता असर्वगतेति प्रतिज्ञान्तरं दर्शयति–**सेति** । **स्वविषयेति**, स्वविषयं सर्वत्र वृत्तिर्न भवतीत्यर्थः । अन्या प्रतिज्ञामाह–**व्यक्तिरेव वेति** । सामान्यसत्ता व्यक्तिरेव भवति, एवशब्दात् व्यक्तिभिन्ना जातिरूपा न भवतीत्यर्थः । इदमेव दर्शयति–**द्रव्यादीति** । सामान्यसत्ता असर्वगता व्यक्तिरेव वेति प्रतिज्ञाद्वयं हेतुमेकमेवाह–**एकजातीयेति,** एकस्मात् प्रकारात् अपेतस्वरूपत्वात्, विशेषणेऽर्थेऽत्रैकशब्दाज्जातीयर् प्रत्ययः, न त्वेकजातिशब्दाद्बन्ध्वर्थे छप्रत्ययः, बध्यते जातिरस्मिन्निति बन्धु, जातेर्व्यञ्जकं द्रव्यं बन्धु, एतत्पक्षे एकजातिमदपेतस्वरूपत्वादित्यर्थः स्यात्, तथा सत्ययं हेतुरसर्वगतत्वव्यक्तित्वयोर्व्यभिचारी भवेदिति भावः । व्यभिचारमेव प्रकाशयति–**मा भूदिति** । किञ्चिद्धर्मानवच्छिन्नस्वरूपत्वं तदर्थ इति मत्वा निष्कृष्टार्थमाह–**सजातीयेति** । दृष्टान्तदार्ष्टान्तिकयोर्हेतुसाध्ये सङ्गमयति–**यथा घट इति** । तदेवं द्रव्यादेः सामान्यस्य सत्ताया वा किञ्चित्त्वावच्छेदेन समस्तत्वावच्छेदेन च सत्त्वमसत्त्वं वेति निगमयति–**तस्मादिति** । दोषान्तरमाह–**इतश्चेति** । या सदसदसम्पूर्णता भवतोक्ता सा किं सद्वस्तुन, उतासत, किं वा सदसत ? एतदपि निरूप्यं त्वयेत्याह-**उभयेति** । **उभयेति,** उभयाभ्यां किञ्चित्त्वसमस्तत्वाभ्यां सदसतोरसम्पूर्णतायामित्यर्थः, वेति पक्षान्तरद्योतनम्, पूर्वं सम्पूर्णनिरतिशयस्यात्मन एव सत्त्वमुक्त्वा तत्र विकल्पमभ्युपगम्य विचारितत्वात् । निरूपणबीजं विकल्पं दर्शयति–**किं सदसम्पूर्णतेति** । प्रथमं विकल्पं

१ सि. क. °यव्यावृत्तस्व० । २ सि. क. °प्रकारेभ्यो । ३ सि. क. हेतोरेवैतानि व्या० ।

सत् ? इति, तत्र यदि तावत् सत् तत्सन्न भवति, कस्मात् ? असत्त्वात्, खपुष्पवत्, उभयासम्पूर्णत्वाभ्युपगमान्नासिद्धम्, असत्त्वस्यापीष्टत्वात्, नासत्—न च तदसत् सत्त्वाद्घटवत्, सत्त्वमपि नासिद्धमुभयासम्पूर्णत्वेष्टेरेव, न सदसत्—नापि तत् सदसत्, उभयरूपमित्यर्थः। त्वन्मतेनैव सदसतोः वैधर्म्यात् 'कार्ये सदसत्त्वं नेति वचनात्, किञ्चान्यत् सदसत्ताऽभावात्—यथा सत्तासम्बन्धात् सद्भवति तथा सदसत्तासम्बन्धात् सदसत् स्यात्, असत्तासम्बन्धादसद्वा स्यात्, न चैवं भवितुमर्हति, अदृष्टानिष्टत्वात्, तस्मादसत्ताभावात् सदसत्ताभावाच्च नासत् सदसदसम्पूर्णमिति, अहं पुनरेवं तर्कयामि त्वया नोपलक्षिता सदसद्वैधर्म्यनिराकरणायैव तु प्राय इयं प्रतिपत्तिर्भवतः किञ्चित् सत् समस्तं सत्, किञ्चिदसत् समस्तासदिति ब्रुवतः, उभयासम्पूर्णतायां तदेव सच्चासच्चेति सदसतोः साधर्म्यमेव न वैधर्म्यमिति[1] प्रतिपन्नत्वादिति।

योऽपि चासच्छब्दस्यागुणगुणवत् नास्य सदित्यसदिति बहुव्रीहिसमाश्रयात् सदर्थवत्त्वमेवेति विकल्पः, असदिति सत्तासम्बन्धरहितमित्यर्थः, सोऽप्यनुपपन्नः, कृत्तद्धितान्तरूपार्थविप्रकृष्टान्तरत्वात् कथं सत्ता सत् स्यात् यदभावान्नास्य सदित्ययं भाव्येत।

योऽपि चासच्छब्दस्येत्यादि यावत् सत्तासम्बन्धरहितमित्यर्थ इति पूर्वपक्षप्रत्युच्चारणम्, योऽप्यसौ नास्य सदित्यसत्, अगुणगुणवदिति तस्य बहुव्रीहिसमाश्रयात् सामान्यविशेषसमवायैः सद्भिः [2]सामान्यसत्तया न सम्बद्धम्, तस्मादसच्छब्दस्य सदर्थवत्त्वमेवेति विकल्प इति तत्रोत्तरमुच्यते सोऽप्यनुपपन्नो विकल्पः कृत्तद्धितान्तरूपार्थविप्रकृष्टान्तरत्वात् भवत्यस्ति वेति सत् कृदन्तरूपम्, अर्थश्चास्य द्रव्यभूतः, सतो भावः सत्तेति तद्धितान्तरूपम्, अर्थश्चास्य 'यस्य [ गुणस्य भावात् ] च द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' ( मह्रा० ५-१-११९ ) इति सतोऽसाधारणं स्वरूपं सदन्तरव्यापि सामान्यञ्चेति

---

दूषयति—**तत्र यदीति**। हेत्वसिद्धिं निराकरोति—**उभयेति**। द्वितीयं दूषयति—**नासदिति**। तृतीयं दूषयति—**न सदसदिति**। हेतुमाह—**वैधर्म्यादिति**। तत्रासिद्धिं वारयितुं तदीयं वचनं प्रमाणयति—**कार्येति**। यथा सत्तायोगात् सदित्युच्यते तथाऽसत्तायोगात् सदसत्तायोगाच्चासत् सदसच्च वाच्यम्, नेष्टमेवं भवतामित्याह—**किञ्चान्यदिति**। एवञ्चासत् सदसच्चासम्पूर्णं न स्यात् सम्पूर्णमेव स्यादित्याह—**तस्मादिति**। किञ्चित्वसमस्तत्वाभ्यां सदसतोरसम्पूर्णतामभ्युपगच्छतो भवतो वादः सदसतोर्वैधर्म्यनिराकरणपर्यवसाय्येव, यत्त्वया नावगम्यते इत्यहं तर्कयामीत्याह—**अहं पुनरिति**। कथं वैधर्म्यनिराकरणं भवतीत्यत्राह—**उभयेति**। ननु अगुणगुणदृष्टान्तेनासत्त्वं स्वरूपसत्येव वर्त्तते, न खपुष्पेऽत्यन्तासति, ततश्च कथं तत् सन्न भवतीत्यस्य साधकाविनाभावाग्रहादिति शङ्कायां प्रतिविधानमाचष्टे—**योऽपि चेति**। तद्व्याचष्टे—**योऽप्यसाविति**। कृदन्तार्थतद्धितार्थयोरत्यन्तविप्रकृष्टत्वेन सच्छब्दवाच्यसत्ताशब्दवाच्यार्थयोरत्यन्तभिन्नत्वेन सत्ता न सद्भवितुमर्हति इत्याशयेन समाधत्ते—**कृत्तद्धितान्तेति**। कृदन्तनिष्पन्नसच्छब्दतद्धितान्तनिष्पन्नसत्ताशब्दयोर्द्रव्यभाववाचिनोः शब्दतोऽर्थतश्चात्यन्तं विप्रकृष्टतेति भावः। तदेव स्फुटयति—**भवतीति**। तद्धितविशेषयोः त्वतलोरर्थमाह—**अर्थश्चास्येति**। **यस्य चेति**। यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ प्रत्ययौ भवत इति वैयाकरणानां नियमोऽयम्, तन्मते यद्भेदकं सर्वांगे स गुण इति गुणलक्षणमतो जात्यादेरपि गुणपदेन ग्रहणम्, एवञ्च प्रकृतिजन्यबोधे यः प्रकारः स भावस्तदभिधाने त्वतलौ भवत इति भावार्थस्तस्य, तथा च कृदन्तसच्छब्दस्य भेद्यार्थत्वात्, तद्धितान्तसत्ताशब्दस्य भेदकार्थत्वात् सत् सत्ताशब्दयोरपर्यायत्वेन सत्ता सतीति वक्तुं न शक्यत इति विशदयति—**सतोऽसाधारणमिति**। सत्तार्थे सच्छब्दप्रयोगासम्भवेन नास्ति सत्ता यस्मिन्नित्यर्थे नास्य सत् तदसद्द्रव्यादीति न बहुव्रीहिः कर्त्तुं शक्यत इत्याह—

---

1 सि. क. डे. साधर्म्यमेव न वैधर्म्यमेव न वैधर्म्यमिति। 2 सि. क. डे. शून्यसत्तयेति।

शब्दतोऽर्थतश्चात्यन्तभेदादनयोः कथं सत्ता सत् स्यात्, यदभावान्नास्य सदित्ययं—द्रव्यादि भाव्येत, एवं तावत् सदुक्तौ नैव सचोक्तिः।

**अथ नास्य सदिति सत्तापि स्वभावसत्तया सती सा यस्य नास्ति तदप्यसद्द्रव्याद्युच्यते गुरुत्वाभावात् गुणागुरुत्ववदिति, एतदेव ननु प्रस्तुतं सदादिषडविशेषाभिधानद्वारेण द्रव्यादीनामेव त्रयाणां विकल्पः परस्परतश्च लक्षणादिना व्याचिख्यासितो भवताम्, तत्र सदादिषडविशेषो द्रव्यादीनामेव न सामान्यादीनामित्युक्त्वा सामान्यादीनां सत्त्वमुच्यमानं स्ववचनविरोधाय, सदा मौनव्रतिनः कोऽस्मीति वचनवत्।**

**अथ नास्य सदित्यादि,** अथ मा भूच्छब्दार्थविप्रकृष्टत्वात् कृदन्तेन तद्धितार्थानभिधानाच्छब्दार्थसङ्करदोष इति सत्तापि स्वभावसत्तया सती, तस्याः सत्त्वात्, सा यस्य नास्ति तदप्यसद्द्रव्याद्युच्यते, यथा गुरुगुणाभावादगुरुद्रव्यं गुणः कर्म वोच्यते, गुरुत्वाभावात् गुणागुरुत्ववत्, तथा सदभावसत्ताभावतुल्यत्वादसदित्युच्यमानमदोषमित्यत्रोच्यते, एतदेव ननु प्रस्तुतं—'सदनित्यं द्रव्यवत्कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' (**वै. अ. १ आ. १ सू. ८**) इति सदादयः षडविशेषा द्रव्यादीनामेव त्रयाणाम्, न सामान्यविशेषसमवायानामित्यविशेषाभिधानद्वारेण त्रयाणां विकल्पो—नानात्वं परस्परतश्च लक्षणादिना व्याचिख्यासितं भवताम्, अस्माभिश्च द्रव्यव्यतिरिक्तगुणाद्यभावात् सामान्याद्यभावाच्च सत्त्वेनाविशेष एव, [अ]विशेषत्वाद्द्रव्यादित्रयं सामान्यादित्रयं वा खपुष्पतुल्यं स्यादित्यासञ्जितम्, प्रोक्तद्वारेण वादप्रस्तावानिति, तत्र सदादिषडविशेषो द्रव्यादित्रयविषय एव न सामान्यादित्रयविषय इत्युक्त्वा सामान्यादीनां सत्त्वमुच्यमानं [न] सदित्यसदिति स्ववचनविरोधाय सदा मौनव्रति[नः] कोऽस्मीति वचनवत्।

**यदभावादिति,** सत्ताभावादित्यर्थः। ननु यद्यत् स्वरूपसत् तत्सर्वं सच्छब्देनोच्यते, द्रव्यादिवत् सत्तापि स्वरूपसतीति सापि सच्छब्देनोच्यते, यथा गुरुत्वाभाववत्सर्वं द्रव्यं वा गुणो वा कर्म वाऽगुरुरुच्यत इत्याशङ्कते—**अथेति।** सच्छब्देन सत्तात्वेन रूपेण सत्ताया ग्रहणं कृत्तद्धितान्तरूपार्थविप्रकृष्टान्तरत्वात् मा भूत्, किन्तु सत्पदशक्यतावच्छेदकरूपेण तस्या ग्रहणे को दोषः, दृश्यते हि घटपदेन नीलघटत्वादिरूपेणाग्रहणेऽपि तत्पदशक्यतावच्छेदघटत्वावच्छिन्नत्वेन नीलपीतादिविशिष्टघटानां ग्रहणमित्याशयं व्यावर्णयति—**अथ मा भूदिति,** स्वभावसत्तया—सत्पदशक्यतावच्छेदकीभूतया सती सत्पदवाच्या, तस्याः सत्त्वात्—सत्तायाः स्वरूपसद्रूपत्वात्, तथा च सत्पदवाच्यं सत्तारूपं व्यक्तिविशेषं सत्पदेनोपादाय नास्य सदित्यसदिति विगृह्य द्रव्यादि असदुच्यत इति भावः। दृष्टान्त उच्यते—**यथेति,** गुरुगुणाभावात्—गुरुत्वलक्षणगुणाभावात्। द्रव्यत्वगुणत्वादिनाऽगुरुशब्देन द्रव्यादीनां ग्रहणाभावेऽपि गुरुत्वाभावलक्षणागुरुपदशक्यतावच्छेदकावच्छिन्नत्वेन द्रव्यादयो यथोच्यन्त इति भावः। गुरुत्वाभावादिति प्रवृत्तिनिमित्तप्रदर्शनपुरस्सरं दृष्टान्तं दर्शयति—**गुरुत्वाभावादिति।** असच्छब्दप्रवृत्तिनिमित्तं दर्शयति—**सदभावेति** धर्मिभेदधर्मात्यन्ताभावयोरेकत्वात् सद्भेदसत्ताऽभावयोस्तुल्यत्वम्, यथा वा नीलपटाभावोऽपि पटाभाव उच्यते तथा सत्ताभावोऽपि सदभाव एवेति तुल्यत्वं बोध्यम्, तस्मात् द्रव्यादि असदित्युच्यमानं न दोषाधायकमिति भावः। अत्र द्रव्यादिषट्पदार्था अविशिष्टा विशिष्टा वेत्येव खलु विचार्याः, तत्र द्रव्यादीनां त्रयाणां सत्त्वादिषड्धर्मैरविशेषत्वमुक्त्वा परस्परतस्तेषां लक्षणादिना भवद्भिर्विशेषो वर्ण्यते, अस्माभिश्च द्रव्यमेवैकं तत्त्वं तद्व्यतिरिक्ता गुणादयो न सन्त्येव, तच्च द्रव्यं सत्त्वेनाविशिष्टमुक्त्वा परस्परविशिष्टद्रव्यादित्रयाणां सामान्यादित्रयाणाञ्च खपुष्पतुल्यत्वमापादितम्, तत्र भवद्भिः सत्त्वादिषड्धर्मैः सामान्यादीनामविशिष्टत्वोक्त्या सामान्यादित्रयाणामसत्त्वमाविष्कृतम्, अधुना च सामान्यादीनां सत्त्वं वदतां भवतां पूर्ववचनविरोधः प्रसज्यत इत्याशयं वर्णयति—**एतदेव ननु प्रस्तुतमिति,** स्पष्टमन्यत्। विरोधं समर्थयति—**तत्रेति**

१ सि. क. क्ष. डे. कृदन्ते। २ सि. क. क्ष. डे. विशेषस्यान्यतर०।

**यत्तु सत् मुख्यं समवायिकारणं द्रव्यादेः कार्यस्य, तदस्यास्त्येवेति तत्किमिति मत्त्वोक्तम्? ननूक्तं सामान्यं समवायि सत् तदस्य नास्ति तदपेक्षयोक्तमसदिति, तद्धि सदेव न भवत्याव-योरपि मतेन, किं तर्हि युक्तं वक्तुम्? नास्यासत् तदिदमनसदिति, न हि खपुष्पं यस्य नास्ति सोऽसन्नित्युच्यते संस्तु सद्वान्नियमाद्भवति प्रतिषेधद्वयार्थत्वात् ।**

**यत्तु सदित्यादि,** यत्तु सत्यं मुख्यं सत् तत्समवायिकारणं द्रव्यादेः कार्यस्याऽऽश्रयः परमाणु-तन्तुकपालादि, घटपटादिपरिणामिकारणं तदस्यास्त्येव बीजभूतं साधयिष्यमाणं, तत्किमिति मत्त्वोक्तम्? न त्वर्थसत्त्वादिना-बहुव्रीहिणा नास्य सदस्ति तदिदमसद्द्रव्यादिकार्यमिति तस्य मुख्यस्य सतोऽस्तित्वाद-युक्तं वक्तुम्, न च सन्न भव[ती]त्यसदिति तत्पुरुषेण द्रव्यादिकार्यस्य सत्त्वादिति वा, ननूक्तं सामान्यं समवायि सत्, तदस्य नास्ति, यत्सम्बन्धाद्द्रव्यादिकार्यं सद्व्यपदेशं लभते इति तदपेक्षयोक्तमसदिति, अत्रोच्यते यत्त्वस्यं नास्ति समवेतमिति सामान्यं तदपेक्ष्य न युक्तं वक्तुम्-नास्य सदिदमसदिति, यस्मात् तत्सदेव न भवत्यावयोरपि मतेन-त्वन्मतेन तावत् सदविशेषाभावात् सामान्यादित्रयस्य, द्रव्यादेरेव सदाद्यविशेषात्, अस्मन्मतेन द्रव्यादिव्यतिरिक्तसामान्यविशेषसमवायासत्त्वादेव, तस्यैव विवादस्य प्रस्तुत-त्वात्, तस्यासत्त्वात् द्रव्यादि कथं नास्त्यस्य सत्तदिदमसदिति बहुव्रीहिणा वक्तुं शक्यम, किं तर्हि युक्तं वक्तुम्? नास्यासत् तदिदमनसदिति, तस्मादसद्यस्य नास्ति तत्सदेव अनसदित्यर्थः, तन्निदर्शनं-नहि

अथ प्रकारान्तरेण, पूर्वपक्षमादर्शयति-**यत्तु सदिति,** अर्थं सद्वा सच्छब्देनोपादाय नासदुच्यते द्रव्यादि, किन्तु समवेतं सामान्यं सच्छब्देनोपादाय तदसदुच्यते, सदाकारप्रत्ययव्यपदेशविषयसत्ताया उत्पत्तिप्राक्कालावच्छिन्ने द्रव्यादावभावादित्याशयं निरूपयति-**यत्तु सत्यमिति,** कार्यरूपतयाऽनुभूयमान घटपटादिद्रव्यस्य समवायिकारणतयाऽनुमीयमानस्य नित्यस्यात एवो-भयविधसद्रूपतया मुख्यस्य सत परमाणोराश्रयस्य सत्त्वात तदपेक्षया द्रव्यादिकार्यं न सदस्यास्तीत्यसदिति वक्तुं शक्यम् तस्य सदाश्रयत्वात स्वरूपसत्त्वाच्चेति भाव । **न त्वर्थसत्त्वादिनेति,** अर्थेन सत्त्वादिना वेति भाव', द्रव्यं गुणः कर्म चार्थशब्देनोच्यन्ते, तत्र वैशेषिकैस्तथा परिभाषितत्वात, यथा 'अर्थ इति द्रव्यगुणकर्मसु (वै० ८-२-३) तेन तेन विधिनाऽर्थ्य-मानत्वात । सत्पदेन यदाऽर्थो गृह्यते तदा असदिति बहुव्रीहि, यदि स्वरूपसत्त्वं गृह्यते तदा तत्पुरुष इत्याशयेनाह-**बहुव्रीहिणेति,** सत्त्वर्थसत्त्वादिनेति पाठेऽपि सत्त्वर्थ षष्ठ्यर्थ' सप्तम्यर्थश्च तदर्थे बहुव्रीहि. । 'मत्त्वर्थे य स बहुव्रीहिरिति वक्तव्यमिति महाभाष्यात् । कुतोऽयुक्तं वक्तुमित्यत्राह-**तस्य मुख्यस्येति** । तत्पुरुषापेक्षयाप्याह-**न च सन्नेति** । तर्हि कथमसदित्युच्यते-**सामान्यमिति,** अनुगतधर्मं समवायप्रतियोगिरूपमुपादाय नास्य सदिति असदुच्यत इति भाव । समवाय-प्रतियोगिसामान्यमुपादाय नैवं वक्तुं युक्तमित्याह-**अत्रोच्यत इति** । उभयमतेन सत्पदग्राह्यतयाऽभिमतं सामान्यं सदेव न भवति, तत कथं तत् सत्पदग्राह्यं भवेदित्याह-**यस्मादिति** । भवद्भि सदाद्यविशेषत्वं द्रव्यादित्रयाणामेवोक्तं न तु सामान्या-दित्रयाणाम्, तस्मात् तदसत्, अस्मन्मते तु सामान्यादीना द्रव्यव्यतिरिक्तानामसत्त्वं सिद्धमेवेत्युभयमतेन सामान्यं न सदिति दर्शयति-**त्वन्मतेनेति** । एवञ्च सामान्यस्य सत्पदानुपादेयत्वे त्वदभिप्रायेण नास्य सदस्त्यसद् द्रव्यादीति नोदितुमुचितम्, अपि तु सामान्यमसत्पदेनोपादाय असन्नास्त्यस्येत्यनसद्द्रव्यादीति वक्तु युज्यत इत्यादर्शयति-**तस्यासत्त्वादिति** । सामान्यस्यास-त्त्वादित्यर्थ', **सदेवानसदिति,** निषेधप्रतियोग्यवृत्तिधर्मेणैवानुयोगिताया अवच्छिन्नत्वादनसत् सदेव भवतीति भाव. । ननु 'न हि खपुष्पं यस्य नास्ति सोऽसन्नित्युच्यत' इति दृष्टान्तवाक्ये यत्तच्छब्दाभ्या सामान्यधर्मावच्छिन्नत्वेन ज्ञातार्थविषयाभ्यां स्त्रीत्वा-द्यवच्छिन्नत्वेनानिर्ज्ञातार्थविषयाभ्यां 'अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यत' इति नियमेन नपुंसकलिङ्गे प्राप्ते तत्कथं

१ सि क. तत्तत्किमिति न त्वो० । २ सि. क. क्ष. डे. कार्यस्यासत्त्वा० । ३ सि. के. क्ष. डे. नास्त्यसम० ।

खपुष्पं यस्य नास्ति सोऽसन्नित्युच्यत इति, सामान्यापेक्षया नपुंसकनिर्देशे प्राप्ते पुल्लिङ्गनिर्देशोऽर्थसामानाधिकरण्यात्, उत्तानार्थः, संस्तु सद्वान् नियमाद्भवति–सदस्यास्तीति सद्वान्, यथा गौरस्यास्तीति गोमान् बहुव्रीहिः सदपेक्ष एव सत्येवार्थे युज्यते नान्यथेति, तथा तत्पुरुषेऽपि योज्यम्, एतदेव वैधर्म्यनिदर्शनम्, कस्मात्? प्रतिषेधद्वयार्थत्वात्–यथा प्रतिषेधद्वयमर्थवदेव दृष्टमनगुरिति, तथा द्विःप्रतिषेधस्य प्रकृत्यापत्तेर्नास्यासदित्युक्ते सद्वानेव भवितुमर्हति नासत्, सदर्थत्वात्।

अत्राह–

**ननु द्विविधभावत्वात् सत्तासद्वचनेऽपि न दोष इति, ननु तदेवेदं भवनं विचार्यते किमेकविधमेव निरतिशयमस्मन्मतवत्? उत त्वन्मतवत् किञ्चित् सत्, समस्तं सदिति? तस्य द्वैविध्यस्यास्मान् प्रत्यसिद्धेः, सत्तासम्बन्धरहितत्वमपि सत्तोपपत्तिरहितत्वमेव उक्तवत्।**

(**नन्विति**) ननु द्विविधभावत्वात् सत्तासद्वचनेऽपि न दोषः–स्वभावसत् सम्बन्धसदिति च द्विविधं सदुक्तम् तस्मात्, सत्तायाः सामान्याख्याया अपि स्वभावसत्त्वमस्तीति नास्य सत् तदिदमसदिति वक्तुं युज्यत एवेत्यत्रोच्यते–ननु तदेवेदं भवनं विचार्यते किमेकविधमेव निरतिशयमस्मन्मतवत्? उत त्वन्मतवत् किञ्चित् सन् समस्तं सदिति?–स्वभावसत् सम्बन्धसदिति च तस्यैव द्वैविध्यस्यास्मान् प्रत्यसिद्धेः, सत्तासम्बन्धरहितत्वमपि सत्तोपपत्तिरहितत्वमेव, उक्तवत्–यथाऽनन्तरमेवोक्तं न किञ्चित् [सत्] समस्तं सत्–स्वभावसत् सम्बन्धसन्नामेति विकल्पजातं सतोऽस्तीति, अथवा खपुष्पमप्यसन्निहितभवितृकत्वात् कार्यवद्भवेदित्यतीतं सर्वमेवोक्तम्, तत्सम्पूर्णनिरतिशयं सत्त्वमसत्त्वञ्चेत्येतस्य प्रतिपादनार्थमिति।

**अत्र केनचित् पृच्छ्येत कस्मात् खपुष्पं दलकेसरमकरन्दादिषु कारणेषु न समवैति?**

---

पुल्लिङ्गेन निर्देशस्तयोः कियत इत्याशङ्कयास्य वाक्यस्य बहुव्रीहेर्लौकिकविग्रहप्रदर्शकवाक्यत्वेन 'अनेकमन्यपदार्थे' (पा० २-२-२४) इति सूत्रोपस्थितेरर्थपदस्मरणात् तद्विशेषणत्वादनयो पुल्लिङ्गतया निर्देशः कृत इत्युत्तरमाह–**सामान्यापेक्षयेति**। यदनसत् तन्नियमात् सद्भवति सद्वानित्याह–**संस्त्विति**। तत्र कारणमाह–**बहुव्रीहिरिति,** नास्यासदिति हि बहुव्रीहिविग्रहवाक्यम्, बहुव्रीहिश्चान्यपदार्थेऽन्वाख्यायते, अत्रास्येति सम्बन्धेऽन्यपदार्थे समासो वाच्यः, सम्बन्ध्युपसर्जनसम्बन्धप्रधानोऽन्यपदार्थः, तथा चात्रानभिहितः सम्बन्धी भवेत्, न स्याच्च पदार्थेन तस्य सामानाधिकरण्यम्, तस्मात यस्य स यस्मिन् स इत्यादिनच्छब्दार्थान्तर्भावेण द्रव्यप्रधान एवान्यपदार्थ इति सलिङ्गससंख्यसदपेक्ष एव बहुव्रीहि, तस्मात् अनसदिति सति एवार्थे युज्यते नासति, तत्पुरुषसमासेऽपि नञः पर्युदासार्थत्वेन सत एवानसत्त्वमिति ध्येयम्। पुनर्वादी सत्तायाः सच्छब्दवाच्यत्वेन सत्तापेक्षया द्रव्यादेरसत्त्वं वक्तुं शक्यत इत्याशङ्कते–**नन्विति**। भावद्वयं प्रदर्श्य व्याकरोति–**स्वभावसदिति**। भावस्य द्वैविध्य एव हि विचारः प्रसरति किं निरतिशयस्वरूपं सत्? किं वा किञ्चित्त्वसमस्तत्वाभ्यां सातिशयमिति, तस्मादस्मान् प्रत्यसिद्धमुपादाय कथमुच्यत इत्याशयेनोत्तरयति–**ननु तदेवेति**। सत्तायामपि प्रागुक्तदिशोपपत्तेरभावात्सत्तासम्बन्धराहित्येनासत्त्ववर्णनमपि न सम्यगित्याह–**सत्तासम्बन्धेति**। उक्तवदिति प्रोक्तमेव दर्शयति–**यथेति,** अधुनैव यथोक्तं तद्वदिति भाव। अथवा यथैतन्नयारम्भादारभ्य यदुक्तं सम्पूर्णनिरतिशयमेव सत्त्वं असत्त्वञ्च भवतीत्येतत्प्रतिपादनार्थं तत्सर्वमत्र विज्ञेयमित्याशयेनाह–**अथवेति**। अथ सत्तासम्बन्धात् प्रागपि द्रव्यादेः कार्यस्य सत्त्वं साधयितुं विवक्षितहेतोर्व्याप्तिं ग्राहयितुं अनुयुज्यते–**अत्र केनचिदिति**। कारणेषु

---

**१ सर्वासु प्रतिषु सत्वाञ्च नियमाद्भवति मत्रास्यास्तीति सत्वान्यथा गौरस्यास्तीति। २ सि. क. सत्वा। ३ सि. क. समस्तसमस्वभाव०। ४ सि. क. °साञ्जामयिति। ५ सि. क. सत्त्वमसत्त्वमेवेत्ये।**

**इति, वयमत्रोपपत्तिं ब्रूमः, अद्रव्यत्वात् अभूतत्वात् असन्निहितत्वात् वन्ध्यापुत्र इव, पुनः पृच्छेत् कश्चित् कस्माच्चम्पकपुष्पं दलादिषु तु समवैति? इति, सद्द्रव्यत्वादेरिति।**

(**अत्रेति**) अत्र केनचित् पृच्छ्यते कस्मात् खपुष्पं दलकेसरमकरन्दादिषु कारणेषु न समवैतीति? वयमत्रोपपत्तिं ब्रूमः, अद्रव्यत्वात्–निर्बीजत्वादित्यर्थः, द्रव्यं सामान्यमाश्रय इति पर्यायाः, कस्मान्निर्बीजमिति चेत्–[अ]भूतत्वात्–अतीतेऽधुनाऽनागते काले न भूतं हि तत्, भूतशब्दस्य त्रिकालवाचित्वात्, आकाशभूतवत्, असत्त्वादकारणत्वादकार्यत्वादित्यर्थः, तत्कुत इति चेत्–असन्निहितत्वात्, यत् सततं भवति तत्सन्निहितम्, सन्निहितमेव हि भवति, असन्निहितं नैव भवति वन्ध्यापुत्र इव–वन्ध्यायां बीजाधानादिभावेनासन्निहितः [पुत्रः], अथवाऽद्रव्यत्वादसन्निहितत्वादभूतत्वादिति पर्यायशब्दा एवेति, पुनः पृच्छेत् कश्चित् कस्माच्चम्पकपुष्पं दलादिषु तु समवैतीति–तुशब्दः खपुष्पादस्य विशेषं दर्शयति, अत्रोच्यते विशेषः सद्द्रव्यत्वादेरिति त एव हेतवस्तुल्यव्याख्यानाः, एष खचम्पकपुष्पयोर्विशेषोऽसत्त्वा[त्]सत्त्वाच्च भवति, इयञ्च भावाभावयोः प्रश्नोपक्रमस्वरूपविशेषव्याख्या।

**तथा च द्रव्यादीनि प्राक् सन्ति, तस्यामवस्थायां सत्तयाऽभिसम्बध्यमानत्वात्, यथोत्पत्त्युत्तरकालं सत्तयाऽभिसम्बध्यमानान्युत्पत्त्यवस्थायां तान्येव, अभूतक्रियागुणव्यपदेशमुत्पत्त्यवस्थमपि कार्यं ततः प्रागपि सत्, सत्तायाः सम्बन्धित्वात् भवनात्, आकाशवत्, इदानीमपि वा न सत्तया सम्बध्येत कार्यम्, प्रागसत्त्वात् खपुष्पवत्।**

खपुष्पस्यासमवेतत्वे तव किमुत्तरमित्याशङ्कायामाह–**वयमत्रेति**। **अद्रव्यत्वादिति**, नास्ति द्रव्यं यस्य तदद्रव्यम्, तद्भावस्तस्मात्। ननु किमत्र नैयायिकाभिमतं गुणक्रियावद्द्रव्यम्? किं वा स्वलक्षणमर्थक्रियाकारि द्रव्यं यच्छाक्यैरुक्तम्? अथ वा यत् प्रतीयते तद्द्रव्यमिति नैरुक्तम्? इत्याशङ्कायां तदर्थमाह–**निर्बीजत्वादिति**, अकारणत्वादित्यर्थः, सर्वोत्पत्तिमतामुपादानकारणं द्रव्यं तदस्य नास्तीति भावः। **द्रव्यमिति**, साधनं कारणमित्यर्थः, सामान्यं अन्वितप्रत्ययनिमित्तमित्यर्थः, आश्रयः परिणामानां गुणक्रियादीनामाधारभूत इत्यर्थः, सर्वोत्पत्तिमतां परिणामिकारणमन्वयि आश्रयश्च द्रव्यमित्यर्थः। खपुष्पस्य निर्बीजत्वमेव कथमित्यत्राह–**अभूतत्वादिति**, भूधातोः कालसामान्ये भावे क्तः 'नपुंसके भावे क्तः' (पा० ३-३-११४) इति सूत्रात्, यस्य कालत्रयेऽपि भवनं नास्ति तत् खपुष्पादि अभूतमुच्यते, यथाऽऽकाशस्य कदापि भूतं भवनं नास्ति तथेति भावः। **अकारणत्वादिति**, खपुष्पादेरद्रव्यत्वादकारणत्वमभूतत्वादकार्यत्वमिति भावः। अभूतत्वमपि खपुष्पादेः कुत इत्याशङ्कायामुच्यते–**असन्निहितत्वादिति**, कारणे सन्निहितमेव हि भवति नासन्निहितम्, खपुष्पं तु न कारणे कदापि सन्निहितं तस्मात् अभूतमभूतत्वाच्चाद्रव्यम्, अद्रव्यत्वाच्च दलादौ समवैतीति भावः। अभूतत्वाविनाभावमसन्निहितत्वस्य वैधर्म्येण प्रदर्शयति–**यत्सततमिति**। सततभवनसन्निधानयोः समव्याप्तिं सूचयति–**सन्निहितमेवेति**। एवशब्देन प्रतिक्षेप्यमाह–**असन्निहितमिति**। कारणे यत्र सन्निहितं तत्रैव भवतीत्यर्थः। दृष्टान्तमाह–**वन्ध्यापुत्र इति**। ननु असन्निहितत्वमसमवेतत्वमेव, ततश्च कुतो न समवैतीति शङ्का तदवस्थैवेति नैवमिष्टसिद्धिरित्याशयेनाह–**अथवेति**। द्रव्यं भूतं सन्निहितमिति पर्यायाः कारणं हि द्रव्यं भूतं सन्निहितं भवति, कारणद्रव्यस्याभूतत्वेऽसन्निहितत्वे कार्यानुत्पादात्, द्रव्यपर्यायत्वं तयोरतोऽद्रव्यत्वादीनां पर्यायशब्दत्वमिति भावः। सद्द्रव्यस्यैव समवेतत्वमिति समर्थयितुं शङ्कते–**पुनः पृच्छेदिति**। समाधत्ते–**सद्द्रव्यत्वादेरिति**, सत् विद्यमानं द्रव्यं कारणं यस्य तत् सद्द्रव्यं तद्भावः सद्द्रव्यत्वं, आदिना सद्भूतत्वसत्सन्निहितत्वयोर्ग्रहणम्। तदेवं खपुष्पचम्पकपुष्पयोः कारणसदसत्त्वाभ्यां समवेतत्वासमवेतत्वरूपो विशेषः सम्भवतीति द्रव्यादिः सत्तासम्बन्धात् प्रागपि सदेवेति सूचयति–**एष इति**। **भावाभावयोः** दलादौ चम्पकपुष्पखपुष्पयोः सदसद्भावयोरित्यर्थः। एवं तयोर्विशेषे सिद्धेऽनुमानप्रयोगं दर्शयति–**तथा चेति**। द्रव्यादीनि प्राक् सन्तीति

**१ सि. °त्वादमूर्त्तदिति।**

**तथा च द्रव्यादीनि प्राक् सन्तीत्यादि,** अत्रानुमानं यस्यामवस्थायामुत्पन्नमात्राणि द्रव्यादीनि सन्त्येव सत्तयाऽभिसम्बध्यन्ते इतीष्यंते तस्या अवस्थायाः प्रागपि सन्तीति प्रतिज्ञा, तस्यामवस्थायां सैत्तयाभिसम्बध्यमानत्वात्, यस्यामवस्थायां सत्तयाऽभिसम्बध्यन्ते तस्या अवस्थायाः प्रागपि सन्त्येव दृष्टानि यथोत्पत्त्युत्तरकालं सैत्तयाऽभिसम्बध्यमानानि उत्पत्त्यवस्थायां तान्येव, तथोत्पत्त्यवस्थायाः प्रागपि स्युरिति, अभूतक्रियागुणव्यपदेशमुत्पत्त्यवस्थमपि कार्यं ततः प्रागपि सत्, सत्तायाः सम्बन्धित्वात्, तत्कालद्रव्यादिवत्, किमुक्तं भवति सत्तासम्बन्धित्वादिति ? अत आह—भवनात्—अभूतक्रियागुणव्यपदेशं भैवदवस्थं कार्यं ततः पूर्वमपि वस्तुस्वरूपमेव, नाभावः, इदानीं भावादाकाशवदिति, तद्व्यत्त्यर्थं—इदानीमपि न सत्तया सम्बैध्येत कार्यम्, प्रागसत्त्वात्, खपुष्पवदिति विपर्ययेणानिष्टापादनसाधनम्, भवदेव हि भवति गगनवत्, नाविद्यमानम्, अश्वविषाणवदिति ।

**अन्यथाभूतत्वान्नेति चेन्न, अन्यथाभवनेऽपि तदनन्यथाभवनात् प्रत्यक्षतः, मृत्तन्त्वादितद्भावानतिक्रमात् सजातीयासजातीयेतरस्वभावभूतत्वात्, सुचिरादपि तत्तत्त्वाच्च दृढीभूतघटवत् ।**

(**अन्यथेति**) अन्यथाभूतत्वान्नेति चेत्—स्यान्मतं प्रत्यक्षेण तन्तुभ्योऽन्यथा पटभवनात् प्रत्यक्षविरुद्धं प्रागपि सत्कार्यमिति वचनमिति चेत्, तन्न प्रत्यक्ष[विरुद्ध]मन्यथा भवनेपि तदनन्यथाभवनमेव प्रत्यक्षतः, किं कारणं ? मृत्तन्त्वादितद्भावानतिक्रमात्- अनतिक्रान्ततद्भावत्वादित्यर्थः, दृढीभूतघटवदिति

प्रतिज्ञाया विशदार्थमाह—**अत्रानुमानमिति,** द्रव्यादीनामुत्पत्तिप्राक्कालीना एकाऽवस्था, उत्पत्तिकालीनाऽपरा, अन्या च सत्तासम्बन्धकालावस्था, उत्पत्तिकाले द्रव्यादीनि स्वरूपसन्ति, यत्समवेतं कार्यं भवतीत्यभ्युपगमात्, तदुत्तरक्षणे च सम्पूर्णसन्ति, स्वरूपसत्त्वात् सत्तासम्बन्धाच्च, एवञ्च सत्तासम्बन्धकालात् पूर्वमुत्पत्तिकाले द्रव्याणि सन्त्येवेत्येतदुत्पत्तिकालावच्छिन्नद्रव्याणि दृष्टान्तीकृत्य तत्पूर्वकालीने द्रव्यादौ सत्त्वमत्र साध्यते, सन्त्येव—स्वरूपसद्भूतान्येवेत्यर्थ । साधनमाह—**तस्यामवस्थायामिति,** सत्तासम्बन्धितावच्छेदककालावच्छेदेनेत्यर्थं । उदाहरणमाह—**यस्यामवस्थायामिति ।** सत्तासम्बन्धात् प्राक्कालीने द्रव्यादौ सत्त्वे साध्ये सिद्धसाधनम्, तथाविधे उत्पत्तिकालीने तस्मिन् सत्त्वस्याभ्युपगमादित्यतो मानान्तरमाह—**अभूतेति,** न भूत क्रियागुणयोर्व्यपदेश· घटस्तिष्ठति घटश्चलति घटो रूपवानित्यादिप्रकारेण व्यवहारो यस्मिन् तदभूतक्रियागुणव्यपदेशमुत्पत्तिकालावच्छिन्न कार्यं, तदानीं तत्र गुणक्रिययोरभावात्तथाव्यपदेशाभावात्, तत पूर्वमपि तत् सदिति प्रतिज्ञा, हेतु सत्तासम्बन्धित्वात्, निदर्शनं तत्कालद्रव्यादिवत्—उत्पत्तिकालावच्छिन्नद्रव्यादिवदित्यर्थ । नन्वसिद्धोऽयं हेतुरुत्पत्तिकालावच्छिन्ने द्रव्यादौ सत्तासम्बन्धानभ्युपगमादित्याशङ्का हृदि निधायाह—**किमुक्तं भवतीति ।** साध्यहेत्वोर्विशिष्टतानिरासायाह—**इदानीं भावादिति,** य इदानीं भावः स पूर्वमपि भाव एवेत्यत्र निदर्शनमाह—**आकाशवदिति ।** तद्व्यक्त्यर्थं—एतद्व्याप्यव्यापकभावव्यक्तीकरणार्थं विपक्षेऽनिष्टापत्तिमादर्शयतीति भाव., स्पष्टमन्यत् । ननु तन्त्वादिकारणेभ्योऽन्यस्यैव पटादे· कार्यस्य प्रत्यक्षेण भवनदर्शनात् कथमुच्यते पूर्वमपि तत् सदिति शङ्कते—**अन्यथेति,** अन्यप्रकारेण—भिन्नत्वेन रूपेणेत्यर्थ· । तद्व्याचष्टे—**तन्तुभ्य इति,** उक्तानुमाने प्रतिज्ञाया· प्रत्यक्षबाधितत्वमिति भाव । स्वोपादानकारणतावच्छेदकधर्मावच्छिन्नत्वेन प्रत्यक्षतोऽभेदस्यापि दर्शनान्न प्रत्यक्षविरोध इत्युत्तरमारचयति—**तन्नेति ।** अन्यथा भवनेऽपि तदनन्यथाभवनमेवेत्यत्र हेतुमाह—**मृत्तन्त्वेति**—नातिक्रमोऽनतिक्रमः अतिक्रान्त्यभाव. प्रसज्यप्रतिषेधरूप, मृत्तन्त्वादितद्भावस्यानतिक्रमस्तस्मादिति विग्रहे हेतु· क्रियाप्रतिषेधात्मकतया प्रसज्यप्रतिषेधरूपस्तुच्छोऽभावः प्रसज्यत इति व्याचष्टे—**अनतिक्रान्तेति,** अनतिक्रान्तस्तद्भावो येन, तद्भावत्वात्, मृत्त्वतन्तुत्वादितद्भावस्यैव कार्ये दर्शनात् कारणमेव द्रव्यं तथा तथा भवतीति भावः । किमत्र निदर्शनमित्यत्राह—**दृढीभूतेति,** अनुपदमेवेति शेष । ननु घटादेः कार्यस्य

१ सि. क. यथा प्र × ×, एतच्चिह्नान्तर्गतः पाठः क्पुस्तके नास्ति एवमग्रे विज्ञेयम् । २ सि. क. °देशासिसत्तावस्थं । ३ सर्वत्र प्रतिपु° संबध्यते कार्यबाध्यता कार्य० ।

दृष्टान्तो वक्ष्यते, हेतोरस्य व्याख्या—सजातीयासजातीयेतरस्वभावभूतत्वात्—घटस्य सजातीयानि घटान्तराणि, असजातीयानि पटादीनि, तेभ्य उभयेभ्य इतरोऽन्यो घटः सजातीयासजातीयभिन्नो देशकालाकारप्रमाणरूपादिभेदात्, नन्वेवं सजातीयासजातीयभिन्नत्वे स्वकारणेभ्योऽपि भिन्नत्वात् प्रागसत्त्वमेव प्राप्तं कार्यस्यैतद्वायुक्तम्, स्वभावभूतत्वादिति विशेष्योक्तत्वात्, स्वसमवायिकारणभूतपरमाणुद्व्यणुकादिरूपरसाद्यात्मकपरिणामस्वभावेनैव भूतत्वादिति तद्भावानतिक्रम एवैवं व्याख्यातो भवति, किञ्चान्यत्—सुचिरादपि तत्तत्त्वात्—देशकालाकारादिभेदे सत्यपि मृत्पिण्डाद्यवस्थासु मृदवस्थागतरूपादिस्वरूपानतिवृत्तेः परमाणुरूपादितत्त्व एव घटः, तस्मादन्यथा भवनेऽपि तदनन्यथाभवनमेव, किमिव ? दृढीभूतघटवत्, यथा मालवनगरे घटो दृढीभूतः आर्द्रादिसामिशुष्कनवयुवमध्यमपुराणाद्यवस्थास्वन्यथा भवनेऽपि घटत्वमनतिक्रामन् सप्तसु वर्षशतेषु नीतेष्वपि स एव तथा भवति, एवं तदपि कार्यं द्रव्यादीति ।

किञ्चान्यत्—

**यदपि च दृष्टान्तत्वेनोक्तं नास्य पुत्रोऽस्तीत्यपुत्रो न तु पुत्रो न भवतीति प्रतिषिध्यत इति, इदमपि नातिगमितार्थं, अत्रापि हि पुत्रान्तरसम्बन्धो न प्रतिषिध्यतेऽस्य स्वामिपुत्रादेर्दृष्टत्वात्, नञ् उत्तरपदाभिधेयनिवारणार्थः, तत्पुरुषसमाससम्भवसामर्थ्यात्, बहुव्रीहावपि पुत्रात्मकत्वमेव प्रतिषिध्यते नञा, अतद्रव्यत्वात्, स्वयं पुत्रीभावपरिणामशून्यत्वात् खपुष्पवत्, यथोक्तं 'अगणिझूसिता अगणिसेविया अगणिपरिणामिता अगणिजीवसरीरेति वत्तव्वं सिया' (भ० श० ५ उ. २ सू. १५) तथाऽन्योऽप्यन्वाह 'अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे' (कौ० उ० २–११) इति ।**

**यदपि चेत्यादि** पूर्वपक्षप्रत्युच्चारणं यावत् प्रतिषिध्यत इति, तदुत्तरं—इदमपि नातिगमितार्थ-

प्रागसत्त्वेऽपि कारणगतमूर्तत्वाद्यनतिक्रान्तत्वस्याभ्युपगमेन कथं कारणाभेदात् प्राक् सत्त्वसिद्धिरित्याशङ्कायाममुं हेतुं व्याकरोति **सजातीयेति,** सजातीयासजातीयभिन्नत्वे सति स्वभावभूतत्वात्, द्रव्यमेव तेन तेन रूपेण भवतीत्युत्पत्तिप्राक्कालीनं घटादिरूपं द्रव्यमेव घटान्तराद्भिन्नं पटादिभ्यो भिन्नं सत् स्वासाधारणरूपस्वात्मकपरिणामस्वभावेन तथा तथा भवति कार्यात्मना, तथा च पूर्वं घटादिद्रव्यादेरभवने तथा न भवेदेवेति भावः । सत्यन्तं व्याचष्टे—**घटस्येति,** घटादिस्वसजातीयेभ्यो घटान्तरेभ्यो देशकालाकारप्रमाणरूपादिभेदाद्घटादिद्रव्यं यतो भिन्नं यतश्च स्वविजातीयेभ्यः पटादिभ्यो भिन्नमतः कथं सजातीयात् विजातीयाद्वा भवेत्, येनोत्पत्तेः प्राक् तदसद्भवेत्, तस्मात्तत्प्रागपि सदेवेति भावः । विशेष्यपदसार्थक्याय शङ्कते—**नन्वेवमिति,** नन्वेवमपि प्राक्कालीनात् स्वसजातीयात् कारणादपि घटादिकार्यं भिन्नमेव, केनचिद्रूपेणेति कथं प्राक् तत् सदिति भावः । कारणं न स्वस्माद्भिन्नमित्याशयेन विशेष्यदलार्थमाह—**स्वभावभूतत्वादिति** । ननु कार्यकारणयोर्देशकालाकाररूपादिभेदो दृश्यत इति कथं स्वभावभूततेत्यत्र हेत्वन्तरमाह—**सुचिरादपीति,** मृत्पिण्डस्थासकोशकुशूलघटादिषु देशकालाकारादिभेदो यद्यप्यस्ति तथापि मृत्तत्त्वं सर्वत्राविच्छिन्नमतो मृत्तत्त्व एव घटादिरिति भावः । उपसंहरति—**तस्मादिति** । निदर्शनमाह—**दृढीभूतेति,** अन्यनगरीयघटादौ सुचिरादपीत्यंशो न सङ्गच्छतीति मालवनगरगतघटविशेषस्य दृष्टान्तता बोध्या । ननु 'नन्वसदित्युत्तरपदाभिधेयनिवारकत्वात् कथमस्य सात्मकत्वं' इत्यत्र 'न, अनेकान्तात्, नास्य सदित्यसत्, न स्वयमसत् यथा नास्य पुत्रोऽस्तीत्यपुत्रः, न तु पुत्रो न भवतीति प्रतिषिध्यते' इति यदुक्तं वादिना तन्निराकरणार्थमाह—**यदपि चेति** । अपुत्रशब्दो बहुव्रीहिर्न तु तत्पुरुष इति पूर्वपक्षं

१ सर्वप्रतिषु अन्यथाभूतस्वात्मेते चेत् बाध्यताकार्यप्रागसत्त्वात् खपुष्पवदिति विपर्ययेणानिष्टापादनसाधनम् भवदेव हि भवति प्रत्यक्षं तन्तुभ्योऽन्यथा० ।

मित्यादि यावत् सम्भवसामर्थ्यादिति, तद्विद्रियते यदपि सत एवासत्त्वप्रतिपादनार्थं दृष्टान्तत्वेनोक्तं नास्य पुत्रोऽस्तीत्यपुत्रो न तु पुत्रो न भवतीति तस्यान्यपुत्रत्वादिति तदपि नातिगमितार्थमिति, दाक्षिण्यवचनमेतत्, मा निष्ठुरं वोचमिति, कथमगमितार्थं ? यस्मादत्रापि पुत्रान्तरसम्बन्धो न प्रतिषिध्यते, अस्य स्वामिपुत्रादेर्दृष्टत्वात् नास्य पुत्रोऽस्तीति बहुव्रीहिसमासार्थस्य प्रत्यक्षविरुद्धस्यासम्भवात्, किं तर्हि वक्तव्यं ? नञ् उत्तरपदाभिधेयनिवारणार्थः, तत्पुरुषसमाससम्भवसामर्थ्यात्, यथा भिक्षां देहि, देहीति गृहबहिरन्तस्थयोर्याचकदायकयोर्यौच्चादापनसम्भववत्, को भिक्षां ददातीति प्रश्ने प्रत्याख्यानदानसम्भववत्, गवाक्षे गाव इत्यादित्यकिरणसम्भववद्वा उत्तरपदाभिधेयसम्भवः, स्वयमेवासौ पुत्रो न भवतीत्युक्तं भवति तच्च वक्ष्यते, तस्मान्नास्य पुत्रोऽस्तीत्यपुत्र इत्ययुक्तो दृष्टान्तः, अभ्युपगम्य बहुव्रीहिं–बहुव्रीहावपि पुत्रात्मकत्वमेव प्रतिषिध्यते नञा, न पुत्रान्तरसम्बन्धः, कस्मात्? अतद्द्रव्यत्वात्–तद्द्रव्यं तत्कारणं तद्बीजं परिणाम्यस्य तदिदं तद्द्रव्यं, न तद्द्रव्यमतद्द्रव्यं नञ्भावादतद्द्रव्यत्वात् स्वयं पुत्रीभावपरिणामशून्यत्वात्, स्वयं पुत्रत्वेनानुत्पित्सुत्वादित्यर्थः, खपुष्पवदिति गतार्थम्, यथोक्तं '[अ]गणि झूसिता[अगणिसेविया] अगणिपरिणामिता अगणि[जीव]सरीरेति वत्तव्वं सिय'त्ति (भ० श० ५ उ. २ सू. १५) तथाऽन्योऽप्यन्वाह–अङ्गादङ्गात् सम्भवसि [बृ० उ. ६-४-९, कौ० उ. २-११] इत्यादि, तान्येव पितुः शुक्रात्यङ्गानि पुत्राङ्गत्वेन परिणमन्ति क्षीरदधित्ववत्, हृदयादभिजायसे इति प्रज्ञाऽपि नैव पुत्रस्य या पितुः, अश्वादिप्रज्ञाया मनुष्यादिष्वभावात् ।

**गुणोऽगुण इति गुणभाव एव प्रतिषिध्यते, न गुणसम्बन्धः, स चेष्टः युगपदयुगपद्भाविता, भवनलक्षणद्रव्यत्वात्, सङ्ग्रहवादवद्वा तस्माद्बहुव्रीहावपि नासत्, सदेव तस्मात् सम्पूर्णनिरतिशयं सदसद्वा ।**

दर्शयति–**यदपीति** । कुतो न तत्पुरुष इत्यत्र हेतुं प्रदर्शयति–**तस्येति**. स्वयं स्वपितुः पुत्रत्वात् पुत्रो न भवतीति तत्पुरुषो नेष्ट इति भावः । तदेतन्मतं निरस्यति–**नातिगमितार्थमिति** त्वदीयमिदं वचनं नातिशयेनार्थं गमयतीत्यर्थः । किमर्थं तदपि न समीचीनमित्याद्यनुक्त्वा नातिगमितार्थमित्युक्तमित्यत्र कारणमाह **दाक्षिण्येति** । **अत्रापीति**, बहुव्रीहावपीत्यर्थः, तत्पुरुष इवात्रापि पुत्रात्मकत्वमेव नञा प्रतिषिध्यते, न त्वन्येन पुत्रेण साकमस्य सम्बन्धो निषिध्यते, इदंशब्दवाच्यपुरुषस्य सेवकत्वे स्वामिनः पुत्रेण, अध्यापकत्वे शिष्यलक्षणपुत्रेण सम्बन्धसद्भावात् कथं प्रत्यक्षविरुद्धमर्थं बहुव्रीहिः बोधयेदिति भावः । तर्हि कथं सोऽपुत्रशब्देनोच्यत इत्यत्राह **नञ इति**, अपुत्र इत्यत्र नञ उत्तरपदार्थं पुत्रमेव प्रतिषेधति, तत्पुरुषसमासार्थस्यात्र सम्भवादिति भावः । नहि लघुं सम्भवदर्थं तत्पुरुषसमासं परित्यज्य गुरुः प्रत्यक्षविरुद्धार्थो बहुव्रीहिर्युक्तः कर्तुमित्याशयेनाह–**तत्पुरुषेति** । सम्भवदर्थकनिदर्शनान्याह–**यथेति** । अपुत्रशब्दार्थमाह–**स्वयमेवेति** स्वयं पुत्रत्वेन न परिणमतीत्यर्थः । अयमर्थोऽतद्द्रव्यत्वादित्यनेनानुपदमेव वक्ष्यत इत्याह–**तच्चेति** । तुष्यतु दुर्जन इति न्यायेनाह–**बहुव्रीहावपीति** । पुत्रपरिणामस्यायं न द्रव्यं कारणं बीजं वा यतोऽतो नायं पुत्रात्मकः, न पुत्रः पुत्रलक्षणपरिणामोऽस्यासौ अपुत्रः, परिणामपरिणामिनोरभेदाद्भेदे षष्ठीति पुत्रात्मकताया एवात्रापि प्रतिषेधो नञा क्रियते, न पुत्रान्तरसम्बन्धस्येति साधयति–**अतद्द्रव्यत्वादिति**, तच्च तत् द्रव्यञ्च तद्द्रव्यमिति कर्मधारयः, स परिणामस्य द्रव्यमित्यर्थः, तस्य वा परिणामस्य द्रव्यं तद्द्रव्यमिति वा, न तु तत् द्रव्यमस्य तत् तद्द्रव्यमिति बहुव्रीहिः, तथा सति अतद्द्रव्यत्वादिति व्यधिकरणं स्यादिति ध्येयम् । अत्रार्थे आगमं प्रमाणयति–'**अगणि' इति** । द्रव्यादेः सात्मकनिरात्मकत्वचर्चाया वादिना यद् द्वितीयमुदाहरणं शास्त्रीयं प्रदर्शितं तदपि न सङ्गतार्थमिति दर्शयितुमाह–**गुणोऽगुण इतीति** । तद्व्या-

१ सि. डे. मन्यस्य । २ सि. क. तस्य । ३ सि. क. योसादापन० । ४ क. °णामस्य । ५ सि. डे. अयं स्वयं । ६ सि. क. तथाप्यस्योप्यरवाह । ७ सि. प्रज्ञापिष्येव ।

( **गुण इति** ) यदप्युक्तं द्वितीयमुदाहरणं तत्रैव गुणोऽगुण इति शास्त्रीयं तदपि गुणभूतोऽप्रधानो द्रव्याश्रय्युपसर्जन इतीष्टोऽयमर्थो [ गुणशब्दस्य ] न भवति, किं तर्हि ? स्वतंत्र[:] प्रधानं द्रव्यमेवेति, उत्तरपदाभिधेयनिवारणार्थत्वान्नञः, न तु नास्य गुणोऽस्तीत्यगुणो गुणः, तस्य हि रूपादेः परस्परतोऽन्यरसादिगुणकस्य गुणसद्भावात्, सत्त्वादेर्वा गुणसन्द्राववादे गुणवत्त्वात्, गुणभावो-गुणस्य गुणत्वमेव प्रतिषिध्यते न गुणसम्बधः स चेष्टो-गुणसम्बन्धः, युगपद्भाविता रूपरसगन्धस्पर्शसंख्यानादीनां गुणानां सम्बन्धः, अयुगपद्भाविमृत्पिण्डशिवकस्थासकादीनामयुगपद्भाविता, कृष्णनीलशुक्लरक्तादिवर्णादिभेदानामयुगपद्भाविता विशेषगुणानामिति, तथा सत्त्वादीनामङ्गाङ्गिभावेन युगपद्भाविता, महदहङ्कारतन्मात्रादीनामयुगपद्भाविता चेति, कस्मात् ? भवनलक्षणद्रव्यत्वात्-द्रव्यञ्च भव्ये (पा. ५-३-१०४) भवतीति [ भव्यं ] द्रव्यं भवनसम्बन्धयोग्यं, गुणाः सन्द्रुत्यैव तिष्ठन्ति भवन्ति द्रवन्ति इति, गुणयन्ति गुण्यन्ते द्रूयन्ते ज्ञायन्ते चेत्येक एवार्थ इति, सङ्ग्रहवादवद्वा-यथा वा सङ्ग्रहनयवादे सर्वस्य सर्वात्मकत्वात् त एव रूपप-

---

चष्टे-**यदप्युक्तमिति** । अत्रोद्देश्यभूतो गुणशब्दो यस्यार्थो भवद्भिरप्रधानो द्रव्याश्रयीत्यादिरुच्यते न तदर्थ, किन्तु स स्वतंत्रं प्रधानं द्रव्यमेवाह, अगुण इत्यत्रोत्तरगुणपदाभिधेयार्थनिरसनपरत्वान्नञ इत्याह-**गुणभूत इति,** रज्जुभूत, यद्वि प्राधान्येनोच्यते तद्द्रव्यं न तस्य प्रकर्षाप्रकर्षौ स्त किन्त्वाश्रितैर्भेदहेतुभि परतंत्रै संसर्गिभि प्रकृष्यते शुक्ल पट इत्यतोऽयं गुणभूत, अप्रधान - अवच्छेदकरूपेण प्रतीयमान, द्रव्याश्रयी-आधारेणाभिन्नबुद्धिप्रयोजकसमवायेन सम्बन्धी, उपसर्जनं विशेषणं, स्वरूपेण परमुपरञ्जयद्विशेषणमुच्यते, एवंविधो गुणपदार्थो भवतामिष्ट सोऽत्र न सम्भवतीत्यर्थ । अगुणो गुण इत्यत्र हि उद्देश्यभूत[1] गुणशब्दार्थो गुणभूततया नावच्छेदकतयाऽऽश्रयितयोपसर्जनतया वा प्रतीयते, किन्तु तत्तद्धर्मैरवच्छेद्यत्वेन विशेष्यत्वेनान्वयित्वेन च प्रतीयतेऽतोऽसौ स्वतंत्र प्रधानं द्रव्यमेवेत्याह-**स्वतंत्र इति** । यदि रूपादिर्गुणपदेन गृह्यतेऽगुण इत्यत्र च बहुव्रीहिराश्रीयते तदाऽघटितार्थो दृष्टान्त स्यात, द्रव्यं हि घटादि रूपरसगन्धस्पर्शवत, तथा च रसादे घटादिनेव रूपेणापि सम्बन्धस्य सद्भावात कथं गुणसम्बन्धप्रतिषेधो गुणे युज्येतेत्याशयेनाह-**तस्य हीति**, यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति पातञ्जलमहाभाष्ये शब्दस्पर्शरूपरसगन्धा गुणास्ततोऽन्यद्द्रव्यमित्यभिधाय पश्चात् अन्वर्थ खल्वपि निर्वचनं गुणसन्द्रावो द्रव्यमिति द्रव्यलक्षणमुक्तम्, गुणा सन्द्रूयन्ते मिश्रीक्रियन्ते इति गुणसन्द्राव. 'समियुद्रुदुव.' (पा. ३-३-२३) इति घञ् गुणसमूह इति फलितोऽर्थ., अत्र गुणशब्द समूहावयववाचीति बोध्यम् । प्रकृते तु साङ्ख्यसम्मतसत्त्वादिगुणसमुदायद्रव्याभिप्रायेणाह-**सत्त्वादेर्वा गुणसन्द्रावयाद इति** सत्त्वरजस्तमसा सन्द्रावो द्रव्यमिति वादेऽपि सन्द्रावघटकसत्त्वादेर्गुणस्य रज आदिगुणान्तरसम्बन्धसत्त्वात गुणे गुणसम्बन्धप्रतिषेधो न युक्त इति भाव । तदेवमुद्देश्यभूतगुणशब्दस्य द्रव्यार्थतामुक्त्वा प्रतिषेध्यमाह-**गुणभाव इति** । गुणाना रूपरसादिसामान्यगुणानां सहभावितैव परस्परं सम्बन्ध, विशेषगुणानाञ्च कृष्णनीलशुक्लादीना तथा मृत्पिण्डशिवकादीनां विशेषाणामयुगपद्भावित्वमस्तीति न गुणसम्बन्धः प्रतिषेध्य इत्याह-**न गुणसम्बन्ध इति** । गुणसन्द्रावद्रव्यवादे गुणाना सम्बन्धं दर्शयति-**तथेति** । गुणक्रियादिभावेन युगपद्युगपद्भाविपर्यायरूपेण भवनस्वरूपत्वाद्द्रव्यस्य न गुणसम्बन्ध परिहार्य इत्याशयेन हेतुमाह-**भवनलक्षणेति** भवनेन हि द्रव्यं लक्ष्यते इति भाव.। इदमेव लक्षणं द्रव्यशब्दव्युत्पत्त्याऽऽविर्भावयति-**द्रव्यञ्चेति,** भव्येऽर्थे द्रुशब्दात् स्वार्थे प्रतिकृतिरूपे यत्प्रत्ययो निपात्यते, द्रुरिव द्रव्यं भव्यमित्यर्थ, भव्यमिति च 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' ( पा० ३-४-६८ ) इत्यनेन कर्तरि वा निपात्यते, भवतीति भव्यं द्रव्यं तदर्थश्च भवनसम्बन्धयोग्यमिति भाव.। गुणसन्द्रावो द्रव्यमिति लक्षणाभिप्रायेणाह-**गुणा इति,** तिष्ठन्तीति गतिनिवृत्तिलक्षणं स्थितिमात्रं न विवक्षितमपि तु भवन्ति-उत्पद्यन्ते, द्रवन्ति-गच्छन्ति-विनश्यन्ति चेति उत्पादव्ययध्रौव्यात्मकत्वमुक्तं, अनेनापि भवनलक्षणद्रव्यत्वं फलितम्, गुणशब्दार्थमाह-**गुणयन्तीति** । सङ्ग्रहनयापेक्षया द्रव्यमेव युगपद्युगपद्भाविनया परिणमतीत्याह-**सङ्ग्रहवादवद्वेति,** रूपमेव तथा तथा भवति

---

१ सि. क. °वादिशे० ।

रमाण्वादिद्रव्यविशेषाः स्वजात्यपरित्यागेन युगपदयुगपच्च भवन्ति द्रवन्ति, द्रूयते भूयते तैरेवेत्युक्तम्, तस्माद्बहुव्रीहावपि नासत्, सदेवेति प्रस्तुतोपनयः, यथोक्तं 'अत्थित्तं अत्थित्ते परिणमति' इति 'णत्थित्तं णत्थित्ते परिणमति' (भ० श० २) इति, तस्मात् सम्पूर्णनिरतिशयं सदसद्वेति, तस्मादसत्कार्यं न सत्तया सम्बध्यते सत्त्वाभावात्, असम्पूर्णसदसत्त्वाभावादित्युक्तम् ।

तथा–

**स्ववचनविरोधादेः सदप्यसत्, सत्तासम्बन्धरहितत्वात्, सत्तासम्बन्धश्च सदिति लिङ्गात् सदभिधानप्रत्ययदर्शनादनुमीयते, अतः सत्तासम्बन्धात् सद्भवतीत्युक्तं भवति सत्तासम्बन्धेन च भाव्यमानं सद्भवतीति, ततो यच्च भाव्यमानं सद्भवति तदारम्भकेभ्यो भवति, द्रव्याद्यारब्धद्रव्यान्तरवत्, भाव्यमानभवितृत्वात्, तस्मात्तस्यामवस्थायामसत् तत् सदिति च ब्रुवतः स्ववचनविरोधोऽनुमानविरोधश्च ।**

**स्ववचनविरोधादेः सदप्यसदिति** *यदपि सदिति द्रव्यादिकार्यमिष्टं तदपि स्ववचनविरोधा*देर्दोषादसदेव जायत इति पक्षः, स्ववचनादिविरोधाश्चानुमानविरोधद्वारेणैवोद्भावयिष्यन्ते, सत्ताऽभावात्, तस्यासत्त्वे हेतुः–सत्तासम्बन्धरहितत्वात्, सत्तायाः सम्बन्धमनुभूय सदित्यभिधानं प्रत्ययञ्च लभते कार्यम्, विशेषणस्वरूपाभिधानप्रत्ययभाक्त्वाद्विशेष्यस्य, दण्डनिमित्तदण्ड्यभिधानप्रत्ययभाग्देवदत्तवत्, सत्तासम्बन्धश्च सदिति लिङ्गात् सदभिधानप्रत्ययदर्शनादनुमीयते, अतः सत्तासम्बन्धात् सद्भवतीत्युक्तं भवतीति परमतसमर्थनमेव तावदेतत्, तस्मात् सत्तासम्बन्धेन भाव्यमानं सद्भवति–परत आत्मलाभं लभते न

परमाणुरेव तथा तथा भवतीति द्रव्यगुणयोः समता प्रदर्शिता । एवञ्च कार्यस्य द्रव्यादेर्बहुव्रीहिणा[1]ऽसत्त्वं न वक्तुं शक्यमित्युपसंहरति–**तस्मादिति** । सदसत्त्वयोर्विकल्पवत्त्वानुपपत्तेः कार्यं प्राक् स्वरूपसत् पश्चात् सत्तासम्बन्धात् सद्भवतीत्ययुक्तमित्याह–**तस्मात् सम्पूर्णेति** । एवं सत्त्वासत्त्वयोः सम्पूर्णनिरतिशयस्वात्मकत्वे सिद्धेऽसतः सत्त्वोक्तिस्ते स्ववचनविरोधाय भवतीति प्रदर्शयति–**स्ववचनेति**, द्रव्यादिकार्यं त्वया सदितीष्टं सच्च भवति स्ववचनविरोधादिदोषात्, कथं स्ववचनविरोधादिदोष इत्यत्राह–**स्ववचनादीति** । उद्भावनायां हेतुमाह–**सत्ताऽभावादिति** । सत्त्वं कथं स्यादित्येतत्तन्मतेन दर्शयति–**सत्ताया इति** ननु द्रव्यमविशिष्टं पृथिवीजलतेजोवाय्वादिघटपटादिरूपेण ज्ञायतेऽभिधीयते च, नेमे प्रत्ययाभिधाने निर्निमित्ते भवितुमर्हत इति तन्निमित्ततया पृथिवीत्वजलत्वादयो धर्मा अभ्युपेयाः, येषां सम्बन्धमनुभूय तदेव द्रव्यं पृथिवीत्वजलत्वादिप्रकारेण प्रत्ययं तदनुकूलाभिधानञ्च लभते, नान्यथा–तथैव द्रव्यस्य सदिति प्रत्ययाभिधाने अपि सत्तासम्बन्धमनुभूयैव भवतः, यथा देवदत्त एक एव दण्डछत्रकुण्डलादिसम्बन्धमनुभूय दण्डी छत्री कुण्डलीत्यादिप्रत्ययं व्यपदेशञ्च लभत इति भावः । सत्तासम्बन्धः कथमित्यत्राह–**सत्तासम्बन्धश्चेति** 'सदिति यतो द्रव्यगुणकर्मसु सत्ता' (वै० अ १ आ० २ सू० ७) 'इहेदमिति यतः कार्यकारणयोः स समवायः' (वै० अ० ७ आ० २ सू० २६) इति सूत्राभ्यां द्रव्यादिषु त्रिषु यतः सत् सदिति प्रत्ययः, तथाविधः शब्दप्रयोगो वा सा सत्ता, इह द्रव्यादौ सत्तेति बुद्धेः सम्बन्धव्यतिरेकेणोत्पादायोगात् कश्चिदस्ति सम्बन्ध इत्यनुमीयते कुण्डदध्नोः संयोगविशेषवदित्यर्थाभ्यां[2] सत्तासम्बन्धसिद्धिरिति भावः । एतेन फलितार्थमाह–**अत इति**, एवञ्च सत्तासम्बन्धेनैवेदं द्रव्यादि सद्रूपेण भाव्यते नान्यथेति त्वदीयोऽभिप्राय इति भावः । इदमेव धर्मित्वेन प्रदर्शयति–**तस्मात् सत्तासम्बन्धेनेति** । तत्तात्पर्यं दर्शयति–**परत इति** सामान्यरूपेण लब्धात्मलाभस्यैव विशेषरूपेणात्मलाभसम्भवात्, अन्यथा धर्म्य-

**१ सर्वत्र °वत्र भावात् । २ सर्वत्र °सन्निहितालिङ्गात् ।**

स्वत इत्यर्थः, ततः किं? तत इदं भवति यत्र भाव्यमानं सद्भवति तदारम्भकेभ्यो भवति–कारणद्रव्यादिभ्य इत्यर्थः, साध्यानुगतसाधनवचनात् साधर्म्यदृष्टान्त एषः, तन्निदर्शनं हेतुनाऽव्यवहितं प्रतिपत्तिलाघवार्थं द्रव्याद्यारब्धद्रव्यान्तरादिवदिति–यथा द्रव्यगुणकर्मभिर्द्रव्यगुणान्तराण्यारभ्यन्ते, कर्म च गुणैः संयोगविभागप्रयत्नगुरुत्वसंस्कारादृष्टैः, तथा सत्तयाऽऽरभ्यते सत्कार्यम्, हेतुरत्र–भाव्यमानभवितृत्वादिति व्याख्यातार्थः, तस्मात्तस्यामवस्थायामसत्तद्द्रव्यादिकार्यं, असत्मदिति च ब्रुवतः स्ववचनविरोधोऽनुमानविरोधश्च, प्रत्यक्षाभ्युपगमरूढिविरोधा अपि योज्यास्तथैव, एवं तावत् द्रव्यादिकार्यमुत्पत्त्यवस्थायां स्वत एवास्तीतीष्टमपि सत्तासम्बन्धाद्भवितृत्वादसदेवेत्युक्तम् ।

न केवलं द्रव्यमेवासत्तदा, किं तर्हि? सत्तापि च नास्तीत्यापादयिष्यते हेतुसद्भावेन कारणत्वादिभ्यः, कारणत्वं तावत्–

**सत्तापि च कारणं भावकत्वात् आरम्भकवत्, सति सत्तान्तराधानमिति चेन्न, तुल्यत्वात्, एवमपि कारणमेव ते सत्ता, सति सत्तान्तराधायित्वात्, पटसत्ताधायितन्तुसंयोगवत् ।**

(**सत्तापि चेति**) कारणत्वं तावत्–सत्तापि यदि द्रव्यादेः कार्यस्य भवतो भाविका तत उक्तविधिना कारणं भावकत्वात्–भावयितृत्वादित्यर्थः 'तसिलादिष्वाकृत्वसुचः' (पा० ६-३-३५) इति पुंवद्भावात्, आरम्भकवदिति, पटस्य तन्त्वादिवदिति वक्ष्यते, इह तु सामान्येन, यथा आरम्भकाः परमाणवः तत्समवायिनः संयोगविभागाः अदृष्टादिगुणाश्च सापेक्षनिरपेक्षाः क्रियाश्चादृष्टादिहेतुकाः, कारणानि भावकानि यथासम्भवं द्व्यणुकादिकार्यद्रव्याणां गुणानां कर्मणाञ्च, तथा सत्तापि कारणमिति, सति सत्तान्तराधानमिति चेत्–स्यान्मतं स्वयमुत्पन्ने समवाय्यसमवायिकारणारब्धे

प्रसिद्धे कस्य विशेषरूपेणात्मलाभ इति भावः । स्यादेवं को दोष इत्यत्रानुमानविरोधमुद्भावयितुं सहचारदर्शनमाह–**यथेति,** भाव्यमानभवनं हेतुः, आरम्भकेभ्यो भवनं साध्यम्, एवञ्च साध्येनानुगतस्य हेतोर्बोधकत्वाद्वचनमिदं साधर्म्यदृष्टान्तपरमिति भावः । हेतुमुदीर्य निदर्शनं प्रदर्शनीयं प्रतिज्ञाहेतूदाहरणादिरूपतः क्रमसद्भावात्, तत्कथं क्रममुल्लंघ्यानभिधाय हेतुं निदर्शनमुच्यत इत्याशङ्क्याह–**तन्निदर्शनमिति । यथेति**–एकस्मिन्नेव द्रव्ये समवायिकारणे द्रव्यगुणकर्माणि जायन्ते गुणाश्च द्रव्यगुणकर्माणि भवन्ति, वह्न्यादिनोदनाभिघातगुरुत्वद्रवत्वसंस्कारादृष्टवदात्मसंयोगप्रयत्नवदात्मसंयोगाद्यसमवायिकारणकत्वं कर्मण इति दृष्टान्तार्थः । एवं सत्कार्यमपि सत्तयाऽऽरभ्येतेत्याह–**तथेति** । हेतुं दर्शयति–**भाव्यमानेति,** भाव्यमानञ्च तत् भवितृ च–भाव्यमानभवितृ तस्य भावस्तस्मादिति विग्रहः, सत्तया भाव्यमानत्वे सति भवितृत्वादित्यर्थः । एवञ्च सत्तासम्बन्धादेव सत्त्वनियमे सत्तासम्बन्धात् प्राक् कार्यस्यासतः सत्त्ववर्णनमुक्तानुमानविरोधित्वात् स्ववचनविरुद्धमित्याह–**तस्मात्तस्यामिति** । एवं पर्यवसितार्थमाह–**एवं तावदिति** । स्वत एवास्तीति–स्वरूपसदिति, यथा द्रव्यस्य सत्तासम्बन्धाद्भवितृत्वात् असत्त्वमुक्तं तथा सत्तापि कारणत्वादिहेतुसद्भावेनासतीत्यग्रे निरूपयिष्यन् कारणत्वादिहेतून् तत्र प्रदर्शयति–**सत्तापि चेति** । भवतो द्रव्यादेः सत्ताया भावकत्वे यद्भावकं तत् कारणमित्यविनाभावात् सत्ता कारणम्, आरम्भकाणि परमाण्वादीनि यथा द्व्यणुकादेर्भावकत्वात् कारणानि भवन्ति तथेत्याह–**सत्तापि यदीति** । के आरम्भका इत्यत्राह–**आरम्भका इति** । तत्कार्याण्याह–**यथासम्भवमिति** । ननु स्वकारणेभ्यः समुत्पन्ने स्वरूपसत्येव कार्ये सत्ता सत्त्वमुपकल्पयति, न तु सद्रूपं कार्यमुत्पादयतीति न कारणं सत्तेति शङ्कते–**सतीति** । तद्व्याचष्टे–**स्यान्मतमिति,** यथा परमाण्वादय आरम्भकत्वात् कारणानि भवन्ति न तथा सत्ता कारणमनारम्भकत्वात् ततश्चारम्भकदृष्टान्तो विषम-

१ सि. क. कारणत्वात्तद्वत् । २ सि. क. डे. °धानं नेति ।

द्रव्यादौ कार्ये स्वभावतः सत्येव सत्तान्तरसम्बन्धे सत्त[ा स]माधीयते तस्मात्सत्ता नारम्भिका, अस्या अनारम्भकत्वाच्च न कारणमण्वादिवत्, अतो वैषम्यं दृष्टान्तदार्ष्टान्तिकयोः, भावकत्वं वा तस्या नास्तीत्येतच्च न, तुल्यत्वात्—अनन्तरोक्तदण्ड्यादिवद्विशेषणस्वरूपसदभिधानप्रत्ययानुमितसत्तासम्बन्धनिवृत्तेः, अभ्युपेत्याप्यभावकत्वं सति सत्तान्तराधायित्वञ्च सत्ताया एवमपि कारणमेव ते सत्ता, सति सत्तान्तराऽऽधायित्वात् पटसत्ताऽऽधायितन्तुसंयोगवत्, यथा तन्तुभिः परस्परसंयोगापेक्षैरारब्धे पटे सति तत्संयोगः सत्तासमवायजं सम्बन्धसत्त्वमादधानः कारणं दृष्टः तथा सत्तापि स्यादिति ।

स्यान्मतमारम्भकाः परमाणवो न संयोगः, तस्माद्वैधर्म्यमित्येतच्चायुक्तम्—

**संयोगस्याप्यारम्भकत्वेष्टेः कारणत्वमात्रसाधनाद्वा न दोषः, अथ वा वृत्तसत्त्वातिरिक्तसत्त्वकरत्वात् कारणमेव, तन्त्वादिवत्, तथा च द्रव्याद्यन्यतमदेव तत्सामान्यम्, तस्मात् सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवच्च, द्रव्यादिवत् ।**

(**संयोगस्येति**) संयोगस्याप्यारम्भकत्वेष्टेः कारणत्वमात्रसाधनाद्वा न दोष इति, अथ वा वृत्तसत्त्वातिरिक्तसत्त्वकरत्वात् कारणमेव, सत्तेति वर्त्तते, यस्माद्वृत्तस्य—निष्पन्नस्य कारणान्तरैः स्वभावसतः ततोऽतिरिक्तं सम्बन्धसत्त्वं करोति सत्ता, तस्मात् कारणमेव, को दृष्टान्तः? तन्त्वादिवत्, यथा वृत्तसत्त्वं तन्तुत्वं तदतिरिक्तपटसत्त्वकरं कारणञ्च तथा सत्तेति, अथ वा यथा वृत्तस्य तन्तुभिरारब्धस्य पटस्य जन्मोत्तरकालमपि सत्त्वं कुर्वन्तस्तन्तव एव संयोगापेक्षाः कारणं पटस्येष्यन्ते तथा सत्तापि वृत्तसत्त्वातिरि-

एवेत्यनारम्भकत्वाद्भावकत्वमेव तत्र नास्तीति भावः । यथा सत्ता सतो नारंभिका तथा सतः सत्तान्तराधायिकाऽपि न स्यात्, तुल्यत्वात्,—विनिगमकाभावात्, तथा चानुमिता प्रोक्तया सत्ता न सिध्यतीत्याह—**तुल्यत्वादिति** । भावयितृत्वाभावे सति सत्तान्तराधानस्याभ्युपेत्यापि कारणत्वमाह—**एवमपीति**, यथा तन्तुसंयोगः स्वकार्ये स्वरूपसति पटे सत्तासमवायजन्यं सत्त्वं पोषयन् कारणं भवति तथा सत्ताऽपि कारणं स्यादिति भावः । अथ संयोगस्तन्तूनां नारम्भकोऽतो नोपादानं पटस्य, किन्तु परमाण्वादिरेवोपादानमतः कारणमारम्भकत्वादिति तन्तुसंयोगवदिति निदर्शनमनुपपन्नमित्याशङ्कायां समाधानमाह—**संयोगस्यापीति**, संयोगस्यासमवायिकारणस्यापि आरम्भकत्वं द्रव्यगुणयोः सजातीयारम्भकत्वं साधर्म्यं वदता भवतामिष्टमेवेति भावः । अथ वा नात्रोपादानत्वलक्षणं कारणत्वं साध्यमपि तु कारणत्वमात्रमतो न वैधर्म्यमित्याह—**कारणत्वेति** । हेतुरपि नारम्भकत्वरूपं भावकत्वं साध्यहेत्वोरैक्यात्, तस्मात् हेत्वन्तरं दर्शयति—**अथ वेति**, सत्ता कारणम्, वृत्तसत्त्वातिरिक्तसत्त्वकरत्वात्, तन्त्वादिवत् इत्यनुमानम् । हेत्वर्थमाह—**यस्मादिति** प्रतिनियतकारणैरारब्धे स्वरूपसति कार्ये सत्ता स्वसम्बन्धात् सत्त्वं करोतीति भावः । दृष्टान्तं स्फुटीकरोति—**यथेति**, आश्रयैरुपचरितभेदा सत्तैव तन्तुपटादिषु तन्तुत्वपटत्वादिरूपा यथा गोः सत्ता गोत्वं, अश्वस्य सत्ताऽश्वत्वं तथैव तन्तुसत्ता तन्तुत्वं पटसत्ता पटत्वम्, जातेश्चाभिव्यक्तिर्व्यक्त्यधीना, तस्मात् स्वाश्रयकारणानां प्रयोजककर्त्री, कार्योत्पत्तौ कारणानां सहकारिणी, नैयायिकैरपि कार्यतायाः प्रतिनियतधर्मावच्छिन्नत्वे कारणतायाः प्रतिनियतधर्मावच्छिन्नत्वस्य प्रयोजकत्वाभ्युपगमात्, तस्मात् वृत्तसत्त्वं तन्तुत्वं पटसत्त्व-पटत्वं करोति, एवं च तन्तुनिष्ठा सत्तापि पटनिष्ठसत्त्वकरीति भावः । वृत्तसत्त्वस्य कारणैर्निष्पन्नस्य स्वरूपसतः पटस्योत्पत्त्यनन्तरं सत्तासमवायजं सत्त्वं तन्तवः कुर्वन्ति तथा सत्तापीत्याह—**अथ वेति** । नदेवं सत्तायाः कारणत्वे सिद्धे यत्कारणं तद्द्रव्यगुणकर्मान्यतमद् दृष्टम्, यथा परमाणवः तत्समवायिनः संयोगविभागादयः क्रियाश्च, उक्तञ्च 'सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः' इति त्रयाणां कारणत्वमतः सत्तापि कारणत्वात् द्रव्यं गुणः

१ सि. क. तया सत्तया नारंभिकास्य । २ सि. क. ॰स्वाकारणमाणादिवदतो । ३ सि. क. द्रव्यादिव॰ । ४ सि. क. सत्त्वकारणत्वात् ।

कसत्त्वकरत्वात् कारणमेव स्यात, आदिग्रहणात् कपालवीरणादिद्रव्याण्युदाहर्त्तव्यानीति, तथा च द्रव्याद्यन्य[तम]देव तत्सामान्यं—सत्ताख्यं द्रव्यं गुणः कर्म वा ततोऽन्य[तमत्] स्यात्, यद्धि कारणं तद्द्रव्यं गुणः कर्म वा ततोऽन्य[तम]द् दृष्टं, यथा तन्तवस्तत्संयोगाश्च तत्क्रियाश्च तथा सामान्यं सत्ताख्यम्, तस्मात् सामान्यं सदनित्यं द्रव्यवत् कार्यं कारणं सामान्यविशेषवच्च, द्रव्यादिवत्, अतो द्रव्यादीनामेव सदादिषड्विशेषा इति व्याख्या व्यर्था ।

**अत एव च नास्य सत्तदिदमसदिति स्वान्वयवृत्तिसत्त्वाव्यतिरेकवृत्तिनिष्कलमतोऽवधारितसत्त्वं द्रव्यादि व्याख्यातम्, तस्मात्तदर्थमभिधानप्रत्ययहेतुनाऽन्येन नार्थः, स्वत एव सिद्धप्रयोजनत्वात्, तत्रान्यस्य सदभिधानप्रत्ययहेतोर्द्रव्यादावनवकाशः स्वत एव सिद्धप्रयोजनत्वात्, सत्तासामान्यादिवत्, आकाशादिवद्वा यथा वा पुत्र एवापुत्र उच्यते स्वगतपुत्रत्वसंसिद्धान्वयव्यतिरेकाभिधानप्रत्ययदेवदत्तः पुत्र एव सन्ननपेक्षपुत्रत्वः, अत्र स्वभावसिद्धेरेव द्रव्यादित्वं नेतरसत्त्वादिति सत्ताया निराकरणं कृतम्, द्रव्यत्वाद्यप्येवमेव निराकार्यम् ।**

**अत एव चेत्यादि**, एतस्मादेव द्रव्याद्यन्यतमस्वरूपत्वात् सत्तायाः सामान्याख्यायाः, नास्य सत्तदिदमसदिति विगृह्य अस्येत्यन्वयान्नेति च व्यतिरेकात् द्रव्यगुणकर्माख्यस्य त्रयस्य सतोऽवधारणार्थं प्रतिषेधवाचिना नञा व्यवच्छेद्यां सत्तामभ्युपगम्य स्वान्वयवृत्ति सत्त्वादव्यतिरेकवृत्ति च निरूपितमन्वयव्यतिरेकाभ्यां निःकारकाभ्यां निष्कलं परिपूर्णं स्वरूपतोऽवधारितञ्च सत्त्वं यस्य तद्द्रव्यादि द्रव्यान्तरादि सद्व्यतिरेकेण स्वान्वयेन च यथा व्याख्यातं सिद्ध्यति च, तस्मात्तदर्थं—द्रव्याद्यवधारणार्थं अभिधानप्रत्ययहेतुनाऽन्येन सत्तादिना नार्थः[न]प्रयोजनम्, स्वत एव सिद्धप्रयोजनत्वादित्युक्तोपसंहारः, अत्र पृथक् साधनं—तत्रेत्यादि, द्रव्यादिव्यतिरिक्तस्य सदभिधानप्रत्ययहेतोर्द्रव्यादावनवकाशः, स्वत एव सिद्धाभिधानप्रत्ययत्वात्, यत्र स्वत एव सिद्धाभिधानप्रत्ययत्वं तत्रान्यस्य सदभिधानप्रत्ययहेतोर्नावकाशोऽस्ति,

---

कर्म वा स्यादित्याह—**तथा चेति** । एवञ्च सामान्यस्यापि सदादिषड्विशेषवत्त्वात् त्रयाणामेव तदुक्तिरयुक्तेत्याह—**तस्मादिति** । एवञ्च सत्ताया द्रव्यगुणकर्मान्यतमरूपत्वे सिद्धे द्रव्यादेः स्वत एव सामान्यविशेषरूपतया न घटादिरूप सत्त्वं स्वात्मानमन्यत्र सङ्क्रामयति न वा स्वसत्त्वं परतो लभत इति घटादिसत्त्व स्वान्वयवृत्ति स्वान्यव्यतिरिक्तञ्च, अत एव तत् सम्पूर्णनिरतिशयम्, तस्मात् द्रव्यादेः स्वत एव सद्रूपत्वात् नास्य व्यतिरिक्ता सत्ता पश्चात् सत्त्वकरी विद्यते, सदभिधानप्रत्यययोः स्वत एव सिद्धत्वादित्याशयेनाह—**अत एव चेति** । तद्व्याचष्टे—**एतस्मादेवेति** सत्तासामान्यस्य द्रव्यगुणकर्मान्यतमस्वरूपत्वादेवेत्यर्थः । नास्य सत्तदिदमसदिति विगृह्यास्यच्छब्दं सतो द्रव्यादेर्यदसदिति व्यतिरिक्तसत्ताप्रतिषेधो वर्ण्यते तदुक्तमेवेत्याशयेनाह—**नास्येति**, अस्येति पदेन स्वरूपव्यापिसत्त्ववद्द्रव्यादौ नञा प्रतिषेधवाचिना व्यतिरिक्तसत्ताया व्यवच्छेद्यताऽभ्युपगमादित्यभिप्राय इति भाति । सत्त्वं स्वसम्बन्धिद्रव्याद्यन्वयिनं व्याप्य वर्त्तते नान्यत्र च वर्त्तत इत्याशयेनाह—**स्वान्वयेति**, सजातीयासजातीयेतरस्वभावभूतमिति भावः । अत एवैतत् सम्पूर्णनिरतिशयमित्याह—**अन्वयेति** । भवतु सत्त्वं तादृक्, ततः किमित्यत्राह—**तस्मात्तदर्थमिति** द्रव्यं गुणः कर्म च सदेवेत्यवधारणार्थमित्यर्थः । अत एव चेत्यादिना सिद्धमेव तस्मात्तदर्थमित्यादिनोक्तत्वात् पौनरुक्त्यमित्याशङ्क्याह—**इत्युक्तोपसंहार इति** । पक्षसाध्यहेतुरूपेण तमेवार्थं साधयति—**अत्रेति**, उक्तोपसंहाररूपताया अभावेऽनुमानप्रदर्शनपरत्वं

---

१ सि. द्रव्याद्यन्य० डे. द्रव्याद्यन्यवादव २ सि क वानोन्यस्यात् । ३ क. तत्सामान्यं सत्ताख्यं द्रव्यम् । ४ सि. क. द्रव्यशून्यतम० । ५ क. निरूपितमित्यस्यानन्तरं नत्वन्वयव्यतिरेकवृत्ति च निरूपितमित्यधिकः पाठो दृश्यते ।

यथा सत्तासमवायविशेषेष्विति, अथ वाऽऽश्रयाश्रयिणोः पारतंत्र्यस्वातंत्र्यव्याख्याकुसृतिप्रत्युत्थानं मा कार्षीद्वैशेषिक इति निराशङ्कमाकाशादिवदिति दृष्टान्तः, यथा दिक्कालाकाशद्रव्याणि दिक्कालादिमुख्यसामान्यशून्यानीति, अथ वा प्रस्तुतोदाहरणमेव दृष्टान्तः स्वगतेत्यादि, अन्वयव्यतिरेकयुक्तावभिधानप्रत्ययावश्वरथवदन्वयव्यतिरेकाभिधानप्रत्ययौ, तौ स्वगतेन पुत्रत्वेन संसिद्धौ यस्मिन् सोऽयं स्वगतपुत्रत्वसंसिद्धान्वयव्यतिरेकाभिधानप्रत्ययो देवदत्तः पुत्र एव म[1]नपेक्षपुत्रत्वः-स्वसुतमनपेक्ष्य व्याख्यातविधिना पुरुषान्तरस्य पितुः पुत्र एव सन्नपुत्रः स्वसूनु[3]त्वाभावादिति यथा पुत्र एवापुत्र उच्यत इत्येवं दृष्टान्तार्थं भावयित्वा दार्ष्टान्तिकमुपनयति, अत्र स्वभावसिद्धेरित्यादि,-स्वभावसद्भावसिद्धेरेव द्रव्यादित्वं नेतरसत्त्वात्-न सम्बन्धिसत्त्वादिति विचारफलं निगम्यते-एवं हि विशेषविचारद्वारेण सत्ताया निराकरणं कृतम्, द्रव्यत्वाद्यप्येवमेव निराकार्यम्, द्रव्यत्वगुणत्वकर्मत्वसामान्यविशेषनिरपेक्षावभिधानप्रत्ययौ स्वत एव द्रव्यादीनां सुलभौ, व्याख्यातवदिति, तत्रापि तुल्यप्रचर्चत्वात् ।

**एतेन सत्सत्करत्वपक्षेऽपि साक्षात्कृतमेव वैयर्थ्यम्, स्वत एव सिद्धत्वात् ।**

( **एतेनेति** ) एतेन सत्सत्करत्वपक्षेऽपि साक्षात्कृतमेव वैयर्थ्यम्-नास्य सदित्यसत्पक्षे यथाऽभिहितं विचारावसाने नासतः सत्करी सत्ता सद्द्रव्यादिव्यतिरिक्तस्य सत्ताद्रव्यत्वादेः तत्सदभिधानप्रत्ययहेतोरनवकाशः, स्वत एव सिद्धाभिधानप्रत्ययत्वात् सत्तावदिति, तथा तथैव सतां द्रव्यादीनां सत्करी सत्तेत्यत्रापीति प्रत्यक्षीकृतमस्माकं त्वयैव वैयर्थ्यं सत्तासम्बन्धस्य, स्वत एव सिद्धत्वादिति ।

---

नस्येति सत्त्वाऽनुमानं दर्शयतीति भाव , प्रयोगार्थ स्फुट एव । ननु द्रव्यादिराश्रय परेणैव सद्व्यादिर्भवति, आश्रयि च सत्ताद्रव्यत्वादि स्वत एवेति वैशेषिको यदि शङ्केत तर्हि तत्पोषार्थमाश्रयभूतं स्वत एवाभिधानप्रत्ययविषयं दृष्टान्तमुपन्यस्यति-**आकाशादिवदिति,** आकाशादिव्यपदेश प्रत्ययश्चात्र स्वत एव, नाकाशत्वादिना परेण, आकाशत्वादीनामेकव्यक्तिमात्रवृत्तित्वेन सामान्यानभ्युपगमादिति भाव । तत्रापि यद्याकाशत्वादिना सखण्डेनाखण्डेन वा धर्मेणवाभिधानप्रत्ययावितीष्यते तर्हि त्वदुक्तं प्रस्तुतमपुत्रब्राह्मणदृष्टान्तमेवात्रापि गृहाणेत्याशयेनाह-**अथ वेति** । अश्वेन युक्तो रथोऽश्वरथ इत्यादिमध्यमयुक्तपदलुप्तसमासवत अन्वयव्यतिरेकयुक्तौ अभिधानप्रत्ययाविति मध्यमयुक्तपदलोपिकर्मधारय इत्याह-**अन्वयेति**, अभिधानप्रत्यययो सामान्यविशेषात्मकवस्तुविषयत्वेनान्वयव्यतिरेकयुक्तता भाव्या । तौ च स्वात्मन स्वत सिद्धधर्मविशेषप्रयुक्तौ नान्यगतधर्मेण, तथा च स्वनिष्ठपुत्रत्वेनैव देवदत्त पुत्राभिधानप्रत्ययविषय , यद्यपि पुत्रत्व पितृत्वापेक्ष तथापि पुत्राभिधानप्रत्यययोर्न पित्रपेक्षत्वं प्रयोजकमित्याशयेनाह-**तौ स्वगतेनेति,** अन्वयव्यतिरेकाभिधानप्रत्ययौ स्वनिष्ठेन पुत्रत्वेनैव भवतो नान्यगतेन पुत्रत्वादिनेति भावः । **अनपेक्षपुत्रत्व इति,** अनपेक्ष पुत्रत्वं यस्य यन्निष्ठं पुत्रत्व स्वसुतानपेक्ष तथाविध इत्यथ , स्वसुतापेक्षपुत्रत्वेन त्वपुत्र एवेति भाव. । **व्याख्यातविधिनेति,** अतद्व्यत्वात स्वय पुत्रीभावपरिणामशून्यत्वादित्याद्युक्तविधिनेत्यर्थ । सत्तानिराकरणविचारं निगमयति-**एवं हीति** । इतरेषामपि द्रव्यत्वादिव्यतिरिक्तसामान्यानामनयैव दिशा निराकरण कार्यमित्यतिदिशति-**द्रव्यत्वादीति** । एवमसतो द्रव्यादे सत्कर सत्तासम्बन्ध इति पक्ष निराकृत्य सत सत्कर सत्तासम्बन्ध इति पक्षं निराकर्तुमाह-**एतेनेति** अन्यस्य सदभिधानप्रत्ययहेतोर्द्रव्यादावनवकाश , स्वत एव सिद्धाभिधानप्रत्ययत्वात सत्तावदित्यनुमानेनेत्यर्थ । एतदेव व्याचष्टे-**नास्येति,** असत्पक्षेऽसत सत्ता सत्करी न भवतीति विचारस्य प्रान्तभागे यथाऽभिहितोऽनुमानेन सत्तासम्बन्धस्यानवकाशस्तथैव सत्पक्षेऽपि तदनवकाशात् सत्ताकल्पनमनर्थकमेव तत्कार्यस्य स्वत एव सिद्धत्वादिति तात्पर्यम् । ननु द्रव्यादिकार्यं यदि न स्वतः सत्, किन्तु सत्तासम्बन्धादेव तर्हि सत्तापि स्वतो न सती स्यात्, किन्त्वपरसामान्यसम्बन्धात् स्यात्, तथा तदपि सामान्यमन्य-

---

१ सि. नास्तीदं पदम् । २ सि. क. सुतमनपेक्ष० । ३ सि. क. क्ष. डे. स्वसून्यत्वभा० ।

किञ्चान्यत्—

**यस्त्वनवस्था न दृष्टान्तात् वाक्प्रकाशितघटाद्यर्थक्रियार्थप्रदीपप्रकाशोपादानस्यार्थवत्प्रकाशनावस्थावत्, इहापि द्रव्यादिकार्येण वस्तूद्भूतिप्रकाशमात्रेण द्रव्यादेरुपयोगक्रिया नास्तीत्यशक्तसदसत्त्वात् विचित्रोपभोगसिद्ध्यर्थं सत्तासम्बन्धोऽर्थवानेवेति ।**

**यस्त्वनवस्था नेत्यादि,** यावदर्थवत्प्रकाशानवस्थावदिति पूर्वपक्षप्रत्युच्चारणम्, अनवस्थादोषपरिहारार्थः प्रतिसमाधानविकल्पो नैष दोषः दृष्टान्तादित्यादि, दृष्टान्तस्तद्यथा—वाचा गमिते प्रकाशिते घट इति ज्ञानमात्राधाने कृते तावता जलाद्याहरणादिक्रियाविनियोगार्थो न कृत इति तदर्थं घटग्रहणधारणाद्यर्थश्च प्रदीपप्रकाश उपादीयते, तस्य वाक्प्रकाशादन्यप्रकारस्य प्रदीपप्रकाशस्योपादानं न व्यर्थम्, न च पुनस्तस्यान्यः प्रदीपोऽन्यो वा प्रकाशः प्रकाशनार्थमुपादीयते, तस्मात्तत्रैव व्यवस्थितत्वान्नानवस्थादोषोऽस्तीत्येष दृष्टान्तः, उपनयः- तथेहापि द्रव्यादिकार्येण वस्तूद्भूतिप्रकाशमात्रेण स्वकारणोत्पादितमात्रेण वाक्प्रकाशितघटस्थानीयेन द्रव्यादेः कार्यस्योपयोगक्रिया नास्ति, पुरुषोपभोगार्थाश्च सर्वाः क्रियाः इति अतः कारणात्, असत अशक्तसदसत्त्वात्-अशक्तस्य स्वकार्यकरणे सत एवासत्त्वात्, अङ्कुरावस्थायामिव व्रीहेः, अकठिनावस्थायामिव वा क्षुत्प्रतीकाराशक्तासद्व्रीहिवत्—विचित्रोपभोगसिद्ध्यर्थं—घटपटकटादिभिः परस्परव्यतिरिक्तैर्जलधारणत्वक्त्राणप्रच्छादनाद्युपभोगसिद्ध्यर्थं विचित्रेषु घटादिषु पटादिषु देशकालाकारादिभिः समानजातीयेष्वभिन्नाभिधानप्रत्ययव्यवहारसिद्ध्यर्थं स्वसामान्यान्वितेषु सत्त्वविशेषणेन प्रकाशान्तरेण सम्बन्धोऽर्थवानेव, वाक्प्रकाशितस्य पुनः प्रकाशने प्रदीपप्रकाशस्येव ।

सामान्यसम्बन्धादित्येवमनवस्था, यदि च सत्ता स्वयमेव सती नापरसामान्येनेति नानवस्थेत्युच्यते तर्हि द्रव्यादिकार्यमपि स्वयमेव सत् स्यात् किं सत्तयेत्याशङ्कायां वैशेषिकेण यत्समाहितं तदाचष्टे-**यस्त्वनवस्था नेति** । नास्त्यनवस्थादोषं वक्ष्यमाणदृष्टान्तादिति वैशेषिकस्यानवस्थासमाधानविकल्प इत्याह-**अनवस्थादोषेति** । दृष्टान्तं तावद्वर्णयति-**वाचेति,** रात्र्यादौ यदि कश्चिन् गृहेऽस्मिन् घटो विद्यत इति जलाहरणार्थिनं प्रति वदेत्तावता न जलाद्याहरणार्थं सिद्ध्यति, किन्तु प्रदीपप्रकाशेन चक्षुरादिना घटे विज्ञाते हस्तेन परिगृहीते तदर्थं सिद्ध्यतीति सामान्यतोऽवगतस्य विशेषतः परिज्ञानार्थं प्रदीपादिप्रकाशस्यापेक्षाऽस्ति, न तत्र प्रदीपादिप्रकाशस्य प्रकाशनार्थमपरप्रदीपाद्यपेक्ष्यते, ततोऽपेक्षायास्तत्प्रकाशमात्र एव व्यवस्थितत्वान्नास्त्यनवस्थेति दृष्टान्तार्थः । **तदर्थं**—आहरणादिक्रियासु घटादेर्विनियोगार्थम् । सामान्येन प्रकाशितस्यापि पुनर्विशेषेण प्रकाशनं न निष्फलमित्याह-**तस्येति** । अनवस्थाऽभावं वक्ति-**न च पुनरिति** । दार्ष्टान्तिके तदर्थमुपनयति-**इहापीति** कारणसमाजेन द्रव्यादिकार्ये सामान्यत उद्भूतमात्रेण प्रकाशितेऽपि तावता पुरुषप्रयोजननिर्वृत्त्यनुदयादसदेव तत्स्यादिति भावः । तत्र हेतुमाह-**अशक्तेति** द्रव्याद्यर्थक्रियासु असमर्थत्वेन सदप्यसदेवेति भावः । तत्रोदयप्राक्कालीनावस्थं दृष्टान्तमाह-**अङ्कुरेति** । सत्तासम्बन्धप्राक्कालीनोदितावस्थं दृष्टान्तमाह-**अकठिनेति** । सत्तासम्बन्धप्रयोजनं दर्शयति-**विचित्रेति,** घटपटकटादीनां भावैकरूपत्वे परिदृश्यमाना विचित्रा उपभोगा न भवेयुरिति सामान्यधर्मावच्छिन्नानामपि विशेषधर्मावच्छिन्नत्वमावश्यकमिति स्वरूपसतामपि सत्तासम्बन्धोऽपेक्षित एव, न वा सत्तायाः सम्पूर्णसद्रूपायाः प्रदीपप्रकाशस्थानीयायाः सत्तान्तरापेक्षाऽस्तीति नानवस्थेति भावः । विचित्रश्चासावुपभोगश्चेति कर्मधारयाभिप्रायेणाह-**घटपटेति** । विचित्रेषु देशकालाऽऽकारादिभिः घटादिषु उपभोगः-अभिन्नप्रत्ययाभिधानलक्षणो व्यवहारस्तत्सिद्ध्यर्थमिति सप्तमीतत्पुरुषाभिप्रायेणाह-**विचित्रेष्विति,** सत्तासम्बन्धस्या-

१ सि. क. °र्थवतएव । २ सि. क. प्रकाशस्य० ।

वाक्प्रकाशितघटविषयस्यावस्थावदनवस्थादोषाभावाच्च योऽयं प्रतिसमाधानविकल्पः—

**सोऽप्यनुपपन्नः, अवस्थावद्दृष्टान्तासत्त्वात्, अनेकान्तत्वात्, एकान्तरूपो हि निश्चितोऽर्थो दृष्टान्तः स्यात्, त्वदुद्ग्राहितार्थस्य तु न हि व्यर्थत्वैकान्तानुगतं प्रकाशनम्, इन्द्रियेणानुपलब्धस्य विचित्रोपभोगासिद्धेः, तस्यापि बहुप्रभेदोपकरणप्रकाश्यत्वात्, तान्यप्यात्मलब्धिप्रकाश्यानि, साप्युपयोगप्रकाश्या, तस्यापि बाह्योपयोग्यद्रव्योपयोगप्रकाश्यत्वादनवस्था, अतः परं पुनरुक्तं भवति, तस्मात् प्रकाश्यः प्रदीपप्रकाशोऽपि, अतद्रूपभावाधिगम्यत्वात्, प्रस्तुता सत्तापि च आश्रयस्यातद्रूपस्य प्रत्ययेनात्मानं लभते न स्वत एव, वाक्प्रकाशावगमितार्थस्य प्रदीपादिप्रकाशनवदिति ।**

**सोऽप्यनुपपन्न इत्यादि** तदुक्तं यावत् प्रदीपादिप्रकाशनवदिति, कस्मादनुपपन्न इति चेदुच्यते—अवस्था[वद्]दृष्टान्तासत्त्वात्— असावेव प्रदीपदृष्टान्तोऽवस्थावानित्यभिमतोऽवस्थावान्न भवति, अनेकान्तत्वात्, एकान्तरूपो हि निश्चितोऽर्थो दृष्टान्तः स्यात्, त्वदुद्ग्राहितार्थस्य तु नहि व्यर्थत्वैकान्तानुगतं प्रकाशनम्— यदि प्रदीपस्य प्रकाशान्तरेण प्रकाशनं व्यर्थं स्यात् न वाऽ[न]वस्था स्यात्, तत्तु[1] नास्ति, यस्माद्वाक्प्रकाश्यप्रकाशकप्रदीपवदिन्द्रियेणानुपलब्धस्य—अगृहीतस्य घटादेर्विचित्रोपभोगासिद्धेः, किमिन्द्रियैरवस्था स्यात्? नेत्युच्यते—तस्यापि बहुप्रभेदोपकरणप्रकाश्यत्वात्—तदपि हीन्द्रियं निर्वृत्त्युपकरणयोग्यात्मोत्पन्नेन्द्रियपर्याप्त्याख्यपुद्गलद्रव्यप्रकाश्यम्, अञ्जनपादाभ्यञ्जनपथ्यभोजनप्रदीपादिबाह्यद्रव्यप्रकाश्यम्[2], ज्ञानात्मात्मप्रकाश्यञ्च, तान्यपि हि निर्वृत्त्युपकरणै[3]योग्यपर्याप्तिद्रव्याणि अञ्जनादि बाह्यद्रव्याणि चात्मन्युदितक्षीणोपशान्ताङ्गोपाङ्गनामकर्मोदयज्ञानदर्शनावरणवीर्यान्तरायक्षयोपशमापेक्षात्मलब्धिप्रकाश्यानि

भिन्नप्रत्ययाभिधानप्रयोजकत्वात् सप्तमीतत्पुरुषाश्रयणम्, स्वरूपसत्त्वलक्षणैकधर्मावच्छिन्नेभ्य द्रव्यादिषड्भ्यो विचित्रोपभोगसिद्ध्यर्थं द्रव्यादित्रयाणां सत्तासम्बन्ध इति कर्मधारयपक्षाभिप्राय इति ध्येयम् । न कोऽप्यवस्थावान दृष्टान्तोऽस्ति, प्रदीपदृष्टान्तोऽप्यवस्थावान्न भवतीति वैशेषिकयुक्तिं निराकरोति **सोऽप्यनुपपन्न इति**। अनुपपन्नताया हेतुमाह-**अवस्थावदिति**। तथाविधदृष्टान्तासत्त्वे हेतुमाह-**अनेकान्तत्वादिति** प्रकाशान्तरप्रकाशनवैयर्थ्ययोरेकान्तेन प्रदीपे यदि निश्चय स्यात स्यात्तदाऽवस्थावद्दृष्टान्त स एव नास्तीति भाव. । एतदेवाह-**यदीति** प्रकाशान्तरेण प्रकाशनस्य व्याप्य व्यर्थत्वं तद्व्याप्यत्रावस्थावत्त्व वक्तव्यम्, तन्न सम्भवति चक्षुरादीन्द्रियेण प्रकाशात्मा प्रदीपो यदि गृहीतो न भवेत कथं घटादिग्रहणलक्षणविचित्रोपभोग स्यादिति भाव । व्यर्थत्वं कथं नास्तीत्यत्र हेतुमाह-**यस्मादिति**, यथा वाचा प्रकाशितस्य प्रदीपेन प्रकाशन न व्यर्थं तद्वदित्यर्थ । इन्द्रियस्यापि प्रकाशोऽपेक्षित एव न तस्य वैयर्थ्यमतस्तत्राप्यवस्था नास्तीत्याह-**तस्यापीति** इन्द्रियस्यापीत्यर्थ, इन्द्रियाण्यपि बहुप्रभेदैरुपकरणै प्रकाश्यानि, तत्राचेतनानि बाह्यद्रव्याणि, आन्तरद्रव्याणि चेतनञ्च उपकरणानि, तत्रान्तराचेतनद्रव्यलक्षणोपकरणमाह-**तदपि हीति** निर्वृत्त्युपकरणलक्षणेन्द्रियद्वययोग्यमात्मन्युत्पन्न यदिन्द्रियपर्याप्तिनामकं पुद्गलद्रव्य तेन प्रकाश्यमिन्द्रियमित्यर्थः । इन्द्रियाणां प्रकाश्यं बाह्यद्रव्यमाह-**अञ्जनेति**, अञ्जनं पादाभ्यञ्जनं पथ्यभोजनं प्रदीपादि चेन्द्रियगतपदार्थग्रहणशक्त्युत्तेजकत्वाच्चक्षुषः प्रकाश्यमिति भाव । आन्तरं चेतनद्रव्यमिन्द्रियप्रकाशकमाह-**ज्ञानात्मेति** ज्ञानस्वरूपेणात्मना प्रकाश्यम्, उपयोगाभावे इन्द्रियाणामकिञ्चित्करत्वादिति भाव । उदितानां बाह्याभ्यन्तरद्रव्याणामपि प्रयोजकमाह- **तान्यपीति** प्रोक्तबाह्याभ्यन्तरद्रव्याण्यात्मनो लब्धिविशेषात् प्रकाश्यानि, स च लब्धिविशेष इन्द्रियपर्याप्त्युपयुक्ताङ्गोपाङ्गनामकर्मोदयात् बाह्यद्रव्यलाभसहकारिज्ञान-

१ सि. क. सातु । २ सि. क °पदोभ्यङ्गनेस्वपथ्य० । ३ सि. क. °करणासयोग्य० ।

तस्मात्तेषामपि लब्धिप्रकाश्यत्वादनवस्था, सापि लब्धिरात्मनः प्रणिधानाख्येन वीर्येणापनीते ज्ञानावरणादिकालुष्ये जीवस्योपयोगलक्षणस्य प्रसादमात्रं ज्ञानमुपयोगः तेन प्रकाश्यते, लब्धेरप्युपयोगफलायाः तत्प्रकाश्यत्वादनवस्था, तस्यापि मतिज्ञानोपयोगादारभ्य यावत्केवलोपयोगस्य बाह्योपयोग्यद्रव्योपयोगप्रकाश्यत्वादनवस्था, सोऽपि हि 'जं जं जे जे भावे परिणमति पयोगवीससा दव्वं। तं तह जाणाति जिणो अपज्जवे जाणणा णत्थि ॥' ( आव० नि० गा० २६६७ ) इति बाह्यवस्तुपरिणामानुरूपोपयोगात् तत्प्रकाश्य उपयोगोऽपीत्यतः परं पुनरुक्तं भवति प्रकाश्यप्रकाशकचक्रकरूपेण, तस्मात् प्रकाश्यः प्रकाशान्तरप्रकाश्यः प्रदीपप्रकाशोऽपि, अतद्रूपभावाधिगम्यत्वादित्यवस्था[वद्]दृष्टान्तासत्त्वसमर्थनोपसंहारः, सत्तायामप्यनवस्थाना[द]तद्रूपप्रकाश्यसाधर्म्यमापादयितुमाह–प्रस्तुता सत्तापि चेत्यादि, सत्तापि चाश्रयस्य द्रव्यादेरतद्रूपस्य प्रत्ययेनात्मानं लभते–तेन प्रकाश्यते, वाक्प्रकाशावगमितस्यार्थस्य प्रदीपादिना प्रकाशनवत्, न स्वत एवेत्यनवस्थादोषोऽत्रापि तदवस्थः।

किञ्चान्यत्–

**प्रधानमपि चैवं स्याद्भवता परिकल्पिता सत्ता, विश्वरूपोपभोगप्रतिपादनार्थत्वात्, गुणत्रयवत्, यथा सत्त्वरजस्तमोनामकं पुरुषार्थे प्रवर्त्तमानं प्रधानमेव, एवं सत्ता प्रधानमेव न ततोऽन्यत्, कार्यमपि च ते जन्मकालात् प्रागपि सदेव प्राप्नोति, अशक्तसदसत्त्वेन व्याप्यमानत्वात्..................सत्क्रियमाणत्वात्, उत्पन्नमात्रद्रव्यादिवत्, यद्वा न तत् सत्क्रियते, सद्भूतत्वात्, सत्तादिवत्, न तत्सत्ता सत्तान्तरमपेक्षते, सत्तासम्बन्धरहितत्वेऽपि सत्तात्मकत्वात्, अत्यन्तानुप्रवृत्तसत्तावत्, अनर्थसत्ताऽपि चान्यत्रानाधेया, तत एव, स्वसत्तावदिति।**

दर्शनावरणवीर्यान्तरायक्षयोपशमाच्च भवतीति भाव । लब्धिरपि उपयोगप्रकाश्येत्याह–**सापि लब्धिरिति** ज्ञानरूपोपयोगप्रकाश्या, यं प्रमाणमित्यामनन्ति, स चोपयोगश्चित्तैकाग्रतालक्षणेन प्रणिधानेनात्मनो ज्ञानावरणादेरपगमे सति भवतीति भाव । सोऽपि उपयोगो मतिज्ञानोपयोगादारभ्य केवलज्ञानोपयोगपर्यन्तो ग्राह्य, स च बाह्यवस्तुपरिणतिस्वरूपविषयव्यापारलक्षणोपयोगाद्भवतीति भाव । अत्रार्थे प्राचामाचार्याणा परिणाम विना द्रव्यग्रहणाभावप्रकाशिका गाथामाह–**'जं जं जे जे' इति,** यद्यद्द्रव्यं यस्मिन् यस्मिन भावे प्रयोगेग विस्रसया वा परिणमति तद्द्रव्यं तथैव जिनो जानाति यदि परिणतिर्न स्यात् तर्हि तस्य ज्ञानं नास्त्येवेति गाथाया भाव । तत्तात्पर्यमाह–**बाह्यवस्त्विति** । किं तावताऽवस्थितिरस्ति, स उपयोगो नान्यमपेक्षत इति? एवं शङ्कायामस्ति तत्रापि प्रदीपप्रकाशाद्यपेक्षा, स च प्रकाशो इन्द्रियादिप्रकाश्य, इन्द्रियादि च बहुप्रभेदोपकरणप्रकाश्यमित्येवं प्रकाश्यप्रकाशकाऽऽवर्त्तनसम्भवात् पुनस्तद्वचनं पुनरुक्तिर्भवेदिति नोच्यत इत्याशयेनाह–**अतः परमिति। अतद्रूपेति,** तदेव रूपं स्वरूपं यस्य भावस्य तेन भावेन योऽधिगम्य प्रकाश्यो न भवत्यसौ अतद्रूपभावाधिगम्यस्तद्भावात् आत्मस्वरूपेणाप्रकाश्यत्वादित्यर्थः, य आत्मस्वरूपेणाप्रकाश्यः स प्रकाशान्तरप्रकाश्यो भवति, प्रदीपश्चात्मस्वरूपेणाप्रकाश्यत्वेन प्रकाशान्तरप्रकाश्यत्वादवस्थावान् दृष्टान्तो न भवितुमर्हतीति दृष्टान्तोपसंहारार्थं । दार्ष्टान्तिकी सत्तापि न तद्रूपभावाधिगम्येति प्रकाशान्तरप्रकाश्यैवेत्याह–**प्रस्तुता सत्तापि चेति** । यदि स्वात्मस्वरूपेणाप्रकाश्या तर्हि केन प्रकाश्येत्यत्राह–**सत्तापि चेति** । आत्मलाभो जननं सत्ता तु न जन्यते नित्यत्वात् तत्कथमात्मानं लभत इत्याशङ्कायामाह–**तेनेति** । दृष्टान्तमाह–**वागिति** । अथ विचित्रोपभोगसिद्ध्यर्थं सत्तासम्बन्धो यदि भवद्भिरभ्युपगम्यते तर्हि सांख्यसम्मतप्रधानत्वमेव तस्या स्यादिति दोषान्तरमाचष्टे–**प्रधानमपीति** । इदमेव

१ सि. क. साधर्म्यादापा० ।

**प्रधानमपि चैवमित्यादि**, सांख्यपरिकल्पितं सकलजगत्कारणं प्रधानादिपर्यायं स्याद्भवता–वैशेषिकेण परिकल्पिता सत्ता, विश्वरूपोपभोगप्रतिपादनार्थत्वात्[1], गुणत्रयवत्, यथा सत्त्वरजस्तमोनामकं पुरुषार्थं प्रवर्त्तमानं–पुरुषस्य विश्वरूपमुपभोगं प्रतिपादयितुं प्रवर्त्तमानं प्रधानमेव, न ततोऽन्यद्व्यतिरिक्तं किञ्चित्, विकारत्वात्, एवं सत्ता प्रधानमेव स्यात्, अनिष्टञ्चैतत्, किञ्चान्यत्–कार्यमपि त इत्यादि यावद्द्रव्यादिवदिति, कार्यमपि तव द्रव्यादि जन्मकालात् प्रागपि सदेव प्राप्नोतीत्येतदप्यनिष्टापादनम्, कथं ? तन्त्वादिकारणानि प्रागप्युत्तरकालभाव्यभिमतात्मसम्बन्धीनि, अशक्तसदसत्त्वेन[2] व्याप्यमानत्वादित्यादिहेतवो गतार्था यावत् सत्क्रियमाणत्वादिति, उत्पन्नमात्रद्रव्यादिवदिति दृष्टान्तः, यद्वेत्यादि, अथैवं नेष्यते, न तत् सत्क्रियते–द्रव्याद्युत्पन्नमात्रं न भाव्यते वा केनचिदर्थान्तरेण, सद्भूतत्वात्, सत्तादिवदिति, आदिग्रहणाद्द्रव्यत्वादिसामान्यविशेषसमवायवत्, न तत्सत्ता सत्तान्तरमपेक्षते–द्रव्यादीनामुत्पन्नानां स्वभावसत्तासम्बन्धिसत्तां नापेक्षते, सत्तासम्बन्धरहितत्वेऽपि सत्तात्मकत्वात्, अत्यन्तानुप्रवृत्तसत्तावत्–महासामान्यवदित्यर्थः, अनर्थसत्ता–'अर्थ इति द्रव्यगुणकर्मसु' ( वै० अ० ८ आ० २ सू० ३ ) संज्ञानियमादनर्थाः सामान्यविशेषसमवायाः, तेषामनर्थानां या सत्ता सापि चान्यत्रानाधेया, अनाश्रितेत्यर्थः, तत एव हेतोः स्वसत्तावदित्येतान्यनिष्टापादनसाधनानि ।

व्याचष्टे–**सांख्येति**, सत्ता प्रधानमिति प्रतिज्ञा, तत्र हेतुमाह–**विश्वरूपेति** उपभोगप्रतिपादनार्थत्वादिति हेतुः, प्रधानस्य कोऽसावुपभोग इति चेत् विश्वं जगत्, तद्रूप उपभोगः, यद्वा विश्वरूपं महदहङ्कारादयः, सत्तायास्तूपभोगोऽभिन्नाभिधानप्रत्ययव्यवहारलक्षणः । दृष्टान्तमाह–**गुणत्रयवदिति** । दृष्टान्तं घटयति–**यथेति**, स्पष्टम् । दोषान्तरमाह–**कार्यमपीति** स्वकारणेभ्यः स्वरूपसद्भूतिमात्रेणोत्पन्नं कार्यमुपभोगाय नालमिति अशक्तसदप्यसदुच्यते, अशक्तसदसत्त्वेन व्याप्यमानमपि तद्द्रव्यादिकार्यं यथा तदानीं सत् तथा जन्मकालात् प्रागपि सत् स्यादिति भावार्थः । ननु तदानीं साध्यधर्म्येव नास्ति, क्व जन्मकालात्प्राक्सत्त्वं साध्यते इत्याशङ्कायां प्रतिज्ञां प्रदर्शयति–**तन्त्वादीति,** जन्मोत्तरकालभावित्वेनाभिमतो य आत्मा–कार्यं तेन प्रागपि सम्बन्धीनीति तदर्थः, अशक्तसदसत्त्वेन कार्येण व्याप्यमानत्वादिति हेतुघटना बोध्या । अथ यदि जन्मकालात् प्रागपि कार्यं न सत्, ततो न तत्र सत्तासम्बन्धः स्यादित्यनिष्टापादनमाह–**अथैवमिति** । उत्पन्नमात्रं द्रव्यादि स्वकारणैः सत्कृतमेवेति न सत् क्रियत इत्यत्रेष्टापत्तिं यदि ब्रूयात्तद्वारणार्थं न वा केनचिदर्थान्तरेण भाव्यत इति साध्यार्थमाह–**न भाव्यत इति**, सत्तया भाव्यमानत्वेष्टेर्नेष्टापत्तिः कर्तुं शक्यत इति भावः । हेतुमाह–**सद्भूतत्वादिति**, यत् स्वरूपसद्भूतं तत्सत्तार्थान्तरेण भाव्यमानं दृष्टम्, यथा सत्ताद्रव्यत्वादिसामान्यविशेषसमवायाः, तथोत्पन्नमात्रं द्रव्यमिति भावः । यथा तत्सत्तार्थान्तरेण भाव्यमानं तथैव तदीयस्वरूपसत्तार्थान्तरं महासामान्यमपेक्षत एवेत्याह–**न तत्सत्तेति** द्रव्यादेः स्वरूपसत्तेत्यर्थः । **अत्यन्तेति** एकान्तानुवृत्तिप्रत्ययनिमित्तभूतसत्तावदित्यर्थः, एतेनानुवृत्तेर्व्यावृत्तेश्च निमित्तभूतस्य द्रव्यत्वादेर्व्युदासः । सत्ताया अपेक्ष्यमाणत्वं व्युदस्यान्यानाश्रितत्वं साधयति–**अनर्थसत्तेति** । तैर्निर्विधिनिषेधवचनैरागमिकैर्द्रव्यगुणकर्मणामेवार्थ्यमानत्वात्तान्येव वैशेषिकैरर्थपदपरिभाषितानि न सामान्यादीनि ततस्तान्यनर्थानीत्याशयेन वैशेषिकसूत्रप्रदर्शनपुरस्सरमाह–**अर्थ इतीति**, एवञ्चानर्थानां सामान्यादीनां या सत्ता स्वरूपसद्रूपा सा सत्तासम्बन्धरहितत्वेऽपि सत्तात्मकत्वात् नान्यत्राधेया आश्रिता, यथा द्रव्यादेः कार्यस्य स्वरूपसत्ता, तस्मान्न सत्ता द्रव्यादौ समवैतीति भावः । ननु सत्तासमवायप्राक्कालावच्छिन्नमुपादानतन्त्वादिसमवेतं पटादिकार्यं सत्तासम्बन्धादेव यदि सद्भवति, तर्हि तदेकान्तेन सन्न भवति, किन्तु यथा गुण एव सद्गुणो भवति तथाऽसदपि भवति, एवमिष्यते चेत्तत् असदेव भवेत्, स्वतो

1 सि. पुरुषार्थत्वादित्यधिकं दृश्यते । 2 सि. शक्तस० ।

पुनस्तत्रैव दोषः प्रकारान्तरेणोच्यते—

**यदि तत्कारणसमवेतं स्वत एव सन्न भवति सत्तासम्बन्धात् सद्भवति सदेव न, असदपि, यद्येवमिष्यते असदेव तर्हि तत्, स्वतो निरुपाख्यत्वात्, वेदनादि हि निरुपाख्यमपि स्वत एव सामान्यात्मना पररूपेण च सोपाख्यम्, तथाऽव्यपदेश्यत्वात् खपुष्पवैलक्षण्येन, तथाऽविशिष्टत्वादिति, कार्यमपि वा प्राक् सत् एभ्य एव हेतुभ्यः उत्पन्नमात्रद्रव्यादिवत्।**

**यदि तत्कारणसमवेतमित्यादि,** यदि कारणेषु समवेतमात्रं कार्यं स्वत एव सन्न भवति सत्तासम्बन्धात् सद्भवति सदेवेति—सदेव न भवति, अगुणगुणत्वादिवदसदपीति, यद्येवमिष्यते तत एवमापन्नमसदेव तर्हि, किं? तत्, कुतः? स्वतो निरुपाख्यत्वात्—निरुपाख्यत्वादिति सिद्धे स्वत इति विशेषणं वेदनादीनां स्वसंवेद्यानां निरुपाख्याणां सत्त्वात्तत्रानैकान्तिकता मा भूदिति, तद्धि वेदनादि—असाधारणरूपेण निरुपाख्यमपि स्वत एवं—स्वात्मनैव, सामान्यात्मना—अंशान्तरेण पररूपेण च—व्यावृत्तेन सोपाख्यमिति, तथा[वि]विधं विशिष्टं वा अपदेश्यं—व्यपदेश्यं, न व्यपदेश्यं—प्रकारान्तरेण वेदनादिवत् व्यपदेश्यं न भवतीत्यर्थः, खपुष्पवैलक्षण्येन, तथाऽविशिष्टत्वादिति, विशेषणेन हि सत्तादिना वस्त्वेव सामान्यांशादिना वेदनादि[वत्]सम्बध्यते, नावस्त्वित्येवंसाधर्म्यात् खपुष्पवदसत् स्यादिति गतार्थम्, एतदनभ्युपगमे कार्यमपि वा प्राक् सत्, उत्पत्तेः, एभ्य एव हेतुभ्यः स्वतो निरुपाख्यत्वादित्यादिभ्यः, उत्पन्नमात्रद्रव्यादिवत्।

---

निरुपाख्यत्वादित्याह—**यदीति**। तद्व्याचष्टे—**यदि कारणेष्विति**। स्वत एव सन्न भवति—स्वत एव परिपूर्णं सन्न भवति, तेन स्वरूपतः सत्त्वाभ्युपगमेऽपि न क्षति, एवशब्देनासद्रूपताव्यावृत्तं, सदेव न भवतीत्यस्य सर्वथा सन्न भवतीत्यर्थस्तेन, असदपि, अपिशब्दः सतः समुच्चायकः। आपाद्यमाह—**तत एवमिति, हेतुमाह—स्वत इति**। ननु कार्यमसत्, निरुपाख्यत्वादित्येवोच्यतां किं स्वतो निरुपाख्यत्वादिति, अत्रोत्तरमाह—**निरुपाख्यत्वादितीति,** वेदनादौ निरुपाख्यत्वसत्त्वेऽपि स्वसंवेद्यत्वेनासत्त्वाभावात्तदन्तर्भावेण हेतोर्व्यभिचारित्वं मा भूदिति स्वतो निरुपाख्यत्वमुक्तम्, तथा च वेदनादि न स्वतो निरुपाख्यमपि तु स्वत सोपाख्यमेव, स्वात्मनैव सामान्यविशेषात्मना सोपाख्यत्वादिति भावः। निरुपाख्यं तत्कथमित्यत्र विशेषणरूपेण समर्थयति—**असाधारणरूपेणेति,** स्वानुभवैकवेद्यतया बौद्धादिसम्मतस्वलक्षणादिवदुपाख्यातुमशक्यमिति भावः। स्वतो निरुपाख्यत्वहेतोरेवाभिप्रायं स्वत इति विशेषणत्यागेन प्रकारान्तरेणादर्शयति—**तथेति**, विविधमनेकप्रकारं, विशिष्टं व्यावृत्तं वाऽपदेश्यं आख्यानयोग्यं नानाशब्दाभिधेयमसाधारणशब्दाभिधेयं वा, तादृशं यन्न भवति तद्वेदनादिवदव्यपदेश्यं न केनापि शब्देन खपुष्पवैलक्षण्येन वक्तुं योग्यमित्यर्थः, वेदनादि च सदादिशब्दैर्व्यपदेश्यमेव, न तु त्वदीयं कार्यं तादृशमतोऽसदेवेति भावः। हेत्वन्तरमाह—**अविशिष्टत्वादिति** अवच्छेदकत्वसामान्यानिरूप्यत्वादित्यर्थः, वस्तुमात्रं हि यत्किञ्चिद्विशिष्टावच्छेदकत्वनिरूप्यमेव भवति, त्वदीयं कार्यं तु न यत्किञ्चिद्विशिष्टावच्छेदकत्वनिरूप्यमित्यवच्छेदकत्वसामान्यानिरूप्यत्वात् खपुष्पादिवदसदेवेति भावः। एतेषां हेतूनां सद्भावेऽपि यदि कार्यं सदिष्यते तर्हि प्रागप्यत एव हेतुभ्यः सत् स्यादिति विपक्षे बाधकमाह—**एतदनभ्युपगम इति**। अथ कारणसामग्रीफलभूतस्वभावसन्मात्रकारणसमवेतकार्यमात्रस्य सत्ताद्रव्यत्वादिप्रतिनियतधर्मसम्बन्धप्रयोजकरूपाभावादुत्पत्त्यवस्थायामिदं द्रव्यमेव न गुणादि, गुण एव न द्रव्यादि, क्रियैव न द्रव्यादीति नियमो न सम्भवतीत्युक्तं तत् सर्वदा तथैवेति न सत्ताद्रव्यत्वादिसम्बन्धः

---

**१ सि. क. °त्सद्भवनै०। २ डा० एव च। ३, ४, ५, ६ सि. क. °देश्यो। सि. ××। ७ सि. क. वत्। ८ सि. क. डा० °भ्यः उत्पन्नमात्रद्रव्यादिभ्यः उत्प०।**

**यदपि च कर्त्रादिकारकाणां समवायिनाञ्च व्यापारस्य फलमशेषविशेषणविनिर्मुक्तं स्वभावसद्भावमात्रं कारणसमवेतं तदित्यात्मावधारणं कृत्वा स्वयमेव यथोदितं वस्तुमात्रस्य निरतिशयत्वात् सत्त्वादिद्रव्यत्वादिविशेषणसम्बन्धनियमानुपपत्तिरिति तत्तथैव—वस्तुमात्रस्य निरतिशयत्वात् सत्वादिविशेषणसम्बन्धनियमानुपपत्तिरेव ।**

**यदपि च कर्त्रादीत्यादि** कर्त्रादीनां कारकाणां समवायिना[म]समवायिनाञ्च—मृदादीनां देवदत्तदण्डादीनाञ्च यो व्यापारः—समेत्य स्वकार्यारम्भः तस्य फलं—घटादि कार्यमुत्पन्नं वस्तुमात्रं, तस्यात्माऽवधारणं कार्यमित्यतः प्रागुदाहितार्थनिराकांक्षीकरणार्थमाह—अशेषविशेषणविनिर्मुक्तं—सत्त्वद्रव्यत्वगुणत्वकर्मत्वादिभिः सर्वैर्विशेषणैर्विनिर्मुक्तं सम्बन्धसद्भावशून्यं स्वभावसद्भावमात्रं यत्तदुच्यते कारणसमवेतं तदात्मेति—इत्थमात्मावधारणं कृत्वा स्वयमेव यथोदितं वस्तुमात्रस्य निरतिशयत्वात् सत्त्वादिद्रव्यत्वादिविशेषणसम्बन्धनियमानुपपत्तिः—न हि तस्यामवस्थायामिदं द्रव्यं मया द्रव्यत्वेनात्रैव निलयनीयं न गुणकर्मत्वाभ्यामिति द्रव्यत्वस्य निलयनिमित्तकारणमस्ति, अतिशयाभावादेव, तथा गुणत्वकर्मत्वयोरपि गुणकर्मणोरिति, तत्तथैवेत्यादित्वदुक्तमेव कारणमिति तदेवोच्चारयति—यावदनुपपत्तिरेवेति- सत्तादिग्रहणात् सत्त्वद्रव्यत्वगुणत्वकर्मत्वघटत्वरूपत्वगमनत्वाद्यसम्बन्धात कारणसमवेतसर्वद्रव्यगुणादिकार्येषु सत्ताद्रव्यत्वादिविशेषकृतसम्बन्धातिशयाभावादिति ।

एतस्य परिहारार्थम्—

**यत्तु प्रत्युच्यते न, कारणसामग्रीविशेषसद्भावात्, यत्तुल्यजातीयावयवसंयोगारब्धावयविद्रव्यकार्यं द्रव्यत्वेन सम्बध्यते यत्तु कारणगुणारब्धगुणान्तरं 'तैरारब्धे कार्यद्रव्ये नियमत एव गुणान्तरमारभन्त' इति वचनात् गुणत्वेन सम्बध्यते, यत्पुनः गुरुत्वादिभिः स्वाश्रयसंयो-**

सम्भवतीत्याह—**यदपि चेति** । तद्व्याचष्टे—**कर्त्रादीनामिति** क्रियाजनकत्वं कारकत्वं तत्र साधनान्तरनियोगव्यापारः कर्ता, कर्तुः क्रिययेप्सिततमं कर्म, कारकान्तरसाध्यव्यापारं करणं, प्रेरणानुमतिव्यापारं सम्प्रदानं, अवधिभावोपगमव्यापारं अपादानम्, कर्त्रादिव्यवहितक्रियाधारोऽधिकरणमिति व्यापारभेदापेक्षकर्त्रादीनां समवायिकारणभूतमृदादीनाञ्च व्यापारैः समुत्पन्नं कार्यं कीदृशमिति वस्तुस्वरूपनिरूपणं कार्यमिति भावः । वस्तुस्वरूपमेव दर्शयति—**अशेषेति**, उत्पत्तिदशायां निर्विकल्पस्वरूपसद्रूपं तद्वस्तुमात्रं, न तदानीं संसर्गिधर्मनिमित्तकव्यपदेशप्रवृत्तिरिति भावः । तदेवं निर्धार्य स्वरूपं न तदानीं द्रव्यत्वादीनां सम्बन्धः सम्भवति विशेषणसम्बन्धप्रयोजकत्वेन विशेष्यस्य सम्बन्धप्राक्काले क्षणमात्रमतिशयविरहितेन वस्तुमात्रेणावस्थानाद्व्यमन्यथा विज्ञानाभावेन द्रव्यत्वादि कथं सम्बध्येत, न गुणत्वादीत्याह—**इत्थमिति** । कुतस्तदानीं न द्रव्यत्वादिसम्बन्ध इत्यत्राह- **वस्तुमात्रस्येति,** नियमप्रयोजकरूपमतिशयः, अयमत्रैव सम्बध्यते नान्यत्रेत्याकारकनियमप्रयोजकरूपाभावः तदानीमस्ति, स्वरूपसद्रूपमात्रत्वाद्वस्तुन इति भावः । प्रथमक्षण इव द्वितीयादिक्षणेष्वपि कार्यस्य वस्तुमात्रत्वेन निरतिशयत्वात् सत्त्वद्रव्यत्वादिविशेषणसम्बन्धनियमानुपपत्तिस्तदवस्थ एवेति समाधत्ते—**तत्तथैवेति**. प्रथमक्षणे नियमानुपपत्तौ प्रदर्शितं कारणं द्वितीयादिक्षणेष्वपि तदवस्थमेव, ततश्च विशेषणसम्बन्धनियमो नोपपद्यत एवेति भावः । ननु कार्याणां प्रतिनियतकारणजन्यत्वात् सर्वेषां कारणानां सर्वत्र कार्ये व्यापारयितुमशक्यत्वेन प्रतिनियतधर्मावच्छिन्ने कार्ये प्रतिनियतकारणसमाजस्य जनकत्वेन न सत्ताद्रव्यत्वादितत्तद्धर्मसम्बन्धनियमानुपपत्तिरित्याशयेन वैशेषिकः शङ्कते—**यत्त्विति** । घटपटादिद्रव्योपादित्सुकर्तृव्यापारप्रयोज्या-

१ सि. डे. क्ष. कर्त्रादीनाम् । २ सि. क. क्ष. डे. °कार्यसत्ता° । ३ सर्वत्र °कारणंनास्ति° इति दृश्यते ।

**गसहितैर्वा स्वाश्रय आश्रयान्तरे वा पतनकर्मारभ्यते तच्च कर्मत्वेन सम्बध्यत इत्यस्त्यतिशयः, एतन्निदर्शनमात्रं सर्वत्र कारणसामग्र्यनियामकसद्भावात् प्रतिनियतः सामान्यविशेषसम्बन्धो द्रष्टव्य इति ।**

**यत्तु प्रत्युच्यते न कारणसामग्रीविशेषसद्भावादिति,** तद्व्याख्यानं- यत्तुल्यजातीयावयवेत्यादि यावद्द्रव्यत्वेन सम्बध्यत इति द्रव्यत्वनिलयननियमः--पृथिव्यप्तेजोवायुपरमाणुभिर्द्वाभ्यां बहुभिर्वा स्वसंयोगापेक्षैस्तुल्यजातीयैरारब्धेऽवयविद्रव्यकार्ये द्रव्यत्वं निलीयत इत्यर्थः, यत्तु कारणगुणेत्यादि, 'नैरारब्धे कार्यद्रव्ये नियमत एव गुणान्तरमारभन्ते' (          ) इति वचनात् तदारब्धे गुणान्तरे कार्ये गुणत्वनियमनात् गुणत्वेन सम्बध्यते, यत्पुनर्गुरुत्वादिभिः स्वाश्रये—यत्राश्रये गुरुत्वं समवेतं तत्र सं[यो]गाभावे पतनकर्मारभ्यते, आदिग्रहणात् प्रयत्ननोदनाभिघातसंयोगवेगाः कर्मारभन्ते, स्वाश्रयसंयोगसहितैर्वेति, तैरेव गुरुत्वादिभिः स्वाश्रये कपित्थफलवृन्तादौ गुरुत्वेन कर्मण्यारब्धे तत्संयुक्ते कीटे पतनमारभ्यते आश्रयान्तरे, तच्चारब्धं वस्तुमात्रं कर्मकार्यमितराभ्यां विशिष्टं कर्मत्वेन सम्बध्यत इत्यस्त्यतिशय इति दर्शय[न्]निरतिशयत्वस्यासिद्धतामापादयति, एतन्निदर्शनमात्रमित्यादि यावद्द्रष्टव्य इति, सर्वत्र घटत्वगोत्वादिरूपत्वादिगमनत्वादिष्वप्यनया युक्त्या सामान्यविशेषेषु कारणसामग्र्यस्य नियामकस्यातिशयिना सद्भावात् प्रतिनियत एव सम्बन्धो द्रष्टव्यः ।

इति परिहारे कृते प्रस्तुतनय आह—

**अनेनैव परिहारवचनेन यत्तदुत्पन्नं कार्यं तत्स्वत एव परस्परतो विशिष्टं विस्फुटीकृतम्,**

---

नामवयवानां परस्परसंयोगेन घटपटाद्यवयविद्रव्यं जायतेऽत इयं सामग्री द्रव्यस्यैव, न गुणस्य कर्मणो वेति तथाविधसामग्रीविशेषः स्वजन्ये कार्ये द्रव्यत्वसम्बन्धनियमप्रयोजकः, कार्यन्तु न तन्नियमप्रयोजकातिशयवदित्याशयेनाह–**यत्तुल्यजातीयेति,** अन्वयव्यतिरेकाभ्यां समवायेन द्रव्यत्वावच्छिन्नं प्रति तादात्म्येन कृत्स्नतद्धर्मावच्छिन्नै कारणभूतैरवयवैरित्यर्थः । तदारब्धे कार्ये द्रव्यत्वमेव सम्बध्यते, न गुणत्वादिरित्याशयेनाह–**द्रव्यत्वनिलयनेति ।** गुणत्वनिलयननियमप्रयोजकसामग्रीविशेषमादर्शयति–**यत्त्विति,** कार्यद्रव्यकारणसमाजे द्रव्योपादित्साऽवयवसंयोगाद्यपेक्षा पार्थिवपरमाण्वादयोऽन्तर्गताः, कार्यगुणकारणसमाजे च गुणोत्पादित्सा समवायस्वसमवायिसमवायान्यतरसम्बन्धावच्छिन्नवृत्तिमद्गुणविशेषापेक्षद्रव्यादयोऽन्तर्गता इति तादृशसमाजाधीनकार्यविशेषे गुणत्वमेव सम्बध्यते न द्रव्यत्वादीति भावः । कर्मत्वावच्छिन्नकार्यताप्रयोजकसामग्रीविशेषमादर्शयति–**यत्पुनरिति** लोष्टादिवर्तिगुरुत्वं प्रतिबन्धकसंयोगाद्यभावश्चेत्यादयः कर्मविशेषस्य कारणभूताः, तदिदं कर्म अधःसंयोगफलकं पतनाख्यं गुरुत्वसमानाधिकरणमित्यर्थः । प्रयत्नविशेषजन्यनोदनविशेषो गुरुत्ववतो द्रव्यस्योत्क्षेपणक्रियाप्रयोजकः, उलूखलाद्यभिघातो मुसलेन सह प्रयत्नवदात्मसंयोगश्च हस्ते यत्कर्म तत्प्रयोजक इति दर्शयति–**आदिग्रहणादिति ।** असमवायिकारणसमानाधिकरणक्रियाप्रयोजकमुक्त्वा तद्व्यधिकरणक्रियाप्रयोजकमाह **तैरेवेति ।** एभिः कारणविशेषैरारब्धस्य कर्मत्वनियमात् तत्कार्ये कर्मत्वमेवाभिसम्बध्यते, न द्रव्यत्वादीत्याह–**तच्चारब्धमिति ।** अयमतिशयः नियामकः समस्ति, तस्मान्निरतिशयत्वात् सर्वे धर्माः सर्वत्र स्युरित्यापादनं न युक्तमित्याशयेनाह–**इत्यस्तीति,** नियतजातीयाभिसन्धानेन कारकप्रवृत्तेरवयवावयविनोरेकत्वमिवावभासकमहिम्नाऽवयववृत्तिकार्यं स्वजात्यैवाभिसम्बध्यते नान्येनेति द्रव्यत्वादाविव तद्व्याप्यपृथिवीत्वादयस्तद्व्याप्या घटत्वादयः सम्बध्यन्त इति विलक्षणकारणसमाज एव स्वजन्यकार्यस्य वैलक्षण्ये प्रयोजक इति भावः । एवं तर्हि कारणवैलक्षण्यादेव कार्याणां परस्परं वैलक्षण्यं सिद्धमिति तत्र सत्ताद्रव्यत्वादिसम्बन्धो व्यर्थ एव, न हि तेन कार्यं विलक्षणं भवतीत्याशयेन समाधत्ते–**अनेनैवेति ।**

---

१ सि. सामान्य० । २ डा० न्तरतयस्या आ० । ३ सि. गुणत्वकर्मत्वादिभिः ।

**तेनैव विशिष्टेन सत्तादिविशेषणसम्बन्धनकृत्यस्य प्रतिप्रापितत्वात्, तत्र विशेषसद्भावस्तावदाहत्य भेरीमभ्युपगतः तदुपवर्णनद्वारेण वाऽविशेषोऽपि ।**

**अनेनेत्यादि,** त्वदीयेनैवैतेन परिहारवचनेन यत्तदुत्पन्नं कार्यं वस्तुमात्राभिमतं तत् स्वत एव-कारणसामग्र्यातिशयादेव परस्परतो विशिष्टम्, न सत्ताद्रव्यत्वादिसम्बन्धनमपेक्ष्य विस्फुटीकृतम्, तेनैव-वस्तुभावनेन विशिष्टेन सत्तादिविशेषणसम्बन्धनकृत्यस्य-अविशेषविशेषाभिधानप्रत्ययहेतोः प्रतिप्रापितत्वात्, तत्र विशेषसद्भावस्तावत् आहत्य भेरीमभ्युपगतः, सर्वत्र कारणसामग्र्यनियामकसद्भावात् प्रतिनियतः सामान्यविशेषसम्बन्धो द्रष्टव्य इत्युपसंहारवचनात्, तदुपवर्णनद्वारेण वाऽविशेषोऽपि, अभ्युपगत इति वर्तते, तुल्यजातीय[ावयव]संयोगारभ्यकार्यविषयद्रव्यत्वनिलयनवर्णनद्वारेण गुणारब्धगुणान्तरविषयगुणत्व-[निलयन]वर्णनद्वारेण गुरुत्वाद्यारब्धतदाश्रयाश्रयान्तरसमवेतकर्मविषयकर्मत्वनिलयनद्वारेण च सर्वद्रव्यगुणकर्मणां नियतविषयस्वजातिगतविशेषवर्णनादविशेषोऽप्याहत्य भेरीमभ्युपगत इति द्रष्टव्यम्, तस्मात् कारणगतविशेषाविशेषकृतातिशयादेव कार्यगतविशेषाविशेषसम्बन्धसिद्धिः, एवं तावद्विशेषणवर्णनद्वारेणोक्तम् ।

किञ्चान्यत्-

**अशेषविशेषणविनिर्मुक्तमपि न भवतीत्येतदपि त्वयैव तुल्यजातीयावयवसंयोगादिभिन्नत्वेऽप्यविशेषो द्रव्यादीनामित्यनेन भावितं तस्मादस्ति हि ⋯⋯⋯⋯ ⋯⋯नेतरं नेत्रेति, पुनरपि च तद्विजातीयेष्वप्यबादिष्वपि तुल्यजातीयाद्यवयवसंयोगादपि द्रव्यत्वं भावितम् । एतेन पृथिव्यादिभिन्नाप्याद्यवयवसंयोगादिभिन्नत्वेऽपि अविशेषेण द्रव्यत्वमुक्तम्,**

**अशेषेत्यादि,** अशेषविशेषणविनिर्मुक्तमपि न भवतीत्येत[द]पि त्वयैव भावितम्, तद्यथा-तुल्यजातीयावयवसंयोगादिभिन्नत्वेऽपीत्यादि, तुल्यजातीयाः तुल्यप्रकारा अवयवास्तेषां पार्थिवादीनां गन्धादि-

विलक्षणकारणसामग्री स्वव्यापारानन्तरसमुत्पन्नकार्यस्य प्रतिनियतसामान्यविशेषसम्बन्धे नियामिकेति त्वदीयपरिहारवचनेन तथाविधसामग्रीसमुत्पन्नं कार्यं स्वत एव न तु प्रतिनियतसामान्यविशेषसम्बन्धेनान्येभ्यो व्यावृत्तमित्युक्तं भवति, तस्मात्तत्र सामान्यविशेषसम्बन्धस्यान्यस्य प्रयोजनं नास्तीति भाव. । एवमेव व्याचष्टे-**त्वदीयेनैवेति । वस्तुभावनेन**-वस्तु भाव्यते येनासौ तेन, कारणसामग्रीविशेषेण सत्ताद्रव्यत्वादिसम्बन्धप्रयोजनयो निखिलद्रव्येषु द्रव्यमित्यविशेषाभिधानप्रत्यययोर्गुणादिव्यावृत्तेऽद्रव्यमित्यभिधानप्रत्यययोश्च निर्वृत्तत्वादिति भाव । कारणसामग्र्यास्त्वया विशेषाविशेषप्रत्ययाभिधानप्रयोजकातिशयः स्वीकृत एवेति दर्शयति-**तत्र विशेषसद्भाव इति,** कारणसामग्र्या विशेषाभिधानप्रत्ययप्रयोजकविशेषसद्भाव इत्यर्थ. । द्रव्ये गुणे कर्मणि च कारणसामग्रीविशेषस्यैव प्रयोजकत्वोपकारविशेषत्वमपि स्वीकृतमेवेति दर्शयति-**तदुपवर्णनेति**-कारणसामग्र्यतिशयवर्णनद्वारेणेत्यर्थः । तदुपवर्णनमेव प्रकाशयति-**तुल्यजातीयेति,** द्रव्यमात्रेऽविशेषेण द्रव्यत्वनिलयनस्य गुणमात्रे गुणत्वनिलयनस्य कर्ममात्रे कर्मत्वनिलयनस्य च वर्णनेनाविशेषोऽप्यभ्युपगत इति भाव' । इदमेवाह-**सर्वद्रव्येति** द्वन्द्वादौ श्रुतस्य सर्वपदस्य प्रत्येकं द्रव्ये गुणे कर्मणि च सम्बन्ध तेनाविशेषत्वलाभ इति भावः । ततश्च किमित्यत्राह-**तस्मादिति** । अथ कारणसामग्रीविशेषप्रसूतस्य द्रव्यादिकार्यस्याशेषविशेषणविनिर्मुक्तत्वं त्वयोक्तं तदेतन्न सम्भवतीत्येतद्दर्शयति-**अशेषेति** । भावनामेव दर्शयति-**तद्यथेति** पार्थिवाद्यव-

१ सि. क. °मपेक्षो । २ सि. क. डे. **कार्यत्वाविशेषस्य द्रव्यत्वनिलयनविशेषस्य द्रव्यत्वनिलयनविषयविशेषणवर्णनद्वारेण गु०** । ३ क. डे. **विषयनिलयनगुणत्ववर्णन०** । सि. **विषयेण गुणत्ववर्ण०** । ४ सि. क. क्ष. डे. **अविशेष०** । ५ सि. क. **मित्येत्यादि** ।

मत्त्वप्रकाराणां संयोगैरारब्धं द्रव्यं पार्थिवा[वि]कार्यं जायते, आदिग्रहणात् गुणकर्मणोरपि स्वकारणसान्निध्यप्रकारता प्रागुक्ता तैः, संयोगाविभिन्नत्वेऽप्यविशेषो द्रव्यादीनामित्यनेन [1]अविशेषविशेषणेन विशिष्टमितरविलक्षणं वस्तुनः स्वतत्त्वं प्रदर्शितं त्वया, तस्मात्तत्प्रदर्शनादस्ति हीत्याद्युपसंहारग्रन्थो गतार्थो यावन्नेतरं नेत्रेति[?], किञ्चान्यत्–पुनरपि चेत्यादि, रूपरसगन्धस्पर्शवत्सु पृथिव्यवयवेषु संयुक्तेष्वविशेषो दर्शितः न केवलमेष एवाविशेषः सजातीयगतः स्फुटीकृतस्त्वया, किं तर्हि ? तद्विजातीयेष्वपि द्रव्यत्वम्, तथा कारणसामग्र्या अविशेषेण योगात्, [2]अबादिष्वपि–आप्येष्वपि कारणसामग्र्यास्तुल्यत्वात् तुल्यजातीयाद्यवयवसंयोगादपि द्रव्यत्वं भावितम्, तुल्यजात्यवयवसंयोगाविशेषात् आदिग्रहणात् तेजोवाय्ववयवसंयोगादपीति, अतुल्यजातीयानामपि तुल्यजातीय[ावयव]संयोगारम्भाविशेषादित्युक्तत्वात् स्फुटीकृतमविशेषविशेषणमित्यतोऽतिदिशति–एतेन पृथिव्यादिभिन्नेत्यादि गतार्थं यावत् द्रव्यत्वमुक्तमिति ।

किञ्चान्यत्–

**तुल्यजातिभेदेऽपि चाविशेषविशेषणाविनिर्मुक्तत्वं वस्तुनः द्वयोर्बहुषु चेति वचनात्, जातिकल्पनाबन्ध स्वत एव प्रकाशते कारणसमवेतद्रव्यादीत्येतस्यार्थस्य प्रदर्शनार्थं यदुक्तं वस्तुमात्रमाविर्भूतमुक्तवन्नियामकतया स्वेनैव महिम्ना वस्तुनियतत्वात् विशेषणेन द्रव्यत्वादिना अविशेषविशेषणवृत्तिमात्रेण सामान्यविशेषेण सम्बध्यते ।**

**तुल्यजातिभेदेऽपि चेत्यादि** यावत् द्वयोर्बहुषु चेति वचनादिति,–याऽपीयमवान्तरजातिर्घटत्वपटत्वाख्या, पृथिवीत्वजातिभेदः तस्मिन्नपि सत्यविशेषविशेषणेनाविनिर्मुक्तत्वं वस्तुनः कस्मात् ? द्वित्रिचतुरादिसङ्घात् कार्यद्रव्यमुत्पद्यत इत्युक्तत्वात्, एवं तावत् सम्बन्ध्यन्तरनिरपेक्षे वस्तुमात्रे एवाविशेषविशेषण-

वाना तुल्यजातीयत्वं गन्धादिमत्त्वप्रकारेण, गन्धादिमत्त्वस्यैव पृथिव्यादिलक्षणत्वात्, तथाविधानामवयवानां ये संयोगास्तेषां परस्परं भिन्नत्वेऽपि तदुत्पन्नं कार्यमविशेषेण पार्थिवद्रव्यमेव, एवं गुणकर्मणोरपि विज्ञेयमिति भावः । किं तत इत्यत्राह–**अनेनेति** अविशेषो द्रव्यादीनामित्यत्र द्रव्यादेरविशेषत्वलक्षणविशेषणोपन्यसनेनेत्यर्थः, तथा च विशेषणस्य व्यावर्तकत्वादविशेषत्वमपि विशिष्टाद्रव्यादेः कार्यद्रव्यं व्यावर्तयतीति विशिष्टद्रव्यविलक्षणत्वस्वरूपो विशेषः कार्यस्य स्वतत्त्वरूप उक्त एवेति कथमशेषविशेषणविनिर्मुक्तत्वमिति भावः । पृथिवीत्वावच्छिन्नमात्र एव द्रव्यत्वस्याविशेषितत्वेव न, अपि तु पृथिवीत्वानवच्छिन्नानामप्यबादीनां द्रव्यत्वमविशिष्टमिति प्रकाशितमित्याह–**न केवलमिति** । हेतुमाह–**तथेति,** तुल्यजात्यवयवसंयोगाविशेषात् पृथिव्यबादिषु द्रव्यत्वमविशिष्टमिति तुल्यजातीयकारणसामग्र्यारब्धकार्यविशेषस्याविशिष्टत्वात् अविशेषत्वरूपविशेषणयुक्तत्वेनाशेषविशेषणविनिर्मुक्तत्वं कार्यस्य न सम्भवतीति भावः । तुल्यजातीयाद्यवयवेत्यत्रादिपदग्रहणप्रयोजनमादर्शयति–**आदिग्रहणादिति,** अतुल्यजातीयानामपि-पृथिवीत्वानवच्छिन्नानामपि, तुल्यजातीयाः–तुल्यप्रकाराः शीतस्पर्शादिमत्त्वप्रकाराः ये आप्यपरमाण्वाद्यवयवाः तत्संयोगैरारब्धत्वाविशेषात् । किञ्च पृथिवीत्वादिव्याप्यघटत्वपटत्वादिरूपविशेषप्रयोजकधर्मघटितत्वेऽपि सामग्र्या द्व्यवयवारब्धत्वबह्ववयवारब्धत्वलक्षणाविशेषताप्रयोजकरूपोक्तेरपि कार्यमविशिष्टमिति कार्येऽविशेषविशेषणसद्भावात् अशेषविशेषणविनिर्मुक्तत्वं कार्यस्याघटितार्थमेवेत्याचष्टे–**तुल्यजातिभेदेऽपीति ।** तुल्यजातिभेदशब्दार्थमाह–**याऽपीति** अवान्तरजातयो घटत्वपटत्वाद्याः तुल्यजातेः पृथिवीत्वलक्षणाया भेदाः विशेषाः, तथाविधजातिभेदस्य कारणसामग्रीघटकत्वेऽपीत्यर्थः । **अविशेषेति** अविशेषलक्षणं यद्विशेषणं तेन विनिर्मुक्तं कार्यं न भवतीत्यर्थः । तत्र हेतुं प्रकाशयति–**द्वित्रिचतुरेति** । एवं सत्ताद्रव्यत्वादिसम्बन्धिसम्बन्धव्यतिरेकेणापि कार्यस्याविशेषलक्षणविशेषणवत्त्वमिति परसम्बन्धादेव वस्तु विशिष्टं भवतीति वादिनं प्रत्यतिप्रसङ्गो नियमस्यापादित इत्याह–**एवं तावदिति ।** द्रव्यादिकार्यमात्र-

१ सि. क. अविशेषणविशेषेण । २ सि. क. °बादिष्वप्याप्यष्वपि ।

सम्बन्धोऽतिप्राप्त इत्युक्तम्, किञ्चान्यत्, जातिकल्पनावचेत्यादि, यथा भवता जातिरन्याऽनाकांक्षा– वस्तुमात्रे वृत्तेन प्रकाशेन स्वत एव प्रकाशते तथा कारणसमवेतद्रव्यादीत्येतस्यार्थस्य प्रदर्शनार्थं यदुक्तं– वस्तुमात्रमाविर्भूतमिति, उक्तवन्नियामकतयेति–सर्वत्र कारणसामग्र्यनियामकतयेति–सर्वत्र कारणसाम- ग्र्यनियामकसद्भावादित्यनेनोक्तन्यायेन स्वेनैव महिम्ना वस्तुनियतत्वाद्विशेषणेन द्रव्यत्वादिना सम्बध्यते तच्च द्रव्यत्वादि अविशेषविशेष[ण]वृत्तिमात्रं सामान्यविशेषः–अविशेषेण प्रागुक्तेन विशेषणेन च वृत्तिर्यस्य तदिदम[वि]शेषविशेषणवृत्ति द्रव्यत्वादि, तत्परिमाणं तन्मात्रं तेना[वि]शेषविशेष[ण]वृत्तिमात्रेण सामान्य- विशेषेण सम्बध्यते वस्तुमात्रं तदाविर्भूतमिति ।

ततः किमिति चेत्–

**तत एतदापन्नं स्वत एव वृत्तं वस्तु द्रव्यादिप्रत्ययत्वादिना सम्बध्यते, तस्मादेव तु न्यायात् स्वसामान्यस्यापि प्रकाशकं तदेव, प्रदीपवद्भूताद्वस्तुनः प्रकाशान्तरनिरपेक्षात्तस्मादेव प्रविभक्तविषयान्वयात्, विचित्रोपभोगक्रियाप्रसिद्धेर्भिन्नेष्वभिन्नव्यवहारप्रसिद्धेश्च न विशेष- णसम्बन्धः कल्प्यः, सर्वत्र तु घटत्वादावपि तत्त्वं स्वत एवेति त्वद्वचनादेव प्रतिप्राप्तम्, तदेव च विशेषणस्यापि प्रकाशकमिति स्थितम् ।**

(**तत इति**) तत एतदापन्नं स्वत एव वृत्तं वस्तु द्रव्यादिप्रत्ययत्वादिना सम्बध्यते–विशेषणव्य- तिरिक्तमनपेक्षसिद्धं प्रकाशते स्वत एव, प्रकाशान्तरेण नार्थ इत्युक्तं भवति, किञ्चान्यत्–तस्मादेव त्वित्यादि, उक्तादेव न्यायात् स्वसामान्यस्यापि प्रकाशकं तदेव–वस्तुमात्रमाविर्भूतम्, तदाश्रयत्वात् सामान्यविशेषादेः, यदप्युक्तं विचित्रोपभोगक्रियाप्रसिद्ध्यर्थं सत्ताद्रव्यत्वादिसम्बन्धः कल्प्यत इति सोऽप्यनेनैव प्रतिपादितः

मितरानपेक्षं कारणसामग्रीसम्बन्धात् स्वत एव प्रतिभासते यथा जातिरपरानपेक्षा व्यक्तिमात्रसम्बन्धात् स्वत एव प्रतिभासते इति वस्तुमात्रस्याविर्भूतस्य स्वत एव परस्परतो विशिष्टस्य कारणसामग्रीविशेषप्रयुक्तो द्रव्यत्वादिसम्बन्ध इति वैशेषिकमतं दर्शयति– **यथा भवतेति** । उत्पन्नं वस्तु पूर्वोदितक्रमेण कारणसामग्रीनियम्यतया द्रव्यत्वादिसम्बन्धमन्तरेणैव नियतं सत् पश्चादभि- न्नप्रत्ययव्यवहारसम्पादकेन द्रव्यत्वादिना सम्बध्यत इत्याख्याति–**वस्तुमात्रमिति** । तदपि द्रव्यत्वं कीदृशमित्यत्राह–**अशेषेति** पृथिवीत्वावच्छिन्नतदनवच्छिन्नावयवसंयोगभेदेऽपि तुल्यजातीयावयवसंयोगारब्धत्वाविशेषेण तदारब्धे द्रव्यादिकार्ये द्रव्यत्वं वर्तत इत्यविशेषेण द्रव्यत्वस्य वृत्तिता, तथा गुणादिपरिहारेण कारणसामग्रीविशेषरूपविशेषणस्वरूपनियामकेन नियम्यत्वात् द्रव्य एव वर्तत इति विशेषणेन द्रव्यत्वस्य द्रव्यादिकार्ये वृत्तितेति अशेषविशेषणवृत्तिमात्रं द्रव्यत्वं बोध्यमिति भावः । **तत्परिमाणमिति** 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (५-२-३७) इति मात्रच् प्रत्ययः प्रमाणपरिमाणयोरभेदात्त्वमभ्युपगम्येति बोध्यम् । एवं **पूर्वपक्षे** प्रतिपादिते तन्निषेधनार्थमाह–**तत एतदिति** । कारणसमवेतं द्रव्यं यदि स्वत एव प्रकाशमानं द्रव्यत्वादिना सम्बध्यते तर्हि तद्वत् द्रव्यादिप्रत्ययमपि स्वत एव करोति किं विशेषणसम्बन्धेनेत्याशयमाह–**विशेषणव्यतिरिक्तमिति** द्रव्यत्वादिविशेषणरहितमित- रानाकांक्षं स्वत एव प्रतिभासते भासकान्तरेण द्रव्यत्वादिना न तस्य किञ्चित् प्रयोजनमिति भावः । जातिरपि व्यक्त्या प्रकाशते, व्यक्तिव्यतिरेकेण निराश्रयस्य ज्ञानोपायाभावात् व्यर्थ एव तत्र सामान्यसम्बन्ध इत्याशयं सूचयति–**उक्तादेवेति** वस्तुमात्रे वृत्तेन प्रकाशेन जातिः स्वत एव प्रकाशत इत्युदितेन न्यायेनेत्यर्थः । भवतु जातेः प्रतिनियतव्यक्त्यभिव्यङ्ग्यत्वम् तेन **किं** नश्छिन्नमित्यत्राह–**यदप्युक्तमिति,** प्राणिनामुपभोगाय विचित्रविश्वरचनाप्रपञ्च इत्यभिसन्धाय प्रतिनियतकारणजन्यप्रतिनियतकार्य-

१ सि. क. कस्मादेव ।

प्रदीपवद्भूताद्वस्तुनः प्रकाशान्तरनिरपेक्षात् तस्मादेव प्रविभक्तविषयान्वयात्–प्रविभक्तो विषयः द्रव्यादेः, कारणसामग्र्यविशेषः तुल्यजातीयावयवसंयोगादिः, कारणगुणपूर्वक्रमः, स्वाश्रयाश्रयान्तरक्रियारम्भिगुणादिकृतः, तत्कारणकार्यादिप्रविभागात्–व्यतिरेकात्, सदनित्याद्यविशेषो[न्व]याच्च तादृक्प्रविभक्तविषयान्वयात् तस्मादेव वस्तुनो विचित्रोपभोगक्रियाप्रसिद्धेः भिन्नेष्वभिन्नव्यवहारप्रसिद्धेश्चेति द्विप्रकारं पुरुषार्थं दर्शयति, अनयोश्च पुरुषार्थयोरुक्तवदेव सिद्धेर्न विशेषणसम्बन्धः कल्प्यः–सत्ताद्रव्यत्वादिविशेषणसम्बन्धो न युक्तः कल्पयितुमानर्थक्यादिति, एतन्निदर्शनमात्रं तद्भेदा[ना]मपि सम्बन्धकल्पनानर्थक्यमुक्तन्यायेनेत्यतोऽतिदिशति–सर्वत्र तु घटत्वादावपि–आदिग्रहणात् गोत्वमनुष्यत्वादिषु कारणसामग्र्यनियामकसद्भावादेव तत्त्वं–घटत्वगोत्वमनुष्यत्वादि स्वत एव न सामान्यविशेषात् त्वत्कल्पितादिति त्वद्वचनादेव वस्तुन एव सर्वं त्वदिष्टं प्रतिप्राप्तम्, नार्थान्तरसम्बन्धात्, तदेव च विशेषणस्यापि सत्तादेः प्रकाशकमिति स्थितम्—

किञ्चान्यत्

**इदन्तु प्रस्फुटतरं विशेषणसम्बन्धप्रकाशं वस्तु, तेन च वस्तुना नापेक्षितः सामान्येन सह सम्बन्धः, सामान्यमेव वस्तुना सह सम्बन्धमपेक्षत इति तत्सम्बन्धनियमाय तद्व्यक्ततरं वस्त्वेवार्थान्तरनिरपेक्षं विशेषणानामपि प्रकाशकमिति, अथ वा विशेषणसम्बन्धमन्तरेणापि वस्तुमात्राणां परस्परातिशयोऽस्ति, तेन विशेषणसम्बन्धनियमसिद्धिरिति वदता त्वयैवाभ्युपगतम्, चोद्यपरिहारोऽपि कथं परस्परातिशय इति चेत् कथं प्राक्·········अतिशयः स्यात्। न, दृष्टान्तात्, यथा परपक्षे सत्त्वरजस्तमसां परस्परातिशयस्तथेहापि स्यात्, सामान्यादिवद्वा ··············सत एव स्यादिति, सोऽपि चैवं प्रसिद्धमस्मदुक्तमेव संदर्शयति।**

**इदन्तु प्रस्फुटतरमित्यादि,** विशेषणस्य सत्ताद्रव्यत्वादेः सम्बन्धः[तस्य]प्रकाशोऽस्मिन्निति

व्यक्तेरनुवृत्ताकारप्रत्ययाभिधाननिमित्तत्वासम्भवेन सत्ताद्रव्यत्वादयस्तद्धेतुत्वेन कल्प्यन्त इति त्वया यदुक्तं तदप्यनेनैव स्वयं प्रकाशित्वाभ्युपगमेन कार्यस्य निराकृतमित्याशयेनाह–**प्रदीपवद्भूतादिति,** त्वदुदितं कार्यं त्वद्वचनेनैव प्रदीपवत् सञ्जातम्, प्रदीपो हि प्रकाशान्तरनिरपेक्षः स्वतोऽनुवृत्तिव्यावृत्तिभाक्, तथा कार्यमपीति भावः। एतदेव समर्थयति–**तस्मादेवेति** प्रदीपवद्भूतत्वादेव प्रविभक्तविषयान्वयं कार्यवस्तु, प्रविभक्तः–परस्परं भिन्नः विषयो हेतुः यस्य कार्यद्रव्यादेः तत्कार्यद्रव्यादि प्रविभक्तविषयं सद्व्यावृत्तं सदन्वितञ्चेति भावः। कार्यद्रव्यादेर्विषयस्य प्रविभक्तत्वमादर्शयति–**कारणेति** कारणसामग्रीविशेषः तुल्यजातीयावयवसंयोगादिश्च द्रव्यस्य गुणादेः प्रविभक्तो विषयः, कारणगुणपूर्वकत्वं गुणस्य द्रव्यादेः प्रविभक्तो विषयः, स्वाश्रयाश्रयान्तरक्रियाऽऽरम्भिगुणादिः कर्मणो द्रव्यादेश्च प्रविभक्तो विषय इति प्रविभक्तकारणकार्यत्वात् कार्यवस्तुनः परस्परं व्यतिरेकरूपता, सदनित्याद्यविशेषाच्चान्वयरूपतेति सत्ताद्रव्यत्वादिसम्बन्धमन्तरेणापि स्वत एव कार्यात् विचित्रोपभोगप्रसिद्धेरभिन्नव्यवहारोपपत्तेश्च तत्सम्बन्धकल्पनावैयर्थ्यमिति भावः। व्यावृत्तरूपत्वाद्विचित्रोपभोगक्रिया, सामान्यरूपत्वात् अभिन्नव्यवहारप्रसिद्धिरिति पुरुषार्थद्वयं व्यञ्जयति–**द्विप्रकारमिति।** एवं कार्यद्रव्यादेरिव घटपटादेरपि स्वतोऽनुवृत्तिव्यावृत्तिभाक्त्वं न भावान्तरसम्बन्धादिति कार्यवस्तुनः स्वयं प्रकाशत्वं वर्णयता भवतैव समर्थितमित्याह–**सर्वत्र त्विति।** स्वतोऽनुवृत्तव्यावृत्तात्मकं कार्यवस्त्वेव प्रकाशकत्वात् स्वविशेषणानामपि सत्तादीनां प्रकाशकमित्याह–**तदेव चेति।** इदञ्चात्यन्तं स्पष्टमेव यत् सत्ताद्रव्यत्वादिसम्बन्धः व्यक्त्या प्रकाश्यते, व्यक्तिस्तु स्वतः प्रकाशरूपा प्रदीपकल्पा न प्रकाशान्तरमपेक्षते, जातिरेव तु स्वप्रकाशे व्यक्तिसम्बन्धमपेक्षत इति समर्थयति–**इदन्त्विति।** तदेव व्याचष्टे–**विशेषणस्येति** वस्त्वेव प्रकाशकं विशेषणस्य द्रव्यत्वादेः, वस्तु च स्वप्रकाशे सामान्यसम्बन्धं

१ सि. क. °विषयत्वात्। २ सि. क. °विशेषाद्यावच्च।

विशेषणसम्बन्धप्रकाशं वस्तु, न न वस्तुनैव प्रकाश्यते विशेषणमिति तदेव वस्तु प्रकाशकं, तेन च वस्तुना नापेक्षितः सामान्येन सह सम्बन्धः, सामान्यमेव वस्तुना सह सम्बन्धमपेक्षत इति तत्सम्बन्धनियमाय त्वयैवाभ्युपगतमिति दर्शयितुं वचनोपन्यासः, कतमस्य वचनस्योपन्यासः ? उच्यते–यदुक्तं वस्त्वात्मावधारणे कृतेऽतिशयाभावाद्विशेष[ण]सम्बन्धाभाव इति चोदिते विकल्पान्तरेण परिहारवचनं–तद्व्यक्ततरं वस्त्वेवार्थान्तरनिरपेक्षं विशेषणानामपि प्रकाशकमिति, तथा[1] यदुक्तं–अथवा विशेषणसम्बन्धमन्तरेणापि वस्तुमात्राणां परस्परातिशयोऽस्ति, तेन विशेषणसम्बन्धनियमसिद्धिरित्येतद्वचनं यथोक्ततत्कारणसामग्र्यसद्भावविशेषाविशेषन्यायप्रापकमिति, चोद्यपरिहारोऽपीत्यादि, एतस्मिंश्चार्थे यच्चोदितं–कथं परस्परातिशय इति चेदिति, तस्य व्याख्या कथं प्रागित्यादि गतार्थं यावदतिशयः स्यादिति, अस्य चोद्यस्य परिहारः सोऽपि चैवं प्रसिद्धमस्मदुक्तमेव संशयति, कोऽसौ परिहारः ? उच्यते न, दृष्टान्तादिति, तद्व्याख्या–यथा परपक्षे इत्यादि यावत् अतिशयस्तथेहापि स्यादिति गतार्थम्, यदि परमते सत्त्वरजस्तमसां परस्परातिशयोऽस्ति तव किं ? इत्यत्राशङ्कानिषेधार्थं स्वसमयोदाहरणमपि चैनमेवार्थं द्रढयतीति स्ववचनं तद्वचनप्रदर्शनं यदुच्यते सामान्यादिवद्वेत्यादि सव्याख्यानं गतार्थं सोपनयं यावत् सत एव स्यादिति ।

**अत्र प्रयोगाः–न द्रव्यादि अन्याधेयस्वप्रकाशं सत्त्वात्, यत् सत् न तदन्याधेयस्वप्रकाशं नाधेयसत्त्वादि नाप्रतिपूर्णसत्त्वादि दृष्टम्, सामान्यादिवत्, सात्मकत्वात्, प्रत्येकं सत्त्वात्, स्वभावसद्भूतत्वाच्च, एवमनभ्युपगमे असदेव वा स्यात्, सत्त्वसमवायलभ्यसद्भावत्वात्, कार्यवत्, तस्मान्न सतामपि द्रव्यादीनां सत्करी सत्ता व्यर्थत्वादिति साधूक्तम् ।**

---

नापेक्षते, सामान्यमेव स्वप्रकाशं वस्त्वपेक्षते, एवञ्च वस्तु यत सामान्यं प्रकाशयति तदेव सामान्यं तत्रैव सम्बध्यते नान्यत्र नान्यद्वेति तत्तज्जातिसम्बन्धं नियमयितु वैशेषिकोक्तं वचनं प्रदर्शयति-**यदुक्तमिति** कारणसामग्रीप्रभवं कारणसमवेतमात्रं कार्यद्रव्यमिति स्वरूपमवधार्यते चेन्न तर्हि तत्र प्रतिनियतविशेषणसम्बन्धः कर्तुं शक्यः, तत्सम्बन्धनियामकस्य कस्यचिदत्यतिशयस्य कार्यद्रव्यमात्रेऽभावादित्याशङ्कार्थं । तत्परिहारं वैशेषिको ब्रूते-**तद्व्यक्ततरमिति** कारणसमवेतं द्रव्यादिकार्यमपरानपेक्षं स्वत एव प्रतिनियतं सत् द्रव्यत्वादिना विशेषणेन सम्बध्यते इति भावः । ननु द्रव्यादेः स्वतः प्रकाशकत्वमयुक्तमिति विचिन्त्य कारणसामग्रीविशेषजन्य कार्ये वैलक्षण्यमभ्युपगम्य यदुक्तं तद्दर्शयति-**तथा यदुक्तमिति**। इदञ्च वचनं कार्यद्रव्यादौ कारणसामग्रीविशेषप्रसूतत्वलक्षणातिशयप्रकाशकस्य पूर्वोक्तस्य यत्तुल्यजातीयावयवसंयोगारब्धावयविद्रव्यकार्यमित्यादिवचनप्रतिपादितन्यायस्य स्मारकमित्याह-**यथोक्तेति**। एवं परस्परातिशयासम्भवमाशङ्क्य वैशेषिकेण प्रधानवत् सामान्यादिवद्वा योऽतिशयो व्यवस्थापितस्तां व्यवस्थामुपदर्शयति-**एतस्मिंश्चार्थे इति** सांख्याभिमतमविकृतं सत्त्वरजस्तमःसाम्यावस्थस्वरूपप्रधानतत्त्वं निखिलमहदादिविकारबीजभूतमभिन्नमपि गुणवैषम्यलक्षणातिशयविमर्दवशेन क्रमवन्महदादिविलक्षणनानाविकारकारित्वाद्विलक्षणं तथा कारणसामग्रीविशेषप्रसूतत्वमेवातिशयः कार्यस्य विशेषणसम्बन्धव्यतिरेकेणापि सम्भवतीति भावः । **अस्मदुक्तमेवेति,** स्वत एव तत् वस्तु प्रकाशकं सामान्यस्यापि, अतो न सामान्यमपेक्षते, तत एव च विचित्रोपभोगक्रियाया अभिन्नबुद्धिव्यवहारस्य च प्रसिद्धेर्द्रव्यत्वादिसम्बन्धपरिकल्पना व्यर्थेत्यस्मदुक्तमेव त्वदीयं चोद्यपरिहारवचनं समर्थयतीति भावः वैशेषिकवचनमेव प्रदर्शयति-**न दृष्टान्तादिति** । सांख्यसम्मतं दृष्टान्तमाह-**यथा परपक्ष इति** सांख्यपक्ष इत्यर्थः । पराभ्युपगतदृष्टान्तसामान्यात् स्वपक्षसिद्धिर्न युक्तेत्याशयेन पृच्छति-**यदीति** । स्वमतीयं दृष्टान्तमाह-**सामान्यवद्वेति,** इयता प्रबन्धेन प्रतिपादितमर्थमनुमानेन साधयन् सतां न सत्करी सत्तेति विकल्पमुपसंहरति-**अत्र प्रयोगा इति** यस्य द्रव्यादेः

---

1 सि. क. तथा ।

(**अत्रेति**) अत्र प्रयोगा न द्रव्यादि अन्याधेयस्वप्रकाशं नान्येनाधेयः [स्व]स्य द्रव्यादेः प्रकाश इति पक्षो नाधेयसत्त्वादिविशेषणं द्रव्यादि, नाप्रतिपूर्णसत्त्वादिविशेषणमिति वा पक्षः, सत्त्वात्, यत् सत् न तदन्याधेयस्वप्रकाशं नाधेयसत्त्वादि नाप्रतिपूर्णसत्त्वादि दृष्टम्, सामान्यादिवत्–यथा सामान्यविशेषसमवायाः सन्तो नान्या[धेयस्व]प्रकाशनाधेयसत्त्वादयस्तथा द्रव्यादीनि, एवं सात्मकत्वात् प्रत्येकं सत्त्वात् स्वभावसद्भूतत्वादिति हेतवः, मूलहेतोरेव पर्यायवाचिनो वा, एवम[न]भ्युपगमे असदेव वा स्यात्, सत्त्वसमवायलभ्यसद्भावत्वात्–सत्त्वसमवायेन लभ्यः सद्भावोऽस्येति द्रव्यादि उत्पन्नमात्रत्रयमभिसम्बध्यते, कार्यवदिति, कारणावस्थायां यत्कार्यं स दृष्टान्तः, नन्वेवं सत्त्वसमवायलभ्यसद्भावं तस्यामवस्थायां कार्यं न भवतीति चेन्न, त्वयैव निष्ठासम्बन्धयोरेककालत्वाभ्युपगमेन परिहृतत्वात् तस्मान्न सतामपि द्रव्यादीनां सत्करी सत्ता, व्यर्थत्वादिति साधूक्तमिति प्रस्तुतदोषोक्त्युपसंहारः, एवं तावदसतां सताञ्च द्रव्यादीनां सत्करी न भवति सत्तेत्युक्तम् ।

किञ्चान्यत्–

**नापि सदसतां सत्करी सत्ता, अभूतत्वात्त्वन्मतेनैव, खपुष्पवत्, या तु त्वयोक्तोपपत्तिः**

---

प्रकाशोऽन्येन येन केनचिदाधातुं योग्यो न भवतीति साध्यार्थ, एतेन कारणसामग्रीविशेषाल्लब्धं कार्यद्रव्यादि स्वयमेव प्रकाशत इत्युक्तं भवति, अत उच्यते–**नान्येनेति**, अत्र स्वपदार्थ एव बहुव्रीहावन्यपदार्थः । स्वप्रकाशरूपताऽचेतनस्य द्रव्यादेरयुक्तेति मन्यमान आह–**नाधेयेति** आधेयभूतं यत्सत्त्वादि तद्विशेषणं यस्य नास्ति तथाविधं द्रव्यादीत्यर्थ, एतेनातिरिक्तसत्ताद्रव्यत्वादिसम्बन्ध. प्रतिक्षिप्त । एवञ्चातिरिक्तसत्ताद्यभावे कार्यद्रव्यादि सम्पूर्णनिरतिशयसद्रूपम्, न तु यावन्न सत्तासम्बन्धस्तावदसद्रूपं सत् स्वरूपसल्लक्षणाप्रतिपूर्णसद्रूपमिति तथैव पक्षमाचष्टयति–**नाप्रतिपूर्णेति** । हेतुमाह–**सत्त्वादिति** । उदाहरणमाह–**यत् सदिति** । दृष्टान्तं घटयति–**यथेति** । तत्रैव साध्ये हेत्वन्तराण्याह–**सात्मकत्वात्**, शशविषाणादिवन्निरात्मकत्वाभावादित्यर्थः, सत्तादिसम्बन्धात्तस्य सद्रूपत्वेऽन्येन तस्य सद्रूपतापत्त्या स्वतो निरात्मकत्वं स्यात, तच्च नेष्टमत सात्मकत्वात् न तदन्याधेयस्वप्रकाशादीति भाव. । **प्रत्येकं सत्त्वादिति** विशेषणसम्बन्धेन विनापि द्रव्यादिकार्यस्य स्वत एव परस्परातिशयवत्त्वेन प्रत्येकं सद्रूपता, न हि प्रत्येकं सद्रूपत्वाभावे तत् सत्तया सम्बद्धुमीष्टे, खरविषाणादीनामपि सत्तया सम्बन्धप्रसङ्गादिति भाव । **स्वभावसद्भूतत्वादिति** यदि कारणसामग्रीविशेषलब्धात्मलाभस्य कार्यद्रव्यादेः स्वत एव न सद्रूपता सत्तासम्बन्धादेव तथा, तर्हि स्वतो निरुपाख्यत्वादसदेव भवेत्, न चैवमिष्टमिति भावः । एते हेतव सद्रूपतासाधकत्वात् सत्त्वस्य पर्यायरूपा एव, सात्मकत्वमेव हि सत्त्वं, प्रत्येकं स्वभावाद्वा व्यतिरिक्तस्य सत्त्वस्याभावाच्चेत्याशयेनाह–**मूलहेतोरेवेति**, प्रधानभूतसत्त्वहेतोरेवेत्यर्थ । विपक्षे दण्डमाह–**एवमनभ्युपगम इति**, सत्त्वेऽप्यनन्याधेयस्वप्रकाशत्वानभ्युपगमे तस्यान्याधेयस्वप्रकाशत्वं -सत्तासमवायलभ्यसद्भावत्वं प्राप्तं तथा च सति कार्यद्रव्यगुणकर्माण्यसद्रूपाण्येव स्युरिति भावः । दृष्टान्तमाह–**कार्यवदिति**, सत्तासम्बन्धप्राक्कालीनं कारणसमवेतं यत्कार्यं तदसदेव तद्वदित्यर्थ. । ननु तदानीं सत्तासमवायलभ्यं सद्रूपत्वं नास्तीत्यसिद्धो हेतुरिति शङ्कते–**नन्वेवमिति** । समाधत्ते–**त्वयैव निष्ठासम्बन्धयोरिति**, जातः सम्बद्धश्चेत्येक. काल इति वैशेषिकाना सिद्धान्त., कारणसामग्र्या कार्यं निष्ठां प्राप्नुवदेव सत्तासम्बन्धमनुभवति, निष्ठानं निष्ठा जन्मोच्यते स्थितिर्वा तत्त्वञ्च सहक्रमभाव्यनेककार्यकारणत्वम्, कारणसामग्रीमहिम्ना कार्यकारणभेदतिरोधायकसमवायेन यदैव समवायिकारणे नितिष्ठति तदैव जात्यापि सम्बध्यत इत्यभ्युपगमेन सत्तासमवायलभ्यसद्रूपत्वं नासिद्धमिति भावः । सतां सत्तासम्बन्ध इति पक्षमुपसहरति–**तस्मादिति** । तदेवं विकल्पद्वयेऽपि सत्ता सत्करी न भवतीत्याह–**एवं तावदिति** । अथ सदसतां सत्करी सत्तेति पक्षं वैशेषिकपक्षे सदसदात्मकवस्त्वप्रसिद्धेर्निराचष्टे–**नापीति** । विकल्पं

---

१ छा. अनाधेय० । २ सि. न्याधेना । क डे. नान्येनधास्य द्र० ।

**सदसत्त्वाभावे सदसदैकात्म्यानुपपत्तिरिति सा नोपपत्तिः, त्वन्मतेनैव सदसदैकात्म्योपपत्तेरत्यन्ताविरुद्धत्वात्, सामान्यादिद्रव्यादौ तदतत्सदसद्वत्, यथा सामान्यादीनि स्वात्मना असन्त्यपि भवन्ति, सम्बन्धसद्भावेन च सन्त्यपि न भवन्ति, तस्मादसदभूतत्वादिति साधूक्तम्।**

(**नापीति**) नापि[सद्]सतां सत्करी सत्ता–सन्तश्चासन्तश्च द्रव्यादयः सदसन्तो द्व्यात्मक[ा]ः, तेषां सदसतां सदभिधानप्रत्ययकरी सत्ता स्यादिति परस्याभिप्रेतं स्यात्, तदपि न घटते, कस्मात्? अभूतत्वात् सदसदात्मकस्य त्वन्मतेनैव खपुष्पवत्, सत्तासम्बन्धात् प्राक् द्रव्यादिकार्यं सदसदपि न भवत्यसदेव तत्, स्वतो निरुपाख्यत्वादित्यादिहेतुभिः पूर्ववत् सत्तासम्बन्धलभ्यसत्त्वात्, अथ सत्तासम्बन्धनिरपेक्षमेवास्ति व्यर्थः सत्तासम्बन्ध इत्युक्तम्, तस्मादुभयथापि सदसत्त्वविकल्पो नास्ति तस्मादभावात् खपुष्पवत् सत्तया न सम्बध्यते त्वन्मतेनैव, नासन्मतेनाप्यस्ति, या तु त्वयोक्तोपपत्तिः सदसत्त्वाभावे सदसदैकात्म्यानुपपत्तिरिति सा नोपपत्तिः, त्वन्मतेनैव सदसदैकात्म्योपपत्तेरत्यन्ताविरुद्धत्वम्, तयोरत्यन्ताविरुद्धत्वात् सदसदात्मकं कार्यं प्राक् सत्तासम्बन्धादपि, तद्यथा–सामान्यादिद्रव्यादौ तदतत्सदसद्वत्–यथा सामान्यविशेषसमवायाख्यं वस्तुत्रयं स्वभावसत् स्वेनात्मनाऽस्ति तत्सत्, सम्बन्धसद्भावेन नास्तीत्यतदसत्, सदासदात्यन्तमविरुद्धत्वात् सदसत्त्वम्मतेनैव, तथा द्रव्यगुणकर्माख्यं कार्यत्रयमुत्पन्नमात्रं सामान्यादिवत् तदतत् सदसदिति सिद्धम्, तस्य दृष्टान्तद्वयस्य व्याख्या–सामान्यादीनि स्वात्मनेत्यादि गतार्था यथाक्रमं यावत् सन्त्यपि न भवन्ति, तस्मात् त्वन्मतेनैव [न] सदसदैकात्म्यानुपपत्तेरसत्त्वं सिद्धम्, तत्पुनरसत्त्वं कथं तर्हीत्युच्यते–अभूतत्वादिति साधूक्तमिति।

इतर आह–

**नन्वेवं तद्व्यवहृतेः प्रागभावमेदाभाववदभूतत्वमेवेति, अत्रेदं सम्प्रधार्यम्, अथ यदे-**

व्याचष्टे–**सन्तश्चेति**। अघटमानतायां हेतुमाह–**अभूतत्वादिति** अतीतेऽधुनाऽनागते च काले न भूतं हि द्व्यात्मकं वस्तु त्वन्मतेन खपुष्पवदिति भावः। ननु कार्यद्रव्यं सत्तासम्बन्धात् प्राक् स्वरूपसत्त्वात् सत्तासम्बन्धाभावाच्चासदिति सदसदात्मकत्वं तदानीं मयाऽभ्युपगतमित्यत्राह–**सत्तासम्बन्धादिति** सत्तासम्बन्धात् प्राक् कारणसमवेतमात्रकार्यस्य स्वतो निरुपाख्यत्वादिहेतुभिरसत्त्वस्य प्रतिपादितत्वान्न तदानीं सदसत् कार्यमिति भावः। निरुपाख्यत्वादित्यादीत्यत्रादिपदेनाव्यपदेश्यत्वाविशिष्टत्वादिहेतवो ग्राह्याः। किमवधि हेतव इत्यत्राह–**सत्तासम्बन्धेति** सत्तासम्बन्धलभ्यसद्रूपत्वादित्युक्तमन्यावधीत्यर्थः। विनापि सत्तासम्बन्धं कार्यस्य परिपूर्णसद्रूपत्वे पुनः सत्तासम्बन्धो नार्थवानित्यपि पूर्वमुक्तमेवेत्याह–**अथेति**। त्वन्मतेनैव सदसद्रूपं कार्यं नास्ति, न त्वसन्मतेनापि, अस्माभिर्द्व्यात्मकताया वस्तुनोऽभ्युपगतत्वादित्याशयेन त्वन्मतेनैवेति मूलोक्तैवशब्दव्यावृत्तिमाह–**नासन्मते**-**नापीति**। नापि सदसताम्, ऐकात्म्यानुपपत्तेः, सदसतोर्वैधर्म्यादिति यदुक्तं भवता तदपि न युक्तं, त्वन्मतेनैव हि सदसतोर्नास्ति विरोधः, सामान्यादीनां स्वतः सद्रूपाणां सत्तासम्बन्धाभावादसद्रूपाणां च त्वयैवाभ्युपगतत्वात्, सत्तासम्बन्धपूर्वं कार्यं सदसदात्मकमित्याह–**या त्विति**। दृष्टान्तं वर्णयति–**तद्यथेति** दृष्टान्तव्याख्यानं मूलकृतां दर्शयति–**तस्य दृष्टान्तद्वयस्येति**। यद्येवं सदसत्त्वं द्रव्यादेः प्रसिद्धमसन्मतेनापि तर्हि कथमसत्त्वमुच्यत इत्याशङ्क्य समाधत्ते–**तत्पुनरिति**, न भवन्मतेन तद्युक्तम्, अभूतत्वात् कालत्रयेऽपि न भूतं हि तदित्याद्युक्तमत्र भाव्यमिति भावः। अथ सत्तासम्बन्धात् प्रागुत्पन्नमात्रघटादिद्रव्यमभूतत्वात् सदसदपि सत्तासम्बन्धाच्च पश्चात् सद्भवतु को दोषः? इत्याशङ्कते–**नन्वेवमिति**, अर्थक्रियाकरणसमर्थं हि

१ सि. क. सभोनिरुपाख्यत्वा०। २ सि. क. °रत्यन्ता०। ३ सि. क. प्रत्ता। ४ सि. क. °स्ये०। ५ सि. क. त्वसत्यपि। ६ डा० °सत्त्वं नास्ति उपपत्तेरेव सत्त्वं सिद्धम्।

**तदभूतत्वं तत् किं भूतस्य द्रव्यादेः ? अभूतस्य वा ? यदि भूतस्य तदेव भूतं वस्त्वात्मना, तदेव चाभूतमव्यवहारात्मनेति सदसत्त्वविरोधो नेति सदसदैकात्म्यापत्तिरेव, अथाभूतत्वमिष्यते ततो द्रव्यादेरभावहेतुर्वाच्यः, केन हेतुना तदभूतं कार्यं स्वकारणेषु समवेतम् ? अहेतुतो भवने हि क्षणिकशून्यतादिव्युत्पत्तिवदभाव एव, न चेत् पूर्ववदसदुक्तसदसदैकात्म्योपपत्तिरेव प्राप्नोति ।**

( **नन्वेवमिति** ) नन्वेवं तदव्यवहृते[:] प्रागभावभेदाभाववदभूतत्वमेव—यथा तस्योत्पन्नमात्रघटद्रव्यादेः प्राक् कुसूलकोशस्थासकशिवकपिण्डमृदवस्थाभिरभावभेदैः जलाद्याहरणादिव्यवहारो नास्तीति तत्र घटासत्त्वं तथा तदव्यवहृतेरभूतत्वमेवं प्राक् सत्तासम्बन्धात् सदसदात्मकस्य कार्यस्य, को दोषः ? इति, अत्रेदं सम्प्रधार्यम्, अथ यदेतदभूतत्वमित्यादिविकल्पद्वयोपन्यासेन प्रश्नो गतार्थः, तत्रोत्तरम्—यदि भूतस्य द्रव्यादेरुत्पन्नमात्रस्याव्यवहारादभूतत्वमिष्यते तदेव भूतं वस्त्वात्मना, तदेव चाभूतमव्यवहारात्मनेत्यतः सत्त्वासत्त्वविरोधो नेति सदसदैकात्म्यापत्तिरेव, अथाभ्युपगमविरुद्धमैकात्म्यं मा भूदित्यभूतत्वमिष्यते ततो द्रव्यादेरभावहेतुर्वाच्यः कार्यस्य केन हेतुना तदभूतं कार्यं स्वकारणेषु समवेतमुत्पन्नमात्रमसदुक्ताविरोधहेतुकमव्यवहारयोग्यत्वात् सदसदित्येतं मुक्त्वा, स्यान्मतमहेतुत एवाभूतं, तदभावे कारणाभावात्, खपुष्पादिवदित्येतच्चायुक्तम्, यस्मात्—अहेतुतो भवने—निष्कारणता, [तया]असत्त्वे क्षणिकशून्यतादिव्युत्पत्तिवदभाव एव, स्यादिति वाक्यशेषः, यथा पूर्ववस्तुनि निरुद्धे पश्चादुत्तरमुत्पद्यमानं निर्हेतुकमिति प्राप्तं क्षणि-

---

भूतमुच्यते, तथा च यथा घटोत्पत्तिप्राक्काले कुसूलावस्थातो यावन्मृदवस्थं घटसाध्यार्थक्रियाव्यवहारादेरभावात् घटोऽसदुच्यते तथा सत्तासम्बन्धप्राक्कालीनमुत्पन्नमात्रं घटादिद्रव्यमपि घटसाध्यव्यवहारजलाहरणाद्यभावादभूतमेव तदिति भावः । व्याख्यां कर्तुं मूलमुद्धरति—**नन्वेवमिति** तदव्यवहृते—घटादिविषयव्यवहाराभावादित्यर्थः, विचित्रव्यवहारफलको हि विविधभावाभ्युपगम इति भावः । **प्रागिति** घटोत्पत्तिप्राक्कालीनोपादाने योऽयं घटो नास्तीति व्यवहारविषयोऽभावः स घटप्रागभाव उच्यते, स चोपादानस्वरूप एवेति मृद आरभ्य कुसूलं यावदवस्थाभेदा घटाभावभेदा एव, तैर्जलाहरणादिव्यवहाराभावात् घटाभावः—ता अवस्था न घटभूतास्तद्वदित्यर्थः, प्राग्भेदभावाभेदवदिति पाठे तु घटोत्पत्तेः प्राक् मृद आरभ्य कुसूलं यावत् ये भेदभावाः—अवस्थाविशेषाः तेऽभेदाः—भेदलक्षणघटरूपा न भवन्ति, न घटभूता इति भावः । एवमेव व्याचष्टे—**यथेति**, तस्येतिपदं तदव्यवहृतेरिति पदघटकं तस्य प्रागभावभेदैः व्यवहारो नास्तीति तत्र घटासत्त्वं—अभावभेदेषु घटाभावः घटोऽभूतस्तथा सत्तासम्बन्धप्राक्कालीनं घटादिकार्यमिति भावः । समाधातुमिदं विकल्पयति—**अत्रेदमिति**, अभूतत्वं भावधर्मोऽभावधर्मो वेति विकल्पतात्पर्यम् । तत्र यदि भावधर्मत्वं तर्ह्युत्पन्नमात्रावस्थद्रव्यस्यैव व्यवहाराविषयत्वलक्षणमभूतत्वं सम्भवेत्, तथा च सति एकस्यैव द्रव्यादेर्वस्तुस्वरूपेण भूतत्वमव्यवहारात्मना चाभूतत्वं प्राप्तं, तथा च भूतत्वाभूतत्वयोर्यथैकत्राविरोधः, उभयैकात्म च द्रव्यं तथा सत्त्वासत्त्वयोरेकत्र न विरोध इति सदसदैकात्म्यापत्तिः स्यादित्याशयेन प्रथमविकल्पं दूषयति—**यदि भूतस्येति** । द्वितीयविकल्पं निराकरोति—**अथाऽभ्युपगमेति** कारणेषु कार्यद्रव्यादि उत्पन्नमप्यभावतया केन हेतुना समवैति, भावरूपेण च कुतो न समवैतीति वक्तव्यं भवता, न हि तत्तदानीं स्वरूपतः सदपि व्यवहाराविषयत्वेनासदिति सदसदैकात्म्यमविरुद्धं स्वीक्रियते भवतेति भावः, तस्य तदानीमभावरूपतया समवयने न किञ्चित् कारणं पश्याम इति तात्पर्यम् । अथ कारणं विनैवाभावरूपेणोत्पद्यते कार्यम्, किं कारणमपेक्ष्यमित्याशङ्कते—**स्यान्मतमिति** । नन्वेवं कारणव्यतिरेकेण तथाभवने तस्य निर्हेतुकत्वात् क्षणिकवादस्य शून्यवादस्य वा प्रसक्तिः, तथा च कार्यस्यैवाभावः स्यादिति भावः । इदमेव परिष्करोति—**यथेति** यथा हि क्षणिकवादिमते सन्मात्रस्य क्षणिक-

---

१ सि. क. क्ष. छा० प्रागभेदभावभेदवद् मू० डे० प्रागभेदभावाभेदवद् मू० । २ सि. क. सत्त्वासत्त्वाविरोधेनेति । ३ छा० स्यान्मतं न डे० ।

कवादित्वम्, तस्मादुत्पन्नस्याहेतु[त]एव विनाशसम्भवात्, तस्याद्रव्यत्वान्निर्बीजत्वात् खपुष्पवदत्यन्ताभावः स्यात् तथेदमपि स्यात्, अनिष्टश्चैतत्, यथा वाऽसिद्धव्युत्पत्त्यनुत्पत्तिसामग्रीदर्शनादर्शनादिव्युत्पत्त्या सर्वं शून्यं निर्हेतुकोत्पत्तिस्थितिविनाशाभावसाधर्म्यात् खपुष्पवत् स्यात्, आदिग्रहणात् प्रतीत्योत्पादसमुदायसन्तानादिसंवृतिव्युत्पत्तिवत्, न चेत् पूर्ववदिति, मा भूदेषोऽत्यन्ताभावदोष इति सहेतुककार्याभूतत्वाभ्युपगमे अस्मदुक्तसदसदैकात्म्योपपत्तिरेव प्राप्नोति, एवं तावत् प्राक् सत्तासम्बन्धात्[सद]सत्कार्यमिति प्रतिपादितम्।

किञ्चान्यत्—

**तिष्ठतु तावत् प्राक् सत्तया सम्बन्धात् कार्यस्य सदसत्त्वम्, यदापि स्वसत्तया सम्बद्धं तदापि सदसत् त्वन्मतेनैव, यत्तत्कार्यं सत्तया सम्बद्धं सदित्यभिधीयते दण्डविशिष्टदेवदत्तवत् न च सत्तया, न हि दण्डसम्बन्धेन देवदत्तोऽसन् सन् क्रियते, सत्ताऽपि न वस्तुसत्तयाऽसती सती क्रियते, आश्रयप्रतिलम्भात्मन्येवाभिव्यज्यते तदुभयम्, कारणकार्याकारणकार्यनित्यानित्यसम्बन्ध्यसम्बन्धिजातिजातिमद्भेदेभ्यो द्रव्यसत्तयोर्भेदात्, तन्तुसमवायवदितरेतराभावादिवर्णनैश्च ।**

(**तिष्ठतु तावदिति**) तिष्ठतु तावत् प्राक् सत्तया सम्बन्धा[त्] कार्यस्य सदसत्त्वम्, यदापि सत्तया सम्बद्धं तदापि सदसत् त्वन्मतेनैव, तद्यथा यत्तत् कार्यं सत्तया सम्बद्धं सदित्यभिधीयते सत्तया विशेष[ण]भूतया विशेष्यते दण्डेनेव दण्डी विशेष्यत्वात्, न तु तत्, स्वसत्तयैव सल्लब्धात्मलाभमेव, दण्डविशिष्टदेवदत्तवत्, न च सत्तया, न हि दण्डसम्बन्धेन देवदत्तोऽसन् सन क्रियते, किं तर्हि ? सन्नेव

तया द्वितीयक्षणकारणतयाऽभ्युपगते प्रथमक्षणे स्वत एव निरुद्धे जायमानो द्वितीयक्षणो निर्हेतुक एव सम्पन्नस्तदानीं कारणत्वेनाभिमतस्य प्रथमक्षणस्याभावात्, विनाशस्यापि स्वत एव सम्भवाच्च, तथा कारणे. कार्ये उत्पन्ने कारणे चरितार्थत्वेन निरुद्धे कार्यस्याभावरूपता निर्हेतुका, पुन सत्तासम्बन्धकाले चाहेतुत एवाभावरूपताया निवृत्तिरिति क्षणिकवादतेति भावः। तत्र दोषमाविष्करोति–**तस्याद्रव्यत्वादिति** द्रव्यं सामान्यमाश्रय इति पर्यायाः, तद्यस्य नास्ति तदद्रव्य तस्य भावस्तस्मादित्यर्थः, निर्बीजत्वात्–निष्कारणत्वात् अभाव एव स्यादिति पूर्वोक्तवद्व्याख्येयम्। शून्यवादो वा प्रसक्त इत्याह–**यथा वेति,** यथा शून्यवादिनो वदन्ति वस्तुस्वभावो विचार्यमाणो हेतुतोऽहेतुतो वा भवेत्, यदि स हेतुतस्तर्हि स्वतः परत उभयतो वा स्यात्, तत्र स स्वभावो न स्वतो न परतो न वा द्वाभ्या भवितुमर्हति, असिद्धव्युत्पत्त्यनुत्पत्तिसामग्रीदर्शनादर्शनाभ्यः, नाप्यहेतुत इति सर्वशून्यतायास्तैर्व्यवस्थापितत्वात् तद्वत्ते कार्यमपि स्यादिति भावः। व्युत्पत्तिर्युक्ति, हेतूनां व्याख्या अग्रे स्फुटीभविष्यति। क्षणिकशून्यतादिव्युत्पत्तिवदितिदृष्टान्तप्रदर्शने किं साधर्म्यमित्यत्राह–**निर्हेतुकेति** । दृष्टान्ते आदिग्रहणप्राह्यानाह–**प्रतीत्योत्पादेति** । कार्यस्याभूतत्वं सहेतुकञ्चेत् सदसदैकात्म्योपपत्तिस्ते प्राप्नोतीत्याह–**न चेदिति** । अथ सत्तासम्बद्धमपि कार्यं सदसदेवेति साधयितुं प्रक्रमते–**तिष्ठतु तावदिति । यदापीति,** सत्तासम्बन्धकालावच्छेदेनेत्यर्थ । **यत्तदिति,** यथा विशेषणेन दण्डेन दण्डी विशिष्यते तथा सत्तया विशेषणेन विशेष्यमाणं कार्यं न सत्तया सत् क्रियते, किन्तूत्पन्नं स्वसत्तयैव सद्भवतीति भावः । अत्रार्थे दृष्टान्तमाह–**दण्डविशिष्टेति** । दृष्टान्ते सदसत्त्वं घटयति–**न हीति,** देवदत्तो न हि दण्डेन सद्रूपं लभते, किन्तु दण्डो देवदत्तस्य दण्डित्वव्यपदेशमेव केवलं कारयति देवदत्तस्तु लब्धात्मलाभ एव स्वसत्तया सन, अन्यसत्तया चासन्निति सदसद्रूप इति भावः। दार्ष्टान्तिके कार्ये सद-

१ सि. क. वितासामंसतान् । २ सि. क. तथाद्र. । ३ सि. डे. दर्शनादि० । ४ सि. क. सदापि । ५ क. क्ष. म सत्वासत्तया ।

दण्डित्वव्यपदेशभाग्भवति, स्वसत्तया स[न्] दण्डिसत्तया चासंस्तदेति सदसत्, तथा सत्कार्यं सत्तासम्बन्धकाले सदेव स्वसत्तया खपुष्पाद्यवस्तुवैधर्म्यात्, तथा सत्तापि न वस्तुसत्तयाऽसती सती क्रियते, किं तर्हि ? आश्रयप्रतिलम्भात्मन्येवाभिव्यज्यते तदुभयम्, वस्तुसत्तया सदेव सत्तादि द्रव्यादि च सम्बन्धिसत्तया नास्तीत्यर्थः, कुतः ? कारणकार्येत्यादिहेतोर्योवद्भेदादिति, द्रव्यादि वस्तु कार्यं कारणञ्च, सत्ता त्वकार्यमकारणञ्च, नित्या सत्ता, द्रव्याद्यनित्यम्, सम्बन्धि द्रव्यादि, सत्ताऽसम्बन्धिनी, जातिमद्द्रव्यादि, अजातिः सत्तेत्येतेभ्यो भेदेभ्यो भिन्नत्वात्, तन्तुसमवायवत्—यथा तन्तवः कारणादिधर्माणः तथा द्रव्यादयः, यथा समवायोऽकारणादिधर्मो तथा सत्तेति, दृष्टान्तदार्ष्टान्तिकयोश्च सदसत्त्वयोजना स्वभावसम्बन्धसत्ताभ्यां कर्त्तव्या, तस्मात् सदसदैकात्म्योपपत्तिरेव, किञ्चान्यत्- इतरेतराभावादिवर्णनैश्च त्वयैव सर्वत्र सदसदैकात्म्योपवर्णनमेव कृतमिति वाक्यशेषः, 'सच्चासत्' ( वै० अ० ९ आ० १ सू० ४ ) इतीतरेतराभाववर्णनम्, घटः सन्नेव स्वात्मना पटाद्यात्मना नास्तीति तथा क्रियागुणव्यपदेशाभावात् [प्राग]-सत्, ( वै० अ० ९ आ० १ सू० ) इति, 'असदिति भूतप्रत्यक्षत्वा[भावा]द्भूतस्मृतेर्विरोधिप्रत्यक्षवत्' ( वै० अ० ९ आ० १ सू० ) 'तथा भावेऽभावप्रत्यक्षत्वाच्च' ( वै० अ० ९ आ० १ सू० ७ ) इति च प्रागभावप्रध्वंसाभाववर्णनञ्च सर्वत्र सदसत्त्वमेव वर्णितमेकमत्यन्ताभावं मुक्त्वा, शशविषाणवदेकान्तनिरात्मकत्वानभ्युपगमादिति ।

अथेदं जैनेन्द्रत्वमेव प्रतिपद्य बहुधा प्रज्ञाप्य च मा भूदृजुजनेषु जैनानामेव गौरवं मम

---

सद्रूपतामाह-**तथेति** । सत्ताया सदसद्रूपतामाह-**सत्तापीति** स्वसद्भावरहिता सत्ता न केनापि सती क्रियत इति भावः । सदसत्त्वं प्रकाशयति-**आश्रयेति** सत्ताऽऽश्रयभूतद्रव्यादिप्रतिलम्भादेव सदसत्तया प्रकाशते, द्रव्यादि च कारणसामग्रीविशेषलक्षणाश्रयेण आत्मप्रतिलम्भादेव सदसत्तया प्रकाशते नान्येन केनचिदिति भावः । तदुभयप्रकाशनप्रकारमाह-**वस्तुसत्तयेति** । कुतः सम्बन्धिसत्तया नास्तीत्यत्र सत्ताद्रव्यादीनां वैलक्षण्यादत्यन्तभिन्नत्वेन परस्परसम्बन्धाभाव इत्याशयेनाह-**कारणकार्येत्यादि** । दृष्टान्तमाह,-**तन्तुसमवायवदिति** । दृष्टान्तदार्ष्टान्तिकयो हेतुं प्रदर्श्य साध्ययोजनामाह-**दृष्टान्तेति** । अन्योन्याभावप्रागभावप्रध्वंसाभावान् वर्णयद्भिर्भवद्भिः सदसदैकात्म्यस्यैव वर्णनं कृतमित्याह-**इतरेतरेति,** सच्चासदित्यादि वैशेषिकसूत्राण्यत्रार्थे प्रमाणत्वेनोपन्यस्यति-**सच्चासदिति,** सदेव घटादि असदिति व्यवहारविषयश्चेत्तदा सोऽयमभावोऽन्योऽन्याभाव उच्यते, यथाऽसन् गौरश्वात्मना, असन् घटः पटात्मनेत्यादि सूत्रार्थः न हि पटो गौर्वा घटोऽश्वो वेति नञा तादात्म्यनिषेधः क्रियते, एवञ्च सदेवान्यात्मनाऽसदित्युक्तम्भवतीति भावः । प्रागभावप्रदर्शकं सूत्रमादर्शयति-**क्रियेति,** प्राक्-कार्योत्पत्तेः पूर्वकाले कार्यमसत्, क्रियागुणव्यपदेशाभावात्, अनेन सूत्रेण प्राक्कालावच्छेदेनासत्त्वमुत्पत्त्यादिकालावच्छेदेन सत्त्वं कार्यस्योक्तं भवति, ततश्च सदसदात्मकत्वं कार्यद्रव्यादेः प्रकाशितमिति भावः । प्रध्वंसाभावप्रकाशकं सूत्रमाह-**असदितीति,** असन् घट इति प्रत्यक्षात् घटे प्रध्वंसाभावात्मकोऽभावः प्रकाशितः, इदानीं भूतस्य-उत्पन्नस्य घटादेः प्रत्यक्षाभावात् भूतस्य प्रतियोगिनो घटादेः स्मृतेः घटध्वंसः प्रत्यक्षीक्रियते यथा विरोधिनः-ध्वंसादिविरोधिनो घटादेः प्रत्यक्षं भवति तथेति सूत्रार्थः । एवमभावत्रयमवलम्ब्य वस्तुनः सदसदैकात्म्यं वर्णितम्, न त्वत्यन्ताभावमवलंब्य, तत्र कारणमाह-**एकमत्यन्ताभावमिति** यदि घटादि वस्तु अत्यन्तमभावस्वरूपं निखिलधर्मप्रतियोगिकाभावरूपं भवेत्तर्हि शशविषाणादिवन्निरात्मकत्वादवस्त्वेव भवेत्, तस्मात्तत्परिहारेणैव सदसदात्मकं वस्त्विति भावः । तदेवं सदसदैकात्म्योपवर्णनेन जैनेन्द्रत्वमभ्युपगम्यापि निरूप्यापि च छलं करोषीत्याशयेनाह **अथेदमिति** । जिनेन्द्रसम्मतत्वं वस्तुनोऽनेका-

---

१ सि. क. क्ष डे °द्रो ।

**च लाघवमिति त्वयैवं नानाऽविविक्तप्रज्ञाः प्रतिसंभ्रियन्ते, विगृह्यन्ते वा, नाहं जैनेन्द्रत्व-मभ्युपैमि, न चाविविक्तप्रज्ञान् प्रतिसंवृणोमि, न तु विगृह्यैवात्र वादः, स तु सिद्धार्थसुत-मतावलम्बिनं त्वामेवोद्दिश्य, यदुच्यते सैद्धार्थीयैरुपादाननियमदर्शनात् सत् कार्यम्, तिल-वत्, तत्क्रियाद्यसत्त्वदर्शनादसत्, वीरणेष्विव घटो मृद्यपि, दृष्टा तु क्रिया, उपादाननियमश्च तथाऽनिच्छतोऽविशेषः, उपादानमेवानुपादानमेव वा, लब्धात्मपदार्थकारकव्यापाराभाववत् प्रागपि व्यापाराभावश्च, उभयैकान्ते दोषदर्शनात् ।**

( **अथेदमिति** ) अथेदं जैनेन्द्रत्वमेव सदसत्त्वादित्वं प्रतिपद्य बहुधा प्रज्ञाप्य च मा भूदृजुज-नेषु—अविविक्तप्रज्ञेषु जैनानामेव गौरवं तत्त्वज्ञा इति, मम च लाघवं अतत्त्वज्ञ इति, त्वयैवं नान[ा]वि-विक्तप्रज्ञाः प्रतिसंभ्रियन्ते [वि]गृह्यन्ते, अत्राह नाहं जैनेन्द्रत्वमभ्युपैमि, न चाविविक्तप्रज्ञान् प्रतिसंवृणोमि, न तु मया विगृह्यैवात्र वादः, सदसतोर्वैधर्म्यात्, कार्ये सदसत्ता नेत्यनेन सूत्रेण, स पुनर्वादः सिद्धार्थ-सुतमतावलम्बिनं सदसदेका[त्मकत्व]वादिनं त्वामेवोद्दिश्य, यदुच्यत इत्यादि सैद्धार्थीयमतप्रदर्शनार्थः पूर्वपक्षः, ते हि सैद्धार्थीयाः सदसदेकात्मकत्वं वस्तुनोऽभिलषन्त इत्थमुपपत्तिं ब्रूयुः, तद्यथा—उपादान-नियमदर्शनात् सत् कार्यम्, तिलवत्, तत्क्रियाद्यसत्त्वदर्शनादसत्, वीरणेष्विव घटो मृद्यपीति, इतरथाऽ-त्यन्तासत्कार्यवादे न स्यादुपादाननियमः खपुष्पस्येव, अत्यन्तसति च तन्त्ववस्थायामेव पटे पटार्थो कुविन्दस्य क्रिया न स्यात्, उपादाननियमतदर्थव्यापारौ सदसत्त्वे कार्यस्य हेतू, दृष्टा त्वित्यादिना समर्थयत्यनिष्टञ्चापादयति, तथाऽनिच्छतः तन्तुपाश्वादिष्वविशेषः स्यादुपादानमेवानुपादानमेव वा, लब्धात्म-पदार्थकारकव्यापाराभाववत् प्रागपि व्यापाराभावः स्यादिति च यथासंख्यं निगमयति, यथासम्भवं

न्तात्मतेति दर्शयति—**जैनेन्द्रत्वमेवेति । मा भूदिति,** आर्हतानां तव च क्रमेण तत्त्वज्ञत्वातत्त्वज्ञत्वप्रख्याति सरलमतिषु मा भूदिति अस्मद्दर्शनेऽपि सदसदैकात्म्यं वस्तुनोऽभ्युपगतमेवेति वदता त्वया ते सरलमतयो गृह्यन्त इति भाव. । पूर्वपक्षी सर्वमिदम-नभ्युपगच्छन् सदसदेकात्मकत्ववादिनं बौद्धमुद्दिश्य मदीयो वाद , नाहं सदसदेकात्मकत्वमभ्युपगच्छामि, तयोर्विरोधात् कार्ये सदसत्ता नेति वचनाच्चेत्याह—**अत्राहेति । बौद्धमतमुपन्यस्यति—ते हीति** यथा लोके तैलार्थी तिलमेव सिकतादिपरिहारेणोपादत्ते घटार्थी तन्त्वादिपरिहारेण मृदमेव, पटार्थी मृदादिपरिहारेण तन्त्वाद्येव, नायं नियम प्रतिनियतोपादानग्रहणं तत्र कार्यसत्त्वव्यतिरेकेण सम्भवति, तस्मात तत्र कार्य सत्, तथा यदि तत्र कार्ये सदेवाविर्भूते घटे यथाऽर्थक्रियादि दृश्यते तथा प्रागपि दृश्येत, न चैवं दृश्यते वीरणादौ घटाद्यर्थक्रिया, तस्मात् वीरणादौ घटादेरसत्त्ववत् मृदादावपि घटाद्यसदपीति सदसत्त्वं कार्यस्येति भाव. । उपा-दानेऽत्यन्तं कार्यस्य सत्त्वेऽसत्त्वे वा दोषं दर्शयति—**इतरथेति** कारणे कार्यस्यात्यन्तासत्त्वञ्च कार्यनिष्ठधर्माननुविधायित्वम्, तन्नि-ष्ठान्यतरधर्माननुविधायित्वे तन्तुवत् पाश्वाद्यप्युपादानं स्यादविशेषात्, तन्निष्ठसर्वधर्मानुविधायित्वे वा तन्त्ववस्थाया पटार्थिनः कुविन्दस्य प्रवृत्तिर्न स्यात् पटावस्थायामिव, तस्मात् कारणे कार्यं सदसत , उपादाननियमतदर्थव्यापाराभ्यामिति भावः । उपादाननियमतदर्थव्यापा-रयोर्दृष्टत्वात् साध्याभावाभ्युपगमे चाविशेषताया उपादानताया अनुपादानताया वा तदर्थिप्रवृत्त्यनुदयस्य च दोषस्य प्रसञ्जनात् सदसत्त्व-प्रतिबद्धत्वमुपादाननियमतदर्थव्यापारलक्षणहेतो सिद्धमित्याशयेनाह—**दृष्टा त्विति । लब्धात्मेति** कार्यस्वरूप निष्पत्त्यनन्तरं कार्यस्य सत्त्वेन यथा तदर्थिप्रवृत्त्यभावस्तथा तत्प्रागपि कार्यस्य सत्त्वेनाविशेषात्तदभाव. स्यादिति भाव । एवं दृष्टा त्विति ग्रन्थक्रमेण दोषा उपसंहार्या इत्याह—**यथासंख्यमिति ।** मूलकृद्भिस्तु यथासम्भवं दोषा निगम्यन्त इत्याशयेनोक्तं—**यथासम्भवमिति । सदस-**

१ सि. क. °ज्ञात् । २ सि. क. °संभ्रियते । ३ सि. क. °ते । ४ सि. क °णोष्विवघटो० । ५ सि. क. °मेव । ६ सि. क. क्ष. डे. दृष्टात्वादित्या० ।

दृष्टा तु क्रियेत्यादि, उभयैकान्ते दोषदर्शनादिति, सदेवाऽसदेव वेत्येकान्ते, सदेवासदेव चेति वा युक्त एकान्तः सदसदात्मकत्वात् कार्यस्य सत्पक्षमाश्रित्योपादाननियमो युक्तः, असत्पक्षमाश्रित्य क्रिया युक्तेति।

यदेतत्सैद्धार्थीयं मतं—

**तन्न विकल्पानुपपत्तेः, सदेवासत् सदसत्............ ............ स्वेनैवात्मना सच्च असच्चान्येनात्मना प्रागुत्पत्तेः घटो मृदात्मना सत् घटात्मना चासत्, न तावत् ... ........ ...............असत्त्वप्रतिपक्षञ्च सत्त्वम्,...सत् सोपाख्यमसन्निरुपाख्यम्,... .............सदसत्त्वं न भवतीत्यर्थः।**

**तन्न, विकल्पानुपपत्तेरित्यादि**, सदेवासत् सदसदित्यादि प्रत्युच्चारणं संक्षेपेण विकल्पद्वयेन सोपपत्तिकं स्वेनैवात्मना सच्च, असच्चान्येनात्मनेत्यादि[1] यावत् घटात्मना चासदिति, न तावदित्यादि, प्रथमं तावद्विकल्पं व्यवस्थाप्य सूत्रेण दूषणमाह सव्याख्यानं सो[प]वर्णनं यावदसत्त्वप्रतिपक्षञ्च सत्त्वमिति गतार्थम्, सतोऽसता विरोधः प्रातिपक्ष्यं वैधर्म्यमेव हेतुः, मा मंस्थाः सोऽसिद्ध इति अतस्तत्प्रदर्शनार्थमाह सत् सोपाख्यमित्यादि वैधर्म्यस्फुटीकरणं यावत् सदसत्त्वं न भवतीत्यर्थ इति सुव्याख्यातम्।

अत्राऽऽचार्य उत्तरमाह—

**अत्र तूपादानसतोऽसत्प्रतिपक्षत्वमसिद्धम्, तदङ्गत्वात् तदात्मकत्वात्, तत्प्रवृत्तित्वाच्च, घटोर्ध्वग्रीवादित्ववत्, तदङ्गत्वस्य भवत्सत् भवतीति, भवनञ्चाभावानुविद्धम्।**

**( अत्रेति )** अत्र तूपादानसतोऽसत्प्रतिपक्षत्वं विरोधो वैधर्म्यमसिद्धम्, कुतः? तदङ्गत्वा[त्,] अंगमवयवः, तदेकदेशः, यद्यस्याङ्गं स तस्य प्रतिपक्षो न भवति, यथा घटस्योर्ध्वग्रीवादित्वमिति, इतश्च

---

रयोर्मध्ये प्रत्येकमेकान्ते दोषदर्शनादित्याशयेन व्याचष्टे–**सदेवेति**। स्वस्वीकृतिमाविष्करोति–**सदेवासदेव चेतीति** सदसत्त्वयोः समुच्चयैकान्तो युक्त इति भाव.। इत्थं सैद्धार्थीयं सदसत्त्वमुपदर्श्य तत्र विकल्पानुपपत्तेर्निराक्रियते–**तन्नेति**, अत्र टीकाकृद्भिर्मूलस्य गतार्थीकरणात् वयमप्यत्रानुपाया: स्म इति चिन्त्यम्, अत्र वैशेषिकेण सदसतो. नैकत्र सम्भव, सत्त्वासत्त्वयो. प्रातिपक्ष्यादिति यदुक्तं तद्व्याख्यानयति–**सतोऽसतेति**, विरोध. असमानाधिकरणत्वम्, प्रातिपक्ष्य वैधर्म्य तत्प्रतियोगिकाभावरूपत्वम्, तथा चासत्त्वं सत्त्वासमानाधिकरणम् तदभावरूपत्वात्, ययो. प्रतिपक्षता न तयो समानाधिकरणता, यथा घटतदभावयोः, प्रतिपक्षभूते च सदसत्त्वे, तस्मादसमानाधिकरणे इति भाव.। ननु सत्त्वासत्त्वयोः प्रातिपक्ष्यमसिद्धमित्याशङ्क्य समाधत्ते–**मा मंस्था इति** उप–सामीप्येन, सामीप्यञ्चाव्याप्त्यतिव्याप्त्यादिदोषविनिर्मुक्तता, आख्या–अभिधानं तत्सहितं वस्तु सोपाख्यमुच्यते, तद्रहितन्तु निरुपाख्यं वस्तूच्यते, न ह्यसत्त्वलक्षणोऽभावोऽव्याप्त्यतिव्याप्त्यादिपरिहारेण यथावच्छब्देन निर्देष्टुं शक्य इति निरुपाख्यम्, तच्च सोपाख्यत्वेन लक्षिताद्विरुद्धमेवेति, अत एव प्राक् कार्यं यदि सच्चासद्भवितुमर्हति, यद्यसत् न सद्भवितुमर्हति, ततश्च नैकं सदसदिति भावः। अथ सतोऽसत्प्रतिपक्षत्वमसिद्धम्, अभावस्य भावाङ्गत्वात्, भावात्मत्वात्, भावप्रवृत्तिकत्वाच्चेति समाधत्ते–**अत्र त्विति**। सत् पक्षः, असत्प्रतिपक्षत्वं साध्यम्, तदङ्गत्वादयो हेतव, तदङ्गं यस्येति बहुव्रीहि:, एवं हेतुद्वयेऽपि। मृत्पिण्डादिरूपोपादानभूतो भाव एव मृत्पिण्डाभावरूपशिवकाद्यात्मना भवति यतस्तस्मान्नासत्प्रतिपक्षत्वं सत इत्याशयेनाह–**अत्र तूपादानसत इति**। वस्तुनः सदसदात्मकत्वात् सदसतोः परस्परमङ्गाङ्गिभाव., यथा घटस्योर्ध्वग्रीवादित्वमङ्गं घटोऽङ्गी तस्माच्च परस्पराङ्गाङ्गिनोः प्रतिपक्षत्वमित्याह–**तदङ्गत्वादिति** भावाङ्गत्वादित्यर्थ। तन्तुपटाद्यवयवावयविभावापेक्षयाऽवयव इति, आत्माऽऽ-

---

१ सि. क. °त्मसदिति। २ सि. क. त्वत्सादान०।

प्रतिपक्षो न भवति, तदात्मकत्वात्—स आत्माऽस्य भावस्य, अस्याभाव आत्मा, तद्भावात् तदात्मकत्वात् घटोर्द्ध्वग्रीवादित्ववदेव, इतश्च तत्प्रवृत्तित्वात्—स एवाभावो यस्य सतः प्रवृत्तिः, तेनाभावरूपेण भावः प्रवर्त्तत इत्यर्थः, एक एव भावाभावरूपेणार्थो घटवन्मृत्पिण्डशिवकादिरूपादि[युगपद]युगपद्भाविधर्म-भावाभावप्रवृत्तिरिति, अथवा अङ्गमात्मा, आत्मा च प्रवृत्तिरित्येकार्थमेवेति व्याख्यानं तदङ्गत्वस्य भवत् सद्भवतीति, सत्त्वं नाम भवत एव, नाभवतः, भवनञ्च कीदृशं ? अभावानुविद्धमिति ।

तद्दर्शयति—

**प्रत्येकवस्तुस्वरूपप्रतिपत्त्यर्थतदतत्प्रवृत्तिव्यावृत्तिसदसदात्मकः स्वतोऽत्यन्ताविभक्त-वृत्तिपर्यनुभवनात्मकत्वादभूतखपुष्पविलक्षणः अर्थान्तरभूतक्षणभङ्गविलक्षणश्च अतीतानाग-तवर्त्तमानभिन्नभवनसदसदेकक्रियः, तस्मादभावो भावाङ्गं भावात्मा भावप्रवृत्तिरेव, आकाश-वदितोऽपीतोऽपीति ।**

**प्रत्येकवस्त्वित्यादि** दण्डको यावत्सदसदात्मकः, एकमेकं प्रति प्रत्येकं वस्तुनः स्वरूपं प्रतिपत्तुं प्रत्येकवस्तुस्वरूपप्रतिपत्त्यर्थं तत्प्रवृत्तं घटाख्यं शिवकादिव्यावृत्तं पटादिव्यावृत्तञ्च, तस्मात्तदेव घटाख्यं घटात्मना प्रवृत्तं भवति, पटशिवकाद्यात्मना व्यावृत्तञ्च भवति, अतः सदसदात्मकः, तस्मादभावो भावाङ्गं भावात्मा भावप्रवृत्तिरेव, एवं तावद्युगपद्भाविरूपादिभावेनापि भवन् स घटो नाभावेन स्वाङ्गात्मप्रवृत्तिस्वरूपेण विना भवतीत्युक्तं द्रव्यक्षेत्रापेक्षम्, कालभावापेक्षमप्युच्यते स एव च भविता

काशाद्यपेक्षयैकदेश इति भेदाश्रयेणेदम्, अभेदाश्रयेणाह—**तदात्मत्वादिति**, अभव सदात्मत्वादित्यर्थः । उत्पत्तिस्थितिविना-शरूपाः सर्वाः प्रवृत्तयो भावात्मानो भावस्यैव, न ह्याविर्भावतिरोभावलक्षणप्रवृत्तिमन्तरेण क्षणमात्रमपि वस्त्ववस्थातुमुत्सहत इत्य-भावलक्षणा प्रवृत्तिर्भावस्यैवेत्याशयेनाह—**तत्प्रवृत्तित्वादिति** । एक एव स्थितिलक्षणोऽर्थ आविर्भावतिरोभावरूपेणोत्पादविना-शरूपेण वा युगपदयुगपद्भाविधर्मैः सततं प्रवर्त्तते, यथा स्थितिलक्षणा मृत् पिण्डशिवकस्थासककोशकुसूलघटादिरूपायुगपद्भाविधर्मैः रूपरसादियुगपद्भाविधर्मैश्चाविर्भावतिरोभावलक्षणभावाभावात्मना सततं प्रवर्त्तत इत्याशयेनाह—**एक एवेति** । अङ्गिनोऽङ्गमात्मैव, तदभावेऽङ्गिरूपताया एवाभावप्रसङ्गात्, आत्मैव च प्रवृत्तिः, निरात्मकस्य प्रवृत्त्यसम्भवादित्याशयेन तेषां शब्दानां पर्यायत्वमाह—**अथ वेति** । प्रतिकल्पमङ्गं आत्मानं प्रवृत्तिं वाऽन्तरा वस्तु नैव भवितुमर्हति, भाव एव च वस्तु सद्भवतीत्याह—**तदङ्गमिति** । एकाङ्गभवनमपराङ्गतिरोधानव्यतिरेकेण नैव सम्भवतीति भवनमभावानुविद्धमेवेत्याह—**भवनञ्चेति** । अभावस्य भावाङ्गत्वादि व्यापयति—**प्रत्येकेति** । द्रव्यक्षेत्रकालभावापेक्षया प्रत्येकं वस्तु सदसदात्मकमिति प्रतिपादयितुमादौ द्रव्यक्षेत्रापेक्षया निरूपयति—**एकमेकं प्रतीति** प्रत्येकव्यक्त्यवच्छेदेन वस्तुतत्त्वविषयनिर्णयायेत्यर्थः, घटादिवस्तु स्वस्वरूपेण प्रवृत्तत्वात् सदात्मकं स्वेतररूपेण शिवकादिना सजातीयेन पटादिना च विजातीयेन व्यावृत्तत्वादसदात्मकमिति तदतत्प्रवृत्तिव्यावृत्तिसदसदात्मकं विज्ञेयम्, पटादि-शिवकादिभिर्यदि घटाख्यं वस्तु व्यावृत्तं न भवेत्, पटादिशिवकादिरेव तद्भवेत्, तद्विजातीयतया न प्रतीयेत, इति व्यावृत्तेन तेन भाव्यमतोऽभावः पटशिवकादीनां घटादिवस्तुनोऽङ्गमात्मा तस्यैव प्रवृत्तिविशेषः, यदि च तत् व्यावृत्तिरूपमेव भवेत् तर्हि निरन्व-याभावस्यालीकत्वात् तदङ्गादि न भवेदिति तदङ्गत्वादिभ्यः सदसदात्मक इति भावः । एवमयुगपद्भाविभावेन सदसदात्मकत्वमुपदर्श्य युगपद्भाविभावेनापि सदसदात्मकत्वमाह—**एवं तावदिति** । घटादेः केवलं पटशिवकादिनाऽभवनमात्रात्मकतायां तस्य न स्यात् खपुष्पविलक्षणतेति स्वात्मीयां वृत्तिमपि पटशिवकादिव्यावृत्तदशायामप्यत्यन्ताविभक्तरूपेणानुभवति, तस्मादेकान्ताभावात्मक-खपुष्पादिविलक्षणं घटादि वस्त्वित्याह—**स एव च भवितेति** । अनुक्षणं तत्तद्रूपेण भवदपि तद्घटादि बौद्धाभिमतक्षणवत्

१ सि. क. तदङ्गत्वस्य । २ सि. क. भवमच । ३ सि. क. न ।

घटः स्वतोऽत्यन्ताविभक्तवृत्तिपर्यनुभवः—तामात्मनो वृत्तिं प्राक् पश्चाच्च परितोऽनुभवति, तस्माद्भवनात्मकत्वादभूतखपुष्पविलक्षणः—केनचिद्रूपेण खपुष्पस्याभवनात् घटस्य च पूर्वोत्तररूपैर्भवनात्, अर्थान्तरभूतक्षणभङ्गविलक्षणश्च प्राक् पश्चादिदानीञ्च भवनात्, भवनस्य प्रवर्त्तनस्य द्रव्यार्थतोऽत्यन्तमभिन्नत्वात्, क्षणभङ्गवादेऽत्यन्तं क्षणे क्षणेऽन्यत्वाभ्युपगमात्तद्विलक्षण एव भवतीति, नन्वेवं द्रव्यार्थभवनस्याभेदादभवनं निरवकाशमेवेत्येतच्च न भवतीत्यत आह—अतीतानागतवर्त्तमानभिन्नभवनसदसदेकक्रियः—यान्यतीतानि भवनान्यनागतानि च तानि वर्त्तमानभवनाद्भिन्नानि देशकालाकारनिमित्तादिभेदात्, तेभ्यश्च वर्त्तमानभवनम्, परस्परविलक्षणत्वाच्च परस्पररूपेण न सन्ति, अथ च भवनक्रियैकैव सर्वाणि तान्युच्यते, कथम्? आकाशवत्—यथा तथाप्याकाशं शब्दादिसमवायिनां घटादिसंयोगिनाञ्चाधारभूतमेकमविच्छिन्नभवनमपि तेषु घटपटशब्दादिभवनाधारतया भिद्यमानत्वाद्भेदाभेदाभ्यां सच्चासच्चेत्येषणीयम्, अन्यथा तेषां घट[पट]शब्दादीनां सङ्करप्रसङ्गात्, तथाऽस्मन्मतेनाप्यवगाहसामान्याद्भवदेवाङ्गुलिघटाद्यवगाहैर्भेदादसच्च, तथोक्तभावनो घटो द्रव्यादिकार्यश्चेति, यथाकाशं तथाभूतत्वात्तन्तुपटाद्यपि क्रमभावि सदसत्, यथा वा तत्तन्तुपटादिक्रमभावि सदसत् तथा युगपद्भावि खमपि सदसद्भिन्नाभिन्नञ्चेतोऽपीनोऽपीति उभयात्मकत्वप्रदर्शनं इति।

**इतरथा च नैव भवेद्वस्तु, अपूर्वत्वात्, खपुष्पवत्, वैधर्म्येण चम्पकपुष्पवत्, तस्मा-**

पूर्वपूर्वभावादत्यन्तविलक्षणमपि न स्वभावस्याप्यनुवर्त्तनात क्षणभङ्गविलक्षणमित्याह—**अर्थान्तरेति** पूर्वक्षणादर्थान्तरभूत —अत्यन्तभिन्नो यो क्षणभङ्ग तद्विलक्षण इत्यर्थ । ननु द्रव्यार्थेन पूर्वोत्तरभावयोरभेदे द्रव्यार्थस्य सदेकरूपतया पटशिवकादिरूपेणाभवनं निरवकाशं, भावैकरूपत्वात, अन्यथा भावैकरूपता न स्यादित्याशंक्य समाधत्ते—**नन्वेवमिति** । यद्यपि वस्तु सततपरिणमनशीलं, ते च परिणामा द्रव्यक्षेत्रकालाकारनिमित्ताद्यपेक्षा एव, एवञ्च विशिष्टस्य देशस्य कालस्याकारस्य निमित्तादेश्च सम्बन्धात् विशिष्टा परिणामा पृथक् पृथक् प्रविभक्ता नान्योऽन्यरूपेण सन्तीत्यसद्रूपास्तथापि भवनक्रियास्तास्सर्वा अविशिष्टा अपि, तस्मात् वर्त्तमानभवनमतीतानागतभवनाभ्यामभवनरूपमपि भवनरूपत्वात् भवनात्मकमित्याशयेनाह—**अतीतानागतेति** । परस्पर भेदमाचष्टे—**यानीति** । अन्योऽन्यरूपेणाभवनमाह—**परस्परेति** । भवनरूपतामाह—**अथ चेति** । दृष्टान्तमुपदर्शयति—**आकाशवदिति,** यत्र देशे शब्दाना समवाय परिसमाप्तो भवति यत्र च घटपटादिसंयोगा परिसमाप्तास्ते प्रदेशा आकाशस्य भवन्त्यनेके, शब्दसंयोगादे सर्वदा प्रदेशवृत्तित्वात तद्भेदेनाकाशस्य भेदात, प्रतिदेशभेदमाकाशमिदमाकाशमित्यभिन्नाभिधानप्रत्ययप्रवृत्तेरनुवृत्तिलक्षणोऽभेदश्चेति भेदाभेदरूपमाकाशं, पटघटादिसंयोग्याकाशाना घटपटादिसंयोगैरसत्त्वादाधाररूपेण च सत्त्वात सदसदात्मकमिति तथाप्येषणीयमिति भाव । समवायस्य व्याप्यवृत्तित्वेऽपि वृत्तिमत शब्दादे प्रदेशवृत्तित्वात तस्यापि प्रदेशवृत्तित्वमेवेति सूचनाय शब्दसमवायिनामिति पृथगुक्ति, संयोगस्तु परिमितदेशवृत्तिरिति प्रत्यक्षादिप्रसिद्ध एव, आकाशञ्च सर्वेषामधिकरणमेकं भवनलक्षणम्, तदवच्छिन्दन्तोऽर्था घटपटशब्दादय, तत्कृताऽवच्छेदानि तेषामाधारभूतानि तत्तद्भवनलक्षणान्याकाशानीति भेदाभेदरूपमाकाशमत एव चाकाशानि परस्पररूपेण न सन्ति, आधारभवनाधिकक्रिया चैकैव तानि सर्वाणीति सदसद्रूपमाकाशमिति शब्दार्थयोजना । **अन्यथेति,** घटपटशब्दादिभेदेनाधारभूताकाशस्य भेदाभावे आधारभेदाभावे आधेयभेदाभावात् घटपटादीनामैक्यप्रसङ्गेन घटोऽपि पट स्यात्, पटोऽपि घट स्यादित्येवं सङ्करप्रसङ्ग इति भाव । स्वमतेनाप्याकाशदृष्टान्तं वर्णयति—**अस्मन्मतेनापीति,** निखिलानामर्थानामवगाह्यमाकाशम्, आकाशमपि व्यापित्वेन स्वावगाह्येव, मूर्त्तास्तु भावा परस्परप्रतिबन्धका नावकाशदायिन., न वा स्वाधिकरणाः, न हि किञ्चिदल्पपरिमाणं वस्तु स्वाधिकरण दृष्टमित्यवगाहसामान्येन भवदाकाशमवगाह्यवस्तुभेदाद्भिन्नं सत् परस्पररूपतोऽभवनमपीति भाव । दार्ष्टान्तिकं निगमयति—**तथोक्तभावन इति,** प्रत्येकवस्तुस्वरूपेत्यादिना भावितो घटोऽपि भेदाभेदाभ्यां सदसद्रूप इति भाव । युगपदयुगपद्भाव्याकाशतन्तुपटाद्यो सदसत्त्वे भिन्नाभिन्नत्वे च परस्परदृष्टान्तदार्ष्टान्तिकभावतां प्रकाशयति—**यथाऽऽकाशमिति** । वस्तुन. सदसत्त्वानभ्युपगमे वस्त्वेव न भवेदिति विपक्षे दोषमादर्शयति—**इतरथा चेति,**

१ सि. क. °क्षणवृत्ति । २ सि. क. °न्यत्वान्नवत्येवाङ्गुलि० । ३ सि. क. घटोऽद्रव्यादिकार्यश्चेति । × × सि.

**द्वर्त्तमानमेव न स्यात्ततश्च नैव स्यात्, वान्ध्येयवत् क्षणिकवादवत्, तस्मान्न सदसतोः प्रतिपक्षत्वम्, इतश्च नानैकात्म्यम्, विधिप्रतिषेधैकविषयत्वात्, भावितैकात्म्यचेतनाचेतनत्ववत्।**

**इतरथा चेत्यादि**, एवं सदसदात्मकत्वमनिच्छतो वस्तुतस्तु–नैव भवेद्वस्तु, अपूर्वत्वात् निर्बीजत्वात्, नास्य पूर्वमिति बहुव्रीहिसमाश्रयेण, न पूर्वमपूर्वं प्रागसत्त्वादिति तत्पुरुषाश्रयेण वा, खपुष्पवत्, वैधर्म्येण चम्पकपुष्पवत्, मूलाङ्कुरादिभवनेन पूर्वस्यैव सत एव चम्पकस्य पुष्पीभवनात्, तच्च सदसदात्मकं चम्पककुसुममिति, एवमपरत्वादनुत्तरत्वादभेदत्वादिति योज्यम्, तस्माद्वर्त्तमानमेव न स्यात्, ततश्चावर्त्तमानत्वादपि नैव स्यात्, वान्ध्येयवत्, क्षणिकवादवदिति च खपुष्पक्षणभङ्गवैलक्षण्यप्रस्तुतेरुदाहरणद्वयमेतत्, तन्निगमयति–तस्मान्न सदसतोः प्रतिपक्षत्वमिति, इतश्च नानैकात्म्यम्–सदसतोरैकात्म्यमेव, द्विःप्रतिषेधस्य प्रकृत्यापत्तेः, कुतः? विधिप्रतिषेधैकविषयत्वात्–विधिरन्वयः, प्रतिषेधो व्यतिरेकः, तावुभावेकविषयाविस्येतत् प्रत्येकवस्तुस्वरूपप्रतिपत्त्यर्थंतदतत्प्रवृत्तिव्यावृत्तिमदसदात्मकं इत्यविभक्तस्वरूपपर्यनुभवातीतानागतवर्त्तमानभिन्नभवनसदसदेकक्रिय इत्यादिवचनात् सिद्धम्, तस्मात् सदसदैकात्म्यमेव, भावितैकात्म्यचेतनाचेतनत्ववत्– यथा च चेतनाचेतनयोर्विधिप्रतिषेधैकविषयत्वेन भावयित्वा चेतनश्चेतनोऽचेतन[श्च]इत्युक्तं तथेहापि द्रव्यादिमदसदेकात्म्यान्नास्ति सदसतोः प्रतिपक्षतेति।

**यदपि च वैधर्म्यमुच्यते सत्सोपाख्यमसन्निरुपाख्यमिति तदपि नोपपद्यते, सतोऽप्यनुपाख्यत्वात्, को हि प्रतिवस्तुविलक्षणसत्त्वेन सद्वस्तु प्रतिक्षणमुपाख्यातुं शक्नोति, असाधारणत्वात्, स्वसुखादिपर्यनुभववत्, अथ च निरुपाख्यतायामपि नैव तदसत्, सामान्यसोपाख्यत्वात्, यदप्यसाधारणं सुखादिपर्यनुभवादि तदपि सामान्येनोपाख्यायते किमपि सुखं दुःखमित्यादि, अपि च त्वयापि द्रव्यादिकार्येण वस्तूद्भूतिप्रकाशमात्रेण द्रव्यादेरुपयोगक्रिया नास्तीत्यशक्तसदसत्त्वादिति विचित्रोपभोगक्रियाप्रसिद्ध्यर्थं सत्ताद्रव्यत्वादिविशेषणसम्बन्धः कल्प्य इति वदता अथ च मतमसत् तत् सम्बन्धसत्त्वात् तस्यामवस्थायाम्, सोपाख्यश्च तदुत्तरकालं सत्तासम्बन्धोपाख्यत्वादिति व्यभिचार उक्तः।**

**यदपि चेत्यादि**, सदसतोः प्रतिपक्षत्वभावनार्थं वैधर्म्यमुच्यते त्वया सत् सोपाख्यमसन्निरुपाख्यमिति, तदपि नोपपद्यते, सतोऽप्यनुपाख्यत्वात्, को हीत्यादि, वस्तुनि वस्तुनि रूपरमादौ ययोर-

अपूर्वत्वादिति मौलहेतोर्नास्य पूर्वं कारणं बीजमित्यपूर्वमिति बहुव्रीहिसमासात् निर्बीजत्वादिति न भवति पूर्वमपूर्वमिति तत्पुरुषसमासात् प्रागसत्त्वादिति वाऽर्थो भवेदित्याह–**निर्बीजत्वादिति**। वैधर्म्यदृष्टान्तं घटयति–**मूलेति**, पूर्वस्यैव कारणस्यैव, सत एव–मूलाङ्कुरादिभावेन प्राक् सत एवेति समासद्वयापेक्षया व्याख्या। एवमन्येऽपि तदुपलक्षिता अपरत्वादयोऽत्रोद्भावनीया इत्याह–**एवमिति**। यत् पूर्वमसत् तदिदानीमप्यसद्भवति वन्ध्यापुत्रवत्, यच्चेदानीमसत् तत् पश्चादप्यसदिति सदाऽसदेव भवेदित्याशयेनाह–**तस्मादिति**। उदाहरणद्वयकारणमाह–**क्षणिकवादवदितीति**। सदसदैकात्म्ये हेत्वन्तरमाह–**विधीति**। अन्वयव्यतिरेकविषयत्वं कथमित्यत्र तत्पूर्वं प्रदर्शितमेवेत्याह–**तावुभाविति**। दृष्टान्तमाह–**भावितेति**। दृष्टान्तं घटयति–**यथा चेति**। एवं सदसदैकात्म्यं व्यवस्थाप्य वादिनोक्तं सदसतोर्वैधर्म्यं निराकर्तुमाह–**यदपि चेति**। असदेव निरुपाख्यमिति नियमो नास्ति, सतोऽपि निरुपाख्यत्वादित्याशयेन निराकरोति–**तदपीति**। सतोऽपि निरुपाख्यत्वं समर्थयति–**को हीत्यादि**, प्रतिवस्तु प्रतिक्षणं

१ सि. इतरथा तैवेत्यादि। २ सि. क. न सूनेव। ३ सि. क. °र्थं तदतत् प्र०। ४ सि. क. °कमिति।

साधारण आत्मा, पूर्वक्षणे उत्तरे च क्षणे विलक्ष[ण]स्तस्य भावः सत्त्वं तेन सत्त्वेन प्रतिवस्तुप्रतिक्षणविलक्षणसत्त्वेन च सद्वस्तु तदुपाख्यातुं केनचिदशक्यमसाधारणत्वात्, यदसाधारणं न तदुपाख्यातुं शक्यते, सुखादिपर्यनुभववत्, तस्मान्नायमेकान्तः सत् सोपाख्यमेवेति, स्यान्मतं [न]ब्रूमः सत् सोपाख्यमेवेति यतोऽस्य व्यभिचार उच्यते, किं तर्हि ? सत् सोपाख्यं निरुपाख्यं वा स्यात्, निरुपाख्यन्त्वसदेव, तत्सता साधर्म्यं न भजत इत्येतदपि नोपपद्यते व्यभिचारादित्यत आह–अथ च निरुपाख्यतायामपि नैव तदसत्, सामान्यसोपाख्य[त्वा]त्, उपसामीप्येनाख्या उपाख्या सत्तेत्यर्थः, सहोपाख्यया सोपाख्या यदप्यसाधारणं सुखादि पर्यनुभवादि तदपि सामान्येनोपाख्यायते किमपि सुखं दुःखमित्यादि, तस्मान्निरुपाख्यस्यापि सत्त्वदर्शनादयुक्तमुक्तमसन्निरुपाख्यं सत्सोपाख्यमिति, तस्मात् केनचिदात्मना सदेवासत् सोपाख्यञ्चेति नास्ति सदसतोर्वैधर्म्यम्, अथ वा सामान्यसोपाख्यत्वात्—यथा सामान्यं स्वेनात्मना सोपाख्यं स्वसत्तया, न विशेषणात्मना सामान्यान्तरेण, न तु द्रव्यादिवस्तुवदिति सत् सोपाख्यं निरुपाख्यमसच्चेति दृष्टत्वात्तथैवैकत्वं सदसतोः, नास्ति विपक्षता, किञ्चान्यत् अपि च त्वयापीत्यादि, त्वत्कल्पनयैव सदसदित्येतत् प्रदर्शयितुमिदमुच्यते, प्राग्व्याख्यातार्थ एवैष ग्रन्थो यावद्विशेषणसम्बन्धः कल्प्य इति, इह तु प्राग्विशेषणसम्बन्धात् विद्यमानमेव निरुपाख्यमितीष्टं त्वया, इत्येतस्यार्थस्य प्रदर्शनार्थमुपन्यस्तः, अत आह–अथ च मतमसन्निरुपाख्यत्वादिति निरुपाख्यत्वस्य सति दृष्टत्वाद्व्यभिचार उक्तः, असच्च तत् सम्बन्धसत्त्वात्, तस्यामवस्थायां सोपाख्यञ्च तदुत्तरकालं सत्तासम्बन्धोपाख्यत्वात् ।

परिणमति, न हि परिणामव्यतिरेकेण क्षणमात्रमपि वस्तु भवितुमर्हति, उत्पादादन्तरेऽन्यस्य तदानीमभावादवस्तुत्वापत्तेः, ते चानुक्षणभाविपरिणामाः सजातीयविजातीयव्यावृत्तत्वेन न साधारणा न केनचिच्छब्देन निर्देष्टुं शक्यन्त इति प्रतिवस्तुविलक्षणसत्त्वेन सन्तोऽपि निरुपाख्या इति भावः । सजातीयविजातीयव्यावृत्तत्वमेवाह–**असाधारणत्वादिति,** समानधर्मेण विरुद्धधर्मेण चान्यैरसमानत्वादित्यर्थः, बीजधरणिसंयोगानन्तरं हि यावदङ्कुरोत्पत्तिं प्रतिक्षणं क्रियाविभागादिन्यायेन परिणामा भवन्ति, अन्यथा बीजस्य तादवस्थ्यादङ्कुरानुदय एव भवेत्, न च ते परिणामाः सङ्केतव्यवहारकालव्यापकत्वाभावेन केनचिदप्युपाख्यातुं शक्यन्त इति भावः । व्याप्तिं दर्शयति–**यदिति ।** ननु सत् सोपाख्यमित्युक्त्या सोपाख्यताव्याप्यत्वं सत्त्वस्य नाभीप्सितम्, यतोऽनुक्षणपरिणामेषु व्यभिचार आपद्येत, किन्तु निरुपाख्यताव्याप्यत्वमसतः, तस्मादसत् न सता साधर्म्यं भजत इत्याशयेनाह–**स्यान्मतमिति,** सत् सोपाख्यमेवेत्यनेन यत् सत् तत् सोपाख्यमेव न निरुपाख्यमिति न नियमः, सत् सोपाख्यं स्यात् निरुपाख्यमपि स्यादित्यर्थः, वयन्तु निरुपाख्यं त्वसदेवेति ब्रूम इति शंकितुराशयः । अत्रापि व्यभिचारमाविर्भावयति–**एतदपि नोपपद्यत इति,** नियमोऽयमपि न युक्तो व्यभिचारादिति भावः । अनुक्षणपरिणामस्य केनचिदुपाख्यातुमशक्यत्वेऽपि नासावसद्भवितुमर्हति, विशिष्टशब्देन ह्यसौ निरुपाख्यः, न तु सामान्यशब्देन, तेन तु सोपाख्यमपीत्याशयेनाह–**अथ चेति,** असाधारणशब्दानभिधेयत्वेऽपि नानुक्षणपरिणामोऽसन् सामान्यसद्रूपत्वादित्यर्थः । हेत्वर्थमाह–**उपेति,** सामीप्येन यदभिधानं तद्युक्तत्वादित्यर्थः, वस्तु, सत्, अर्थ इत्याद्यभिधानानि केवलान्वयित्वात् शीघ्रोपस्थितिकत्वाच्च वस्तुसमीपगानीति भावः । हेतुं दृष्टान्ते सङ्गमयति–**यदपीति ।** निगमयति सदसतोर्वैधर्म्यनिराकरणं–**तस्मादिति,** सत एवासत्त्वात् सोपाख्यत्वाच्च न सदसतोः प्रतिपक्षतेति भावः । स्वपररूपेण सोपाख्यत्वनिरुपाख्यत्वे दर्शयितुमन्यथा व्याचष्टे–**अथ वेति,** यथा हि द्रव्यादिवस्तु स्वात्मनाऽपि सोपाख्यमन्येन द्रव्यत्वादिनाप्युपाख्यं भवति न तथा सामान्यं वस्तु, किन्तु स्वरूपेणैव सोपाख्यं नान्येन विशेषणेन, तेन तु निरुपाख्यमेव, तस्मात् सामान्यरूपं सत् सोपाख्यं निरुपाख्यमपि, असदपि चेति सिद्धत्वात् सदसतोरैकात्म्यमेवेति भावः । त्वदभिप्रायेणाथ न सदसतोः प्रतिपक्षता, सत्तासम्बन्धप्राक्काले स्वरूपसत एवासत्त्वादिति पूर्वोदितग्रन्थमेवोपन्यस्यति–**अपि चेति ।** सोपाख्यनिरुपाख्यत्वविचारौपयिकव्याख्यार्थमाह–**इह त्विति ।** व्याख्याग्रन्थमाह–**अथ च मतमिति,** अनेन ग्रन्थेनासत्त्वसाधकनिरुपाख्यत्वहेतोः

१ सि. क. क्ष० डे० प्रतिवस्तुप्रतिक्षण० । २ सि. क. क्ष० डे० तदुपाख्यत्वां० ।

एवं सोपाख्य[त्वनिरुपाख्य]त्वाविरोधमापाद्य प्रस्तुतकार्यसद्[स]त्त्वाविरोधे साधनमाहाऽऽचार्यः—

**सदसदेव तु सोपाख्यनिरुपाख्यत्वात्, सामान्यवत्, अथ वा सोपाख्यं निरुपाख्यञ्च, सदसत्त्वात्, सामान्यवत्, सामान्यं स्वसत्, न सामान्यसत्, वस्तुवदिति सदेवासत् सामान्यम्, तदेव च सोपाख्यम्, स्वपरप्रत्ययाभिधानाधानात्तदेव निरुपाख्यञ्च, वस्तुवत् सामान्याद्यन्तराभावादिति सोपाख्यमेव निरुपाख्यम्, वस्तुनि विपर्यय इति व्यवस्थापिते दृष्टान्ते ताभ्यां धर्माभ्यामेव प्रतिपद्यतां भवान् सोपाख्यनिरुपाख्यत्वात् सामान्यादिद्रव्यादिवत् सदसत्त्वमिति ।**

( **सदसदेव त्विति** ) सदसदेव तु सोपाख्यनिरुपाख्यत्वात् सामान्यवदिति, अथ वा सोपाख्यं निरुपाख्यञ्च, सदसत्त्वात् सामान्यवदिति सदसत्त्वैकात्म्ये साध्ये सोपाख्यनिरुपाख्यत्वं हेतुः, सोपाख्यनिरुपाख्यत्वे च सदसत्त्वं प्रोक्तन्यायेन त्वयैवाभ्युपगतत्वात्, सामान्यदृष्टान्तस्य सदसत्सोपाख्यनिरुपाख्यत्वैकात्म्यैकार्थ्यं दर्शयति—सामान्यं स्वसत्—स्वसत्तया सत्, न सामान्यसद्वस्तुवत्, सम्बन्धसत्तयेत्यर्थः, यथा त्वन्मतेनैव सामान्येन सम्बन्धाद्द्रव्यगुणकर्माख्यं वस्तु सम्बन्धसदिष्यते न तथा सामान्यम् सामान्यस्य सामान्यान्तरसम्बन्धाभावादिति सदेवासत् सामान्यम्, इतिशब्दस्य हेत्वर्थत्वात्, एवं सामान्यस्य सदसत्त्वैकात्म्यम्, तदेव च सोपाख्यं स्वपरप्रत्ययाभिधानाधानात्—स्वात्मनि सम्बन्धिनि च प्रत्ययमभिधानञ्चाधत्ते सती सत्ता, सन्ति द्रव्यगुणकर्माणीति च, सामान्यं तदेव निरुपाख्यञ्च—नास्योपाख्याऽस्ति, वस्तुवत्—वस्तुन इव सम्बन्धिसामान्याद्युपाख्या नास्ति, सामान्यादेः सामान्याद्यन्तराभावादिति सोपाख्यमेव निरुपाख्यम्, इत्थमुक्तन्यायेन सोपाख्यनिरुपाख्यत्वयोर्वैधर्म्याभावः, वस्तु[नि]विपर्यय इति—द्रव्यादिवस्तुनि स्वतो निरुपाख्यता सामान्येन सोपाख्यता, स्वतः[अ]सत्त्वं सम्बन्ध्यन्तरसत्त्वञ्च

सत्तासम्बन्धप्राक्कालीने स्वरूपसति दृष्टान्ताव्यभिचार आदर्शितस्त्वयैवेति भाव । इत्थं सोपाख्यत्वनिरुपाख्यत्वयो परस्परं विरोधं निराकृत्य सोपाख्यनिरुपाख्यत्वयोः सदसत्त्वाभ्यां परस्परव्याप्यतामभ्युपेत्य सोपाख्यनिरुपाख्यत्वाभ्यां सदसत्त्वयो., सदसत्त्वाभ्यां वा सोपाख्यनिरुपाख्यत्वयो कार्यवस्तुन साधयति—**सदसदेव त्विति** । अथ च त्वयापीत्यादि ग्रन्थेन सदसत्त्वयो सोपाख्यनिरुपाख्यत्वयोश्च त्वयाऽङ्गीकृतत्वान कार्यद्रव्ये हेतोर्नासिद्धतेत्याशयेनाह—**सदसत्वैकात्म्य इति** । दृष्टान्ते साध्यहेत्वो. सङ्गमनं विधत्ते—**सामान्यमिति**, स्वरूपसत्तया सत सामान्यमेव सम्बन्धसत्तयाऽसदित्यर्थ । सम्बन्धसत्तयाऽसत्त्वे वैधर्म्यदृष्टान्तमाह—**वस्तुवदिति**, अर्थवत्—द्रव्यगुणकर्मवदित्यर्थ । तानि हि सबंधसत्तया सन्ति, सामान्यन्तु न सम्बन्धसत्तया सत्, तत्र सामान्यसम्बन्धाभावादिति दर्शयति—**यथेति** । एवं प्रथमप्रयोगानुसारेण साध्यं द्वितीयप्रयोगानुसारेण हेतुं सदसत्त्वं प्रदर्श्य तत्रैव सामान्ये सोपाख्यनिरुपाख्यत्वं दर्शयति—**तदेव चेति**, सामान्यमेव च सोपाख्यम्, स्वस्मिन् सामान्ये परस्मिन् द्रव्यगुणकर्माख्येऽर्थे सदिति प्रत्ययमभिधानञ्च कारयतीति भाव । सामान्ये निरुपाख्यत्वं घटयति—**तदेव निरुपाख्यञ्चेति**, सामान्यमेव हि सोपाख्यं, तेन द्रव्यादे स्वस्य चोपाख्यानात्, यदि स्वपरोभयधर्मिकप्रत्ययाभिधानाधायकं तदेव सोपाख्यं, नैतादृशं सोपाख्यं सामान्ये वर्तते, अनवस्थाप्रसङ्गात्, द्रव्यादि च सामान्यरूपतथाविधोपाख्यया सोपाख्यमेव, न निरुपाख्यमिति भाव । द्रव्यादौ सामान्याद्वैपरीत्यं सोपाख्यत्वनिरुपाख्यत्वसदसत्त्वयोर्दर्शयति—**वस्तुनीति**, द्रव्यादे न स्वत सोपाख्यता, स्वपरप्रत्ययाभिधानाधानाक्षमत्वादत· स्वतो निरुपाख्यता, सामान्येन च सोपाख्यतेति सामान्याद्वैपरीत्यम्, तथा द्रव्यादे· स्वतोऽसत्त्वं सम्बन्ध्यन्तरसत्त्वञ्च सामान्यतो वैपरीत्यमिति भावः । तदेवं सामान्ये दृष्टान्ते एकात्मतापन्नयो सोपाख्यनिरुपाख्यत्वयोः तत्रैवैकात्मतापन्नाभ्यां सद-

१ सि. क. क्ष. डे. °न्तरास° ।

सत्तातो विपरीतम्, अतो व्यवस्थापितं इत्यादि, व्याख्यातदृष्टान्ते सोपाख्यनिरुपाख्यत्वैककाष्ठीकृतहेतुधर्मयोः सदसत्त्वैककाष्ठीभूतसाध्यधर्माविनाभाव उपसंह्रियते, तस्मात्ताभ्यां धर्माभ्यां भिन्नौ विरुद्धौ चेत्यभिमताभ्यामेव प्रतिपद्यतां भवान् सोपाख्यनिरुपाख्यत्वात्, सामान्यादिद्रव्यादिवत्—सामान्यविशेषसमवायाः सामान्यादयः, द्रव्यगुणकर्माणि द्रव्यादीनि, सामान्यादयश्च द्रव्यादीनि च यथा सन्त्यसन्ति च सोपाख्यनिरुपाख्यानि चेति सोपाख्यनिरुपाख्यत्वं सदसदैकात्म्ये हेतुः, सदसत्त्वमपि सोपाख्यनिरुपाख्यत्वैकात्म्ये तथैव हेतुस्त्वन्मतेनैव, उपनये तु द्रव्यादीनां दृष्टान्तत्वेनोपादानं त्वयैवेष्टत्वात्, अत्रापि सदसत्त्वैकात्म्ये सोपाख्यनिरुपाख्यत्वैकात्म्ये च निःसंशयमविपक्षतेति ।

इदानीं स्याद्वादे परोक्तान् दोषान् परिहर्तुकाम आह—

**यत्तूक्तं स्याद्वादिनं प्रति पूर्वदोषपापीयस्त्वान्न सदसत् कार्यम्, तत्र हि सदसत्कार्यपक्षयोः सति क्रियाया अभावः, असति चोपादाननियमाभावः, विरोधादिति ब्रुवतो जैनस्यापि हेतूपादानक्रियानियमाभाव इति द्विदोषता पापीयसीति, तन्न, परिहृतपूर्वदोषत्वात् ।**

**यत्तूक्तमित्यादि,** टीकाया प्रशस्तमतौ स्याद्वादिनं प्रति पूर्वदोषपापीयस्त्वान्नेत्युक्तौ दोषौ, तत्र सदसत्कार्यपक्षयोः सांख्यवैशेषिकेष्टयोर्यथासंख्यं क्रियाऽनुपपत्त्युपादाननियमाभावदोषौ यथोक्तं उपादाननियमभ्यासति[सति]च क्रियाया अभावप्रसङ्गात् सदसत्कार्यमिति दोषद्वयं ब्रुवतो जैनस्य पूर्वदोषपापीयस्त्वं किलेत्थमुच्यते, तद्यथा—तत्र हीत्यादि यथासंख्यं प्रत्येकदोषप्रदर्शनग्रन्थो गतार्थो यावद्धेतूपादानक्रियानियमाभाव इति—हेतवो दण्डाद्या घटस्य मृदुपादानं क्रिया कुलालव्यापार इति, अस्मिन् पुनः सदसत्कार्यपक्षे द्विदोषता पापीयसी सदसत्पक्षाभ्यामेकैकदोषाभ्यां, सत्त्वात् कार्यस्य घटार्थायाः क्रियाया अभावः असत्त्वादुपादान[ा]भाव इत्येतद्विदोषत्वात् पापीयानेष पक्ष इति, अत्राचार्य आह—तन्न परिहृतपूर्वदोषत्वात्—परिहृतावस्मिन् सदसदैकात्मककार्यपक्षे पूर्वोक्तौ क्रियाभावोपादाननियमाभावदोषाविति ।

सत्त्वधर्माभ्यामविनाभावो व्यवस्थापित इत्याशयेनाह-**व्याख्यातेति** । सिद्धत्वविनाभाव सामान्यविशेषसमवायेषु तद्विपर्ययेण द्रव्यगुणकर्मसु तयोः, ततः किमित्यत्राह-**ताभ्यां धर्माभ्यामिति** । सामान्यादिद्रव्यादिवदित्यत्र द्रव्यादिदृष्टान्तीकरणाभिप्रायमादर्शयति-**उपनये त्विति** । प्रशस्तमतिना स्वटीकाया स्याद्वाद उद्भावितान दोषानुद्धर्तुमाह-**यत्तूक्तमिति** । तदुक्तिमेव प्रकाशयति-**पूर्वदोषेति** । कार्यस्य सदसदैकात्म्यपक्षोऽपि पूर्वदोषाभ्या पापीयानेव, कौ पूर्वदोषावित्यत्राह-**तत्रेति,** कार्यस्य सत्त्वपक्षे सांख्याभिमते, असत्त्वपक्षे वैशेषिकाभिमते क्रमेण क्रियानुपपत्तिरुपादाननियमाभावश्च दोषाविति भाव । तावेव दोषावुपदर्शयति-**यथोक्तमिति** । स्याद्वादिनैव सत्पक्षेऽसत्पक्षे चोद्भावितौ दोषावुभयात्मकतायामपि दुष्परिहरावेवेत्याह-**दोषद्वयमिति** । दोषद्वयमाह-**सत्त्वादिति,** कारणकाले कारणे कार्यस्य पश्चादिव सत्त्वे कारकव्यापारवैफल्यमित्थमपि च तत्प्रवृत्तौ तद्व्यापारानुपरमप्रसङ्ग इति भाव. । **असत्त्वादिति,** कारणे कार्यस्यासत्त्वे प्रध्वंसदशायामिव प्रागभावदशायामपि करणं भवेत, असत्करणे च नियतोपादानग्रहणं न प्राप्नोति, असत्त्वाविशेषात्सर्वेषामुपादनताऽनुपादानता वा स्यात, असति च दण्डादिव्यापारो निरालम्बनो न प्रवर्तेतेति भावः । प्रागुत्पत्ते घटादिकार्यं मृदात्मना सत घटाद्यात्मना चासदिति स्यादादिविशेषितत्वात् सदसतोर्न पक्षद्वयोदितदोषप्रसक्ति. स्याद्वाद इत्याशयेन समाधत्ते-**परिहृतेति,** घटात्मनाऽसत्त्वात मृदात्मना सत्त्वेऽपि न क्रियानुपपत्ति, घटात्मनाऽ-

१ सि. क. °पितेस्या । २ सि. क. दृष्टान्त० । ३ सि. क. पूर्ण० । ४ सि. क. यापीदासी । ५ सि. क. सत्त्वप० ।

तत्परेणैवासौ वाचयति प्रश्नपूर्वकम्—

**तत्र हि सत्कार्यपक्षे क्रिया किं विरुध्यते? यदसावेकान्तेन सन्नेव घटः इत्याह ततस्तस्य क्रियाकरणं न युज्यते, कर्त्तव्यत्वाभावात् कृतवदित्येवं तस्य क्रियाऽभावदोषो भवति, न पुनराकांक्षितकर्त्तव्यपर्यायद्रव्यवादिनः स्याद्वादिनः, यदि त्वसौ स्यादादिना कर्त्तव्यत्वमपि विदधीत क एनमेवं ब्रूयात् 'क्रियाभावदोषस्ते प्राप्तः, कर्त्तव्यत्वाभावात्, कृतकवदिति'।**

(**तत्र हीति**) तत्र हि सत्कार्यपक्षे क्रिया किं विरुध्यते?—केन हेतुना सांख्ये, यदसावेकान्तेनेत्यादि यावत् कृतकवदिति, द्रव्यार्थतो हि मृत्पिण्डे घटोऽस्ति, न पर्यायतः, सांख्यस्तु सन्नेव घटः कार्यत्वपर्यायनिरपेक्ष इत्याह, ततस्तस्य क्रियाकरणं निष्पन्नस्य सर्वथा विद्यमानस्य न युज्यते, कर्त्तव्यत्वाभावात् कृतकवत्—निष्पन्नघटवदित्येवं तस्य सत्कार्यवादिनः क्रियाभावदोषो भवति, न पुनराकांक्षितकर्त्तव्य[त्व]पर्यायद्रव्यार्थवादिनः स्याद्वादिनः स्यात्—सन्नेव मृत्पिण्डे घटः केनचिद्धर्मेणासन्नपीति वदतः परिहृतपूर्वोक्तसत्कार्यैकान्तवाददोषत्वात्, यदि त्वसौ[1] सांख्योऽपि[2] स्यादादिना कर्त्तव्यत्वमपि विदधीत—स्याद्वादिवत् कथञ्चित् कुतश्चिदित्यादिनाऽनेकान्तवाचिना विशेषणेन विशेष्य मदेव कार्यमिति, ततः क एनमेवं ब्रूयात्—को वादी सुसमीक्षितवाक्यगुणदोषोऽपि क्रियाभावदोषस्ते प्राप्तः कर्त्तव्यत्वाभावात् कृतकवदिति च ब्रूयात् परिहृतपूर्वदोषं वादिनं सांख्यमन्यं वाऽभ्युपेतानेक[ान्त]वादमिति।

**असत्कार्यपक्षेऽप्युपादाननियमः किं विरुध्यते? यदसावेकान्तेन क्रियागुणव्यपदेशाभावादसत्कार्यमिति हेतुषु सन्निहितस्याव्यक्तस्यार्थस्यपर्यवज्ञया ब्रूयात् तस्य पटार्थितायां तत्तदुपादाननियमो न युज्यते, तत्रासत्त्वात्तृणादिवदित्यसत्कार्यैकान्तवादेऽप्युपादाननियमाभावदोषः, सोऽनेकान्तवादे स्यादादिविशिष्टे नास्ति तथा यदि वैशेषिकोऽपि विशेषं ब्रूयात् क एनं किञ्चिदपि ब्रूयात्, तस्मान्न स्तः स्याद्वादिनः पूर्वदोषौ, कुतः पापीयस्त्वम्?।**

सत्त्वेऽपि मृदात्मना सत्त्वात्तोपादाननियमाभाव इति भावः। सत्कार्यपक्षेऽसत्कार्यवादिना क्रियाविरोधदोषो य उद्भावितः स **केन** हेतुनेति प्रश्नं कुर्वन् स्याद्वादं समर्थयितुमाह—**तत्र हीति,** कार्यस्य सदसत्त्वविचारे हीत्यर्थः। आर्हताभीप्सितमाह—**द्रव्यार्थतो हीति,** कारणे कार्यस्य द्रव्यार्थतः सत्त्वमसत्त्वञ्च पर्यायार्थेन इति सिद्धान्तः, सांख्यस्तु द्रव्यार्थपर्यायार्थनिरपेक्षं कार्यसत्त्वमाह—तथा चोभयथापि तदानीं सत्त्वं फलितं पश्चादिव, ततः क्रियाकरणं विरुद्धं कारकव्यापारसाध्यरूपाभावात्, तद्धि द्रव्यतः पर्यायतश्च पूर्वं सदिष्यते, तस्मात् किमस्ति कर्त्तव्यं कारकव्यापारैरिति क्रियाभावदोष इति भावः। अयं दोषो न स्याद्वादिनः सम्भवति, तेन पर्यायरूपेण सत्त्वानभ्युपगमात्, पर्यायरूपतासम्पत्त्यर्थं कारकव्यापारापेक्षणात्, तस्मात् सत्कार्यैकान्तवाददोषः परिहृत इत्याशयेनाह—**न पुनरिति**। यदि सांख्योऽपीमं सिद्धान्तमभ्युपगच्छेत् तर्हि न तमसु दोषं कोऽपि ब्रूयादित्याह—**यदि त्वसाविति**। कुतो न ब्रूयादित्यत्र हेतुमाह—**परिहृतेति**। असत्कार्यपक्षे सत्कार्यवादिना य उपादाननियमविरोध उद्भावितः स केन हेतुना विरुध्यत इति प्रश्नं कुर्वन् स्याद्वादं समर्थयति—**असत्कार्यपक्षेऽपीति**। किं द्रव्यार्थतस्तन्तुषु पटोऽसन्, किं वा पर्यायेणेति पृष्टे किञ्चिद-

1 सि. क. तसौ। 2 सि. क. सांख्येऽपि।

**असत्कार्यपक्षेऽपीत्यादि,** वैशेषिकं प्रत्यसत्कार्यवादिनमुपादाननियमाभावदोष उक्तो योऽयं स किं विरुध्यते ? इति पूर्ववत् प्रश्नोपक्रमं भाणयति–यदसावेकान्तेनेत्यादि, यदसौ वैशेषिकः पर्यायार्थाश्रयेण क्रियागुणव्यपदेशाभावादसत् कार्यमिति द्रव्यार्थतो हेतुषु तुर्यादिषूपादानेषु च तन्तुषु सन्निहितस्याऽव्यक्तस्य क्रियामन्तरेण क्रिययाऽभिव्यंग्यपटाख्यस्यार्थस्य पर्यवज्ञया–अनपेक्ष्य तं ब्रूयात् तस्य पटार्थितायां तत्तदुपादाननियमो न युज्यते, तत्रासत्त्वात्तृणादिवत्–यथा तृणाद्युपादानं पटार्थितायां न युक्तं तत्र तस्यासत्त्वात्, एवं तन्तूपादानमपीति–इत्थमसत्कार्यैकान्तवादेऽप्युपादाननियमाभावदोषः, सोऽनेकान्तवादे स्यादादिविशिष्टे नास्ति, स्यादसत्कार्यमिति दत्तसत्तावकाशमपि वदेत्तथा यदि वैशेषिकोऽपि विशेष ब्रूयात् क एनं किञ्चिदपि ब्रूयात्, न तथा तस्य वादिनो विशेषितान्वयव्यतिरेकधर्मधर्मिव्यवस्थस्य तिलतुषशतभागमात्रमपि वाच्यमस्तीति, उक्तञ्च 'हेतुविसयोवणीतं जह वयणिज्जं परो नियत्तेइ । जदि तं तहा पुरिल्लो दाइंतो केण जिव्वंतो ॥' ( संम० कां ३ श्लो० ५८ ) तस्मान्न स्तः स्याद्वादिनः पूर्वदोषौ, कुतः पापीयस्त्वम् ?।

ताभ्या वा श्रेयस्त्वमेवेत्यत आह—

**एवमस्मिन् पूर्वश्रेयस्त्वार्थ आद्युद्ग्राहे दर्शित एव स स्वपक्षरागादसत्प्रद्वेषाद्वा नावबुद्धस्त्वया ।**

**( एवमिति )** एवमयं पूर्वश्रेयस्त्वार्थः–पूर्वाभ्या वादाभ्या श्रेयसो वादस्य भावः पूर्वश्रेयस्त्वं, तदेवार्थः स्याद्वादस्येति, सोऽयमाद्युद्ग्राहः पूर्वश्रेयस्त्वार्थः परिहृतदोषवचनावकाशः, तस्मिन्नाद्युद्ग्राहे प्रतिज्ञानिर्देशदर्शित एव मया–स्यात्सत् कार्यं स्यादसत् कार्यमिति स पुनस्त्वया स्वपक्षरागादसत्प्रद्वेषाद्वा नावबुद्धः ।

**यत्पुनरिदं 'सद्भागस्योपादाननियमः, असद्भागस्य क्रिया च युज्यतेऽतः सदसदंशयोर-**

प्युत्तरमनभिदधानः केवलं क्रियागुणव्यपदेशाभावात् प्राक् पटादयसदिति ब्रूते तदिदमभिधानं पर्यायैवैयाश्रयेनाह–**यदसाविति** । द्रव्यार्थतस्तन्तुषूपादानकारणेषु तुर्यादिषु हेतुषु च सन्तं कारकक्रियाभिव्यङ्ग्याऽव्यक्तं क्रियया च प्रकाश्यं पटमुपेक्षमाण एवासौ तथा वक्तीत्याह–**द्रव्यार्थत इति** । एवकारस्त्वाविशेषात् तन्तुवत् सर्वेषामुपादानतया ग्रहणं प्रसज्यत इति तन्त्व एवोपादानं न तु तृणादय इत्युपादाननियमाभावः प्रसज्यत इति दर्शयति–**तस्य पटार्थितायामिति** । यदि वैशेषिकोऽपि द्रव्यार्थतः पटोऽस्ति पर्यायार्थतया नास्तीत्यमुं सिद्धान्तमभ्युपगच्छेत्तर्हि क एनमुपादाननियमाभावदोषं ब्रूयादित्याह–**यदि वैशेषिकोऽपीति,** अयं यदि स्यादसत् कार्यमिति द्रव्यार्थतः कार्यसत्ताया अवकाशं दत्त्वा पर्यायार्थतो विशेषं ब्रूयादित्यर्थः । **न तथेति,** सामान्यविशेषात्मकवस्तुस्वीकारादेव न तस्याणुमात्रमपि किञ्चिद्दोषजातं वक्तव्यमस्तीति भावः । उक्तार्थे सिद्धान्तो सम्मतिमादर्शयति–**उक्तञ्चेति,** कार्यं हि द्रव्यार्थतः सत् पर्यायार्थतोऽसदिति परस्परापेक्षया सदसत्त्वं स्यात्पदयुक्तं कार्यधर्मिणि व्यवस्थितं, एवमेव नयोरात्मलाभात्, इमां व्यवस्थामुज्झित्वा यो वादी एकान्तं सद्रूपमसद्रूपं वा वदेत् स परेण निवर्तनीयो भवेत्, यदि स एव वादी द्वितीयधर्माक्रान्तं स्याच्छब्दयोजनया अदर्शयिष्यत् न केनाप्यसावजेष्यतेति भावः । उपसंहरति–**तस्मान्नेति** । न पूर्वदोषपापीयस्त्वं स्याद्वादस्य किन्तु पूर्ववादाभ्यां श्रेष्ठत्वमेवेति दर्शयति–**एवमयमिति** । व्याचष्टे–**पूर्वाभ्यामिति,** श्रेयसो भावः श्रेयस्त्वं, पूर्वाभ्यां श्रेयस्त्वं पूर्वश्रेयस्त्वं तदेवार्थोऽस्यासौ पूर्वश्रेयस्त्वार्थः,–पूर्ववादावधिकश्रेष्ठताप्रयोजनक इत्यर्थः, कस्मात् ? परिहृतपूर्वदोषावकाशत्वात्, कथं ? कार्यस्य स्यात्पदलाञ्छितेन सताऽसता वा निर्देशादिति भावः । इत्थं मया प्रदर्शितोऽपि त्वया नावबुध्यत इत्याह–**तस्मिन्निति,** अनवबोधे हेतुश्च स्वपक्षरागः परपक्षप्रद्वेषो वा रागापेक्षया प्रद्वेषस्य प्रबलमौढ्यहेतुत्वाद्बलवत्त्वात् तस्यैव प्राधान्येनोपादानं वाशब्देनोपदर्शितम् । प्रकारान्तरेण वादिनोक्तं पूर्वदोषपापीयस्त्वं निरसितुमनुवदति–**यत्पुनरिति** । पूर्वदोषपापीयस्त्वे

**न्यतराश्रयेण तावंशौ वस्तुनि स्त एवेति चेन्न विपर्ययप्रसङ्गात्, एकस्योभयात्मकैकवस्तुत्वे कुत एतत् सद्भागमाश्रित्यैवोपादाननियमो न त्वसद्भागमाश्रित्य, असद्भागमाश्रित्यैव च क्रिया, न सद्भागमाश्रित्येति विशेषहेत्वभावादिति पूर्वदोषपापीयस्त्वमेव' इति ।**

**यत्पुनरिदमित्यादि,** पूर्वपक्षः परस्य यावत् पूर्वदोषपापीयस्त्वमेवेति, जैनेनायं परिहारः पूर्वदोषपापीयस्त्वेऽभिहितः—सदसत्कार्यवादिना सद्भागस्योपादाननियमः—मृदि सत्त्वाद्घटस्य मृदुपादाननियमः, *तस्या वा असद्भागस्य क्रिया च घटस्य युज्यते, सदसदंशयोरन्यतराश्रयेण* तावंशौ वस्तुनि स्त एवेति चेदित्याशङ्कायाम्, एवञ्चेन्मन्यस इत्यार्हन्तीयं परिहारमाशंक्योत्तरमाह—एतच्च न, विपर्ययप्रसङ्गात्, विपर्ययः सद्भागमाश्रित्य क्रियाप्रसङ्गोऽसद्भागमाश्रित्योपादाननियमप्रसङ्गः, अनिष्टौ च ते जैनस्य, एकस्योभयात्मकैकवस्तुत्वे विशेषहेत्वभावात्- तस्मिन् सत्युभयात्मके कुत एतदित्यादि गतार्थं विपर्ययप्रसङ्गापादनं विशेषहेत्वभावात्–हेतुहेयनियमाभावात् ।

अत्राचार्य आह—

**एतदपि न किञ्चित्, कार्यत्वादेव, क्रियत इति हि कार्यम्, तस्मिन्नुपादानक्रिययोः स्वविषयनियतौ, एकस्योभयात्मकत्वात्, एकपुरुषनियतपितृपुत्रत्ववत्, न ह्येकस्य पुरुषस्य पितृपुत्रत्वात्मकत्वेऽपि ते अनियतविषये दृष्टे किन्तु नियतविषये एव, न तु नियमाभावः, एवं वस्तुन उभयात्मकैकरूपत्वेऽप्युपादानक्रिययोः स्वस्वविषयनियतत्वान्न विपर्ययप्रसङ्गः ।**

**(एतदपीति)** एतदपि न किञ्चित्, नोत्तरस्य गन्धोऽप्यस्तीत्यर्थः, कस्मात्? कार्यत्वादेव, क्रियत इति हि कार्यम्, तस्मिन् कार्ये उपादानक्रिययोः स्वविषयनियतौ[ भावा ]भावावेव न[ ाभय]ा[भावः] स्वो विषयः स्वविषयः, उपादानस्य मत्येव नियमः, तस्य तत्र नियतत्वात् भावो विषयः, क्रियायाः पुनर-

परेणोद्भाविनं जैनेन यत्प्रतिविधानमभिहितं तद्वादी दर्शयति-**जैनेनायमिति**, मृदात्मना घटस्य सत्त्वादुपादाननियमो घटात्मना चासत्त्वात् क्रियाया उपपत्तिरिति य परिहार सदसदैकात्म्ये जैनेनोक्त इति भाव । सोऽयं परिहारो न युज्यते विपर्ययप्रसङ्गादित्याह-**एतच्च नेति** । आश्रयाश्रयिभावे नियामकाभावात् क्रिययाऽपेक्ष्यं सत्त्वमुपादानापेक्ष्यमसत्त्वमपि स्यादिति दर्शयति-**विपर्यय इति** । नियामकाभावमाह-**एकस्येति** । *सद्भाग एवोपादानेनापेक्षितत्वात् हेतु, असद्भागस्तेनानपेक्षितत्वाद्धेय, असद्भाग* एव क्रिययाऽपेक्ष्यत्वाद्धेतु., सद्भागस्तु तयाऽनपेक्षितत्वाद्धेय इत्यत्र नियामकाभावादित्याशयेन व्याचष्टे-**हेतुहेयेति** । एकस्योभयात्मकत्वमेव तयो प्रतिनियतविषयत्वे नियामकत्वेष्टेनात्रोत्तरस्य गन्धोऽस्तीत्याशयेनाह-**एतदपीति** । अनन्तधर्मात्मकमेकं वस्तु निरन्तरप्रवृत्तिस्वभावतया तत्तद्देशकालाद्यपेक्षयाऽन्यान्यरूपेणात्मानं प्रकाशयति द्रव्यात्मना सन्तमात्मानं घटाद्यात्मना घटाद्यात्मना सन्तं कपालाद्यात्मनेत्यादिरूपेण, अत एव प्रवृत्तिविषयत्वात् क्रियत इति कार्यमुच्यते, मृदात्मना विद्यमान एव घटात्मना प्रवर्त्तत इति मृदात्मना सन्नेव घट उपादानम्, तस्मादुपादानस्य विषयो भाव एव, तच्चोपादानं घटात्मना प्रवर्त्तत इति प्रवृत्तिविषयोऽभाव एवेत्युभयात्मकैकरूपत्वेऽप्युपादानक्रिययोः स्वस्वविषयनियतत्वं न भज्यत इत्याशयेनोत्तरयति-**कार्यत्वादेवेति** प्रवृत्तिमत्त्वादेवेत्यर्थ । **तस्मिन् कार्ये इति,** घटाद्यात्मना प्रवृत्तिविषयीभूते वस्तुनि भावाभावात्मके इत्यर्थ । प्रतिनियतविषयत्वमेव दर्शयति-**स्वो विषय इति** । **तस्य तत्रेति,** उपादानस्य सति नियतत्वाद्भावो विषय., क्रियाया असति नियतत्वादभावो विषयो यदुच्यते-

सत्येव नियतत्वादभावो विषयः, उक्तवत्, ते चोपादानक्रिये स्वस्वविषये नियते इति कथं ज्ञायते? एकस्योभयात्मकत्वात्–सदसदात्मकं ह्येकं कार्यं मयाऽभ्युपगतं त्वया च दोषामिधित्सया, तस्मादेकस्योभयात्मकत्वात्, यद्यदुभयात्मकमेकं तस्य तस्य स्वविषयनियतता दृष्टा, एकपुरुषनियतपितृपुत्रत्ववत्, न ह्येकस्येत्यादिदृष्टान्तव्याख्यानं यावन्न तु नियमाभाव इति, एवमित्यादिदार्ष्टान्तिकव्याख्यानमिति, नियमाभावसाधर्म्यप्रदर्शनं दोषाभावप्रदर्शनम्, उभयैकत्वमेव च विशेषहेतुः, तस्य विषयनियतत्वान्नास्ति विपर्ययप्रसङ्गः, तस्मात् पूर्वाभ्यां श्रेयस्त्वमेव।

अभ्युपेत्यापि विपर्ययप्रसङ्गमपि—

**विपर्ययप्रसङ्गापत्तावप्येवंविधार्थतैव, सदसदात्मनो वस्तुनोऽसद्भागमाश्रित्योपादाननियमाभाव एव, अनुपादानसत्तादिभावसामान्यलभ्यस्वरूपत्वात्, अस्य नोपादाननियमोऽस्ति, सद्भागमाश्रित्य क्रियाया अभाव एव, तस्य वादिनः सर्वस्य तथात्वादसन्नाम किञ्चिन्नास्ति।**

(**विपर्ययेति**) विपर्ययप्रसङ्गापत्तावप्येवंविधार्थतैव–अनेकान्तसिद्धेर्न पापस्य गन्धोऽपि सदसदात्मनो वस्तुनो योऽसौ पर्यायार्थोऽसद्भागो मृदि घटाभावः तमाश्रित्योपादाननियमाभाव एव, कस्मात्? अनुपादानसत्तादिभावसामान्यलभ्यस्वरूपत्वात्–मृद्द्रव्यादेः प्रागुत्पत्तेः कार्यमसदेव समवाय्यसमवायिकारणसान्निध्ये जायते, न तस्योपादानेनार्थः कश्चित्, उत्पन्नं सत् सत्तयाऽभिसम्बध्यते द्रव्यगुणकर्माख्यं द्रव्यत्वेन द्रव्यं गुणत्वेन गुणः कर्मत्वेन कर्मेत्यभिभावैः सामान्याख्यैर्लभ्यस्वरूपश्चास्येति नैव कार्यस्योपादान-

सैद्धार्थीयैरित्यादिना ग्रन्थेन प्रागुपदर्शितवदित्यर्थः। उपादानक्रियये सत्यसन्नियतता साधयति–**न चेति,** एकस्योभयात्मकतोभयवादिसिद्धेति दर्शयति–**सदसदात्मकमिति,** मया प्रमाणेन त्वया चाभ्युपगमवादेनाभ्युपगतमिति भाव। दृष्टान्तमाह–**एकपुरुषेति,** यथैक एव पुरुषरूपोऽर्थः कञ्चित् प्रति पुत्रः कञ्चिच्च प्रति पिता भवति, तत्र पुरुषापेक्षया विशेषाभावेऽपि पितृत्वं पुत्रत्वापेक्षमेव नियतम्, न पितृत्वापेक्षम्, पुत्रत्वं च पितृत्वापेक्षमेव, न पुत्रत्वापेक्षम्, तथा प्रकृतेऽपीति भाव। न तु नियमाभाव इति न विपर्ययप्रसङ्ग इति च प्रदर्शनं यथा न नियमाभावस्तथा विपर्ययप्रसङ्गोऽपि नेति साम्यप्रदर्शनं विज्ञेयमित्याह–**नियमाभावेति**। नास्ति विपर्ययप्रसङ्ग, उभयैकत्वात्, नियमाभावाभाववदिति मानं भाव्यमित्याह–**उभयैकत्वमेव चेति,** यदुभयात्मकमेकं तस्य विषयनियतत्वान्न तत्र विपर्ययप्रसङ्गोऽस्ति यथा पितृपुत्रात्मकत्वेऽपि पुरुषस्य पितृपुत्रत्वयो स्वस्वविषयनियतत्वान्न तत्र नियमाभावस्तदुभयाभावस्तद्वदिति भाव। उभयात्मकैकवस्तुत्वे विशेषहेत्वभावाद्विपर्ययप्रसङ्गो यो भवतोक्तस्तं स्वीकृत्याप्यनेकान्तसिद्धिं दर्शयति–**विपर्ययेति**। योऽयमसद्भागमाश्रित्योपादाननियम सद्भागमाश्रित्य च क्रियाप्रसङ्ग उपदर्शितस्तत्रापि नैकान्तता, किन्तु अनेकान्तसिद्धिरेवेत्याशयेन व्याकरोति–**अनेकान्तसिद्धेरिति**। उत्पत्तिपूर्वकाले मृद्द्रव्यादावसदेव घटादि कार्यं जायते, उत्पन्नत्वादेव घटादिकार्यस्य उपादानादिकारणेन न किञ्चित् प्रयोजनमस्तीति कार्यमुपादानानपेक्षमेव, अवस्थाविशेषोऽयं जायते, उत्पद्यत इत्यादिशब्दैरुच्यते समुद्युक्तकारकव्यापारप्रनिष्ठ घटादि, व्यावृत्तवस्तुव्यापारो घटादिस्तु समाश्रितसत्तादिसामान्य अस्ति–आत्मानं बिभर्ति सत्ता भावयतीत्यादिव्यपदेशभाग्भवतीति उपादानानपेक्ष सत्तादिभावसामान्येन लभ्यस्वरूपो घटादिर्भवतीति नैवास्त्युपादाननियम इत्याशयेनाह–**अनुपादानेति**। एतदेव व्याचष्टे–**मृद्द्रव्यादेरिति**। **न तस्येति,** कार्यस्योपादानेन न किञ्चित् प्रयोजनम्, परिनिष्पन्नस्वरूपत्वादित्यर्थ। **उत्पन्नमिति,** उत्पन्नं कार्यं स्वावधारणफलकं सत्तादिसम्बन्धमनुभवति, अस्ति–आत्मानं बिभर्ति न ध्वसते द्रव्यमेव न गुण इत्येव फलकं द्रव्यत्वादिसम्बन्धमनुभ-

१ सि. क. क्ष० डे० तूभयाभावः। २ सि. क. क्ष. डे. °भावाप्र०।

नियमोऽस्तीत्यनेकान्तः सिद्ध्यतीति, सद्भागमाश्रित्य च क्रियाया अभाव एव–यो घटस्य कार्यस्य सत्त्वमेव द्रव्यार्थतो वाञ्छति, तस्य क्रियाया नास्त्येव प्रयोजनम्, नैव क्रियाऽस्तीत्यनियमः, किं कारणं? तस्य वादिनः सर्वस्य सर्वात्मकत्वात्, मृत्पिण्डो हि युगपदयुगपद्भाविसर्वधर्मात्मकः, तेन प्रकारेण तथा, द्रव्यार्थवादप्रकारेण, तथा भावस्तथात्वं सर्वसर्वात्मकत्वं, तस्मात्तथात्वादसन्नाम किञ्चिन्नास्ति, अतोऽयं तमसतोऽभावात् प्रत्येकनयविवक्षायामन्यतराश्रय इतरस्याभावान्न त्वत्र विशेषहेतुनार्थ एव ।

**यत्तूच्यते सदसतोर्वैधर्म्यादेकस्मिन्नेव कार्ये प्रागुत्पत्तेः सदसच्छब्दार्थयोरेकाधिकरणभावेन प्रयोगो नास्ति–सदेवासदित्यनुसन्धानं नास्त्येकाधिकरणभावेनेति प्रयोगानुपपत्तिः, एषोऽर्थो दर्शितः कार्ये सदसत्ता नेति सप्तम्यभिधाने नेति, एतदपि न किञ्चित्, इतरेतरभूताभूततत्त्वं जगत्, न केवलं कार्यमेव सदसत्, वृत्तावृत्तपर्यायार्थेनाविभक्तद्रव्यार्थभावनायां निखिलं जगत् सदेवासत्, किन्तूभयपर्यायप्रत्यपेक्षया भावयितव्ये निःसन्दिग्धमेव वस्तुनः स्वात्मनि, तथा चेतरेतराभावरूपेण स्वेन च भावरूपेण सदेवासत् सर्वमिति न सदसतोर्वैधर्म्यम् ।**

**यत्तूच्यत इत्यादि**, यावत् सप्तम्यभिधानेन[1] दर्शयति, सूत्रार्थः कृतव्याख्यातः सदसतोर्वैधर्म्यादिति, किमुक्तं भवति परस्परविरोधात् समानाधिकरणभावेनैकस्मिन्[2] प्रागुत्पत्तेः सच्चासच्च तदेवेति [सद]सच्छब्दार्थयोर्विरोधादेकस्मिन्नेव कार्ये कुतः सत्त्वं प्रागुत्पत्तेः? किन्तर्हि? असत्त्वमेवेति सदसच्छब्दार्थयोरेकाधिकरणभावेन प्रयोगो नास्तीति, तद्व्याचष्टे–सदेवासदित्यनुसन्धानं नास्त्येकाधिकरणभावेनेति बुद्ध्या निर्धारणं नास्ति तदभावात् प्रयोगानुपपत्तिः, एषोऽर्थ एकस्मिन्नेव कार्ये सदसत्ता नेति सप्तम्यभिधानेन

वतीत्यर्थः । सद्भागमाश्रित्य क्रियाया नियमोऽपि नेत्याह–**सद्भागमाश्रित्येति** । सदसदात्मके वस्तुनि योऽयं सद्भागो द्रव्यार्थेन तमाश्रित्येत्यर्थः, एतन्मते हि कार्यतयाऽभिमतानां सर्वेषां द्रव्यात्मना सदा सत्त्वान्न किञ्चिन्निर्वर्तनीय रूपमसदस्तीति क्रिया किंकरी स्यादिति क्रियाया अभाव एवेति नास्ति क्रियाया नियम इत्याह–**यो घटस्येति** । हेतुमाह–**तस्य वादिन इति,** द्रव्यार्थेन सत्त्वाभिलाषिणो जलभूम्योः पारिणामिकरसादि वैश्वरूप्यं स्थावरेषु दृष्टम्, तथा स्थावराणां जङ्गमेषु, जङ्गमानां स्थावरेषु, स्थावराणां स्थावरेषु, जङ्गमानां जङ्गमेषु जात्यनुच्छेदेन सर्वं सर्वात्मकमिति वादिनः सर्वसर्वात्मकत्वात्तथात्वान्नाम किञ्चिदस्ति, यदाश्रित्य क्रियानियमो भवेदिति भावः । सर्वसर्वात्मकत्वे निदर्शनमाह–**मृत्पिण्डो हीति** । उभयात्मकैकरूपत्वे विशेषहेत्वभावादित्युक्तौ विशेषहेत्वपेक्षैव नास्ति पर्यायार्थनयाश्रयणे कार्यस्योपादानानपेक्षणाद्द्रव्यार्थनयाश्रयणे चासत एवाभावाद्विशेषहेतुना किं क्रियत इत्याशयेनाह–**प्रत्येकनयविवक्षायामिति** । सदसतोर्वैधर्म्यादिति सूत्रे व्याख्यातमेव पूर्वमित्याह–**सूत्रार्थ इति** । तात्पर्यं वक्ति–**किमुक्तमिति,** सत्त्वमसत्त्वञ्च इतरेतराभावरूपत्वात् परस्परविरुद्धमत एव च तयोर्न सामानाधिकरण्यमिति यदेव सत् न तदेवासदिति प्रागुत्पत्तेः कार्यस्यासत्त्वेन तत्रैव कथं सत्त्वं स्यात् किन्त्वसत्त्वमेव तस्येति भावः । शब्दगतं सामानाधिकरण्यञ्च भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थप्रतिपादकत्वं, तच्च न सदसच्छब्दयोः, एकार्थावच्छेदेन विरुद्धधर्मद्वयप्रतिपत्तिप्रयोजकशब्दद्वयप्रयोगासम्भवात् सत एवासत्त्वेनानुसन्धानं प्रत्यभिज्ञानं न सम्भवतीत्याशयेनार्थं वर्णयति स्वयमेव–**सदेवासदिति,** अनुसन्धानप्रकारोऽयम्, अत्रेदं तात्पर्यं कारणमन्तरेण कार्यस्य जन्माभावात् कार्यजन्म कारणपरतंत्रं तथैव तस्य सत्तापि कारणाधीनैव, अन्यथा क्षणिकवादिवदसत्त्वेनाक्रान्तं सदर्थक्रियाकारि न स्यात्, कार्यमुत्पन्नमेव प्रध्वंसमुपेयात्, असदर्थमेव तत् सृष्टं स्यादिति तत्र सत्तासम्बन्धलभ्यं कार्यस्यात्मभरणं तस्मात् सत्तासम्बन्धपूर्वकाले कार्यमसदेवेति निर्धार्यते । तदर्थसूचकं तद्वचनमुपन्यस्यति–**एषोऽर्थ इति,** अधिकरणबोधकसप्तमीप्रयोगात् सत्त्वासत्त्वयोरेकाधिकरणवृत्तित्वं प्रतिषिद्धं भवति, अन्यथा कार्ये सद-

१ सि. क. सप्तमि० । २ सि. क. सामान्यधि० ।

दर्शितः, अन्यथा कार्यं सदसच्चेति लाघवार्थं ब्रूयात्, एतदपि न किञ्चिदित्याद्युत्तरं यावत् स्वात्मनि, एकस्मिन् घटपटादावर्थे स्वात्मनि, इतरेतरभूताभूततत्त्वं जगत्–घटात्मना घटोऽस्ति, पटात्मना नास्ति, तथेति, स्वेनात्म[ना] भूतत्वमभूतत्वञ्चेतरात्मना, तस्माद्भूताभूततत्त्वं जगदिति व्यापितां दर्शयति–न केवलं कार्यमेव सदसदिति, तथा वृत्तावृत्ताभ्यां पिण्डशिवकपर्यायार्थाभ्यां क्रमभा[विभ्याम]विभक्तो द्रव्यार्थ एकस्तस्य भावना–मृत्पिण्ड एव शिवकीभवति, शिवक एव स्थासकीभवतीत्यादि यावद्घटो यावच्च पांशुर्यावच्च परमाणुरित्यवस्थासु मृत् पिण्डात्मना भवति शिवकाद्यात्मना न भवतीति पिण्डो भावाभावात्मकः, तथा शिवकोऽपि शिवकात्मना भवति न पिण्डात्मना तथोत्तरास्ववस्थास्वितरेतराभावस्वरूपेण स्वेन च भावरूपेण सदसदेव, 'सच्चासत्' (वै० अ० ९ आ० १ सू० ४) इति वचनात्, एवं सकलं जगत् वृत्तावृत्तपर्यायार्थेनाविभक्तद्रव्यार्थभावनायां सदेवासत्, किन्तूभयेत्यादि, किं पुनर्युगपद्भाविनामयुगपद्भाविनाञ्च पर्यायाणां रूपरसादीनां शिवकादीनाञ्च प्रत्यपेक्षया भावयितव्यो यस्य वस्तुनः स्वात्मा तस्मिन् भावयितव्ये, निःसन्दिग्धमेव तदाऽसत्त्वमपीत्यर्थः, तदुपसंहरति तथा चेति गतार्थम् ।

**यदप्युक्तमापेक्षिकं सदसत्त्वं स्याद्वादी किलेत्थं समर्थयति–मृदात्मना घटस्य प्रागुत्पत्तेः सत्त्वम्, घटात्मना चासत्त्वमिति, न, असत्कार्यत्वसिद्धेः–एवं तर्हि मृदात्मनः कर्तव्यत्वाभावात्, क्रियते इति हि कार्यम्, न च मृत् क्रियते घटो हि क्रियते स त्वसन्, तस्मान्न प्रागुत्पत्तेः सदसत्कार्यमिति, अत्र न पूर्वपक्षो नोत्तरपक्षश्च सत्यः ।**

---

सच्चेति समानविभक्तिकनिर्देश एव लाघवात् कुर्यादिति भावः । अथ सदसतोर्वैधर्म्यनिराकरणाय निखिलं जगत् स्वपररूपेण सदसत् भूतमभूतञ्चेति सदसत्त्वयोरेकाधिकरणभावेनैव निर्धारणमस्तीत्याशयेनोत्तरयति–**एतदपि नेति** । सर्वेषां घटपटाद्यर्थानां सर्वथा भावरूपत्वे सर्वसर्वात्मकत्वप्रसङ्गात् प्रतिनियतप्रतीतिव्यवहारादयो न स्युः, सर्वथाऽभावरूपत्वे वा शून्यताप्रसक्त्या हिताहितप्राप्तिनिवृत्त्याद्यभावात् तद्वेदकशास्त्रप्रणयनाद्यनुपपत्तिः स्यादिति स्वरूपेण वस्तूनां सत्त्वं पररूपेण चासत्त्वमवश्यमभ्युपगन्तव्यमिति दर्शयति–**इतरेतरेति** । भूतो घट इत्यादिव्यवहारविषयं भूतत्वं न घटस्य सर्वात्मना, तस्य द्रव्यत्वेनैव नित्यत्वात्, तथा द्रव्यातिरिक्तेनैव रूपेणाभूतत्वं वाच्यं तच्च रूपं पर्याय इति सर्वं वस्तु द्रव्यात्मना भूतं–नित्यं पर्यायात्मना चाभूतमनित्यम्, भूतशब्दस्य त्रिकालवस्तुविषयत्वात्, तस्मादितरेतररूपेण भूताभूतत्वं सर्ववस्तूनां तत्त्वं स्वरूपमिति निखिलं जगदितरेतरभूताभूततत्त्वमिति सर्ववस्तुव्यापित्वमस्य स्वरूपस्येति दर्शयति–**तस्मादिति** । क्रमभाविपर्यायैरेव न सदसत्त्वमित्येतत् ख्यापयितुं प्रथमं क्रमभाविपर्यायैः सदसत्त्वं दर्शयति–**वृत्तावृत्ताभ्यामिति,** वर्तमानावर्तमानपर्यायाभ्यामित्यर्थः, मृत्पिण्ड एव शिवको भवति शिवक एव स्थासकः, स एव कोशः स एव कुसूलः, स एव घटः स एव कपालं स एव कपालिका, सैव शकलं तदेव शर्करा सैव पांशुः स एव रजस्तदेव त्रुटिः सैव परमाणुरित्येवं निरन्तरं वस्तुनः परिणामात् तदेव वस्तु वर्तमानपरिणामेन सत्, अवर्तमानपरिणामेन चासदिति सदसद्रूपमिति भावः । परिणामपरम्परां दर्शयति–**मृत्पिण्ड एवेति** । मृदः सदसद्रूपत्वमाह–**अवस्थास्विति** । तत्र वैशेषिकं वचनमपि दर्शयति–**सच्चासदिति** । क्रमभाविपर्यायैः सदसत्त्वं प्रदर्श्य सहभाविपर्यायैरपि सदसत्त्वं वर्णयति–**किन्तूभयेति,** वस्तुनः स्वात्मनि क्रमिकपर्यायैः सहभाविपर्यायैश्च सदसत्त्वं निःसन्दिग्धमेवेति भावः । ननु पूर्वपक्षतया स्याद्वादिनोऽभिमतमिति यदुपवर्णितं त्वया तदपि स्याद्वादानवबोधविजृम्भितमेवेति त्वदीयः पूर्वपक्षस्तदुत्तररूपतो वर्णितः पक्षश्चासदर्थ एवेति दर्शयितुमाह–**यदप्युक्तमिति** ।

**१ सि. क. क्ष. डे. एकस्मिन्न कस्मिन् । २ सि. क. क्ष. डे. नास्तिपतथेति घटपटादावर्थे तस्वात्मनि । ३ सि. क. सदपी० ।**

**यदप्युक्तमापेक्षिकमित्यादि**, स्याद्वादी किलेत्थं सदसत्त्वं समर्थयतीति पूर्वपक्षः, मृदात्मना घटस्य प्रागुत्पत्तेः सत्त्वम्, निष्पत्त्युत्तरकालमपि सत्त्वदर्शनात्, तदात्मकत्वान्मृदुपादानोपपत्तिः, घटात्मना चासत्त्वाद्घटाद्यर्थक्रियोपपत्तिरिति, अत्र किलोत्तरं **कटन्दीकार** आह न, असत्कार्यत्वसिद्धेः, एवं तर्हीत्यादि व्याख्या–मृदात्मनः कर्त्तव्यत्वाभावात्, क्रियत इति हि कार्यम्, न च मृत् क्रियते, घटो हि क्रियते स त्वसन्निति, तदुपनयति–तस्मान्न प्रागुत्पत्तेः सदसत्कार्यमिति, अत्र न पूर्वपक्ष इत्याद्याचार्यो ब्रूते अत्रैवं पूर्वोत्तरपक्षयोर्न किञ्चित् सत्यम्–प्रागतीतेषु पूर्वपक्षोऽपि कश्चित् सत्यः स्यात्, विकलादेशवशार्पणात्, यथा सद्भागमाश्रित्योपादानमसद्भागमाश्रित्य क्रियाभाव इत्यादि, इह तु न पूर्वपक्षो नोत्तरपक्षः सत्यः ।

पूर्वपक्षासत्यत्वं तावत्—

**को हि नाम सोऽनेकान्तवादी ब्रूयात्–प्राक् मृदात्मना सत्, घटात्मना चासत् कार्यमिति, यदि ब्रूयादनेकान्तवादत्याग एकान्तवादाभ्युपगमश्च, एवं हि मृदोऽकार्यत्वेऽसत्कार्यवाद एवावस्थापितः स्यात्, ततश्चैवं ब्रुवाणेषु को भेदः, अभूत्वोत्पत्तिवाचकप्राक्शब्दोच्चारणादेव चासत्त्वैकान्तः साक्षादभ्युपगतः, ततः किमर्थं विवदेत, अत्यन्तासमीक्षितभाषिणैकान्तवादिनापि न तुल्यतामेत्यसौ ।**

**को हि नाम सोऽनेकान्तवादीत्यादि**, एवं ह्यसत्कार्यवाद एवावस्थापितः सदसत्कार्यमवस्थाप्य कोऽनेकान्तवादी, एवं ब्रूयादित्यादि, प्रागित्यादि तस्यैव प्रत्युच्चारणं यावद्घटात्मना चासदिति, न ब्रूयादेवेत्यभिप्रायः, यदि ब्रूयादनेकान्तवादत्याग एकान्तवादाभ्युपगमश्च, कुत इति ? तद्दर्शयति–एवं हि मृदोऽकार्यत्व इत्यादि गतार्थो यावत् को भेद इति, य एवैष वैशेषिको बौद्धो वा स्यादार्हतोऽपीति, किञ्चान्यत् अभूत्वोत्पत्तीत्यादि यावदभ्युपगतः, प्राक्शब्दो ह्यभूत्वो[त्प]त्यर्थवाची, घटावस्थातः पूर्वावस्था-

तमेव पूर्वपक्षमनुवदति–**मृदात्मनेति**, स्पष्टम् । अस्य स्याद्वादिमतत्वेनोपन्यस्तस्य पूर्वपक्षस्योत्तरं कटन्दीकृतोक्तं वर्णयति–**अत्र किलोत्तरमिति**। घटो मृदात्मना सन् घटात्मना चासन्नित्यभ्युपगमे कार्यभूतस्य घटात्मना घटस्य प्रागसत्त्वात् मृदात्मना घटसत्त्वस्य प्राक् सत् क्रियाविषयत्वाभावात् क्रियाविषयीभूतं कार्यं कथं सदसदित्याशयेनाह–**मृदात्मन इति**। मृदात्मनो घटस्य कृतिविषयत्वाभावादित्यर्थः, मृदात्मा घटो हि मृदेव, सा च सिद्धैव, न तु साध्यरूपेत्याशयेनाह–**क्रियत इतीति**। कृतिविषयीभूतश्च घटस्वरूपेण घटः, स प्रागसन्नेवेति दर्शयति–**घटो हीति**। त्वदुपवर्णितस्याद्वादस्य स्याद्वादसिद्धान्तपरिज्ञानवैधुर्यविलसितत्वेनास्याद्वादत्वादसत्यत्वे तदुत्तरवर्णनमपि सुतरामसत्यमेवेति मनसिकृत्याह–**अत्रैवमिति**, मृदात्मना घटस्य सत्त्वमित्यादावित्यर्थः । तत्पूर्वतनेषु वादेषु कश्चिदंशः सत्योऽस्ति, वस्त्वंशमात्रमवलम्ब्याविरोधेन विधिप्रतिषेधविधानात्, सद्भागमाश्रित्य घटस्योपादाननियमो नान्याश्रयेण, असद्भागमाश्रित्य क्रियाया भावो नान्याश्रयेणेति वस्तुपर्यायघटावलम्बनेनोपादानक्रिययोरविरोधेन विधानात् कश्चिदंशः सत्योऽस्तीत्याह–**प्रागतीतेष्विति** । तत्रादौ पूर्वपक्षासत्यत्वं दर्शयति–**को हि नामेति**। प्रागुत्पत्तेर्मृदात्मना सन् घटात्मना चासदित्युक्तावसत्कार्यवाद एव व्यवस्थापितः स्यात्, तस्माचायं सिद्धान्तः स्याद्वादिन इत्याह–**एवं हीति**। मृद एकान्तेनाकार्यत्वमभ्युपेत्य मृदात्मनेत्याद्यभिदधानो यः कोऽपि भवेत् सोऽसत्कार्यवाद्येव स्यात्, नास्ति कश्चिद्वक्तृभेदोऽर्थभेदाभावादित्याह–**एवं हि मृद इति**। मृदात्मना घटः प्राक् सन्नित्युक्तौ कथमसत्कार्यस्यावस्थापनमित्यत्राह–**अभूत्वोत्पत्तीति**, अत्र प्राक्शब्दोऽभूत्वोत्पत्तिबोधकः । स कथमित्यत्राह–**घटावस्थात इति**, प्रागसन् घटो भवति, अत्रासच्छब्दसमभिव्याहृतः

१ सि. क. कृत्य इति । २ सि. क. °गमः । ३ सि. क. °भूत्वोत्पत्यर्थ० ।

वाचित्वात्, स चाभूत्वोत्पत्त्यर्थः प्राक् शब्दोच्चारणादेव साक्षादभ्युपगतः तेन स्यात्, ततः किमर्थं विवदेत, अभ्युपगम्यासत्त्वैकान्तं मृदात्मना सत् घटात्मना चासत्कार्यमिति, तथापि भ्रान्तिमपि न ब्रूते, किञ्चान्यत्—अत्यन्तासमीक्षितभाषिणैकान्तवादिनापि न तुल्यतामेत्यसौ—घटादन्यस्या मृद आत्मा तेनात्यन्तमन्यो घटो भवति स्वेन च घटात्मना न भवतीत्येवं ब्रुवन् प्रत्यक्षादिविरुद्धमत्तोन्मत्तकादिवत् स्यात् सोऽपि चैकान्तवादी प्रत्यक्षादिविरुद्धं किञ्चित् परिहरतीति ।

किञ्चान्यत्—

**देशकालभेदलक्षणोभयपर्यायमात्रत्वाच्चैवमयमसद्वाद एव स्यात्, इत्थं पुनः कोऽनेकान्तवादी ब्रूयाद्रूपं रसात्मना नास्ति रसोऽपि रूपात्मना कृष्णाद्यपि शुक्लात्मनेत्यादि, धृतिसङ्ग्रहपक्तिव्यूहावकाशदानात्मकपृथिव्याद्यात्मकत्वान्मृदादेर्घटादेश्च कथं मृदमेकामपेक्ष्य मृदात्मनैवास्तीत्यापेक्षिकमसत्त्वमसद्वादिवत्, आपेक्षिकमृदात्मसद्विशेषणात्त्वसदभिधानमेवेदं मृदात्मना सत् घटात्मना चासदिति वचनम्, अभिधेयस्वतत्त्वनिरसननियतत्वात्, यद्वाक्यमभिधेयस्वतत्त्वनिरसननियतं तदसदभिधानं दृष्टम्, यथाऽनुष्णोऽग्निरित्युक्तिरिति, अभ्युदासे तु घटात्मनापि सन्नेव, तद्भावत्वात्, तथा च सत्कार्यत्वोक्तिरेव कृता तथा वदता ।**

**देशकालेत्यादि,** देशतो भेदो रूपरसादीनाम्, कालतो भेदः पिण्डशिवकादीनाम्, स भेदो लक्षणं महामहावस्थायिनामुभयेषां पर्यायाणां ते देशकालभेदलक्षणोभयपर्यायाः, तत्परिमाणं देशकाल[भेद]लक्षणोभयपर्यायमात्रं तद्भावात्—तन्मात्रत्वात्, एवं—अनेन प्रकारेणायमसद्वाद एव स्यात्—रूपं रसादन्यत् तदपि विभज्यमानं कृष्णं पुनरप्येकगुणकृष्णमित्यादि यावत् परमाणुशो विभागादसदेव रूपम्, एवं रसा-

प्राक्शब्दो घटोत्पत्त्यवस्थाप्राक्कालीनां प्रागभवद्भावमवस्थामाह तथा च प्रागभवन् पश्चाद्भवति घटः, अभूत्वोत्पत्तिमान् घट इति यावत्, एवञ्च पूर्वावस्थावाचिप्राक्शब्दमहिम्नाऽभूत्वोत्पत्तिर्गम्यते, तस्मात् प्रागसन्नेव घट इत्येकान्तः प्रागसन् घट इत्युक्त्याऽभ्युपगत इति तत्र वादाभाव एव स्यादिति भावः । मृदात्मना सत् घटात्मना चासत् कार्यमित्यसत्कार्याभ्युपगन्तॄणां येषां केषामपि स्याद्वादिना बौद्धानां वैशेषिकाणां वा कुतः परस्परं वादः स्यादभ्युपगमैक्यात्, यदि तु सोऽभ्युपगमो भ्रान्तिरूप इति स स्याद्वादी ब्रूयात् स्यात्तदा वादः तमपि स न ब्रूत इत्याह—**अभ्युपगम्येति** । अत्रैव तस्य दोषान्तरमाह—**अत्यन्तेति,** सुतरां विचारव्यतिरेकेण प्रमाणासहमर्थं भाषमाणोऽप्येकान्तवादी प्रत्यक्षादिविरुद्धं कदाचित् कञ्चिदंशं परित्यजति, अयन्तु न तथा मृद् घटादत्यन्तं भिन्ना, तस्या अत्यन्तं भिन्नो घटः प्राक् तदात्मना भवति, स्वात्मना च न भवतीति प्रत्यक्षादिविरुद्धभाषित्वात्, न हि किञ्चित् स्वात्यन्तभिन्नात्मना भवति स्वात्मना च न भवतीति, तस्मात् स नैकान्तवादिनापि साम्यतां यातीति भावः । तथावदतः कारणं कार्यस्यासद्वादः प्रसज्यत इति द्रव्याभ्युपगमेनासद्वादमापाद्य सहक्रमभाविपर्यायमात्रपक्षतोऽप्यसद्वादित्वापत्तिमाह—**देशकालेति** । देशान्यत्वप्रयुक्तान्यत्वं सहभाविपर्यायाणां कालान्यत्वप्रयुक्तान्यत्वं क्रमभाविपर्यायाणां लक्षणम्, द्विविधपर्यायतोऽन्यद्वस्तु नास्तीति तन्मात्रमेवेति वादवदयमसद्वाद इति दर्शयति—**देशतो भेद इति,** समुदायरूपेण सहोत्पद्यमानानां रूपरसादीनां परस्परेषां परस्परे एव देशाः, तेभ्यो भेदस्तेषां लक्षणम्, प्रत्येकरूपेणायुगपद्भावितॄणां पिण्डशिवकादीनां परस्परेषां परस्परे एव कालाः, तेभ्यो भेदस्तेषां लक्षणम्, एवंलक्षणपर्यायद्वयमात्रमेव तदुक्तवचनात् प्रतीयते, मृदात्मना सन् घटात्मनाऽसदित्येतावन्मात्रोक्तेरिति भावः । तेन किमित्यत्राह—**अनेन प्रकारेणेति** । असद्वादं दर्शयति—**रूपमिति** । रूपस्यावान्तरविभागकरणात् यावत्परमाणु विभक्तं भवति, एवं रसादयोऽपि विभक्ताः परमाणुं यावत् भवन्ति, तेषां परस्परतोऽन्याऽन्यत्वापादनात् शुक्लादिव्यतिरेकेण रूपस्यासत्त्ववत् शुक्लादीनां सर्वेषामसत्त्वमेव स्यादित्यसद्वाद एवेति भावः । एवमेव दर्शयति—**तदपि विभज्यमानमिति** ।

१ सि. लक्षणभेदासहावस्था० । २ सि. क. कुष्टं ।

दयः, तथा पिण्डादयोऽपीत्यसद्वादः, इत्थं पुनः कोऽनेकान्तवादी ब्रूयात् यथाऽसावसद्वादी ब्रूते रूपं रसात्मना नास्ति, रसोऽपि रूपात्मना कृष्णाद्यपि शुक्लात्मनेत्यादि, न ब्रूयादेवेत्यर्थः, किं कारणम् ? धृतिसङ्ग्रहपक्तिव्यूहावकाशदानात्मकपृथिव्याद्यात्मकत्वान्मृदादेर्घटादेश्च कथं मृदमेकामपेक्ष्य मृदात्मनैवास्तीत्यापेक्षिकं[1] सत्त्वम् ? असद्वादिवत्, कः कुशलो ब्रूयादिति सम्बध्यते, अत्र प्रयोगः—आपेक्षिकमृदात्मसद्विशेषणात्तु असदभिधानमेवेदं मृदात्मना सत्, घटात्मना चासदिति वचनम्, कुतः ? अभिधेयस्वतत्त्वनिरसननियतत्वात्—अभिधेयस्य मृत्पिण्डस्य स्वं तत्त्वं देशभिन्नरूपरससंस्थानादि कालभिन्नरूपरसशिवकादि पांश्वादि धृत्यादिलक्षणभिन्नपृथिव्यादि च, मृदात्मनैवास्ति घटो न रूपादिशिवकार्थ[2]वादिस्वतत्त्वैरिति अ[3]स्य स्वतत्त्वानि सन्त्येव निरस्तानि स्यु[4], तन्निरसने नियतत्वादस्य वाक्यस्य, यद्वाक्यमभिधेयस्वतत्त्वनिरसननियतं तत्तदसदभिधानं दृष्टम्, यथाऽनुष्णोऽग्निरित्युक्तिः, अभिधेयस्वतत्त्वनिरसन[नियतत्व]मसिद्धमिति मा मंस्थाः, सिद्धमेवा[6]वाद्यात्मव्युदसनात्, स्यान्मतं नावधार्य मृदात्मनैव सन्, नान्येनेति ब्रूमः ×[5]किं तर्हि ? मृदात्मना भवन् सन् घटो यदि रूपादिपिण्डादिशिवकार्थ[7]वाद्यात्मभिरपि भ[8]वेद्भवतु नाम तदात्मा को दोषः ? इति, अत्र ब्रूमः, अव्युदासे तु घटात्मनापि सन्नेव, तद्भावत्वात्, ते भावा रूपादिशिवकार्थवादिव्रीह्यादयो घटादयश्चास्या मृदः, तद्भाव[स्य] भावस्तद्भावत्वं तस्मात्तद्भावत्वात्, य[9]था मृदात्मना प्राक्

तथा चैवमसत्त्वं युगपदयुगपद्भाविपर्यायाणामसदेकान्तवाद्येव ब्रूते न तु स्याद्वादीत्याशयेनाह—**इत्थं पुनरिति**। मृदादीनां घटादीनां च पाञ्चभौतिकत्वात् केवलं मृदात्मनैवास्तीति स्याद्वादी कथं ब्रूयादिति हेतुमाह—**धृतीति**, धृतिर्धारणं वर्तनं वा, पृथ्वीधर्मः प्रजानां भूतान्तराणाञ्च धृत्या पृथिवी उपकरोति, सङ्ग्रहो जलधर्मः जलं सङ्ग्रहेण पिण्डीकरणेन गुरुत्वा चोपकरोति, पक्तिः पाचनं तेजो धर्मः तेज आहारपाचनेनोपकरोति, वायुः व्यूहधर्मा सर्वपदार्थानां व्यूहनेनावरलीकरणेन आकाशश्चावकाशधर्मा सर्वेषामवकाशप्रदानेनोपकारक इति धृत्याद्यात्मकपृथिव्याद्यात्मको घटो मृदादि च, तस्मात् घटं त्यक्त्वा एकां मृदमपेक्ष्य मृदात्मनैवास्तीत्युक्तौ एकान्तवाद एवार्यं स्यात्, न तथा सुमर्मीक्षितवाक्यगुणदोषज्ञः स्याद्वादीतरनिरपेक्षं सत्त्वमसत्त्वं वा वक्तुमुत्सहत इति भावः। अमुमेवार्थं प्रयोगतः प्रज्ञापयति—**अत्र प्रयोग इति**. सत्त्वे हि विशेषणं प्रदर्शितं मृदात्मनेति, तेन मृदात्मनैव सत्त्वं गम्यते न तु मृत्पिण्डस्य तत्त्वभूतैः देशभेदलक्षणरूपादिभिः कालभेदलक्षणशिवकादिपांश्वादिभिः सङ्ग्रहपक्त्याद्यात्मकजलादिभिश्च सत्त्वमिति मृदात्मना सदित्यादिवचनमसदभिधानमेव, मृच्छब्दाभिधेयानां स्वतत्त्वानां रूपादिशिवकादिजलादीनां निरसने नियतत्वात्, यथा अग्नेरुष्णं तत्त्वं तन्निरसनं नियतमनुष्णोऽग्निरिति वचनमसदभिधानमेव तद्वदिति भावः। यद्यपि मृदात्मना सदित्यत्र मृच्छब्दाभिधेयो यावानर्थस्तावदात्मना सन्निति नाभिधेयनिरसननियतमित्यसिद्धो हेतुः, तथापि मृदात्मनेत्यस्य मृत्पिण्डपर्यायरूपेणेत्यर्थः, एतस्मिन्नर्थे गमकश्च घटात्मना न सदिति वाक्यम्, अन्यथा घटस्यापि मृच्छब्दाभिधेयत्वात् तद्रूपेणापि सत्त्वात्, तस्मान्नासिद्धो हेतुरित्याशयेनाह—**अभिधेयस्य मृत्पिण्डस्येति**। व्याप्तिं ग्राहयति—**यद्वाक्यमिति**। हेत्वसिद्धिं निराचष्टे—**अभिधेयेति**। ननु सर्वं वाक्यं सावधारणमिति न्यायमभ्युपेत्य मृदात्मनैवेत्यर्थे मृदात्मनेति न ब्रूमो येनाभिधेयस्वतत्त्वनिरसननियतं वाक्यं स्यात्, किन्तु तन्नियमानभ्युपगमेनैव, तथा च मृच्छब्दाभिधेयाखिलतत्त्वात्मना घटः सन् स्यात् को दोष इत्याशङ्कते—**स्यान्मतमिति**। तथा सति घटात्मनापि सत्त्वप्रसक्त्या घटात्मना न सन्निति वचनं निरर्थकं स्यादित्याशयेनोत्तरयति—**अव्युदासे त्विति,** अभिधेयस्वतत्त्वनिरसनानङ्गीकारे त्वित्यर्थः। हेतुमाह—**तद्भावत्वादिति**। ते भावा अस्यास्तद्भावः, तस्य भावस्तत्त्वं तस्मादिति विग्रह इति सत्त्वाऽर्थवर्णनपूर्वकं विग्रहमाह—**ते भावा इति**। यो यद्भावः स तेन रूपेणापि सन्नेवेत्यत्र दृष्टान्तमाह—**यथेति**। उपनयति—

१ सि. क. °कम०। २ सि. क. °थपादि०। ३ सि. क. न्यस्य०। ४ सि. क. °वापाद्या०। ५ क ××। ६ सि. क. °वापाद्या०। ७ सि. क. भवन्न०। ८ सि. क. °थपादि। ९ सि. क. घटात्मना।

कार्यमुत्पत्तेः सत्, तथा[1] घटात्मत्वात्, अपिशब्दात् सर्वात्मकत्वात् शिवकादिपांश्वादिव्रीह्याद्यात्मनापि सत्, तथा चासत्कार्यत्वानुक्तिः सत्कार्यत्वोक्तिरेव[2] कृता तथा वदतेति, तस्मान्न स्याद्वादिन एवमाहुः[3] एकान्तवादिन इवानपेक्ष्य पूर्वापरम् ।

कथं तर्ह्याहुरिति चेदत आह—

**सदसदात्मकैकं वस्तुतत्त्वं द्रव्यार्थपर्यायार्थोभयलक्षणं जैना उपवर्णयन्ति खपुष्पवदन्यथाऽसम्भवात्, द्रव्यशब्दमपि मृदादिरूपाद्यतीतानागतवर्त्तमानभेदाभेदार्थं पर्यायशब्दं सर्वाभेदमेदार्थं तेष्वेव, तस्मादुभयोरुभयार्थत्वम् ।**

**सदसदात्मकेत्यादि,** द्व्यात्मकं वस्तुतत्त्वमित्येतस्यार्थस्य प्रत्यक्षीकरणार्थं जैनाः- स्याद्वादिन एकमेवात्मानं परमार्थं द्रव्यार्थतः सत्त्वात् पर्यायार्थतोऽसत्त्वात्तदुभयलक्षणमुपवर्णयन्ति, तादृग्वस्त्विति प्रतिपादितत्वात्, खपुष्पवदन्यथाऽसम्भवात्- उभयरूपैकात्म्याभावादेकरूपस्य द्रव्यार्थात्मनः पर्यायार्थात्मनो वा निर्भेदत्वान्निर्बीजत्वाच्च खपुष्पवदतिप्रसङ्गात् सदसद्रूप एवात्मा वस्तुन इति, द्रव्यशब्दव्याख्या- द्रव्यशब्दञ्च मृदादिरूपाद्यतीतानागतवर्त्तमान[भेदा]भेदार्थं वर्णयंतीति वर्त्तते- मृदः पिण्डशिवकादयः क्रमभुवः, सहभुवः रूपरसादयश्च भिन्नाः त्रिषु कालेषु मृदादयो वर्तमानाश्च रक्तत्वादयो वृत्तहुण्डादयश्च ते च भिन्ना अप्यभिन्नाः स्वां मूर्त्तिमनतिवर्त्तमानत्वादिति भेदाभेदार्थमेव द्रव्यशब्दं वर्णयन्ति, पर्यायशब्दं सर्वाभेदभेदार्थं तेष्वेव- त्रिष्वेव त्रिकालवर्त्तमानकालवर्त्तिषु जातिं भिन्दन्तं वर्णयन्ति, तस्मादुभयोरुभयार्थ[त्व]म् ।

---

**तथेति ।** घटात्मनापीत्यपिशब्देन सार्वात्म्यप्रतीते सर्वरूपेणापि सत्त्वप्रसक्त्याऽसत्कार्यवादता भग्ना सत्कार्यवादतैव च प्रसक्ता, अत एव च स्याद्वादी नैवं ब्रूत इत्याह- **अपिशब्दादिति । पूर्वापरमिति.** 'विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम्' इति सूत्रेण द्वन्द्वे वैकवद्भाव । स्याद्वादिनस्तर्हि कथमाहुरित्यत्राह- **सदसदिति ।** व्याचष्टे- **द्व्यात्मकमिति,** द्वौ आत्मानौ यस्य तद् द्व्यात्मकं तत्त्वं सर्ववस्तूनां स्वभाव, अयमर्थ सामान्यतोऽप्रत्यक्ष, तस्य विशेषेन प्रत्यक्षीकरणार्थं स्याद्वादिनो हेतुमुखेन वर्णयन्तीति भाव । वर्णनप्रकारमाह- **एकमेवात्मानमिति ।** एकस्योभयरूपैकात्म्याभावेऽसम्भवं वस्तुतत्त्वस्य दर्शयति- **उभयरूपेति.** यदि केवलं द्रव्यार्थात्मकं वस्तु तर्हि तस्यैकत्वेन परिदृश्यमाना घटपटकटमठादिभेदा न स्यु, यदि च केवल पर्यायात्मकं तथापि प्रत्यक्षादिप्रमाणप्रतिपन्नस्य पिण्डशिवकस्थासकादिपर्यायाऽऽत्मकमृद्द्रव्यस्य निवृत्तेस्तद्व्यतिरिक्तपिण्डशिवकस्थासकादिपर्यायाणामपि प्रत्यक्षाद्यवगतस्य निवृत्तिप्रसङ्ग, न ह्यबाधितप्रमाणविषयस्य सामान्यस्य निवृत्तिर्युक्ता, सर्वभावनिवृत्तिप्रसङ्गेन सर्वव्यवहारविलोपापत्तेः, तस्मात् यद्यदात्मकं तत्तदभावे न भवति, पिंडाद्यभावे मृद्वत्, असदात्मकञ्च सत् तस्मात् तदभावेऽसदपि न स्यात्, तथा सदात्मकमसत् तदभावे न स्यात्, न चैवमिष्टम्, तस्मात् सदसदात्मकं वस्त्विति भाव, निर्भेदत्वात् निर्विशेषत्वात्, द्रव्यार्थात्मैकरूपत्वेऽतिप्रसक्तेर्हेतु, निर्बीजत्वात्- निःसामान्यत्वात्, अयं पर्यायार्थैकरूपत्वेऽतिप्रसक्तेर्हेतु । अर्प्यमाणद्रव्यपर्यायावपि नैकान्तेन द्रव्यपर्यायरूपावित्याशयेन द्रव्यपर्यायशब्दार्थमाह- **द्रव्यशब्दञ्चेति,** द्रव्यस्य पर्यायात्मकत्वात् पर्यायस्य च द्रव्यात्मकत्वात्तयोरत्यन्तभेदे खपुष्पवदभावप्रसङ्गाद्द्रव्यमपि द्रव्यपर्यायरूपम्, पर्यायोऽपि द्रव्यपर्यायरूप, द्वयोस्तु विशेषस्तयो, यदा पर्यायं गौणीकृत्य द्रव्यं प्रधानप्रतीतिविषयो भवति, तदा तद्वस्तु द्रव्यशब्दवाच्यं भवति, तस्माद्गौणीकृतभेदात्मकः प्रधानीकृताभेद द्रव्यशब्दार्थ, भेद पर्याय, अभेदो द्रव्यम् । यदा च द्रव्यं गौणीकृत्य पर्याय प्रधानप्रतीतिविषयो भवति तदा तद्वस्तु पर्यायशब्द वाच्यं भवति तस्माद्गौणीकृताभेदात्मक प्रधानीकृतभेद पर्यायशब्दार्थ, एवं द्रव्यशब्दं भेदाभेदार्थं पर्यायशब्दञ्चाभेदभेदार्थं जैना उपवर्णयन्तीति भाव । **त्रिकालेति,** त्रिकालवर्त्तिषु मृदादिषु वर्त्तमानकालवर्त्तिषु

१ सि. क. तदा । २ सि. क. सत्कार्योक्ति० । ३ सि. क. °मावकुरेका० । ४ सि. क. दर्शीवप्र० । ५ डे. इदं पदानस्ति ।

न केवलं शब्दार्थकथनमात्रादेवोभयार्थत्वम्, किं तर्हि ? वस्तुस्वरूपणमपि क्रियते तद्यथा—

**मृदात्मानं घटात्मानं द्रव्यार्थपर्यायार्थम्, द्रव्यं हि घटो यावद्द्रव्यार्थमत्यन्तसन्, पर्यायस्तु यावत् पर्यायार्थमसन्, यथा च घटात्मा मृदप्येवम्, इदमपि च कुतो निष्पन्नेऽपि घटे मृत्त्वदर्शनात् मृदात्मकस्योपादानम्, न पुनर्धृत्यादिवत् सङ्ग्रहादिदर्शनाज्जलाद्यात्मकस्येति ? तस्मान्न मृद एव दर्शनमुभयथाऽपि ।**

**मृदात्मानमिति,** मृदात्मानं द्रव्यार्थपर्यायार्थं, वर्णयन्तीति सम्बध्यते, घटात्मानञ्च द्रव्यार्थपर्यायार्थञ्चेति, तयोर्यथाक्रमं व्याख्या द्रव्यं हीत्यादि–द्रव्यार्थस्य यावद्द्रव्यार्थं घटोऽत्यन्तसन्निति घटस्यैव पूर्वोत्तरावस्था मृदादिर्व्रीहिबीजादिर्भवतीति प्रागपि भावितार्थम्, पर्यायस्त्विति, पर्यायार्थस्य यावदसन्निति तद्विपर्ययेण गतार्थम्, यथा च घटात्मा मृदप्येवं द्रव्यार्थपर्यायार्थाभ्याम्, इदमपि च कुत इत्यादि, यदुच्यते निष्पन्नेऽपि घटे मृत्त्वदर्शनात् मृदात्मकस्योपादानमित्येषोऽपि विशिष्टपार्थिवमृत्त्वदर्शनेनैकान्तः कुतः सम्भवति ? सङ्ग्रहपक्तिव्यूहावकाशदानधर्मजलानलानिलगगनव्युदासेन धृत्यादिधर्मपृथिव्याद्यात्मकतैवेति, तत्प्रदर्शयति–न पुनर्धृत्यादिवत् सङ्ग्रहादिदर्शनादित्यादि, तस्मिन् वस्तुनि विद्यमानसर्वधर्मदर्शनानि यावदनिर्देश्यञ्चेति, तस्मान्न मृद एव दर्शनमुभयथापि यदि मृदि मृदात्मदर्शनमथ घटे मृदात्मदर्शनमिति ।

---

रक्तत्वादिष्वित्यर्थः । द्रव्यशब्दार्थं व्याकरोति–**मृद इति** । पर्यायशब्दार्थं व्याकरोति–**तेष्विति** रूपादिपर्यायेषु नित्यनया वर्तमानं द्रव्यं पर्यायतः शकलीकरणादभेदभेदः पर्यायशब्दार्थ इति भावः । अथ द्रव्यशब्दपर्यायशब्दयोरर्थव्याख्यानादेव द्रव्यपर्यायावुभयलक्षणाविति न मन्तव्यं, किन्तु वस्तुस्वरूपस्य निरूपणमपि द्रव्यार्थपर्यायार्थाभ्यां क्रियत इत्याह–**वस्तुस्वरूपणमपीति** । तद्दर्शयति–**तद्यथेति** मृदात्मा द्रव्यतः पर्यायताञ्च प्राप्त इति वर्णयन्तीति भावः, अनेन द्रव्यस्योभयार्थत्वमुक्तम् । पर्यायस्योभयार्थत्वमाह–**घटात्मानञ्चेति,** घटो हि मृदः पर्यायविशेषोऽतः पर्यायतां प्राप्तः, मृदात्मनो घटस्यैव च प्राचीनमृत्पिण्डाद्यवस्थाः अर्वाचीनाश्च कपालकपालिकाशकलशर्करापांशुरजस्त्रुटिपरमाण्वादिव्रीहिबीजादयोऽवस्था इति द्रव्यतां प्राप्तोऽत एवात्यन्तसन्निति भावः । तद्दर्शयति–**घटस्यैवेति,** मृत्पिण्डादिव्यतिरिक्तस्य घटस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भादसन् घटः, मृत्पिण्डाद्यपि च रूपरसादिव्यतिरिक्तस्याभावात् रूपाद्यपि कृष्णादिव्यतिरिक्तस्याभावात् कृष्णाद्यपि चैकगुणकृष्णादिव्यतिरिक्तस्याभावादसदित्येवं यावत् परमाणुशो विभजनादसत्त्वात् पर्यायार्थतो घटोऽसन्निति भावः । तदेवं मृत् मृदपि घटोऽपि घटश्च मृदपि घटोऽपि द्रव्यार्थपर्यायार्थाभ्यामित्येवमवस्थिते वस्तुस्वरूपे यद्भवता निष्पन्नेऽपि घटे मृत्त्वदर्शनात् मृदात्मा घट उपादानमिति विलक्षणधृतिधर्मपृथिव्यात्मकमृत्त्वदर्शनात् घटो मृदेव, तस्मादत्यन्तसन्नित्येकान्त उच्यते तत् कथं सम्भवतीत्याशयेनाह–**यथा चेति** । जलादिधर्माणामपि तत्र दर्शनमस्तीति प्रदर्शयति–**सङ्ग्रहेति** । धृत्यादिधर्मपृथिव्याद्यात्मकत्वदर्शनेऽविशिष्टेऽपि कथमुच्यते धृतिधर्मपार्थिवमृत्त्वदर्शनेन मृदेव घटो न तु जलादि, सङ्ग्रहादिधर्मजलाद्यात्मकत्वेऽपीत्याशयेनाह–**न पुनरिति** । तथा च घटे यावद्धर्मदर्शनं तावदात्मको घट इत्याह–**तस्मिन् वस्तुनीति** । तथा च द्रव्ये मृदि पर्याये घटे वा यावद्द्रव्यार्थदर्शनं तावन्मृद्घटौ द्रव्यमेव, न तु मृदात्मकतादर्शनमात्रान्मृदेवेति निरूपयति–**तस्मान्न मृद एवेति,** मृदि मृदात्मदर्शनं वा भवतु घटे मृदात्मदर्शनं वा भवतु, उभयथा न तत्र मृद एव दर्शनं वक्तुं युक्तम्, किन्तु मृदोऽपि दर्शनमित्येव, तथा च मृदोऽपि दर्शनान्मृद् घटो वा मृदपीति भावः । प्राक् घटस्य घटात्मनाऽसत्त्वात् क्रियोपपन्नेति जैनोक्तिरूपनो यदुक्तं त्वया तदपि तन्मतापरिज्ञानमूलमेवेति निरूपयितुं

---

१ सि. क. क्ष. डे. मृदप्येव । २ सि. क. विशिष्टपा० । ३ सर्वप्रतिषु °दर्शनमित्यादि ।

यदप्युच्यते घटात्मना चासत्त्वात्[1] क्रियोपपन्नेत्येवं किलार्हत[2] आह, अत्रापि कुत एतदित्याद्युत्तरम्[3], नैवमार्हतो ब्रूते घटात्मनाऽसत्त्वादसदेव कार्यमिति, किं तर्हि ? सन्नपि घट इति ब्रूते, मृत्तत्त्वघटसत्त्वात्, तद्दर्शयति–

**असत्त्वाद्घटात्मनेति कुत एतत् ? न पुनर्मृत्तत्त्वघटसत्त्वात्, तत्त्व एवानुभवक्रमप्राप्तेः, तत्प्रत्यग्रादिवत् ।**

(**असत्त्वादिति**) असत्त्वाद्घटात्मनेति कुत एतत् ? न पुनर्मृत्तत्त्वघटसत्त्वात्–तत् पुनः सत्त्वं मृत्तत्त्वस्य घटस्य तत्त्व एवानुभवक्रमप्राप्तेः–क्रमजन्मघटपर्यनुभवः क्रमेण प्राप्यते, तत्त्वे-द्रव्यार्थतोऽवस्थितस्वरूप एव वस्तुनि मृदाख्ये, तत्प्रत्यग्रादिवत्–यथा घटस्य प्रत्यग्रेषन्मध्यममध्यमपुराणतादिभावा घटतत्त्वे व्यवस्थितस्यैव तथैव मृत्तत्त्वे एवानुभवक्रमप्राप्तेर्घटसत्त्वम्, तस्मादार्हतोक्त्यपरिज्ञानादसाधूक्तम् ।

किञ्चान्यत्–

**यदपि च न, असत्कार्यत्वसिद्धेः, एवं तर्हि मृदात्मनः कर्तव्यत्वाभावात्, क्रियत इति हि कार्यम्, न च मृत् क्रियते, घटो हि क्रियते, स त्वसन्, तस्मान्न प्रागुत्पत्तेः सदसत् कार्यमिति, एतदपि नैव, असत्कार्यत्वसिद्धिवत् सत्कार्यत्वसिद्धेः, अकर्तव्यत्वान्मृत्तत्त्वस्य घटादेः सदेव कार्यमिति भावानां कुतो नेष्यते सत्कार्यत्वम् ? न हि घटतायां मृत्तत्त्वाभावे घटस्यावस्थानमस्ति, येन प्रागसन् स्यात्, मृद आत्मैव हि घटात्मा, तत्त्यागे तत्स्वरूपानुपपत्तेः, अतीतानागतवर्तमानविचित्रविशेषस्वभावसद्भूतमृत्त्ववत्, अतीतानागतवर्तमानविचित्रविशेषाध्यासितभावसद्भूतघटवदिति ।**

**यदपि चेत्यादि,** एतस्य पूर्वपक्षस्योत्तराभिप्रायेणोच्यते–न असत्कार्यत्वसिद्धेरिति, यावत्तस्मान्न प्रागुत्पत्तेः सदसत्कार्यमिति, गतार्थम्, अत्रोत्तरमाचार्य आह–एतदपि नैव, असत्कार्यत्वसिद्धिवत् सत्कार्यत्वसिद्धेरित्युपक्रम्य भावानां यावत्सत्कार्यत्वमिति, यथा मृद्भावादप्रच्युतस्य घटस्य मृद्भावेनानुत्पाद्याविना-[4]

मूलमवतारयति-**यदप्युच्यत इति ।** यदुच्यते घटात्मनाऽसत्त्वाद्घटोऽसन्नेवेति तत कुतः, मृत्तत्त्वभूतस्य घटस्य सत्त्वात् सन्नपीति कुतो नोच्यत इत्याह-**असत्त्वादिति ।** मृदि यदि मृत्तत्त्वभूतो घटो न सन् भवेत् तर्हि न सोऽत्र कदापि पिण्डशिवकादिक्रमेणानुभवपथं यायात्, याति च क्रमतोऽनुभवपथं तस्मात्तत्र सदपीत्याशयेनाह-**तत् पुनः सत्त्वमिति,** द्रव्यार्थेन घटादेः स्वरूपमवस्थितं यस्मिन् तथाविधे मृदाख्ये वस्तुनि क्रमेण जन्म यस्यैवंविधस्य घटस्यानुभव क्रमेणैव प्राप्यते इति शब्दार्थः । अत्रार्थे दृष्टान्तमाह-**यथेति,** प्रत्यग्रता-नवीनता । अथ यद्यायुक्तमापेक्षिकं सदसत्त्वं स्याद्वादी किलेत्थं समर्थयति-मृदात्मना घटस्य प्रागुत्पत्तेः सत्त्वं घटात्मना चासत्त्वमिति पूर्वपक्षं विधाय तदुत्तरतया नासत्कार्यत्वसिद्धेरित्यादि तन्निराकर्तुमाह-**यदपि चेति ।** वैशेषिकस्योत्तरमेव प्रदर्शयति-**असत्कार्यत्वेति,** कृतव्याख्यानमेतत् । स्वोत्तरमुपदर्शयति-**एतदपि नैवेति ।** तदुपदर्शितासमत्कार्यत्वासिद्धिमुपवर्णयति-**यथेति** मृदात्मा घटो न कृतिविषयः, तेन रूपेण तस्योत्पत्तिविनाशराहित्यात् ततश्च तेन रूपेण

**१ सि. क. °सत्त्वात्मकि° । २ सि. क. °लार्हतश्चाह । ३ सि. क °द्युत्तरनेव° । ४ डे. मृद्भावेनामुत्पाद्यावितात्रयस्य, सि. क. क्ष. मृद्भावेनामुत्पाद्यविनात्तयस्य ।**

[शा]पम्नस्य सत एव घटविवक्षया कर्त्तव्यत्वादसत्त्वमिष्टं त्वया तथाऽकर्त्तव्यत्वात्, सततमप्रच्युतस्याकृतकघटादिशिवकादिकर्त्तव्यात्मनो मृत्तत्त्वस्य मृत्तत्त्वविवक्षया कर्त्तव्यत्वाभावात् सदेव कार्यमिति कस्मान्नेष्यते ? न हि घटतायामित्यादि शिवकादिवन्मृत्तत्त्वस्य घटस्य मृत्तत्त्वस्याभावे यद्यवस्थानं स्यादसन् घटः प्राक् पश्चाज्जायत इति स्यात्, तत्तु नास्ति, यस्मात् मृद आत्मैव घटात्मा, कस्मात् ? तत्त्यागे तत्स्वरूपानुपपत्तेः, यत्त्यागे यत्स्वरूपानुपपत्तिः स तस्यैवात्मा, अतीतानागतेत्यादि यावन्मृत्तत्त्ववत्-यथा मृत्पिण्डस्यातीतानागतवर्त्तमानेषु कालेषु ये विशेषाः शीतोष्णादयः सार्द्रशुष्कखण्डितशकलादयश्च विचित्राः पर्यायास्ते स्वभावा यस्य मृत्त्वस्य तेत्तत्स्वभावं तैदेव सद्भावः सद्भूतं तदेव परमार्थीभूतं मृत्तत्त्वं तान् विशेषान् विहाय न प्रवर्त्ततेति, [अ]पि च तदिति स एवात्मा विशेषाणां मृत्त्वस्य तथा घटात्मा मृद एवात्मा, अथ वाऽतीतानागतवर्त्तमानविचित्रविशेषाध्यासित[स्व]भावसद्भूतघटवदिति द्वितीयमुदाहरण[म]स्यैव व्याख्या-मृद आत्मा[घटात्मा,]घटस्यात्मा मृदात्मेति द्विधापि प्रतिज्ञायते तेनैव हेतुनाऽनेनापि दृष्टान्तेनेति ।

**एतेन सर्वास्याद्वादः प्रत्युक्तः ।**

(**एतेनेति**) एतेन सर्वास्याद्वादः प्रत्युक्तः-कार्यसदसदात्मकैकवस्तुप्रतिपादनात्मकेन तदेकान्तप्रतिषेधात्मकेन च यत्नेन नित्यानित्याद्येकान्तवादः सर्वः प्रतिपिद्धो वोद्धव्यः, उपादाननियमस्यासति सति

सत्यपि येन रूपेण तस्य कृतिविषयत्वं तदात्मना प्राक्तस्यासत्त्वात् कृतिविषयतावच्छेदकधर्मावच्छिन्नं वस्तु स्वोत्पत्त्यवधिकप्राक्कालावच्छेदेनासदित्यसत्कार्यत्वसिद्धिरिति भाव । यया युक्त्याऽसत्कार्यत्वसिद्धिस्तयैव सत्कार्यत्वसिद्धिरपि भवतीति सत्कार्यत्वं कुतो नेष्यते, विनिगमनाविरहादित्याशयेनाह-**तथेति** कृतिविषया अपि घटादिशिवकादयो मृदात्मना न कृतिविषयाः, तेन रूपेण तेषां नित्यत्वात्-एवञ्च कृतिविषयतावच्छेदकरूपेण प्रागसत्त्वेऽपि कृतिविषयत्वाभावप्रयोजकरूपावच्छिन्नं घटादिशिवकादिवस्तु सदिति सत्कार्यमिति कुतो नेष्यत इति भाव. । घटादिशिवकादे घटताद्यवस्थाया मृत्तत्त्वता समर्थयति-**नहि घटतायामिति,** मृत्तत्त्वव्यतिरेकेण घटादे कदापि यद्यवस्थिति स्यात् तर्हि तथाविधकालात् प्राक् तथाविधं घटादिकार्यं नास्तीति प्रागसत् पश्चात्तथाविधं जातमिति वक्तुं युज्यते, तथाऽवस्थानन्तु नास्ति सदा शिवकादिवन्मृत्तत्त्वतयैवावस्थिते, तस्मान्नास्ति घटात्ममृदात्मनोर्भेदः किन्तु य एव मृदात्मा स एव घटात्मेति भाव । तत्र हेतुमाह-**तत्त्याग इति,** मृत्तत्त्वत्यागे मृत्तत्त्वस्वरूपतानुपपत्तेरित्यर्थ । व्याप्तिं ग्राहयति-**यत्त्याग इति ।** दृष्टान्तमाह-**अतीतेति** त्रैकालिकविलक्षणविशेषा एव स्वभावो यस्य परमार्थभूतमृत्तत्त्वस्य तथाविधं मृत्तत्त्वं तान् विशेषान् परित्यज्य न क्वापि प्रवर्त्तते, एवं ते विशेषा मृत्तत्त्वमेव तस्मात् यथा विशेषाणामात्मैव मृदात्मा तथा मृद आत्मैव घटात्मेति भाव । **स एवात्मेति** विशेषाणामात्मैव मृदात्मेत्यर्थ, निर्विशेषं न सामान्यमिति भाव. । **तथा घटात्मेति,** योऽयं घटस्यात्मा स मृद एवात्मा न तु मृदात्माऽन्यो घटात्मा चान्य इति भाव, निःसामान्यं न विशेष इति यावत् । घटतदीयत्रैकालिकविचित्रविशेषाणां परस्परमभेदं दृष्टान्तीकृत्य मृदात्मघटात्मनो परस्परमभेदं साधयति-**अथ वेति** एवञ्चाभेदसिद्धौ घटात्मना प्रागसत् कार्यमिति नार्हतो ब्रूते मृदात्मघटात्मनोरभेदेन यदा मृदात्मना घटः सत्तदा घटात्मनाऽपि सन्नेवेति भावः । परस्पराभेदे हेतुश्च तत्त्यागे तत्स्वरूपानुपपत्तिरेवेत्याह-**तेनैव हेतुनेति ।** दृष्टान्तश्च द्वितीयोदाहरणमेवेत्याह-**अनेनापीति ।** उक्तप्रयत्नादेव किञ्चिन्नित्यमेव, एकमेव, कारणमेव, सर्वगतमेव, अन्यच्चानित्यमेव, अनेकमेव, कार्यमेव, असर्वगतमेवेत्येवंरूपोऽस्याद्वाद -स्याच्छब्दासमभिव्याहारेणोपवर्णनं निराकृतं भवतीत्याशयेनाह-**एतेनेति ।** व्याकरोति-**कार्येति,** अनेकान्तस्थापनेन एकान्तप्रतिक्षेपणेन यत्नेनेति भाव । कोऽसौ यत्नः प्रदर्शित इत्यत्राह-**उपादानेति,** उपादाननियमस्यैकान्तासत्यसम्भवात् क्रिया-

१ सर्वासु 'सानव्यास्ते' क. साभव्यास्ते। २ सर्वासु 'तत्तस्य' इत्यधिकं दृश्यते। ३ सर्वासु० स एव स्वभावः स एव प.।

च क्रियाया असम्भवात्, नित्यानित्यैकनानाकार्यकारणसर्वासर्वगतत्वादिः स्याद्वादः नित्यत्वेनानित्यत्वम-नित्यत्वेन च नित्यत्व[3]मेकान्तरूपं बाध्यते, सापेक्षञ्च सर्वं सिद्ध्यति, तद्यथा सदा सत्त्वान्नित्यत्वम्, सदा सत्त्वं द्रव्यार्थात्, [अतः]नैकान्तानित्यत्वम्, सदा चासत्त्वादनित्यत्वम्, सदा चासत्त्वं पर्यायार्थत्वात्, अतश्च नैकान्तनित्यत्वमिति ।

**यदपि चोपादाननियमसत्त्वप्रतिषेधार्थमुत्तरं कर्तृकर्मेति क्रियानिमित्तकौ शब्दौ, तत्र प्राक् प्रसिद्धव्यापारयोग्यद्रव्योपादानं तत् क्रियानिमित्तं न कार्यसत्त्वनिमित्तमिति, अर्थस्य व्यापार-नियमः कुतः? स हि कार्यसत्त्वमन्तरेण न सिद्ध्यति, समर्थस्य करणेऽधिकारपरिग्रहात् स इति चेत् समर्थस्यैव कार्यक्रियायामधिकारपरिग्रहणात् कार्यमसदेव, ननु त्वयैव समर्थस्य करणेऽधि-कारपरिग्रहादुपादाननियम इति ब्रुवता सत्कार्यत्वं समर्थितम्, एकीभावं गतार्थस्य समर्थत्वात् ।**

(**यदपि चेति**) यदपि चोपादाननियमसत्त्वप्रतिषेधार्थमुत्तरमित्यादि, कर्तृ–कारणं कर्म कार्य-मिति क्रियानिमित्तकौ शब्दौ, तत्र प्राक् प्रसिद्धव्यापारयोग्यद्रव्योपादानं तत् क्रियानिमित्तम्, न कार्यसत्त्वं निमित्तम्, अत्र स्याद्वादी किल पृच्छति- अर्थस्य व्यापारनियमः कुत इत्यादि यावन्न सिद्ध्यति, अत्र वैशे-षिकपक्षेणाशंकते समर्थस्य करणेऽधिकारपरिग्रहात् स इति चेत्, एतस्य व्याख्या समर्थस्यैव कार्यक्रियाया-मित्यादि कारणनिदर्शनग्रन्थो गतार्थो यावदसदेव, [असत्]कार्यत्वमेव, ननु त्वयैव समर्थस्य कारणेऽधि-कारपरिग्रहादुपादाननियम इति ब्रुवता सत् कार्यत्वं समर्थितम्, सङ्गतार्थं समर्थं एकीभावं गतो योऽर्थः

याश्चैकान्तसत्यसम्भवात् सदसदात्मकैकरूपस्य एव सम्भवाच्च यथाकथञ्चित्सत्त्वेनैकान्तासत्त्वं कथञ्चिदसत्त्वेन चैकान्तसत्त्वं बाध्यते, सदसदात्मकं च सर्वमिति सिद्ध्यति, तथैव कथञ्चिन्नित्यत्वेनैकान्तानित्यत्वं कथञ्चिदनित्यत्वेन चैकान्तनित्यत्वं बाध्यते, नित्या-नित्यात्मकञ्च सर्वमिति सिद्ध्यतीति भाव । तदेव दर्शयति-**तद्यथेति** । अथ कार्यसत्त्वादेवोपादाननियमो नान्यथेति पक्षनिराक-रणाय वैशेषिकेणोक्त पूर्वपक्षमनूद्य निराकरोति-**यदपि चेति** । व्याचष्टे-**कर्तृकारणमिति** प्रधानक्रियानिर्वर्तकं कारणं प्रधान-क्रियाविषयश्च कार्यं भवति-तथा च कार्यकारणशब्दप्रवृत्तिनिमित्तक्रियात्मकप्रधानक्रियानिर्वर्तनयोग्यक्रियाविशेषसद्भावादेव साध-नाना साधनत्वं न तु तत्र कार्यसत्त्व प्रयोजकम्–कार्यकारणभावो हि नियमसारः, कारणेषु कार्यसत्वेऽपीदमेवोपादानमिदमेव कार्य-मित्यादिनिर्णयस्य नियमाधीनत्वात, नियमश्चान्वयव्यतिरेकलक्षणा प्रसिद्धिरेव, तथा च कार्योत्पत्ते प्रागन्वयव्यतिरेकलक्षण-प्रसिद्धिविषयप्रधानक्रियानिर्वर्तनक्षमव्यापारयोग्य यद्द्रव्यं तदुपादानं भवति, एवञ्च प्रसिद्ध्यानुमितयोग्यताशालिद्रव्यमुपादानमिति भाव. । ननु तथाविधव्यापारयोग्य मृद्द्रव्यमेव न तृणादीति नियम कथमिति शङ्कते-**अर्थस्येति** प्रतिनियतार्थस्यैव प्रतिनियता-र्थोत्पादानुकूलव्यापारो न यस्यकस्यचिदर्थस्येति यो नियम उच्यते स कुत ? स नियमो हि प्रतिनियतार्थे कार्यसत्त्वमन्तरेण न सिद्ध्यतीति भाव । अत्र वैशेषिकाशङ्कामाह-**समर्थस्येति** कार्यकरणेऽधिकार समर्थस्यैव नान्यस्येति प्राक् प्रसिद्धे परिग्रहात्-विनिश्चयादुपादानस्य नियम इत्यर्थ, व्यापाराविष्टस्यैव कार्यजनकत्वात् व्यापार एव कार्याविशेषे तन्त्रम्, न तु कार्यसत्त्वं नियाम-काभावात्, तस्मात् प्रागसदेव कार्यम्, कार्यनियतपूर्वभावितावच्छेदकधर्मवत्त्वमेव सामर्थ्यं प्राक् प्रसिद्धिगम्यमिति भाव । अत्र समर्थशब्दशक्त्यवलम्बनेनोत्तरयति-**ननु त्वयैवेति,** कथं सत्कार्यता समर्थितेत्यत्राह-**सङ्गतार्थमिति,** समर्थशब्दे समुपसर्गः सङ्गतार्थक. सम्मिलित इत्यर्थ., कार्येण घटादिना सह सम्मिलित एकतामुपगतोऽर्थ मृदादिलक्षण. सङ्गतार्थ, एवञ्च कार्येणैकीभावं गतस्यार्थस्यैव समर्थशब्दवाच्यत्वात् समर्थस्यैवोपादाननियम इति ब्रुवता त्वयैव कारणे कार्यस्य सत्त्वं समर्थितमेवेति भाव । यदि

१ सि. क. °त्वादिरस्या० । २ सि. क. नित्यत्वगानि० । ३ सि. क. °नित्यत्वमनेका० । ४ सि. क. °नित्यत्वमतः स० ।
५ सि. क. °पक्षाद्याश० ।

[स]समर्थ[:]साध्येन साधनाख्यः तद्भावात्, एकीभावं गतार्थस्य समर्थत्वात् सत्कार्यत्वमेव, नासता खरविषाणेन सह कस्यचित् सामर्थ्यम्, तस्य वा केनचिदुपपद्यत इति ।

अस्य व्याख्यानम्—

**अथ कथं तन्तुतुर्यादिपटनिर्वृत्तौ कारणत्वेनोपादीयते, न पांशुवास्यादीति, न, तस्यैव तथा तथा समर्थत्वात्, पटादिकार्यं तन्तुषु तत्कारणेषु च तत्र तत्रास्त्येव, तत्समवायव्यङ्ग्यत्वात् तदात्मकत्वाच्च, तथा तुर्यादिष्वपि पांश्वादिष्वपि च तत्कारणकारणत्वात्, परमाणुवत् ।**

**अथ कथं तन्तुतुर्यादि** यावत कारणकारणत्वात् परमाणुवत्, वैशेषिकमेव पृच्छन् तेनैव व्याख्यापयति, [तन्तु]तुर्यादेरेव कारणत्वेनोपादानं पटनिर्वृत्तौ न पांशुवास्यादेरिति, करणाधिकारपरिग्रहादेव सत्कार्यत्वम्, तस्यैव समर्थत्वात्, तथा तथा–तेन तेन प्रकारेण तत्तन्नियतनिजशक्तियुक्तार्थसमर्थत्वात्, पटादिकार्यं तन्तुषु वर्त्तते तन्तुकारणेषु–तथा तन्तुषु प्रकारान्तरेण पटकारणभावं बिभ्रत्सु तथा पक्ष्मत्रुटिरेणुपरमाणूनामपि यथास्वशक्ति प्रकारान्तरैः पटकारणत्वात पारम्पर्येण तत्र तत्रास्त्येव पटः, तत्समवायव्यङ्ग्यत्वात्, तदात्मकत्वाच्च- असमवायिपटोऽपि संयोगव्यङ्ग्यत्वात् संयोगिद्रव्येभ्यः संयोगस्याभिन्नत्वात् द्व्यणुकत्र्यणुकाद्यनन्तप्रदेशस्कन्धसंयोगत्वपरिणतद्रव्याभेदात्त एव परमाणवः पटः, यथा संयोगेषु पटकारणेषु तदात्मकत्वात् पटत्वं तत्कारणपरमाणूनां तथा तुर्यादिष्वपि–तुरीवेमशलाकाञ्छनिकाविलेखनिकादीनां कुविन्दप्रयत्नोत्थापितव्यापाराणां पटत्वम्, तदात्मकत्वात् द्रव्याभेदात्, पांश्वादिष्वपि च भूम्यम्बुमारुतानलाकाशबीजसंयोगनिष्पाद्यकार्पासात्मकत्वात् पटत्वं सिद्धम्, तत्कारणकारणत्वात् परमाणुवत्, एवं तावत्

---

कार्येणासम्मिलितमपि द्रव्यं कारणं भवेत तर्हि खरविषाणादेरपि किञ्चिद्द्रव्यं कुतो न समर्थम्, समर्थेन वा केनचित्तस्य कुतो नोत्पत्तिरित्यापादयति **नासतेति** । एतमेवार्थं दृढीकर्त्तुं पूर्वोदितमेव व्याख्यामुखेनाह–**अथ कथमिति** । यदि कार्यनियतपूर्ववृत्तितामात्रमेव कारणत्वे प्रयोजकं तर्हि पटार्थिना पटनिर्वृत्तौ पूर्ववर्त्तीनि पांशुवास्यादीनि विहाय तन्तुतुर्यादिरेव कारणत्वेन कथं गृह्यते इति वैशेषिकं प्रति प्रश्नमुपन्यस्यति–**तन्तुतुर्यादेरेवेति,** उपादाननियामकव्यापारस्य करणाधिकारपरिग्रहो नियामक इति वैशेषिकोक्त्यैव सत्कार्यतासिद्धिः समर्थस्यैव तथाविधत्वात्, सामर्थ्यञ्च विद्यमानकार्यत्वादिति प्रदर्शयति–**करणेति** । हेतुमाह–**तस्यैवेति,** विद्यमानकार्यस्यैव तत्तद्रूपेण समर्थत्वादित्यर्थः । हेत्वर्थं वर्णयति–**तेन तेनेति,** पटकारणेषु तन्तुषु तत्संयोगेषु तुरीवेमादिषु च प्रकारान्तरेण सामर्थ्यम्, तन्तुकारणेषु पांश्वादिषु तत्कारणेषु यावत परमाणुषु विभिन्नप्रकारैः सामर्थ्यमस्ति, परमाणुद्व्यणुकत्रुटिपांश्वादिकार्पासतन्त्वादयो हि तथा तथा परिणमन्त पटीभवन्तीति पटसत्त्वं तेष्वस्ति, द्रव्यं हि सामर्थ्यरूपेण विश्वरूपात्मकम्, प्रतिनियतसाधनसव्यपेक्षं तथा तथा परिणमतीति भाव । पटकारणपरम्परासु पटसत्त्वं दर्शयति–**पटादिकार्यमिति । तत्समवायव्यङ्ग्यत्वादिति**–पटकारणतत्कारणादिसमुदायव्यङ्ग्यत्वात पटादेरित्यर्थः । तन्तुसंयोगेषु गुणेषु कथं पटत्वमित्यत्राह–**असमवायिपटोऽपीति** । अथवा पटकारणीभूतद्रव्यपरम्परासु तन्तुपक्ष्मत्रुटिरेणुपरमाणुषु पटत्वं समवायव्यङ्ग्यत्वात्, तत्र तस्य समवायात् तदात्मकत्वात् द्रव्याभेदात, *यत्र तु पटो न समवैति यथा तुरीवेमशलाकाञ्छनिकादिषु पटत्वं* तत्संयोगव्यङ्ग्यत्वात तुर्यादिसंयोगे हि तन्तुषु पटो व्यज्यते, तथा तदात्मकत्वात्–द्रव्याभेदादिति भावः । ननु तुर्यादिसंयोगव्यङ्ग्यत्वे तुर्यादिसंयोगस्य पटत्वं स्यात् कथं तुर्यादेस्तत्त्वमित्यत्राह–**संयोगिद्रव्येभ्य इति** । एतदेव स्पष्टयति–**यथेति** । पटकारणकारणेषु पटत्वं समर्थयति–**पांश्वादिष्वपि चेति** । एवञ्च सर्वत्र पटत्वसिद्धौ कार्यमत्र न सदिति नाप्यसदिति प्रतिषेधो न युज्यते तद्धेतूना हेत्वाभासत्वात, किन्तु सदसदेकात्मकमेव वस्तु, तत्साधकहेतूना सुस्थितत्वात सद्धेतुत्वादित्याह–**एवं तावदिति** । वैशेषिकोक्तं क्रियागुणव्यपदेशाभावात प्रागसत् कार्यमिति सानं

---

१ सि. क. असम० । २ सि. क. °णवाद्गुवत् ।

कार्यसदसत्त्वप्रतिषेधो न सिद्ध्यति, प्रतिषेधहेत्वयुक्तेः, सदसत्त्वैकात्म्यसाधनसौस्थित्यप्रदर्शनाच्च सदसदेव कार्यमिति ।

किञ्चान्यत्—

**योऽप्युपचयहेतुः क्रियागुणव्यपदेशाभावात् प्रागसत् कार्यं खपुष्पवदिति, अयमेव ते उपचयहेतुः परपक्षसाधनाय–सदेव भवति कार्यं प्रागभूतक्रियागुणव्यपदेशत्वात् सत्तासम्बन्धिद्रव्यादिवत्, अनैकान्तिकता च, ननु खपुष्पवदनेकान्तः प्रागुत्पत्तेरसत्कार्यं स्यात्, उपजातमात्रद्रव्यादिवत् सत् स्यादिति त्वत्साधनमपि संशयकारीति चेन्न, प्राग्विशेषणापक्षिप्तप्रसङ्गत्वात्**

**योऽप्युपचयहेतुरित्यादि,** तेन किल क्रियागुणव्यपदेशाभावात्–क्रिया त्वातानादि पटस्य तन्त्ववस्थायां गुणाश्च संयोगपरिमाणादयो व्यपदेशश्च शब्दान्तरं लिङ्गं वा न सन्ति, तस्मात् क्रियागुणव्यपदेशाभावात् प्रागुत्पत्तेरसत्कार्यं खपुष्पवदिति, अस्याप्युपचयहेतोर्विरुद्धत्वं दोष इत्याचार्य आह–अयमेव ते उपचयहेतुः परपक्षसाधनाय सदेव भवति कार्यं–जायते व्यज्यते उत्पद्यते, प्रागभूतक्रियागुणव्यपदेशत्वात् सत्तासम्बन्धिद्रव्यादिवत्, सविशेषणं स्वपक्षसाधनञ्चेदम्, यथा द्रव्यगुणकर्माख्यं कार्यत्रयं स्वभावसत् त्वन्मतेनैव यावत् सत्तया न सम्बद्धं तावत् [न] क्रियागुणव्यपदेशभाग् भवति, अथ च विद्यते स्वकारणेषु समवेतमात्रं तथेदं समवेतकार्यमित्यसन्मतसिद्धिः, अनैकान्तिकता च क्रियागुणव्यपदेशाभावादित्यस्य हेतोः, अ[स]ति च खपुष्पादौ सति च जातमात्रे कार्यत्रये दृष्टत्वात् असदेवेति सन्दिग्धम्, इतर आह–ननु खपुष्पवदनेकान्तः प्रागुत्पत्तेरसत्कार्यमभूतक्रियागुणव्यपदेशत्वात्, खपुष्पवत् स्यात्, उपजातमात्रद्रव्यादिवत् सत् स्यादिति त्वत्साधनमपि संशयकारीति चेत्, एतच्च न, प्राग्विशेष-

निराकर्तुमाह-**योऽपीति** । हेतुं व्याचष्टे–**क्रिया त्विति,** पटस्य क्रिया–आतानवितानादि, गुणाः–संयोगपरिमाणादयः, व्यपदेशः–पट इति नाम, हेतुर्वा तन्त्ववस्थायां न सन्ति तस्मादुत्पत्तेः प्राक् कार्यमसदिति तदर्थः । विरुद्धोऽयं हेतुरित्याशयेनोत्तरयति-**अयमेवेति** प्रागिति विशेषणरहितोऽयमेव हेतुरित्यर्थः, अत्र उत्पन्नं कार्यं पक्षीकृत्य सत्त्वं साध्यं विज्ञेयं, तद्धि कार्यं तन्त्ववस्थायामभूतक्रियागुणव्यपदेशम्, अथ च सदिति असत्त्वविरुद्धसत्त्वसाधकत्वाद्विरुद्धो हेतुरिति भावः । वैशेषिकमतेन पक्षप्रद्योतकं प्राक् शब्दं हेतौ विशेषणीकृत्य स्वपक्षं साधनाय, अन्यथाऽसिद्धो हेतुः स्यादित्याह-**सविशेषणमिति** । दृष्टान्तं घटयति–**यथेति,** सत्तासम्बन्धकालीनो द्रव्यादिर्दृष्टान्तः, स च प्रागभूतक्रियागुणव्यपदेशः स्वतः सत्त्वाविनाभावग्रहः, स च हेतुः कार्येऽस्ति, तस्मात् सत्त्वमेव साधयतीत्यसत्त्वसाधने विरुद्धोऽयं हेतुरिति भावः । तत्सम्मतमेव हेतुं दूषयितुमाह–**अनैकान्तिकता चेति** । अनैकान्तिकताप्रयोजकं संशयमादर्शयति-**असति चेति** क्रियागुणव्यपदेशाभावः खपुष्पान्तर्भावेण त्वदीयसाध्येनासत्त्वेन सहचरितः, उत्पत्तिक्षणावच्छिन्नकार्यान्तर्भावेण च साध्याभावेन सत्त्वेन सहचरित इति सत्त्वतदभावसहचरितक्रियागुणव्यपदेशाभाववत्कार्यमिति साधारणधर्मवद्धर्मिज्ञानेन सत्त्वासत्त्वविषयककोटिद्वयोपस्थित्या कार्यं सद्वाऽसद्वेत्येकस्मिन् धर्मिणि विरुद्धभावाभावप्रकारकज्ञानजननात् साध्यसंशयजनककोटिद्वयोपस्थितिजनकपक्षधर्मताज्ञानविषयत्वात् क्रियागुणव्यपदेशाभावो हेतुरनैकान्तिक इति भावः । अत्र परेणाप्रयोजकत्वशङ्कोद्भाव्यते–**नन्विति,** यथा खपुष्पादौ प्रागभूतक्रियागुणव्यपदेशत्वसत्त्वेऽपि सत्त्वं नास्ति तथा कार्यं प्रागभूतक्रियागुणव्यपदेशत्वमस्तु माऽस्तु च सत्त्वं, एवञ्च खपुष्पान्तर्भावेण साध्याभावेन सहचरित-

१ सि. क. डे. सदसद्देशाभावात् । २ सि. क. डे. क्रियात्वज्ञानाणादि । ३ सि. क. डे. दृष्टादृष्टत्वात् । ४ सि. क. डे. °न्धमंतर आह ।

णापक्षिप्तप्रसङ्गत्वात्–स्यादयं प्रसङ्गो यद्यविशेष्यक्रियागुणव्यपदेशाभावात् सत्कार्यमित्येतावद्ब्रूयात्, किं तर्हि ? प्रागभूतक्रियागुणव्यपदेशत्वादिति मया विशिष्योक्तम्, यस्य प्रागभूतः क्रियागुणव्यपदेशः पश्चाद्भविष्यति तत्सदेव, यथा तदेवोत्पन्नमात्रंद्रव्यादि, न तु यस्य प्राक् पश्चादिति कालाविभागेनासत्त्वं खपुष्पादेरित्यतः प्राग्विशेषणादपक्षिप्तोऽनैकान्तिकत्वप्रसङ्गोऽस्य हेतोरिति ।

अत्राह—

**ननु प्राङ् निष्पत्तेरसत् कार्यमिति कालविशिष्टं प्रतिज्ञाय क्रियाद्यभावादिति हेतुरुक्तः, स तु निष्पन्ने नास्ति, सदेव तु द्रव्यं न कार्यमित्यत्र ब्रूमः ननु निष्पत्तिरुत्पत्त्यभूत्वाभावादिसमानार्थिका, तेनाव्यक्तसत् व्यक्तसद्भवतीत्युक्तम्भवति, अनुपनिलीनसत्त्वञ्च तज्जातमात्रं सत्तोपनिलयनात् प्रागनिष्पन्नं सत्तासामान्येन सद्भवति, निष्पत्तिशब्दो ह्यभूतस्य भवनस्य त्रिप्रकारां निष्पत्तिमाह–नियता निश्चिताऽधिका वा, सा च ते सत्तासम्बन्धादेव द्रव्यादौ कार्ये नियता, निश्चिता सत्त्वान्तरेभ्यो विविक्तत्वात् सत्तायाः, अधिका पुनर्भवनात् ।**

**नन्वित्यादि** यावत् सदेव तु द्रव्यं न कार्यमिति, मया प्राङ् निष्पत्तेरसत्कार्यमिति कालविशिष्टं–यावदनुत्पन्नं तावन्नास्तीति प्रतिज्ञाय क्रियाद्यभावादिति हेतुरुक्तः, स तु निष्पन्ने द्रव्ये नास्ति, तस्मात् साधनधर्मवैकल्यादयुक्तो दृष्टान्त इत्यत्र ब्रूमः, ननु निष्पत्तिरित्यादि–ननु निष्पत्तेः प्रागित्युक्तेऽपि निष्पत्तेरुत्पत्त्यभूत्वाभावादिसमानार्थत्वात् अव्यक्तसद्व्यक्तसद्भवतीत्युक्तंभवति, तद्यथा–अनुपनिलीनसत्त्वञ्च तत्–द्रव्यादित्रयं जातमात्रं सत्तोपनिलयनात्–प्रागनिष्पन्नं सत्तासामान्येन सत्–सत्तासमवायात् सद्भवति–व्यक्तसद्भवतीत्येषोऽर्थो निष्पत्तिशब्दस्येत्याह–निष्पत्तिशब्दो हीत्यादि, तद्व्याख्यानम्, अभूतस्य–प्रारब्धभवनस्य त्रिप्रकारा निष्पत्तिः, तद्यथा–नियता निश्चिता अधिका वा, का सा ? भवनमेव, कस्मात् ?

---

त्वात्, उत्पन्नमात्रद्रव्याद्यन्तर्भावेण साध्येन सत्त्वेन सहचरितत्वाच्च कोटिद्वयोपस्थितिद्वारा कार्ये साध्यसंशयजननात् तव हेतुरप्यनैकान्तिक इति भाव । ननु वयं न केवलं क्रियागुणव्यपदेशाभावं हेतुं ब्रूम येन खपुष्पादौ साध्याभावेन सहचरितो हेतुर्भवेत, किन्तु प्रागभूतक्रियागुणव्यपदेशत्वादिति वदाम खपुष्पादौ सर्वकाले क्रियागुणव्यपदेशाभावसत्त्वेन परिच्छिन्नकालावच्छिन्नक्रियागुणव्यपदेशाभावस्यासत्त्वेन न तस्य साध्याभावसाहचर्यमित्याशयेन समाधत्ते–**स्यादयं प्रसङ्ग इति** । ननु क्रियागुणव्यपदेशाभावादिति हेतोर्विरुद्धत्वोपवर्णनायोक्तं सदेव भवति कार्यम्, प्रागभूतक्रियागुणव्यपदेशत्वात्, सत्तासम्बन्धिद्रव्यादिवदिति, तत्रास्मन्मते प्राक् पदं प्रतिज्ञान्तर्गतं न तु हेतुघटकं तथा च प्राक्कालीन एव द्रव्यादौ क्रियाविषयतया कार्यभूते क्रियागुणव्यपदेशाभावो वर्तते, न तु निष्पन्ने द्रव्ये, सिद्धत्वेन कार्यत्वाभावात्, तदानीं क्रियागुणव्यपदेशसत्त्वात् नास्मदुक्तो हेतुर्विरुद्धः साधनविकलश्च दृष्टान्त इत्याह–**नन्विति** । व्याकरोति–**मयेति** । एतस्य प्रतिविधानाय प्राङ् निष्पत्तेरसत् कार्यमिति प्रतिज्ञाघटकनिष्पत्तिशब्दार्थमाह–**ननु निष्पत्तिरिति,** निष्पत्तिर्नाम अव्यक्तसद्व्यक्तसद्भवनम्, इदमुत्पत्त्यर्थेन अभूत्वा भावार्थेन च समानमेव, निष्पत्तिपूर्वकाले द्रव्यादिकार्यत्रयमव्यक्तसत–सत्तासम्बन्धरहितं भवत् व्यक्तसत्–समुपसञ्जातसत्तासम्बन्धं भवति, तथा चाव्यक्तसतो द्रव्यादेर्व्यक्तसद्भवनं निष्पत्तिः, अभूत्वाभावः, उत्पत्तिर्वेत्युच्यत इति भाव । अमुमर्थं विशदीकर्तुं निष्पत्तिप्रभेदप्रदर्शनेन निष्पत्तिशब्दार्थं व्याचष्टे–**अभूतस्येति,** भूतं भवनविषयतातिक्रान्तं न भवतीति अभूतं भवनक्रियाविषयः, प्रारब्धभवनमित्यर्थः, तथाविधस्य द्रव्यादिकार्यस्य त्रिविधा निष्पत्तिरित्यर्थः, तत्राधिका समग्रसाधनसन्निधानात् प्रथमं कारणसमवाये जन्म भवति, इयमुत्पन्नमात्रदशेत्युच्यते,

---

१ सि. क. डे. °भाग्र इत्यादि । २ सि. क. °स्ये माह । ३ सि. क. प्रभूतस्य । ४ सि. क. नियतानिश्चितानिनि० ।

पद्यतेः सत्तार्थत्वात्, सा च ते—त्रिप्रकारापि तवैव, तद्यथा सत्तासम्बन्धादेव द्रव्यादौ कार्ये नियता, कारणसमवायस्य सामान्यस्य च नियतत्वात्, निश्चिता—द्रव्यत्वगुणत्वकर्मत्वघटत्वरूपत्वोत्क्षेपण[त्व]ादिसत्त्वान्तरेभ्यो विविक्तत्वात् सत्तायाः, अधिका पुनर्भवनात् कार्यस्य तन्मतेनैव कारणसमवाये जन्माभ्युपगमात्, एवं तावद्दृष्टान्तस्य द्रव्यादित्रयस्य निष्पत्तिस्त्रिरूपा व्याख्याता ।

दार्ष्टान्तिककार्यस्याधुना—

**उपादानस्वसत्तानियता तत्त्वतोऽसौ निश्चिता पटादिव्यावृत्त्या, तण्डुलविचयवत् विचिता निश्चितास्तण्डुलाः कचवराद्यपनयनेन स्वरूपपरिग्रहेण च, क्रिययाऽनिष्पत्तेः सकाशान्निश्चिता घटनिष्पत्तिः, अधिका युगपदयुगपत्पर्यायक्रमतथाभूतेरिहापीति सदसत्त्वं कार्यस्य, तस्मात् सदसत् कार्यम् सदसत्क्रियागुणत्वात्, अन्यथा हेतुशक्त्युपादानानामभिधानमात्रप्रसङ्गः, यद्यसदेव कार्यं तदा हेतुशक्त्युपादानानामभावे नियमस्य वचनमात्रमेव स्यात्, खपुष्पादिनिष्पत्त्यर्थक्रियाहेत्वाद्यभाववदसत्त्वाविशेषात् ।**

**( उपादानेति )** उपादाननियमस्वसत्तानियता—मृदाद्युपादाननियमेन घटादेः स्वसत्ता विद्यते, तया स्वसत्तया नियता, मृदैव घटनिष्पत्तेः, तत्त्वतोऽसौ घटत्वेन निश्चिता पटादिव्यावृत्त्या, तद्यथा तण्डुलविचयवत्- विचिता निश्चितास्तण्डुलाः कचवराद्यपनयनेन स्वरूपपरिग्रहेण च, क्रियया- व्यापारेण परिस्पन्देनानिष्पत्तेः सकाशान्निश्चिताऽपनीता घटनिष्पत्तिः स्वरूपपरिग्रहेणेत्यर्थः, अधिका युगपदयुगपत्पर्यायक्रमतथाभूतेः—ये प्राग् युगपद्भाविनो रूपादिपृथुबुध्नादिपर्यायाः पिण्डशिवकादयो नवमध्यमपुराणतादयश्चायुगपद्भाविनस्तेषां क्रमेण शिवकादिकरणविधिना तथाभूतेः—तेन प्रकारेण भवनादधिका निष्पत्तिरिहापीति, तस्माद् दृष्टान्तभूतस्य द्रव्यादित्रयस्य कार्यस्य निष्पत्तिवदव्यक्तमद् व्यक्तसद्भवतीति

ततश्च सत्तासम्बन्धो भवति, इयं परिपूर्णनिष्पत्तिदशेत्युच्यते, ततश्चानुवृत्तिव्यावृत्तिभ्यां निश्चयविषयतया भवति, इयं वस्तुनिर्णयदशेत्युच्यते, इति निष्पत्तित्रयमवाप्तस्यैव हिताहितप्रवृत्तिनिवृत्तिषूपयोगादिति भाव । द्रव्यादित्रयस्य नियतनिष्पत्तिं दर्शयति—**तद्यथेति** स्वरूपसत्त्वात् सत्तायाश्च नियतत्वान्नियता निष्पत्तिरित्यर्थः । एतमेव हेतुत्वमाह-**कारणेति**, स्वरूपसत्त्वस्येति भाव । निश्चितनिष्पत्तिं दर्शयति-**निश्चितेति** । अधिकनिष्पत्तिं दर्शयति-**अधिका पुनरिति,** सामग्रीसन्निधाने सति स्वरूपत कार्यजन्माभ्युपगमादित्यर्थः । एवं स्वोक्तानुमानदृष्टान्तभूतसत्तासम्बन्धिद्रव्यादिकार्ये त्रिविधनिष्पत्तिमुपदर्श्य प्रतिज्ञाविषयकार्यरूपधर्मिणि त्रिविधनिष्पत्तिमुपवर्णयति-**उपादानेति** । घटादिलक्षणे कार्ये धर्मिणि नियतभवनं दर्शयति-**मृदादीति,** उपादानस्य सति नियमे घटादेर्भवनं जायत इति भवनरूपा उपादाननियमेन स्वसत्तया च घटनिष्पत्तिर्नियता, घटनिष्पत्तिर्हि मृदा जायत इति कार्यस्य नियता निष्पत्तिरिति भाव । निश्चितभवनं वर्णयति-**तत्त्वत इति,** घटत्वलक्षणानुवृत्त्या स्वेतरपटादिव्यावृत्त्या च कार्यस्य घटस्य निश्चिता निष्पत्तिरिति भाव. । अत्रार्थे दृष्टान्तमाह—**तद्यथेति** तण्डुलाः स्वेतरेण कचवरादिना व्यावृत्ता, तदपनयनात, स्वरूपस्य तण्डुलत्वस्य परिग्रहेण च निश्चिता निष्पत्तिरिति भाव. । क्रिययाऽपि घटस्य निश्चितनिष्पत्तिं दर्शयति—**क्रिययेति,** कुलालव्यापारेण एवम्भूतनयेन जलाहरणाद्यर्थक्रियया वा अनिष्पत्तिरूपाव्यापाराद्दूरीकृता स्वरूपपरिग्रहेण निश्चिता घटनिष्पत्तिरिति भाव । अधिका निष्पत्तिं निरूपयति—**अधिकेति,** रूपरसादिगुणभूताना पृथुबुध्नकम्बुग्रीवादिप्रदेशरूपाणा युगपद्भाविपर्यायाणा पिण्डशिवकादिप्रागवस्थारूपाणां नवमध्यमादिघटकालभाव्यवस्थारूपाणामयुगपद्भाविपर्यायाणां क्रमेण घटस्य भवनादधिका निष्पत्तिरिति भावः । दृष्टान्तेन दार्ष्टान्तिकं समीकरोति-**तस्मादिति,** अव्यक्तसत एव व्यक्तसद्भवनात् कार्यमुपादाने सदेव भवतीत्युपादानस-

१ सि. क. नित्यत्वात् । २ सि. क. डे. क्रियाया । सर्वासु 'ये प्राग् युग०' इति दृश्यते । × × क० ।

समानमुपादाने सतः कार्यस्येति गतमानुषङ्गिकम्, स्थितं प्रागुक्तं सदसत्त्वं कार्यस्य, तस्मात् सदसत एव क्रियागुणाः, तद्भावात् सदसत्क्रियागुणत्वात् सदसत एव क्रियागुणव्यपदेशाः, अन्यथा हेतुशक्त्युपादानानामभिधानमात्रप्रसङ्गः यद्यसदेव कार्यं स्यात् हेतोर्दण्डादेः मर्दनादियोग्यायाः शक्तेरुपादानस्य च मृदो घटादौ मृदेवोपादीयते न तन्त्वादिरित्येषां खरविषाणवदभावे नियमस्य–दण्डादिहेतुनियमस्य, शक्तिमर्दनादिर्मृद्द्रव्यस्य मृदेव घटस्योपादानमिति वचनमात्रमेवेदं सर्वं स्यात्, नार्थः कश्चित्, खपुष्पादिनिष्पत्त्यर्थक्रियाहेत्वाद्यभाववदसत्त्वाविशेषात् ।

यदि तु सदेव कार्यं स्यात् तत्रापि स एव दोष इत्यत आह—

**यस्य तु विद्यमान एवार्थस्तस्यापि निष्पाद्यनिष्पादकत्वाविशेषात् कुलालमृद्दण्डाद्यस्तित्ववद्घटास्तित्वादेतेषां सर्वेषामभावादभिधानमात्रप्रसङ्ग इत्यतश्चायुक्तं सत्कार्यत्वमेव, एकान्तपक्षयोर्दोषदर्शनादनेकान्तपक्षे चादोषदर्शनात् सदसदेव कार्यमव्यक्तसद्व्यक्तसद्भवतीति ।**

**यस्य तु विद्यमान एवार्थ इत्यादि** गतार्थं यावदेतेषां सर्वेषामभावादभिधानमात्रप्रसङ्गः, निष्पाद्यनिष्पादकत्वाविशेषादिति, निष्पाद्यो घटो निष्पादकाः कुलालदण्डादयः, कुलालमृद्दण्डाद्यस्तित्ववत् घटास्तित्वात् किं दण्डादिना हेतुना क्रियते ? न वा तुर्यादिना, मृद एव मर्दनादिशक्तिर्न तन्त्वादेः, मृदेवोपादानं घटस्यानिष्पन्नत्वात्, न तु निष्पन्नघट इति विशेषो नास्ति, सत्त्वाविशेषात्, इतिः प्रसङ्गपरिसमाप्त्यर्थः, तदुपसंहरति–अतश्चायुक्तं सत्कार्यत्वमेवेति, ततः किमायातम् ? इदमायातमसत्कार्यायुक्तत्ववत् सत्कार्यत्वमप्यैकान्तिकं न युक्तम्, तस्मादेकान्तपक्षयोस्तयोरयुक्तत्वात् युक्तमेतत्प्रतिपत्तुं प्राक् सदसदेव प्रादुर्भवतीति स्याद्वादिनः, उपसंहरति–एकान्तपक्षयोर्दोषदर्शनादनेकान्तपक्षे चादोषदर्शनात् सदसदेव कार्यमव्यक्तसद्व्यक्तसद्भवतीति, स्थितमेतत् त्रिधापि विकल्पानुपपत्तेः सत्तया न सम्बध्यते कार्यमिति ।

नोऽव्यक्तसद्व्यक्तसद्भूतद्रव्यादि समानमेवेदं कार्यमत क्रियागुणव्यपदेशाभावात् प्रागसदिति निरर्थकवचनमिति भावः । उपसंहरति–**गतमिति** । एतावता सिद्धमर्थमाह–**स्थितमिति** । कार्यस्य सदसत्त्व एव क्रियागुणानां सम्भवेन व्यपदेशयोग्यता, न तु सत्त्वेऽसत्त्वे वेत्याह **तस्मादिति**, सदसत एव कार्यस्य क्रियागुणव्यपदेशा भवन्ति, सदसत्क्रियागुणत्वादिति भावः । विपक्षे बाधकं वक्ति–**अन्यथेति** यदि कार्यमसदेव स्यात् सदेव वा स्यादित्यर्थः । असत्कार्यपक्षे बाधकं दर्शयति–**यद्यसदेवेति** एकान्तासतो न हि कश्चिद्धेतु काचिच्छक्ति किञ्चिदुपादानं वा भवितुमर्हति, खपुष्पादीनामप्येतेषां सम्भवप्रसङ्गात्, तस्मादेषामभावे दण्डादय एव हेतवो मृद्व्यमेव मर्दनादिशक्तिमत् मृदेवोपादानं घटस्येत्यभिधानं काननाक्रन्दनसदृक्षमेव नार्थः कश्चित्तस्येति भावः । यथा खपुष्पादेरेतानि न सन्ति, अत्यन्तासत्त्वात् तथा एकान्तासतः कार्यस्यापीत्याह–**खपुष्पादीति** । एकान्तसत्कार्यपक्षेऽपि बाधकमाह–**यस्य त्विति** यदि कार्यमेकान्तेन सद्भवेत् तदा तत् सर्वदा निष्पन्नमेव न तु निष्पाद्यं तथा च निष्पादनकालत्वेनाभिमतसमये दण्डादयो यथा सन्ति तथा घटादिकार्यमप्यस्त्येवेति दण्डादय एव हेतवः, घट एव कार्यमित्यत्र नियामकाभावः । एवञ्च हेत्वादीनामभावात् हेत्वादिना किं क्रियते ? तन्त्वादिना वा किं न क्रियते ? कथं मृद एव मर्दनादिशक्तिः ? न तन्त्वादेः ? कथं वा मृदेवोपादानं ? न तु निष्पन्नो घटः ? इत्येवं निष्पाद्यनिष्पादकयोर्विशेषाभावादेतेषामभावेन कार्यकारणनियमाभिधानं केवलमभिधानमेव स्यादिति भावः । एवमेकान्तसदसत्पक्षयोरयुक्तत्वेन कथञ्चित् सदसत्त्वमेव कार्यस्य, तथा च प्राक् कथञ्चित् सदसत् कार्यमव्यक्तसद्व्यक्तसद्भवतीति सिद्धमित्युपसंहरति–**एकान्तपक्षयोरिति** । इह प्राक् सत्तासम्बन्धात् किं सतामसतां सदसतां वा सत्तासम्बन्ध इति विकल्पत्रयमवलम्ब्य प्रक्रान्तो विचारः परिसमाप्तः, एकत्रापि पक्षे कार्यस्य सत्तासम्बन्धानुपपत्तेरित्युपसंहरति–**स्थितमेतदिति**

१ सि. समादानमुपादाने । २ सि. क. डे. °योग्यतायां शक्ति° । ३ सि. क. डे. °भावेऽयमस्य । ४ सि. क. मार्दवादि ।

**यदपि चोक्तं** विकल्पानुपपत्तेरिति, नासौ दोषो विकल्पत्रयानाश्रयात् विकल्पान्तराश्रयणाच्च, निष्ठासम्बन्धयोरेककालत्वात्, निष्ठा च कारणसामग्र्यव्यापारकालः प्रागसतो वस्तुभावो निष्ठानं समाप्तिः, सम्बन्धश्च स्वकारणसत्तासमवायः, सत्तासम्बन्ध एव निष्ठाकालः, कुतः ? समवायस्यैकत्वात्, यस्मिन्नेव काले परिनिष्ठां गच्छत् कार्यं कारणैः सम्बध्यते समवायसम्बन्धेनायुतसिद्धिहेतुना, तस्मिन्नेव काले सत्तादिभिरपि, तस्मात् कालस्याप्रतिभागात् प्रागित्यनुपपत्तेरनास्पदः सदादिविकल्पोऽर्थाभावादिति ।

**यदपि चोक्तमित्यादि,** एतद्विकल्पपक्षत्रयपरिहारेण निर्दोषाभिमतं विकल्पान्तरमाश्रित्य यदुच्यते त्वया–विकल्पानुपपत्तेरिति नासौ दोषो विकल्पत्रयानाश्रयात् विकल्पान्तराश्रयणाच्च, कस्माद्विकल्पान्तरादिति चेदुच्यते निष्ठासम्बन्धयोरेककालत्वात्, का निष्ठेत्यत आह–निष्ठा कारणसामग्र्यव्यापारकालः–कारणानां समवाय्यसमवायि[निमित्त]नां तन्तुसंयोगतुर्यादीनां[1] सामग्र्या अव्यापारकालः पटनिष्पत्तौ तुर्यादिव्यापारोपरमकाल इत्यर्थः, तमेव व्याचष्टे–प्रागसतो वस्तुभावः–पटादिवस्तुजन्म निष्ठानं समाप्तिरित्यादिपर्यायैः, सम्बन्धः क इत्यत आह–सम्बन्धः स्वकारणसत्तासमवायः–स्वकारणेषु तन्तुषु कार्यस्य पटस्य सत्तया च समवायः, तयोर्निष्ठासम्बन्धयोरेककालत्वं दर्शयति–सत्तासम्बन्ध एव निष्ठाकाल[:]–स्वकारणैः सत्तया च कार्यस्य यैः सम्बन्धः स एव निष्ठाकाल इति प्रतिज्ञाय कुत इति हेतुं परिपृच्छ्य हेतुमाह–समवायस्यैकत्वात्–समवायो हि सम्बन्धः, स चैको द्वयोरपि[नि]तिष्ठतोरेव[2] सम्बन्धात्[3] कारणसत्तादिभिः, तद्दर्शयति–यस्मिन्नेव परिनिष्ठां गच्छत् कार्यं–आत्मानं लभमानं पटाख्यं कारणैः–तन्त्वादिभिः सम्बध्यते

अथ यदिदं भवता विकल्पत्रयमुद्भावितं विचारितञ्च तदस्माकमसम्मतमेवेत्यत एते दोषा नास्मत्पक्षं स्पृशंति, न हि वयं सत्तासम्बन्धात् पूर्वं कार्यमभ्युपेम, किन्तु यदैवोत्पद्यते तदैव सत्तासम्बन्धो निष्ठासम्बन्धयोरेककालत्वादित्याशङ्कते–**यदपि चोक्तमिति ।** व्याचष्टे–**एतदिति** सत्तासम्बन्धात् प्राक् सता असता सदसता वेति विकल्पपक्षत्रयपरिहारेणेत्यर्थः । अभिप्रेतं विकल्पान्तरं दर्शयति–**निष्ठासम्बन्धयोरिति** निष्ठा घटादिवस्तुनो जन्म स्थितिः कर्तव्यस्य समाप्तिर्वा, सम्बन्धः समवायिकारणेन स्वजात्या च सह सम्बन्धः, एतौ एकस्मिन्नेव काले भवत इत्यर्थः । निष्ठाशब्दार्थमाह–**निष्ठेति ।** व्याचष्टे–**कारणानामिति** कारणानां सामग्र्या यो व्यापारः स यदा निवृत्तो भवति स एव निष्ठाकाल इत्यर्थः । सम्बन्धशब्दविवक्षितार्थमाह–**सम्बन्ध इति ।** निष्ठासम्बन्धयोरेककालत्वं दर्शयति–**तयोरिति** सत्तासम्बन्धस्य निष्ठायाश्चैकः काल इत्यर्थः । अत्राथ हेतुमाह–**समवायस्यैकत्वादिति** कारणेन सत्तया च सह नितिष्ठन् निष्ठां प्राप्नुवत एव सम्बन्धात् एक एव समवायो द्वयोरपि भवतीत्येकः काल इति भावः । हेतुसाध्यार्थं स्फुटयति–**यस्मिन्नेवेति,** यत्कालावच्छेदेन घटादिकार्यस्य जन्म तत्कालावच्छेदेनैव समवायसम्बन्धेन स्वोपादानसामान्याभ्यामपि सम्बन्धो न प्राक् पश्चाद्वा, अयञ्च समवायः संयोगाद्विलक्षणः, यतः संयोगः पृथक् सिद्धस्यैव भवति, न पूर्वमसिद्धस्य समवायस्तु यदैव सिद्धस्तदैव तं जात्यादिना सम्बन्धयति यथा कालाकाशाभ्यां सम्बन्ध इति भावः । **आत्मानं लभमानमिति** यदा वस्तुजन्म तत्कालावच्छिन्नम्, आद्यक्षणसम्बद्धमिति यावत्, आद्यक्षणावच्छेदेनैव सम्बन्धो न द्वितीयक्षणावच्छेदेनेति दर्शयति–**लभमानमिति** लाभकालसम्बन्धकालयोरेकताख्यापनाय परिनिष्ठां गच्छत् कारणैः सम्बध्यत इति शतृप्रत्ययान्तेन दर्शितम्, परिनिष्ठाप्राप्तिक्षणावच्छिन्नकारणसम्बन्धविषयीभूतः पट इति शाब्दबोधः । ननु पूर्वं सिद्धस्यैव पश्चात् सम्बन्धो दृष्टः, यथा घटपटयोः

1 सि. क. दण्डादीनां । 2 सि. क. नः । 3 डे. स्थितिष्टतपरसम्बन्धात् ।

समवायसम्बन्धेन—समवायाख्येन सम्बन्धेनेति, अयुतसिद्धिहेतुना, संयोगात् युतसिद्धिहेतोरस्य विशेषं दर्शयति, तस्मिन्नेव काले सत्तादिभिरपि, सम्बध्यत इति वर्त्तते, य एव कारणैः कार्यस्य समवायः स एव सत्ताद्रव्यत्वादिभिरप्येकः समवायः, कालस्याभिन्नत्वात् तस्मादप्रतिभागः, तद्यस्मान्नास्त्यत्र कालप्रतिभागो निष्ठासम्बन्धयोस्तस्मात् प्रागित्येतदेव नोपपद्यते, कार्यस्योत्पत्तेः प्रागसतः सदादिरनास्पदो विकल्प इति—सता कार्येणासता[सदसता]वा सत्तायाः सम्बन्ध इत्यर्थाभावात किमाश्रयोऽसौ विकल्पः स्यादिति तांस्त्रीनपि विकल्पा[न्]नाश्रित्य निष्ठासम्बन्धयोरेककालत्वविकल्पो निर्दोष आश्रीयतामिति ।

अत्रोच्यते—

**एतदपि न, अनुपपन्नविकल्पत्वात्, असम्बन्धात्, असम्बन्धोऽप्यवस्तुत्वात्, खपुष्पवत्, प्रागुत्पत्तेरसतः कार्यस्य परिनिष्ठां गच्छतः कथं वस्तुत्वं ? कथं वाऽवस्तुनः कारणैः सत्तया वा सम्बन्धः परिनिष्ठां गच्छेत्, यदि तस्य स्यात् खपुष्पस्यापि स्यात् अवस्तुत्वात् कार्यवत् ।**

( **एतदपीति** ) एतदपि न, अनुपपन्नविकल्पत्वात्—एषोऽपि विकल्पो नोपपद्यते, तदनुपपत्तेर्न दोषपरिहारः कृतः, कथमनुपपन्नोऽयं विकल्प इति चेत्—[अ]सम्बन्धात्. असम्बन्धोऽप्यवस्तुत्वात्, [यथा] खपुष्पस्यावस्तुनः केनचित् सम्बन्धो नास्ति तथा प्रागुत्पत्तेरसतः कार्यस्य सम्बन्धो नास्ति तस्य च कार्यस्य परिनिष्ठां गच्छतोऽसत्त्वात [कथं] वस्तुत्वम् ? कथं वाऽवस्तुनः कारणैः सत्तया वा सम्बन्धः परिनिष्ठां गच्छेत् ? इत्युत्पद्यमानमसदेव, अलब्धात्मकत्वात् तत्कार्यं तस्यामवस्थायां स्वकारणैः सत्तया वा

पृथक् सिद्धयोः संयोगः, तत्कथं सिद्धिसम्बन्धावेककालावित्यत्राह—**अयुतसिद्धिहेतुनेति,** पृथक् सिद्धपदार्थविषया हि संयोगबुद्धिः, जातायामप्यस्यां सम्बन्धिनोर्भेदबुद्धिर्न निवर्तते, अपृथक्सिद्धानामिहबुद्धिहेतुः समवायो यथा इह कपालेषु घट इति भेदेन ग्रहणेऽपि विवेक्तुमशक्यत्वादभिन्ना बुद्धिर्भवति, अत एव यत्र सत्यपि भेदेऽभिन्ना बुद्धिस्तत्रैवोपादानोपादेयभावावयवावयविभावसमवायिसमवेतभावा भवन्ति, अत एव दण्डचक्रादीनां कारणत्वाविशेषेऽपि समवायप्रभावात् यस्मात् कारणात् कार्यं विवेक्तुं न शक्यते तत्रैव तन्त्वादिषु तदारब्धमवयविद्रव्यमुपलभ्यते, ते तन्तव आधारभूता मुख्यतया देशा उच्यन्ते, संयोगेन य आधारः स पृथक् सिद्धत्वात् भेदेन विवेक्तुं शक्यत्वात् स गौणो देशः, यथा आकाशादेर्घटादिरिति ध्येयम् । अयुतसिद्धिविशेषणग्रहणफलमाह—**संयोगादिति** । कालस्यैकत्वमेव वर्णयति—**य एव कारणैरिति,** यदि समवायो नाना भवेत् तर्हि कारणसम्बन्धोऽन्यः सत्तासम्बन्धोऽन्य इत्येककालावच्छेदेन कार्यस्य कारणैः सत्तया च सम्बन्धो न स्यादिति भावः । एकत्वे कारणमाह—**कालस्याभिन्नत्वादिति,** कार्यस्य कारणैः सामान्येन च सम्बन्धकालस्याभिन्नत्वादेकः समवायोऽत एव चाप्रविभागः—भेदबुद्ध्यविषयः, अप्रविभागाच्च सत्तासम्बन्धात् प्राक् कार्यमिति कार्यसत्तयोर्भिन्नकालत्वेन निर्देशो नोपपद्यत इति भावः । अत एव च सत्तासम्बन्धात् प्राक् किं सताऽसता सदसता वा सत्तायाः सम्बन्ध इति विकल्पत्रयमनुपपन्नमित्याह—**कार्यस्येति** । स्वाभिमतं पक्षं दर्शयति **निष्ठासम्बन्धयोरिति** । वस्तूनामेव केनचित् सम्बन्धात् प्राक् वस्तुसिद्ध्यभावे सम्बन्धासम्भवात् निष्ठासम्बन्धयोरेककालताप्यनुपपन्नेत्याशयेनोत्तरमाह—**एतदपि नेति** । व्याचष्टे—**एषोऽपीति** । वस्तुन एव केनचित् सम्बन्धो नावस्तुनः, अन्यथा खपुष्पस्यापि केनचित् सम्बन्धः स्यादित्याशयेनाह—**अवस्तुत्वादिति** । तव कार्यं तु जन्मनः पूर्वं न सत् तस्माज्जन्मकालावच्छिन्नस्यासत्त्वात् कथं कारणैः सत्तया च सम्बन्धमनुभवेदित्याह—**तथा प्रागिति** । निष्पन्नार्थमाह—**इत्युत्पद्यमानमिति,** आत्मलाभानास्कन्दितत्वादिति हेत्वर्थः, तदानीं स्वरूपस्यैवाभावेन कार्यस्य खपुष्पतुल्यतया कथं कारणैः सत्तया च

१ क. स्यापिभि० । २ सि. °र्थ्यर्थः भा० । ३ × × सि. । सि. क अवस्तुत्वं ।

न सम्बध्यते, अवस्तुत्वात् खपुष्पवत्, यदि तस्य स्यात् खपुष्पस्यापि स्यात्—यदि कार्यं परिनिष्ठां गच्छदनिष्पन्नमसत् कारणैः सत्तया च सम्बध्यते ततः खपुष्पमपि परिनिष्ठां गच्छत् स्वकारणैः सत्तया च सम्बध्येत, अवस्तुत्वात् कार्यवत्, तस्मादयमपि विकल्पोऽसत् सत्तया सम्बध्यत इत्येतद्विकल्पान्तःपात्येवेति ।

**सम्बन्धकाले तन्तुवद्वस्तुभावात् परिनिष्ठितश्च सम्बद्धश्चेत्येकः कालः, तस्मात् सम्बन्धो वस्तुन इत्युक्तमिति, अत्रोच्यते पुनरपीदं तदवस्थमेव निष्पद्यमानावस्थाया उत्पत्तेः पूर्वकालत्वात्, एककाला चेत्तस्यामवस्थायां कार्यं सदेव स्यात्, स्वकारणैः सत्तया च सम्बध्यमानत्वात्, निष्पन्नकार्यवत् शशविषाणवद्वा, न हि परिनिष्ठायाः सम्बन्धाद्वा सत्त्वम्, सत एव निष्ठासम्बन्धदर्शनात्, यदि निष्ठायाः सम्बन्धाद्वा सत्त्वं तदा हि शशविषाणमपि निष्ठां गच्छत्सम्बध्येत, निष्ठितश्च सम्बद्धश्चेति भवेदसत्त्वात्, कार्यवत्, कार्यमपि वा तदा परिनिष्ठां गच्छत् स्वकारणैः सत्तया च न सम्बध्यते, असत्त्वात् खपुष्पवदिति ।**

(**सम्बन्धकाल इति**) सम्बन्धकाले तन्तुवद्वस्तुभावात्—स्यान्मतं ननु सम्बन्धकालेऽस्ति कार्यम्, उत्पद्यमानमेव वस्तु भवति, पटकारणं तन्तव इव, भवदेव च परिनिष्ठां गच्छत् सम्बध्यते, परिनिष्ठानसम्बन्धयोरेककालत्वात्, परिनिष्ठितश्च सम्बद्धश्चेत्येकः कालः—कालप्रविभागाभावः तस्मात् सम्बन्धो वस्तुनः कार्यस्य नावस्तुन इत्युक्तमित्यत्रोच्यते—पुनरपीदं तदवस्थमेव, निष्पद्यमानावस्थाया उत्पत्तेः पूर्वकालत्वात् प्रागुत्पत्तेश्च कार्यस्यासत्त्वादसतः सबध्यमानता खपुष्पादेरिव, [एक]काला चेत्तस्यामवस्थायां कार्यं सदेव स्यात् स्वकारणैः सत्तया च सम्बध्यमानत्वात्, निष्पन्नकार्यवत्, लोके हि

सम्बन्धो युज्यतेऽवस्तुत्वादिति भावः । यद्येवमपि सम्बन्धमभ्युपैषि ततोऽविशेषात् खपुष्पस्यापि सम्बन्धमभ्युपगच्छेति विपक्षे बाधकमुपनिबध्नाति- **यदि तस्य स्यादिति** । तथा चायमपि तव विकल्पोऽसतः सत्तासम्बन्धरूपविकल्पान्तर्गत एवेति दर्शयति- **तस्मादयमपीति** । ननु कारणसामग्रीव्यापारोपरमकाले कार्यजन्मेव वस्तुलाभः, नापरः कश्चिदिति यदेव कार्यस्वरूपं भवति तदेव सत्तासम्बन्धः तदेव परिनिष्ठितं इत्याप्युच्यते, कर्तव्यसमाप्तेरेव परिनिष्ठाशब्दार्थत्वात्, एवञ्च वस्तुभवनं सम्बन्धश्चैकः काल इति सम्बन्धकाले कार्यस्य स्वरूपप्राप्त्या वस्तुत्वान्नावस्तुनः सत्तासम्बन्ध इत्याशयेनाशङ्कते- **सम्बन्धकाल इति** । व्याख्याति- **स्यान्मतमिति** कारणसामग्र्या वस्तुभवनात् सम्बन्धकाले न कार्यमवस्त्वित्यर्थः । **उत्पद्यमानमेवेति** स्वरूपासादनमेव वस्तुभवनं नान्यत् किञ्चित्, तदेव च परिनिष्ठा कारणात्मनि नियमनं स्वप्रयोजकजातिसम्बन्धश्चेति परिनिष्ठानसम्बन्धयोर्नास्ति कालभेदः, सति कारणसामग्र्या कार्यभवने यथा विलम्बः तथा कारणेन जात्या च सम्बन्धे विलम्बकारणाभावान्निष्ठासम्बन्धयोरेककालत्वमिति भावः । उत्पत्तिकालः सम्बन्धकालश्चैको न भवितुमर्हतीत्याशयेनोत्तरयति- **पुनरपीदमिति**, अवस्तुनः खपुष्पवत्सम्बन्धानुपपत्तिदोषो य उक्तः स तथापि तदवस्थ एवेत्यर्थः । निष्पद्यमानावस्था हि उत्पत्तेः प्राक्कालभाविनी, न हि निष्पद्यमानकाले उत्पत्तिरस्ति, तस्मात् निष्पद्यमानकाल उत्पत्तिप्राक्कालः, तदानीञ्च कार्यमसदिति कथमसतः सबध्यमानता ? असदपि सबध्यमानञ्चेत् खपुष्पमपि सबध्यमानं भवेदिति भावः । निष्पद्यमानावस्थासम्बध्यमानावस्थयोरेककालतेष्यते तर्हि यथा द्वितीयादिक्षणावच्छिन्नं कार्यं स्वकारणैः सत्तया च सम्बध्यमानं दृष्टमपि च तदानीं कार्यं सद्दृष्टं तथोत्पत्तिप्राक्कालीनमपि कार्यं स्वकारणैः सत्तया च सम्बध्यमानत्वात् सद्भवेदित्याशयेनाह- **एककाला चेदिति** निष्पद्यमानावस्थासम्बध्यमानावस्थयोरेककालता चेदित्यर्थः । साधर्म्यवैधर्म्यदृष्टान्ते दर्शयति- **निष्पन्नेति** । शशविषाणवदिति वैधर्म्यदृष्टान्तः प्रकृतानुमानस्य, अथ वा कथमसतः सम्बध्यमानतेति ग्रन्थेन

१ सि. क्षे. °कालोचेत० ।

सम्बध्यमानानां सत्त्वं दृष्टमिति साधर्म्यदृष्टान्तः, न हि शशविषाणस्य सम्बध्यमानता दृष्टेति वैधर्म्यदृष्टान्तः, तदा न सम्बध्यते कार्यमसत्त्वात् खपुष्पवदित्यनिष्टापादनानुमानं वा, न हि परिनिष्ठायाः सम्बन्धाद्वा सत्त्वमिति–न हि परिनिष्ठासम्बन्धावन्यत्र दृष्टावपि सत्त्वमसतः कुरुतः खपुष्पादेः, सत एव निष्ठासम्बन्धदर्शनात्, यदि निष्ठायाः सम्बन्धाद्वा सत्त्वं स्यात्तदा हि शशविषाणमपि निष्ठां गच्छत् सम्बध्येत, निष्ठितञ्च सम्बद्धञ्चेति भवेत्, असत्त्वात्, कार्यवत्, कार्यमपि वा परिनिष्ठां गच्छत् स्वकारणैः सत्तया च न सम्बध्येत, असत्त्वात्, खपुष्पवत्, तदेति च–त्वदुक्तवन्निष्ठासम्बन्धयोरेककालत्वाभ्युपगमावस्थायाम्, खपुष्पादेः कार्यस्यापि तद्वदेककाले निष्ठासम्बन्धौ स्यातां स्वकारणैः सत्तया चेत्यनिष्टापादनमेतत्।

**इतश्चेतश्च समानत्वान्नेति चेत्–यथाऽसतः समवायसम्बन्धेन द्विविधेन स्वकारणसत्त्वादिभिः सम्बध्यमानताऽदृष्टा तद्वत् सतोऽपि स्यादविशेषात्, न हि सम्बध्यमानं विशिष्टं किञ्चिदिहाधिकृतमित्यत्र ब्रूमः, सम्बन्ध एव स न भवति, सत्स्वभूतत्वात्, शशविषाणवत्, विद्यमानविषयेणैव तेन भवितव्यम्, सम्बन्धत्वात्, द्व्यङ्गुलिसंयोगवत्।**

(**इतश्चेति**) इतश्चेतश्च समानत्वान्नेति चेत्–स्यान्मतं नैतदनिष्टापादनं घटते, कस्मात्? सत्यसति च सम्बन्धादर्शनतुल्यत्वात्, अस्य व्याख्या–यथाऽसत इत्यादि यावदिहाधिकृतमिति, यथैवासतः खपुष्पादेः समवायसम्बन्धेन द्विविधेन–स्वकारणसम्बन्धेन सत्तासम्बन्धेन च सम्बध्यमानताऽदृष्टा, आदिग्रहणात् द्रव्यत्वगुणत्वकर्मत्वादिभिश्चेति दृष्टान्तः तद्वदित्यादि दार्ष्टान्तिकगतार्थम्, न हि सम्बध्यमानं विशिष्टं यत्किञ्चिदिहाधिकृतम्, स्वकारणसत्त्वादिवचनादित्यत्र ब्रूमः, सम्बन्ध एव स न भवति,

संयोजनात् तदा न सम्बध्यते कार्यमसत्त्वात् शशविषाणवदित्यनुमानप्रदर्शक इत्याशयेनाह–**न हीति**। दोषान्तरमाह–**न हि परिनिष्ठाया इति,** वस्तुजन्म निष्ठा समाप्तिरित्यादिपर्यायभूतायाः परिनिष्ठायाः स्वकारणसत्तासमवायाद्वा न हि कार्यं सद्भवितुमर्हतीत्यर्थः। तथाऽदर्शनमेव तत्र कारणमिति कारणप्रदर्शनमुखेन व्याकरोति–**नहि परिनिष्ठासम्बन्धाविति**। असतः सत्त्वं परिनिष्ठया सम्बन्धेन वा न भवितुमर्हतीत्येनमर्थं प्रमाधयितुमप्रयोजकत्वशङ्कानिरासकमनुकूलतर्कमाह–**यदि निष्ठाया इति**। ननु शशविषाणं न निष्ठां गच्छत् सम्बध्यतां नाम तेन कार्यस्य किमायातम्, न ह्येकस्य तथाभवने सर्वस्यापि तथाभवनं युक्तम्, न ह्येकस्य कार्यस्य घटरूपतया भवने इतरेषामपि पटादिकार्याणां घटरूपताभवनं युज्यत इत्याशङ्कायामाह–**कार्यमपि वेति,** तदव्यभिचरितहेतुसद्भावे तत्सद्भावस्यावश्यकत्वादेककालीननिष्ठासम्बन्धव्याप्यं यदसत्त्वं तस्यासत्त्वस्याविशेषेण कार्यखपुष्पयोः सत्त्वात् एककालीननिष्ठासम्बन्धौ स्यादेव न स्यादेवेत्याशयेनाह–**कार्यमपि वेति**। खपुष्पकार्ययोः सम्बन्धमुक्त्वोभययोर्निष्ठासम्बन्धावापादयति–**खपुष्पादेरिति**। अथ यथाऽसतः सम्बध्यमानता न दृष्टा खपुष्पादेस्तथा सतोऽपि न सम्बन्धो दृष्ट एवेति समानतैव सतोऽसतो वा सम्बन्धने, नास्ति कश्चिद्विशेषस्तयोरित्याशयेन शङ्कते–**इतश्चेतश्चेति**। व्याख्याति–**स्यान्मतमिति,** खपुष्पवत् कार्यस्य सम्बन्धासम्भवप्रसञ्जनं कार्यवत् खपुष्पस्यापि सम्बन्धासञ्जनञ्च न घटत इत्यर्थः। हेतुमाह–**सत्यसति चेति** सद्विषयकसम्बन्धादर्शनासद्विषयकसम्बन्धादर्शनयोः समानत्वादित्यर्थः। तात्पर्यं प्रकाशयति–**यथाऽसत इति**। समवायस्य साक्षाद्वैविध्याभावेऽपि भाक्तं द्वैविध्यं दर्शयति–**स्वकारणेति**–अनुयोगिभेदप्रयुक्तसमवायभेदोऽत्र सत्तासम्बन्धेनेति प्रतियोगिभेदप्रयुक्तस्तद्भेद इत्यादर्शितः। स्वकारणसत्त्वादिभिरित्यत्रादिपदग्राह्यसामान्यभेदान् दर्शयति–**आदिग्रहणादिति**। सम्बध्यमाने सति असति वा नहि कश्चिद्विशेषोऽत्र प्रदर्शितः केवलं स्वकारणसत्तासमवाय इत्येवोच्यते इति भावः। स्वकारणसमवायः सत्तासमवायश्च सम्बन्ध एव न भवति, सत्प्रतियोगिकत्वानुयोगिकत्वोभयाभावात्, शशविषाणवदिति विशेषं दर्शयति–**सम्बन्ध एवेति,** समवा-

१ सि. डे. संबधोद०। २ सि. क. °मानमविशिष्टं।

सत्त्वभूतत्वात्, शशविषाणवदित्यनिष्टापादनसाधनेनासत्सतोः सम्बन्धस्यातुल्यता प्रदर्श्यते, स्वकारणैः स्वसत्तया वा कार्यस्य सम्बन्धः प्रागपि सत एवेति, तदर्थसाधनञ्चेदम् विद्यमानविषयेणैव तेन समवायसम्बन्धेन भवितव्यम्, सम्बन्धत्वात्, यथा संयोगो द्वे अङ्गुली विद्यमाने एव विषयीकुरुते, सम्बन्धशब्दवाच्यत्वात्, तथा समवायोऽपि कार्यकारणे विद्यमाने एव विषयीकुरुते, द्व्यादिपराधीनवृत्तित्वादिति ।

अतः शब्दार्थव्यवहारद्वारेणात्रैव दोषाभिधित्सयेदमाह—

**यदि त्वात्मात्मीययोरिह यथाविवक्षं स्वशब्दस्य वृत्तेरर्थव्यञ्जनसद्भावकर्तृत्वनिर्विषयास्त एव तन्तवः परिनिष्ठां गच्छन्तः सम्बध्यन्ते परिनिष्ठिताश्च सम्बद्धाश्चेति, तदा ते यदि तन्तव इत्येव तर्हि कारणमात्रवादवदयं स्यात्, सोऽपि न प्रतिपूर्येत, निर्व्यापारकारणमात्रवादाभ्युपगमात्, तन्त्वाकुण्डलनवत्, यथा तन्तूनामाकुण्डलीकृतानां कुविन्दनयनानयनप्रसारणवयनादिक्रियानिरपेक्षाणां कारणत्वं नास्ति, तत्रात्यन्तं पटकार्यादर्शनात् तथा कारणमात्रमसम्पूर्णसत्कार्यमेतत्, पूर्वोत्तरकालतुल्यत्वात् ।**

**यदि त्वात्मेत्यादि,** स्वकारणानि स्वसत्तेत्यत्र स्वशब्दस्यात्माऽऽत्मीय[ज्ञाति]धनपर्यायस्य इहाऽऽत्मन्यात्मीये यथाविवक्षं वृत्तिः स्यात्, स च कार्योऽर्थः [व्यक्तिश्च] तयोः पटव्यञ्जनयोः सद्भावे कुर्वन्ति कार्यं पटमिति कारणानि तन्तवः सम्बध्येरन् तेन पटेन, स तु नास्ति पटः, तदभावे किं

नाऽत्र धर्मा सम्बन्धत्वाभावः साध्यधर्मः, सत्त्वभूतत्वादिति हेतुधर्मः, असति सम्बन्धपक्षे यथा सम्बन्धत्वाभावलक्षणः दोषरूपो विशेषोऽस्ति, सति सम्बन्धपक्षे तु नास्ति स इति न सदसतोः सम्बन्धस्य तुल्यतेति भावः । ननु तत्समवायस्य सत्त्वभूतत्वमसिद्धम् स्वकारणस्य सत्तादेश्च सत्त्वेन सत्सु भूतत्वादिति चेन्न सत्प्रतियोगिकत्वसदनुयोगिकत्वोभयाभावस्य हेत्वर्थत्वात्, एकसत्त्वे द्वयं नास्तीति प्रतीत्या च तत्समवायेषु तादृशोभयाभावसत्त्वादिति भावः । ननु साध्योऽयं धर्मिग्राहकानुमानबाधितः, सम्बन्धतयैव तस्य सिद्धेरिति चेत्तदाऽऽह—**स्वकारणैरिति** । यद्येवं तर्ह्येवं मानं ब्रूम इत्याशयेनाह—**विद्यमानेति,** एवशब्देनाविद्यमानविषयव्युदासः, विद्यमानप्रतियोग्यनुयोग्युभयात्मना समवायसम्बन्धेन भवितव्यमित्यर्थः तेन न सिद्धसाधनम् । हेतुमाह—**सम्बन्धत्वादिति** । दृष्टान्तमाह—**यथेति,** अङ्गुलिस्वरूपे हि द्वित्ववत् सम्बन्धो नान्तर्गत इति वस्तुस्वरूपादङ्गुलिरन्तरङ्गः, द्वित्वं सम्बन्धश्च वस्त्वाधारो वस्तुमुखेन लब्धात्मलाभो बहिरङ्गः, अत एव द्वित्वादयः सम्बन्धश्च साकाङ्क्षः वस्तुत्थितः, तथा च सम्बन्धस्वरूपतायाः आकाङ्क्ष्यमाणवस्त्वधीनत्वेन पूर्वं वस्तुसद्भाव एव सम्बन्धस्य सम्बन्धतेति, यथा सम्बन्धशब्दवाच्यत्वात् संयोगसम्बन्धः प्राक् सन्तमङ्गुलिं विषयीकरोति तथा समवायोऽपि सम्बन्धात्मा प्राक् सदेव वस्तु विषयीकरोति, नासत्, तस्मादसतः सम्बन्ध एव न सम्भवतीति न सदसतोः सम्बन्धस्य तुल्यतेति भावः । सम्बन्धस्य सापेक्षतामेव दर्शयति—**द्व्यादीति,** अत्र द्विशब्देन संयोगापेक्षयाऽङ्गुलिद्वयमादिना समवायापेक्षया कार्यकारणे ग्राह्ये, स्वस्य वृत्तिलाभः द्व्यादिरूपान्यवस्तुप्रयुक्त इति भावः । अथ स्वकारणसत्तासमवाय इति वाक्यघटकपदार्थविचारेणापि दोषमादर्शयितुं स्वशब्दार्थविचारमाह—**यदि त्विति** । व्याचष्टे—**स्वकारणानीति,** 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रिया धने' । इत्यमरकोशात् स्वशब्दः प्रकृते आत्मनि आत्मीये वा यथाविवक्षं वर्तते, एवञ्च स्वकारणानीत्यत्र स्वशब्दवाच्यः कार्यरूपोऽर्थः, स्वसत्तेत्यत्र स्वशब्दवाच्यश्च सत्ताश्रयत्वेनाभिमता व्यक्तिरिति भावः । यदि कार्यं न स्यात् कथं तन्त्वादीनां कारणत्वनिश्चयः, असता पटेन च ते कथं सम्बध्येरन्? व्यक्तिर्यदि न स्यात् कया वा जातिः सम्बध्येत? तस्मादर्थव्यञ्जनयोः—पटात्मनः कार्यस्य पटात्मनो व्यक्तेश्च सद्भाव एव कारणानि तन्तवः कार्यस्य जातिसम्बन्धस्य च कर्तारो भवन्ति, तदसद्भावे तु नेत्यर्थव्यञ्जनसद्भावकर्तृत्वनिर्विषयास्तन्तवो जाताः, तथाप्येवंभूतास्तन्तवः परिनिष्ठां गच्छन्तः परिनिष्ठितं कार्यमनपेक्षमाणा एव सम्बध्यन्ते सामान्यञ्च तथाविधया व्यक्त्या परिनिष्ठितव्यक्तिमनपेक्षमाणं सम्बध्यते निष्ठासम्बन्धयोः कालविभागाभावात्, यदैव कार्यं परिनिष्ठितं तदैव सम्बद्धमपीति तवाभिप्रायः स्यादित्याशयेनाह—स्त

विषयं कारणानां कर्तृत्वमित्यर्थव्यञ्जनसद्भावकर्तृत्वनिर्विषयाः त एव तन्तवः परिनिष्ठां गच्छन्तः सम्बध्यन्ते खपुष्पेणेव कार्यकारणनिरपेक्षाः, परिनिष्ठिताश्च सम्बद्धाश्चेति कालाविभागः कार्यकारणसत्तासम्बन्धस्येत्येतदापन्नम्, ततः को दोष इति चेत्—उक्तोऽसता सम्बन्धाभावः, पुनरपीत्थमुच्यते—तदा ते यदि तन्तव इत्येव—कार्याभावात् कारणत्वव्यापारविमुखाः केवलं तन्तव इति पुरुषादिकारणमात्रमेवेदमिति वादवदयं वादः स्यात् कुतोऽसत्कार्यवादः ? सत्कार्यवादोऽपि साङ्ख्याभिमतः प्रकृत्यन्तर्लीना विकाराः ? इति, सोऽपि न प्रतिपूर्येत, स्तिमितसरःसलिलवद्गगनवद्वा निर्व्यापारकारणमात्रवादाभ्युपगमात्, प्रतिपूर्येतेति मा वोचं न प्रतिपूर्यत एवेति निष्ठुरमिति सानुनयमुच्यते, किमिव ? तन्त्वाकुण्डलनवत्—यथा तन्तूनामाकुण्डलीकृतानां—[अ]व्यञ्जितानामित्यर्थः, कुविन्दनयनानयनप्रसारणवयनादिक्रियानिरपेक्षाणां कारणत्वं नास्ति तत्रात्यन्तं पटकार्यादर्शनात्, न हि कुण्डलितेषु पटो दृश्यते, तथा कारणमात्रमसम्पूर्णसत्कार्यमेतत्, पूर्वोत्तरकालतुल्यत्वादिति, एवं निर्व्यापारपूर्वो[त्तरकाल]तुल्यतन्तुमात्रतायां पटाख्यस्य कार्यस्य कश्चिद्गन्धोऽपि नास्ति, अतस्तेन सम्बन्धानर्थक्यं कारणानां तन्तूनाम्, खपुष्पेणेव ।

किञ्चान्यत्—

**परिनिष्ठाऽपरिनिष्ठाऽविशेषश्च खपुष्पवत्, अथ पटोऽपि केनचिन्न्यायेन तन्तुष्वस्तीत्यभ्युपगम्यते ततः स्वकार्यकारणसत्तासम्बन्धद्वयतन्तुपटद्वयसान्निध्यं नानेकान्तानाश्रयणे, तस्मादेषोऽपि विकल्पोऽसत्सम्बन्धदोषदुष्ट इति ।**

---

**च कार्योऽर्थ इति ।** प्राङ्निराकृतमप्ययमुमभिप्रायं दोषान्तराऽऽसञ्जनप्रदर्शनेन पुनरपि निराकरोतीत्याह-**उक्तोऽसतेति ।** कार्येण सह सम्बन्धनकाले केवलं यदि तन्तूनामेव सत्त्वं नान्यस्य कस्यचित् तर्हि तवायं वादः पुरुषादिवादवत् कारणमात्रवाद एव स्यादित्याह-**तदा त इति.** तदानीं कार्यमपि नास्ति, सतासम्बन्धाभावेनासद्रूपत्वात्, कार्योत्पादानुकूलव्यापारोऽपि नास्ति, तदानीं निष्ठाकालत्वात्, तस्मात्तदानीं तन्तव इत्येवेति भावः । अस्तु कारणमात्रवादः को दोष इत्यत्राह-**कुत इति ।** विवर्तवादस्य सत्कार्यवादस्य वा प्रसङ्गो नासत्कार्यवादस्येति भावः । पुरुषादिकारणेत्यत्रादिपदग्राह्यप्रधानकारणमात्रवादापेक्षसत्कार्यवादत्वमपि तव वादः परिपूर्णतया न प्राप्नोतीत्याशयेनाह-**सत्कार्यवादोऽपीति,** सत्कार्यवादे हि प्रकृतौ सर्वे विकारा अन्तर्लीना भवन्ति, तव वादे तु कारणमनन्तर्गर्भीकृतविकारं विकाराभिव्यक्तियोग्यव्यापारविधुरञ्चेति कथं ते वादः परिपूर्णसत्कार्यवादः स्यादिति भावः । प्रतिपूर्येतेति 'विधिनिमन्त्रणामन्त्रणे'त्यादिसूत्रेण सत्कारपूर्वकव्यापारलक्षणाधीष्टार्थकलिङन्तनिर्देशो मूलकृता कृतः कृत इत्यत्र कारणमाह-**मा वोचमिति ।** परिपूर्णसत्कार्यवादत्वाभावे निदर्शनमाह-**तन्त्वाकुण्डलनवदिति ।** दृष्टान्तं स्फुटयति **यथेति,** आसमन्तात् कुण्डलं-वेष्टनमावेष्टनं गेन्दुकवत् सर्वतो भावेन वेष्टिता तन्तवस्तन्तुवायव्यापारविरहितास्तदानीं न पटकारणतामियति, तुरीवेमादियत्किञ्चित्पटकारणसन्निधानाभावादत्यन्तं पटादर्शनादप्रतिपूर्णसत्कार्यरूपा तथाकारणमसम्पूर्णसत्कार्यमात्रमेतदिति भावः । तत्र हेतुमाह-**पूर्वोत्तरेति,** सहकारिसन्निधानकालात्पूर्वकाले तन्तवो यथा निर्व्यापारकारणमात्रं तथा कारणसामग्रीव्यापारोपरमकालेऽपीति समानत्वादित्यर्थः । उपसंहरति- **एवमिति ।** दोषान्तरमप्याह- **परिनिष्ठेति,** यथा खपुष्पे कार्यमत्यन्तमसत् खपुष्पमपि निर्व्यापारत्वात् पूर्वकाले उत्तरकाले च निरन्तरमेकस्वरूपमेव तस्मात्तत्र पटादिकार्यं परिनितिष्ठति पूर्वकाल इवोत्तरकालेऽपि, अन्यथोत्तरकाल इव पूर्वकालेऽपि परिनिष्ठानं स्यात्तथा तन्त्वादिकारणमात्रेऽपि विशेषाभावात् सर्वदा सर्वथा कार्यस्य

---

१ सि. डे. कुविन्दतनतयानयन० । क० कुवदतननयानयन० ।

**( परिनिष्ठेति )** परिनिष्ठाऽपरिनिष्ठाऽविशेषश्च दोषोपचयः, खपुष्पवत् कार्यस्यात्यन्तमसत्त्वात् कारणानाञ्चात्यन्तं पूर्वोत्तरकालतुल्यत्वात्, आकाशवत् किं कथं परिनिष्ठितं तिष्ठति ? न परिनितिष्ठति ? सर्वं हि सर्वदा सर्वथा परिनिष्ठितमपरिनिष्ठितं वा स्यादित्यविशेषः, एवं न सम्पूर्णमत्कार्यैकारणमात्रवादित्वं सम्बन्धानर्थक्यं निष्ठाऽनिष्ठाऽविशेषश्चेति दोषाः स्वसिद्धान्तोपरोधिनस्ते, अथ पटो[ऽपि]–अथ मा भूवन्नेते दोषा इति पटोऽपि केनचिदभिप्रायेण तन्तुष्वस्तीत्यभ्युपगम्यते सोऽप्यभ्युपगमविरोधायैकान्तवादिनस्तेऽनेकान्तवादाभ्युपगमो जायत इत्यत आह–नतः स्वकार्यकारणसत्तासम्बन्धद्वयनन्तुपटद्वयसान्निध्यं नानेकान्त[ा]नाश्रयणे–पटस्य कार्यस्य स्वकार्यकारणैः तन्तुभिः स्वसत्तया चेति द्वौ सम्बन्धौ तावेव कार्यकारणानि च द्वावर्थाविति तदेव तच्चतुष्टयमव्यक्तसत् पटः तन्त्ववस्थायां तन्तुभिः स्वकारणैः सत्तया च सम्बद्धः कुविन्दादिव्यापारोत्तरकालं व्यक्तसत् भवति पटात्मना परिणतेरिति द्रव्यपर्यायात्मकस्याद्वादपरमेश्वराश्रयप्रभावलभ्यमेतद्वचनसामर्थ्यम्, नान्यथेति, तस्मादेषोऽपि विकल्पोऽसत्सम्बन्धदोषदुष्ट इति ।

**असत्सम्बन्धदोषपरिहारार्थञ्च प्रशस्तोऽन्यथा व्याचष्टे–सम्बन्धश्च सम्बन्धश्च सम्बन्धौ निष्ठायाः सम्बन्धौ निष्ठासम्बन्धौ न निष्ठा च सम्बन्धश्चेति, तयोर्निष्ठासम्बन्धयोरेककालत्वात् निष्ठितं निष्ठां गच्छद्गतमिति, कोऽर्थः ? कर्त्रादीनां कारकाणां परिस्पन्दाद्वस्तुभावमापन्नमव्यपदेश्याधारं समवायहेतुः कार्यं निष्ठितं निष्ठेत्युच्यते तस्य स्वकारणैः सत्तया च युगपत् सम्बन्धौ भवत इति, भाष्यमपि–केन पुनर्लक्षणेन गतं सद्गच्छदित्युच्यते ब्रूमः 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा' ( पा० अ० ३ पा० ३ सू० १३१ ) इति, किमिव ? यथा कारकान्तरादुत्पद्यमानं उत्पन्नमित्यर्थः, कस्मात् ? दृष्टमित्यक्षिगोचरापन्नार्थनिर्देशात्, इतरथा दृष्टं न स्यात्, तत्पुनः कतमत् कारकव्यापारात् ? देवदत्तस्थालीकाष्ठादीनां व्यापारादिति ।**

---

परिनिष्ठानमपरिनिष्ठानं वा भवेदित्यभिप्राय वर्णयति–**कार्यस्येति** । उक्तापत्तेरिष्टत्व निराकर्तुमाह–**सर्वं हीति**, तन्तुकारणमात्रेऽविशेषाद्यथा पटस्य परिनिष्ठानमपरिनिष्ठान वा भवति तथैवाविशेषात् घटादिसर्वकार्याणामपि सर्वकालं सर्वरूपेण परिनिष्ठानमपरिनिष्ठानं वा भवेदिति भाव । निगमयति–**एवमिति** । यद्यभिप्रायविशेषत कारणे कार्यसत्त्वमुक्तदोषोद्दिधीर्षया प्रतिजानीषे तर्हि तत्रापि दोषं वदाम इत्याशयेनाह–**अथ पटोऽपीति** । एतत्पक्षेऽप्यनेकान्तवादप्रसञ्जनात तवाभ्युपगमविरोध इत्याह–**सोऽपीति** । कथमित्यत्राह–**नत इति**, तन्तुषु केनचिदभिप्रायेण कार्यसत्त्वेऽभिमते सति सोऽभिप्रायस्तन्तुषु प्राक् पटात्मना पटोऽव्यक्तसन् ततो व्यक्तसन् भवति इत्येवंरूप एव स्यान्नान्यथा, यत प्राक् तन्तुषु कार्यसम्बन्ध कार्यं कार्ये सामान्यसम्बन्धश्चाभ्युपगत, तस्य चायमर्थ स्यात तन्तुषु प्राक् समवायेन पटत्वेन पटोऽस्तीति, तथा च तदानी तथाऽदर्शनात अव्यक्तसदिति वाच्यम्, गत्यन्तराभावात, ततश्च साधनसामग्रीव्यापारोपरमकाले व्यक्तसन भवतीति स्याद्वादाश्रयणमेवैषोऽभिप्राय सूचयतीति भाव । अव्यक्तसत्त्वव्यक्तसत्त्वयो परस्पराभावरूपयोरेकत्र धर्मिणि निरवच्छिन्नयोर्विरोधात्तद्विरोधपरिहारायावच्छेदकभेदमुपदर्शयति–**द्रव्यपर्यायात्मकस्याद्वादेति,** स्वपरद्रव्यक्षेत्रकालभावावच्छिन्नत्वविषयकोपस्थितिजनकस्यात्पदसमलङ्कृतद्रव्यपर्यायात्मकवस्तुबोधकवाक्योपन्यसनात्मकस्याद्वादाभिन्नपरमेश्वरसंश्रयणमहिमासादितवचनमेवेदं त्वदीयं वचनमिति भाव । एवञ्च स्वसिद्धान्तप्रतिबन्धकदोषप्रसवक्षम एव विकल्पो निष्ठासम्बन्धयोरेककालत्वलक्षणोऽसतोऽपि शशविषाणादे सम्बन्धसम्भवप्रभृतिदोषकलङ्ककलुषित इति भाव । एतद्विकल्पधर्मिकप्रसक्तिप्रकारीभूतदोषविषयकज्ञानधर्मिकाप्रामाण्यनिश्चयोत्पादानुकूलप्रयत्नविषयकेच्छाप्रयुक्त. कटन्दीव्याख्याकार आत्मानं विद्वांसमिवाचरन् प्रशस्तमतिर्निष्ठासम्बन्धयोरेककालत्वमिति मूलमन्येन प्रकारेण व्याचष्ट इत्याह–**असदिति**

**असत्सम्बन्ध**[दोष]परिहारार्थश्चेत्यादि, निष्ठासम्बन्धयोरेक[काल]त्वादित्येतदेव वाक्यं सभाष्यमसत्सम्बन्धदोषपरिजिहीर्षया विद्वस्यन् प्रशस्तोऽन्यथा व्याचष्टे—सम्बन्धश्च सम्बन्धश्च सम्बन्धौ, निष्ठायाः सम्बन्धौ निष्ठासम्बन्धौ, न निष्ठा च सम्बन्धश्चेति तयोर्निष्ठासम्बन्धयोरेककालत्वात्, निष्ठितं निष्ठा निष्ठां गच्छद्गतमिति, कोऽर्थः ? कर्त्रादीनां कारकाणां—कुविन्दतुरीवेमादीनां परिस्पन्दाद्वस्तुभावं—वस्तुभवनमापन्नं निष्पन्नमव्यपदेश्याधारं—अव्यपदेश्य आधारोऽस्य तन्त्वादिः, समवायहेतुः, इह तन्तुषु पट इतीहप्रत्ययाभिधानकारणस्य समवायसम्बन्धस्य निमित्तभूतं पटाख्यं कार्यं निष्ठितं निष्ठेत्युच्यते, तस्य—निष्ठितस्य स्वकारणैः सत्तया च युगपत्सम्बन्धौ भवतः, भाष्यमपीति, अस्य वाक्यस्य व्याख्या—यथाप्ययं परिनिष्ठां गच्छद्गतमित्येतमर्थं दर्शयति—केन पुनर्लक्षणेन गतं सद्गच्छदित्युच्यते ? ब्रूमः 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा (पा० ३-३-१३१) इति, किमिवेत्यतो निदर्शनमाह—यथा कारकान्तरादुत्पद्यमानं[3] दृष्टमिति—कारकादन्यत्कारकं कारकान्तरमुत्पद्यमानं—उत्पन्नमित्यर्थः, कस्मात् ? दृष्टमित्यक्षिगोचरापन्नार्थनिर्देशात्, इतरथा दृष्टं न स्यात्, उत्पद्यमानस्यानुत्पन्नत्वे दृष्टिगोचरत्वानुपपत्तेः, तत् पुनः कतमत् कारकव्यापारात् ?

---

व्याकरोति—**निष्ठासम्बन्धयोरिति,** आत्मानं विद्वांसमिवाचरति विद्वस्यति 'उपमानादाचारे' इति क्यन्, विद्वस्यतीति विद्वस्यन्। सम्बन्धश्च सम्बन्धश्चेति द्वन्द्वे 'सरूपाणामेकशेष एकविभक्तौ' इत्येकशेष इत्याह—**सम्बन्धश्चेति**। निष्ठासम्बन्धयोस्तु प्रागुक्तरीत्या न द्वन्द्वः कार्य इत्याह—**न निष्ठा चेति,** नितिष्ठतीति निष्ठा, निष्ठानं निष्ठेति वा, 'आतश्चोपसर्गे' इति कप्रत्ययः, अङ्प्रत्ययो वा, निष्ठितमित्यर्थः, निपूर्वात् स्थाधातोः क्तप्रत्यये 'द्यतिस्यतिमास्थामित् तिकिति' इति सूत्रेण स्थासम्बन्धिन आकारस्येकारे निष्ठितमिति भवति। परिनिष्ठां प्राप्नुवत् इत्यर्थकेण निष्ठाशब्देन निष्ठितमुच्यत इत्याह—**निष्ठितमिति**। तात्पर्यं वक्ति—**कर्त्रादीनामिति,** नियतजातीयाभिसन्धानप्रयुक्तकारकव्यापारजन्यनिष्पत्तिविषयव्यपदेशयोग्यानाधारसमवायनिमित्तभूतपटाख्यं कार्यं निष्पन्नं तदपि निष्पद्यमानमुच्यते, तस्माद्वस्तुसत्त्वात् पटादेरुत्पत्तिक्षणावच्छेद्यौ स्वकारणसत्तासमवायौ भवत इत्यर्थः, अव्यपदेश्याधारं—समवायेन कार्यकारणयोर्भेदस्य तिरोधानादेकत्वसदृक्षबुद्धिप्रसञ्जनादाधारस्तन्त्वादि पटभिन्नबुद्धिविषयतानाश्रय इति भावः, इदमत्र तात्पर्यं समप्रसाधनव्यापारोपरमकालो व्यपदेशयोग्यतासमापत्तिकालो व्यपदेशादर्थक्रियानुभवकालो वा निष्पत्तिरिति तत्र व्यपदेशयोग्यतासमापत्तिकाल एव निष्ठासम्बन्धकालस्तदानीं व्यापारोपरमकालापेक्षया निष्पन्नमपि वस्तु व्यपदेशायोग्यत्वात् परिनिष्ठां गच्छदित्युच्यत इति। एवञ्च सम्बन्धकाले वस्तुनो निष्पन्नत्वान्निष्पद्यमानत्वाच्च स्वकारणे सत्तया च युगपत्सम्बन्धे न कोऽपि दोष इत्याशयेनाह—**निष्ठितस्येति**। निष्ठितं निष्ठां गच्छद्गतमित्युच्यत इति वाक्यस्य भाष्यं तदीयमुपन्यस्यति—**भाष्यमपीति**। निष्ठितस्य निष्ठां गच्छदिति व्यपदेशे व्याकरणसूत्रं प्रमाणयति—**वर्त्तमानसामीप्य इति,** वर्त्तमाने लडित्यारभ्य उणादयो बहुलमिति यावत् येनोपाधिना प्रत्यया उक्ताः ते तथैव वर्त्तमानसामीप्ये भूते भविष्यति च वा स्युरिति तदर्थः। अर्थक्रियाकाले निष्पत्तिं मन्वान उदाहरति—**यथा कारकान्तरादिति,** शालीनां एका निष्पत्तिः बीजधरणिसलिलसंयोगमात्रप्रयुक्ता, अपरा तदुत्तरकालभावितपनादिसंयोगपरम्पराजनितोपकाराधीना परिदृश्यमानशालिफलदशा, अन्या च शालिसस्यवियोजनखलप्रसारणशोषणपश्चादिमर्दनवायूद्धूननादिव्यापारपरिकर्मिता, एवमन्यान्यकारकव्यापारसाध्या शालिनिष्पत्तिः, तत्र परिदृश्यमानशालिविपाककाले तपनादिसंयोगादिकारकान्तराच्छालिसस्यवियोजनादिकारकान्तरादुत्पद्यमानमपि शालिफलमुत्पन्नमुच्यत इति भावः। कथं तदुत्पन्नमुच्यत इत्यत्र हेतुमाह—**दृष्टमितीति,** चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वात्, न ह्यनुत्पन्नं चाक्षुषप्रत्यक्षविषयो भवितुमर्हति, प्रत्यक्षं प्रति विषयसद्भावस्य हेतुत्वादिति भावः। उत्पन्नस्योत्पद्यमानता कथमिति शङ्कते—**तत्पुनः कतमदिति,** केन पुनः कारकव्यापारेण तदनुत्प-

---

१ सि. क. मित्येकोऽर्थः। २ सि. क. °वायि°। ३ सि. ख. क. डे. °न्तरमुत्पद्य°।

देवदत्तस्थालीकाष्ठादीनां व्यापाराद्वस्तु आत्मलाभमापन्नं पूर्ववदव्यपदेश्याधारं निर्वृत्तं सदोदनाद्याख्यं स्वकारणैस्तन्दुलादिभिः सत्तया च सम्बध्यते तथा पटाख्यमिति ।

अत्र ब्रूमः—

**तदपि न समवायिकारणत्वविरोधात्, स्ववचनविरोधोऽभ्युपगमविरोधश्च, यदि पुनर्वस्तुभावं गतं कार्यं कारणैः सत्तया चाभिसम्बध्यते ततोऽनारम्भकाण्यकारणानि च कारणद्रव्याणि स्युः, किञ्च कार्यकारणगुणगुणिव्यक्त्याकृतीनामयुतसिद्धः समवायः सम्बन्ध उक्तोऽभ्युपगतश्च तयोर्विरोधोऽपि, इदानीं निष्ठितस्य कार्यस्य कारणैः सत्तया च सम्बन्धोऽभ्युपगतस्स च युतसिद्धः, कार्यस्य कारणेभ्योऽन्यत्र परिनिष्ठितत्वात् ।**

**( तदपि नेति ) तदपि न,** समवायिकारणत्वविरोधात् स्ववचनविरोधोऽभ्युपगमविरोधश्च दोषावित्थं ब्रुवतः, क्रियागुणवत्समवायिकारणं[1] द्रव्यमुक्तम्, समवायिनो द्रव्यान्तरस्य गुणकर्मणोश्चारम्भकत्वात्, यदि पुनर्वस्तुभावं गतं कार्यं—द्रव्यादित्रयं कारणैः सत्तया चाभिसम्बध्यते ततोऽनारम्भकाण्यकारणानि च तन्त्वादिकारणद्रव्याणि स्युः, ततश्च वचनमभ्युपगमश्च निवर्त्तेते समवायिकारणं कार्याणां[2] द्रव्यमिति, किञ्चेत्यादि यावत् परिनिष्ठितत्वादिति, एतावपि स्ववचनाभ्युपगमविरोधौ, यस्मात् कार्यकारणगुणगुणिव्यक्त्याकृतीनामयुतसिद्धः समवायः सम्बन्ध उक्तोऽभ्युपगतश्च, इदानीं निष्ठितस्य कार्यस्य कारणैः सत्तया च सम्बन्धोऽभ्युपगतः, स च युतसिद्धसम्बन्धः, कार्यस्य कारणेभ्योऽन्यत्र परिनिष्ठितत्वात्, घटाकाशवत् ।

**यत्तूच्यते समवायिकारणत्वनिवृत्तिरिति चेन्न, अन्यत्रासमवायात्, यदि तस्य समवायोऽन्यत्र स्यात् स्यात् समवायिकारणत्वनिवृत्तिः, न चैवम्, तस्माददोष इति, सोऽप्यपरिहारः, इच्छामात्रत्वात् स्वोक्तोपपत्तिविरुद्धार्थत्वात्, विरुद्धार्थत्वमसम्बद्धत्वात्, तन्तुष्विव घटस्य, द्रव्यादिकार्यस्य तदसिद्धमिति चेन्न, तत्राप्रवृत्तत्वात्, तत्रानारम्भात् तदसम्बद्धोत्पत्तित्वात्, कार्यस्य च तदसम्बद्धस्याप्युत्पादे खपुष्पमप्युत्पद्यतां कारणैरसम्बद्धत्वात्, त्वदभिमतकार्यवत् ।**

**यत्तूच्यत इत्यादि** यावत्तस्माददोष इति—द्रव्यसमवायिकारणत्वनिवृत्तिदोषपरिहारो[3] योऽभि-

---

समुच्यत इत्यर्थ । समाधत्ते—**देवदत्तेति** । अभ्युपगममेनमुदस्यति—**तदपि नेति** । व्याचष्टे—**समवायीति** । दोषान्तर समुच्चिनोति—**स्ववचनेति** । समवायिकारणत्वविरोध स्फुटयति—**क्रियागुणेति,** अवयविद्रव्यस्य गुणकर्मणोश्च द्रव्यमारम्भकं भवतीति तस्य समवायिकारणत्वमुक्तमित्यर्थ । अथ दोषमाह—**यदि पुनरिति । अनारम्भकाण्यकारणानि चेति,** अन्यत्र वस्तुभावं गतस्यैव तन्त्वादिकारणं समवायाभ्युपगमादसम्बद्धस्य कथं कारणत्वमतिप्रसङ्गादिति भाव । वचनाभ्युपगमविरोधौ दर्शयति—**ततश्चेति** । स्ववचनाभ्युपगमान्तरविरोधौ दर्शयति—**एतावपीति,** निष्पन्नवस्तुभावस्यैव तन्त्वादिना सम्बन्धे पृथक् पृथक् सिद्धयो. सम्बन्धात् स सम्बन्धो युतसिद्ध एव स्यात, नायुतसिद्ध, तन्तुष्वेव पटस्य परिनिष्ठानाभावान, स्वत एव तन्तुसम्बन्धव्यतिरेकेणैव परिनिष्ठानादिति भाव. । एनामेव समवायिकारणत्वनिवृत्तिमाशंक्य प्रशस्तमतिना यत्समाहितं तद्दूषयितुमाह—**यत्तूच्यत इति** ।

---

१ सि. क. क्ष. डे. क्रियावद्गुणसम । २ सि. क. समवायिनां कार्याणां । × × क. क्ष. । ३ सि. क. कारणत्वाद्विदोष० ।

हितः—समवायिकारणत्वनिवृत्तिरिति चेदित्याशंक्य, न, अन्यत्रासमवायादिति, तद्व्याख्यानं—यदि तस्येत्यादि सुलिखितत्वान्न विव्रियते, सोऽप्यपरिहारः, इच्छामात्रत्वात् कार्यस्य निष्ठितस्य कारणैः सम्बन्धोक्तिरन्यत्र समवायाख्यायिनी नान्यत्रासमवायादित्युत्तरवाक्यं विरुणद्धि, तदितरविरोधि, तर्तं[1] उपपत्तेर्विरुद्धार्थत्वात् इच्छामात्रं ते वचो न परिहार इत्यत आह—स्वोक्तोपपत्तिविरुद्धार्थत्वात्, विरुद्धार्थ[त्व]मसम्बद्धत्वात्तैः कारणैः कार्यस्य, तदसम्बद्धत्वमन्यत्र परिनिष्ठितत्वात्[2], किमिव ? तन्तुष्विव घटस्य—यथा तन्तुषु घटस्यानिष्ठितत्वादन्यत्र कपालेषु निष्ठितत्वात्तन्तुभिरसम्बद्धत्वमेव, द्रव्यादिकार्यस्य तदसिद्धमिति चेन्न, तत्राप्रवृत्तत्वात्, तन्तुष्विव घटस्येति वर्त्तते, तत्राप्रवृत्तत्वमन्यत्र प्रवृत्तत्वञ्च तत्रानारम्भात्, तत्रानारब्धत्वञ्च[3] तदसम्बद्धोत्पत्तित्वात्—तैः कारणैरसम्बद्धस्य पटस्योत्पत्तिस्तत्त्वात्[4] तत्रैवारम्भप्रवृत्तिनिष्ठाः तन्तुषु पटस्य न सन्ति घटस्येवाकाशस्येव[5] खपुष्पस्येव वा सामान्येनैक एव हेतुस्तदसम्बद्धोत्पत्तित्वादिति, अनिष्टापादनञ्चात्र कार्यस्य चेत्यादि, खपुष्पमुत्पद्यताम्, कारणैरसम्बद्धत्वात्, त्वदभिमतकार्यवत् ।

---

**अन्यत्रासमवायादिति,** तन्तुषु यथा न समवायः पटस्य तथान्यत्रापि समवायाभावान कारणेभ्योऽन्यत्र परिनिष्ठितत्वात् समवायिकारणत्वनिवृत्तिरित्यभिधानमसङ्गतमिति भाव । अन्यत्र समवायं प्रदर्शयन्निराकरोति-**सोऽप्यपरिहार इति,** अन्यत्रासमवायादिति परिहार· साधनान्तराभावेनेच्छामात्रतयोक्तेर्न परिहार इति भाव· । निष्ठितस्य कारणै· सम्बन्धनमन्यत्र निष्ठितत्वव्याप्यं तदन्तरेण तदसम्भवात, तस्मान्निष्ठितस्य सम्बन्धोक्तिरेवान्यत्रानिष्ठितत्वं प्रतिरुणद्धि, यदि च तस्यान्यत्र न समवायस्तर्हि क्वाप्यसमवायान्नासौ परिनिष्ठित· स्यादित्यन्यत्रासमवायो निष्ठितत्व विरुणद्धीत्यन्यत्रासमवायादिति वचनमिच्छामात्रवचनमेव न परिहारायालमिति निरूपयति-**कार्यस्येति ।** इच्छामात्रत्वे हेतुमाह—**स्वोक्तेति,** स्वेन प्रोक्ता योपपत्ति –परिनिष्ठानमापन्नस्य कार्यस्य स्वकारणैस्तन्तुभिः समवायस्योपपादनं तया विरुद्धोऽर्थोऽस्य—अन्यत्रासमवायादित्यस्य वचनस्य तत्त्वादित्यर्थ । कुतोऽस्यार्थो विरुद्ध इत्यत्राह—**असम्बद्धत्वादिति** यतस्त्वया कारणै· कार्यस्यासम्बद्धत्वमुच्यतेऽत एवान्यत्र परिनिष्ठानं तस्य सेत्स्यति, यथा तन्तुषु घटस्यासम्बन्धेऽन्यत्र कपालेषु परिनिष्ठानं स्थिति समवायो वा दृश्यते, यदि तु तस्यान्यत्र परिनिष्ठानं तर्हि यथा तन्तुषु घटस्य न कदापि सम्बन्धस्तथा पटस्यापि तन्तुभिरसम्बद्धत्वमेव स्यादिति भाव । द्रव्यादिकार्यस्यान्यत्र परिनिष्ठानमसिद्धम्, गुणादौ द्रव्यादे परिनिष्ठानासम्भवादित्याशङ्कते-**द्रव्यादीति । तत्राप्रवृत्तत्वादिति,** द्रव्यादौ प्रवृत्त्यभावादित्यर्थ , न हि द्रव्यादौ तस्य परिनिष्ठानार्थं प्रवृत्तिरिष्टेति भाव· । यथा तन्तुषु घटस्य प्रवृत्तिर्नास्ति नातस्तत्र परिनिष्ठानमिति दृष्टान्तयति-**तन्तुष्विवेति ।** कुतो न तत्र प्रवृत्तिरिति चेदतस्तत्रारम्भो नास्तीति दर्शयति—**तत्राप्रवृत्तत्वमिति ।** अनारम्भोऽपि तत्र कुत इति चेदाह—**तत्रेति** कारणैरसम्बद्धस्यैव कार्यस्योत्पादात, परिनिष्ठानानन्तरं हि कारणै· सह त्वया कार्यस्य सम्बन्धोऽभ्युपगम्यते, तस्मादसम्बद्धकार्योत्पत्तिरिति भाव । एवञ्च यत्रैवारम्भस्तत्रैव प्रवृत्ति तत्रैव च परिनिष्ठानं युक्तम्, तन्तुषु च न पटस्यारम्भ इति न तत्र प्रवृत्ति· परिनिष्ठानञ्च, न हि घटस्याकाशस्य खपुष्पस्य वा तन्तुष्वारम्भप्रवृत्तिनिष्ठा भवन्ति तदसम्बन्धोत्पत्तित्वादेवं पटस्यापीत्याशयेनाह-**तत्रैवेति ।** पटस्य तन्त्वसम्बद्धोत्पत्तित्वेऽपि यदि तन्तुष्वारम्भप्रवृत्तिनिष्ठा अभ्युपगम्यन्ते तर्हि खपुष्पमप्युत्पद्यताम्, कारणैरसम्बन्धत्वात् पटादिवदिति विपक्षेऽनिष्टमापादयति-**कार्यस्य चेति ।** यदि कारणैरसम्बद्धस्योत्पत्तिस्तर्हि खपुष्पमप्युत्पद्यतां कार्यवदित्यनिष्टापादनं न

---

१ सि. क. डे. ततोऽनुप० । २ सि. क. डे. °मन्येव प्र० । ३ सि. क. डे. तदनुपनारब्धातद० । ४ सि. क. डे. °स्यतौरदष्ट० । ५ सि. क. डे. घटस्यैवाकाशस्यैव ।

**अकारणत्वादिति चेत्, पटाद्यपि कार्यं मोत्पादि, अकारणत्वात्, खपुष्पवत्, तद्वोत्पद्यताम्, अकारणत्वात्, कार्यस्योत्पत्तिवत्, यथा तन्त्वादीनि कार्येणासम्बन्धादसतः सतोऽप्यकारणानीति सर्वञ्च कारणमकारणञ्च यथायोगं स्वस्यैव कार्यस्य नासतो नान्यकार्यस्य वा, असम्बन्धात्, कार्यकारणभावश्च सम्बद्धत्वे सति भवति, तस्मात् सम्बन्धः प्रागपि कार्योत्पत्तेः।**

(**अकारणत्वादिति**) अकारणत्वादिति चेत्—निष्कारणञ्च खपुष्पं पटादि मकारणम्, तस्माद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादयुक्तमिदमनिष्टापादनमिति चेदुच्यते—पटाद्यपीत्यादि, पटाद्यपि कार्यं मोत्पादि, अकारणत्वात् खपुष्पवत्, अकारणत्वञ्चास्य कारणासम्बद्धत्वात्, आकाशवत्, तद्वोत्पद्यतामिति, कारणासम्बद्धस्य कार्यस्योत्पत्तिवत्, खपुष्पञ्चो[१]पपद्यमानकारणत्वादित्युक्तमेव, यथा तन्त्वादीनीति, तन्त्वादीनां कारणानां[२] कार्येण सम्बन्धो[३] यतो नास्ति तस्मात्तेष्वसतः सतोऽप्यकारणानि कार्यस्यात्यन्तासतः खपुष्पस्येव घटस्येव वा कारणान्तरसाध्यस्येत्युक्तमुपनयति—सर्वञ्च[४] कारणमित्यादि, करोतीति कारणं कर्तृसाधनम्, खपुष्पादि घटादि वा तन्तुभिर्न क्रियते ततस्तत्राकारणानि पटस्तु क्रियते तस्मात्तस्य कारणानि, यो[यो] योगो यथायोगं स्वस्यैव कार्यस्य—तन्तवः पटस्य कपालादीनि घटस्य, नासतो नान्यकार्यस्य वा, कस्मात्? असम्बन्धात्, कार्यकारणभावश्च सम्बद्धत्वे सति भवति तस्मात् सम्बन्धः प्रागपि कार्योत्पत्तेः—तत्कारणैः सम्बन्धोऽस्ति, कथं तत्कार्यं नितिष्ठति कारणैरसम्बद्धम्? तस्मात् कार्यमव्यक्तसद्व्यक्तसद्भवति, सम्बद्धञ्च सदा स्वकारणैरित्यनुमीयते।

सम्बन्धसमवायशब्दार्थावप्येवमेव घटेते नान्यथेत्यतः—

**योऽयमेकीभावेन बन्धः स सम्बन्धः, अनेकसर्वैकात्मकत्वात्, एकीभावेनापगमनेन गतिः, द्रव्यपर्यायाभ्यां तन्तुत्वापरित्यागेन पटत्वपरिणामः समवायः कारणसत्कार्यैकत्वलक्षणः, तदापत्तिरूपाद्भयात्त्वयेदममार्गप्रपदनमस्थाने क्रियते यदिदमव्यपदेश्याधारकार्यसम्बन्धकल्पनम्, कार्यस्यासत्त्वात्।**

युक्तम्, खपुष्पादि कारणस्यैवाप्रसिद्धेरित्याशङ्कते—**अकारणवदिति चेदिति**। व्याचष्टे—**निःकारणमिति**। नास्ति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमकारणत्वस्योभयत्र समानत्वादित्यत आह—**पटाद्यपीति**। तन्त्वादिभिः पटस्यासम्बन्धादेवाकारणत्वं सिद्धमित्याह—**अकारणत्वञ्चेति**। तथाप्युत्पादाभ्युपगमे खपुष्पमप्युत्पद्यतामस्यापि कारणत्वोपपत्तेः प्रागुपदर्शितत्वादित्याह—**तद्वेति**, खपुष्पं वेत्यर्थः। किमत्र कारणमित्यत्राह—**खपुष्पञ्चेति**, पर्वोदितेत्तरेषूक्तमेवेत्यर्थः। कर्तृसाधनकारणशब्दाभ्युपगमेन स्वमतमादर्शयति—**यथेति**, तन्त्वादिकारणेषु कार्यस्य सम्बन्धाभावात्तेऽत्यन्तासद्रूपस्य खपुष्पादेः कारणान्तरसाध्यस्य सद्रूपस्य वा घटादेर्न कारणानि, तन्तुभिः पटादेः क्रियमाणत्वात् कारणानि च तस्मात् सर्वमकारणमपि भवति कारणमपि च, तन्त्वादीनां खपुष्पघटादिनिरूपितकर्तृत्वाभावात् पटादिनिरूपितकर्तृत्वाच्च तेषां ते सम्बन्धाभावेन कार्यकारणभावाभावात्तेषां ते सम्बन्धाच्च तद्भावादिति भावः। कारणाकारणत्वे घटयति—**खपुष्पादीति**। अकारणत्वे हेतुमाह—**असम्बन्धादिति**। अत एव कार्यकारणभावो न भवतीत्याह—**कार्यकारणभावश्चेति**, उत्पत्तेः पूर्वं कार्यस्यासत्त्वे सतोऽप्यसम्बन्धे कारकाणां व्यापारो न स्यात्, जननक्रियायोग्यवस्तुभूतकार्यनिष्ठो हि कारकाणां व्यापारः, स चासति कार्येऽसम्बद्धे वा नास्ति, उत्पन्नस्य कार्यस्यैवैवञ्चोत्पत्तेः प्राक् कार्यस्यासत्त्वात् कारणैः सह सम्बन्धो नास्तीति क्व कारणानां व्यापारः? उत्पन्नं वा कारणैरसम्बद्धं कुत्र नितिष्ठेदिति भावः। तस्मादस्ति सम्बन्ध इति स्वाभिप्रायमादर्शयति—तस्मादिति। सम्बन्धसमवायशब्दार्थावप्यव्यक्तसद्व्यक्तसद्भवतीत्येनमर्थं पोषयतीत्यादर्शयति—**योऽयमिति**।

१ सि. क. ञ्चोपमान०। २ सि. क. कारणं। ३ सि. क. सम्बन्धायत नास्ति। ४ सि. क. अ. डे. सर्वत्र।

**योऽयमित्यादि,** आह–समित्येकीभाववाच्ययमुपसर्गः, एकीभावेन बन्धः सम्बन्धः, अनेकं कारणाख्यं वस्तु सदेकमेव कार्याख्यं भवति परस्परेण बध्यते, तमर्थमाह–अनेकस[1]र्वैकात्मकत्वात्–**अनेकस्य** तन्त्वादेः प्रतिस्वमात्मानमपरित्यज्य सर्वैकसंघातभवनेन पटादिकार्याख्येन परिणतेः, एकीभावेन गतिः–गमनपरिणतिरयः, अव–अपगमनेन–प्राच्यसंस्थानादिधर्माणां त्यागेन, द्रव्यपर्यायाभ्यां तन्तुत्वापरित्यागेन पटत्वपरिणामः, संबन्धः समवाय इत्यक्षरार्थानुसारेणोक्त्वा वस्तुनि स्फुटीकर्तुमाह–कारणसत्कार्यैक वलक्षणः–कारणेषु विप्रकीर्णेषु सत्कार्यमेकत्वमापन्नेषु पटीभवद्व्यक्तिं यातीत्येष परमार्थः, तदापत्तिरूपादित्यादि, ऐतं[2] द्रव्यपर्यायात्मकस्याद्वादपरमार्थवादं मा प्रप[3]त्स्येऽहमित्यकस्माद्भयात् स्वपक्षरागसमुत्थात् परपक्षद्वेषाच्च त्वयेदमग्मार्गप्र[4]पदनमस्थाने शक्तिक्षयायै[5]वं क्रियते, कैतमदमार्गप्रपदनमिति चेदुच्यते–यदिदमव्यपदेश्याधारत्वं प्राग्व्याख्यातं तत्पुनः किमर्थमारभ्यते ? इहेति यतः कार्यकारणयोः समवाय इति इहबुद्ध्यभिधानाभ्यां कारणगताभ्यां समवायोऽनुमीयते, सोऽपि च न सम्भवति कार्यस्यासत्त्वात्, तस्मादव्यपदेश्याधारकार्यसम्बन्धकल्पना क्रियतेऽयमुत्पथगमनक्लेशो निरर्थकश्च ।

**सोऽपि च मिथ्याभिमान एव मन्यतान्तु तत्रैवास्तीति, परिनिष्ठितत्वात्, विभुपरिमण्डलवियदादिवत् ।**

**( सोऽपि चेति ) सोऽपि** च मिथ्याभिमान एव–अव्यपदेश्याधारं द्रव्यादिकार्यमसमवेतञ्च कारणैः प्रागुत्पत्तेरिति मा मंस्थाः, मन्यतान्तु तत्रैवास्तीति–तथा च मन्तव्यं व्यपदेश्याधारं द्रव्यादिकार्यं समवेतञ्च स्वकारणैः प्रागपि निर्वृत्तेः त्वन्मतेनैव परिनिष्ठितत्वात्–वस्तुभावमापन्नत्वात्, विभुपरिमण्डलवियदादिवत्–यथा विभुत्वपरिमाणान्याकाशकालदिगात्मद्रव्याणि परिनिष्ठितत्वात् विभुत्वगुणसमवेतानि व्यपदेश्याधाराणि च तथा द्रव्यादिकार्यम्, परिमण्डलपरिमाणाः परमाणवः परिमण्डलत्वेन समवेताः

सम्बन्धशब्दार्थं दर्शयति–**समितीति,** अनेके तन्तवः परस्परमेकीभावेन बध्यमानाः पटाख्यां लभन्त इति भावः । एतमेवार्थमाह–**अनेकेति,** अनेकेषां तन्त्वादीनां न सर्वात्मना न वैकदेशेन सम्बन्धः, न वा नास्ति सबन्धः, किन्तु विश्लिष्टरूपतापरित्यागेनानेकेषां तन्तूनां संश्लिष्टरूपतया स्वस्वजात्यपरित्यागेन कथञ्चिदन्यथात्वलक्षणैकत्वपरिणतिः सम्बन्ध इति भावः । समवायशब्दार्थमाह–**एकीभावेनेति,** अयं समुपसर्गस्यार्थः, गतिरयधातोरर्थः, अवेत्युपसर्गस्यापगमोऽर्थः, एकीभावेन प्राक्तनसंस्थानादिधर्माणां त्यागेन तन्तुत्वादिस्वस्वरूपापरित्यागेन कथञ्चिदन्यथात्वलक्षणा पटादिकार्याख्या परिणतिः समवाय इत्यर्थः । **कारणेति,** पूर्वं विप्रकीर्णेषु तन्त्वादिकारणेषु अव्यक्तरूपेण सत् कार्यं पटादि सामग्रीव्यापारापेक्षा कथञ्चिदन्यत्वलक्षणामेकत्वपरिणतिमापन्नेषु तन्त्वादिषु व्यक्तं भवतीत्यर्थः । एवं स्वीकारे परपक्षाश्रयणं भविष्यतीति मन्वानेन भवता वस्तुभूतमप्यर्थं परपक्षद्वेषात परित्यज्योन्मार्गप्रतिपत्तिः केवलं शक्तिक्षयनिदानभूता स्वीक्रियत इत्याह–**तदापत्तीति,** स्याद्वादापत्तीत्यर्थः, त्यागे स्वपक्षरागः परपक्षद्वेषश्च हेतू । केयमुन्मार्गप्रतिपत्तिरित्यत्रोच्यते–**यदिदमिति,** अव्यपदेश्य आधारस्तन्त्वादिर्यस्य तत्कार्यं पटादि, तद्विषयाभ्यामिह तन्तुषु पट इतीहबुद्ध्यभिधानाभ्यां यः समवायोऽनुमीयते स केवलं शक्तिक्षयायैव भवति, कार्यस्यासत्त्वात्, असतः केनचित्समवायाभावाच्चेति भावः । यत्त्वमवोचः कार्यमव्यपदेश्याधारं प्रागुत्पत्तेः कारणेऽसमवेतमिति तदपि न यथार्थाभिधानमपि तु तत्रैवास्तीति मन्यस्वेत्याह–**सोऽपि चेति ।** व्याख्याति–**अव्यपदेश्येति ।** तदभिधानतो वैपरीत्येनाभ्युपगन्तव्यं प्रकटयति–**तथा चेति । विभ्विति,** यत्परिनिष्ठितं भवति तद्व्यपदेश्याधारं

१ सि. क डे. अनेकसर्वात्मकत्वात् । × × क. । २ सि. क. एष । ३ सि. क. प्रत्यस्यह० । ४ सि. क. प्रमर्दन० । ५ सि. क. क्षपयैव । × × सि.

व्यपदेश्याधाराश्च द्व्यणुकादिकार्ये, विभुत्वपरिमण्डलत्वगुणयोर्वाऽऽश्रयभूतयोर्वाऽऽकाशपरमाण्वोर्द्व्यणुकादिव्यपदेश्याधारत्वं समवेतत्वञ्च सिद्धम्, तथा द्रव्यादिकार्यस्येति, एवं तावत् परिनिष्ठितसम्बन्धं ब्रुवतो द्रव्यस्य समवायिकारणत्वनिवृत्तिप्रसङ्गपरिहारोऽसमर्थः ।

**योऽपि च कार्यकारणयुतसिद्धिदोषस्य परिहारः—तस्यासंयोगात् न हि कारणसम्बन्धिभिः कार्यस्य संयोगोऽस्ति, द्वयोरङ्गुल्योराकाशे युज्यमानयोः संयोगस्य सम्बन्धिनोः पृथक् सिद्धयोरिवेति सोऽपि न परिहारः, उक्तवदसंयोगासिद्धत्वात्, यदि तत्रोत्पन्नताद्यसिद्धिः सम्बन्धासिद्धिश्च स्यात् स्यादसंयोगः ततः परिहारश्च युतसिद्धिदोषस्य स्यादिति ।**

**योऽपि चेत्यादि,** अस्मदुक्तस्य कार्यकारणयुतसिद्धिदोषस्य परिहारो योऽभिहितः—तस्यासंयोगादिति, तद्व्याचष्टे—न हि कारणसम्बन्धिभिः कार्यस्य संयोगोऽस्ति, यथा द्वयोरङ्गुल्योराकाशे युज्यमानयोः संयोगस्य द्व्यङ्गुल्याकाशसंयोगकारणस्य सम्बन्धिनोः युतसिद्धयोः संयोगो न तथा कारणसम्बन्धिभिः कार्यस्य द्रव्यादेः कश्चित् संयोगोऽस्ति, यतो युतसिद्धिदोष आपाद्येत पृथक् सिद्धयोरिव, तस्मादसंयोगात् संयोगवैधर्म्यात् पृथक् सिद्ध्यभाव इत्यत्रोच्यते-सोऽपि न परिहारः, उक्तवदसंयोगासिद्धत्वात्, यदि तत्र परिनिष्ठितं प्रवृत्तमारब्धं कथं तेनासम्बद्धमित्यादिना प्रपञ्चेन सम्बद्धत्वमेवेत्युक्तम् सम्बन्धसमवायशब्दव्याख्यानेन च, तस्मादुक्तवदसंयोगस्यासिद्धत्वादपरिहारः, यदि तत्रोत्पन्नताद्यसिद्धिः सम्बन्धासिद्धिश्च स्यात् स्यादसंयोगः ततः परिहारश्च युतसिद्धिदोषस्य स्यात्, एवं तावद्व्याख्यानान्तरमप्ययुक्तम् ।

समवेतञ्च भवति यथा विभुपरिमण्डलवियदादीनि, विभूनि च परिमण्डलानि, च विभुपरिमण्डलानि, विभुपरिमण्डलानि च तानि वियदादीनि चेति विग्रहः, वियदादिपदेन गगनादिविभुचतुष्टयद्रव्याणि परमाणवश्च गृह्यन्ते, तत्र गगनादीनि चत्वारि द्रव्याणि वस्तुभावमापन्नानि व्यपदेश्यभूतान्याश्रयाणि, तेषु च विभुत्वं समवेतमिति विभुत्वगुणसमवेतानि, यथा वा परिमण्डलशब्दवाच्याणुपरिमाणगुणाः परमाणवो द्व्यणुकादिकार्ये परिनिष्ठिताः पारिमण्डल्येन समवेता व्यपदेश्याश्रयाश्च तथा द्रव्यादिकार्यमपि व्यपदेश्याधारं निर्वृत्तं प्रागपि स्वकारणेषु समवेतञ्चेति मन्यस्वेति भावः । एवञ्च परिनिष्ठितस्यैव कार्यस्य कारणैः सह सम्बन्धेऽभिमते कार्यस्यान्यत्र परिनिष्ठितत्वात्तन्त्वादिद्रव्यं समवायिकारणं न भेत्स्यति, तत्रानुत्पन्नत्वादित्याशयेनाह—**एवं तावदिति,** असम्यन्धादित्यादिहेतुभिः समवायसम्बन्धशब्दार्थस्वरसेन चाव्यक्तसद्व्यक्तागद्भवनस्य सिद्धौ सत्यां परिनिष्ठितस्य कारणेन सम्बन्धमभ्युपेत्य मदुद्भावितसमवायिकारणत्वनिवृत्तिप्रसङ्गस्य यः परिहारोऽन्यत्रासमवायादिति यदुच्यते सोऽसमर्थ एवेति भावः । अथ परिनिष्ठितस्य कार्यस्य कारणैः सम्बन्धे युतसिद्धिदोषं प्रदर्शितं परिहर्तुं वैशेषिकेणोक्तं साधनं दूषयितुमाह—**योऽपि चेति ।** व्याकरोति **अस्मदुक्तस्येति ।** कार्यकारणभावानापन्नयोः पृथक् पृथक् सिद्धयोर्हि सम्बन्धः संयोग उच्यते, यथा द्व्यङ्गुलिद्रव्ययोः संयोगकारणयोराकाशे पृथक् पृथक् सिद्धयोः परस्परं सम्बन्धः संयोगो भवति न तथा कार्यकारणयोः पृथक् पृथक् सिद्धिरस्ति, तस्मान्न तयोः सम्बन्धः संयोग इत्याशयेनाह—**तस्यासंयोगादिति,** तस्य कार्यस्य संयोगाभावादित्यर्थः, तद्घटयति—**न हीति,** अङ्गुलिद्वयसंयोगं प्रति विभिन्नदिक्काकाशाङ्गुलिसंयोगस्य हेतुतया कारणस्य द्व्यङ्गुल्याकाशसंयोगस्य सम्बन्धिनोरङ्गुल्योः संयोगो यथा भवति तथा कारणीभूतावयवसम्बन्धिभिः कैश्चिन्न कार्यस्यावयविनो द्रव्यादेः संयोगोऽस्तीति न युतसिद्धौ तन्तुपटौ येन संयोगस्तयोः स्यादिति भावः । दृष्टान्तमाह—**पृथगिति** पृथक् पृथक् सिद्धयोर्घटपटाद्योर्यथा संयोगो भवति तद्वदित्यर्थः । एवञ्च पृथक् सिद्धौ घटपटौ, तन्तुपटौ तु न पृथक् सिद्धाविति वैधर्म्यान्नानयोर्युतसिद्धिरित्याह—**तस्मादिति ।** तस्यासंयोगादिति हेतुमसिद्धयन्नाह-**सोऽपीति ।** यदि तन्तुषु पटः परिनिष्ठितः प्रवृत्त आरब्धश्च ततः कुतो न तन्तुभिः सम्बध्यते, असम्बद्धत्वे तु न तत्र परिनिष्ठितः प्रवृत्त आरब्धश्च स्यात्, न वा सम्बन्धः समवायो वा स्यात् कारणेन कार्यस्य, तस्मात् सम्बन्धोऽस्त्येव, स च सम्बन्धो युतसिद्धत्वात् संयोग एव, न समवाय इत्याशयेनाह—**यदि तत्रेति ।** आरम्भप्रवृत्तिनिष्ठा यदि तत्र न भवन्ति तदा स्यादसम्बन्ध इत्याह—**यदि तत्रेति ।** अथ पूर्वमुपदर्श्य निराकृतान्येव सत्तासम्बन्ध-

१ सि. क. °कादिर्व्य० । २ सि. क. सम्बन्धो० ।

इदानीं सूत्रकारमतं समर्थयतां वाक्य–भाष्य–टीकाकाराणां मतानि समाहृत्य प्रधानानुगामित्वा-च्छेषाणां सूत्रकारमतमेवेत्थं दूषयितुमाह—

**तत्त्वोपनिलयनात् सदाद्यभिधानार्थं कारणसमवेतस्य वस्तुन उत्तरकालं सत्तासम्बन्ध इति बहूनां मतम्, वस्तूत्पत्तिकाल एवेति तु वाक्यकाराभिप्रायोऽनुसृतो भाष्यकारैः, सिद्धस्य वस्तुनः स्वकारणैः स्वसत्तया च सम्बन्ध इति प्रशस्तमतेरभिप्रायः, अस्मदभिप्रायस्तेषां त्रयाणामप्यसत्यतेति, परस्परविरुद्धार्थत्वात्, कुमारब्रह्मचारिपितृत्ववत्, इदमेवोदाहरणमन्यत्र, एवं-वक्तुरिव सर्वेषां शास्त्रकारमतानुवर्त्तित्वात् स एवानाप्तः स्यात् ।**

(**तत्त्वेति**) तत्त्वोपनिलयनात् सदाद्यभिधानार्थं कारणसमवेतस्य वस्तुन उत्तरकालं सत्तासम्बन्ध इति बहूनां मतम्, वस्तूत्पत्तिकाल एवेति तु वाक्यकाराभिप्रायोऽनुसृतो भाष्यकारैः, सिद्धस्य वस्तुनः स्वकारणैः स्वसत्तया च सम्बन्ध इति प्रशस्तमतेरभिप्रायः, अस्मदभिप्रायस्तेषां त्रयाणामप्यसत्यतेति, कस्मात्? परस्परविरुद्धार्थत्वात्–दर्शिता विरुद्धार्थता, किमिव? कुमारब्रह्मचारिपितृत्ववत्–यदि पिता कथं कुमारब्रह्मचारी,? अथ कुमारब्रह्मचारी कथं पितेति? इदमेवोदाहरणमन्यत्रेति–स्वोक्तोपपत्त्य-भ्युपगमविरुद्धार्थत्वादिष्वप्येतदेवोदाहरणं वाच्यमिति, एवंवक्तुरिवेत्यादि, सर्वेषां–वाक्यभाष्यटीकाकाराणां शास्त्रकारमतानुवर्त्तित्वात् स एवानाप्तः, असत्यवादी चेत्येतदपि, स्यादिति लोकानुवृत्त्या माशङ्कमिवोच्यते मा भूत्तीर्थकरगौरवाकृष्टमतिभिरनाप्त एवेति निष्ठुरवचनकुपितैः सह तद्भक्तैः कलह इति ।

किञ्चान्यत्—

**सदादिविकल्पानुपपत्तिश्च तदवस्थैव, यत्पुनर्द्रव्यादीनां स्वत एवाभिधानप्रत्ययविषयत्वं सत्त्वात् सत्तादिवत्, यथा च सत्तायां स्वत एवाभिधानप्रत्ययौ एवं द्रव्यादेः, न सत्तायोगा-दित्युक्तेरुच्यते परिहारः काणादैर्नैतत्, अतादात्म्याद्दण्डनिमित्तादण्डदण्डित्ववत्, यथाऽद-ण्डाद्दण्डिनो दण्डित्वं दण्डनिमित्तमेवं द्रव्यादेरसदात्मनः सत्तानिमित्तं सदभिधानादीति ।**

(**सदादीति**) सदादिविकल्पानुपपत्तिश्च तदवस्थैव–उक्तवन्निष्ठासम्बन्धयोरेककालत्वादिति ध्रुव-

विषये मतभेदानि संक्षिप्योपदर्श्य तन्मूलाधारसूत्रकारमतं दूषयितुमाह–**तत्त्वोपनिलयनादिति,** तत्त्वाना–सत्त्वादीनामुपनिलयनात् –सम्बन्धात् वस्तुनः सदाद्यभिधानं भवति, तत्र कार्यद्रव्यादेस्तत्त्वोपनिलयनं कदा भवतीति चिन्तायां प्राक् कारणे समवेते कार्ये पश्चात् सत्तादीनां सम्बन्ध इति बहुभिर्मन्यते, कार्योत्पत्तिकाल एव सत्तादिसम्बन्ध इति वाक्यकारस्य भाष्यकारस्य च मतम्, परिनिष्ठां गतं कार्यं स्वकारणैः सत्तया चाभिसम्बध्यत इति टीकाकृतः प्रशस्तमतेरभिप्राय इति दर्शयति–**तत्त्वेति ।** एतानि त्रीण्यपि मतान्य-यथार्थान्येवेति नयचक्रकारैः प्रदर्श्यते–**अस्मदभिप्राय इति ।** हेतुमाह–**परस्परेति,** उत्पत्तिसम्बन्धयोर्यौगपद्येन सम्बन्धस्योत्तरका-लीनत्वं निष्ठितस्य कारणसत्तासम्बन्धश्च विरुध्यत इत्यसत्यता तेषां मतानामिति भावः । दृष्टान्तं दर्शयति–**कुमारेति,** कुमारत्वादि-विशेषणविशिष्टतायां विरुद्धत्वं बोध्यम् । इदमेवोदाहरणं पूर्वोदितेष्वभ्युपगमविरुद्धत्वस्वोक्तोपपत्तिविरुद्धार्थत्वादिहेतुषु भाव्यमित्याह–**इद-मेवेति ।** दर्शनप्रवर्त्तकसूत्रकारस्यानाप्तत्वमाह–**एवं वक्तुरिवेति,** कुमारब्रह्मचारी पितेति वक्तुरिवेत्यर्थः । स्यादिति सम्भावनालिङ्-न्तोक्तेः कारणमाह–**स्यादितीति ।** निष्ठासम्बन्धयोरेककालत्वपक्षेऽपि पूर्वोदितसदादित्रयविकल्पानुपपत्तिदोषो दुरुद्धर एवेत्याह–**सदादीति ।** व्याचष्टे–**उक्तवदिति,** स्वकारणैः सत्तया च सम्बन्धः किं परिनिष्ठां गतस्य गच्छतो वोभयरूपस्य वेति प्रकृतविकल्पाः

१ सि. क. क्ष. डे. भित्वाद्दोषाणां । २ सि. क. क्ष. गौरवाकृष्णमति० ।

तापि किं कार्यस्य सत्तया सम्बन्धः सतोऽसतः सदसतो वा ? इत्युपालम्भाच्च मोचित एवाऽऽत्मा, तद्यथा कार्यस्य किं सत्तया सम्बन्धो निष्ठितस्यानिष्ठितस्य निष्ठितानिष्ठितस्येति समानप्रचर्चत्वाच्च शब्दान्तरमात्रोच्चारणात् दोषपरिहारः, यत्पुनर्द्रव्यादीनामित्यादि, द्रव्यादीनां स्वत एवाभिधानप्रत्ययविषयत्वं सत्त्वात्–स्वतःसत्त्वात्, स्वभावसत्त्वादित्यर्थः, किमिव ? सत्तादिवदिति व्याख्यानमनिष्टापादनसाधनं वैशेषिकं प्रति गतार्थं यावच्च सत्तायोगादित्युक्तेः, उच्यते परिहारः किल काणादैः–नैतत्, अतादात्म्यात्–स आत्मा यस्य तत्तदात्म सत्तादि, तद्भावस्तादात्म्यं तद्वैधर्म्याददतादात्म्याद्द्रव्यादीनाम्, तद्व्याख्या–यावदभिधानादीति गतार्थम्, दण्डनिमित्तादण्डदण्डिन्ववदिति दृष्टान्तः–यथा दण्डोऽस्यास्तीति दण्डीति दण्डित्वमदण्डादण्डिनो दण्डनिमित्तमेवं द्रव्यादेरसदात्मनः सत्तानिमित्तं सदभिधानादीति ।

**अत्र वयं सम्प्रधारयामस्त्वया सह कथमिदं तादात्म्यं किं सतो भावात् ? उत सत्करत्वादिति, तद्यदि तावत् सतो भवनं ततः सर्वेणापि सता भूयते, स्वत एव अथ सत्करत्वात्तादात्म्य तत् प्राक् प्रत्युक्तम्, यथा च सत्तायां स्वत एव सदभिधानप्रत्ययौ तदात्मत्वादेवं द्रव्यादौ द्रव्यत्वादौ नित्यैकसर्वत्रगेषु सामान्यसामान्यविशेषशून्येष्वपि, दण्डेऽपि च तादात्म्यादेव दण्डाभिधानप्रत्ययसिद्धौ स्वत एव दण्डिनि तौ तादात्म्यात्, इतरथा दण्डिकुण्डल्यविशेषः स्यादिति, तथा च दण्डत्वसामान्यविशेषनिरपेक्षः स्वत एव भवति दण्डस्तादात्म्यात् सत्तावदिति सिद्धम् ।**

**( अत्र वयमिति ) अत्र वयं** सम्प्रधारयामस्त्वया सह कथमिदं तादात्म्यं ? किं सतो भावात्–य[त्] सद्भवति तत्तस्य सतस्तादात्म्यं–आत्मलाभः स्वरूपानुभवनम्, उत सत्करत्वादिति, तद्यदि तावत् सतो भवनं ततः सर्वेणापि सता भूयते–सत्तादिना द्रव्यादिना वा स्वत एवेत्युक्तम्, अथ सत्करत्वात्तादात्म्यं सद्भवतीति तत्प्राक् प्रत्युक्तम्–स्वतःसिद्धस्य द्रव्यादेः सत्ता सत्करी न भवति, वैयर्थ्यादसतोऽस-

सदादिविकल्पसदृक्षा एव केवलं शब्दमात्रभेदो न त्वर्थभेद, अत एषु प्रदर्शिता दोषास्तदवस्था एवेत्याशयेनाह–**तद्यथेति** । ननु सत्तादौ यथा स्वत एव सतीत्यभिधानप्रत्ययौ न तु सत्तासम्बन्धात्तथैव द्रव्यादावपि स्वत एव सदित्यभिधानं प्रत्ययश्च भवेताम्, किं सत्तासम्बन्धेनेति वैशेषिकं प्रत्यनिष्टमापादयति **यत्पुनरिति** । ननु भावस्वरूपेणैकजातीयेन स्वरूपसद्रूपमात्रवस्तुना वा प्रतिनियतानुवृत्तधर्मसम्बन्धव्यतिरेकेण प्रतिनियतजातीयविषयाभिधानप्रत्ययादयोऽनुभवसिद्धा न भवेयुरिति तत्तज्जातीयाभिसम्बद्धा भावभेदाः प्रमीयन्ते, धर्माणान्तु प्रतिनियतत्वमनवस्थाप्रसङ्गत. स्वत एव, न धर्मान्तरसम्बन्धात, न च भावा एव स्वतो विशिष्टा., अनुवृत्तिप्रत्ययविषयत्वानापत्ते', स्वत एव प्रतिविलक्षणत्वाद्भावानामिति सत्ताद्रव्यत्वपृथिवीत्वादयो धर्मा विशेषणतया भावस्वरूपतया भावैकव्यक्तयतया च प्रतिप्राणि प्रसिद्धा, तस्मात् सत्ताद्रव्यत्वपृथिवीत्वादिसद्द्रव्यपृथिव्याद्यो परस्पर वैलक्षण्यात्तदात्मभूतसत्ताद्रव्यत्वादिविलक्षणत्वाद्द्रव्यादेर्दण्डसम्बन्धात् पुरुषस्य दण्ड्यभिधानप्रत्ययवत्सत्त्वाद्यभिसम्बन्धसद्भावादेव द्रव्यादीना सदाद्यभिधानं न स्वतः, स्वरूपे वैलक्षण्यवैधुर्यादित्याशयेन वैशेषिक आह–**अतादात्म्यादिति,** यत्किञ्चित्स्वरूपभूतसत्त्वादिधर्मवैलक्षण्यादित्यर्थ, सामान्यात्मकत्वाभावादिति यावत्, वस्तु सत्ताया' सम्बन्धेन सदभिधानप्रत्ययविषयो भवति, यथाऽदण्डस्वरूप. पुरुषो दण्डसम्बन्धाद्दण्डीत्यभिधानप्रत्ययविषयो भवति, सामान्यन्तु धर्मिग्राहकप्रमाणात्तद्रूपतयैव सिद्धा स्वत एवाभिधानप्रत्ययविषय इति न द्रव्यसाधर्म्यं सत्ताया इति सत्तावैलक्षण्यान्न स्वतः सदभिधानप्रत्ययविषयत्वं द्रव्यादेरित्याह–**दण्डनिमित्तेति** । अतादात्म्यादित्यत्र तादात्म्यशब्दार्थविचारपूर्वकं मतमिदं निराकरोति-**अत्र वयमिति** । अतादात्म्यप्रतियोगितया यत्तादात्म्यमुच्यते तत् किं यत् सद्भवति तस्य सतो भावात् तादात्म्यम् किं वा सत्करत्वात् तथोच्यत इति विकल्पयति–**कथमिदमिति** । प्रथमं दूषयति–**यदि तावदिति,** तथा चातादात्म्यात् सत्तानिमित्तं सदभिधानमिति न युक्तमिति भाव' । द्वितीयं दूषयति–**अथेति** । प्राक् प्रत्युक्तता सूचयति–**स्वतःसिद्धस्येति** सतो न सत्करी

**१–२ सि. क. क्ष. डे. °भिधानादीति ।**

स्यात् खपुष्पवत्, सदसतः सम्भवाभावादित्युक्तम्, यथा च सत्तायामित्यादि भावनार्थं द्रव्यादेर्द्रव्यत्वादेश्च स्वत एवाभिधानप्रत्ययौ, तदात्मत्वात् सत्तावदिति सद्द्रव्यादेस्तदात्मत्वं–सदात्मत्वं द्रव्यादेरेवं द्रव्यत्वगुणत्व[कर्मत्व]सामान्यादिनित्यैकसर्वत्रगेषु सामान्यसामान्यविशेषशून्येष्वपि सदभिधानप्रत्ययौ सर्वत्र स्त इति सर्वव्यापितां न्यायस्यास्य दर्शयति, किञ्चान्यत्–दण्डेऽपि चेत्यादि–योऽपि दण्डित्ववदिति दृष्टान्तः सोऽपि तादात्म्यादेव-दण्डस्य भवनात्मत्वादेव दण्डाभिधानप्रत्ययसिद्धौ सत्या स्वत एव दण्डिनि देवदत्ते दण्डीत्यभिधानं प्रत्ययञ्च करोति, तावभिधानप्रत्ययौ, तादात्म्यादित्यनेनार्थेन विना न भवतः, अतोऽस्मदिष्टमर्थं साधयति, इतरथा दण्डिकुण्डल्यविशेषः स्यात्, साधनञ्चात्र दण्डोऽपि स्वरूपाभिधानप्रत्ययकारी स्वत एव तादात्म्यात् सत्तावत्, तथा दण्ड्यपि. तत एव, तद्वत्, तथा चेत्यादि, एवञ्च सति दण्डत्वसामान्यविशेषनिरपेक्षः स्वत एव भवति दण्डः तादात्म्यात् सत्तावदिति सिद्धम ।

**अथोऽच्येत दण्डोऽपि दण्डत्वाद्दण्डाभिधानप्रत्ययभागिति, अनुदाहरणं तर्हि दण्डी दण्डाद्दण्ड्यभावात्, दण्डस्य स्वतोऽसिद्धत्वात्, दण्डत्वोपपादितदण्डाद्दण्डीति चेत्, इतरेतराश्रयत्वात्, दण्डत्वतत्त्वाद्दण्डसिद्धिः दण्डविशेषणसाधितदण्डत्वसिद्धेर्दण्डत्वतत्त्वसिद्धिरिति, दण्डीति च दण्डाद्दण्डी, न तु दण्डत्वात् स्वत एव भवद्दण्डी, आत्मान्तरसंक्रान्तिश्चैवम्, दण्डत्वादात्मान्तरं दण्डः स्वत एवाभवन् दण्डत्वाद्भवन् तदात्मा भवति, एवं दण्ड्यपीति, वयन्तु ब्रूमो यत्तद्दण्डेन भूयते तस्यैव दण्डत्वात् यद्दण्डी दण्डी भवति स देवदत्तो भवत्यात्मानं लभते, तदभावेऽसामान्यात्मकत्वमेव सर्वस्य स्यात्, यदि सा स्वत एव न भवति सत्तासामान्यादितत्त्वाद्भवति नास्त्येव सा, खपुष्पवत्, ततश्चासामान्यमेव सत्तादिः स्यात्, स्वत एव भवतः समानस्याभावात्, तस्मात् स्वत एव दण्डो भवति स्वत एव सदभिधानप्रत्ययौ, न सत्तायोगात् एवं दण्ड्यपि ।**

**अथोच्येतेत्यादि,** वैशेषिको दण्डमपि दण्डत्वाद्दण्डव्यतिरिक्तान्मन्यते दण्डाभिधानप्रत्ययभाजम्,

सत्ता, वैयर्थ्यात्, नासत, खपुष्पादेरिवासत्त्वादेव, नापि सदसत, त्वन्मते सदसदात्मकस्य वस्तुनोऽसम्भवादित्येवं प्राक् प्रपञ्चितत्वादिति भावः। सतो भवनलक्षणं तादात्म्यं सत्तायामिव द्रव्ये द्रव्यत्वगुणत्वादौ चाविशेषाद्वर्तत इति सर्वत्र स्वत एवाभिधानप्रत्ययौ भवत इत्याह–**यथा चेति** । दण्डनिमित्तादृष्टदण्डित्ववदिति दृष्टान्तं विघटयति–**योऽपि दण्डित्ववदिति,** दण्डस्य स्वत एवात्मलाभात दण्डाभिधानप्रत्ययावपि स्वत एव, न तु दण्डत्वात, एवं दण्डिनोऽपि स्वत एव स्वरूपानुभवनात स्वत एव दण्ड्यभिधानप्रत्ययौ भवतो न दण्डनिमित्तात, न हि तादात्म्यमन्तरेण तावभिधानप्रत्ययौ भवत इति भाव । तादात्म्यं विनाप्यन्येन यदि तौ भवेतां तर्हि य एव दण्डी पुरुष स एव कुण्डल्यपि स्यात, पुरुषाविशेषात्, अत्यन्तभिन्नेन वा दण्डेन दण्ड्यादेः सम्बन्धासम्भवात, सम्भवे वा सर्वत्राविशेषात कुण्डलिन्यपि दण्डसम्बन्धसत्त्वात् सोऽपि दण्डी स्यादित्यविशेष इत्याशयेनाह–**इतरथेति** । उक्तार्थमेव प्रयोगेण दर्शयति- **साधनञ्चात्रेति,** स्वत एव, न दण्डत्वसम्बन्धात, तत एव–तादात्म्यात्, तद्वत्–सत्तावत्। अथ सामान्यविशेषादेवाभिधानप्रत्ययौ भवत, अन्यथा सामान्यविशेषवैयर्थ्यात, एवञ्च दण्डो न स्वत एवाभिधानप्रत्ययभाक्, किन्तु घटपटादिव्यावर्तकनिखिलदण्डानुवर्तकदण्डत्वमहिम्नैवेत्याशङ्कते- **अथोच्येतेति** । यस्य स्वतोऽभिधानप्रत्ययौ भवतस्तेनैवान्यत्र तदभिधानप्रत्ययौ स्यातामिति न नियम-, सामान्याद्यथाऽभिधानप्रत्ययौ तथा तद्व्यतिरिक्तादपि सिद्धाद्द्रव्यादेः, यथा शुक्लादिगुणसम्बन्धात् शुक्ल पट इत्याशयेन वैशेषिकः जात्यतिरिक्तादपि विशिष्टाभिधानप्रत्ययौ ब्रूते- **वैशेषिक इति** विशिष्टप्रत्यये विशेषणज्ञानस्य कारणत्वात् प्रथमं दण्डत्वेन दण्डे दण्डाभिधानप्रत्ययसिद्धौ ततस्तद्योगात् पुरुषे दण्डीतिप्रत्ययाभिधानौ भवत इति भाव. ।

१ सि. क. डे. सतश्च इत्यादेः । २ सि. सर्वसतीति, क. डे. सर्वत्र सतीति । ३ सि. क. कुर्वन्ति । ४ सि. क. यथा ।

आचार्यो ब्रवीति-अनुदाहरणं तर्हि दण्डी, दण्डा[त्]दण्ड्यभावात्, दण्डस्य स्वतोऽसिद्धत्वात्, दण्डी न सिद्ध्यति, परतः सत्त्वसिद्ध्यर्थञ्चोदाह्रियते दण्डी, दण्डासिद्धेः कुतस्तत्सिद्धिरिति, दण्डत्वोपपादितदण्डाद्दण्डीति चेत्-दण्डत्वसामान्यविशेषाद्दण्डः सिद्ध्यति, दण्डाद्दण्डीति, तत उदाहरणसिद्धिः विशेषणादेव विशेष्यसिद्धेः, एवञ्चेन्मन्यसे-इदमापतितं दण्डत्वतत्त्वाद्दण्डः सिद्ध्यति, दण्डत्वतत्त्वं पुनर्दण्डविशेषणसाधितदण्डत्वसिद्धेः सिद्ध्यति, तदिदमितरेतराश्रयं जायते 'इतरेतराश्रयाणि च न प्रकल्पन्ते तद्यथा नौर्नावि बद्धा नेतरत्राणाय' (महाभा० १ अ० १ पा० १ सू०) इति, तत्प्रतिपादनार्थो ग्रन्थः-इतरेतरेत्यादिः गतार्थो यावत्तत्त्वसिद्धिरिति, दण्डीति च देवदत्तः स दण्डाद्दण्डत्वाद्वा कथमिति निर्धार्यं? दण्डोऽस्यास्तीति दण्डी देवदत्तः स यदि दण्डादेव स्वतःसिद्धात् सिद्ध इत्युक्तम्, अथ दण्डत्वात् दण्डत्वमस्यास्तीति दण्डत्वीभवतु मा भूद्दण्डी, युक्तं यावद्दण्डाद्दण्डी न तु दण्डत्वात् स्वत[2] एव भवद्दण्डी, किञ्चान्यत्-आत्मान्तरसंक्रान्तिश्चैवम्-दण्डत्वादात्मान्तरं दण्डो दण्डी च, दण्डात् दण्डत्वदण्डिनौ, दण्डिनो दण्डदण्डत्वे, दण्डः स्वत एवाभवन् दण्डत्वाद्भवन् तदात्मा भवति, एवं दण्ड्यपीति, वयन्तु ब्रूमो यत्तद्दण्डेन भूयते तस्यैव दण्डत्वात् य[3]द्दण्डी दण्डी भवति स देवदत्तो भवत्यात्मानं लभते भावान्तरविविक्तम्, यत्ते[4]न भूयते तदेव भवनं दण्डत्वं न[5] तद्व्यतिरिक्ताद्दण्डत्वतत्त्वात्, एवं देवदत्तस्य दण्डिनोऽप्यात्मानुभवनं

तद्दूषयति-**अनुदाहरणमिति,** दण्डस्यापि दण्डत्वाधीनात्मलाभत्वेन परापेक्षत्वात् नान्यत्र स्वानुरूपप्रत्ययाभिधानाधायकत्वमिति परेण प्रत्ययाभिधानसिद्ध्यर्थं दण्डीत्युदाहरणं दत्तं तद् दण्डसिद्ध्यभावादसिद्धमेवेति भाव । ननु प्राक् प्रसिद्धदण्डत्वतत्त्वाद्दण्डात् पुरुषे दण्डीति प्रत्ययो भवति, न तु प्रागसिद्धाद्दण्डात्, येन तदानीं दण्डत्वापेक्षणात् दण्ड स्वकार्यकारी न भवेदिति वैशेषिक शङ्कते-**दण्डत्वोपपादितेति,** दण्डत्वेन उपपादित प्राग् यो दण्ड तस्मादित्यर्थ । ननु विशेषणात् विशेष्यस्य सिद्धावभिमतायां दण्डस्य दण्डत्वात्, दण्डत्वस्य च दण्डात् सिद्धि -दण्डोऽयमित्यनुगतमतेर्हि दण्डत्वं मंस्यति, तस्मादितरेतराश्रयो दोष स्यात, तेन च न कस्यचित् सिद्धिरित्याशयेन समाधत्ते-**इदमापतितमिति** । इतरेतराश्रयस्य सिद्धिप्रतिबन्धकत्वे सर्वतन्त्रसिद्धान्तवाक्यमाह-**इतरेतरेति** । ननु दण्डीति प्रत्यय किं दण्डसम्बन्धात्, उत दण्डत्वसम्बन्धाद्भवतीत्याशंक्य निराकरोति-**दण्डीति चेति,** प्रथमं पक्षं दूषयति-**दण्ड इति,** दण्डशब्दात् मत्वर्थे 'अत इति ठनौ' विति इनप्रत्यये दण्डीति भवति यतस्तस्मात् दण्डसम्बन्धादेव दण्डी न तु दण्डत्वसम्बन्धादिति यद्युच्यते तर्हि सर्वेषां वस्तूनां स्वेतररूपेण भावाभावात्मकतया स्वत एव सिद्धत्वात् किं दण्डाद्यपेक्षया? न हि वस्तु स्वं स्वरूपमन्यत्र सङ्क्रामयति, अन्येन वा स्वयं सङ्क्रान्तं भवतीति भाव । दण्डीति च देवदत्तो यदि दण्डत्वाद्भवति न तर्हि दण्डीति व्यपदेश्य, किन्तु दण्डत्वीति स्यात, दण्डत्वेनैव तस्य सम्बन्धादित्याह-**अथेति** । यदा तु दण्डादेव दण्डी भवति न दण्डत्वात्तदा स्वत एव सिद्धो दण्डी नान्येन, अन्यथा आत्मान्तरसङ्क्रान्तिदोष स्यादित्याह-**युक्तं यावदिति** । व्याचष्टे-**दण्डत्वादिति,** दण्डत्वादन्य आत्मा दण्डो दण्डी च, दण्डादन्य आत्मा दण्डत्वं दण्डी च, दण्डिनो वाऽन्य आत्मा दण्डो दण्डत्वञ्च तस्य संक्रान्ति -दण्ड स्वतो न भवति, दण्डत्वाच्च भवन् तदात्मा भवति, एवं दण्डी स्वतो न भवति दण्डाच्च भवन् तदात्मा भवतीति प्रसज्यत इति भाव. । तथा तथा वस्तूना भवनमेव तत्त्वं नान्य कश्चिद्धर्मस्तत्त्वं, तद्भवनं सर्वत्राविशिष्टमिति सामान्यमुच्यते, वस्तूनामेव हि तद्भवनमिति भवनस्य वस्तुस्वरूपान्तर्गतत्वात् स्वत सिद्धमुच्यते नात्मान्तरसङ्क्रान्तिश्चैवमित्याशयेनाह-**वयन्तु ब्रूम इति,** दण्डस्य स्वरूपानुभवनमेव दण्डत्वम्, दण्डिन पुरुषस्य दण्डिस्वरूपानुभवनमेव दण्डित्वम्, न तु दण्डादिसम्बन्धनमिति न भावान्तरस्य सङ्क्रान्तिरिति भाव. । भावममुं प्रकटयति-**यत्तेन भूयत इति,** तदेव स्वरूपानुभवनमात्म-

१ सि. क. दण्डत्वाद्दण्डत्वात् क । २ क. स्वत एव वचनवद्दण्डी । ३ सि. क. यद्दण्डो दण्डो । ४ सि. यत्तेन भू, इति नास्ति । ५ सि. न तद्व्यतिरिक्तादिति नास्ति ।

तत्त्वं तदभावेऽसामान्यात्मकत्वमेव सर्वस्य स्यात्, यदि सा दण्डदण्ड्यादिव्यक्तिः स्वत एव न भवति सत्तासामान्यदण्डत्वदण्डित्वादितत्त्वाद्भवति स्वत एवाभवन्ती नास्त्येव सा, खपुष्पवत्, ततश्चासामान्यमेव सत्तादिः स्यात्, तच्चानिष्टम्, स्वत एव[ा]भवतः समानस्याभावात् सामान्यमेव सामान्यं न स्यात् तस्मात् स्वत एव दण्डो भवति, स्वत एव सदभिधानप्रत्ययौ, न सत्तायोगात्, यथा दण्डे एवं सत्यपीत्यादि गतार्थं साधनम्, एवं तावत्तादात्म्यात् सत्तादिषु सदभिधानादीत्ययुक्तम् ।

**यदप्युक्तमतदात्मत्वात् द्रव्यादीनां सदभिधानप्रत्ययौ सत्तायोगात् न स्वत इति तदपि न, अतदात्मत्वादित्यादेरनैकान्तिकत्वात्, द्रव्यत्वादीनामतादात्म्ये स्वतः सदभिधानप्रत्ययौ न सत्तातः, एकैकत्वात्, आत्मवत्, एवं द्रव्यादीनामपि स्वत एव द्रव्यत्वादिवत् ।**

**यदप्युक्तमतदात्मत्वादित्यादि,** असत्तात्मकत्वाद्द्रव्यगुणकर्मणां सदभिधानप्रत्ययौ सत्तायोगान्न स्वत इति तदपि न, अतदात्मकत्वादित्यादेरनैकान्तिकत्वात्, अनैकान्तिकत्वप्रतिपादनार्थो ग्रन्थो यावद् द्रव्यत्वादिवदिति, तस्य भावना द्रव्यत्वादीनामतादात्म्ये–द्रव्यत्वगुणत्वकर्मत्वघटत्वरूपत्वोत्क्षेपणत्वादीनां सामान्यविशेषाणामसत्त्वात्मकत्वे स्वतःसदभिधानप्रत्ययौ, न सत्तातः, कस्मात्? एकैकत्वात् एकमेव द्रव्यत्वं सर्वद्रव्येषु द्रव्य[त्वा]न्तरानिष्टेः, तत्र सत्तायोगो नेष्यते, अनुप्रवृत्त्यभावात्, तथापि च सदित्यभिधीयते प्रतीयते च, एवं गुणत्वादीन्यपि, तस्मादेकैकत्वात् स्वतः सत्त्वं, आत्मवत्–सत्तावदित्यर्थः, स च दृष्टान्तः, स्वतो द्रव्यत्वादिभवने तस्य वर्णनात्, द्रव्यत्वादिषु भिन्नेषु स्वतो भवन्त्याः सत्ताया एकस्याः सदभिधानं दृष्टमेवं द्रव्यादीनामपि स्वत एवेति साधनेनोपपादितोऽर्थः ।

लाभः सामान्यमुच्यते तदभावे तु सर्वं परस्परमेकान्तविलक्षणं स्यादिति भावः । इतरथा दोषमुद्भावयति–**यदि सेति** यद्यन्यत् स्वतोऽभवत् अन्येनैव भवेत् तर्हि तदप्यन्यत् अपरेण भवेत्, अपरमपीतरेण, इतरदपि तद्भिन्नेन येन केनचिदित्येवमनवस्थया न किञ्चिदपि वस्तु भवेत्, स्वतोऽभवनादिति भावः । व्यक्तेः स्वतो भवनाभावे सत्त्वादिभिरन्यैर्भवने व्यक्तिर्नास्ति सत्तादिरेवास्तीत्यायातम्, एवं सत्तादिरपि सामान्यं न स्यात्, तस्यापि स्वतो भवनलक्षणस्य सामान्यस्याभावात्, तस्माद् भवनं प्रत्ययाभिधानौ च स्वत एव भवन्ति नापरसम्बन्धादित्याशयेनाह–**ततश्चेति** । दार्ष्टान्तिकं योजयति–**यथा दण्डे इति** । एवञ्च सत्तादिषु तादात्म्यात् स्वत एव सदभिधानप्रत्ययौ, अतादात्म्याच्च द्रव्यादौ न स्वत इति यदुक्तं त्वया तदयुक्तमित्युपसंहरति–**एवं तावदिति** । अतदात्म सत् परतोऽभिधानप्रत्ययौ लभत इति पराभिमतव्याप्तिदूषणायाह–**यदप्युक्तमिति** । व्याचष्टे–**असत्तात्मकत्वादिति** । दोषमादर्शयति–**अनैकान्तिकत्वादिति,** द्रव्यत्वादौ अतादात्म्यं वर्तते स्वतः सदभिधानप्रत्ययविषयत्वमस्तीति हेतुरतादात्म्यमनैकान्तिकमिति भावः । अनैकान्तिकत्वं घटयति–**द्रव्यत्वादीनामिति** द्रव्यत्वादीनां सत्तातो भेदादतदात्मता हेतुरस्ति, तत्सद्भावेऽपि परतः प्रत्ययाभिधानविषयत्वं नास्तीति भावः । तत्कस्मादित्यत्राह **एकैकत्वादिति,** प्रत्येकव्यक्तिमात्ररूपत्वात्–स्वसजातीयद्वितीयव्यक्तिरहितत्वादित्यर्थः, द्रव्यत्वं हि एकमेव, न तु घटादिवदनेकम्, तस्मादेवाकाशादाविव द्रव्यत्वादौ न जात्यन्तरयोगः, व्यक्त्यभेदस्य तद्बाधकत्वात्, अनुवृत्तिप्रत्ययनिमित्तं हि सामान्यम्–अनुवृत्तिप्रत्ययश्चानेकासु व्यक्तिषु भवति, तस्माद्द्रव्यत्वस्य व्यक्त्यभेदात् अतादात्म्यम्, तथापि द्रव्यत्वं सदिति प्रतीयते अभिधीयते चेति परतः सदभिधानप्रत्ययविषयत्वलक्षणसाध्याभावादनैकान्तिक इति भावः । एवं च द्रव्यत्वगुणत्वकर्मत्वादीनामेकैकव्यक्तित्वात् सामान्यान्तरासम्भवेन स्वत एव सत्त्वं सत्तावदित्याह–**तस्मादिति** । यथा सत्ताया एकैकत्वात् स्वतः सत्त्वं तथा द्रव्यत्वादीनाम्, द्रव्यत्वादीनामिव च द्रव्यादेरपि स्वतः सत्त्वं अभिधानप्रत्ययौ चेत्याह–**स च दृष्टान्त इति** । ननु द्रव्यत्वादौ सत्प्रत्ययाभिधाने न मुख्ये, किन्तू-

१ सि. क. डे. °कं सदा० । २ सि. क. सतो ।

आह—

**सत्तासम्बन्धरहितेषु द्रव्यत्वादिष्वौपचारिकौ तौ स्याताम्, असंख्ययोर्गुणत्वकर्मत्वयोरेकाभिधानप्रत्ययवदिति चेत्तर्हि द्रव्यादिष्वपि द्रव्यत्वादि रहितेषु तावौपचारिकौ स्याताम्, मनुष्यसिंहत्वादिवत्तथाऽञ्जसाऽनुपपत्तेर्नेति चेत् ततस्ते स्वपक्ष एव दोषविधानम्, यदि तु सत्तासम्बन्धापेक्षौ सदभिधानप्रत्ययौ तर्हि कथं सत्तादिषु तावौपचारिकाविति, त्वमेवासि प्रष्टव्यः यत् पुनरिदमुच्यते सत्तायां सिद्ध इति चेत्, यदा च… ..आत्मानमात्मना न युक्तमभियोक्तुम्………तद्योगनिमित्तम्, तदयुक्तं न द्रव्यादिष्वञ्जसा सिद्धिः, अतदात्मनिमित्तस्य सत्प्रत्ययस्यानुपपत्तेः, मनोरथवत् ।**

**सत्तासम्बन्धेत्यादि,** गुणत्वमेकं कर्मत्वमेकमित्येकाभिधानप्रत्ययावसंख्ययोरपि गुणत्वकर्मत्वयोरौपचारिकौ दृष्टौ तथा सदभिधानप्रत्ययौ द्रव्यत्वादिष्वौपचारिकौ स्यातामिति को दोषः ? अत्रोच्यते—द्रव्यादिष्वपीत्यादि तुल्यत्वापादनमौपचारिकत्वेन गतार्थम्, आह—मनुष्यसिंहत्वादिवत्तथाऽञ्जसाऽनुपपत्तेर्नेति चेत्—यथा शौर्यक्रौर्यादिधर्माः सिंहे मुख्याः सिद्धाः सन्तो मनुष्ये शक्या उपचरितुम्, नासिद्धास्तथा द्रव्यादिषूपचरितौ स्यातां यद्यन्यत्राञ्जसा सिद्धौ सदभिधानप्रत्ययौ, न तु तौ क्वचित् सिद्धौ, भाक्तव्यवहारश्चाञ्जसा ऋते नास्ति, तस्माद्द्रव्यादिष्वेव मुख्याविति, एवञ्चेन्मन्यसे ततस्ते स्वपक्ष एव दोषविधानं तद्भावयति—**यदि त्वित्यादि,** सत्तादिष्वप्यञ्जसयोरसिद्धत्वादिति भावार्थः, एतत्पुनः स एव प्रष्टव्य इति स्वभावसत्तापेक्षौ सदभिधानप्रत्ययाविच्छतां किं नः सत्तासम्बन्धकल्पनया, तव पुनः सत्तासम्बन्धमिच्छतः दुःप्रतिपादं[स्व]भावसत्ताव्यतिरिक्ततादात्म्यवादिनः तस्मात्त्वमेवासि प्रष्टव्य **इति,** यत्पुनरिदमुच्यते सत्तायां सिद्ध इति चेदिति सभाष्यं गतार्थम्, इयं पुनराशङ्का कं प्रति युक्ता ? द्रव्यादिव्यतिरिक्तां सत्तां स्वत एव सिद्धा तदात्मिकामिच्छन्तम्, स पुनर्नान्यो वैशेषिकात्, तस्मादात्मानमात्मना

---

पचरिते एवेत्याशङ्कते—**सत्तासम्बन्धेति** ननु यथा द्रव्याश्रिता गुणभूता सङ्ख्या एको द्वौ बहव इत्यादिव्यवहारप्रयोजिका, न तु असहाय पदार्थ एवैकत्वं ससहायश्च यथायोगं द्वित्वादीति, या तु गुणकर्मसामान्यादौ व्यवहारप्रयोजिका सा गुणाद्याश्रयगतैव स्वनिमित्तं व्यवहारं प्रवर्त्तयति यथैकं शतं द्वे शते त्रीणि शतानीति, नहि शतसङ्ख्यायामेकत्वादिसङ्ख्या समवैति विरोधादेवं सत्तालक्षणं सामान्यमवच्छेदकत्वादवच्छेद्ये प्रधानतया स्वानुरूपाभिधानप्रत्ययौ जनयन् सामान्ये सत्ताद्रव्यत्वादौ उपचारेण स्वरूपमात्रतस्तौ जनयतीत्याशङ्कते—**गुणत्वमेकमिति** द्रव्यत्वादाविव द्रव्यादावप्यन्यस्य द्रव्यत्वादेरभावादुपचारेण तौ कुतो न भवत इति तदीयाभ्युपगम एव दोषं प्रसञ्जयितुमनुयुज्यते—**द्रव्यादिष्वपीति** । उपचारस्य मुख्यमूलतया सर्वत्रोपचारशङ्काया अनौचित्यात् द्रव्यादिषु तौ मुख्यौ, अन्यत्रोपचरिताविल्यभ्युपेयौ, यथा सिंहे मुख्यः सिंहप्रत्ययः गौणो मनुष्ये, अन्यथा सिंहेऽपि सिंहप्रत्ययस्य मुख्यता न स्यादित्याशयेन वैशेषिक आह—**मनुष्यसिंहत्वादिवदिति** द्रव्यगुणकर्मसु सामान्यादिषु सत्तायाश्च सत्तासम्बन्धतदभाववत्सु सदभिधानप्रत्ययोर्मुख्यत्वे नियामकाभावात् सत्तासम्बन्धस्य नियामकत्वे सामान्यादिषु तयोर्युक्तमौपचारिकत्वम्, सर्वत्र चौपचारिकत्वस्य मुख्यत्वाप्रसिद्धावसम्भवादिति भावः । यथा द्रव्यादौ क्वचित् सदभिधानप्रत्यययोः सिद्धयोर्भाक्तत्वं तथा सत्ताया क्वचित् सिद्धयोरेव भाक्तत्वौचित्यात् सत्ताया तदभावात् कथमौपचारिकत्वमित्याह—**यदि त्वित्यादि** । हेतुमाह—**सत्तादिष्विति** । सत्ताया कथमौपचारिकत्वमित्याशंका द्रव्यादिव्यतिरिक्तसत्ताभ्युपगन्तारं प्रत्येव युक्ता न तु सत्ताद्रव्याद्योरनतिरिक्तताभ्युपगन्तारमिति दर्शयति **एतत्पुनरिति** । ननु यदि द्रव्यादौ अभिधानप्रत्यययोर्भाक्तत्वं निवर्त्तते तर्हि तौ तत्र सत्तासम्बन्धाज्जायमानौ मुख्यौ भवेताम्, एवं सति न तस्य स्वतः सत्त्वम्, स्वतस्सत्त्वे हि सत्तासम्बन्धाभावात् द्रव्यत्वादौ तयो-

न युक्तमभियोक्तुमित्युदाहृतो ग्रन्थो गतार्थो यावत्तद्योगनिमित्तमिति, यदा चेत्यादिरारभ्य यावत्तद्योगनिमित्तमित्येवं प्रकार उदाहृतो ग्रन्थः पूर्वत्रास्ते न तूत्तरमध्ये, तदयुक्तं न द्रव्यादिष्वञ्जसा सिद्धिरित्यादिवक्ष्यमाणमसम्बद्धम्, तदात्मनिमित्तस्य सत्प्रत्ययस्यानुपपत्तेः–असत्तात्मनां द्रव्यादीनां मुख्यौ सदभिधानप्रत्ययौ कथं युक्ताविति एतदाचार्यवचनमन्तरे पतितं परस्याकौशलस्याऽऽख्यापनार्थम्, मनोरथवदिति, वैशेषिकस्य मनोरथ एव द्रव्यादिव्यतिरिक्ता सत्तेति, यदि भवेन् स्यात्, तन्मतौ तु पूर्वोत्तरपक्षौ व्याख्यातावेव ।

**द्रव्यादिभाक्तत्वनिवृत्तिः स्वतः सत्त्वं सत्तादिवच्चैतस्य वचनस्य व्याघात इत्येतद्दोषद्वयदर्शनादिति चेन्नैव च दोषः दण्डित्वदण्डत्वयोर्यथायथं स्वत एव सतोः तत्सम्बद्धत्वात्, सत्त्वतः सत्त्ववत्, सदेव स्वं सत्त्वतः-सत्त्वात्, सदेव सत्, न सत्तातोऽन्यत् सत्, तस्मात् सर्वस्य सतो नास्त्यतादात्म्यं सदात्मैव सर्वमिति भाक्तत्वनिवृत्त्याद्यभावः, सदादिवच्च स्वतः सत्त्वम् ।**

( **द्रव्यादीति** ) द्रव्यादिभाक्तत्वनिवृत्तिः स्वतः सत्त्वं सत्त्वादिवच्चैतस्य वचनस्य व्याघातः, इत्येतद्दोषद्वयदर्शनादिति वैशेषिकेणोक्ते आचार्य आह–नैव चेत्यादि, दण्डित्वं दण्डत्वञ्च यथायथं स्वत एव सतोः तत्सम्बद्धत्वात्–सत्तासम्बद्धत्वादित्यर्थः, सत्त्वतः–सत्त्वात् सत्त्ववत्, सदेव सत् सत्त्वतः सतः सत्त्वात् आत्मत्वात् स्वतः सत्त्वादित्यर्थः, एवं तावन्न्यायो यदुत सदेव सत्-सत्त्वमेव सत्, न सद्व्यतिरिक्ता सत्ता, न सत्तातोऽन्यत् सत्, तस्मात् सर्वस्य सतो नास्त्यतादात्म्यम्–असदात्मत्वं तदभावात् सदात्मैव सर्वमिति भाक्तत्वनिवृत्त्याद्यभावः, नायं दोष इत्यर्थः, सत्तादिवच्च स्वतः सत्त्वमिति, आदिग्रहणात् द्रव्यत्वगुणत्वकर्मत्ववत्[3] ।

**यतश्चैवं ततः सतो भावः सत्तेति द्रव्याद्यव्यतिरिक्तसत्तार्थैव ज्ञायते, कर्त्तरि षष्ठीवृत्तेः यत्तत् सद्भिः..........................सदित्यभिधानप्रत्ययकारणं सर्वत्र, एवमपि... ............यदुक्तं स्वतः सत्त्वमिति, एतदयुक्तं अत्र हि सत्तावदिति सर्वमिदं त्वदनुवृत्त्या, न मम सत्ता द्रव्यादिव्यतिरिक्ता काचिदस्ति कर्त्तरि षष्ठीत्युक्तत्वात्, ततोऽनुपपन्नं द्रव्यादीनामनेकत्वम् ।**

---

भाक्तत्वं न निवर्तेत, तथा च द्रव्यादिभाक्तत्वनिवृत्तौ स्वतः सत्त्वं विरुद्धम्, स्वत सत्त्वे च द्रव्यादिभाक्तत्वनिवृत्तिर्विरुद्धेति विरुद्धदोषद्वयार्थत्वात्तदभिधायक वचनं परस्परव्याघातार्थमिति वैशेषिक. शङ्कते–**द्रव्यादीति** । दण्डदण्डिनो' स्वत एव सत्त्वं प्राक् प्रदर्शितम्, तथाविधयोरेव सत्तया सम्बन्ध इत्याशयेनोत्तरयति–**दण्डित्वमिति** दण्ड इत्यर्थ । स्वत. सत. सत्तासम्बन्धो व्यर्थ इत्यत आह–**स्वतः सत्त्वादित्यर्थ इति,** सदेव सत्तेत्युच्यते न त्वन्या काचित् सत्ता, तथा च यथा सत्ता स्वत सती तथा दण्डादिरपि सत्, स्वत सत्त्वादिति भाव । एवञ्च वस्तुमात्रस्य स्वत सत्त्वात् न क्वापि सत्तासम्बन्धात् सदभिधानप्रत्ययौ किं तु स्वतः सत्त्वादेव सर्वत्र सदभिधानप्रत्ययौ मुख्यावेवेति स्वत सत्त्वस्य भाक्तत्वनिवृत्त्या न विरोध इति दर्शयितुं सदेव सत्तेति सर्वं सत्तात्मकमेव, न कस्याप्यतदात्मकत्वं, एवञ्चातादात्म्यात् द्रव्यादौ सदभिधानप्रत्ययौ मुख्यौ न स्वत इति यदुच्यते त्वया तदनुचितमित्याशयेनाह–**एवं तावदिति** । ननु सत् सत्तयोरेकत्वे सतो भाव. सत्तेति भेदनिबन्धना षष्ठी कथमित्याकांक्षायामाह–**यतश्चैवमिति**। सतो भावः सत्कर्तृकं भवनं, सद्भिर्हि भूयते, तथा च सतो यत्स्वरूपानुभवनं सैव हि सत्ता सत्कर्तृकभवनलक्षणा वस्तुस्वरूपभूता सदभिधानप्रत्ययौ

---

१ सि. क. यथा यथा । २ सि. क. सम्बन्धत्वा० । ३ इतःपरं 'क०' प्रतिर्नास्ति, ।

**यतश्चैवमित्यादि,** यस्मात् स्वत एव सत्ताद्रव्यादीनां युक्ता, तस्मात् सतो भावः सत्तेति या शब्दव्युत्पत्तिर्भेदषष्ठ्युपादानार्था सा द्रव्याद्यव्यतिरिक्तसत्तार्थैव ज्ञायते सतो भावः सत्तेति; किं कारणं? कर्त्तरि षष्ठीवृत्तेः, तद्व्याख्यानं यत्तत् सद्भिरित्यादि गतार्थं यावत् सदभिधानप्रत्ययकारणं सर्वत्रेति, अत एवमपीत्यादि पूर्वोत्तरपक्षौ सव्याख्यानौ गतार्थौ वैशेषिकस्यैव यावदुपनयसूत्रम्, यदुक्तं स्वतः सत्त्वमिति एतदयुक्तमिति आचार्यो यथैतदप्रत्ययोद्ग्राहं भवति तथाऽऽह—अत्र हि सत्तावदिति, सर्वमिदं त्वदनुवृत्त्या त्वां प्रतिपादयितुमुच्यते, न मम सत्ता द्रव्यादिव्यतिरिक्ता काचिदस्ति, कर्त्तरि षष्ठीत्युक्तत्वात्, द्रव्यादीनामकारणत्वादिदोषाः प्रसक्ताः ततोऽनुपपन्नमिति, एषां तत्प्रसङ्गात्, कुतोऽनुपपन्नता? ममात्र नियतिताऽभ्यागता, त्वन्मतेन तु सत्तामभ्युपगम्य मया सत्तादिवद्द्रव्यादीनामनिष्टापादनं कृतम्, मम तु द्रव्यगुणकर्मणां सामान्यविशेषसमवायानाञ्चानेकत्वमनुपपन्नमिति।

तद्व्याचष्टे—

**कर्त्तृणाऽकर्त्तृणा च यो भवति स एव भावः सामान्यं देशकालादिभेदेऽपि भवनतुल्यत्वात्, स एव विशेषोऽन्यभवननिरपेक्षः कर्त्ता उक्तवत्, भवदेव भवति तदेव द्रव्यं भव्यं कलनं गुणः युगपदयुगपत्पर्यायत्वेन भवनात्, स एव भावः क्रिया. स एव विशेषः भावान्तराद्विशिष्यमाणत्वात् अन्यनिरपेक्षत्वात् सदसदात्मकत्वात् वक्ष्यमाणवच्च, स एव समवायः, एवमेव भवतः कर्त्तृत्वेन तस्यैव कारणत्वं तदेकीभावगत्या कार्यत्वापत्तेः, सहासत्त्वेन कर्त्तृत्वात् नासंयोगः, कार्यकारणप्रतिपादनात् नासमवायः, ताभ्यां सम्बद्धत्वान्नित्यत्वासत्त्वे न स्तः।**

**कर्त्तृणाऽकर्त्तृणा चेत्यादि,** भवतीति भाव इति कर्त्तरि, भवनं भाव इति भावे, इत्यादि कारकविवक्षायां यो भवति स एव भावः सामान्यम्, देशकालादिभेदेऽपि भवनतुल्यत्वात्, स एव विशेषोऽन्यभवननिरपेक्षः कर्त्ता, उक्तवत् कर्त्तरि षष्ठीति, भवतो भवनात् भवदेव भवति तदेव द्रव्यं भव्यम्, भवद्भवनादेव, कलनं गुणनं गुणः, युगपदयुगपत्पर्यायत्वेन भवनात्, स एव भावः क्रिया

करोतीति भावं स्फुटयति—**सा द्रव्यादीति,** द्रव्यादेः सतो भवनलक्षणाव्यतिरिक्तसत्तार्था व्युत्पत्तिरित्यर्थः, सत् भवति—सद्वस्तु उत्तरावस्थालक्षणात्मलाभोन्मुखोऽवतिष्ठत इति सतः कर्तृत्वम्, अवस्थावस्थावतोश्चाभेदः, यत्तत् सता भूयते तदेव सत्ता सामान्यं सदित्यभिधानप्रत्ययकारणं सर्वत्रेति भावः। हेतुमाह—**कर्त्तरीति** सतो भाव इति कर्त्तरि षष्ठी, सा सतो भवनक्रियाकर्तृत्वं बोधयति अथ द्रव्यगुणकर्मणां सामान्यविशेषसमवायानाञ्चैकत्वमेवोपपादयति—**कर्तृणेति** कर्तृव्युत्पत्त्याऽकर्तृव्युत्पत्त्या चेत्यर्थः, तथैव व्युत्पत्तिं दर्शयति—**भवतीति भाव इति,** यत्तेन तेन रूपेण भवति मृदेव हि पिण्डस्थासकोशादिना भवति, तस्माद्भवनात्म मृद्द्रव्यमेव देशकालभेदेऽपि भवनसामान्यात् भाव एव सामान्यमुच्यते न ततो भिन्नं किञ्चिदिति भावः। पूर्वोत्तरभावानपेक्षं वर्तमानभावनात्मकं द्रव्यमेव विशेषः, न हि विशेषः सामान्याद्भिन्नस्तन्निरपेक्षं वा सामान्यमस्तीत्याशयेनाह—**स एवेति** सामान्यरूपो भाव एवेत्यर्थः। ननु कर्त्तुर्भवितुर्यद्भवनं पिण्डादि स हि विशेषो न कर्त्तेत्याशंकायामाह—**उक्तवदिति,** अवस्थावस्थावतो भेदाभावात् स एव कर्तेति भावः। तदेव समर्थयति—**भवतो भवनादिति** यत्तद्भवति तस्यैव भवनम्, तेनैव तथा तथा भूयते, नाभवद्भवति, अपि तु भवदेव भवति पूर्वोत्तरावस्थावच्छिन्नमेकं तदेव द्रव्यमुच्यते तदेव च भवतो भवनात् भवदेव भवतीति द्रव्यमुच्यते, स एव च गुणः, क्रमिकपर्यायरूपेण सहपर्यायरूपेण च भवनात्, सैव क्रियाऽपि भवनात् स एव चावस्थान्तरेण विशिष्यमाणत्वात् भावान्तरनिरपेक्षत्वाच्च विशेषः, अन्यापेक्षत्वे हि सामान्यमेव स्यात्, स एव सत्त्वेनासत्त्वेन च विशिष्यत इति

१ सि. क्ष. °पन्नमित्येषा तत्प्र०। २ सि. क्ष. °पादने कृते मतनुद०। ३ सि. क्ष. °वायानाञ्चैकत्वानुप०। ×× सि.।

भवनं भाव इति, स एव विशेषः भावान्तराद्विशिष्यमाणत्वात्, अन्यनिरपेक्षत्वात्, सदसदात्मकत्वात्–सत्त्वेनासत्त्वेन च तस्यैव विशिष्यमाणत्वात्, वक्ष्यमाणवच्चेति, कारणाकारणाद्यैक्यमनन्तरं वक्ष्यते, स एव समवायः, एवमेवेति, भवतः कर्तृत्वेन तस्यैव कारणत्वं तदेकीभावगत्या कार्यत्वापत्तेः, प्रतिपादितेन विधिना सम्बन्धाभावः प्रत्याख्यातः, समवायव्याख्यानात्, सहासत्त्वेनेति, अनेनैवासत्त्वमपि प्रत्याख्यातम्, सदसदात्मकत्वात् कर्तृत्वात संयुक्तमेव कार्येणेति नासंयोगः कार्यकारणप्रतिपादनाभ्या समवायोऽस्ति, ताभ्याञ्चेति, संयोगसमवायाभ्यां सम्बद्धत्वात् नित्यत्वासत्त्वे न स्तः, अजातिमन्ति त्विति प्रतिपाद्यत एव, द्रव्यव्यतिरिक्तायाः प्रतिसिषेधिषितत्वात्, एवं तावत् कारणादित्वं द्रव्यादेः।

**अथ वा अकारणनित्यासम्बन्धाजातीनि द्रव्यादीनि, स्वतः सत्त्वात् सामान्यादिवत्, कारणादि वा सामान्यादीनि स्वतः सत्त्वात्, द्रव्यादिवत् तदात्मत्वात्, उभयं वा, इतरेतररूपैकभवनाविशेषात्।**

**अथ वेत्यादि,** अकारणनित्यासम्बन्धाजातीनि द्रव्यादीनि स्वतः सत्त्वादुक्तात् सामान्यादिवत्, कारणादि वेति, कारणानित्यसम्बन्धजातिमत्त्वानि सामान्यविशेषसमवायानां स्वतः सत्त्वाद्द्रव्यादिवत्, स्वसत्सत्त्वादित्यर्थः, तदात्मत्वात्, यद् यदात्म तत् स्वतः सत् सत्तादिवदित्युक्तम्, उभयमिति, कारणा-

विशेषः, अनुपदमेव कारणाकारणयोरैक्यमुच्यते तस्मात्तयोरेकरूपत्वात् स एव समवाय इति द्रव्यमेव सर्वं न द्रव्यात् गुणकर्मादीनामनेकतेति भावः। ननु यद्येकमेव द्रव्यं तर्हि द्विनिष्ठत्वात् समवायः कथं सम्भवति इत्यत्राह–**एवमेवेति** उक्तप्रकारेण भवनो भवनात् कर्तुः भवतः कार्यस्य भवनस्य चैकीभावगतेरस्ति समवाय इति भावः। एवं समवायव्यावर्णनात् कार्यकारणयोः सम्बन्धो न सम्भवतीति शङ्का परास्तेत्याह–**प्रतिपादितेनेति**। सर्वदा कारणं कार्येण संयुक्तमेव, तस्मात् कार्यमसदेवेति शङ्कनं निराकृतम्, भवतः सदसदात्मकत्वेन कर्तृत्वादसत्त्वेन कार्येण सह संयुक्तमेव, इतरथा कर्तैव खपुष्पादिवत्र स्यादतो नासंयोगः, कार्यकारणभावाच्च तयोर्वा समवाय इत्याह–**सहासत्त्वेनेति,** एवञ्च समवायोऽभेदस्वरूपः सम्बन्धः, संयोगश्च भेदरूपः, भेदाभेदः कार्यकारणयोरिति भावः। कारणं यतः कार्येणैकीभावं गच्छत्यतो न नित्यं यतश्च कार्यं संयुक्तमतो नासदित्याह–**संयोगेति**। ननु सामान्यादीनां द्रव्यादिव्यतिरिक्तानामभावे कथं द्रव्यादीनि सामान्यवन्ति भवन्तीत्यत्राह–**अजातिमन्तीति,** द्रव्यस्यैव सामान्यरूपत्वात् जात्यन्तरापेक्षा नास्तीति भावः। तदेवं द्रव्यस्यैव गुणकर्मसामान्यविशेषसमवायात्मकतया एकत्वात् सदसदात्मकत्वाच्च कार्यकारणादिभावो नानुपपन्नः, अनेकत्वे तु कारणे कार्यस्यासत्त्वात् कारणत्वाद्यनुपपत्तिरेव प्रागुक्तविधिनेत्याशयेनाह–**एवं तावदिति**। प्रकारान्तरेण द्रव्यादेः कारणत्वमकारणत्वञ्च, नित्यत्वमनित्यत्वञ्च सम्बद्धमसम्बद्धं च, जातिमत्त्वमजातिमत्त्वञ्चेति दर्शयति–**अथ वेति**। साधयति–**अकारणेति,** यथा सामान्यविशेषसमवाया न कारणात्मकाः न समवायिकारणात्मकाः, नित्याः, असम्बन्धाः–समवायरहिताः अजातयः,–जातिशून्याः स्वतः सद्रूपत्वात् तथैव द्रव्यादीन्यपि स्वतः सन्ति, एकत्वात्, तस्मात् अकारणनित्यासम्बन्धाजातीनीति भावः। स्वतः सत्त्वादेव च सामान्यादीनां द्रव्यादिवत् कारणत्वमनित्यत्वं सम्बद्धत्वं जातिमत्त्वञ्च भवन्तीत्याह–**कारणेति**। सदेव सत् सतः आत्मत्वात्–स्वतः सत्त्वात्, स्वसदेव सत्ता, न तु तद्व्यतिरिक्ता, तदात्मत्वात्, यद् यदात्म तत् स्वतः सत्, यथा सत्ता सत्तास्वरूपा स्वतः सतीति न स्वतः सत्त्वं द्रव्यादावसिद्धमित्याशयेनाह–**स्वसत् सत्त्वादित्यर्थ इति**। द्रव्यादि सामान्याद्यात्मकं सामान्यादि च द्रव्याद्यात्मकम्, इतीतरेतरैकभवनात्मकं वस्तु तस्मादेवेतरेतरधर्मात्मकमपि, तस्मात् सर्वं वस्तु द्व्यात्मकत्वेन कारणमकारणञ्च, नित्यमनित्यञ्च सम्बद्धमसम्बद्धञ्च, जातिमदजातिमच्चेत्याशयेनाह–**उभयमिति**। ननु वैशेषिकेण समवायस्यैकत्वं लाघवादभ्युपेत्य सङ्करप्रसङ्गमाशङ्क्य यस्तस्य परिहारो विहितो न

१ सि. क्ष. नार्थं योगः। २ सि. क. प्रतिविधित्सितत्वात्। ३ सि. क्ष. द्रव्यत्वादेः।

कारणनित्यानित्यसम्बन्धासम्बन्धजातिमदजातिमत्त्वानि द्रव्यादीनां सामान्यादीनाञ्च सर्वस्य वस्तुत्वात् द्रव्यात्मकत्वं भवत्येव, इतरेतररूपैकभवनाविशेषात् ।

**यदपि च समवायस्यैकत्वे सङ्करप्रसङ्ग इति दोष उक्तः स तदवस्थ एव, बहूनां सम्बन्धिनामेकसम्बन्धभावात्, वागादिगवाद्यभिधानवत्, तस्माद्द्रव्यत्वसम्बन्धाद्यथा द्रव्ये द्रव्यत्वबुद्धिं तथा गुणे कर्मणि च द्रव्यत्वबुद्धिं कुर्यादिति सर्वस्य सर्वाभिधानप्रत्ययौ स्याताम्, पदार्थलक्षणव्यवस्थानस्याभावात् षडपि पदार्था निवर्त्तन्ते कथम्? समवायस्यैकत्वात् द्रव्यत्वेन गुणकर्मणोः सम्बन्धाद्द्रव्यत्वात्तयोश्च स्वरूपस्य हानिः, तत्त्वविशेषणभेदाद्धि तद्भेदः स्यात्, छत्रिदण्डिवत् ।**

**यदपि चेत्यादि**, निष्ठायाः सम्बन्धस्य च सत्तयैककालत्वप्रतिपादनार्थं समवायस्यैकत्वादेकः काल इत्युक्त्वा पुनरत्र यो दोषश्चोदितः सङ्करप्रसङ्ग इति स तदवस्थ एव दुःपरिहारः, बहूनां सम्बन्धिनामेकसम्बन्धभावादिति हेतुः, बहवो हि सम्बन्धेनैकसम्बन्धीभूताः, ततः तेषां सङ्करः, वागादिगवाद्यभिधानवत्, यथा गौरित्युक्ते वाग् दिग्भूरश्म्यादिभिरेकस्य गोशब्दस्य वागादिशब्दपर्यायत्वात्तत्तदात्माऽसौ, तत्तदर्थप्रतिपादनात् तत्तत्सम्बन्धादमुष्यैवेदं सम्बन्धीति निर्धार्य व्यवस्थापयितुमशक्यत्वात् सर्वेषां दशानामिष्टः कारणकार्याधारः समवायोऽपि तथा ज्ञेयः, द्रव्यत्वेनैव गुणत्वकर्मत्वादिभिश्च सम्बन्धः इह लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैकः समवायः, तस्माद्द्रव्यत्वसम्बन्धाद्यथा द्रव्ये द्रव्यत्वबुद्धिं तथा गुणे कर्मणि च द्रव्यत्वबुद्धिं कुर्यादिति सर्वस्य सर्वाभिधानप्रत्ययौ स्यातामिति सामान्येन संकरदोष उक्तः, पदार्थेत्यादि द्वितीयः सङ्करप्रकारः, पदार्थानां षण्णां द्रव्यादीनां लक्षणव्यवस्थानस्याभावात् षडपि पदार्था

युक्तः स, तद्दोषतादवस्थ्यादित्याह–**यदपि चेति** । व्याचष्टे–**निष्ठाया इति**, वैशेषिकेण यदैव कार्यस्य निष्ठा तदैव सत्तया सम्बन्ध इत्येककालताप्रतिपादनार्थं समवायो ह्येकः, तस्मात् यदैव समवायः सम्बध्यते तदैव सर्वे तत्सम्बन्धिनोऽपि सम्बध्यन्ते, इतरथा समवायस्य नानात्वं स्यात्, यो हि तदा न सम्बद्धस्तत्समवायोऽपि तदानीं नास्ति पश्चात् तत्सम्बद्धकाले भवतीति, तच्च नेष्टम् तस्मात् समवायस्यैकत्वान्निष्ठायाः सत्तायाः सम्बन्धस्य चैकः काल इति समवायस्यैकत्वं व्यवस्थाप्य ननु समवायस्यैकत्वे समवायसम्बन्धिनां सर्वेषामेकत्र प्रसङ्गात् सङ्करः स्यादिति सङ्करप्रसङ्गमाशंक्य तस्यैकत्वेऽपि यथा प्रतीति व्यवस्थेति निराकृतः, तत्सङ्करप्रसङ्गः परिहर्तुमशक्य एवेति भावः । तत्र हेतुमाह–**बहूनामिति**, अवयवावयविगुणगुणिक्रियाक्रियावज्जातिव्यक्तिविशेषनित्यद्रव्याणां बहूनां सम्बन्धिनां समवायस्यैकत्वे सति सम्बन्धत्वादित्यर्थः । **बहवो हीति** अनेकेऽवयवादय एकेन समवायसम्बन्धेनैकदैव सम्बन्धिनो जाताः, न तु पृथक् पृथक् सम्बन्धिनः, अत एव सङ्कर इति भावः । दृष्टान्तमाह–**वागादीति** 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रिया पुंसि गौः' इति कोशात् वागादिदशस्वर्थेषु गोशब्दो दृष्टः, तत्र गौरित्युक्ते विनिगमकाभावात् वागादिदशार्थोपस्थित्या वागादिशब्दपर्यायत्वमेकस्य गोशब्दस्य तत्र तत्र तस्य शक्तत्वात्, अयमेवास्य गोशब्दस्यार्थो नान्य इति निर्धार्य व्यवस्था विधातुं न शक्यत इति दशार्थाभिधायित्वात् गोशब्दस्य सङ्कीर्णता, एवमेव अवयवावयव्यादिनानासम्बन्धिनः समवायस्यापि सङ्कीर्णत्वात् सङ्करप्रसङ्गः सम्बन्धिनां दुःपरिहार एवेति भावः । समवायस्यैकत्वं दर्शयति–**द्रव्यत्वेनैवेति** इहेत्याकारकं ज्ञानं शब्दप्रयोगो वा समवायस्य लिङ्गम्, द्रव्यत्वगुणत्वकर्मत्वादिषु तच्च तुल्यमविशिष्टम्, भेदसाधकलिङ्गाभावात्, तस्मादेकः समवाय इति भावः । तदेवं तस्यैकत्वे सङ्करं दुःपरिहारमाह–**तस्मादिति**, नन्वेकश्चेत् समवायः तदा यथा द्रव्ये द्रव्यत्वबुद्धिः समवायात् तथैव गुणादावपि द्रव्यत्वसम्बन्धस्य समवायस्य सत्त्वात् द्रव्यत्वबुद्धिरपि स्यादेव, सम्बन्धसत्त्वे सम्बन्धिसत्त्वस्यावश्यकत्वादिति भावः । एवं द्रव्यत्वगुणत्वकर्मत्वादिसामान्यानां परस्परसङ्करप्रसङ्गमुक्त्वा पदार्थेषु षट्सु सङ्करं दर्शयति–**पदार्थेति** । कथं सङ्कर इत्यत्राह–**लक्षणेति**, यस्य यत्स्वरूपमिष्टं तस्य तत्र व्यवस्थां कर्तुं न

निवर्त्तन्त इति । कथमित्यादि, व्याख्या—समवायस्यैकत्वात् द्रव्यत्वेन गुणकर्मणोः सम्बन्धाद्द्रव्यत्वात् तयोश्च स्वरूपस्य गुणत्वस्य कर्मत्वस्य च हानिरिति दोषौ, तत्त्वविशेषणभेदाद्धि तद्भेदः स्यात्, छत्रिदण्डिवदिति वैधर्म्यदृष्टान्तः—छत्रविशिष्टः छत्री, दण्डविशिष्टो दण्डी, न तथेह द्रव्यत्वस्य कश्चिद्भेदोऽस्ति ।

**कार्यकारणाधाराधेयसमवायात्तौ गुणकर्मभावौ भविष्यत इति चेत्, न, तयोर्गुणकर्मणोर्गुणकर्मभावनिवृत्त्या प्रथमद्रव्यभावनिवृत्तिः, तद्यथा य उक्तः कार्यकारणाधाराधेयसमवायास्तस्यैकत्वात् स द्रव्यभावेन सम्बन्धात्ते द्रव्यमेवैकं करोति, ततश्च द्रव्यलक्षणं नास्ति, क्रियावद्गुणवत् समवायिकारणमिति, तदभावान्न द्रव्यम्, न गुणकर्माणि तथा लक्षणानीति द्रव्यस्यापि द्रव्यभावनिवृत्तिः, एवं गुणकर्मणोरपि ।**

**कार्यकारणेत्यादि**, कारणमाधारश्च द्रव्यम्, आधेये कार्ये च गुणकर्मणी, तयोर्भिन्नयोः कार्यकारणयोराधाराधेययोश्च[1] समवायात्तौ गुणकर्मभावौ भविष्यत इति चेत्— एवञ्चेत् मन्यसे मा संस्थाः, अत्रोत्तरं तयोर्गुणकर्मणोरित्यादि यावत् प्रथमद्रव्यभावनिवृत्तिरिति तावदुपदेशवचनम्, उपरितनो ग्रन्थस्तद्व्याख्या—गुणकर्मणोर्गुणकर्मभावनिवृत्तिद्वारेण द्रव्यस्य द्रव्यभावनिवृत्तिराख्यायते तद्यथा—य उक्तः कार्यकारणाधाराधेयसमवायः तस्यैवैकत्वात् यो द्रव्यभावेन गुणकर्मणोः समवायः स एकः, तेन द्रव्येण सम्बन्धात्ते गुणकर्मणी द्रव्यमेवैकं करोति, ततो गुणकर्मणी निवर्त्तेते, तन्निवृत्तौ द्रव्यमाश्रय्यभावान्नाश्रयो[2] न च कारणम्, समवायिनां गुणकर्मणामभावात्, ततो द्रव्यस्य द्रव्यलक्षणं नास्ति क्रियावद्गुणवत् समवायिकारणमिति,—क्रियागुणाभावान्न द्रव्यं तद्वन्न गुणकर्माणि तथा लक्षणानीति, इतिशब्दो हेत्वर्थे, यस्माच्च

शक्यत इति पदार्थानां षट्त्वेन व्यवस्था हीयत इति भाव । व्यवस्थाऽसम्भवमेव दर्शयति—**समवायस्यैकत्वादिति,** गुणस्य कर्मणो हि गुणत्वं कर्मत्वं स्वरूपम्, यदि समवाय एकस्तर्हि गुणत्वकर्मत्वादिसमवायस्यैव द्रव्यत्वसमवायत्वात् तत्र गुणत्वादिसमवायात् गुणत्वादिसत्त्ववद्द्रव्यत्वसमवायसत्त्वाद्द्रव्यत्वमप्यस्तीति गुणस्य गुणत्वमेव कर्मणश्च कर्मत्वमेव स्वरूपमिति न स्यात्, तथा च द्रव्यगुणकर्मणां परस्परं भेदो न स्यात्, धर्मभेदप्रयुक्तो हि धर्मिभेद धर्मश्च द्रव्यत्वादि सर्वत्रैवास्तीति कथं भेद स्यादिति भाव । विशेषणभेदाद्विशेष्यभेदे दृष्टान्तमाह—**छत्रीति** छत्रविशिष्टो न दण्डविशिष्ट, दण्डविशिष्टश्च न छत्रविशिष्ट इति छत्रदण्डविशेषणभेदात् विशेष्यस्य पुरुषादेर्यथा भेदो न तथा द्रव्यत्वस्य सर्वत्र सत्त्वेन भेदोऽस्तीति भाव । अथ नास्ति गुणत्वकर्मत्वयोर्हानि, द्रव्याभिन्नयो गुणकर्मणो सिद्धत्वादित्याशङ्का समाधत्ते-**कार्यकारणेति** । ननु समवायस्यैकत्वेऽपि तत्सम्बन्धिन एकत्वं न सम्भवति, इतरथा द्रव्यत्वं सामान्यमेव न स्यात, अनेकवृत्तित्वाभावात, तस्मात धर्मभेदाभावेऽपि कारणान्तरेण धार्मिभेदसत्त्वा न समवायैकत्वप्रयुक्तं सम्बन्ध्येकत्वम्, तथा हि द्रव्यं हि गुणकर्मणो समवायिकारणमत एवाधारश्च, गुणकर्मणी च द्रव्याश्रयित्वेनैव प्रतीयमानतया उपादानकारणजन्यतया चाधेये कार्ये च, तस्मात गुणवत्त्वात क्रियावत्त्वात् समवायिकारणत्वाच्च स्वसमानासमानजातीयेभ्यो व्यावृत्तं द्रव्यमिति द्रव्याद्गुणकर्मणोर्भिन्नत्वात् समवायस्यैकत्वेऽपि गुणकर्मसमवायात गुणत्व कर्मत्वञ्च भवत एव, सम्बन्धैकत्वस्य सम्बन्ध्येकत्वाप्रयोजकत्वादित्याशयेन व्याचष्टे-**कारणमाधारश्च द्रव्यमिति** । तदेतन्मतं निराकर्त्तुं प्रतिज्ञावाक्यमाह—**तयोर्गुणकर्मणोरिति,** प्रथमं गुणकर्मणोर्गुणकर्मभावो निवर्त्तते ततश्च द्रव्यभावनिवृत्तिरित्यर्थ । तदेव समर्थयति—**य उक्त इति,** द्रव्यभावेन—द्रव्येण पदार्थेन गुणकर्मणो समवाय एक, स द्रव्येण सम्बद्धे गुणकर्मणी द्रव्यमेकं करोति, ते निवर्त्तेते, द्रव्यरूपतापन्नत्वात, एवञ्च गुणकर्मणोराश्रयिणोरभावात् कस्याश्रय· कारणञ्च द्रव्यं भवेत, तस्मात क्रियावद्गुणवत समवायिकारणमिति द्रव्यलक्षणमसम्भवदोषग्रस्तम्, तदेवं द्रव्याभावात् गुणकर्मणी कमाश्रयेताम्, कस्माद्वा भवतामिति ते अपि न स्त इति भावः । एवञ्चेदृशलक्षणाना गुणाना कर्मणाञ्चाभावात् द्रव्यनिवृत्तेर्द्रव्यभावस्य द्रव्यत्वस्य निवृत्तिरित्याह—**यस्माच्चेति** । क्रियाव-

1 सि. क्ष. डे. °राधाराधेययोश्च । 2 सि. क्ष. °माश्रयाभावा° ।

सन्त्येवेदृग्लक्षणानि गुणकर्माणि, तेषामाश्रयिणां समवायिनामभावात्तन्निवृत्तौ द्रव्यस्यापि द्रव्यभावनिवृत्तिः,–गुणवत्समवायिकारणं क्रियावद्द्रव्यमनेकद्रव्यं वा द्रव्यं स्यात्, तच्चेत्थं नाद्रव्यं नानेकद्रव्यं सम्भवति, तस्माद्गुणकर्मणां गुणकर्मभावनिवृत्तौ द्रव्यभावसम्बन्धेऽसति गुणकर्मणामनाश्रयत्वाद्द्रव्यस्य द्रव्यभावनिवृत्तिरिति द्रव्यपदार्थनिवृत्तिरुक्ता, अथवा त्वदिष्टेन द्रव्यत्वेन सर्वगतेन सम्बन्धे सति गुणस्य कर्मणो वा द्रव्यं द्रव्यत्वेनासम्बद्धमिति द्रव्याभावः, तद्भावाद्गुणकर्मणी न द्रव्याश्रिते, ततो द्रव्यलक्षणायुक्तेर्द्रव्यभावनिवृत्तिः, किं द्रव्यलक्षणमिति चेदुच्यते क्रियागुणवत्समवायिकारणमिति, तत्तु कार्यकारणाधाराधेयसमवायस्यैकत्वात् गुणकर्मणोर्द्रव्यभूतत्वात् क्रियावल्लक्षणं[1] नास्ति यस्मान्न तु गुणकर्माणि तथा लक्षणानीति–गुणस्य द्रव्याश्रयादिलक्षणत्वात्, एकद्रव्यादिलक्षणत्वात्कर्मणः, एवं स्वलक्षणाभावापेक्षा द्रव्यस्य द्रव्यभावनिवृत्तिः, गुणकर्मलक्षणायुक्तेरिति, ततश्च द्रव्यस्यापीत्यादि, आश्रयाभावाद्गुणकर्माभावमापाद्य आश्रयाभावेऽपि द्रव्यस्याश्रयस्याभाव इति गतार्थम्, एवं गुणकर्मणोरपि गुणकर्मलक्षणाव्यवस्थानात् गुणकर्मभावनिवृत्तिरुक्ता वेदितव्या, एवं तावद्द्रव्यगुणकर्मणां व्यवस्थितलक्षणाभावात् निवृत्तिः ।

तथा—

**द्रव्यगुणकर्मणां द्रव्यत्वगुणत्वकर्मत्वादीनामाश्रयाभावादनुपपत्तिः, परस्पररूपापत्त्या परस्परभावनिवृत्तौ द्रव्यादिषट्पदार्थनिवृत्तिः, यच्चाधाराधेयभावभेदे संयोगवद्द्विवृत्तित्वात् समवायस्यानित्यत्वं स्यादिति पूर्वपक्षं कृत्वा परिहारमाह वैशेषिकः, न, बहूनामेकत्वात्, न तु द्वयोर्द्वयोः सम्बन्धत्वं संयोगवत् समवायस्येति, एतेनापि सङ्करप्रसङ्गः, पदार्थलक्षणव्यवस्थानासम्भवात् षट्पदार्थनिवृत्तिर्वा, यत्तु प्रत्युक्तं नाधाराधेयनियमात्–यद्यप्येक एव समवायः तथाप्याधाराधेयनियमोऽस्ति द्रव्य एव द्रव्यत्वं गुण एव गुणत्वं कर्मण्येव कर्मत्वं सर्वत्र चैकः समवाय इति एतदपि प्रत्युक्तं सर्वत्र सर्वाधेयवृत्तौ सर्वाभिधानप्रत्ययसांकर्यात् कथं द्रव्यादीनि प्रतिनियतानीति ।**

**द्रव्यगुणेत्यादि**, द्रव्यत्व[गुणत्व]कर्मत्वादीनामाश्रयाभावादनुपपत्तिः सामान्यविशेषाणाम्, आदिग्रहणात सत्तायाः, तद्व्याचष्टे–परस्परेत्यादि भावितार्थं यावत् षट्पदार्थनिवृत्तिरिति, यच्चेत्यादि,

त्वादिलक्षणलक्षितं द्रव्यमद्रव्यं वा स्यादनेकद्रव्यं वा, उभयमपि नास्तीति प्राह–**गुणवदिति** । निगमयति द्रव्यपदार्थनिवृत्त्युपपादनम्–**तस्मादिति** । प्रकारान्तरेण व्यतिरेकतो धर्मयोगान् निरूपयति–**अथवेति**, सर्वगतस्य द्रव्यत्वस्य सम्बन्धाद्गुणकर्मणी द्रव्यम्, न तु द्रव्यं, द्रव्यत्वेनासम्बन्धात्, अत एव ते न द्रव्याश्रिते इति द्रव्यलक्षणाभावात् द्रव्यं नास्ति, क्रियावत्त्व गुणवत्त्वं हि द्रव्यलक्षणम्, उक्तवत् क्रियागुणयोर्द्रव्यत्वान्न लक्षणमिति भाव । तथा गुणकर्मणोरपि नास्ति तल्लक्षणं तयोरन्यलक्षणत्वादित्याह–**यस्मान्न त्विति**, द्रव्याश्रयी अगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्, एकद्रव्यमगुणं संयोगविभागेष्वनपेक्षकारणमिति कर्मलक्षणम्, गुणकर्मणोश्च द्रव्यत्वान्नैते लक्षणे सम्भवत, एवं लक्षणाभावाद्द्रव्यभावनिवृत्तिरिति भावः । उक्तरीत्या लक्षणाभावादाश्रयस्य द्रव्यस्याभावे गुणकर्मणोरभाव इत्याह–**आश्रयाभावादिति** । द्रव्यभावनिवृत्तिप्रतिपादनादेव गुणकर्मभावनिवृत्तिरपि फलितैवेति द्रव्यगुणकर्मनिवृत्ति' सिद्धेत्याह–**एवं गुणकर्मणोरपीति** । द्रव्यादीनामभावमाह–**द्रव्यगुणेति** । तत्कथमित्यत्राह–**परस्परेति** द्रव्यादीनां परस्परेषां गुणत्वकर्मत्वादिपरस्परधर्मसम्बन्धापत्त्या द्रव्यत्वादिनिवृत्तौ द्रव्या-

1 सि. क्ष. क्रियावदलक्षणं ।

आधाराधेयभावेन भेदे सति संयोगवद्द्विवृत्तित्वात् समवायस्य, ततश्चानित्यत्वं स्यादिति पूर्वपक्षं कृत्वा परिहारमाह वैशेषिको–न, बहूनामेकत्वात्–बहूनां द्रव्यादीनामेकः समवाय इति स्वरूपवर्णनं द्विवृत्तिप्रतिषेधार्थम्, न[1] तु द्वयोर्द्वयोरित्यादिसंयोगेन वैधर्म्यं गतार्थं यावत् समवायस्येति. आचार्य आह–एतेनापीत्यादि, एतेन अनित्यत्वपरिहारवचनेनापि सङ्करप्रसङ्गः, सामान्येन व्यवस्थानाभावात्, सर्वत्र सर्वाधेयवृत्तौ सर्वाभिधानप्रत्ययसङ्करः, विशेष्य च पदार्थलक्षणव्यवस्थानासम्भवात् षट् पदार्थनिवृत्तिर्वेत्यादिरुक्तस्तदवस्थ एव दृढीकृतः, बहूनामेकसमवायाभ्युपगमात्, ततः सङ्करादुक्तात् षडपि पदार्था निवर्तिताः, तन्निवृत्तौ समवाय्यभावात् समवायनिवृत्तेस्तस्यासतः खपुष्पस्येव कुतो नित्यत्वमनित्यत्वं वा? यत्तु प्रत्युक्तमित्यादि सङ्करदोषस्य यदुत्तरमुक्तं न, आधाराधेयनियमादिति, यद्यप्येक इत्यादि तद्व्याख्या यावत् कर्मण्येव कर्मत्वमिति, सर्वत्र चैकः समवाय इत्यनेन द्विवृत्तित्वपरिहारेणानित्यत्वमपि परिहृतमिति वैशेषिकः, आचार्य आह–एतदपि प्रत्युक्तमित्यादि गतार्थं यावत् प्रतिनियतानीति द्विवृत्तित्वमेवास्येति च वक्ष्यति।

**यत्तूच्यतेऽवगम्यतां तावत् यथा कुण्डदधिसंयोगे दध्येवाधेयं कुण्डमेवाधार इति नियमस्तथा द्रव्यादीनां समवायैकत्वेऽप्याधाराधेयनियमः स्यादिति, इदमपि स्ववादेनैवोत्तरमार्गविधानं कृतं त्वया, न तु तथा सङ्कराभावो घटते, यदि दधिमधूदकादिभिर्बहुभिराधेयैः कुण्डाधारः संयुक्तो भवति ततः किमिति सङ्करो नास्ति? यदि सर्वात्मकः समवाय एक एव भवति तदा किमिति संकरो न स्यात्? नापि च द्विवृत्तित्वनिवृत्तिः समवायस्य, यतः संयो-**

द्रव्याभावादाश्रयाभावात् सामान्यादीनामभावे षट्पदार्थनिवृत्तिरिति भावः । बहूनामेकः समवायः न तु संयोगवत् द्वयोर्द्वयोः, तथा सति संयोगवदेवानित्यत्वं स्यादिति वैशेषिकमतमाशङ्कते–**आधाराधेयेति**, आधाराधेयभेदेन समवायस्य भेदे द्विवृत्तित्वात् संयोगो यथाऽनित्यस्तथाऽयमपि स्यादिति पूर्वपक्षं विधाय प्रशान्तमतिराह नैव भेदः समवायस्य, बहूनामेकत्वाभ्युपगमेन संयोगवैधर्म्यान्नानित्यत्वमिति भावः । अनेनाप्यभ्युपगमेन सङ्करप्रसङ्गो दुर्वार इत्याचार्य आह **आचार्य इति । सामान्येनेति** सम्बन्धविशेषेण सामान्यतः प्रतिनियतपदार्थानां प्रतिनियतधर्मिषु प्रसिद्धौ सत्यां विशिष्य पदार्थानां लक्षणाद्यभिधानं भवेत्, सा च प्रसिद्धिर्नास्ति तव मते बहूनां समवायाङ्गीकारेणाधेयानां सर्वेषां निखिलेषु अधिकरणेषु वृत्तिविशेषणसम्बन्धप्रयुक्ताभिधानानां द्रव्यगुणकर्मादीनां सर्वाभिधानाभिधेयप्रसङ्गतः साङ्कर्यात् कथं प्रतिनियतानि लक्षणानि भवेयुः, अतो लक्षणव्यवस्थाभावात् षट् पदार्था इति व्यवस्था न स्यादिति भावः । न च समवायोऽस्त्येवेति कथं षट्पदार्थनिवृत्तिरित्यत्राह **तन्निवृत्ताविति,** द्रव्यादिपञ्चपदार्थनिवृत्तौ समवायाश्रयाभावात् समवायोऽपि नास्ति, तस्मात्तन्नित्यत्वादिशङ्कापि निराधारेति भावः । नन्विहबुद्धिज्ञाप्यो हि समवायः, इहबुद्धिश्च प्रतिनियता दृश्यते तदनुपपत्त्या कल्प्यमानो हि समवाय एको वा स्यादनेको वा तदविरोधेनैव कल्पनीयः, नहि प्रमाणं यादृशं प्रमेयं तद्विरुद्धं नाम, इहबुद्धिश्च द्रव्यं गुणकर्मसामान्याधारतयैव विषयीकरोति न तु गुणत्वकर्मत्वाद्याधारतया द्रव्यत्वानाधारतया वा, गुणकर्मसामान्यानि च द्रव्याधेयतयैव विषयीकरोतीत्याधाराधेयनियमात् समवायस्य बहूनां सम्बन्धत्वेऽपि न सङ्कर इति वैशेषिकाशङ्कां दर्शयति–**यदुत्तरमुक्तमिति** । तदेवमाधाराधेयनियमात् सङ्करानुपपत्तेः न समवायस्य द्विवृत्तिसम्बन्धत्वम्, संयोगवदनित्यत्वप्रसङ्गादपि तु एक एवेति आशयं वैशेषिकस्य सूचयति–**सर्वत्र चैक इति** । अत्र वैशेषिको ननु समवायो यद्येकः तदा द्रव्यत्वादीनां सङ्करप्रसङ्गः गुणत्वादिसमवायस्य द्रव्ये सम्भवादित्याशङ्क्याधाराधेयनियमादेवासङ्करः, यद्यपि द्रव्यत्वगुणत्वकर्मत्वसमवाय एकः तथापि तेषां न द्रव्यमाधारः, तत्र तेषामप्रतीतेः, द्रव्येष्वेव हि द्रव्यत्वं प्रतीयते गुणेष्वेव गुणत्वं कर्मस्वेव कर्मत्वं नान्यत्रेत्यन्वयव्यतिरेकदर्शनादेव नियमः, यथा कुण्डदध्नोः संयोगाविशेषेऽपि कुण्डमेवाधारो न दधीत्याश्रयाश्रयिभावनियमः इति ज्ञाप्यज्ञापकसामर्थ्यविशेषादेवात्रापि नियम उपपद्यत इत्याह तदेतन्मतमेवात्र सङ्क्षेपतो निबध्नाति–**यत्तूच्यत इति** । नियमोऽतिप्रसङ्गाभावश्चान्वयव्यतिरेकाभ्याम्, अन्वयः–इहज्ञानस्य सर्वत्राविशेषः, तेनैकसमवायसिद्धिः,

१ डे. न तु द्वयोरि० ।

**गाद्वैधर्म्यमुच्यते सर्वत्रैव च द्रव्यद्रव्यत्वादिसमवाये द्विवृत्तित्वं त्वयैवोपवर्ण्यते, द्वयविशिष्टाभिधानप्रत्ययत्वात् कुण्डदध्यादिसंयोगवत्, यथा कुण्डदध्नोः संयोगे दध्ना कुण्डेन वा विशिष्टे तन्निमित्तमभिधानं प्रत्ययश्च दृश्यते तद्द्विवृत्तित्वञ्च तथा समवायेऽपि द्रव्यगुणयोः विशिष्टे तन्निमित्तमभिधानं प्रत्ययश्च स्यात् तद्द्विवृत्तित्वञ्च, तथा च समवायस्य संयोगवत् द्विवृत्तित्वादनित्यतैव ।**

**यत्तूच्यतेऽवगम्यतां तावदित्यादि,** इदं तस्य दोषपरिहारप्राणसर्वस्वमन्वयव्यतिरेकाभ्यां नियमातिप्रसङ्ग[ा]भावगतं गतार्थं यावत् समवायैकत्वेऽप्याधाराधेयनियमः स्यादिति, आचार्य आह—इदमपीत्यादि, स्ववादेनैवोत्तरमार्गो विहितोऽस्य त्वया—इहेदमित्यादिना समवायलक्षणं व्याचक्षाणेनाधाराधेयसम्बन्धज्ञानलक्षणत्वात् कार्यकारणयोश्चाधाराधेयभावसम्बन्धिनोः कुण्डदधिदृष्टान्तेन च सुभावितोऽयमर्थः, तेनैव वयं ब्रूमः—न तु तथेत्यादि, न तु तथा सङ्कराभावो घटते उक्तप्रकारेण, कुण्डदधिसंयोगदृष्टान्ते यदि दधिमधु[द]कादिभिः बहुभिराधेयैः कुण्डाधारः संयुक्तो भवति ततः किमिति सङ्करो नास्ति ? तथा यदि सर्वात्मकः समवायो द्रव्यगुणकर्मद्रव्यत्वगुणत्वकर्मत्वसत्ताद्याधार एक एव भवति तदा किमिति संकरो न स्यात् ? नापि च द्विवृत्तित्वनिवृत्तिः समवायस्य, यतः संयोगाद्वैधर्म्यमुच्यते त्वया द्वयोर्द्वयोरित्यादिना, तत्र साधनं सर्वत्रैव च द्रव्यद्रव्यत्वादिसमवाये द्विवृत्तित्वं त्वयैवोपवर्ण्यते, साधयामश्चैतद्द्विवृत्तित्वं सम्बन्धे द्वयविशिष्टाभिधानप्रत्ययत्वात्, कुण्डदध्यादिसंयोगवत्, यथा कुण्डदध्नोः संयोगे विशिष्टे तन्निमित्तमभिधानं प्रत्ययश्च दृश्यते दधिकुण्डं कुण्डदधि वेति तद्द्विवृत्तित्वञ्च तथा समवायेऽपि द्रव्यगुणयोरित्यादिद्विवृत्तित्ववर्णनम्, तस्मात्त्वत्पूर्वपक्षितदोषासङ्गस्तदवस्थः समवायस्येत्यत आह—तथा चेत्यादि यावदनित्यतैवेति गतार्थम् ।

व्यतिरेकः–द्रव्यत्वादिनिमित्तानां गुणादावभावः । इदमेवोक्तदोषपरिहारप्राणसर्वस्वं तव पूर्वपक्षे इति दर्शयति–**इदं तस्येति** । उत्तरयति–**इदमपीति** । **इहेदमित्यादिनेति,** इहेदमिति यतः कार्यकारणयोः स समवाय इति सूत्रम्, कार्यकारणयोरित्यनेनाकार्यकारणयोरपि ग्रहणम्, असम्बद्धयोरविद्यमानत्वमयुतसिद्धिः, तत्र, इह कुण्डे दधि, इह कुण्डे बदराणीतिवत् इह तन्तुषु पटः इह वीरणेषु कटः, इह द्रव्ये गुणः कर्म वा इह गवि गोत्वमितीहबुद्धिरुत्पद्यते, सेयं तन्त्वादिपटादेरिव सम्बन्धमन्तरेण नोत्पत्तुमर्हति, तस्मात् प्रतिनियताधिकरणतयैव समवायोऽनुमीयत इति त्वदीयव्याख्यानेनैवोत्तरं विधातुं मार्गो विहित इति भावः । कुण्डदधिदृष्टान्तेनाधाराधेयनियमः एकसमवायत्वे य उच्यते तत्रोक्तप्रकारेण घटते तेन च सङ्करो दुर्वार एव, न ह्यनेकनिरूपितत्वे समवायस्य प्रसक्तसङ्करदोषव्यावर्तनायाधाराधेयनियमं साधयितुं द्विनिरूपितसंयोगदृष्टान्तो घटते, अनेकनिरूपितविषयः सङ्करदोषवियुतश्च यदि दृष्टान्तः स्यात्, स्यात्तदाधाराधेयनियमतः सङ्करदोषाभावः, तथा तु नास्तीत्याशयेनाह–**न तु तथेति,** अनेकनिरूपितसंयोगसम्भावनया सङ्करमाह–**यदीति** । न वा समवायस्य द्विवृत्तित्वनिवृत्तिः घटते संयोगवैधर्म्येण, द्वयोर्द्वयोरेव विशिष्टाभिधानप्रत्ययदर्शनात्, तथा त्वयाऽपि तत्र तत्र द्वयोरेव समवायप्रदर्शनाच्चेत्याह–**नापि चेति** । द्विवृत्तित्वं समवायस्य साधयाम इत्याह–**साधयामश्चेति,** यत्त्वया समवायस्य द्विवृत्तित्वमुपवर्ण्यते तदेव वयं समवाये साधयाम इत्यर्थः । दृष्टान्तदार्ष्टान्तिकयोर्हेतुसाध्ये घटयति–**यथेति** । एवञ्च द्विवृत्तित्वसिद्धौ संयोगदृष्टान्तेन तस्याप्यनित्यत्वमित्याह–**तथा चेति** । अथ समवायस्यैकत्वेऽपि द्रव्यत्वगुणत्वादीनां विशेषणानामाधेयानां महिम्नैवाधाराणां द्रव्यादीनां नियमो भवति, उत्पद्यते हि स्वतत्त्वा-

१ सि. क्ष. °भ्यामनि° । २ सि. डे. °यित्वात्मेषाधारा° । ३ सि. क्ष. °भावाः स° । ४ सि. क्ष. यदसर्वा° । ५ सि. क्ष. सर्वत्रवावद्रव्य° ।

यस्त्विदं स्वतस्त्वानुरूपप्रत्ययोत्पत्तेः परस्परव्यतिरिक्तैराधेयैर्द्रव्यत्वादिभिराधाराणां द्रव्यादीनां नियमनं द्रव्येष्वेव द्रव्यमिति ज्ञानमित्यादि, अनेन स्वपक्षे प्रत्यक्षविरोध उद्भाव्यते त्वया, न हि समवायस्यैकत्वे व्यतिरेको नियमश्चास्ति, अविशिष्टत्वादतो न स्यात् द्रव्येष्वेव द्रव्यमिति ज्ञानम्–एवं ते द्रव्येष्वपि गुणज्ञानं स्यात्, गुणज्ञानकारणत्वात् समवायस्य, गुणवत्, एकत्वे योऽयं द्रव्यस्य द्रव्यभावेन सम्बन्धः स एव गुणस्यापीति प्राप्तं द्रव्यस्यापि गुणत्वम्, तस्य गुणभावेन सम्बद्धत्वाद्गुणवत् द्रव्यभावनिवृत्तिरिति । तस्य द्रव्यस्य गुणभावेन सम्बद्धत्वाद्गुणभूतस्य गुणानाश्रयस्याभावः, असति द्रव्ये कस्य गुण इति गुणभावनिवृत्तिः तल्लक्षणानुपपत्तेः क्रियावद्गुणवत्समवायिकारणमिति द्रव्यलक्षणम् द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणमिति, ततश्च गुणेष्वपि द्रव्यज्ञानं स्यात् किं कारणम्? द्रव्यज्ञानकारणत्वात् समवायस्य, द्रव्यवत्, एकत्वे योऽयं गुणस्य गुणभावेन सम्बन्धः स एव द्रव्यस्यापीति प्राप्तं गुणस्यापि द्रव्यत्वम्, द्रव्यत्वाभिसम्बन्धाच्च तस्य द्रव्यत्वापत्तिर्गुणत्वत्यागश्च द्वे अनवस्थाने ।

यस्त्विदमित्यादि परोक्तमेव ग्रन्थमतिदिशति यावज्ज्ञानमित्यादि, द्रव्यादीनामाधाराणां द्रव्यत्वादिभिराधेयैः परस्परव्यतिरिक्तैर्विशेषणैर्नियमो भवति, स्वतत्त्वानुरूपप्रत्ययोत्पत्तेरिति, अत्रोच्यते–अनेन स्वपक्षे प्रत्यक्षविरोधः उद्भाव्यते त्वया, कथम्? न हीत्यादिना भावयति, हिशब्दो हेत्वर्थे, यस्मात् समवायः एकः तस्माद्द्रव्यादेः द्रव्यत्वादिभिरविशिष्टत्वात् व्यतिरेको नियमश्च नास्ति, अतो द्रव्येष्वेव द्रव्यमिति ज्ञानं न स्यात्, तस्य व्याख्या एवमित्यादि–एवं ते समवायैकत्वे द्रव्येष्वपि गुणज्ञानं स्यादविशिष्टत्वात्, गुणेष्विव, अपिशब्दात् कर्मस्वपि, किं कारणम्? गुणज्ञानकारणत्वात् समवायस्य, किमिव? गुणवदिति, गुणेष्विव गुणवदिति साधनं, तदेव व्याचष्टे–एकत्वे योऽयमित्यादि यावत् द्रव्यस्यापि गुणत्वम्, यदि दधिमधूदकादीनां कुण्डसङ्कीर्णानामविवेके नियमेनायमस्यैव स्वभाव इत्यशक्यमवधारयितुं

नुरूप एव प्रत्ययो द्रव्यमिदं न गुणः न कर्म वा, गुणोऽयं न द्रव्यं न कर्म वेत्यादीति शङ्कते–**यस्त्विदमिति** । तदेव व्याचष्टे–**परोक्तमेवेति,** वैशेषिकोक्तमेवेत्यर्थः, सद्रूपतया पदार्थाविशेषेऽपि विलक्षणनिमित्तमापेक्ष्यविलक्षणप्रत्यया अविसंवादिनः अनुभूयन्त इति यं विशेषमवलम्ब्य पदार्थे इदं द्रव्यं अयं गुण इदं कर्मेत्यादिविलक्षणविशिष्टबुद्धयो भवन्ति ता. विशेषणीभूतधर्मनिमित्ता इति अविशिष्टमपि विशेष्यं द्रव्यत्वादयो विशेषणभूता धर्मा द्रव्यमिदं गुणोऽयं कर्मेदमित्येवं नियमयति सम्बन्धस्यैकत्वेऽपीति भावार्थः । तदेवं प्रतिपादनमेव स्वसिद्धान्ते प्रत्यक्षविरोधमुद्भावयति, न हि सम्बन्धस्यैकत्वे न सर्वत्र सत्त्वे सम्बन्धिनोऽसत्त्वं सम्भवति, तथा च द्रव्यत्वस्यापि सर्वत्र सत्त्वात्, क्व तस्यासत्त्वम् यत स्वसम्बन्धादाधारं ततो नियमयेत्, तन्नियतत्वाच्च विलक्षणा प्रतीतिर्भवेत्, तथा तु नास्ति, अतो द्रव्यत्वसमवायस्य सर्वत्र सत्त्वेन इदमेव द्रव्यं नेदमिति विशिष्टं ज्ञानं नैव स्यादित्याशयेनाह–**अनेन स्वपक्ष इति,** अविशिष्टत्वात्–सर्ववस्तुसाधारणत्वात् सर्वत्र द्रव्यत्वबुद्धिः स्यात्, न तु द्रव्य–एवेति भावः । अन्यज्ञानमापादयितुं व्याचष्टे–**एवं त इति** द्रव्येऽपि गुणज्ञानं स्यात्, यथा गुणेषु गुणज्ञानं भवति, तन्निमित्तं हि गुणत्वं तत्समवायश्च द्रव्येऽप्यस्ति, समवायस्यैकत्वादिति भावः । हेतुमाह–**गुणज्ञानकारणत्वादिति,** गुणविषयकज्ञानकारणसमवायस्य गुणेष्विव द्रव्यादिष्वपि सत्त्वादिति भावः । गुणज्ञानकारणत्वं समवाये भवतु नाम तेन द्रव्यस्य किमित्यत्राह–**एकत्व इति,**

---

१ सि. क्ष. येस्त्विद० । २ सि. क्ष. डे. °व्यादिद्र० । ३ सि. क्ष. डे. महुणेष्विव ।

संयोगे, दधिकुण्डमेव मधुकुण्डमेवोदककुण्डमेवेति, एकत्वात् संयोगस्य सर्वेणापि सम्बन्धात् तथात्रापि यो द्रव्यभावेन सम्बन्धः स एव गुणस्यापीत्येतस्मात् कारणात् प्राप्तं गुणत्वं–द्रव्यस्यापि गुणभावः, द्रव्यं गुणो भवतीत्यर्थः, गुणत्वाभिसम्बन्धाच्च तस्य द्रव्यभावहानिः, एवं गुणभावापत्तौ द्रव्यभावो हीयत इति पररूपतामापाद्य स्वरूपत्यागमापादयति, तस्येत्यादि व्याख्यानसाधनं यावन्निवृत्तिः, द्रव्यं गुणभावेन सम्बद्धत्वात् त्यक्तद्रव्यभावं गुणवदिति एवं तावद्द्रव्यस्य गुणत्वापत्तिर्द्रव्य[त्व]त्यागश्च[द्वे अ]नवस्थाने, तस्य द्रव्यस्येत्यादि, तद्द्रव्यं गुणभावेन सम्बद्धमतो गुणभूतं नाश्रयो गुणान्तरस्येति द्रव्यानाश्रितस्य च गुणस्याभावस्ततो गुणानाश्रयस्य द्रव्यस्याप्यभावः, तदभावादसति द्रव्ये कस्य गुण इति गुणभावनिवृत्तिर्गुणस्य, तल्लक्षणानुपपत्तेः, क्रियावदित्यादिसूत्रद्वयेन लक्षणं दर्शयति, ततश्चेत्याद्युद्दिष्टार्थोपनयः, किं कारणमित्यादि कारणप्रश्नपूर्वके पूर्ववदत्रापि द्रव्यत्वापत्तिगुणत्वत्यागौ द्वे अ[न]वस्थाने।

तथा—

**योऽयं गुणस्य कर्मत्वेन सम्बन्धः स एव द्रव्यस्यापीति प्राप्तं गुणस्य कर्मणश्च द्रव्यत्वम्, द्रव्यत्वाभिसम्बन्धाच्च तयोर्द्रव्यत्वापत्तिः गुणकर्मभावत्यागश्च, तस्य द्रव्यस्य गुणभावेन कर्मभावेन च सम्बद्धत्वात् गुणभूतस्य कर्मभूतस्य च गुणक्रियानाश्रयस्याभावः, असति द्रव्ये कस्य गुणः कर्म वेति न गुणकर्मणी तथा लक्षणे, तयोरलक्षणत्वादसत्त्वात् आश्रयोपलक्ष्यद्रव्याभावः, तस्मिंश्चासति निराश्रययोर्गुणकर्मणोरभावाद्द्रव्यस्य चाभावादाश्रयिणां द्रव्यत्वादीनामप्यभावः, तथा कार्यकारणयोः............गुणस्येत्यादिः।**

**योऽयं गुणस्य कर्मत्वेनेत्यादि** कर्मणा सह पररूपापत्तिः स्वरूपत्यागश्च द्वे अनवस्थाने लक्षण[ा]योगद्वारेण सव्याख्याने गतार्थे यावन्न गुणकर्मणी तथा लक्षणे इति लक्षणाभावापादनम्, तयो[र]लक्षणत्वादसत्त्वात्-तयोर्गुणकर्मणोरलक्षणत्वात् असत्त्वं खपुष्पवत्, तदसत्त्वादाश्रयोपलक्ष्य-

कुण्डगतानां दधिमधूदकादीनां संयोगस्यैकत्वे यथाऽयमेवायं संयोग इति नियमयितुं न शक्यते दधिमध्वादीनां मिश्रीभावापन्नत्वेन विवेचयितुमशक्यत्वात्, तदशक्त्या दधिकुण्डमेवेदं मधुकुण्डमेवेदमिति न नियमः तथैवायं समवायो द्रव्यस्यैव न गुणादेरिति नियमासम्भवात् द्रव्यसमवाय एव गुणसमवाय इति कृत्वा तत्सम्बन्धाद्द्रव्यस्य गुणत्वात् द्रव्यत्वं निवर्तत एवेति पररूपतापत्तिरिति भावः। एवं पररूपापत्तौ स्वरूपस्य त्याग इत्याह-**गुणत्वाभिसम्बन्धाच्चेति**। एवं तावत् द्रव्यस्य गुणत्वापत्तिरेकमनवस्थानम्, द्रव्यत्वत्यागश्चापरमित्यनवस्थानद्वयमापादितमित्याह-**एवं तावदिति**। प्रोक्तविधयैव गुणस्यापि द्वे अनवस्थाने दर्शयति-**तस्य द्रव्यस्येति**। व्याचष्टे-**तद्द्रव्यमिति,** समवायस्यैकत्वात् द्रव्यं गुणत्वेन सम्बद्धं सत् गुणात्मकमतो गुणानामनाश्रयत्वान्न तदस्ति, तदभावे गुणोऽनाश्रितः, ततश्च द्रव्याश्रय्यगुणवान् इत्यादिगुणलक्षणानुपपत्तेः गुणाभावः, एवञ्च गुणेषु गुणज्ञानं न स्यात्, द्रव्यमित्येव तु ज्ञानं स्यात्, द्रव्यज्ञानहेतोः समवायस्य द्रव्य इव गुणेष्वप्यविशिष्टत्वात्, एकत्वे हि समवायस्य य एव गुणत्वसमवायः गुणेऽस्ति स एव द्रव्यत्वस्यापि समवाय इति गुणेषु द्रव्यज्ञानकारणसमवायसत्त्वात् द्रव्यत्वं प्राप्तम्, तथा च सम्बन्धसत्त्वाद्द्रव्यत्वापत्तिर्गुणानां गुणत्वत्यागश्चेति गुणाश्रये द्वे अनवस्थाने भवत इति भावः। एवं द्रव्यस्य कर्मत्वापत्तिर्द्रव्यत्वत्यागश्च कर्मणश्च द्रव्यत्वापत्तिः कर्मत्वत्यागश्चोक्तवदेव भाव्यः, तदेवमेकैकधर्मापादानद्वारेणाव्यवस्थानमुपदर्श्य धर्मद्वयसंयोगेनाव्यवस्थामाख्याति-**योऽयमिति**। व्याचष्टे-**कर्मणा सहेति,** कर्मणा सह गुणस्य द्रव्यत्वापत्तिः गुणकर्मभावत्यागश्चेत्यर्थः, कर्मत्वसमवायस्य द्रव्यवत् गुणेऽपि सत्त्वात् योऽयं गुणस्य कर्मत्वेन सम्बन्धः स एव द्रव्यस्यापीत्यापादनमत्र बोध्यम्, शिष्टं सर्वं पूर्ववदविशिष्टम्, अतोऽतिदिशति-**लक्षणायोगद्वारेणेति**। **आश्रयेति** आश्रयो द्रव्यम्, आश्रयिणी गुणकर्मणी तथोपलक्ष्यं

१ सि. क्ष. द्रव्यमगा०। २ सि. क्ष. संस्थाने।

द्रव्याभावः—गुणकर्मणोरुपलक्षणयोराश्रयिणोरभावाद्वाऽऽश्रयो द्रव्यं नास्ति, औष्ण्याभावेऽग्न्यभाववत्, उपलक्षणाभावात् खपुष्पवद्वा, तस्मिंश्चासति द्रव्ये निराश्रययोर्गुणकर्मणोरभावाद्द्रव्यस्य चाभावादाश्रयिणां द्रव्यत्वादीनामप्यभावः, उक्तं हि 'उत्पन्नमाश्रयमाश्रयन्त्याश्रयिणः' (वैशे०) इति, एवमेतानि द्विकसंयोगेन द्रव्य[स्य]गुणेन सह, कर्मणा च द्वे, गुणस्य द्रव्येण कर्मणा च सह द्वे कर्मणो द्रव्येण गुणेन च सह द्वे इति षट् चक्राणि, द्रव्यत्वेन गुणस्य कर्मणश्च द्वे, गुणत्वेन द्रव्यस्य कर्मणश्च द्वे, कर्मत्वेन द्रव्यस्य गुणस्य द्वे इति षट्, एवं द्वादशचक्राणि, एवं द्रव्यत्वस्य कर्मणा गुणेन च, गुणत्वस्य द्रव्येण कर्मणा च, कर्मत्वस्य द्रव्येण गुणेन च षट् चक्राणि, द्रव्यस्य गुणत्वेन कर्मत्वेन च, गुणस्य द्रव्यत्वेन कर्मत्वेन च, कर्मणो द्रव्यत्वेन गुणत्वेन च षट् तान्यपि द्वादश, एवं द्विकसंयोगेन चतुर्विंशतिरनवस्थाचक्राणि भवन्ति। कस्मात् ? तथा कार्यकारणयोरित्यादि यावद्गुणस्येत्यादिरिति हेतुं व्याख्यातमेवोपनयति ।

आह—

**ननु सर्वगतत्वात् समवायस्य स्वतत्त्वेनापि सम्बन्धात् द्रव्यभावः गुणभावः कर्मभावो वा सिद्ध्यतीत्यत्रोच्यते, नन्वत एव सङ्कर उच्यते, परतत्त्वेनापि सम्बन्धादतत्त्वमपीति सङ्करदोषाविमोक्षः, एवञ्च स्वविषयसर्वगतानि हि तत्त्वानि, समवायस्य सर्वगतत्वे तान्यधुना सर्वगतानि प्राप्तानीत्यभ्युपगमविरोधः, अतो द्रव्यगुणकर्मणां व्यवस्थितानामभावात् कथं द्रव्येषु द्रव्यज्ञानं ? गुणेषु गुणज्ञानं ? कर्मसु कर्मज्ञानमिति ।**

**ननु सर्वगतत्वादित्यादि**[1], समवायस्य सर्वगतत्वात् स्वतत्त्वेनापि सम्बन्धोऽस्ति, द्रव्यस्य द्रव्यत्वं स्वतत्त्वम्, एवं शेषयोरपि शेषद्वयम्, सर्वेण सह समवायसद्भावात् स्वेनापि तत्त्वेन सम्बन्धात्, तद्भावसूत्रं[2] सत्त्वम् [?] द्रव्यभावो गुणभावः कर्मभावो वा सिद्ध्यतीत्यत्रोच्यते—नन्वत एव सङ्कर उच्यते, परतत्त्वेनापि सम्बन्धात्, अतत्त्वमपीति, इति[शब्दो]हेत्वर्थे, यस्मात् परतत्त्वेनापि सम्बन्धः तस्मात्तद्भावोऽप्यतद्भावोऽपीति सङ्करदोषाविमोक्षः, अपिशब्देन त्वदुक्तेनैव समर्थितत्वात्, किञ्चान्यत् दोषोपचयश्च—एवञ्च स्वविषयेत्यादि, स्वविषयसर्वगतानि हि तत्त्वानीष्यन्ते, तत्समवायस्य सर्वगतैकत्वाभ्यां[3]

---

द्रव्यं उपलक्षणे गुणकर्मणीति तयोरभावे द्रव्यमपि नास्तीति भाव । आश्रय्यभावेन सदृष्टान्तं आश्रयाभावमाह—**आश्रयिणोरभावाद्वेति** । उपलक्षणाभावादुपलक्ष्याभावमाह—**उपलक्षणाभावादिति** । एवं द्विकसंयोगेन सम्भवीन्यनवस्थानानि दर्शयति—**एवमेतानीति** धर्मिणि धर्मिद्वयेन, धर्मिद्वये एकेन धर्मेण, एकस्मिन धर्मे धर्मिद्वयेन, एकस्मिन धर्मिणि धर्मद्वयेनाव्यवस्थानानि भवन्ति । ननु द्रव्यादौ गुणत्वादिसमवायवत द्रव्यत्वादिसम्बन्धोऽप्यस्ति, समवायस्य स्वाश्रयावयवादिपञ्चपदार्थवर्तित्वात, तस्मान्न द्रव्यभावादिनिवृत्तिरिति व्याचष्टे—**समवायस्येति** स्वाश्रययावद्वृत्तित्वात समवायस्येत्यर्थ, शेषयोरपि—गुणकर्मणोरपि गुणत्वं कर्मत्वं स्वतत्त्वमित्यर्थ । समाधत्ते—**नन्वत एवेति** स्वाश्रययावद्वृत्तित्वादेव स्वतत्त्वेन समवायसम्बन्धवत स्वेतरनिखिलतत्त्वैरपि सम्बन्धात् द्रव्यादे द्रव्यत्वादितत्त्ववदद्रव्यतत्त्वेनापि प्रसज्यत इति सङ्करो दुर्वार एवेति भाव । इदं परतत्त्वसम्बन्धनं स्वतत्त्वेनापि सम्बन्धादित्यत्रापिना त्वयैव प्रकटीकृतमित्याह—**अपिशब्देनेति**। दोषान्तरमाह—**किञ्चान्यदिति,** त्वन्मतं सामान्यं स्वविषयसर्वगतमिष्टम्, न तु सर्वसर्वगतम्, यत्सामान्यं यत्र वर्तते स स्वविषय, तज्जातीये सर्वस्मिन गतं स्वविषयसर्वगतम्, सर्वसर्वगतत्वन्तु स्वरूपतः सर्वदेशसम्बद्धत्वम्, समवायो यद्येकः सर्वगतश्च तदा तत्त्वानामपि सर्वगतत्वं प्रसक्तमिति स्वाभ्युपगमविरोधदोष इति भावः ।

---

1 सि. क्ष. °तत्वादित्यादि । 2 सि. क्ष. हे० तद्भावसूत्रं । 3 सि. क्ष. डे. सर्वगतैरवाभ्यां ।

तान्यधुना सर्वगतानि प्राप्तानि, ततोऽभ्युपगमविरोधो जायत इति, शेषपदार्थाभाव उच्यते—अतो द्रव्यगुणकर्मणामित्यादि प्राक्तन एव ग्रन्थो यावत् कर्मसु कर्मज्ञानमिति, तत्र व्यवस्थितलक्षणानामभावादिति लक्षणाभावद्वारेण निराकरणम्, इह तु व्यवस्थितानामभावादिति सह तत्त्वैर्लक्षणैश्च तेषां निराकृतत्वादिति विशेषः, आधेयज्ञानभेदनिमित्तनियमनिराकरणद्वारेण चेति।

**यदपि कुण्डदधिसंयोगवद्द्रव्यादीनामाधाराधेयनियम इत्युक्तं तदपि नैव, कुण्डदध्याधाराधेयभावसमवायानामप्येकत्वात् तदवस्थः सङ्करदोषः, यद्यसङ्करेण नियमेन वाऽर्थो वयमेव स्पष्टतरं ब्रूमः, समवायनिमित्तस्य तत्त्वस्य स्वत एवात्मप्रतिलम्भः, तयोश्च लोकसिद्धिवद्भेदः स्ववृत्तिप्रतिलम्भादेव, दधिकुण्डयोर्लोकसिद्धिवद्भेदाभावात् कारकशक्तित एव तु प्रतिपद्यते भेदसिद्धिः, तयोः संयोगैकत्वेऽप्याधारशक्तिः कुण्डस्य, आधेयशक्तिर्दध्न इत्यसङ्कीर्ण आधाराधेयनियम इति, अवश्यञ्चैतदेवं त्वयाऽपि प्रतिपत्तव्यं यथा त्वमेवात्र न समानत्वात् इत्युत्तरमात्थ, समवायस्यैकत्वेऽपि कारकशक्तेरेव नियमभेद इत्युत्तरमात्थ द्रव्यत्वादिसमवायो न सर्वत्र किन्तु कस्मिंश्चिदेवेति।**

**यदपीत्यादि**, यदपि परेणोक्तं यथा कुण्डदधिसंयोगे दध्येवाधेयं कुण्डमेवाधार इति नियमस्तथा द्रव्यमेवाधारो गुणकर्माण्येवाधेयम्, द्रव्यगुणकर्माण्येवाधारो द्रव्यत्वगुणत्वकर्मत्वान्येवाधेयानीति तदपि नैव, कुण्डदध्याधाराधेयभावसमवायानामप्येकत्वात्–तत्रापि त्वन्मतेनाधारयोः कुण्डदध्नोराधेययोश्च कुण्डत्वदधित्वयोस्तत्त्वयोः, द्रव्यत्वादीनाञ्च तत्त्वानां ये समवायास्तेषामप्येकत्वात् समयभेदोपचरितभेदानामाञ्जस्येनैकत्वात् पूर्वोक्तविधिना तदवस्थः सङ्करदोषः, यद्यसङ्करेण नियमेन वाऽर्थः वयमेव स्पष्टतरं ब्रूमः, तद्यथा–समवायनिमित्तस्येत्यादि–समवायस्य यन्निमित्तं तत्त्वं कुण्डदध्नोः कुण्डत्वं दधित्वञ्च तस्य स्वत

---

समवायस्यैकत्वं पदार्थाना द्रव्यादीना व्यवस्थालक्षणं तत्त्वैश्च न सम्भवतीत्यभावात कथं द्रव्येषु द्रव्यज्ञानं गुणेषु गुणज्ञानं कर्मसु कर्मज्ञानं स्यादित्याह-**अतो द्रव्यगुणकर्मणामिति** द्रव्यादीना लक्षणैस्तत्त्वैश्च व्यवस्थानाभावादित्यर्थ.। द्रव्यादीना पूर्वं निराकृताना पुनरत्र कथं निराकरणमित्यत्राह-**तत्रेति**, पूर्वत्रेत्यर्थ,–तयोर्गुणकर्मणोरित्यादिग्रन्थेन व्यवस्थितलक्षणाभावाद्द्रव्याद्यभाव उक्त, इह तु अनेन स्वपक्षे प्रत्यक्षविरोध उद्भाव्यत इत्यादिना ग्रन्थेन तत्त्वानवस्थाने लक्षणानुपपत्तिभिश्च द्रव्यादयो निराकृता:, एवमाधेयज्ञानभेदेन योऽस्य नियम तस्यापि निराकरणात ते निराकृता इत्यर्थ । अथ कुण्डदध्नो संयोगाविशेषेऽपि कुण्डमेवाधारो न दधीत्याश्रयाश्रयिभावनियमस्तथा व्यङ्ग्यव्यञ्जकशक्तिभेदाद्द्रव्यत्वादीनामाश्रयाश्रयिभावनियम, नहि द्रव्येण द्रव्यत्ववद् गुणत्वकर्मत्वाद्यप्यभिव्यज्यते, यथा घटप्रदीपयोर्व्यङ्ग्यव्यञ्जकशक्तिभेद इति पूर्वपक्षं दूषयति-**यदपीति** । व्याख्याति-**यथेति** स्पष्टा व्याख्या । दूषकं हेतुमाह-**कुण्डदध्याधारेति,** भवन्मते हि समवाय एक, तथा च कुण्डत्वदधित्वद्रव्यत्वादीनां समवायस्याविशेषात सर्वं कुण्डदधिद्रव्यादिकं वस्तुत एकमेव, भेदस्तु साकेतिक औपचारिक इति साङ्कर्यं दृष्टान्तेऽपि तदवस्थमेवेति कथमव्यवस्थितेन दृष्टान्तेन दार्ष्टान्तिकस्य व्यवस्था घटत इति भाव । यद्यसङ्करेण नियमेन वाऽस्ति प्रयोजन तर्हि वयं **ब्रूम** न त्वदुक्तविधिना स उपपद्यते, किन्तु तदित्थं विज्ञायतामित्याह-**यद्यसङ्करेणेति** । असङ्करं स्पष्टयति-**समवायस्येति,** यद्धि समवायस्य तत्त्वं सामान्यं दधित्वकुण्डत्वादिरूपं तत्स्वत एवात्मानं प्रतिलभते-स्वात्मानं दधिकुण्डादिरूपं प्रति प्राप्नोति, न तु समवायात, ते च कुण्डत्वदधित्वे लोकव्यवहारादेव भिन्ने, नर्थन्त तद्वृत्ते प्रतिलम्भादिति भाव । दधिकुण्डयोस्तु लोकेन यथा भेदो गृह्यते स्वत एव, न तु तत्त्वादिभि:, यथाऽऽकाशकालयोस्तत्त्वभेदाभावेऽपि स्वत एव भेदस्तथा भेदो भवतु, तात्त्विकस्तु भेदो नास्ति दधिकुण्डयोः संयोगपरिणामेनैकत्वात् भेदव्यवहारस्तु औपचारिक· कारकशक्तिभेदात्, एवञ्च धर्मस्य धर्मिणो वा स्वत

एवात्मप्रतिलम्भः, तयोश्च लोकसिद्धिवद्भेदः स्ववृत्तिप्रतिलम्भादेव, त्वन्मतेऽप्याकाशकालयोरिव दधिकुण्डयोर्लोकेन प्रतिपन्नो भेदो नार्थान्तरात्, सत्त्वात् ततो वयमपि लोकविरुद्धं मा वोचामेति लोकसिद्धिवद् भेदाभावात् कारकशक्तित एव तु प्रतिपद्यते भेदसिद्धि[ः]संयोगपरिणामकृतं सदप्यैक्यमनादृत्य, तयोः संयोगैकत्वेऽप्यधारशक्तिः कुण्डस्याधेयशक्तिर्दध्न इति नियममसङ्कीर्णमाचक्ष्महे, अस्यार्थस्य भावनाग्रन्थो गतार्थो यावदाधाराधेयनियम इति, अवश्यं चैतदेवं त्वया समवायमपि कल्पयित्वा एतदेव प्रतिपत्तव्यं त्वद्वचनप्रामाण्यादेव, यथा त्वमेवात्रेति, संयोगैकत्वेऽपि कारकशक्तित एव कुण्डदध्नोराधाराधेयनियमो भिन्न इत्युत्तरमात्थ, किं तदुत्तरमिति चेदुच्यते न समानत्वादिति, तथेहापि समानमुत्तरं समवायैकत्वेऽपि कारकशक्तेरेव नियमभेदः, तद्व्याख्या गतार्था यावत् कस्मिंश्चिदेवेति ।

**यत्तूच्यते व्यंग्यव्यञ्जकत्वभेदाद्द्रव्यद्रव्यत्वादीनां भेदो घटप्रदीपवत् सम्बन्धैकत्वेऽपीति न सङ्करप्रसङ्ग इति, एतच्च व्यंग्यव्यञ्जकत्वं द्रव्यद्रव्यत्वादेस्तदा स्याद्यदि प्रदीपघटदृष्टान्तवत् पृथक् सिद्धं स्यात् न तु तदात्मभेदनियमः, सिद्धे हि तदाधाराधेयभेदनियमोऽपि स्यात्, ततो न दृष्टान्तसाधर्म्यं भजत एतदिति नासङ्करः स्यादेवम् समवायस्यैकत्वेन व्यतिरेकनियमयोरभावात् तथा यदि य एव गुणकर्मभावाभ्यां सम्बन्धः स एव द्रव्यस्यापीति प्राप्तं गुणकर्मणोरपि द्रव्यत्वम् द्रव्यत्वाभिसम्बन्धाच्च तयोर्गुणकर्मभावविनिवृत्तिरिति सर्वं प्रपञ्चनीयं यथास्वार्थमिति ।**

**यत्तूच्यते व्यङ्ग्यव्यञ्जकेत्यादि,** व्यङ्ग्यव्यञ्जकत्वभेदाद् द्रव्यद्रव्यत्वादीनां भेदो घटप्रदीपवदिति परिहारान्तरं गतार्थं यावन्न सङ्करप्रसङ्ग इति वैशेषिकस्य, आचार्यवचनन्तु एतच्च व्यङ्ग्यव्यञ्जकेत्यादि, स्यादेतदेवं यदि दार्ष्टान्तिकस्य [द्रव्य]द्रव्यत्वादेर्व्यङ्ग्यव्यञ्जकभावः प्रदीपघटदृष्टान्तवत् पृथक् सिद्धः स्यात्, न तु तदात्मभेदनियमः, सिद्धे हि तदाधाराधेयभेदनियमोऽपि स्यात्, तदर्थोद्भावनं

एवात्मप्रतिलम्भात् स्ववृत्तिप्रतिलम्भाच्च धर्मान्तरसम्बन्धान्तरानपेक्षतयाऽऽधाराधेययोरसङ्कीर्णो नियम उपपद्यत इत्याशयेनाह–**दधिकुण्डयोरिति,** दधिकुण्डयोर्यद्यपि संयोगपरिणामकृतमैक्यमस्ति तथापि लोकविरुद्धं मा वोचामेति तदनादृत्य कारकशक्तिकृतभेदाभिप्रायेण लोकसिद्धिवद्भेद इत्युक्तमिति वक्ति **ततो वयमपीति** । कारकशक्तित एव भवद्भिरपि समवायमभ्युपेत्यापि संयोगस्याविशिष्टत्वादाधाराधेयभावनियमोऽभ्युपेयः, तथा च समवायव्यतिरेकेणापि कारकशक्तित एवाधाराधेयनियमसिद्धेः किं समवायेनेत्याशयेनाह–**अवश्यञ्चैतदेवमिति** । तदेतदुत्तरं ग्रन्थकारो दर्शयति–**यथा त्वमेवात्रेति,** एवञ्च कारकशक्तित एव निर्वाहे समवायकल्पना निरर्थिकेति भावार्थः । समवायस्यैकत्वे सङ्करप्रसङ्गे उद्भाविते वैशेषिकेण संयोगैकत्वे आधाराधेयनियमाभाव आपादितः, कारकशक्तितश्चाधाराधेयनियमे प्रतिपादिते च वैशेषिकोऽपि तथैव नियममुपपादयिष्यन्नाह–**न समानत्वादिति ।** अथ संयोगस्यैकत्वेऽपि यथा कुण्डदध्नोराश्रयाश्रयिभावनियमः शक्तिनियमात् तथा समवायस्यैकत्वेऽपि द्रव्यत्वादीनामाश्रयाश्रयिभावनियमो व्यङ्ग्यव्यञ्जकशक्तिभेदात्, घटप्रदीपवत्, नात्र पदार्थसङ्करप्रसङ्ग इति यदुक्तं तन्निरसितुमाह **यत्तूच्यत इति** । व्यक्तिशक्तिनियमान्न सङ्कर इति दर्शयति **व्यङ्ग्येति,** द्रव्यत्वाद्यभिव्यञ्जिका शक्तिर्द्रव्यादावेव, व्यङ्ग्या च शक्तिर्द्रव्यत्वादावेवेति नियमः, यथा प्रदीप एव व्यञ्जको घट एव व्यङ्ग्य इति तयोर्द्रव्यद्रव्यत्वयोर्भेद इति न सङ्कर इति भावः । समाधत्ते–**आचार्यवचनन्त्विति** ननु प्रदीपो घटश्च पृथक् पृथक् सिद्धोऽतः तयोर्व्यङ्ग्यव्यञ्जकभावनियमः स्यात्, द्रव्यं द्रव्यत्वञ्च न पृथक् सिद्धम्, स्वस्वात्मरूपत्वात्

1 सि. क्ष. °विरुद्धमावोचामिति ।

यावदसङ्करः स्यादेवमिति, तस्य हेतोरसिद्धिप्रतिपादनार्थञ्चाह—समवायस्येत्यादि, उक्तोत्तरमेवैतदाधाराधेयभेदनियमाभावस्य तुल्यत्वात् दृष्टान्तसाधर्म्यं न भजत एतदिति प्राग्विस्तरेण व्याख्यातार्थत्वात्, तदेवं स्मारयति—तथा यदि य एवेत्यादि यावद्गुणकर्मभावविनिवृत्तिरिति सर्वं—सर्वविकल्पं प्रपञ्चनीयमिति पूर्वोक्तार्थातिदेशः, आ-कुतः ? इति चेदुच्यते—अस्माद्ग्रन्थावधेः यथास्वार्थमिति—यो यः स्वार्थो यथास्वार्थं द्रव्यगुणकर्मद्रव्यत्वगुणत्वकर्मत्वसंयोगाव्यवस्थानचक्रकाण्येव व्याख्येयानि पूर्ववदिति ।

**यत्पुनरिदमाशङ्कितं समवायैकत्वं पञ्चत्वव्यवहारेण विरुध्यत इति तदेवमेव ममापि प्रतिभाति यत्पुनरिदं प्रत्युच्यते, न आश्रयविशेषात्, भाववत्, जलचन्द्रवच्च तथा समवायस्यैकत्वेऽप्याश्रयाणां नानात्वादुपचारेण नानात्वव्यवहारो भविष्यतीति, इदं निर्मूलमेव, व्यङ्ग्यस्याऽऽधेयनियमादाश्रय एवासिद्धेः कुतस्तद्व्यङ्ग्यो व्यञ्जको वाऽऽधेयोऽर्थः ? कुतो वाऽऽश्रयाणां वैचित्र्यम् ? समवायैकत्वे षट्पदार्थनिवृत्तेः सुभावितत्वात्, अजलचन्द्रवदेकत्वात्, समवायस्य भावस्य च जलचन्द्रेण साधर्म्याभावात्कुतो नानात्वोपचारः ? छायामात्रत्वाच्च जलचन्द्रस्य, भावो वा कुत इत्यलमतिविकासिन्या सङ्कथया ।**

**यत्पुनरिदमाशङ्कितमित्यादि,** समवायैकत्वं पञ्चत्वव्यवहारेण विरुध्यत इति यदाशङ्कितं त्वया तदेवमेव ममापि प्रतिभाति विरुध्यत एवेति, यत्पुनरिदं प्रत्युच्यते—तस्याशङ्कितस्योत्तरं वैशेषिकेण, न, आश्रयविशेषात्, भाववदित्यादि, द्रव्यादिसद्भावत्रयं दृष्टान्तः, प्रतिदृष्टान्तश्च जलचन्द्रः, तथा समवायस्यैकत्वेऽपीत्यादिर्दार्ष्टान्तिकं गतार्थं यावद् भविष्यतीति, अस्योत्तरमाहाचार्यः—इदं निर्मूलमेव व्यङ्ग्यस्याऽऽधेयनियमात् पूर्वोक्तादाश्रय एवासिद्धो व्यञ्जको व्यङ्ग्यो वा त्वदिष्टः, कुतस्तद्व्यङ्ग्यो व्यञ्जको वा

ततश्च कथं प्रदीपदृष्टान्तेन व्यङ्ग्यव्यञ्जकभावनिबन्धनो भेदः, तयोः पृथगसिद्धत्वात्, तस्मात्त दृष्टान्तस्तुल्य इति सङ्करो दुर्वार एवेति भावः । व्यङ्ग्यव्यञ्जकभेदमसिद्धं कर्तुमाह—**तस्य हेतोरिति,** समवायो हि एक इष्टः, तथा सति द्रव्यत्वसम्बन्धो द्रव्य एवेति न तु गुणादाविति नियमो व्यतिरेकश्च न भवत एव तदभावे चाधाराधेयभावनियमाभावः, सर्वस्य व्यङ्ग्यत्वाद्व्यञ्जकत्वाच्च न दृष्टान्तसाधर्म्यमिति भावः । पूर्वोदितसमवायैकत्वप्रयुक्तसाङ्कर्यमत्र स्मारयति **तथा यदि य एवेत्यादि ।** अतिदिश्यमानग्रन्थावधिमाह—**आ कुत इति,** व्याख्यानार्थप्रकारेणैव यावद्गुणकर्मभावनिवृत्तिग्रन्थं द्रव्यगुणाद्यव्यवस्थाचक्राणि पूर्ववदेव व्याख्येयानीत्यर्थः । ननु समवायो यद्येकस्तर्हि कथमयमवयविसमवायोऽयं गुणसमवायोऽयं कर्मसमवायोऽयं द्रव्यत्वादिसमवायः, अयं विशेषसमवाय इत्येवं समवाये पञ्चत्वव्यवहारः, एकत्वपञ्चत्वयोर्विरोधादिति वैशेषिकेणाऽऽशङ्क्य आश्रयाणामवयव्यादीनां पञ्चत्वादेव समवाये पञ्चत्वव्यवहार औपचारिको न तु वास्तविकः, एकत्वात्तस्य, यथा सत्ताया एकत्वेऽपि द्रव्यस्येयं सत्ता गुणस्येयं सत्ता कर्मण एवेयं सत्तेति त्रैविध्योपचारः, यत्र तु नास्त्याश्रयभेदो यथा जलस्याश्रयस्य, न तत्र जलचन्द्रस्यानेकत्वोपचारः किन्त्वेकत्वोपचार एवेति समाहितम्, तत्राचार्य आह त्वदीयपूर्वपक्षो विरोधरूपः स युक्त एवेत्यादर्शयति—**यत्पुनरिदमिति ।** व्याचष्टे—**समवायैकत्वमिति** सम्बन्धिभेदात् सम्बन्धभेदस्यावश्यकत्वात् यदि सम्बन्धिनः पञ्च तर्हि सम्बन्धः समवाय एको न स्यादेकत्वे वा सम्बन्धिनः पञ्चत्वं न स्यात् विरोधादिति यदाशंकितं तद्युक्तमेवेति भावः । वैशेषिकेणोक्तमुत्तरं निरसितुमाह—**यत् पुनरिदमिति** स्वसम्बन्धिभिराश्रयैरेकोऽपि समवायः पञ्चत्वोपचरितभेदः यथा सत्ताया आश्रया द्रव्यादयः व्यञ्जकत्वात्, एवञ्च व्यञ्जकानां द्रव्यादीनां भेदात् द्रव्यत्वविशिष्टा सत्ता, गुणत्वविशिष्टा सत्ता, कर्मत्वविशिष्टा सत्तेति त्रिधा व्यपदेश औपचारिकः, यथा वाऽऽश्रयभेदाभावेन जले चन्द्रस्यानेकतया प्रतिभासेऽपि एकत्वेनोपचर्यते चन्द्रस्तथा समवायेऽपि पञ्चत्वोपचार औपचारिक एवेति भावः । एतदुत्तरं निराचष्टे—**इदं निर्मूलमेवेति** व्यङ्ग्यस्य नियत आश्रय एवासिद्धः, द्रव्यद्रव्यत्वादेराधाराधेय-

१ इदं वाक्यं सि. प्रतौ नास्ति । २ क्ष. छा. व्यङ्ग्यस्याधारस्याधेयनियमात् ।

आधेयोऽर्थः ? कुतो वाऽऽश्रयाणां वैचित्र्यम् ? समवायैकत्वे षट्पदार्थनिवृत्तेः सुभाषितत्वात्, अजलचन्द्रवत्–व्योमचन्द्रवदेकत्वात्, समवायस्य भावस्य च सत्ताख्यस्य जलचन्द्रेण सह साधर्म्याभावात् कुतो नानात्वोपचारः ? छायामात्रत्वाच्च जलचन्द्रस्य बहुत्वाद्वा भावो वा कुतः ? भावोऽपि द्रव्यादिव्यतिरिक्तो नास्त्येवैकः तन्मूलत्वाद्भेदस्येत्यलमतिविकासिन्या सत्कथया ।

एवं स्वभावसत्सम्बन्धसद्वस्तुभावभेदवादिवैशेषिकमतनिराकरणप्रपञ्चेनैतदायातमिति दर्शयति—

**एवमेतदुभयमुभयभागित्यस्य नयस्य स्वरूपम्, यत्तत्सामान्यं तदपि विधीयते नियम्यते च, योऽपि विशेषः सोऽपि विधीयते नियम्यते च, सामान्यं भावः प्रकृत्यर्थः यत्तत्तेन भूयते सा सत्ता भू सत्तायामिति पाठात् सामान्यम्, विशेषोऽपि प्रत्ययार्थः सः, तस्यैव भवितृत्ववाचिप्रत्ययार्थत्वात्, योऽसौ भवति स विशेषः सामान्यमपि भवनात्मकत्वात् भवनसामान्यमन्तरेण तस्याकर्तृत्वात् स एव प्रकृत्यर्थानतिक्रमेण वृत्तः ।**

**एवमेतदित्यादि,** उभयमुभयभागित्यस्य नयस्य स्वरूपम्, यत्तत्सामान्यं तदपि विधीयते नियम्यते च, योऽपि विशेषः सोऽपि विधीयते नियम्यते चेति, तद्व्याचष्टेऽक्षरार्थं प्रदर्शयन् प्रकृतिप्रत्ययार्थाभ्यां सामान्यं भावः प्रकृत्यर्थः, तद्दर्शयति–यत्तत्तेन भूयते सा सत्ता, भू सत्तायामिति(धातुपाठे १) पाठात् सामान्यम्, तत् किं प्रकृत्यर्थमात्रमेव ? नेत्युच्यते–विशेषोऽपि[1] प्रत्ययार्थः सः, तस्यैव भवितृत्ववाचिप्रत्ययार्थत्वात्, स एव प्रकृत्यर्थः प्रत्ययार्थोऽपीत्युक्तः, योऽसौ भवति कर्तृवाचि[2]प्रत्ययार्थः, स विशेषः सामान्यमपि भवति, सत्ता भावः, भवनात्मकत्वात्, भवनसामान्यमन्तरेण तस्याकर्तृत्वादभवितृत्वात् स एव प्रत्ययार्थः प्रकृत्यर्थानतिक्रमेण वृत्त इति ।

भावस्य पूर्वं निषिद्धत्वात् व्यङ्ग्यव्यञ्जकयोरसिद्धेः, समवायस्यैकत्वे हि पदार्थषट्त्वमेव नावतिष्ठते, समवायश्चाजलचन्द्रवदेकः । एवं स्वभावसत् सम्बन्धसदिति पदार्थवादिवैशेषिकमते निरस्ते किमायातमित्यत्र स्योभयनयवादी स्वमतं दर्शयति–**एवमेतदिति** सामान्यं विशेषश्च सामान्यविशेषोभयस्वरूपमित्येतद्भङ्गनयस्य दर्शनमिति । तन्मतं व्याचष्टे–**यत्तत्सामान्यमिति** सामान्यं प्रवर्तते निवर्तते च, विशेषोऽपि प्रवर्तते निवर्तते चेत्यर्थः । तत् कथमिति दर्शयितुं प्रकृतिप्रत्ययार्थवर्णनद्वारेण सामान्यविशेषौ दर्शयति–**सामान्यं भाव इति,** भवनं प्रकृत्यर्थः भविता प्रत्ययार्थः, भवनमेव सामान्यमनुप्रवृत्तिधर्मत्वात् तदेव सत्तोच्यते सर्वभावेषु सद्रूपताया अवियोगात्, यतो भवनं भूधातुनिष्पन्नं भूधातुश्च सत्तायामनुशिष्टोऽतोऽपि भवनं सामान्यं सत्ता पर्याया इति भावशब्दप्रकृत्यर्थः सत्तासामान्यं जातिरिति भावः । सा किं केवलं प्रकृत्यर्थ एवेत्याशङ्कायां प्रत्ययार्थत्वमपि तस्या आवेदयति–**विशेषोऽपीति** प्रत्ययार्थभूतविशेषोऽपि सामान्यमतः प्रत्ययार्थोऽपीति भावः । हेतुमाह–**तस्यैवेति** प्रकृत्यर्थस्यैवेत्यर्थः । भवति भाव इत्यादौ तिङ्कृतोः ल. कर्मणि च भावे चाकर्मकेभ्य इति कर्तरि कृदिति सूत्राभ्यां कर्त्रर्थे विधानात् कर्ता विशेषोऽपि सन् सामान्यं प्रकृत्यर्थो भवतीति निरूपयति–**योऽसाविति** भवतीत्यादौ योऽसौ कर्तृवाचिप्रत्ययार्थ इत्यर्थः । एवं च सामान्यरूपेण भवनेन कर्त्रादयोऽभिधीयन्ते, नहि कर्ता भवनमन्तरेण भवति, तस्मादभेदेनाभिधीयमानतया विशेषोऽपि सामान्यं सत्ता भाव एवेति प्रकृत्यर्थोऽपि सामान्यं विशेषोऽपि, प्रत्ययार्थोऽपि विशेषः सामान्यमपीत्युभयमुभयभागिति भावः । ननु विधिविधिभङ्गवादिना सामान्यविशेषयोरेकत्वापादनमिष्टम्, तदेवैकत्वापादनं भवन्न्यायेनापि प्राप्तम्, तस्मात् पौनरुक्त्यप्रसङ्गः स्यात्, तन्मा भूदिति सामान्यविशेषयोर्विशेषलक्षणव्या-

---

१ सि. ××। २ डा. प्रकृत्या(थ)र्थः। ३ डा. भवितृत्वा०।

स्यान्मतं विधिविधिनियमवदेकत्वापत्तिः सामान्यविशेषयोरिष्टा मैषा त्वदुक्तन्यायेनैवं त्वेकत्वापत्तिरपीति, सा मा भूदिति सर्वविकल्पभावैकत्वव्युदासेन विशेषलक्षणमनयोः पर्यायादिभिरुक्तं वक्तुकाम आह—

**सामान्यं प्रवृत्तिः द्रव्यमन्वयो धर्मी विधिर्भाव इति, विशेषोऽपि निवृत्तिः पर्यायोऽन्यत्वं धर्मो नियमोऽभाव इति, द्वावेतौ भावौ पूर्ववदेकमेवेदमित्येवंविधं भावमनापद्यमानौ सामान्यमपि सामान्यं विशेषश्च भवतः, विशेषोऽपि विशेषः सामान्यश्च भवतः, प्रवृत्तिः निवृत्तिरित्याद्युभयमन्योऽन्याविनाभाविभावः तस्य सतो भावः सत्ता, येन हि सता यथा भूयते सततनियमेनेति उभयोर्नियमो विधिश्च । यदि स्यात्............खपुष्पवत् ।**

**सामान्यं प्रवृत्तिरित्यादि** यावद्विधिर्भाव इति, तथा विशेषोऽपीत्यादि यावन्नियमोऽभाव इति द्वावेतौ भावौ—पर्यायभेदादेतदुभयं पूर्ववत्- विधिविध्यरविकल्पपुरुषादिवादवदेकमेवेदमित्येवंविधं भावमनापद्यमानं सामान्यमपि सामान्यं विशेषश्च भवतः, विशेषोऽपि विशेषः सामान्यश्च भवत इति, तद्दर्शयति—प्रवृत्तिर्निवृत्तिरित्याद्युभयमन्योऽन्याविनाभाविभावो वस्त्वित्यर्थः, भावाभावरूपं भवनं सद्वस्तु, तस्य सतो भावः सत्ता, येन सता भूयते सततनियमेनेति प्रकृतिप्रत्ययार्थयोरुभयोर्नियमो विधिश्च, तावेव दर्शयति—येनेति प्रत्ययार्थं यथेति प्रकृत्यर्थञ्च, येन हीत्यादि कर्त्रा क्रियायां नियतेन नियतायां भवनमाह, यदि स्यादित्यादि अन्यथाऽनिष्टापादनं यावत् खपुष्पवदिति भवननियमेनात्मलाभो भवत उक्तः, ततश्चावरणेन[?]भवितृनियमेन भवनात्मलाभ इत्येतदुभयमुभयत्र विधिर्नियमश्चेति सामान्येनोक्तम् ।

विशेष्यापि वक्ष्यति—

**एवं द्रव्यक्षेत्रकालभावैः घटपटघटान्तरगृहबहिःस्वपरक्षेत्रान्तरवर्त्तमानातीतानागतका-**

वर्णनद्वारेण विधिर्विधिमनेष्टं सर्वविकल्पात्मकं भावैकवस्तुत्वं व्युदस्यतीत्याह-**स्यान्मतमिति** सामान्यादेः पर्यायानाह-**सामान्यं प्रवृत्तिरिति** । विशेषस्य पर्यायानाह-**विशेषोऽपीति** । इमावेव पर्यायभेदतः द्विविधौ भावौ सामान्यविशेषरूपौ प्रत्येकमुभयस्वरूपौ, अत एव च विधिविधिमतपुरुषनियत्यादिवादवन्नैकविधौ भवत इत्याह-**द्वावेताविति** । **प्रवृत्तिरिति** प्रवृत्तिर्निवृत्त्यविनाभाविनी, निवृत्तिश्च प्रवृत्त्यविनाभाविनी, एवञ्च प्रवृत्तिनिवृत्त्यात्मको भावः, एवं द्रव्यं पर्यायाविनाभावि, पर्यायश्च द्रव्याविनाभावी द्रव्यपर्यायात्मको भावः, अन्वय -एकत्वं तदन्यत्वाविनाभावि, अन्यत्वमप्येकत्वाविनाभावि, एकान्यत्वात्मको भावः, धर्मी धर्माविनाभावी, धर्मश्च धर्म्यविनाभावी धर्मधर्म्यात्मको भावः, विधिर्नियमाविनाभावी नियमो विध्यविनाभावी विधिनियमात्मको भावः, भावोऽभावाविनाभावी, अभावो भावाविनाभावी, भावाभावात्मको भाव इति भावः । एवमुभयात्मकमेव वस्तु सदुच्यते भवनात्मकत्वात्, तथा च सत् येन रूपेण भवति तद्भवनं प्रकृत्यर्थः, यो भवति स कर्ता प्रत्ययार्थः, सततनियमेन भवति वस्त्विति विधानान्नियमनाच्चेत्यादर्शयति-**तस्य सत इति** । भावार्थमाह-**कर्त्रेति** नियतो हि कर्ता नियतक्रियाया भवति, नानियतक्रियाया भवति, एवञ्च भवतो वस्तुन आत्मलाभो न यथा तथा, किन्तु भवननियमेनेति सामान्यमपि सामान्यं विशेषश्च भवतः, भवितापि भवितृनियमेनैव आत्मलाभं लभत इति विशेषोऽपि विशेषः सामान्यञ्च भवत इति भावः । इदमेवाह-**भवननियमेनेति** । अथ सकलादेशेन सर्वं भावाभावात्मकमिति निदर्शनप्रदर्शनेन व्याकरोति-**एवमिति** स्वकीयद्रव्यक्षेत्रकालभावचतुष्टयरूपेण भवन्

१ सि० क्ष० छा. विधिनियमनय । २ सि. क्ष. छा. पर्यायादिविभिर्विहक्तं । ३ सि. क्ष. पूर्वं च द्विविध्यविकल्प० । ४ सि. क्ष. छा. वसत्ता । ५ सि. क्ष. कर्त्ता । ६ सि. क्ष. यदि स्येत्यादि ।

**लान्तरैः घटशिवकस्तूपकादिकपालादिपूर्वोत्तरभावैः वर्त्तमानयुगपदयुगपद्भाविभावभावान्तरैर्वा भावाभावाभ्यां भवतीति घटस्य सदसत्त्वम्, प्रतिवृत्तिवस्तुप्रवृत्तेः घटादि मृदादिकारणमपेक्षते निर्विशेषत्वे भावाभावत्वेनाविशेषः, कण्ठकपालादिभावाभावाद्यात्मना परस्परतश्चासत्सु भेदं प्रति वृत्तत्वादिति स्वावयवभेदेषु सदसत्त्वेन वृत्तिः, तद्भावाभावात्मको घटस्तदभावे न भवति, तदभावभावे च भवतीति, तथा घटपटादिद्रव्यक्षेत्रकालभावसत्ताया घटसामस्त्येपि न कश्चिद्विशेषः वस्तुत्वात्, असामान्यवत्, यथैव...... ......................गुणावृत्त्यनावृत्तिभेदेषु विवक्षया चैष विशेष उभयोरपि तत्त्वात् ।**

**एवं द्रव्यक्षेत्रेत्यादि,** यावत् स[द]सत्त्वमिति, द्रव्यतो घटो भवन्नात्मानुवृत्त्या पटादिव्यावृत्त्या घटान्तरव्यावृत्त्या च भावाभावात्मभ्यां भवति. क्षेत्रतो गृहे घटो न बहिर्नान्यत्रेति स्वक्षेत्रे भवन् परक्षेत्रे क्षेत्रान्तरे चाभवन् भवति, कालतो वर्त्तमाने काले भवन्नतीतानागतयोः कालान्तरयोरभवन्[भावतो घटावस्थायां घटत्वेन भवन्] शिवकस्तूपकादिभिः पूर्वैरुत्तरैश्च कपालादिभिरभवन्, शिवकावस्थायामेव वा पिण्डस्तूपकाभ्यां पूर्वोत्तराभ्यामभवन् शिवकत्वेन भवन् भवतीत्युच्यते, अथ वा भावतः शिवकादिभिराकारैर्धर्मैः वर्त्तमानै[र]युगपद्भाविभिः युगपद्भाविभिश्च रूपरसादिभिर्भवन् भावान्तरैरुपयोगादिभिश्चाभवन् भवतीति सदसत्त्वमेवं सर्वभावानां भावाभावात्मकत्वम्, अथवा प्रतिवृत्तिवस्तुप्रवृत्तेः—वस्तुनि वस्तुनि वृत्तिः प्रतिस्वं घटादि मृदादिकारणमपेक्षते, आदिग्रहणात् पटादि तन्त्वाद्यपेक्षते, निर्विशेषत्व इति, कारणान्तरानपेक्षत्वात् स्वकारणानपेक्षत्वाच्च भावाभावत्वेनाविशेषः, कण्ठः स्वेनात्मना भवति, कपालाद्यात्मना न भवति, कपालानि स्वात्मना भवन्ति, न कण्ठाद्यात्मनेति भावाभावाद्यात्मना परस्परतश्च

घटादि परकीयद्रव्यादिचतुष्टयरूपेण न भवति, इत्थं भवतो भावाभावरूपाभ्यां भवनं नियम्यत इति सामान्यमपि सामान्यं विशेषश्च, विशेषोऽपि भविता विशेषः सामान्यश्चेति दर्शयति-**द्रव्यत इति** घटस्य यत् स्वरूपं तदेव द्रव्यं, तत् सर्वघटसमानम्, तेन घटो भवति, पटादिस्वरूपं घटस्य पररूपं तेन च घटादि पटादिना व्यावर्त्यते, अतस्तद्रूपेणासौ न भवति, घटत्वादिना परिच्छिन्नेषु घटेषु मध्ये यादृशो घटो विवक्षितस्तद्व्येण तद्व्यक्त्यादिना भवन् स घटस्तदितरघटव्यक्त्यन्तरेण चाभवन् नियतो भवति भावाभावाभ्यामिति दर्शनाय घटान्तरव्यावृत्त्या चेत्युक्तम् । **क्षेत्रत इति** स्वाधारः क्षेत्रम्, यथा गृहादि, स्वानाधारश्च बाह्यं क्षेत्रं गृह एव वा प्रदेशान्तरं परक्षेत्रम्, घटश्च स्वक्षेत्रे भवन् परक्षेत्रे चाभवन् भवतीति क्षेत्रतो भावाभावाभ्यां वस्तु भवतीति भावः । **कालत इति** घटाद्यस्तितानियामकः कालः स्वकालः तद्व्यतिरिक्तः तदनवच्छेदकः परकालोऽतीतादिः, प्रतिनियतकालत्वाद्घटादेः स्वकाले भवन् परकाले चाभवन् भवतीति भावः । **भावत इति** पर्यायो भावः, क्रमभाविपर्यायापेक्षया वार्त्तमानिकघटत्वादिलक्षणभावापेक्षया घटो भवति पूर्वोत्तरभाविपर्यायापेक्षया च न भवतीति भावाभावात्मकं वस्त्विति भावः । सहक्रमभाव्याकारधर्मलक्षणपर्यायं भावशब्देन गृहीत्वाऽऽह-**अथ वेति** शिवकादिवर्त्तमानक्रमभाविपर्यायेण रूपरसादिसहभाविपर्यायेण भवन् घटः पिण्डादिपूर्वपर्यायेण स्तूपकाद्युत्तरपर्यायेण चाभवन् उपयोगादिभिश्चाभवन् घटो भावाभावात्मकः, तदेवं वस्तुमात्रं विजातीयसजातीयस्वगतप्रतियोगिकभेदरूपम्, अत एवादौ पटादितो भेदः प्रदर्शितः ततः सूक्ष्मात् सजातीयव्यक्त्यन्तरात्, ततः स्वगतात् क्रमभाविपर्यायात् ततः सहभाविपर्यायान्तरात् भेद आदर्शितः, सहभाविपर्यायान्तरेण भेद इत्थं भाव्यः—यदा घटश्चक्षुषा गृह्यते तदा स चक्षुर्विषयीभूतरूपात्मना भवन् रसाद्यात्मना च न भवति, सोऽपि घटः घटनाद्युपयोगात्मना भवन् अनुपयोगात्मना च न भवतीति यथायथं ऋजुसूत्रादिपर्यायनयैर्भाव्यम् । इत्थं अवयवानपेक्षया घटादिवस्तुनि भावाभावात्मकत्वमुपदर्श्य सावयवे तत्प्रतिपादनायाऽऽह-**अथ वेति** वस्तुनि वस्तुनि वृत्तिः प्रतिवृत्ति, प्रतिस्वमित्यर्थः, कार्येण हि प्रत्येकं

१ सि. क्ष. नैमं नय इति । २ सि. क्ष. छा. प्रतिपत्तिवस्तु० । ३ सि. भावाद्यात्मना ।

[सत्त्व]सत्सु च भेदं प्रति वृत्तत्वादिति स्वावयवभेदेषु सद[स]त्त्वेन वृत्तिः, तस्यार्थस्य भावना–तद्भावाभावात्मको घट इति–तदभावे न भवति–भावाभावाभावे न भवति, भावाभावभाव एव च भवति–तद्भाव एव भवतीत्यर्थः, एतस्यैवार्थस्य भावनार्थं साधनमाह–तथा घटपटादिद्रव्यक्षेत्रकालभावभावाभावसत्ताया घटसामस्त्येऽपि न कश्चिद्विशेष इति प्रतिज्ञा, घटपटघटान्तरेत्यादि दण्डकोक्तार्थचातुर्विध्यस्य सदसत्त्वमसामस्त्येन भावितं सामस्त्येऽपि तथेति साध्यार्थः, वस्तुत्वादिति हेतुः, असामान्यवदिति दृष्टान्तः, यथैवेत्यादि चातुर्विध्येन दृष्टान्तवर्णना गतार्था यावद् गुणावृत्त्यनावृत्तिभेदेष्विति, द्विगुणत्रिगुणकृष्णशुक्लत्वादिरावृत्तिः, शुक्ल[ः]कृष्ण इत्यनावृत्तिः, तत्रैकगुणसत्त्वं द्विगुणासत्त्वं द्विगुणसत्त्वमेकगुणासत्त्वं शुक्लसत्त्वं कृष्णासत्त्वं कृष्णसत्त्वं शुक्लासत्त्वमित्यादिभावाभावात्मकत्वाविशेषे सामस्त्यासामस्त्यविशेषः क इति चेदुच्यते–विवक्षया चैष विशेष उभयोरपि सामस्त्यासामस्त्ययोः, कस्मात् ? तत्त्वात्–तद्भावस्तत्त्वं भावाभावत्वं तस्मात्तत्त्वात्–भावभावत्वात् विवक्षाविशेषादेवैष विशेषः, समस्तो घटोऽसमस्तः कण्ठकपालादिरित्यादिप्रागुक्तं चातुरात्म्यं सकलादेशवशाद्विकलादेशवशाच्च प्रतिपादनोपायत्वात् ।

एवं भावाभावात्मकत्वं सर्वस्य सकलादेशेन भावितम्, विकलादेशेन प्रत्येकं भावयिष्यामः, तत्र भावात्मकत्वं तावत्—

**तथा घटस्तावदस्त्येव, क्रियागुणव्यपदेशवत्त्वात्, पटरथवत् खपुष्पवैलक्षण्येन सर्वसर्वसमवायासत्त्वात्, योग्यस्यैव योग्येषु समवायात्, यथा रूपे घटोऽस्त्येव रूपं वा तदाधारो**

स्वेऽवयवा अपेक्ष्यन्तेऽत प्रत्यवयवं घटादिवस्तुना प्रवृत्तेर्भावाभावात्माऽपि घटादि सविशेष, तथा च घटस्य योऽवयवोऽस्तित्वे नियत कण्ठ स्वेनात्मना भवतीति यश्चावयवो नास्तित्वे नियत कपालाद्यात्मना न भवतीति तेष्ववयवेषु परस्परं सत्त्वसत्सु चावयविनो घटादे भावाभावात्मकस्य कथञ्चिदभेदेन वृत्तेरवयवधर्मेणापि सदसत्त्वेन तस्य सदसत्त्वम्, तदेवं स्वपरद्रव्यक्षेत्रकालभावैरेव घटादे भावाभावात्मकत्वं केवलं न वाच्यम्, प्रत्यवयवं वस्तुवृत्त्यनपेक्षत्वे भावाभावात्मकैकरूपतयाऽविशेष स्यादिति तात्पर्यं भवेदिति प्रतिभाति । इदं भावयति–**तद्भावेति** तस्मात् भावाभावात्मको घट इत्यर्थ, तेन प्रकारेण भावाभावात्मको घट इति वा, स्वपरद्रव्यादिना भावाभावात्मकोऽपि घट सामस्त्येन भावाभावात्मकत्वाभावे न भवति तेन भावाभावात्मकत्व एव भवतीत्यर्थः । अमुमेवार्थमनुमानेन दर्शयति–**तथा घटपटादीति** यथा स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमघटादौ घटपटघटान्तरपूर्वोत्तरपिण्डरूपकादिरूपरसादिशुक्लकृष्णादित्रिद्व्येकगुणशुक्लादिभिर्भावाभावात्मकत्वं भावितं तथा सामस्त्येन घटेऽपि भावाभावात्मकत्वेऽविशेष, वस्तुत्वात्, असामान्यवत्–विशेषव्यक्तिवदित्यर्थः । रूपात्मना घटोऽस्ति रसाद्यात्मना नास्ति रूपवानपि घट शुक्लरूपेणास्ति कृष्णरूपेण नास्ति, कृष्णरूपेण वाऽस्ति शुक्लरूपेण नास्ति, एकगुणोऽपि घट एकगुणकृष्णरूपेणास्ति द्विगुणकृष्णादिना नास्ति, द्विगुणकृष्णेन वास्ति एकगुणकृष्णेन नास्तीत्येवं घटो भावाभावात्मा यथा तथा समस्तोऽपीति दृष्टान्त वर्णयति–**चातुर्विध्येनेति** द्रव्यक्षेत्रकालभावैरित्यर्थ । ननु समस्तस्यासमस्तस्य च भावाभावात्मकत्वे यदि न कश्चिद्विशेषस्तर्हि सामस्त्यासामस्त्यभेद कथमित्यत्राह–**विवक्षयेति** यद्यपि सामान्यं विशेषोऽपि, विशेष सामान्यमपीति न प्रतिनियतत्वं सामस्त्यासामस्त्ययो, एकपुरुषपितृपुत्रत्ववत् तथापि विवक्षयैव सामस्त्यासामस्त्यविशेष, अयं घट समस्तोऽयञ्च कपालकण्ठादिरसमस्त इत्यादि परस्परापेक्षया विवक्षायामेव तयो सामस्त्यासामस्त्यरूपत्वात्, न ह्येकान्तेन घट समस्त एव, कपालादिरसमस्त एव, अपरापरापेक्षाया तयोरपि समस्तासमस्तरूपत्वात्, सर्वस्यापि वस्तुनोऽनेकधर्मात्मकत्वेन तत्प्रतिपादनस्य विवक्षामन्तरेणासम्भवात् सकलादेशेन विकलादेशेन च वस्तुन प्रतिपादन एव तत्त्वावबोधात्, तत्र प्रमाणप्रतिपन्नानन्तधर्मात्मकवस्तुन एकधर्मबोधनमुखेन द्रव्यार्थप्राधान्याश्रयणात् कालादिभिरभेदवृत्त्या पर्यायार्थप्राधान्यात् अभेदोपचारेण वा यौगपद्येन प्रतिपादकं वच सकलादेश, भेदप्राधान्याद्भेदोपचाराद्वा तथा प्रतिपादकं वचनं विकलादेश इति । अथ विकलादेशेन प्रत्येकं घटादेर्भावाभावात्मकत्वं भाव्यते–**तथा घट इति** । व्याचष्टे–

**वा, एकैकस्मिन् वृत्तत्वात्, अथैवं न स्यात्ततोऽसावसन्नेवापद्यते सिकतास्विवाविद्यमानं तैलम्, अनिष्टञ्चैतदेवम्, रूपादीनां प्रत्येकं सत्त्वात्, परस्परं व्यावृत्तात्मत्वाच्च रूपादयः सन्ति, न च तथास्थितौ घटो न भवति, तयोरितरेतराभूतयोराधारभूतस्य वा घटभावात् असामस्त्येन वा भावाभावात्मको घट इति ।**

( **तथेति** ) तथा घटस्तावदस्त्येव, क्रियागुणव्यपदेशवत्त्वात्–उदकाद्याहरणं क्रिया, गुणो रूपादि, व्यपदेशो लिङ्गं हेतुरपदेशो लिङ्गमित्यादि शब्दो वा, पटरथवदिति भावात्मकत्वे दृष्टान्तः, खपुष्पवैलक्षण्येन–वैधर्म्येण सर्वसर्वसमवायासत्त्वादिति भावनाहेतुः, न हि सर्वं सर्वत्र समवैति तन्तुषु घटः कपालेषु वा पटः, तस्मात् सर्वसर्वसमवायासत्त्वात् योग्यस्यैव योग्येषु समवायात्, अस्त्येवेति वर्त्तते, यथा रूपे घटः–गुणसमुदायवाददर्शनेन, रूपं वेति–गुणमात्रवादे, तदाधारो वेत्यवयविवादे, यथा रूपे घटोऽस्त्येवेत्यादि तथा रसादिष्वपि भावनीयम्, एकैकस्मिन वृत्तत्वात्, अथ पुनरेवं न स्यात्–पटरथादिसाधर्म्येण खपुष्पवैलक्षण्येन वैकैकस्मिन् तिलेष्विव तैलं ततोऽसावसन्नेवापद्यते, किमिव ? सिकतास्विवाविद्यमानम्–यथा सिकतासु प्रत्येकं समुदायेऽपि तैलं नास्त्येव तथा घटो रूपादावेकैकस्मिन्नसत्त्वादसन्नापद्येत, अनिष्टञ्चैतत् एवं सामस्त्येन घटाद्यस्तित्वं रूपादीनां प्रत्येकं सत्त्वात्, इतरथा रूपवद्रसोऽपि रूपं स्यात्, स्वरूपासत्त्वात्, न च रूपवद्रसोऽपि रूपं भवति, रूपं वा रसवद्रसो भवति, दृष्टविरुद्धत्वात्, यस्माद्रूपमेव रूपं रस एव रसो भवति, नेतरभावमापद्यते तस्माद्रूपादयः सन्ति, एवं तर्हि रूपादिमात्रत्वान्न घट इति स्यादाशङ्का सा मा भूत्–न च तथास्थितौ घटो न भवति–यथा परस्परव्यावृ-

---

**उदकाद्याहरणमिति** घटस्य क्रियागुणव्यपदेशानां सद्भावात् भावात्मकत्वम्, नहि खपुष्पस्य केचन क्रियागुणव्यपदेशाः सन्ति तस्मान्न भावात्मकं तत्, **घटा**दिश्च क्रियादिमान्, तस्मात् ते सन्तीति भावः । ननु कथमसौ घटो भावात्मकः सामस्त्यरूपत्वाभावात् सर्वत्राभावाच्चेत्यत्र भावनामाह–**सर्वसर्वेति** यत एव सर्वं सर्वत्र न समवैति, अथ च क्रियागुणव्यपदेशा दृश्यन्ते, अत एव योग्यं योग्य एव समवैतीत्यतश्च भावात्मकमिति भावः । दर्शनभेदेन निदर्शनमाह–**यथा रूप इति,** गुणसमुदायो द्रव्यमिति साङ्ख्यमते द्रव्यलक्षणम्, रूपरसादिसमुदाय एव घटादिद्रव्यं समुदायात्मा घटः समुदायिनि प्रत्येकं रूपादौ वर्त्तते, तथा रूपमेव द्रव्यं न तदतिरिक्तं किञ्चिद्द्रव्यमिति बौद्धमते प्रत्येकं रूपादिरेव घटः, एवं गुणवद्द्रव्यमिति वैशेषिकमते प्रत्येकं घट एव वर्त्तते, एवं योग्यस्यैव योग्येषु वृत्तेर्भावात्मकत्वं घटादेरिति भावः । यद्धि प्रत्येकं क्वचिदपि न वर्त्तते तन्नास्त्येव यथा सिकतासु तैलं प्रत्येकमवृत्तेर्नास्ति तथा यदि पटरथादिसाधर्म्येण खपुष्पादिवैलक्षण्येन तिलेषु प्रत्येकं तैलस्य सत्त्ववत् न विद्यते घटादि तर्हि नासौ घटादिभावात्मेत्याह–**अथ पुनरिति,** यथा तैलं प्रत्येकं सिकतासु समुदाये च नास्ति तथा घटः प्रत्येकं रूपादावभावे समुदायेऽप्यसत्त्वादसन्नेव स्यादिति प्रत्येकस्मिन् सत्त्वमङ्गीकार्यमेव, तस्मात् प्रत्येकसत्त्वे एव सामस्त्येन घटाद्यस्तित्वमनिष्टमिति भावः । एवमभावात्मकत्वमसामस्त्येन भवतीति–**एवमिति** कुत एवं सामस्त्येन घटाद्यस्तित्वमनिष्टमित्यत्राह–**रूपादीनामिति,** यतः रूपादयः प्रत्येकं सन्तः, यदि हि ते प्रत्येकं सन्तो न भवेयुः तर्हि तेषां स्वरूपमेव न स्यात्, स्वरूपाभावेऽपि च रूपस्य रूपत्वे कुतो रसस्यापि न रूपत्वम् ? रूपस्य वा रसत्वं रसवत् ? तथा च यथा रूपमेव रूपं भवति न रसः, रस एव च रसो भवति न रूपमिति परस्परव्यावृत्तस्वरूपा रूपरसादयः प्रत्येकं सन्तः, तदेवं रूपादौ सिद्धस्वरूपतायामवधृतायां घटोऽपि तथैव भवति, रूपरसादावेव घटस्य भावात्, प्रत्येकं रूपादीनामेव वा घटत्वात्, रूपादीनामाधारस्य वा घटत्वात्, तस्मात् रूपादिवद्घटस्यापि प्रत्येकं सत्त्व एव सामस्त्येनास्तित्वं भवेदिति केवलं सामस्त्येन घटाद्यस्तित्वमनिष्टमेवेति भावः । प्रत्येकासत्त्वे दोषमाह–**इतरथेति** । एवं रूपस्य परस्परव्यावृत्तस्य प्रत्येकं सत्त्वमुपपाद्य घटस्य तदुपपादयितुमाह–**न च तथास्थिताविति** । तस्मात् असामस्त्येनापि घटो भावात्मक

त्मात्मत्वे सत्यपि रूपादयो भवन्तीति स्थितिः, तथा स्थितिः, एवं स्थितौ तथा घटोऽपि भवति, न न भवति रूपरसयोर्घटभावात् तयोरितरेतराभूतयोरेव घटत्वात् तयोराधारभूतयोर्वा घटत्वात्, तदुपनयति—असामस्त्येन वा भावाभावात्मक एव घट इति।

**ननु घटरूपादिवत् पृथिव्यपि मृदादिर्विशेषः, यथा स्वाधारेषु घटो भवति रूपादय एव वा, न निर्मूलः तथा पृथिव्यपि मृदादिषु तदात्मिका वा तस्या एव ते विशेषाः, नाभावः, इतरथा निर्मूलत्वाद्घटस्य रूपादीनाञ्चासत्त्वं खपुष्पवत्, न चैतदिष्टम्, तथा च रूपादयो मृदादयश्च भावविशेषा एव, एकभवनात्मकत्वात्, घटघटस्वात्मवत्, न चैवमविशेषः, तद्विशेष एव विशेषः पृथिवीसामान्ये सत्येवोर्द्ध्वविस्तृतत्वादिः घटोऽपि मृदेकभवनात्मकाकारविशेषो भाव एव, न पटाद्यभाव इति।**

**ननु घटेत्यादि,** वैशेषिको विशेषं भावात्मकमेव वाञ्छन् व्यावृत्त्यात्मकं विशेषं निराकुर्वन्नाह—यथेत्यादि, स्वाधारेषु घटो भवति, रूपादय एव वा, सिद्धान्तान्तरदर्शनेन, घटो न निर्मूलः तथा पृथिव्यपि मृदादिषु—मृदश्मसिकतालोष्टवनवृक्षगुल्मलतावतनवीरुधादिषु तदात्मिका[वा],तस्या एव ते विशेषाः रूपादय इव घटस्य, नाभावो विशेषः, इतरथा निर्मूलत्वादभावविशेषत्वे घटस्य रूपादीनाञ्चासत्त्वमापन्नम्, खपुष्पवत्, न च तदिष्टम्, एवं न्यायात् रूपादयो मृदादयश्च घटस्य पृथिव्याश्च विशेषो भाव इत्युक्तम्, तथा चेत्यादि भावविशेषत्वभावनाग्रन्थो यावद् विस्तृतत्वादिः, एकभवनात्मकत्वादिति हेतुः—एकमेव भवनमेकस्यैव वा भवनमात्माऽस्येति विग्रहः, यदेकभवनात्मकं तन्नाभावविशेषः, दृष्टान्तो घटघटस्वात्मवत्—यथा घट एव घटस्वात्मा नान्यत् खपुष्पादसत्, स्यान्मतमविशेषस्तर्हि प्राप्तः, एकभवनात्मकत्वात् मृदादिरूपादीनाम्, घटघटस्वात्मवत्, अनिष्टञ्चैतदिति- अत्रोच्यते—न चैवमविशेषः, घटस्वात्मन एव

इति दर्शयति-**असामस्त्येनेति** । अथ द्रव्यादय षट पदार्था, पृथिव्यादिभेदेन द्रव्याणि नव, रूपादिभेदेन चतुर्विंशतिर्गुणाः, उत्क्षेपणादीनि पञ्च कर्माणीत्येवं वदन वैशेषिको द्रव्यादीनामवान्तरभेदान भावरूपान् विशेषान वाञ्छति, न तु विशेषं व्यावृत्तिलक्षणम्, तदयुक्तमिति वक्तुं तन्मतमादावादर्शयति-**नन्विति** । व्याकरोति-**वैशेषिक इति,** द्रव्यादयो न निराधारा भवन्ति खपुष्पादिवत किन्तु घटो यथा स्वाधारेषु भवति, घटस्य स्व आधार गुणसमुदायद्रव्यवादे रूपादि, गुणमात्रद्रव्यवादेऽपि तथा, स्वमतेन तु अवयवा रूपादिरन्यो वा स्वाधार तत्र भवति, एवं द्रव्यस्याधार पृथिव्यादिरेव, पृथिव्याश्चाधारो मृदश्मादय, त एव तद्विशेषा न तु भावात्मनो द्रव्यादेरभावो विशेषो भवितुमर्हति, निर्मूलत्वप्रसङ्गात द्रव्यादीनामप्यसत्त्वमापद्येत, द्रव्यस्य मूलाभावादेवञ्च भावरूप एव विशेषो नाभावरूप इति भाव । यथा घटस्य रूपादयो विशेषा तथा पृथिव्या मृदश्मादयो विशेषा इत्याह-**तस्या एवेति** । यदि घटस्याभावो विशेष स्यात्तदा निर्मूलत्वाद्घटो न स्यात खपुष्पवदित्याह-**इतरथेति** । घटादीना रूपादि भावरूपविशेषो इत्यत्र हेतुमाह-**एकभवनात्मकत्वादिति** । प्रथमव्युत्पत्त्याऽभिन्नभवनात्मकत्व द्वितीयव्युत्पत्त्या एकसम्बन्धिभवनात्मकत्वं हेत्वर्थ, घटरूपादावुभयत्र प्रथमो हेतुर्द्वितीयश्चान्यतरत्र वर्तत इति विशेष । **यदिति** घटघटस्वात्मनोर्हि भवनं नान्यत् किं त्वेकमेवेति भावविशेष एव घटस्वात्मा, न तु खपुष्पादिवदसन्, एवं मृदादिरूपादीनामिति भाव । ननु एकभवनात्मकौ घटघटस्वात्मानौ न परस्पर भिन्नौ किन्त्वेकौ अत एव च तयोर्न सामान्यविशेषतेति मृदादिरूपादीनामपि पृथिव्यादिघटाद्यविशेष. प्रसज्यत इत्याशङ्कते-**स्यान्मतमिति** । समाधत्ते-**न चैवमिति** घटघटस्वात्मवदेकभवनात्मकत्वाविशेषत्व-

१ सि. क्ष. डे. छा. यथा स्वादिष्वाधारेषु । २ सि. क्ष छा तथा निपृथिव्यपिमृदादिः मृद० । ३ सि. क्ष. °लतावतनवीरुदादिषु छा. °लतावन् नदी° । ४ सि. क्ष. एवम ।

देशकालरूपादिविशेषवदात्मन्येव भावविशेषदर्शनात्, अत आह–तद्विशेष एव विशेषो नाभावः, कोऽसौ पृथिव्यादिविशेष इति चेदुच्यते पृथिवीसामान्ये सत्येवोर्द्ध्वविस्तृतत्वादिविशेषो नाभावः तथा घटोऽपि मृदेकभवनात्मकाकारविशेषो भाव एव, न पटाद्यभाव इति ।

अत्राचार्य आह त्वदभिमतं नैकभवनात्मकत्वं पृथिवीभूतेरपि कुतो घटघटस्वात्मनः ? कस्मात् ? तस्या अपि पृथिवीभूतेः–भूमिभवनस्य भावाभावात्मकत्वात्, तन्निदर्शयति—

**ननु पृथिवीभवनमुदकाद्यभवनम्, एतदेवास्य मूलम्, तन्मूलत्वात् किमित्यस्यासत्त्वापत्तिः ? ।**

नन्वित्यादि, पृथिवीभवनमुदकाद्यभवनं, एतदेवास्य मूलं–अभावविशेषभवनम्, तन्मूलत्वात् किमित्यस्यासत्त्वापत्तिः ? एवमभावविशेषरहितभावविशेषसिद्धौ मां प्रति न [1]किञ्चिन्निदर्शनमस्तीत्यभिप्रायः ।

पर आह—

**न, उक्तोपन्यासवद्द्रव्यमिति भवनात् पृथिव्यादिद्रव्यभवनाविनाभावेनैव भवति, ननु द्रव्यमपि गुण इति न भवति, न, सदिति भवनात्, सत्त्वभवनव्याप्त्याभावस्यैव विशेष इति पूर्ववत्. यदि सदित्येव भवति तर्हि सत्त्वाविशेषात् द्रव्यगुणकर्मणामव्यतिरेकात् केन विशेषहेतुना सदेव सर्वमिति भवति ? न द्रव्यमेव, गुणकर्मणोरपि सद्भावात्, गुणकर्माभावाद्द्रव्यं सदिति भवति, गुणकर्मणी च तदभावात्, यतस्तु पटः............ ।**

**(नेति)** न, उक्तोपन्यासवत् द्रव्यमिति भवनात् पृथिवी द्रव्यभवनाविनाभावेनैव भवति, पृथिव्युदकादि, पृथिव्युदकादिषु वा द्रव्यम्, इतरथा निर्मूलत्वादित्यादिः स एव ग्रन्थो यथायोगं वाच्यः ।

सम्भव, विशेषस्य भावरूपस्य सामान्यस्वरूपत्वात्, न हि ततो भिन्नम्, घटस्यात्मैव हि भावविशेष, कण्ठपृष्ठादेर्देशस्य वर्तना-दिकालविशेषस्य रूपादिभावानाञ्च घटस्वरूपाणामेव विशेषत्वाद्भावविशेष एव विशेषो भवति न त्वभाव, पृथिव्यादेरूर्ध्वविस्तृ-तत्वादिविशेषाणामेव भावविशेषत्वमिति भाव । घटोऽपि च नैकान्तेन सामान्यरूपोऽपि तु विशेषोऽपीत्याह-**तथा घटोऽपीति** कम्बुग्रीवादिरूपाद्यपेक्षया सामान्यमपि घटो मृदो भावविशेष मृत्सम्बन्धिभवनात्मकत्वात्, न तु पटाद्यभाव एव विशेष इति भावः । त्वदभिमतं यद्भवनमेकान्तरूपं तत् यतः पृथिवीभवनमेव न भवति, कथं तर्हि घटघटस्वात्मनोरेकभवनात्मकत्वं, पृथिवी-भवनं ह्युदकवह्न्याद्यभवनरूपमिति न ह्युदकाद्याद्यभवनमन्तरेणेदं पृथिवीभवनमेवेति पार्यते वक्तुम्, तस्मात् पृथिवीभवने उदकाद्याद्यभवनं मूलं, यच्च मूलं तदेव विशेषभवनमतो भाव एव विशेष इति कथं वक्तुं युक्तमित्याशयेन आचार्योक्तं वैशेषिकमत-दूषणं दर्शयति-**त्वदभिमतमिति** । आचार्योक्तिं प्रकटयति-**नन्विति** । अन्याद्यभवनस्यैव मूलत्वाभ्युपगमेनाभावस्य विशेषत्वे निर्मूलत्वाद्घटादिरूपादीनामसत्त्वमापद्यत इति यदुच्यते त्वया तन्न युक्तम्, अभावविशेषरहितभावस्य विशेषत्वाप्रसिद्धेः तथाविधो-भयवादिप्रसिद्धदृष्टान्ताभावादिति भावमादर्शयति-**एतदेवेति** । ननु विशेषस्य सामान्यभवनाविनाभावित्वमेव, एकभवनात्मकत्वात् विशेषाणां समुदायः तदात्मा तदाधारो वा द्रव्यं भवति, यदि विशेषोऽभाव स्यात् तर्हि कथं द्रव्यं भाव, न ह्यभावसमुदायोऽ-भावात्मा अभावाश्रयो वा द्रव्यं भवति, तस्मान्निर्मूलत्वान्नाभावो विशेष इति शङ्कते-**नोक्तेति** । एतदेव निरूपयति-**नोक्तोपन्या-सवदिति** । विशेषस्याभावरूपत्वे दोषमाह-**इतरथेति,** अभावविशेषत्वे द्रव्यस्य निर्मूलत्वात् रूपादीनाञ्चासत्त्वमापद्यत इति भावः । ननु द्रव्यमपि गुणो न भवतीत्यभवनरूपम्, अन्यथा गुण इति कुतो न भवेत्, द्रव्यभवनवत् तस्माद्द्रव्यभवनस्य गुणाद्यभवनाविना-

१ सि. क्ष. किंचिद्दर्शनमस्ति ।

अत्रोत्तरं—ननु द्रव्यमपि गुण इति न भवतीत्यभावाविनाभाविभवनवचनं, न, सदिति भवनादिति, सत्त्वभवनव्याख्या भावस्यैव विशेष इति पूर्ववत्, अभावबाधाह—यदि सदित्यादि, अनिष्टापादनमुखेनासद्वादसमर्थनमिदम्, यदि सदित्येव भवति सत्त्वाविशेषाद्द्रव्यगुणकर्मणामव्यतिरेकात् पर्यायमात्रत्वे केन विशेषहेतुना सदेव सर्वमिति भवति, न द्रव्यमेव इति, दृष्टश्चेदं द्रव्यमेव न भवति, गुणकर्मणोरपि सद्भावात्, गुणकर्माभावाद्द्रव्यं सदिति भवति, गुणकर्मणी च तदभावात् सती भवतः, न च द्रव्यादिव्यतिरेकेण सन्नाम किञ्चिदस्तीत्युक्तत्वात् दृष्टविरुद्धमुच्यते त्वयेत्यत्र वयं ब्रूमः—यतस्त्वित्यादि, चटकमर्कटिकयाऽभावाविनाभाविभावप्रतिपादनं यथा तन्तुषु पट इति गतार्थम्, एवं तावद्भावैकान्तपक्षव्यावर्त्तनद्वारेणाभावसहितो भाव उक्तः।

अतः परमभावैकान्तपक्षव्यावर्त्तनद्वारेणाभावसहित एव भाव इत्येतत्प्रतिपादयिष्यते—

**यद्येवं घटो भवतीत्युक्तेऽप्यभाव एवोक्तो भवति पटो न भवतीति तर्हि भवतीत्युक्तेऽपि न भवतीत्येवोक्तं भवति, परितो भवनाभावात्, खपुष्पवत्, ननु परितो वचनेन स्वात्मन्यप्यभवनमुक्तं भवति तथा.............................. ..असत्त्वात् पक्षधर्मोऽनर्थत्वैकान्ते कण्ठः कपाले नास्ति............पटः कटादिर्न भवति नापि रूपादिरिति।**

**यद्येवमित्यादि,** अभावैकान्तवादिनं भावैकान्तवादी उपालभते—यदि घटो भवतीत्युक्तेऽपि

---

भावित्वात् पृथिवीभवनमप्युदकाभ्याद्यभवनमेवेति समाधत्ते—**ननु द्रव्यमपीति**। परः शङ्कते—**न सदितीति** द्रव्यादिसमुदायस्यैव सत्त्वात् द्रव्यादिभावात्मैव सत्, इतरथाऽभावविशेषत्वान्निर्मूलत्वादसत्त्वापत्तिरिति भावः। द्रव्यगुणकर्मणां सदिति भवनात् सत्त्वभवनाविनाभाव्येव द्रव्यभवनमित्याह—**सत्त्वभवनेति**। अथाचार्यं वैशेषिकमतमिदमभाववादिना निराकारयति—**अभावबाधाहेति**—यदि द्रव्यादिभवनं गुणाद्यभवनरूपं न स्यात् तदा द्रव्यगुणकर्मणां भेदो न स्यात्, स्याच्च तेषां सता पर्यायता, त्रयाणामविशेषेण सदिति भवनात्, तथा च सति यथा द्रव्यगुणकर्माणि सन्तीति प्रतीयन्ते तथा तानि द्रव्याणि गुणाः कर्माणीति वा प्रतीयेरन्निति भावः। सर्वं द्रव्यमेवेति न शक्यते वक्तुं गुणकर्मणोरपि सद्भावादित्याह—**दृष्टश्चेदमिति**, एवञ्च गुणकर्मभिन्नस्यैव द्रव्यस्य सत्त्वात् द्रव्यकर्मभिन्नस्यैव गुणस्य सत्त्वाद्द्रव्यगुणभिन्नस्यैव कर्मणः सत्त्वाच्च न द्रव्यमेव सर्वमिति युज्यते, एवञ्च द्रव्यादिभवनादेर्गुणाद्यभवनरूपतानङ्गीकारे कस्माद्विशेषात् द्रव्यमेव सर्वमिति न भवति सदेव सर्वमिति भवतीति भावः। तदेवमितरव्यतिरिक्तापरस्यैव सद्रूपत्वात् न द्रव्यादिव्यतिरिक्तं सदिति किमपि वस्त्वस्तीति सत्त्वभवनाविनाभाविद्रव्यभवनमिति यदुच्यते तद् दृष्टविरुद्धमित्याह—**न चेति**। **चटकेति** त्वदुत्तरेणानेनापि गुणकर्माभावाद्द्रव्यं सदिति भवति गुणकर्मणी च तदभावात् सती भवत इत्यादिना गुणाद्यभवनसहितमेव द्रव्यभवनं द्रव्याभवनसहितमेव च गुणादिभवनमुक्तं भवतीत्यतोऽभावसहित एव भाव इत्येवमत्राशयः स्यादिति प्रतिभाति, मूलं तु नोपलब्धम्। अथ भवनं कस्यापि नास्त्येव किन्तु तद्भवनतयाऽभिमतं यत्तदितराभवनमेव इत्यभावैकान्तवादिमतनिरसनायाह—**यद्येवमिति**। व्याचष्टे—**अभावैकान्तवादिनमिति**, नास्ति भावो नामोपलब्धिलक्षणप्राप्तः कश्चित्, घटो भवति पटो भवतीत्याद्युक्तयश्च भ्रमनिमित्तसमारोपिताकारान्तरनिषेधायैव प्रवर्त्तन्ते, पटो न भवति घटो न भवतीति, यथा शुक्तौ रजताकारनिवारणाय नेदं रजतमिति प्रवृत्तिः, तथा भवनमप्यभवनमेव, भवतीत्युक्तेऽपि न भवतीत्येवोक्तत्वात्, नहि भवनं वस्तु वस्तुधर्मो वा घटो भवति पटो भवतीत्येवं वस्तुधर्मतयैव प्रतीतेर्वस्तुत्वासम्भवात्, वस्तुधर्मत्वमपि न सम्भवति परितो भवनाभावात्, परितो भवने हि भवनमेवैकं भवेच्च वस्त्विति तदभावे तदप्यसत्, एकदेशेन भवने देशस्यैव भवनात् वस्तु अभवनात्मकमेव, तथा देशोऽपि न सर्वात्मना भवति, तदभावतस्तदभावात्, एकदेशेन चेत्तथैव यावत् परमाणुशो रूपादिशोऽभवन-

---

१ डा. इदं पदद्वयं नास्ति। २ सि. क्ष. °पृथाभाव°।

अभाव एवोक्तो भवति पटो न भवतीति तर्हि[1] भवतीत्युक्तेऽपि न भवति–नार्थ इत्येवोक्तं भवतीति प्राप्तम्, साधनमप्यत्र परितो भवनाभावात्, खपुष्पवदिति, स्यान्मतं ननु परितः पटादावभवन्नेव कटः सिद्ध्यति, तस्मादनैकान्तिक इति चेन्न विपक्षाभावात्, ननु परितो वचनेनेत्यादि–परितो वचनं सर्वत्रार्थम्, तेन स्वात्मन्यप्यभवनमुक्तं[2] भवति, तस्मान्नानैकान्तिकता, तथेत्यादिरस्य न्यायस्य व्याप्तिप्रदर्शनार्थो[3] दण्डको यावदसत्त्वा[त्] पक्षधर्मोऽनर्थत्वैकान्त इति, प्राग्व्याख्यातोऽर्थः, कण्ठः कपाले नास्तीत्यादि तस्य निद-र्शनम्, पटः कटादिर्न भवति नापि रूपादिरिति, अनिष्टञ्चैतत्।

अत्र भावाभाववाद्युत्तरमाह—

**ननु परितोऽप्यभवनमेव त्वदुक्तं साधयत्यस्मदिष्टं भावमपि कटोऽपि कट इति भवन्नेव घटपटौ न भवतीति, भवन् गुण इत्यभवनात्, ननु गुणोऽपि भवन्नेव कट इति न भवति विशेषेण, न, द्रव्यमित्यभवनात्, अत्रोच्यते यदि न भवत्येव...............ततो घटस्यापि ............................घट इति भवतीति**

(**नन्विति**) ननु परितोऽप्यभवनमेव त्वदुक्तं साधयत्यस्मदिष्टं भावमपि, तद्यथा कटोऽपि कट इति भवन्नेव घटपटौ न भवति घटत्वपटत्वाद्यभावः कटस्य कटात्मभवनाविनाभावीति भावभवनमात्र-मुच्यते, इतर आह–भवन् गुण इत्यभवनात्, अत्रापि गुणाभावानुविद्ध एव कटभावो गुणत्वेनाभवनात्, ननु गुणोऽपीत्यादि, गुण इति विधिना भवन्नेव कट इति न भवति विशेषेण नियमेन व्यावृत्त्येति, इतर

मेवेति नास्ति भवनं किञ्चिदित्याशय स्यादिति भाति। **भवतीत्युक्तेऽपीति** भवतीत्युक्तौ यथा न भवतीत्युक्तं भवति तथैव तत्रापि पुनर्भवतीत्यस्य न भवतीत्यर्थत्वे पुनरपि तथेति न कश्चिदर्थ कदापि सेत्स्यतीति नार्थ कश्चिदस्ति परितो भवनाभावात् खपुष्पवदिति भाव। यद्वाऽभाववादिना घटो भवतीत्यनेन पटो न भवतीत्युक्तं भवत्यतोऽभवनमेव सर्वमित्युक्तौ भाववादी आह–पटो न भवतीति भवता किं पटभवनप्रतिषेध क्रियते? तथा सति पटो भवतीत्यभ्युपेतम्, यदि तत्रापि भवतीत्यस्य न भवतीत्यर्थ उच्यते तर्हि तत्रापि तथैव पर्यनुयोगान्न कश्चिदर्थ सिद्ध्यतीति परित सर्वप्रकारेण भवनस्यैवाभावात् प्रतियोग्यप्रसिद्ध्याऽभवनमपि कथं स्यादिति भाव। ननु पटादौ कटोऽभवन्नपि भवतीति परितो भवनाभावो व्यभिचरतीत्यभाववादी शङ्कते–**स्यान्मतमिति**। साध्याभाववत्त्वाभिमतः कटादिरपि नास्त्येव, सर्वत्र भवन नास्तीति विवक्षिततया न कोऽपि विपक्षो येनानैकान्तिकता भवेदित्याह–**विपक्षाभावादिति**। यथा पटादौ सर्वप्रकारेण कटो न भवति तथा स्वस्मिन्नपि न भवति तस्मान्न कट सिद्ध्यतीति दर्शयितु परित इति शब्दस्यार्थमाह–**परितो वचनमिति**। अत्र तथेत्यादिमूलं सम्यङ्नोपलभ्यते, **तथा द्रव्यक्षेत्रकालाभावैः प्रतिवस्तु परस्परतो भेदं प्रतिवस्तुत्वादसत्त्वात्** पक्षधर्मताहेतोरिति मूलाशयः स्यादिति प्रतिभाति। परितो भवनाभावादिति त्वदीयेन हेतुना स्वतो भवनं सिद्ध्यति, स्वतोऽप्यभवनं चेदेवमेव वक्तव्यं भवनाभावादिति, न तु परितो भवनाभावादिति, विशेषणवैयर्थ्यात्, परितो भवनं नास्तीति शब्द भवनविधायक, कट घटपटौ न भवतीत्युक्तौ कटस्याप्यभवनरूपत्वे क घटत्वपटत्वाद्यभाव. एतेन वाक्येन प्रतिपादित. स्यात्? आश्रयस्यैवाभावात्, तस्मात् कट स्वस्वरूपेण भवन्नेव घटत्वपटत्वाद्यभावात्माऽपीत्यभ्यु-पेयत्वात् कटात्मभवनाविनाभावी घटत्वपटत्वाद्यभाव, एवञ्च कटः घटपटौ न भवतीति वचनं घटत्वपटत्वाद्यभावाविनाभावि-भवनमुच्यत इत्याशयेन भावाभाववादी समाधत्ते–**नन्विति**। साधनप्रकारमाह–**तद्यथेति**, परितो भवनाभावो भवनव्याप्यः, कटे परितो भवनाभावस्य सत्त्वे च स्वतो भवनमप्यस्त्येवेति भाव। सर्वं भवनमभावानुविद्धमेवेत्यभवनरूपमेव, भवन् गुण इत्यभवनात्, अत्र धर्मितयाऽभिमतं कटादिभवनमपि गुणाभावेनानुविद्धमेव, नहि कटो भवन् गुण इति भवतीति वक्तुं शक्यते, तस्मादन्याभावानुविद्धमेव कटभवनं गुण इति न भवति तस्मान्नैकान्तविधिरूपं भवनमस्तीत्याशङ्कते–**इतर आहेति**। गुणो न भवतीत्यत्र गुणोऽपि कटाभावरूप एवेत्यभावैकान्तवाद्यभिप्राय। भावविशेषरहिताभावविशेषस्यासिद्धेः गुणोऽपि स्वतो भव-न्नेव परितो न भवतीति समाधत्ते–**ननु गुणोऽपीति**। ननु गुणस्य स्वतो भवनं द्रव्याभवनमेवेति न भवनं सेत्स्यतीति शङ्कते–

१ सि. क्ष. छा. न तर्हि। २ सि. क्ष. छा. स्वात्मनोऽप्य०। ३ सि. क्ष. छा. प्राप्ति०। ४ सि. क. तस्मा।

आह–न द्रव्यमित्यभवनात्, अत्रापि द्रव्याभावानुविद्धस्त्वदभिमतो गुणभाव इति, अत्रोच्यते यदि न भवत्येवेत्यादि, घटकमर्कटिकया द्रव्यगुणयोर्भावाभावत्वमापाद्य कटादेर्द्रव्यविशेषस्यापादयति गतप्रत्यागतन्यायेन ततो घटस्यापि यावद्घट इति भवतीति, एवमेकान्तभावाभाववादिनो[:] परस्परकृतचोद्यद्वयपरिहारः एवमेव भावाभाववादिनं प्रत्यपि तद्विपर्ययेण तेद्भावनया एकान्तवादिनां विध्यादिनयानां मतेषु परिहारः कार्यः, अथ वा तच्चोद्यस्यात्रावकाश एव नास्ति तेनाप्युभयोभयनयेन सर्वैकान्तवादिना सुनिवर्त्तितत्वात् सकलविकलादेशाभ्यां भावाभावत्वसिद्धेरिति ।

**नन्वेवं विकलादेशपक्षे भावाभावयोः परस्परापेक्षतयाऽव्यवस्थितत्वं परस्परावबद्धनौद्वयवदित्यत्रोच्यते तन्न व्यवस्थितोपकारिस्वरूपत्वात् धृत्यादिवृत्तजगदवस्थावत्, यथा नित्यत्वे पृथिव्यादीनां व्यवस्थितत्वं परस्परोपकारित्वञ्च धृतिसङ्ग्रहपक्तिव्यूहावकाशदानक्रियाभिः सिद्धमेव, अनित्यत्वेऽप्यर्थभवनाविच्छेदात् स्वत्वपरत्वाभ्यां परस्परावबद्धव्यवस्थितोपकारिस्वरूपत्वान्नानवस्था तथा भावाभावयोरिति**

**नन्वेवमित्यादि**, इदमप्यन्यचोद्यं विकलादेशपक्षे उभयोभयवादिनं प्रत्यनिष्टापादनसाधनं गतार्थं यावत् परस्परावबद्धनौद्वयवदिति पूर्वपक्षः, अत्रोच्यते तन्न व्यवस्थितोपकारिस्वरूपत्वात् धृत्यादिवृत्तजगदवस्थावदिति साधनेना[न]वस्थादोषपरिहारः, नित्यत्वे पृथिव्यादीनां व्यवस्थितत्वं परस्परोपकारित्वञ्च धृतिसङ्ग्रहपक्तिव्यूहावकाशदानक्रियाभिः सिद्धं ततोऽनवस्था नैवास्तीत्यत्र का चिन्ता ? किं त्वनित्यत्वेऽप्यर्थभवनाविच्छेदात्—सततभवनस्याविच्छेदात् भावो', व्यवस्थितोपकारित्वस्य, धृत्या भूमिरितरेषामात्मनश्चोपकुरुते, जलं सङ्ग्रहेण, अग्निः पक्त्या, वायुर्व्यूहेन, सर्वेषामवकाशदानादाकाशमित्यव्यवस्थितोपकारिस्वरूपत्वं सिद्धमनवस्थानाभावश्च, अक्षरार्थो भाष्ये गमितः, स्वत्व[प]रत्वाभ्यामिति स्वरूपसिद्धौ पटरूपसिद्धौ च

**न द्रव्यमितीति** त्वदभिमतो गुणभावो द्रव्याभाव एवेत्यर्थः । गुणादिभावं द्रव्याद्यभवनशब्देन वदता भवता भावविशेषसहित एवाभावविशेष उक्तः, द्रव्याभावानुविद्धो गुणभावः, गुणाभावानुविद्धश्च कटभावः, कटाभावानुविद्धश्च घटभाव इत्याशयेन समाधत्ते–**यदि न भवत्येवेति** । ननूभयोभयनये सामान्यस्य विशेषत्वाद्विशेषस्यापि सामान्यत्वात् परस्परापेक्षसिद्धिकत्वेन भावाभावयोः परस्परस्वरूपरक्षणाय परस्परावबद्धनौद्वयवत् अकिञ्चित्करत्वेनाव्यवस्थितत्वमित्याशङ्क्य समाधत्ते–**नन्वेवमिति, विकलादेशपक्ष इति** पर्यायार्थादेशात् भेदप्रधानपक्षे तदुपचारपक्षे वा भेदानां व्यवस्थितस्वरूपताया आवश्यकत्वेन तत्रानिष्टापादनं मुख्यमित्याशयो भाति । सामान्यं हि स्वस्वरूपं विहाय न विशेषो भवति, विशेषो वा तथा, येनाव्यवस्थितत्वमनयोः स्यात् किन्तु स्वस्वस्वरूपे विद्यमानस्यैव तथेति नाव्यवस्थितस्वरूपत्वमित्याशयेनोत्तरयति–**तन्नेति**, उभयस्योभयात्मकत्वेऽप्यनुगतिव्यावृत्त्योः स्वस्वरूपेण व्यवस्थिततयाऽबाध्यमानप्रमाणविषयत्वान्नाव्यवस्था, पूर्वोत्तराकारपरित्यागोपादानतयैकस्य वस्तुनोऽनुभूयमानत्वादनुवृत्तिस्वरूपतया व्यवस्थितो भावोऽनुवृत्तिबुद्धिलक्षणोपकारं व्यावृत्तिस्वरूपतयाऽवस्थितश्चाभावो व्यावृत्त्यादिबुद्धिलक्षणोपकारञ्च करोतीति भावः । तत्र निदर्शनमाह–**धृत्यादीति** नित्यानित्यात्मकस्य पृथिव्यादेः नित्यत्वे भेदव्यवस्थां दर्शयति–**नित्यत्व इति** नित्यत्वस्वरूपापरित्यागेनैव तत्कार्यकर्त्तृत्वरूपेण नित्यतयाभवनान्नानवस्थेति भावः । अनित्यत्वेऽपि सामान्यस्वरूपतया भवनमाह–**अनित्यत्वेऽपीति**, भवनलक्षणं सामान्यमस्त्येवेति भावः । एवं भावोऽपि स्वस्व-

१ सि. क्ष. डे. छा. द्रव्यगुणोर्भा० । २ सि. क्ष. छा. तरभावनया । ३ सि. क्ष. छा. वृत्त्यादि० । ४ सि. क्ष. ० छा. भावे ।

तेषां परस्परावबद्धत्वे सत्यप्यनवस्था नास्ति तथा भावाभावयोरिति योऽसौ भवति घटः स पटो न भवति योऽसौ पटो[1] भवति स घटो न भवति, घटो भवन्नेव पटो न भवति, पटो भवन्नेव घटो न भवति तथा भवति न भवति चेत्यपि ज्ञेयं परस्परावबद्धव्यवस्थितोपकारिस्वरूपत्वान्नानवस्थेति ।

**यदि तु नैवं तर्हि पटस्याभावे भाव एव त्वदिष्टविघात्यापद्यते, अभावतुल्यत्वात्, पटवत्, यदि च घटस्य भावः पटस्यापि भावः, भावतुल्यत्वात्, एवमन्तरितद्रव्यत्वसत्त्वादिगुणत्वादिसामान्यविशेषाभ्यां भावाभावात्मकता, ननु तस्य साक्षादेव भवनमभवनमुभयतः, तथा तद्विपर्ययेण, नन्वत एवैवं घटो गुणत्वेन पटद्रव्यादित्वेन च साक्षान्न भवति घटद्रव्यत्वेन भवति, पटः पटद्रव्यत्वेन साक्षाद्भवति, न भवति गुणत्वेन घटद्रव्यादित्वेन च ।**

**यदि त्वित्यादि,** परस्परावबद्धभावाभावत्वाभावे द्वयोरप्येकान्तपक्षयोर्दोषाभिधानम्–पटस्याभावे घटभावाभावस्त्वदिष्टविघात्यापद्यते कोऽसौ ? भाव एव, कस्मात् ? अभावतुल्यत्वात्, पटवदित्यभावैकान्ते दोषः, भावैकान्तपक्षेऽपि यदि चेत्यादि, घटपटादिसङ्कीर्णतादोषः, एवमन्तरितद्रव्यत्वसत्त्वादिगुणत्वादिसामान्यविशेषाभ्यां भावाभावात्मकता, नान्तरिताभ्यामेव, किं तर्हि ? न[2] ननु तस्य साक्षादेव[3] भवनमभवनमुभयतः–सामान्यतो द्रव्यत्वेन स्वेन[ भवनात् ]विशेषतोऽन्यद्रव्यत्वेन पटगतेन गुणत्वेन च घटस्याभवनात्, तथा तद्विपर्ययेण पटस्य, पटघटयोश्च द्रव्यत्वयोर्भेदात्तद्भेदवत्, तद्व्यतिरिक्तद्रव्यत्वस्याभावात्, नन्वत एवैव-

रूपे व्यवस्थित एव तत्तद्रूपेण भवति, अभावोऽपि स्वरूपमजहन्नेव सामान्यरूपो भवतीति दर्शयति–**तथेति** यथा च स्वस्वरूपेण परस्वरूपेण च सामान्यविशेषयोः व्यवस्थितत्वादेव परस्परापेक्षत्वे सत्यपि नास्त्यव्यवस्था तथा भावाभावयोरपीत्यर्थः । तदेव निदर्शयति–**योऽसाविति,** यदि भवनमेव स्वस्वरूपं विहायाभवनरूपं भवेत् तर्हि घटस्य पटाभवनवत् घटाभवनमपि स्यान्न चैवम् किन्तु योऽसौ घटो भवति स पटो न भवति योऽसौ पटो भवति स घटो न भवति, स्वकीयेन साक्षाद्धर्मेण घटत्वेन भवन् घटः परकीयेन साक्षाद्धर्मेण पटत्वादिना न भवतीति भावाभावात्मकत्वेऽपि घटस्य भावविशेषस्य साक्षात् स्वपरद्रव्यादितो व्यवस्थितत्वेन परस्परोपकारित्वाच्च नाव्यवस्था तथा भावसामान्यमपि भवति न भवति चेति भावः । भवनैकस्वरूपत्वेऽभवनैकस्वरूपत्वे च दोषामिधित्सयाऽऽह–**यदि त्विति** । व्याचष्टे–**परस्परेति,** भवनमभवनाविनाभावि, अभवनमपि भवनाविनाभावीति परस्परावबद्धत्वानभ्युपगमे भवनैकस्वरूपत्वेऽभवनैकस्वरूपत्वे च दोषः प्रसज्यत इति भावः । यदि वस्तुनोऽभावैकस्वरूपत्वं तर्हि घटादिभावस्य पटाद्यभावस्वरूपत्ववत् घटाभावस्वरूपत्वमपि स्यात्, अभावत्वाविशेषात्, यथा भावविशेषः पटो घटाभावस्वरूपः, एवं भावोऽप्यभावः स्यादित्यभावैकान्तपक्षे सर्वशून्यतापत्तिमाह–**पटस्याभाव इति,** घटः पटो न भवतीत्यभवनैकान्तस्वरूपत्वे त्वदिष्टं घटस्य घटभावत्वं विहन्यते, अभावैकस्वरूपत्वे घटाभावपटाभावयोरविशेषादन्यतरस्वीकारान्यतरपरिग्रहानौचित्यादिति भावः । यदि च घटो भवतीति घटभवनैकान्तस्वरूपत्वं घटपटादेर्भावत्वाविशेषात् घटस्य घटत्ववत् पटत्वाद्यप्यापद्येत तथा च सर्वसङ्करदोष इत्याह–**यदि चेति** । एवं घटादेर्द्रव्यत्वगुणत्वादिव्याप्यघटत्वपटत्वाद्यवच्छेदेन भावाभावात्मकत्वमुपदर्शितं तथैवान्यव्याप्यधर्मावच्छेदेनापि भाव्यमित्याह–**एवमन्तरितेति,** द्रव्यत्वसत्त्वगुणत्वादेरन्तरिताभ्यां–व्याप्यभूताभ्यां सामान्यविशेषाभ्यामित्यर्थः । द्रव्यत्वाद्यवान्तरधर्मावच्छेदेनैव भावाभावात्मकत्वमिति न नियमोऽपि तु द्रव्यत्वादिनापि घटादेर्भावाभावात्मकता भवत्येवेत्याह–**नान्तरिताभ्यामेवेति** । तदेवादर्शयति–**सामान्यत इति,** घटः स्वनिष्ठेन द्रव्यत्वसामान्येन भवति पटादिगतेन तद्द्रव्यत्वविशेषेण गुणत्वेन च न भवति, पटश्च घटनिष्ठद्रव्यत्वसामान्येन गुणत्वेन च न भवति पटगतेन द्रव्यत्वेन तु भवति तत्तद्द्रव्यत्वापेक्षया व्यतिरिक्तस्य द्रव्यत्वसामान्यस्याभावेन स्वपरद्रव्यत्वाभ्यां भावाभावौ द्रष्टव्यौ, तथा च घटस्य येन धर्मेण भवनं येन चाभवनं तद्विपर्ययेण पटस्य भवनमभवनञ्चेति भावः । एतदेव स्पष्टयति–**नन्वत एवैवमिति** । विपक्षे बाधकमुप-

**१ सि. क्ष. यदसौ पटो न भवति तद्घटो न० । २ सि. क्ष. ननु तस्य । ३ डे. °वा भवनमुभवनमुभयतः छा. °वा भवमु° ।**

मित्यादिना भावयति यावद्द्रव्यादित्वेन चेति, घटो गुणत्वेन पटद्रव्यादित्वेन च साक्षान्न भवति, घटद्रव्यत्वेन भवति, पटः पटद्रव्यत्वेन साक्षाद्भवति गुणत्वेन घटद्रव्यत्वेन च साक्षान्न भवतीति भावाभावात्मकत्वमेवानयोः,

**यदि त्वसौ पटत्वद्रव्यत्वाभ्यां न भवेत् न पटो भवेत्, पटत्वद्रव्यत्वाभ्यामभवनात्, घटवद्गुणवद्वा, यतस्तु पटः इतराभ्यां न भवति तत एवेतरो न भवति यतश्च पटः भवति तत एवेतराभ्यां भवति, अवश्यञ्चैतदेवम्, अन्वयव्यतिरेकाभ्यामर्थस्यावधारणे प्रयोगस्य साफल्यात्, , नीलोत्पलादिवत्,.................................अतस्त्वन्यथा सतोऽप्यभाव एव स्यात् खपुष्पवत् ।**

**यदि त्वसावित्यादि,** अनिष्टापादनसाधनमभ्युपगमे, यदि पटः पटत्वद्रव्यत्वाभ्यां न भवेत् न पटो भवेत्, पटत्वद्रव्यत्वाभ्यामभवनात्, घटवद्गुणवद्वा–घटो गुणो वा नैव भवेत् तत एव, तद्वत्, एवं घटगुणयोरपि साधनाभ्यामनिष्टमापाद्यम्, एतस्यार्थस्य भावना–यतस्त्वित्यादि यावत्तत एवेतराभ्यां भवतीति, अवश्यञ्चैतदेवम्, अन्वयव्यतिरेकाभ्यामर्थस्यावधारणे प्रयोगस्य साफल्यात्, तद्यथा नीलोत्पलादिवत् 'सिद्धे सत्यारम्भो नियमार्थः' (　　　　) यथा रक्तनीलत्वयोः सिद्धयोरन्यतराभावेनान्यतरभावेन चोत्पलं नियम्यते रक्तमेव नीलमेव वेति तथा घटः पट इति वेति, तदर्थभावना भाष्येऽन्यतराभावाभावेऽन्यतरतभावभावे च सतोऽप्यभावप्रसङ्गापादनद्वारेण लोकप्रसिद्ध्यनुपातेन कृता । एतस्य न्यायस्यानभ्युपगमे द्वयोरप्यभावः, तद्दर्शयति–अतस्त्वन्यथेत्यादि अनिष्टापादनसाधनं गतार्थं यावत् खपुष्पवदिति, एवं द्रव्यतो भावाभावात्मकता व्याख्याता ।

**कालतोऽपि चैकमेव भूतमभूतञ्च, कालाभेदात्, अतीतानागताभ्यामसंमृष्टतत्त्वा मृत् शिवकादिना वर्त्तमानैककाला न तथा यथा लोको वदति पलालमग्निर्दहतीति, यदि तद्दह्यत एव तर्हि भिन्नावस्थस्य पलालस्य पूर्ववद् भस्मीकरणानुपपत्तेः, अन्तर्देशः पलालस्य दह्यते तच्च पलालमेवेति चेत् तथापि आकाशाद्यमूर्त्तद्रव्यस्य देशस्यापि भस्मीकरणानुपपत्तेः, अथाकाशव्यतिरेकेण पलालमेव दह्यत इति तदपि न, च्विप्रत्ययान्तेन भस्मीकरणेनान्यो दाहो वर्त्ततेऽन्यच्च पलालमिति भिन्नार्थत्वबोधात्, अथाप्येकत्वं पलालस्येष्यते ततस्तस्य दाह्यता नास्ति भस्मत्वाभूतेः, तथा घटो भिद्यते इति न घटते कालभेदात् यदि तद्भिद्यत एव तर्हि भिन्नावस्थस्य घटस्य भिदानुपपत्तिः पूर्ववत् ।**

---

निबध्नाति–**यदि त्वसाविति** । तदेव निरूपयति–**अनिष्टापादनेति,** अन्तरितेन पटत्वेनानन्तरितेन द्रव्यत्वेन सामान्यविशेषेण यदि पटो न भवति तर्हि स पटस्वरूपमेव न स्यात् घटवत् गुणवद्वा, घटो हि पटत्वतद्द्रव्यत्वाभ्यां न भवतीति पटस्वरूपमपि न भवति तद्वदिति भावः । एवं घटो यदि घटत्वद्रव्यत्वाभ्यां न भवेत् तर्हि घट एव न भवेत् गुणोऽपि यदि गुणत्वसत्त्वाभ्यां न भवेत् गुणो नैव भवेत् पटादिवदिति भाष्यमित्याह–**घटो गुणो वेति** । पटभवनं हि द्विविधं पटत्वरूपेण द्रव्यत्वरूपेण च तत्र यद्युभय रूपेणापि पटस्य भवनं न स्यात् तर्हि तस्य भवनमेव न स्यात्, विशेषाभावकूटस्य सामान्याभावगमकत्वात्, यतस्तु पटो भवति तत एव पटत्वद्रव्यत्वाभ्यां भवतीत्याह–**यतस्त्विति** । अन्यतरस्य रक्तत्वादेरभावे यदि नीलत्वस्याप्यभावः, अन्यतरस्य नीलत्वस्य वा भावे रक्तत्वादेरपि यदिभावस्तदोभयथापि नैवोत्पलं स्यादित्यतस्त्वमेव तस्येति दर्शयति–**अन्यतराभावेति** । अथ कालतो भावाभावात्मकतां दर्शयति–**कालतोऽपि चेति** । अस्य

**कालतोऽपि चेत्यादि**, विनाशोत्पादयोरेककालत्वात् पिण्डशिवकादीनां पिण्डो न भूतः शिवको भूत इत्येकमेव भूतमभूतञ्च, काल[ा]भेदात्, अतीतानागताभ्यां वृत्तिभ्यामसंसृष्टतत्त्वा [भूत]शिवकादिना वर्त्तमानैककाला, न[तथा] यथा लोको वदतीत्यविज्ञातार्थतत्त्वो लोको मिथ्या भूत इति वैधर्म्योदाहरणं पलालमग्निर्दहतीति, एतत्स्ववचनानुमानप्रत्यक्षविरुद्धं वचनमिति, तद्भावयति- यदि तद्दह्यत एवेत्यादि यावद्भस्मीकरणानुपपत्तेः पूर्ववत्-पलालकालवत्, कालस्य भिन्नत्वाभ्युपगमात्, परः परिहरमानः-अन्तर्देशः पलालस्य दह्यते स च पलालमेवेति, तस्योत्तरं तथापीत्यादि गतार्थं यावद्देशस्यापि भस्मीकरणानुपपत्तेरिति, अथाकाशव्यतिरेकेणेत्या[दि], स्यान्मतं द्रव्यार्थिकनयमतेऽभेदात् पलालादिमूर्त्तद्रव्येष्वेव सम्भवादाकाशाद्यमूर्त्तद्रव्यव्यतिरेकेण पलालमेव दह्यते नाकाशादीति, तदपि नेत्यादि, अभूततद्भावेऽर्थे च्विप्रत्ययः, तदन्तेन भस्मीकरणेनान्यो दाहो वर्त्तते, अन्यच्च पलालमिति भिन्नार्थत्वादपरिहारः, अथाप्येकत्वं पलालस्येष्यते द्रव्यार्थाभेदात् ततस्तस्य दाह्यता नास्ति, भस्मत्वाभूतेरिति, तथा घट

---

नयस्य ऋजुसूत्रविशेषत्वात् तेन च वर्त्तमानत्वव्याप्तभावत्वाभ्युपगमेन भावत्वस्यातीतानागतसम्बन्धाभावव्याप्यतया विभिन्नकालिकविनाशोत्पादावच्छिन्नैकद्रव्यस्याभावात् उत्पादस्यैव विनाशाव्यभिचारित्वमभ्युपगम्यत इत्याशयेनाह-**विनाशोत्पादयोरिति**, उत्पादकालस्यैव विनाशकालत्वादिति भावः । तथा च शिवकभवनमेव पिण्डविनाशलक्षणमभवनमिति वर्त्तमानैककालावच्छेदेनापि वस्तु भवनाभवनात्मकमिति दर्शयति-**पिण्डेति**, पिण्डशिवकस्थासकादिभावाना मध्ये इत्यर्थ । हेतुमाह-**कालाभेदादिति** । वर्त्तमानैककालावच्छिन्नं प्रत्युत्पन्नमेव वस्तु न विभिन्नकालावच्छिन्नावस्थासंसर्गमनुभवतीत्याह--**अतीतेति** । पलालमग्निर्दहतीति यल्लोको वदति सा लोकोक्ति वस्तुतत्त्वविज्ञानविधुरताप्रयुक्तैवेति दर्शयितु वैधर्म्यदृष्टान्तं निदर्शयतीत्याह-**यथा लोक इति** । कथं मिथ्येत्यत्राह-**एतदिति** पलालमग्निर्दहतीति वचनमित्यर्थ , **यदि तद्दह्यत एवेति**, दहधातूपात्तप्रधानीभूतव्यापारजन्यफलाश्रय एवेत्यर्थः, तादृशफलाश्रयीभूतं पलालत्वं तादृशफलजनकक्रिया चानुपपद्यते, पलालत्वस्य तथाविधफलाश्रयत्वावस्थाविलक्षणत्वात्, दह्यमानदाहाश्रययोरेककालत्वात् पलाले दहनक्रियान्वयस्यायोग्यत्वात् पलालं दहत्यग्निरिति व्यवहारो विरुद्ध एवेति भावः । निदर्शनमाह-**पूर्ववदिति**, पलालकाले यथा भस्मीकरणं नोपपन्नं पलालकालस्य भस्मीकरणकालापेक्षया भिन्नकालत्वात् तथा दह्यमानदग्धयोरेककालत्वे एतत्पलालस्यापि भिन्नकालत्वेन यो य. पलाशो नासौ दह्यते यश्च भस्मभावमनुभवति नासौ पलाल इति दाहाश्रयस्य च पलालत्वासम्भवेन पलालस्य भस्मीकरणानुपपत्तिरिति भाव' । यद्यप्येवं पलालस्य भस्मीभावोऽनुपपन्न एव तथापि पलालावयवा अन्तर्देशरूप आकाशो वा दह्यते, देशदेशिनोरभेदात् ते देशाः पलाल एवेति तस्यापि भस्मीकरणमिति शङ्कते-**अन्तर्देश इति**, समुदायाभिधायिना शब्दाना अवयवेषु वृत्तिदर्शनादिति भाव. । समाधत्ते-**तथापीति**, अन्तर्देशस्य पलालत्वेऽपि तदवस्थाया. दह्यमानदग्धत्वावस्थाभिन्नत्वेन तेन समं दहनादिक्रियासम्बन्धस्यानुपपत्तिरिति भाव', यद्वा देशस्याकाशात्मकस्यामूर्त्तद्रव्यस्य मूर्त्तद्रव्येष्वेव सम्भविनो दाहस्याऽयोग्यत्वादिति भाव । यद्यप्याकाशपलालयोर्द्रव्यार्थिकमतेनैकत्वं परन्तु पर्यायार्थिकस्यास्य मतेन भेदात् पलालादिमूर्त्तद्रव्येष्वेव दाहस्य सम्भव', अभेदपक्षेऽप्येवमेवेति पलालं दह्यत इत्युच्यत इति शङ्कते-**अथाकाशेति** । दह्यत इति हि दह भस्मीकरण इति धातुनिष्पन्नं रूपम्, भस्मीकरणञ्चाभस्मनो भस्मकरणमिति च्विप्रत्ययेन निष्पन्नम्, तथा चाभस्मनः पलालस्य भस्मकरणमित्युक्त्यैव पलालमन्यत् भस्मान्यदिति गम्यते तस्मात् कथं पलालं दह्यते, यद्यत्यन्तभिन्नयोरपि दाहदाह्यभावस्तर्हि न पलालमेव दह्यते किन्तु सर्वं दह्यत इति स्यादिति समाधत्ते-**अभूतेति** । अथ द्रव्यार्थिकनयात् पलालदाहयोरभेद इष्यते तर्हि दाहस्य पलालस्वरूपान्तर्गतत्वेन पूर्ववददाह्यतैव तस्य भवेदित्याह-**अथाप्येकत्वमिति** । हेतुमाह-**भस्मत्वाभूतेरिति**, भस्मभावानापन्नत्वात् भिन्नावस्थत्वादिति भाव. । यथा लोको वदति घटो भिद्यत इति तन्न घटते घटकालभेदकालयोर्भिन्नत्वात्, भेदाश्रयो हि कपालशकलः, स च न घट इति भिन्नविषयत्वं घटभेदयोरित्याह-**तथा घट**

---

१ सि. क्ष. °कालाचवा । २ सि. क्ष. डे. यथालोकवत् इत्य० । ३ सि. क्ष. °कत्याकाम्मतं ।

इत्यादि, कालत एव[भावा]भावात्मकत्वविपर्ययेऽप्युदाहरणं पूर्ववद्गतार्थं[स]प्रसङ्गं, भिदेः कपालविषयत्वात्, घटस्योर्ध्वताद्याकारत्वात् कालभेदादनुपपत्तिः, प्रस्तुतघटोदाहरणे भावयितुं उपादानमस्येति, अथवा पूर्वं घटपटावुदाहृतौ, इह दर्शनविपर्ययेऽप्युदाहरणद्वयम्, तथा च क्षेत्रतो भावतश्च द्वे द्वे वक्ष्यति, भावनादृढीकरणार्थत्वात् क्रियान्तरगतत्वभावनातो न्यायव्याप्तिप्रदर्शनात्।

**क्षेत्रतः शून्यं................तिष्ठति गच्छति................भावतोऽसंयतः प्रव्रजति कथं घटते? एवमेव भव्यः सिद्ध्यतीति, कुम्भं करोतीत्यादावप्याह निर्वृत्त्युत्तरकाले च कृतः कुम्भ इति न तथा घटते, यदि स कुम्भ एवानिर्वृत्तोऽपि न क्रियते, भूतत्वात्, अन्त्यमृद्वत्, अथाभूतः, न क्रियते सः, अभूतत्वात्, खपुष्पवत्, कथमसत् कुम्भ उच्यते वा, अथोच्येत सत्यं प्रागभूत इदानीं क्रियते, क्रियमाणश्च भवतीति, न, भूताभूतविकल्पद्वयानतिवृत्तेः क्रियाऽभावः, न कस्याञ्चिदप्यवस्थायां कुम्भो जायत इति का क्रिया? क्रियमाणमेव हि क्रियते मृदाहरणादि।**

**क्षेत्रतः शून्यमित्यादि,** प्रवेशगमनस्थानानुपपत्तिः गतार्था तिष्ठति गच्छति विपर्ययेण प्रासङ्गिकमुदाहरणम्, भावतोऽसंयत इत्यादि, अनादिकालसम्बद्धदर्शनचारित्रमोहनीयोदयजाया अविरतेः पृथक् भावः प्रव्रज्या-प्रकर्षव्रजनं विरतिः, सा कथमसंयते घटते? एवमेवेत्येकस्य भावाभावात्मकत्वाधिकारानुवृत्त्या भावतः सिद्धभव्यकालभेदादयुक्तमित्युदाहरति, अथ वैकस्मिन्नेवोदाहरणे द्रव्यादिचतुर्विधत्वं योजयतीत्याह—कुम्भं करोतीत्यादावप्याह—मृन्मर्दनकालेऽप्याह, कुम्भं करोतीति कुम्भकारः, अपिशब्दात् करणकाले निर्वृत्त्युत्तरकाले च कृतः कुम्भ इति, न तथा घटते, यथा लोको वदतीति वर्त्तते, यदि स कुम्भ एवानिर्वृत्तोऽपि मृदवस्थायां न क्रियते भूतत्वात्, यद्भूतं तन्न क्रियते, यथाऽन्त्या[मृ]त्, अथाभूतः

**इति।** एवं द्रव्यक्षेत्रकालभावैरित्यादिग्रन्थेन भावाभावात्मकत्वव्यवस्थानाय घटदृष्टान्त उपन्यस्तः, तत्र कालतो भावाभावात्मकत्वभावनाय तद्विपर्ययेऽपि इदमुदाहरणमनुरूपमिति दर्शयति-**प्रस्तुतघटोदाहरण इति।** प्रकारान्तरेण द्वितीयोदाहरणग्रहणकारणमाह-**अथवेति** पूर्वं 'तथा तद्विपर्ययेणे'ति ग्रन्थे घटपटौ निदर्शितौ तदनुरोधेन चात्राग्रेऽपि निदर्शने द्वे द्वे प्रदर्शिते इति भावः। तथा प्रदर्शनफलमाह-**भावनेति।** भावतो भावाभावात्मकतामाह-**भावतोऽसंयत इति,** असंयतः प्रव्रजति भव्यजीवः सिद्ध्यतीत्युदाहरणद्वयं न घटते, एकपर्यायस्यापरपर्यायासंस्पर्शात्, असंयतपर्यायस्य भव्यजीवतापर्यायस्य च प्रव्रज्यापर्यायात् सिद्धत्वपर्यायाच्चात्यन्तभिन्नत्वात्, यद्यसंयतो जीवः नासौ प्रव्रजति यदि तु प्रव्रजति न तर्ह्यसावसंयत इत्यतोऽसंयतः प्रव्रजति, भव्यजीवः सिद्ध्यतीत्यादिप्रयोगा न घटन्त इति भावः। उदाहरणान्तरमाह-**एवमेवेति,** असंयतत्वप्रव्रज्याकालयोर्भेदादयुक्तत्ववदित्यर्थः, उदाहरणान्तरसाफल्यमाह-**एकस्येति।** घटोदाहरण एकस्मिन्नेव भावाभावात्मकत्वभावना द्रव्यक्षेत्रादिभिर्दर्शयितुमाह-**अथ वेति,** आदौ मृन्मर्दनकाले करणकाले च कुम्भं करोतीत्याह-लोकः, उपर्युत्तरकाले च कृतः कुंभ इत्याह तदेतन्न घटते, अस्य मते न कश्चित् कुम्भकारः शिवकादिपर्यायस्य, कुम्भं करोतीति कुम्भकार इत्यभिधानं न सम्भवति, कुम्भपर्यायसमये स स्वावयवेभ्य एव निर्वृत्त इति कुम्भकारो नास्त्येव, निर्वृत्त्युत्तरकाले तु कुम्भः कृत इति न तदानीमपि तस्यापेक्षेति। आद्यावस्थायां नासौ कुम्भ इति दर्शयति-**यदि स इति।** अनिर्वृत्तावस्थायामपि यदि कुम्भो भूतस्तर्हि न क्रियमाणः स्यात्, यद्धि निष्पन्नं तन्न क्रियते यथाऽन्त्या कुम्भपर्यायाक्रान्ता मृत्, अन्यथा करणव्यापारानुपरमः स्यात्, अभूतत्वपक्षे दोषमाह-**अथाभूत**

१ सि. क्ष. °प्तिप्र°। २ सि. क्ष. एकमेयोदाहरणं। ३ सि. क्ष. °कालो।

क्रियत इति मन्यसे न क्रियते सः, अभूतत्वात् खपुष्पवत्, कथमसन् कुम्भ उच्यते वा, अथोच्येत पक्षद्वयानाश्रयेण परिहारसमर्थं मत्वा पक्षान्तरं संश्रित्य, सत्यं, प्रागभूत इदानीं क्रियते क्रियमाणश्च भवतीति, अत्रापि भूताभूतविकल्पद्वयानतिवृत्तेः, यद्यभूतो न तर्हि कुम्भः स पटादिवत्, कुम्भत्वेनाभूतत्वात्, न क्रियते नापि कुम्भ इति वक्तव्यः, भूतत्वेऽपि घटादिवच्च सान्निध्ये कृते करणवैयर्थ्यान्न क्रियते, अथाभूतोऽपि पिण्डादिः स्वपक्षे रागात् लोकानुवृत्त्या वा कुम्भ उच्यते पृथिव्यपि ते कुम्भ इति प्राप्ता, कुम्भत्वेनाभूतत्वात्, त्वदिष्टक्रियमाणकुम्भवत्, ततश्च क्रियाभावः, पृथिव्यर्थक्रियावैयर्थ्यवत् कुंभार्थक्रियाया अभावः, तद्भावयति–न कस्याञ्चिदप्यवस्थायामित्यादि यावत् क्रियेति, द्रव्यतः सर्वप्रदेशात्मकस्य परमाणुमात्रेऽवरुद्धत्वात् क्रिया[याः]द्रव्यान्तरे त्वभावादभावः, क्षेत्रतो बुध्नमध्योर्द्ध्वादिभागावष्टब्धक्षेत्रव्यापित्वात् कतमो घटः क्रियते, कालतः प्रतिक्षणमन्योन्यप्रदेशस्पन्दावरोधात्, भावतः सर्वसंस्थानरूपादिसमाहारात्मकत्वे घटस्य भावं भावं प्रति पृथक्त्वात् का क्रिया? यस्मात् क्रियमाणमेव तु क्रियते मृदाहरणादीति चतुर्थोऽप्येतदुदाहरणम्।

अपर आह—

**कथं तर्हि सोऽक्रियमाणः कुम्भो जातः? को वा ब्रवीति जात इति, अहन्तु लोकमेवायुक्तवादिनं मन्ये द्रव्यादितो जन्मविनाशसमत्वात् भावाभावभाव एव वस्तु, स भावाभावात्मकोऽर्थो न जायत इति किं शक्यो वक्तुम्? ओमित्युच्यते, विनश्यत्वात्, पूर्ववत्, न विनश्यतीत्यपि शक्यं वक्तुम्, जायमानत्वात्, उत्तरवत्, निर्वर्त्त्यविकार्यकर्मिकासु सर्वासु क्रियास्वेषैव वार्त्ता।**

---

**इति,** अभूतत्वे क्रियमाणता न स्यात्, यद्धि सर्वथाऽभूतं तन्न क्रियमाणं दृष्टम्, यथा खपुष्पादि, यथा वा पिण्डादिपर्यायकाले घटोऽभूतः तथा शिवकस्थासकोशकुशूलादिपर्यायकालेऽपीति सर्वदाऽभूतत्वान्न क्रियेतासाविति कथमसन् घट इत्युच्येतेति भावः। अथ पक्षान्तरं प्रागभूतमपीदानीं क्रियत इत्येव रूपं दर्शयितुमाह–**अथोच्येतेति**। प्रतिक्षिपति पूर्वविकल्पद्वयोपन्यसनेन–**अत्रापीति**। अभूतपक्षे दोषमाह–**यद्यभूत इति,** प्राक्कालावच्छेदेनाभूतं एतत्कालावच्छिन्नं यदस्तु तद्घटाभवनरूपञ्चेत् न स कुम्भः क्रियते, कुम्भ इति वा वक्तव्यः कुम्भत्वेनाभूतत्वात् कुम्भत्वेन भूत एव कुम्भः क्रियते तथा वक्तव्यश्च भवति नान्यः पटादिरिति भावः। पिण्डादेर्यदि कुम्भत्वेन भूतत्वमिष्यते घटवन्निर्वृत्तत्वेन करणं व्यर्थमेव स्यात्, अतो न क्रियते इत्याह–**भूतत्वेऽपीति**। अभूतोऽपि पिण्डादिर्यदि कुम्भ उच्यते तदभूतत्वाविशेषात् पृथिव्यादयपि कुम्भः स्यादित्याह–**यथाभूतोऽपीति**। भवतु नाम को दोष इत्यत्राह–**ततश्चेति**। द्रव्यादितः क्रियाया अभावमाह–**द्रव्यत इति** सर्वप्रदेशात्मकघटादिद्रव्यस्य विरुद्धधर्मानुषङ्गाद्भेदप्रसक्त्या विभागे क्रियमाणे परमाणावेव विश्रान्ततया तस्यैव वास्तविकद्रव्यत्वात् तत्रैव क्रिया सम्भाव्येत नासौ घटः, प्रदेशान्तरे च क्रिया नास्ति, तस्मात् द्रव्यतो घटे क्रियाभावात् कतमो घटः क्रियत इति भावः। क्षेत्रतः क्रियाभावमाह–**क्षेत्रत इति** घटो हि बुध्नमध्योर्द्ध्वादिभागावष्टब्धक्षेत्रव्यापी, क्रिया तु अवयवावष्टब्धक्षेत्रवर्तिनीति न घटे क्रियाऽस्तीति भावः। कालतस्तमाह–**प्रतिक्षणेति,** घटादेः प्रतिक्षणमन्यान्यप्रदेशेष्ववरुद्धत्वात् कतमो घटः क्रियत इति भावः। एवं भावतोऽपि निखिलसंस्थानरूपादिसमुदायात्मको घट इति प्रतिभावं घटस्यान्यत्वात् न क्वापि क्रिया युज्यत इति क्रियाया अभाव इत्याह–**भावत इति**। ननु यदि भूताभूतविकल्पद्वयानतिवृत्ते क्रियाया अभावस्तर्हि अक्रियमाणः कथं कुम्भो जातः, न ह्यक्रियमाणं कुम्भादि भवति, अन्यथा खपुष्पादेरपि जातत्वापत्तेरित्याशङ्कते–**कथं तर्हीति**। व्याचष्टे–

**(कथमिति)** कथं तर्हि सोऽक्रियमाणः कुम्भो जातः, क्रियाया अभावात्, अक्रियमाणत्वात् [न] कुम्भो जायते खपुष्पवदिति प्राप्तम्, अनिष्टञ्चैतत्, लोकप्रसिद्ध्युपरोधित्वादिति, अत्रोच्यते, को वा ब्रवीति जात इति, अहन्तु लोकमेवायुक्तवादिनं मन्ये, द्रव्यादितो जन्मविनाशसमत्वात्–य एव जातः स एव विनष्टो यत्रैव च तत्रैव, यदैव तदैव, यथैव तथैवेति भावाभावयोर्भावो–भवनं स एव भावाभावभावो वस्तु, सद्-सदात्मकभवनं वस्तुत्वात्, पूर्वाभाव एव भावोऽस्य पिण्डादेः–पूर्वभावस्याभावो विनाशः, स एवोत्तरो भावो जन्मेति जन्मविनाश[यो]र्लक्षणम्, तयो[र्व]स्तुत्वात्, इतर आह–स भावाभावात्मकोऽर्थो न जायत इति किं शक्यो वक्तुमिति, ओमित्युच्यते, स न जायत इति शक्यो वक्तुमिति, कस्मात्? विनश्यत्वात्, घटावस्था हि जन्म, सा विनश्यदवस्थैव, उक्तन्यायात्, पूर्ववदिति[1], विनष्टानन्तरघटावस्था[व]न् (?) न विनश्यतीत्यपि शक्यं वक्तुम्, जायमानत्वात्, उत्तरवत्–घटावस्थावदिति, एतदुदाहरणं निर्वर्त्यघटादिकर्मविषयासु करणपचनादिक्रियासु विकार्यपलालादिविषयासु च दहनादिक्रियासु सर्वास्वपि तास्वेषैव वार्त्ता नास्ति काचित् क्रियेति,

ग्रामं गच्छतीत्यादिप्राप्यक्रियासु कथमिति चेत्—

**प्राप्यकर्मक्रियास्वपि च कासुचित्, कासुचित्तु हिमवदादित्यश्रयणदर्शनादिषु नैषा वार्त्ता, कृतदग्धगतादिशब्देश्चोक्तानां क्रियाणां कृतत्वानुपपत्तेः सुतरां प्रयोगाभावः, एवं तावद्व्युत्पन्नशब्दानां क्रियावाचिनां नाम्नां शुक्लादिगुणशब्दानाञ्च निर्विषयता, द्रव्यशब्देष्वपि उक्तन्यायेन तदसंस्पर्शात् कुतः तत्त्वोपनिपातिवचनम्?**

**प्राप्यकर्मक्रियास्वपि च कासुचिदिति,** गच्छतिप्रव्रजत्यादिषु भावितम्, कासुचित्तु

**क्रियाया अभावादिति** क्रियाया अभावादक्रियमाणः, अक्रियमाणत्वादसौ न कुम्भो जायते, खपुष्पवदिति भावः । लोकप्रसिद्धिप्रतिबन्धकत्वेन न जायत एवेत्यनिष्टमभ्युपगन्तुमित्याह–**अनिष्टञ्चैतदिति** । नानिष्टमतत्, किन्त्विष्टमेव, लोकप्रसिद्धिस्त्वयुक्तैवेत्याह–**को वा ब्रवीतीति** । द्रव्यक्षेत्रकालभावैः जन्मविनाशयोरेककालत्वादिति हेतुमाह–**द्रव्यादित इति,** य एवेति द्रव्यतः, यत्रैवेति क्षेत्रतो यदैवेति कालतो यथैवेति भावतः, एकद्रव्यक्षेत्रकालभावावच्छेदेन जन्मविनाशाभ्यां भवनात्मकमेव वस्तु इति दर्शयति–**भावाभावयोरिति** । पूर्वभावस्य पिण्डस्याभावः शिवककाले स एव विनाश उच्यते, उत्तरो भावः शिवकादि जन्म उच्यत इति विनाशजन्मनोर्लक्षणमादर्शयति–**पूर्वभावस्येति** । एवञ्च वस्तुनः उत्पादविनाशात्मकत्वमुक्तं भवति, भावैकदेश उत्पादस्तथा च भावो न जायत इति प्रसक्तं तत्किं युक्तमिति पृच्छति–**स भावाभावात्मक इति** । तत्रेष्टापत्तिमाह–**ओमिति** । हेतुमाह–**विनश्यत्वादिति** विनश्यदवस्थत्वात्, यद्धि विनश्यदवस्थं तन्न जायते घटावस्थायाः प्रागवस्थावत् । एवं विनश्यतीत्यपि वक्तुं न शक्यते जायमानत्वात्, यद्धि जायमानं न तद्विनश्यतीति व्यपदेश्यम्, उत्तरघटावस्थावदित्याह–**न विनश्यतीति** । तदेवमुत्पादविनाशक्रिययोरसम्भवं निर्वर्त्यविकार्यप्राप्यस्वरूपत्रिविधकर्मविषये दर्शयति–**एतदुदाहरणमिति**. मृदा घटं करोतीति घटो निर्वर्त्यं कर्म, प्रकृतेरभेदेनानाश्रयणात्, यद्यपि निर्वृत्तिरात्मलाभः क्रियाकृतो नयान्तरापेक्षया, काष्ठानि भस्मीकरोति काण्डं लुनाति इत्यादौ काष्ठादि विकार्यं कर्म, भस्मादिकार्यस्य प्रकृत्युच्छेदसम्भूतत्वात्, अत्रापि विकारो भस्म क्रियाकृतः, तथापि ऋजुसूत्रनयमते उक्तन्यायात् क्रियाया अभाव एव, भावाभावभावत्वाद्वस्तुन इति भावः । कर्तुः क्रियाविषयभावमात्रेणेप्सिततमं प्राप्यं कर्मोच्यते, तत्र केषुचित् कर्मसु क्रियाकृतो विशेषोऽस्ति, केषुचित्तु नास्ति, ग्रामं गच्छति प्रव्रजतीत्यादौ क्रियाकृतविशेषसद्भावेऽपि क्रियाया अभावः यत्र तु तथाविधो विशेषो नास्ति तत्र तु सुतरामिति दर्शयति–**प्राप्यकर्मेति, गच्छतीति,** ग्रामं गच्छतीत्यादौ गमनक्रियाजनितद्विष्ठसंयोगविशेषस्य ग्रामादौ सत्त्वेऽपि न क्रियाऽस्ति, प्रोक्तन्यायात् हिमवन्तमुपश्रयति आदित्यं पश्यतीत्यादौ च नैषा वार्त्ता, उपश्रयणसदर्शनादिक्रियाकृतविशेषाभावात् क्रियमाणकृतत्वन्यायोऽत्र नास्ति, शब्दं शृणोति घटं पश्यतीत्यादौ तु श्रवणदर्शनादिक्रियोपहितः सौक्ष्म्यत्वादसलक्षितो विशेषो यदि समुन्नीयते तर्ह्यत्रापि क्रियमाणकृतत्वन्याय्योऽस्त्येवेत्याशयः स्यादिति प्रतिभाति । तदेवं क्रियावाचकशब्देनाख्यातेन भावाभावभावस्वरूपं वस्तु न स्पृश्यत इत्युपदर्श्य क्तप्रत्ययान्तक्रिया-

१ क्ष. अभावादि क्रियमाणो क्रियमाणत्वात् । २ सि क्ष. °त्वाद्रव्यादित आह । ३ डे. °दितिरन्विष्टानंतराघटावस्थात् ।

हिमवदादित्यश्रवणदर्शनादिषु यद्यपि नैषा वार्त्ता शब्दघटश्रवणदर्शनादिष्वेषैव वार्त्ता, किञ्च—कृतदग्धगतादिशब्दैश्च क्तप्रत्ययान्तैर्याः क्रिया उच्यन्ते तासां निष्ठितत्वात् भूतकालविहितत्वाच्च क्तस्य किञ्चिन्निष्ठितं किञ्चिदनिष्ठितं मृत्पलालादिकर्मेति कृताकृतत्वानुपपत्तेः सुतरां प्रयोगाभाव इति सुष्ठूच्यते यथा लोको वदति न तथा घटत इति । एवं तावद्व्युत्पन्नशब्दानां क्रियावाचिनामाख्यातानां, नाम्नां–पाचकादीनां शुक्लादिगुणशब्दानाञ्च निर्विषयता–निरर्थकतेत्यर्थः, द्रव्यशब्देष्वपीत्यादि यावद्वचनमिति, सर्वभावा भावाभावात्मका इत्युक्तं विस्तरतः, तद्वाच्यभिमतानां शब्दानामुक्तन्यायेन तदसंस्पर्शात् कुतः तत्त्वं–भावाभावात्मकं वस्तु उपनिपतितुं वचनस्य शीलं धर्मः साधुकारिता वा कस्यचिदिति ।

एवं तर्हि शब्दार्थव्यवहारहानिरिति चेन्नेत्युच्यते, अस्ति शब्दार्थव्यवहारः संज्ञासंज्ञिसम्बन्धसन्निवेशात्मकः—

**भ्रूक्षेपादिवत्त्वभिधेयाभिमतार्थपर्यायमात्रपरमार्थत्वात्तदर्थप्रतिपत्त्युपायः शब्दः ।**

**(भ्रूक्षेपादिवत्त्विति)** भ्रूक्षेपादिवत्तु- अक्षिनिकोचैः पाणिविहारैर्भ्रूक्षेपादिभिश्चाङ्गविकारैः स्वाभिप्रायसूचनं कृतसङ्केतानां क्रियते, अभिप्रेतार्थपर्यायमात्रत्वात्तासां क्रियाणां तथा शब्दस्याप्यभिधेयाभिमतार्थपर्यायमात्रपरमार्थत्वात् तदर्थप्रतिपत्त्युपायः शब्दो× भ्रूक्षेपादिवत् सञ्ज्ञा, सञ्ज्ञैव संज्ञापनामात्रवाचकः[3] शब्दः पुरुषाणां कृतसङ्केतानां प्रतिपत्त्युपायः, अकृतसङ्केतानान्तु शब्दगतमात्रसंप्रत्ययनिमित्तत्वात्, यथोक्तं

प्रवृत्तिनिमित्तकशब्दादपि तद्वस्तु न वाच्यमित्यादर्शयति–**कृतदग्धेति,** भूते क्तान्ताः कृतादिशब्दाः, तत्तत्क्रियाणां निष्ठितत्वं प्रकाशयति, तथा च मृत् घटः कृतः पलालो दग्धः ग्रामो गत इत्यादौ मृत् पलालादयश्च किञ्चिन्निष्ठिताः किञ्चिदनिष्ठिताश्च सर्वथा घटभस्मादिरूपतया निष्ठितार्थेतर्हि मृत्पलालादिशब्दा न प्रवर्त्तेरन्, एवञ्च यदि मृदादि कृतं तर्हि तन्मृदादि कथम् ? यदकृतं तत्र तर्हि तत्कृतं भवतीति न तथाविधाः प्रयोगा घटन्ते इति लोकवादस्तथाविधो मिथ्यावाद एवेति भावः । एवं क्रियागुणप्रवृत्तिनिमित्तकाः शब्दाः भावाभावात्मकमृजुसूत्राभिमतं वस्तु न स्पृशन्तीति निर्विषया एवेत्याह–**एवमिति ।** द्रव्यवाचकशब्दा अपि तथेत्याह–**द्रव्यशब्देष्वपीति** भावाभावात्मकवस्तुनः निखिलशब्दातीतस्वभावत्वात् तद्वस्तु च द्रव्यादितो जन्मविनाशसममिति स्थिरत्वाभावात् सङ्केतासम्भवेन न वाच्यता तस्येति भावः । घटादिवस्तु हि अनेकपरमाणुसञ्चयस्वभावं, निखिलावयवपरिग्रहेण तत् शब्दो न तद् बोधयितुं क्षमः, वस्तुन उत्पादविनाशात्मकत्वात्, तथा च शब्देन यदवयवद्वारा घटः प्रोच्यते सोऽवयवो न घट इति घटो न शब्दवाच्यः, सोऽवयवोऽपि न शब्दगम्यः सङ्केतासम्भवादित्याशयेनाह–**उक्तन्यायेन तदसंस्पर्शादिति,** शब्दग्राह्योऽवयवो न घटः, घटश्च न शब्दग्राह्यः, उत्पादविनाशस्वभावत्वादिति न्यायेन शब्दसंस्पर्शो वस्तुनो नास्तीति भावः । अथ शब्देन वस्त्ववबोधने योऽयं लोके व्यवहारः प्रवर्त्तते तद्धि न स्यात्, सकलमेव जगद्बधिरमित्याशङ्क्य समाधत्ते–**एवं तर्हीति,** शब्देभ्यो ये पदार्थव्यवहाराः घटाद्यानयननयनादयो दृश्यन्ते शब्दस्यार्थासंस्पर्शित्वे ते न घटन्त इति शङ्कार्थः । समाधत्ते–**नेति,** सञ्ज्ञासञ्ज्ञिसम्बन्धसन्निवेशात्मकः शब्दार्थसव्यवहारोऽस्तीति नोच्यत इति योजना, वाच्यवाचकभावनिबन्धनः शब्दार्थव्यवहारोऽस्तीति न स्वीक्रियत इति भावः । तर्हि कथं व्यवहार इत्यत्राह–**भ्रूक्षेपादिवत्त्विति.** तुर्विशेषणे, सञ्ज्ञासञ्ज्ञिसम्बन्धनिबन्धनशब्दार्थव्यवहारं विशिनष्टि, इत्थं मयाऽक्षिनिकोचो यदा क्रियते तदा त्वयैव विज्ञायतामित्यादिसङ्केतानन्तरं तथा क्रियमाणे तेन यथा सोऽर्थो विज्ञायते तथैवं मया शब्द उच्चारिते त्वया एषोऽर्थो विज्ञेय इति सङ्केतानन्तरं तथोच्चारणे तेन तथैव विज्ञायते व्यवह्रियते चेत्येवं शब्दार्थव्यवहारः प्रवृत्त इति, यस्तु तथाविधं सङ्केतं न वेत्ति तस्य तु तथाविधशब्दश्रवणात् केवलं शब्दपरिज्ञानमेवोदेतीति भावः । एनं भावमेव स्फुटयति–**अक्षिनिकोचैरिति । अभिप्रेतार्थेति** यथा भ्रूक्षेपादयः कल्पितार्थस्य पर्यायमात्रविषयास्तथा शब्दोऽपि अभिधेयत्वेनाभिमतस्यार्थपर्यायस्यैव पर्यायः शब्दो न वस्तुभूतमर्थं स्पृशतीति भावः । एवञ्च सञ्ज्ञा शब्दः सञ्ज्ञापनं ज्ञानं विकल्पात्मकं तन्मात्रमुत्पादयति, न त्वर्थं स्पृशति, कृतसङ्केतानां कल्पितार्थविषयविकल्पसाधनमेवेति भावः । अत्रार्थे दिग्नागकारिकां प्रमाणयति–**विकल्पेति,** भावाभावात्मकमृजुसूत्राभिमतं वस्तु वर्त्तमानक्षणमात्ररूपतया तस्य सङ्केतव्यवहारकालव्याप्त्यभावात् न शब्दवा

१ सि. क्ष डे. °श्रवण. छा. हिमवदाश्रित्यश्रवण. । २ सि. क्ष डे. तावदुत्पन्न. । ×× डे. । ३ सि. क्ष. डे. वाचक[ त्वे ]हापु. ४ सि. क्ष डे. छा. °गद्भु. ।

'विकल्पयोनयः शब्दा' विकल्पाः शब्दयोनयः। तेषामन्योऽन्यसम्बन्धो नार्थं शब्दाः स्पृशन्त्यमी ॥' ( दिग्नस्येयंकारिका. ) इति, एवं वस्तुनो भावाभावात्मकत्वस्यानिर्देश्यत्वात् परमार्थस्यावाचकः, संवृतिसतस्तु व्यवहारे वाचक इवोपलक्षणभूत[ः]शब्दः।

**अत्र च अपोहः शब्दार्थः, यस्मादाह–'शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते' (            ) इति, प्रतिभा च वाक्यार्थः, ।**

**अत्र चेत्यादि,** नयमतेन वस्तुस्वरूपं शब्दार्थसम्बन्धं चावधार्य शब्दार्थः श्रुत्य[ा]वधार्यते. अत्र च–विधिनियमविधिनियमभङ्गे चेति, अपोहः शब्दार्थः, यस्मादाह–शब्दान्तरार्थेत्यादि, शब्दादन्ये शब्दाः शब्दान्तराणि, तेषामर्थानपोहते घटशब्दः पटादिशब्दानां स्वतोऽन्येषां व्यवहारा[न]नुपातात्, स्वार्थे कुर्वती श्रुतिरिति वचनेन भावाभावात्मकमर्थं दर्शयति, अभिधत्त इत्युच्यत इति, न परमार्थतोऽभिधत्ते वा, आत्मनोऽनभिलाप्यत्वात्, संज्ञापरमार्थत्वात्, अभिधत्त इवाभाति लक्षयन् सङ्केतवशादर्थमित्येष पदार्थः, वाक्यार्थस्तर्हि कः? उच्यते–प्रतिभा च वाक्यार्थः, शब्दाभ्यासवासनाजनिताऽर्थेषु प्रतिभा वाक्येभ्यो जायते तिरश्चां मनुष्याणाञ्च यथाभ्यासं स्वजातिनियता स्वप्रत्ययानुकारेण शशकानरादीनामिव व्याघ्रादिशब्दश्रवणात् कोपहर्षभयादिनिमित्तेत्यादि यथावदनुगन्तव्यम्, वाक्यार्थप्रतिपत्त्युपायः पदार्थोऽसत्त्वात् वाक्यादपोद्धृत्य उत्प्रेक्षया व्याख्यायते।

च्यम्, न च सामान्यपुरस्कारेण निखिलेषु भेदेषु सङ्केतसम्भवः सामान्यस्यैवाभावात्, भावेऽप्यदृष्टेषु अतीतानागतभेदेषु अनन्तेषु न समयः सम्भवत्यतिप्रसङ्गात्, विकल्पबुद्ध्या व्याहृत्य समयः क्रियत इति चेत्तर्हि विकल्पसमारोपितार्थविषय एव शब्दः न परमार्थभेदविषय इति प्राप्तम्, अतीतानागतभेदानामसत्त्वात्तद्विकल्पबुद्धेरपि निर्विषयत्वेन नार्थं शब्दा अर्थं स्पृशन्ति, नहि बाह्येऽर्थे शब्दाः प्रतीतिं जनयन्ति, यतस्ते विकल्पमात्राधीनजन्मानः, स्वमहिमानमनुवर्तमाना बाह्यार्थास्पर्शेन विकल्पानेवोत्पादयन्ति, यथाऽङ्गुल्यग्रे हस्तियूथशतमास्त इति, तथा च विकल्पजन्मानः शब्दाः शब्दजन्मानो विकल्पा इति शब्दविकल्पयोरेवान्योऽन्यसम्बन्धो जन्यजनकभावलक्षण इति कारिकाभिप्रायः। परमार्थस्य भावाभावात्मकस्य वस्तुनः वाक्पथातीतविषयत्वात् शब्दो न तस्य वाचकः, अस्य तु वस्तुनोऽविकल्पः जायते भवति ततश्च सकलव्यवहारानुगतो विकल्पो भवति, स च विकल्पः कल्पितवस्तुविषयत्वान्निर्विषय इति शब्दोऽपि तथाविधं विकल्पं जनयतीत्याह–**एवं वस्तुन इति** भवन्मते घटादेरपि व्यवहारे वाचकत्वेन उपलक्षणभूतः शब्दो वस्तुनो दर्शनगृहादेः काकादिरिवेति भावः। एतन्नयमतेन भावाभावात्मकं वस्त्विति वस्तुस्वरूपमवधार्य अक्षेपादिना कृतसङ्केतानामभिधानाभिमतार्थपर्यायप्रतिपत्त्युपायः शब्द इति शब्दार्थसम्बन्धञ्चावधार्य शब्दार्थश्च कः इत्यवधार्यत इत्याह–**नयमतेनेति।** शब्दार्थमाह **अपोह इति,** अतद्रूपपरावृत्तिरूपं सामान्यं विकल्पस्य विषयः, यश्च विकल्पस्य विषयः स एव शब्दस्येति सामान्यमतद्रूपपरावृत्तरूपमन्यापोहाभिधानं शब्दस्यार्थ इति भावः। अत्रार्थे प्रमाणवाक्यमाह–**शब्दान्तरेति,** घटादिशब्दभिन्नपटादिशब्दानामर्थानपोहते घटशब्दः, तथा चेदेव घटादिस्यैवोपयोगात्, ततोऽन्येषां पटादिशब्दानां तदर्थव्यवहारानुकूलत्वात् तमपोहं इत्यविकल्पोऽभेदं विदधत् शब्दोऽभिधत्ते इति तदर्थः। अभिधत्ते इति पदस्य वस्तुनो वाचकत्वबोधकत्वं न सम्भवति, स्वलक्षणस्याखिलशब्दाविषयत्वात् किन्तु तमर्थं लक्षयन् अभिधायक इव अवभासत इति दर्शयति–**अभिधत्त इतीति** शब्दान्तरार्थापोहमित्यनेनाभावात्मकत्वं स्वार्थे कुर्वती श्रुतिरित्यनेन भावात्मकत्वं पर्यवचनेन भावाभावात्मकोऽर्थ इति दर्शितं भवतीत्याह–**स्वार्थे कुर्वतीति।** वाक्यार्थमाह–**प्रतिभा चेति।** प्रतिभां परिचाययति–**शब्दाभ्यासेति,** यं कञ्चिद्विषयमभिकृत्य शब्दस्य पौनःपुन्यप्रवृत्तदर्शनमभ्यासः तज्जनिता वासना तज्जनिता क्रियाप्रतिपत्त्यनुकूला प्रज्ञा प्रतिभा, सा प्रयोगदर्शनाभ्यासरहितेन शब्देन जन्यते, प्रतिवाक्यं प्रतिपुरुषञ्च नानाविधा याऽप्रतिनियता भवति यथा व्याघ्रेतिशब्दश्रवणाच्छूरस्य क्रोधनिमित्ता प्रतिभा जायते तज्जातिनियतत्वात्स्वप्रत्ययानुकारित्वात् कातरस्य तु भयादिनिमित्ता भवति, यथा हि अङ्कुशाभिघातादयो हस्त्यादीनामर्थप्रतिपत्तौ क्रियमाणायां प्रतिभाहेतवो भवन्ति तथा सर्वेऽर्थकत्वेनाभिमता वृक्षादिशब्दा यथाभ्यासं प्रतिभामात्रहेतवो भवन्तीति भावार्थः। कथं वाक्यार्थस्य प्रतिपत्तिरिति तत्र तदुपायमाह **वाक्यार्थप्रतिपत्त्युपाय इति** अपोद्धारपदार्थश्चात्यन्तसंसृष्टा-

१ सि. क्ष. डे. शब्दार्थो भुत्यवधार्यते छा °श्रुत्यवधार्यते। २ सि छा. वाक्यादपोद्धृत्योत्प्रे., क्ष. वाक्यादपोद्धृत्योत्प्रे०। सि. क्ष. छा. डे. °मत्यन्त,° °न्यपि°.

अयं पुनर्नयः कतमः शास्त्रविहितानामिति चेत् —

**अयं पुनर्नयः ऋजुसूत्रदेशत्वात् पर्यायास्तिकः, ऋजु-प्रगुणं सूत्रयति तंत्रयत इति ऋजुसूत्रः, सूत्रपातवदृजुसूत्र इति वा परि समन्तात् अयति गच्छतीति पर्यायः, स एवास्तीति मतिर्यस्य स पर्यायास्तिकः ।**

(**अयमिति**) ऋजुसूत्रदेशत्वात् पर्यायास्तिकः, एकैकस्य नयस्य शतधा भेदाभ्युपगमात्, ऋजुसूत्रदेशोऽयमृजुसूत्रभेदः, 'एक्केक्को य सयविहो पंचणयसता हवंति एवं नु विति वि अ आदेसो सत्तणयसता हवन्तेवं' (              ) इति वचनात्, ऋजु प्रगुणं सूत्रयति तन्त्रयत इति ऋजुसूत्रः, सूत्रपातवदृजुसूत्र इति वा, परि समन्तादित्यादिना पर्यायास्तिकशब्दार्थं सव्युत्पत्तिं स्वयमेव व्याचष्टे ।

किमेताः स्वमनीषिका उच्यन्ते ? आहोस्विदस्य नयस्य निबन्धनमस्त्यार्षमिति, अस्तीत्युच्यते —

**उपनिबन्धनमप्यस्य 'आता भंते ! परमाणु पोग्गले णो आता ? गोयमा ! सिआ आता परमाणुपोग्गला, सिआ णो आता, से केणट्ठेणं भंते ! एवं वुच्चइ–सिआ आता सिआ नो आता ? गोयमा ! अप्पणो आदिट्ठे आता, परस्स आदिट्ठे णो आता' ( श० १२–उ० १०–सू० १६–२४ ) इति ।**

(**उपनिबन्धनमिति**) उपनिबन्धनमप्यस्य यतो निर्गमस्तत्स्यार्षम्–तद्यथा आता भंते [परमाणु] पोग्गले इत्यादि पुद्गलानामात्मा–स्वरूपमिति नो आत्मा–पररूपमिति भावाभावौ विधिनियमाविति प्रश्नो गौतमस्येन्द्रभूतेर्गणधरस्य, व्याकरणं भगवानाह–गोयमा ! सिआ आता परमाणुपोग्गला सिआ णो आता, भवत्यपि 'से केणट्ठेणं इत्यादिकारणप्रश्नः, एवमिति स्याच्छब्दार्थं प्रत्युच्चारयति, केनार्थेन स्यादात्मा परमाणुपुद्गलः ? स्यान्नो आत्मेति विवृणोति, तदत्र को निश्चय इति प्रश्नः, भगवानाह–'गोयमा ! अप्पणो आदिट्ठे आता'–आत्मनः स्वरूपेणादिष्टेऽर्पिते विवक्षिते आत्मा भावो विधिः स्वरूपम्, 'परस्स आदिट्ठे णो आता'–परस्यादिष्टे नो आत्माऽवृत्तिरभावो नियम इति, तथा द्विप्रदेशिकादिस्कन्धा आकाशाद्यस्तिकाया घटपटादयश्चार्था यथा विस्तरशो व्याख्याता इति ॥

## –इति नयचक्रटीकायां सप्तमोऽरः उभयोभयभङ्गः समाप्तः–

नामनुमानबुद्ध्या परिकल्पितो भेद , वाक्यस्यैव लोके प्रयोगदर्शनादन्वयव्यतिरेकाभ्या समुदायादपोद्धृताना शब्दाना यथागमं भावनाभ्यासवशादुत्प्रेक्षया व्यावर्णनं क्रियत इति भावः । उभयोभयनयस्यास्य शताविधेषु नयेषु क्वान्तर्भाव इत्यत्राह–**अयं पुनर्नय इति** । ऋजुसूत्रविशेषोऽयं पर्यायार्थिकनय इत्याह–**ऋजुसूत्रेति** । ऋजुसूत्रशब्दार्थमाह–**ऋजु प्रगुणमिति** यथा ऋजु. सूत्रपातः तथा ऋजु प्रगुणं सूत्रयति तंत्रयते ऋजुसूत्र. सर्वान् त्रिकालविषयानतिक्रम्य वर्त्तमानविषयकालमादत्ते, अतीतानागतयोर्विनष्टानुत्पन्नत्वेन व्यवहाराभावादिति । पर्यायास्तिकशब्दार्थमाह–**परि समन्तादिति** । अस्य नयस्यार्षं मूलमाह–**उपनिबन्धनमपीति** । सूत्रार्थं व्याकरोति–**पुद्गलानामिति** विधिरूपा वा नियमरूपा वा पुद्गला इति प्रश्नार्थः । उभयमपि सम्भवतीत्युत्तरं भगवानाहेत्यादर्शयति–**व्याकरणं भगवानाहेति** । तत्र कारणप्रश्नमुपन्यस्यति–**से केणट्ठेणं इति** । स्वपरापेक्षया पुद्गलानां विधिनियमस्वरूपत्वं सम्भवतीति भगवतो व्याख्यामाह–**भगवानाहेति** । एवमन्येषामपि विधिनियमस्वरूपत्वमुपदर्शयति–**तथेति** ।

**इत्याचार्यविजयलब्धिसूरिकृते द्वादशारनयचक्रस्य विषमपदविवेचने सप्तम उभयोभयभङ्गारः ॥**



१ सि. क्ष. छा. स्वरूपिनो । २ सि. क्ष. छा. भाह भावो विधेः । ३ सि. क्ष. छा. व्याख्यात मिति ।

# अथोभयनियमारः ।

विधिनियमभङ्गसमस्तवृत्तिसत्यत्वप्रतिपादनाधिकारे पूर्वनयदृष्टावपरितुष्टेरुत्तरनयसमारम्भः तद्यथा—

**भावाभावभावनायां भावो विधिरभावो विशेषः, स च पराभाव इष्टो न स्वरूपस्यैव विशेष इति तदभावे स्वत्वं परत्वं चाव्यवस्थितं परस्वाभावविशेषतुल्यत्वात्, सति च स्वपरविशेषत्वाभावे भावाभावयोर्भेदेनोपनिपातो न स्यात्, स्वतोऽप्यसत्त्वं स्यात् ।**

**भावाभावभावनायामित्यादि**, यदि भावाभावात्मकं वस्त्विति भावो—विधिरभावो—विशेषः, **स च पराभाव इष्टो न स्वरूपस्यैव**—भावस्य विशेषो—नियम इति, ततस्तदभावे - स्वगतविशेषाभावे परस्यापि स्वगतविशेषाभावे **स्वत्वं** परत्वं चाव्यवस्थितं, परस्वाभावविशेषतुल्यत्वात्—स्वं स्वं न भवति, पराभावविशेषत्वात् परवत्, पराभावविशेषत्वं वस्तुत्वात् स्ववत्, स्वभावविशेषशून्यत्वात् परमपि परं न भवति—स्वभावविशेषशून्यत्वात्, स्ववत्, स्वाभावविशेष[त्वं वस्तु]त्वात् परवत् पक्षे धर्मसिद्धिः, ततश्च द्वयोरपि—स्वपरयोरितरेतरात्मापत्तेः स्वस्य स्वत्वं परस्य च परत्वमित्येष विशेषो नास्ति, सति च स्वपरविशेषत्वा[भावे]भावाभावयोः—सामान्यविशेषयोर्भेदेनोपनिपातो न स्यात्, न स्यादिति सम्भावनया, मा मुखनिष्ठुरं वोचमिति, एवमैक्यापत्तिरनयोः, नैक्यापत्तिरेव, किं तर्हि ? सङ्करोऽपीत्यत आह—**स्वतोऽप्यसत्त्वं**, भावितार्थमेव, अपिशब्दात् परतोऽसत्त्वं त्वदभ्युपगतमेव. परतश्च सत्त्वं स्यात्, अनिष्टञ्चैतत् ।

अथ विध्यादिसर्वभङ्गात्मकैकवृत्तिसम्यग्दर्शनाधिकारे प्रतिपादनीये प्रत्येकवृत्तिमिथ्यात्वं तदन्तरेण तदभावादापादयता मूलकृता प्रवृत्तिरूपमितरेतराभावलक्षणमभवद्भवनस्वरूपं वस्त्विति उभयोभयैकान्तनयमतमुपदर्श्य सम्प्रति तन्मिथ्यात्वोपपादनार्थमन्तरमारच्यत इति दर्शयति—**विधिनियमभङ्गेति,** निरूपितेऽस्मिन्नपि दर्शने पराभावस्य विशेषस्य स्वरूपविशेषासम्भवेऽनवस्थानाद्द्वयोरप्यभावसङ्करत्वादिदोषान्न द्वयस्याप्युक्तेर्भवितृप्रधानं भवनोपसर्जनं वस्त्विति अष्टमभङ्गाभिप्राय । नन्वभवद्भवनात्मकं वस्त्वित्यनेन भावाभावात्मकं वस्त्वित्युक्तं भवति, तत्र भावाभावौ व्याख्याय तदात्मकवस्त्वसम्भवमुद्भावयितुकाम आह—**भावाभावभावनायामिति** । एतदेव व्याचष्टे—**यदीति** । अभावपदेन वाञ्छमभिप्रेत दर्शयति—**स चेति,** परगतस्य विशेषस्यैवाभावो—नियमो न तु स्वगतविशेषस्य नियम इष्ट इति भाव । तथासति को दोष इत्यत्राह—**ततस्तदभाव** इति, यदि स्वगतविशेषस्य नियमो न स्यात् तदा परत्वेनाभिमतोऽपि विशेषः परस्य स्वरूप न स्यात्, तथा च कथं तस्य परत्वम्, परस्यैवायमित्यनियमनात् विशेषोऽयं परोऽयञ्च स्व इति विशेषस्य नियामकाभावादव्यवस्थिते स्वत्वपरत्वे इति भाव. । अव्यवस्थितत्वे हेतुमाह—**परस्वेति,** स्वपरेत्यादिवक्तव्ये परस्वेत्यभिधानं साध्यक्रमेण हेतुक्रमलाभाय, परगतविशेष परस्यैव, स्वगतविशेष स्वस्यैवेति नियमाभावेन स्वपरयोः समानत्वादिति भाव । क्रमेण व्याकरोति—**स्वं स्वमिति** यथा परस्मिन् विशेषोऽनियतस्तथा स्वस्मिन्नपि विशेषोऽनियत इति पराभावविशेषत्वं स्वस्मिन्नपीति तत्स्वमेव न भवतीति भाव, परत्वं हि स्वभावेऽनियतं स्वरूपस्य नियमात्, एवञ्च परत्वं परस्मिन्निव स्वस्मिन्नपि भवेदतो न स्वं स्वमिति यावत् । एवं स्वरूपस्यानियमादेव स्वत्वमपि न स्वस्मिन्नियतमत. परस्मिन्नपि स्वत्वसम्भवात् पर न परमित्याशयेनाह—**स्वभावविशेषेति** । फलितार्थमाह—**ततश्चेति,** एवञ्च स्वस्यैव स्वत्व परस्यैव परत्वमिति नियमो नास्ति स्वातिरिक्ते स्वत्वस्य परातिरिक्ते परत्वस्य भावात् अय भाव एव नाभाव, अयमत्वभाव एव न भाव इति विवेक्तुमशक्यतया भावस्याभावत्वादभावस्यापि भावत्वाद्भावाभावात्मकं वस्त्विति भावाभावयोर्विशिष्याभिधान न युक्तमिति भाव. । स्वतोऽप्यसत्त्वमित्युक्त्या परतोऽसत्त्वं प्रतीयते, तच्चेष्टमेवेति अपिशब्दसूचितमनिष्टापादनं सूचयति—**अपिशब्दादिति,** परतः सत्त्व-

1 सि. क्ष. छा. परस्वाभाव० । 2 सि. क्ष. छा पराभावविशेषत्वात्पूर्ववत् ।

**किञ्चान्यत्—किमेतौ भावाभावौ द्वावपि प्रधानौ? भावः प्रधानं विशेष उपसर्जनम्? विशेषः प्रधानं भाव उपसर्जनम्? उभयमुपसर्जनं? वेति।**

(**किञ्चान्यदिति**) किञ्चान्यत्-इदमिह सम्प्रधार्यम्—किमेतौ भावाभावौ द्वावपि प्रधानौ विजिगीषू इवान्योऽन्यनिरपेक्षौ? भावः प्रधानं विशेष उपसर्जनम्? विशेषः प्रधानं भाव उपसर्जनम्? उभयमुपसर्जनमिति चतुर्षु विकल्पेषु त्रीन् विकल्पान् व्युदस्य भावोपसर्जनं विशेषप्रधानं नयस्यास्य मतं साधयिष्यामः।

**तत्र तावद्यदि द्वावपि प्रधानं ततोऽङ्गाङ्गिभावो न स्यात्, परस्परानपेक्षत्वात् तयोः, परस्परानपेक्षत्वं अपरार्थत्वात्, अपरार्थत्वं प्रधानत्वात्, विजिगीषुवत्, ततो विरोधादेकत्र प्रवृत्त्यभावाद्वस्तु भावाभावात्मकं न भवति, कथं तर्हि भवतीति चेत्? घटः स्वेनैव भवति, न पटादिभावेन नाभावेन वा, उक्तसङ्करविशेषासत्त्वदोषभयात्, पटोऽप्येवमेव।**

**तत्र तावद्यदि द्वावपीत्यादि**, उभयप्राधान्येऽनिष्टापादनं यावद्विजिगीषुवदिति, इतरस्य प्रधानस्यार्थं साधयितुमङ्गं प्रवर्त्तमानमङ्गिनमपेक्षते, अङ्ग्यप्यङ्गमित्यङ्गाङ्गिभावः, स न स्यात्, परस्परानपेक्षत्वात्तयोः, परस्परानपेक्षत्वमपरार्थत्वात्, अपरार्थत्वं प्रधानत्वात्, यथा विजिगीष्वोः, ततो विरोधादेकत्र प्रवृत्त्यभावात् वस्तु भावाभावात्मकं न भवतीति, कथं तर्हि भवतीति चेत्? घटो घटभावेन स्वेनैव भवति—स्वभवनप्राधान्येन, न पटादिभावेन, उक्तसङ्करविशेषासत्त्वदोषभयात्, नाभावेन वा—पटादेरात्मना-उक्तदोषादेव, पटोऽप्येवमेव—स्वेनैव पटभावेन भवति न घटभावेन, अभावेनैव वा।

**शिबिकावाहकवत्तुल्यशक्तीनामप्यर्थानामङ्गाङ्गिभावदर्शनादिति चेन्न, शिबिकावाहकवत् सामान्यविशेषयोः प्रधानभूतस्यान्यस्य प्रयोजयितुरभावात्, उत्तरभावः प्रयोजयितेति चेन्न, तदाऽभूतत्वात्।**

**शिबिकावाहकेत्यादि** यावत् चेदिति, स्यान्मतं परस्परनिरपेक्षत्वादित्यादि हेत्वसिद्धिः, तुल्य-

**मपि स्यात्**, स्वत्वपरत्वयोरितरेतरात्मत्वात् स्वत्वं परत्वमपि परत्वं स्वत्वमपीति स्वतः सत्त्वं परतः सत्त्वमपि परतः सत्त्वं स्वतः सत्त्वमपीति साङ्कर्यमिति भावः। दोषान्तरमाह—**किञ्चान्यदिति**। भवनाभवनात्मकत्वं वस्तुनोऽभ्युपगच्छतस्ते भावाभावावुभावपि प्रधानतया विवक्षितौ, उपसर्जनतया, अन्यतरोपसर्जनान्यतरप्रधानतया वेति पक्षेषु कतमः त्वया वाच्य इत्यनुयुञ्जानेन नयसम्मतं पक्षमुपदर्श्य व्युदस्यानि मतान्याविर्भावयति-**किमेतावित्ति**। उभयप्राधान्यपक्षे दोषमादर्शयति- **तत्र तावदिति**। भावाभावयोरुभयोः प्रधानत्वे हि परस्पर जिगीषू मल्लप्रतिमल्लाविव तावङ्गाङ्गिभूतौ न स्याताम्, अङ्गाङ्गिभावो तु परस्परसापेक्षौ, अङ्गस्याङ्ग्यर्थत्वादङ्गिनश्चाङ्गार्थत्वात्, न हि सापेक्षं प्रधानं नामेत्याह-**इतरस्येति**। **अपरार्थत्वमिति**, परप्रयोजनानपेक्षप्रवृत्तिमत्त्वमिति भावः। तथा च भावाभावयोरुभयोः प्रधानत्वे एकार्थोद्देशेनोभयोर्विरोधात् प्रवृत्त्यसम्भवात् कथं भावाभावात्मकं वस्तु भवेदित्याह—**तत इति**। उभयोः प्राधान्ये वस्तु भावात्मकमेव भवति न तु भावाभावात्मकं, परस्याभावविशेषतुल्यत्वेनोभयोः साङ्कर्येण च स्वत्वपरत्वयोरव्यवस्थितत्वादित्याह-**कथं तर्हीति**। घटादि स्वरूपेणैव भवति, न पटादिरूपेण अभावरूपेण वा भवति न भवतीति वा न ब्रूमः, तथा च भावात्मकमेव वस्तु न भावाभावात्मकमित्याशयेनाह-**घट इति**। ननूभयप्राधान्येऽङ्गाङ्गिभावो न स्यात्, परस्परानपेक्षत्वात् विजिगीषुवदिति परस्परानपेक्षत्वादङ्गाङ्गिभावाभावयोः व्याप्यव्यापकभावोऽस्तु, तथापि प्रधानानामपि परस्परापेक्षत्वमस्ति, प्रधानानां शिबिकावाहकादीनामप्यङ्गाङ्गिभावदर्शनात् परस्परापेक्षत्वादित्याशङ्कते-**शिबिकेति**। व्याचष्टे—**स्यान्मतमिति**, तुल्यशक्तीनामित्यनेन प्राधान्यं सूचितम्। **दृष्टान्तदार्ष्टान्ति**,

शक्तीनामप्यर्थानामङ्गाङ्गिभावदर्शनात्, यथा शिबिकावाहकानामिवेति, एतच्च [न] शिबिकावाहकवदित्यादि यावत्प्रयोजयितुरभावादिति, न हेत्वसिद्धिः, शिबिकावाहकानामिव प्रधानभूत ईश्वरो यथा प्रयोजयिता संहत्यकारिणामङ्गाङ्गिभावहेतुरस्ति वहनक्रियायां न तथा कश्चित् सामान्यविशेषयोः घटादेः पिण्डशिवकादेश्च प्रधानभूतोऽन्यः कश्चित् प्रयोजयिताऽस्ति, तस्माद्वैधर्म्यादयुक्तदृष्टान्तमिदमुत्तरमिति, उत्तरभावः प्रयोजयितेति चेत्–पिण्डस्योत्तरो भावः शिवकादिः स प्रयोजयिता प्रधानभूतः, तस्यापि स्थासककोशककुशूलकादिरुत्तरो यावत् पश्चिमो घटः पुनरावृत्त्येति, एवञ्चेन्मन्यसे तदपि न, तदाऽभूतत्वात्–उत्तरस्य भावस्य तस्मिन् कालेऽनुत्पन्नत्वादसतः प्रयोजकत्वाभावात् कुतः प्रधानत्वं खपुष्पस्येव ?।

किञ्चान्यत्–

**अभ्युपेत्यापि तदुत्पत्तिमुत्पन्नस्यापि तदात्मकत्वात् पूर्वमेवोत्तरः कथमात्मानमेव प्रयोजयितुमर्हति ? भेदमभ्युपगम्यापि शिबिकावाहकवदस्वतंत्रत्वादप्रवर्त्तकत्वम् ।**

(**अभ्युपेत्यापीति**) अभ्युपेत्यापि तदुत्पत्तिमुत्पन्नस्यापि तदात्मकत्वात्-मृत्पिण्डाद्यात्मकत्वात् उत्तरोत्तरभावस्य स्वबीजाद्यभिन्नत्वात् पूर्व एवोत्तरः स कथमात्मानमेव प्रयोजयितुमर्हति ? भेदमभ्युपगम्यापि शिबिकावाहकवदस्वतंत्रत्वात्–परवशवर्त्तित्वादप्रवर्त्तकत्वं, पूर्वोत्तरयोर्दिक्तः कालतो वा भिन्नयोरपि भावाभावयोरप्रधानत्वादीश्वरप्रेरितशिबिकावाहकवत्, एवं तावत् प्रधानयोरप्रवृत्तिः सामान्यविशेषयोः ।

**अथ सन्मित्रवदन्यतरोपसर्जनप्रधानभावेन सामान्यविशेषयोरविशिष्टतेति चेन्न, वक्ष्यमाणैतन्नयमतादन्यतरोपसर्जनप्रधानभावाभावात्, अथोपसर्जनावेव भावाभावौ ततस्तयोः प्रधानेनान्येनावश्यं भवितव्यम्, तदभावे प्रवृत्त्यभावात्, दृष्टा हि प्रवृत्तिरबलयोर्बलवदाश्रया,**

---

कयोर्वैषम्यं प्रकाशयति-**शिबिकावाहकवदिति,** तुल्यशक्तीनामपि केषाञ्चिदङ्गाङ्गिभावेन मिलित्वा यत्किञ्चित्कार्यं प्रति प्रवृत्तौ कश्चित् प्रयोजयितेश्वरादिर्दृश्यते, सामान्यविशेषयोर्भावाभावयोस्तु प्रधानयोस्तथाप्रवृत्तौ न कश्चित् प्रयोजको विद्यत इति परम्परानपेक्षत्वं सिद्धमेवेति भावः । पूर्वपूर्वभावस्य प्रवृत्तावुत्तरोत्तरभाव एवात्रापि प्रयोजकोऽस्त्येवेति तद्दोषतादवस्थ्यमाशङ्कते-**उत्तरभाव इति** । व्याचष्टे पूर्वपक्षम्-**पिण्डस्येति** । घटस्यापि कपालादिस्तस्यापि कपालिकादिरित्येवं भाव्यमिति दर्शयति-**पुनरावृत्त्येति** । विद्यमानानामेव प्रयोजकत्वादुत्तरभावानां शिवकादीनां पूर्वभावप्रवृत्तिकालेऽविद्यमानत्वात् न तेषां प्रयोजकत्वं सम्भवतीति समाधत्ते-**तदाऽभूतत्वादिति,** पूर्वभावप्रवृत्तिकाले उत्तरभावानामनुत्पन्नत्वादित्यर्थः । ननु तदानीमसतोऽपि प्रयोजकत्वं दृश्यते कृषीवलादिप्रवृत्तौ व्रीह्यादेरिति शङ्कायामाह-**अभ्युपेत्यापीति** । प्रयोजकत्वेनाभिमतस्योत्तरस्य पूर्वभावादभिन्नत्वे भिन्नत्वे चोभयथापि न प्रवर्त्तकत्वसम्भव इत्याह-**तदात्मकत्वादिति** । पूर्वभावात्मकत्वादुत्तरभावस्य स्वयमेव प्रयोजकः स्वयमेव च प्रयोज्य इति कथं सम्भवेदिति भावः । भिन्नत्वपक्षे दोषमाह-**भेदमभ्युपगम्यापीति,** स्वतंत्र एव प्रवर्त्तको भवति यथा शिबिकावाहकानां राजादिः, न तु अस्वतंत्रः, यथा शिबिकावाहकाः, एवमुत्तरो भावः स्वोत्तरभावप्रेरितः प्रयोजको भवेत्, तथा च सत्यन्तोऽपरभूतस्योत्तरभावपरवशवर्तित्वेनास्वतन्त्रत्वादप्रयोजक एव भवेदिति भावः । भेदप्रयोजकमाह-**पूर्वोत्तरयोरिति** । इत्थमुभयोः प्रधानयोः प्रवृत्तिर्न स्यादिति प्रथमविकल्पविचारमुपसंहरति-**एवं तावदिति** । अन्यतरोपसर्जनप्रधानविकल्पमुत्थापयति-**अथेति** । व्याख्याति-**यथेति,** भावाभावयोरन्यतर उपसर्जनात्मकः क्वचिद्भावः क्वचिदभावो वेति,

---

१ सि. क्ष. डा. स्वबीजादिभिन्नत्वात् । २ डा. ईश्वराप्रेरित० ।

**एतावती च प्रवृत्तिः सामान्यविशेषयोर्भवन्ती भवेत्, सर्वथा साऽनुपपन्ना, भावाभावयोरेव पर्यायमात्रत्वात्, गुणगुण्यादिकल्पनास्वपि भावाभावत्वव्यतिरिक्तार्थाभावाद्द्विधैव स्यात्, तथा वस्तु परीक्ष्यमाणं चतुर्धाऽपि न घटते ।**

**अथ सन्मित्रवदित्यादि,** अन्यतरोपसर्जनप्रधानभावेन सामान्यविशेषयोरविशिष्टतेति पूर्वपक्षयति, यथा संहत्यकारिणोः सन्मित्रयोः परस्परमतानुवर्त्तिनोरर्थवशादेकस्योपसर्जनता, इतरस्य प्राधान्यमिति चेत्-एवञ्चेन्मन्यसे तदपि न, वक्ष्यमाणेत्यादि यावदभावादिति, भवितुर्विशेषस्यैव प्राधान्यं सामान्यस्य भवनस्यैवोपसर्जनत्वमिति उभयमेवार्थत्वं भावशब्दस्य नान्यथेति वक्ष्यतेऽस्य नयस्य मतम्, तस्मान्नान्यतरोपसर्जनप्रधानभावः, अथोपसर्जनावेव भावाभावौ, ततस्तयोः प्रधानेनान्येनावश्यं भवितव्यम्, बलवताऽऽश्रयभूतेन द्वयोरिव राजपुरुषयोर्नृपतिना प्रवर्त्तयित्रा, तदभावे प्रवृत्त्यभावात्, दृष्टा हि प्रवृत्तिरबलयोर्बलवदाश्रया, एतावती च प्रवृत्तिः सामान्यविशेषयोर्भवन्ती भवेत्, सर्वथा साऽनुपपन्ना भावाभावयोरेव पर्यायमात्रत्वात्, तत्त्वान्यत्वादिधर्माणां वस्त्वन्तराभावात्, भावः सामान्यं प्रवृत्तिर्द्रव्यं विधिरन्वयो धर्मीति पर्यायाः, अभावो विशेषोऽन्यत्वं निवृत्तिः पर्यायो नियमो धर्म इति पर्यायाः, गुणगुण्यादिकल्पनास्वपि भावाभावत्वव्यतिरिक्तार्थासद्भावात् द्विधैव स्यात्, तथा इत्थं वस्तु परीक्ष्यमाणं चतुर्धापि न घटते, तस्माद्भावाभावव्यतिरिक्तस्यार्थस्याभावादुपसर्जनयोरप्रवृत्तिरिति ।

स्यान्मतं प्रधानेन विनापि उपसर्जनयोः प्रवृत्तिर्भविष्यतीति एतदपि—

**न च प्रधानेन विनोपसर्जनम्, भृतकादिरिव स्वामिना, न च प्रधानोपसर्जनभावेन विना दृश्यते भोक्तृचेतनाधिष्ठितशरीराद्यर्थाऽऽहारादिवस्तुप्रवृत्तिरिति तयोरेव प्रधानोपसर्ज-**

अन्यतरस्य च प्रधानत्वं क्वचिदभावस्य क्वचिद्भावस्य वा प्रयोजनवशादेति पूर्वपक्षाशयः । तं निराकरोति-**भवितुरिति** विधिनियमयोः विधिः विधीयते नियम्यते च, नियमोऽपि विधीयते नियम्यते च, भावः भावोऽप्यभावोऽपि, अभावो भावोऽप्यभावोऽपीति पूर्वनयमतवन्न स्वीक्रियते सामर्थ्यात्, अपि तूभयं नियम्यते-विधिनियमौ, सामान्यमुपसर्जनमेव, विशेष एव प्रधानमिति, तत्रापि विशेषः स्वरूपं घटादिरेव, न पटाद्यभावः स एव प्रधानभूतो भावः, भवनसामान्यमुपसर्जनभूतो भाव इत्युभयमपि भाव एव, अत एव भावात्मकं वस्तु न भावाभावात्मकमिति नयस्यास्य मतम्, तस्मान्न तयोः कामचारता युक्तेति भावः । अथ चतुर्थमुभयोरुपसर्जनत्वविकल्पं शङ्कते-**अथेति** यदि भावाभावयोर्द्वयोरुपसर्जनता तर्हि उपसर्जनत्वस्य प्रधानत्वव्याप्यत्वादवश्यं प्रधानेन **केनचिद्भाव्य-** मन्यथोभयप्राधान्यपक्ष इवोभयोपसर्जनत्वपक्षेऽपि तयोः परस्परानपेक्षत्वात प्रवृत्तिर्न स्यात्, दृष्टा च प्रवृत्तिः, सा चाप्रधानयोर्भावाभावयोः प्रधानेन प्रवर्त्तयित्रा केनचिद्भवेत्, नास्ति च प्रवर्त्तयिता कश्चन भावाभावभिन्न इति भावः । तमेव स्फुटीकरोति-**भावाभावयोरेवेति** । ननु भावाभावव्यतिरिक्तस्यासत्त्वं न युज्यते वक्तुम्, भावाभावभिन्नानां तद्धर्मभूतानां भावत्वाभावत्वादीनां सत्त्वात्, न हि धर्मैर्विना धर्मी भवितुं व्यपदेष्टुं वाऽर्हतीत्याशङ्कायामाह **तत्त्वान्यत्वादीति,** तत्त्वं भावत्वम्, तच्छब्दार्थस्यान्वयरूपत्वात्, अन्यत्वमभावत्वमन्यशब्दार्थस्य भेदरूपत्वादिति भावः । धर्माणां भावाभावात्मकवस्तुव्यतिरिक्तत्वाभावे वस्तुरूपत्वे युक्तिमाह-**भाव इति** । गुणगुणिक्रियाक्रियावज्जातिव्यक्त्यादीनामपि भावाभावात्मकत्वमेवेत्याह-**गुणगुण्यादीति** । तत्त्वान्यत्वादिचतुर्विधानां भावाभावव्यतिरिक्तत्वासम्भवेन तयोरुपसर्जनत्वं तदन्यस्य प्रधानस्य कस्यचिदभावादनुपपन्नमिति निगमयति-**इत्थमिति** । प्रधानेन विनोपसर्जनस्य प्रवृत्तिसम्पादकत्वं न सम्भवतीति दृष्टान्तैर्दर्शयति-**न चेति** । उपकारिणा स्वामिना प्रधानेन

१ छा. यावदाभावा० ।

**नटेति भवत् प्रधानं कर्तृसाधनं प्रत्ययार्थः, भाव उपसर्जनं भावसाधनं प्रकृत्यर्थः, प्रकृत्यर्थविवक्षायामपि कर्त्रर्थप्राधान्यात् भावसाधनत्वेऽपि कर्त्रर्थ एवोच्यते, यत्तेन भूयते यदसौ भवति भवनमापद्यते भवनक्रियामनुभवति स्वरूपप्रतिलम्भे गुणभूतं क्रियात्वं प्रतिपद्यमानोऽर्थो विपरिवर्त्तत इत्युक्तं भवति नटपरमार्थनृपत्ववत् ।**

(**न चेति**) न च प्रधानेन विनोपसर्जनम्, अस्तीति वर्त्तते, भृतकादिरिव स्वामिना, तस्मादकल्पनेयमपीति, स्यान्मतमुपकार्योपकारिभावेन विनापि भवति वस्त्विति, एतदपि न च प्रधानोपसर्जनभावेनेत्यादि यावद्वस्तुप्रवृत्तिरिति, भोक्ता प्रधानं तदर्थं भोग्यमुपसर्जनम्[1], ओदनवर्द्धितकशरीरादिवत् आत्मनः शरीरमेव भोक्तृचेतनाधिष्ठितं तदर्थमुपसर्जनमाहारादि, आदिग्रहणात् वस्त्रशय्यासनगृहादि, आहारार्थं शस्यादि शाल्याद्यर्थं सलिलादि, यथैतद्भोक्तृभोग्यादि गुणप्रधानभावेनैव प्रवर्तते न विना तेनेति, दृश्यते च वस्तुनः प्रवृत्तिरित्यप्रत्यक्षीकृतमिति तयोरेव -भावाभावयोः प्रधानोपसर्जनता—गुणप्रधानभावः, तृतीयवस्त्वभावात्, इतिशब्दस्य हेत्वर्थत्वात्—एतस्मात् कारणादेवमवस्थिते कतरत् कथं नियतमित्युभयनियम उच्यते तद्यथा—भवत् प्रधानं कर्तृसाधनं प्रत्ययार्थः, भाव उपसर्जनं भावसाधनं प्रकृत्यर्थः, को भवतीति चेदुच्यते—अर्थतः—प्रकृत्यर्थविवक्षायामपि कर्त्रर्थप्राधान्यात् भावसाधनत्वेऽपि कर्त्रर्थ एवोच्यते, अतस्तत्प्रदर्शनार्थमाह—यत्तेन भूयते, किमुक्तं भवति ? विशेषः, स एव भवतीति भावः, णप्रत्ययान्तेन कर्तृवाचिना शब्देनोच्यते, पूर्वनयव्याख्याव्युत्पत्तिवत्, भवतीति चेदुच्यते—यदसौ भवति भवनमापद्यते भवनक्रियामनुभवति स्वरूपप्रतिलम्भे गुणभूतं क्रियात्वं प्रतिपद्यमानोऽर्थो विपरिवर्तत इत्युक्तं भवति, किमिव ? नटपरमार्थनृपत्ववत्, यथा नटः परमार्थतो नट एव सन् राजवेषधारी राजक्रियास्वाज्ञापनादिषु च वर्त्तमानो नटत्वप्रधानस्तद्विशेषपरमार्थः, एवं घटाख्यो विशेषः जलधारणादिभवनेषु वर्त्तमानो घटत्वप्रधानः तद्विशेषपरमार्थो भवतीति ।

---

विना न ह्युपसर्जनस्योपकार्यस्य प्रधानभृतकादेः, न वोपसर्जनत्वमिति दर्शयति—**न च प्रधानेनेति** । उपकार्योपकारित्वप्रयुक्तप्रधानोपसर्जनभावो न वस्तुत्वव्यापक इत्याशङ्क्य समाधत्ते—**स्यान्मतमिति** । उपकार्योपकारिभावप्रयुक्तप्रधानोपसर्जनभावत्वव्याप्यं वस्तुत्वमिति दृढीकर्तुं दृष्टान्तपरम्परां दर्शयति—**भोक्तेति**, भोक्ताऽऽत्मा प्रधानं शरीरमुपसर्जनं शरीरं प्रधानमाहारवस्त्रशय्यादिरुपसर्जनमाहारं प्रधानं शाल्याद्युपसर्जनं शाल्यादि प्रधानं सलिलाद्युपसर्जनमित्येवं भावाभावयोर्गुणप्रधानभावेनैव प्रवृत्तिदर्शनाद्गुणप्रधानभावव्याप्तं वस्तुत्वं तच्च भावाभावत्वव्याप्तं तद्व्यतिरिक्तवस्त्वभावादिति भावः । एवं प्रधानोपसर्जनभावत्वे सिद्धे प्रकृतिप्रत्ययार्थयोस्तन्नैयत्यं न तु पूर्वनयवदनैयत्यमिति निरूपयति—**कतरदिति** । भवनक्रियाया अनुभविता यो भावः स एव प्रधानभूतः प्रत्ययार्थः भवितुर्यद्भवनं स भाव उपसर्जनं प्रकृत्यर्थ इति निरूपयति—**भवदिति**, भवनक्रियाकर्त्ता भवतीति भाव इति व्युत्पत्तिविषयो भाव इत्यत्र भूधातूत्तरणप्रत्ययार्थभूतो भावः प्रधानमिति भावः । **भाव इति**, भवनक्रियाकर्तुर्यद्भवनं भूयत इति भवनमिति व्युत्पत्तिविषयः भवनत्वं प्रतिपद्यमान एव सन् भवतीति भवति विशेषरूपतया भवतीति व्यपदिश्यमानो भूप्रकृत्यर्थो भाव उपसर्जनमिति भावः । एनमर्थमेव स्फुटीकरोति—**को भवतीति** । भावसाधनत्वेऽपि कर्त्रर्थत्वे दृष्टान्तमाह—**नटेति** । भवित्रैव भूयते न तु भवनेन

---

1 डा. सि. क्ष. डे. वर्द्धितकवत् शरीरादि । सि. × × ।

भावना—

**घटः कर्ता तेन कर्त्रा भवित्रा भूयते, स एव भवतीति भवति, न भवनेन कर्त्रा भूयते, उपसर्जनत्वात्, तेन भवनेन भूयते चेत् खपुष्पमपि भवेत्, यद्यभवद्भवेत् खपुष्पमपि भवेत्, भवनस्य द्रव्यत्वापत्तेः।**

(**घट इति**) घटः कर्त्ता तेन कर्त्रा भवित्रा भूयते, स एव भवतीति भवति, न भवनेन कर्त्रा भूयते–न भवनं घटो भवति, उपसर्जनत्वात्–कर्त्तृ भवितुं न शक्नोति, तेन भवनेन भूयते चेत् खपुष्पमपि भवेत्, यद्यभवद्भवेत्–अभवित्रा भवनमनुभूयेत खपुष्पेणाप्यनुभूयेत, न ह्यभवितृत्वात् खपुष्पं भवनमनुभवति तथा भवनमभवितृत्वान्नानुभवतीत्यर्थः, कस्मान्नानुभवति भवनमिति चेदुच्यते–भवनस्य द्रव्यत्वापत्तेः द्रव्यशब्दस्य कर्तृप्रत्ययान्तत्वात्, द्रवतीति द्रव्यं भव्यं '**कृत्यल्युटो बहुलम्**' (पा० ३–३–११३) कर्तरीति लक्षणात्, यदि भवति द्रव्यं स्यात्, अनिष्टञ्चैतदिति।

एवं तर्हि भविताऽप्यभवनः खपुष्पवन्न स्यादिति तुल्यमनिष्टापादनम्, यथा भवित्रा विना भवनं नास्ति तद्विशिष्टं दृष्टं तथा भवितापि भवनेन विना नास्ति तद्विशिष्टो दृष्टः, इत्येतच्च–

**ननु भवनमविशेषं सामान्यमात्रं क्वचिदपि भवद् दृष्टम्, विशेषेण तु भवित्रा वशीकृतं दृष्टम्, सत्यमेतत्, वयमपि न ब्रूमो भवनं नास्त्येवेति, विशेषप्रधानं स्वोपसर्जनं तु दृष्टमिति।**

(**नन्विति**) ननु भवनमविशेषं सामान्यमात्रं क्वचिदपि भवद् दृष्टम्, विशेषेण तु भवित्रा वशीकृतं दृष्टम्, सत्यमेतत् वयमपि न ब्रूमो भवनं नास्त्येवेति, किं तर्हि ? विशेषप्रधानं स्वोपसर्जनं तु दृष्टमिति न तुल्यत्वमनयोः।

क्व तद् दृश्यत इति चेदुच्यते–

**क्रियाघटव्रीहिदेवदत्तादौ कारकरूपादिमूलादिबालादिभेदं भवनसामान्यं भेदप्रधानं दृश्यते लोके विशेषेणेत्युभयं नियम्यते सामान्यमुपसर्जनमेव विशेष एव प्रधानमिति, न यथा पूर्वत्र, इह स्वरूपं घटो विशेषो न पटाद्यभावः, स एव प्रधानं भावः, सामान्यं**

---

भूयत इति भावयति–**घट इति**। व्याकरोति–**घटः कर्त्तेति,** भवितैव भवनमनुभवति प्रधानत्वात्, न तु भवनं भवितृ भवत्युपसर्जनत्वादिति भावः। भवितृव्यतिरिक्तमपि यदि भवनमनुभवेत्तर्हि गगनकुसुममपि भवनमनुभवेदित्याह–**तेन भवनेनेति**। एतदेव व्याचष्टे–**यदीति,** यदि भवनमपि भवनमनुभवेत् तर्हि तद्द्रव्यमेव भवेत् द्रवतीति द्रव्यमिति कर्तृप्रत्ययान्तार्थत्वात्। अनिष्टमेतदित्याह–**कस्मादिति**। द्रव्यशब्दस्य कर्तृप्रत्ययान्तत्वे व्याकरणं प्रमाणयति–**कृत्यल्युट इति**। अभवतो यथा भवनं नास्तीति तदमत एवमभवनस्यापि भवितुर्भवनं न स्यादिति शङ्कते–**एवं तर्हीति**। व्याचष्टे–**यथा भवित्रेति,** एवञ्च भावाभावयोरुभयोरपि भावाभावात्मकत्वमिति पूर्वपक्षाशयः, भवनं हि निर्विशेषं सामान्यमात्रं भवच्च दृष्टमपि तु भवित्रा वशीकृतमेवेति न खपुष्पसमतेति भावः। समाधत्ते–**सत्यमेतदिति**। सामान्यविशेषयोरुभयोः सामान्यविशेषात्मकत्वे विधिर्यदा विधीयते नियम्यते च तदा विधेः, नियमो यदा विधीयते नियम्यते च तदा नियमस्य प्राधान्यं स्यात्, न चैतदुष्टं सामान्यस्य प्राधान्यमिलाशयेनाह–**किं तर्हीति**। विशेषस्यैव प्रधानत्वे दृष्टान्तानाह–**क्रियाघटेति**। व्याचष्टे

**क्रियाभवनं प्रकृत्यर्थ उपसर्जनमप्रधानम्, शिबिकावाहकयानेश्वरयानवदिति विशेषभवनमेव भावभवनमिति पर्यायनयभेदोऽयं सर्वद्रव्यार्थभवनप्रतिपक्षभूतः ।**

**क्रियाघटेत्यादि,** क्रियायां कारक–कर्ता, घटे रूपादिः, व्रीहौ मूलादिः, देवदत्तादौ बालादिः, एते भेदा यस्य तद्भवनसामान्यं भेदप्रधानं दृश्यते लोके विशेषेण–उपसर्जनीकृतप्रधानेनेत्युभयम्, अस्मात् कारणात् विधिर्नियमश्च नियम्येते–सामान्यमुपसर्जनमेव विशेष एव प्रधानमिति विधिनियमौ नियतौ, न यथा पूर्वत्र–उभयमेते कामचारो वा, विधिर्विधीयते नियम्यते च, नियमो विधीयते नियम्यते चेति तुल्यकक्षौ, अनन्तरातीतनयमतवत् उभयश्चोभयं–भावोऽपि भावो भवत्यभावश्च, अभावोऽपि[अभावो]भावश्चेति, संकरदोषात्, इहेति, अस्मिन्नये स्वरूपं घटो विशेषो न पटाद्यभावः, स एव–विशेषः प्रधानं भावः, सामान्यं क्रियाभवनं प्रकृत्यर्थ उपसर्जनमप्रधानम्, किमिव ? शिबिकावाहकयानेश्वरयानवत्–यथा शिबिकावाहकानां यानमीश्वरयानार्थत्वादप्रधानमतः शिबिकावाहका यान्तीति नोच्यन्ते तैरुह्यमान ईश्वर एव प्रधानत्वाद्यातीत्युच्यते तथा सामान्येन भवतापि अप्रधानेन भविता घट एव भवतीति प्राधान्यादुच्यते, तस्मान्निरूपितवस्तुस्वरूपमुपनयति–विशेषभवनमेव भावभवनमिति दार्ष्टान्तिकमर्थमित्थम्, पर्यवनयभेदोऽयम्, अस्य नयस्य पर्यायनयभेदत्वात् सर्वद्रव्यार्थभवनं प्रतिपक्षः तत्र विध्यादयो द्रव्यार्थभवनभेदा व्याख्याता दूषिताश्च **'समनन्तरानुलोमाः पूर्वविरुद्धाः निवृत्तिनिरनुशयाः'** (      ) इति न्यायक्रमेण ते च द्रव्यार्थभेदाः ।

नामस्थापनाद्रव्य[ार्थ]भवनयोरव्याख्यातयोर्व्याख्यानं कृत्वा दूषयिष्यति–

**तत्र नामद्रव्यार्थभवनं तावत्–स्वरूपतो नमयति प्रह्वीकरोति सर्वमात्मस्वभावेनेति नाम कारणं द्रव्यं तदेव कार्यं नासत्, भवनात्मकत्वात्, स हि शब्दो भवनात्मकः, भवनान्यवस्थाविशेषाः, स्नपादिवत् पुरुषस्य बालादिवद्वा, पिण्डादिरूपादिवद्वा घटस्य ।**

---

**क्रियायामिति,** क्रियाघटादीनां कारकरूपादिव्यतिरेकेणाकिञ्चित्करत्वात्तदविनाभावित्वाच्च कारकादय एव प्रधानं क्रियादिसामान्यं तूपसर्जनमेवेति भाव. । अत एव सामान्यमुपसर्जनमेव विशेष एव तु प्रधानमिति नियम्यते न तूभयमतवदुभयप्रधानविधिरुभयोभयनयवदुभयोरुभयात्मकत्वमिति निरूपयति–**अस्मात्कारणादिति** । स्वमतं समर्थयति–**अस्मिन्नय इति,** मृदादेः स्वस्वरूपं घटो विशेषस्तेन रूपेण तस्या भवनात् पटाद्यभावस्तु न विशेषस्तेन रूपेणाभवनात् तत्रापि घटादिर्विशेष एव प्रधानं तदर्थं सामान्यस्य प्रवृत्तेः, अत एव सामान्यमप्रधानं भवित्रा विशेषेण वशीकृतत्वादिति भावः । अत्र दृष्टान्तमाह–**शिबिकेति,** सामान्यस्थानीयं शिबिकावाहकयानं विशेषस्थानीयेश्वरयानार्थत्वादप्रधानं, शिबिकावाहकानाञ्च गमनस्य सत्त्वेऽपि ते यान्तीति नोच्यन्ते, उह्यमान ईश्वर एव यातीत्युच्यते तथा सामान्यं भवदपि अप्रधानत्वात् भवतीति नोच्यते किन्तु तेन भविता विशेष एव भवतीत्युच्यते प्राधान्यादिति भावः । निरूपितवस्तुस्वरूपं दार्ष्टान्तिकमर्थमित्थमुपनयतीत्याह–**तस्मादिति** । विशेषस्यैव प्राधान्येन प्रतिपादनात् पर्यायप्रधाननयविशेषोऽयं नय इत्याह–**पर्यवनयेति** । एतस्य प्रतिपक्षभूता द्रव्यार्थनयाः विध्यादयः, ते निरूपिता दूषिताश्चेत्याह–**सर्वद्रव्यार्थेति** । एतदभिधानं वक्ष्यमाणार्थनिरूपणावसरप्रदानायेति ध्येयम् । नामस्थापनाद्रव्यभावरूपचतुर्विधभवनमध्ये नामस्थापनाद्रव्याणि द्रव्यार्थनयभेदरूपाणि तानि च न निरूपितानि निरूपितस्यैव व्यावर्तनसम्भवात्, अतस्तानि निरूपयति–**तत्र**

---

१ सि. क्ष. क्रियां घटेत्यादि । २ सि. क्ष.° मता । ३ सि. क्ष.° वाहकयानभेदश्च भयानवत् । ४ सि क्ष. °भवनं प्रतिपक्षसूत्रविच्छा० ।

( **तत्रेति** ) तत्र नामद्रव्यार्थभवनं तावत्–स्वरूपतो नमयति प्रह्वीकरोति सर्वमात्मस्वभावेनेति नाम कारणं–करोतीति, द्रव्यं–प्राग्व्याख्यातार्थं भवत एव तावद्भवनं तद्द्रव्यं कारणनामेत्युच्यते–भवत्येव भवत्यवस्थितं विश्वस्य कारणं प्रागुक्तपुरुषादिकारणवदेकमेव नाम–शब्दः, आह–करोतीति कारणमुक्तं कार्याभावात् किं क्रियते ? यत् कुर्वत् तत् कारणं स्यात्, तस्मात् कार्याभावात् कारणत्वाभावः, कारणत्वाभावात् स्वलक्षणाभावात् खपुष्पवदसदिति, उच्यते–तदेव कार्यं कारणमेव नाम कार्यं नासत्, कुतः ? भवनात्मकत्वात्, स हि शब्दो भवनात्मकः, भवनान्यवस्थाविशेषाः, स्वप्नादिवत् पुरुषस्य, बालादिवद्वा, पिण्डादिरूपादिवद्वा घटस्य, तस्मात् स एव कारणं स्वावस्थाविशेषाणां कार्याणामिति ।

अस्योद्दिष्टस्य कार्यकारणभावस्य निरूपणार्थमुदाहृत्य घटं घटस्य हीत्यारभते–

**घटस्य हि कुम्भकारचेतना कारणं, नामूर्त्तात्मा, ततः किं कुम्भकारशरीरं कर्तृत्वात् मूर्त्तत्वात् मृदाद्यात्मकत्वाद्घटस्य मूर्त्तस्य कारणं सम्भाव्येत ? यदस्तु तदस्तु कार्यं कारणञ्च सर्वथा चैतन्यरहितस्य मूर्त्तद्रव्यस्य मूर्त्तिरहितस्यापि वा चेतनस्य कारणत्वासम्भवान्मूर्त्तचैतन्यात्मकः कुम्भकारः, सर्वमपि चैतन्नामैव ।**

( **घटस्य हीति** ) घटस्य हि कार्यस्य यस्मात् कुम्भकारचेतना कारणम्–कुम्भकरणसमर्थशरीरसहिता, चेतनारहितस्याकारणात्, आत्मा तर्हि कारणमस्तु चेतनत्वादिति चेत् तन्नामूर्त्तात्मा, अकारणात्, ततः किं कुम्भकारशरीरं कर्तृत्वात् मूर्त्तत्वात् मृदाद्यात्मकत्वात् घटस्य मूर्त्तस्य कारणं सम्भाव्येत ?–मृत्सलिलाद्यात्मकत्वाद्घटस्य मूर्त्तसलिलाद्यात्मकमेव कारणं सम्भाव्येत[1], यदस्तु तदस्तु कार्यं कारणञ्च,

**नामेति** । व्याचष्टे–**स्वरूपत इति**, सर्वभावान् स्वस्वभावेन यतो नमयति तत एवैतन्नाम कारणं द्रव्यञ्च भवति भवनक्रियानुभवनशीलस्य द्रव्यत्वादिति भावः । कृत्यल्युटो बहुलमिति बाहुलकात् कर्त्तरि यप्रत्ययेन निष्पन्नत्वाद्द्रव्यशब्दस्य भवत एव भवनमर्थ इत्याशयेनाह–**प्राग्व्याख्यातार्थमिति** । तच्च कारणमेकमेव पुरुषस्वभावकालनियत्यादिवदित्याह–**भवत्येवेति** । यदि सर्वमात्मस्वभावेन नमयति तदा सर्वं नाम भवति, नाम चैकमुच्यते तर्हि तत्कारणं न भवेत तद्व्यतिरिक्तस्य कस्यचिदप्यभावात्, तथा च किं जनयत् तत् कारणं भवेत तस्मात् कारणत्वलक्षणं नाम नास्ति खपुष्पवदित्याशङ्कते–**करोतीति** । सर्वं ह्यात्मस्वभावेन नमयतीति नामोच्यते तदेव सर्वं कार्यभूतं नाम भवति तत्तद्रूपेण वा तस्यैव भवनात् तत्कार्यमपीत्याह–**तदेव कार्यमिति**, कारणभूतं नामैव कार्यं भवनात्मकत्वादिति भावः । अवस्थाऽवस्थावतोरभेदाद्भविनुर्यद्भवनं तदेव कार्यं पुरुषस्य बालादिवत् घटादेः रूपादिवदित्याह–**स हीति**, एक एव शब्दो नानाविधकार्यकारित्वेनानन्तशक्तित्वात् शक्तिभेदमाश्रित्य घटपटादिविचित्रावस्थाभिर्भवति यथा घटपटाद्योऽवस्था परस्परं भिन्ना अपि पृथिव्येव भवति तस्याश्च स्वतोऽभिन्नत्वादेककारणत्वं तथा शब्दोऽपीति भावः । मूर्त्तममूर्त्तं वा सर्वं शब्दस्यैवैकस्य विपरिवर्त्तस्वरूपमित्यादर्शयति–**घटस्य हीति** । व्याचष्टे–**घटस्य हि कार्यस्येति**, घटादिमूर्त्तकार्यस्य न केवलं चेतना कारणं विजातीयत्वात् न वाऽचेतनमात्रम्, चेतना विना कार्याजननात्, किन्तु कुम्भकरणसमर्थशरीरविशिष्टचेतना कारणं स्यात् यथा च घटादिकार्येषु पृथिवीत्वादिजातिसमन्वयदर्शनात् तत्कारणं परमाण्वादिरपि पृथिवीत्वादिजातिसमन्वितो भवति तथैव घटादिषु शब्दरूपानुगमात् तत्कारणस्यापि शब्दरूपत्वमास्थेयमिति सर्वं कार्यजातं चेतनमचेतनं वा शब्दस्यैव विपरिवर्त्तरूपम्, सर्वेषां भावानां सर्वथा सर्वदा सर्वत्र नामधेयशब्देनान्वितत्वादिति भावः । **कारणमिति**, अनेन केवलस्याचेतनस्य कारणता प्रतिक्षिप्ता । अकारणत्वादिति–अनेनामूर्त्तस्य मूर्त्तं प्रति कारणता प्रतिक्षिप्ता । मूर्त्तस्य मूर्त्तमेव कारणममूर्त्तस्य चामूर्त्तमिति नियमेऽनाश्वासात्तच्चर्चाया अत्रानवसरत्वात् सम्भावनयोच्यते–**कुम्भकारशरीरमिति** । तदेवाह–**यदस्तु तदस्त्विति** ।

[1] छा० मृत्सलिलादीव ।

**सर्वथा** चैतन्यरहितस्य मूर्त्तद्रव्यस्य घटसजातीयस्यापि मूर्त्तिरहितस्यापि वा चेतनस्यासजातीय[स्य]घटकारणत्वासम्भवात् मूर्त्तचैतन्यात्मकः कुम्भकारः—पृथिव्यप्तेजोवाय्वाकाशात्मानः संहत्य कुम्भकाराख्या भवन्ति, **तच्च सर्वमपि** चैतन्यमेव—शब्द एव, शब्दब्रह्मण एवैकस्य विपरिवर्त्तस्वरूपं पृथिव्यात्मादिमूर्त्तामूर्त्तभेदप्रभेदं जगत् ।

अपर आह—शब्दस्वतत्त्वमाकाशगुणो वा शब्दः, श्रोत्रग्राह्यस्यार्थस्य शब्दसंज्ञत्वादिति केचित्प्रतिपन्नाः, तत्कयोपपत्त्येदमुच्यते शब्द एव सर्वमित्यत्रोच्यते—

**कुम्भकारो ह्यात्मा तत्सन्निविष्टशब्दानुविद्धचैतन्यस्वरूपत्वाच्छब्दात्मकः, तदनुरूपान्तःशब्दानुविद्धचैतन्यप्रेरितपिण्डशिवकाद्यनुक्रमप्रवृत्तयोऽपि तदात्मिकाः, तत्प्रवृत्तित्वात्, मृत्प्रवृत्त्यात्मकघटवत्, तद्भावे तद्भावात्, तदभावे न प्रवर्त्तते, तन्तुवायवत् ।**

**कुम्भकारो हीत्यादि**, हिशब्दो हेत्वर्थे, कुम्भकारस्तावदात्मा, तत्सन्निविष्टशब्दानुविद्धचैतन्यस्वरूपत्वाच्छब्दात्मकः, तदनुरूपान्तःशब्दानुविद्धचैतन्यप्रेरितपिण्डशिवकाद्यनुक्रमप्रवृत्तयः—क्रिया अपि तदात्मिकाः, तत्प्रवृत्तित्वात्, मृत्प्रवृत्त्यात्मकघटवत्, तद्भावे भावात्, वैधर्म्येण तदभावे—तदनुरूपान्तःसन्निविष्ट[शब्दानुविद्ध]चैतन्याभावे न प्रवर्त्तते, तन्तुवायवत् ।

स्यान्मतं तदनुरूपचैतन्यात्मकत्वमस्तु, प्रवृत्तेश्चैतन्याविनाभावात् शब्दात्मकत्वं तु साध्यमित्यत्रोच्यते, किमत्र साध्यम् ? सिद्धमेवैतत्—

---

भावार्थमाह—**सर्वथेति**, मूर्त्तत्वेन घटसजातीयत्वेऽपि कुम्भकारशरीरमात्रस्यासजातीयस्य चात्ममात्रस्य घटकारणत्वासम्भवात् मूर्त्तचैतन्यात्मकः कुम्भकारः कारणम्, स च पृथिव्यप्तेजोवाय्वाकाशात्मरूप इति भावः । **पृथिवीति**, अनेन वस्तुमात्रं प्रदर्शितं वस्तुमात्रस्य शब्दात्मकत्वप्रदर्शनाय । **तच्च सर्वमपीति**, पृथिव्यप्तेजोवाय्वाकाशात्मस्वरूपं सर्वमपीत्यर्थः । **नामैवेति** शब्दार्थयोस्तादात्म्यात् पश्यन्तीवाग्रूपं शब्दब्रह्मैवेति भावः । भावार्थमाह—**शब्देति** । ननु सर्वं जगत् शब्दात्मकमेवेत्ययुक्तम्, साङ्ख्यैः शब्दस्य केवलमाकाशकारणतया वैशेषिकैराकाशगुणत्वेन स्वीकारात् योऽर्थो हि श्रोत्रेन्द्रियेण गृह्यते स एव शब्द उच्यते न सर्वे घटपटरूपादय इत्याशङ्कां मनसिकृत्य समाधत्ते—**कुम्भकारो हीति** । ये यदाकारानुस्यूतास्ते तन्मयाः यथा घटशरावोदञ्चनादयो मृद्विकारा मृदाकारानुगताः पदार्था मृन्मयत्वेन प्रसिद्धास्तथा शब्दाकारानुस्यूताश्च सर्वभावाः, एवञ्च निर्विकल्पकं सविकल्पकं वा ज्ञानं गौः शुक्लः चलः डित्थ इति शब्दविशिष्टमेवार्थमवबोधयति, शब्दाख्यविशेषणानुरक्तस्य विशेष्यस्य स्वरूपं पृष्टः शब्देनैव दर्शयति शब्दापरित्यागलब्धप्रकाशस्वरूपया वाऽनुभूत्याऽनुभवतीति सोऽपि विशेष्यः शब्दरूप एवेति शब्द एवार्थोपारूढः प्रतिभातीत्याशयेनाह **कुम्भकारस्तावदिति**, अयं विशेष्यो वाचकत्वेन स्वविशेषणीभूतशब्दसम्मिश्रचैतन्यस्वरूपत्वात् शब्दार्थयोश्च तादात्म्याच्छब्दात्मक एव कुम्भकार इति भावः । तादात्म्यात् अभ्यन्तरीकृतयोग्यशब्दानुविद्धचैतन्यस्य या मृत्पिण्डशिवकाद्यनुक्रमप्रवृत्तयस्तद्गतविचित्रकार्यजनकशक्तिवैचित्र्यात् कालात्मकस्वतन्त्रशक्तिप्रेरितात् भवन्ति ता अपि तदात्मिका एव, पिण्डादीनां तत्प्रवृत्तिरूपत्वादित्यनुमानमाह—**तदनुरूपेति** । व्याप्तिं ग्राहयति—**तद्भाव इति** । प्रवृत्तिं प्रति चैतन्यस्य कारणत्वेन पिण्डादिप्रवृत्तयः पिण्डादिप्रवृत्त्यनुरूपचैतन्यात्मका भवन्तु कथं शब्दात्मकत्वं तासामित्याशङ्कते—**स्यान्मतमिति** । सर्वः प्रत्यय उपजायमानो नानुल्लिखितशब्दक उपजायते तदुल्लेखरहितस्यानवाप्तप्रकाशस्वभावत्वेनानुदितकल्पत्वात्, इदं ईदृशञ्चेति परामर्शरहिते हि वेदने वेदनात्मकतैव

---

१ सि. क्ष. डे. ला. तत्सन्निविष्टशब्दा० । २ सि. × × । ३ सि. × × ।

**न हि काचिदपि चेतना अशब्दाऽस्ति, अनादिकालप्रवृत्तशब्दव्यवहाराभ्यासवासितत्वाद्विज्ञानस्य, चैतन्यमेव हि पश्यन्त्यवस्था मध्यमावैखर्योरवस्थयोरुत्थाने कारणं नामेत्युच्यते, कारणात्मकत्वात् कार्याणाम्, यथोक्तं 'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्' ( वाक्य० का० १ श्लो० १४३ ) इत्यादि ।**

(**न हीति**) न हि काचिदपि चेतना अशब्दाऽस्ति, अनादिकालप्रवृत्तशब्दव्यवहाराभ्यासवासितत्वात् विज्ञानस्य, चैतन्यमेव हि पश्यन्त्यवस्थानं मध्यमावैखर्योरवस्थयोरुत्थाने कारणं नामेत्युच्यते, कारणात्मकत्वात् कार्याणाम्, यथोक्तं 'वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम्' ।' ( वाक्य० का० १ श्लो० १४३ ) इत्यादि ।

स्यान्मतं शब्दव्यवहारानभिज्ञेष्वप्यव्यक्तचेतनेषु विज्ञानोत्थापितप्रवृत्तिसम्भवे व्यभिचरतीति चेमेत्युच्यते–

**येऽप्यव्यक्तचेतना जङ्गमाः स्थावराश्च तेऽपि शब्दाभ्यासवासनाजनितान्तर्निविष्टस्वानुरूपचैतन्याः, हिताहितप्रवृत्तिव्यावृत्तिवृत्तत्वात्, कुम्भकारवत् ।**

**येऽप्यव्यक्तचेतना इत्यादि,** कृमिपिपीलिकादीनां जङ्गमानां व्रततित्रपुषीसितकर्णिकादीनां स्थावराणाञ्च शब्दाभ्यासवासनाजनितान्तर्निविष्टस्वानुरूपचैतन्यास्तित्वं प्रतिज्ञायते, हिताहितप्रवृत्तिव्यावृत्तिवृत्तत्वात्, कुम्भकारवत्–हिताहितयोः प्रवृत्तिव्यावृत्ती, निमित्तसप्तमी सम्बन्धषष्ठी वा, हिताहितप्रवृ-

---

भास्ति, चैतन्यस्य प्रकाशशून्यत्वादित्याशयेनोत्तरयति–**न हीति** । व्याचष्टे–**न हीति**, लोके शब्दानुगमं विना ज्ञानं नास्ति सर्वमपि ज्ञानं शब्दविषयकं शब्दार्थयोरभेदात, अर्थस्य शब्दप्रकाश्यत्वनियमाच्च, ज्ञानञ्च सर्वं शब्दाकारानुविद्धम्, ज्ञानस्य च शब्दाकारताननुषक्ते समुत्पन्नमपि ज्ञानं न प्रकाशेत तस्मान्नास्त्यशब्दा चेतनेति भाव । न हि काचिदित्यनेनोक्ता चेतना वैखरीत्युच्यते सा च श्रोत्रविषया श्लिष्टव्यक्तवर्णा प्राप्तसाधुभावा भ्रष्टसंस्कारा च, अन्त.सन्निवेशिनी परिगृहीतक्रमेव बुद्धिमात्रोपादाना सूक्ष्मप्राणवृत्त्यनुगता मध्यमेत्युच्यते, प्रतिसंहृतक्रमा सत्यप्यभेदे समाविष्टक्रमशक्ति. पश्यन्तीत्युच्यते, इयञ्च मध्यमावैखर्योः कारणं नामात्मिकैव कार्याणां कारणात्मकत्वात् कार्यस्य नामात्मकत्वे कारणस्यापि तदनपायादित्याशयेनाह–**चैतन्यमेव हीति,** ग्राह्यग्राहकाकारवर्जिताऽपरिच्छिन्ना सर्वतः संहृतक्रमा पश्यन्तीरूपा वाक्, स एवात्मा सर्वदेहव्यापकत्वेन वर्तते, अन्त· पश्यदवस्थया भोक्तृतारूपयाऽविद्यया, सैव पश्यन्तीरूपा वाक् अर्थप्रतिपादनेच्छयोपलक्षिता मनोविज्ञानरूपत्वेनाऽऽस्थिता मध्यमा वागुच्यते, सैव च वक्त्रकुहरं प्राप्ता कण्ठादिस्थानभागेषु विभक्ताकारादिवर्णरूपा वैखरीत्युच्यते, तत सैव बाह्यार्थवासनयाऽविद्यारूपया क्रमेण घटपटाद्याकारैर्विवृत्ता चक्षुरादिना गृह्यते इति भावः । ननु बालमूकपशुपक्षिकृमिपिपीलिकावृक्षलतादीनां प्रवृत्तिदर्शनेनानुमितविज्ञानानां चेतनाऽशब्दैवेति कार्याणां कारणात्मकत्वं व्यभिचरतीत्याशङ्कते–**स्यान्मतमिति** । समाधत्ते–**येऽपीति** । व्याचष्टे–**कृमीति** । कृम्यादयः जङ्गमा व्रतत्यादयः स्थावराश्च शब्दाभ्यासवासनाजनितान्तर्निविष्टस्वानुरूपचैतन्या एव, सर्वं हि विज्ञानं शब्दाकारानुस्यूतम्, संसारिणां बाह्यस्य लोकव्यवहारस्यान्तश्च सुखदुःखादिसंविद्रूपस्य साधनं वागेव, सर्वप्राणिषु वाङ्मात्रानतिक्रान्तचैतन्यस्यैव वर्तनात् वाङ्मात्रातिक्रान्तचैतन्ये हि बाह्यान्तःप्रवृत्तिरेव न स्यादिति बाह्यान्तर्हिताहितप्रवृत्तिव्यावृत्तिदर्शनमेव कृम्यादीनां शब्दानुविद्धचैतन्यात्मकत्वं साधयतीति भावः । अमुमेव हेतुं दर्शयति–**हिताहितेति** । हिताहितनिमित्तप्रवृत्तिनिवृत्त्योर्वृत्तत्वात् हिताहितसम्बन्धिप्रवृत्तिनिवृत्त्योर्वृत्तत्वादिति हेत्वर्थमाह–**निमित्तेति** । हिताहितप्रवृत्तिनिवृत्तिप्रकारेण वृत्तत्वादिति हेत्वर्थाभिप्राये-

---

१ सि. क्ष. छा. डे. रूपम् । २ सि. क्ष. छा. त्रपुसीलकसितकर्णिका० ।

त्तिव्याघृत्त्योर्वृत्तत्वात्, इत्थंभूतलक्षणा तृतीया वा हिताहितप्रवृत्तिव्यावृत्तिभ्यां वृत्तत्वात् स्तम्भाद्याश्रयोपसर्पणं हितप्रवृत्तिवृत्तत्वं गर्त्ताद्याविभयादन्यतो गमनमहितव्यावृत्तिवृत्तत्वञ्चेति सिद्धो हेतुर्वनस्पतिष्वपि, कृम्यादीनामुत्त्रासस्तम्भभ्रान्तिपलायितगतागतादिक्रिया भयाद्यविनाभाविन्यः सिद्धा एवातो हिताहितप्रवृत्तिव्यावृत्तिवृत्तता विद्यते शब्दानुविद्धचैतन्याविनाभाविनी यथा कुम्भकारे, तस्मात्तेपूभयेषु साध्यते, सुमदग्धादिषु तु जङ्गमेषु व्यक्तमेव पाणिप्रस्फोटनादिक्रियालिङ्गम्, तेन विज्ञानमविनाभावित्वात् सिद्धमेव, शब्दानुविद्धत्वं तु साध्यत इति ।

नैतत् स्वाभिप्रेतोपपत्तिबलादेव, किं तर्हि ?–

**भगवदर्हदाज्ञापि तथोपश्रूयते–'सव्वजीवाणं पि य णं अक्खरस्स अणंतभागो निच्चुग्घाडिओ' ( नंदी० सू० ५१ ) इत्यादि,**

**(भगवदिति)** भगवदाज्ञाऽपि तथोपश्रूयते–'सव्वजीवाणं पि' (नंदी० सू० ५१) इत्यादि, अक्खराणक्खरसुतादिभेदेन श्रुतज्ञानप्ररूपणायामेकेन्द्रियादिस्वामिकमुक्तं सूत्रे, तथा भाष्येऽपि 'तं पि जवि आवरिज्जेज्ज, तेण जीवो अजीवत्तं पावे, सुट्ठुवि मेहसमुदये होइ पहा चंदसूराणं' (            )

**अतो यथैव कुम्भकारकरणशब्दचेतनावैचित्र्यवृत्तितारतम्याध्यासनसमुपहितरूपा घटता नाम्नः साक्षाद्भवति तथा तथा तत्प्रभवमेव कुम्भकारमनुष्यशरीरं मृदादि च, शब्दोपयोगसम्बन्धात् योगवक्रताविसंवादनादेः, रूपादिमदर्थविरचनात्मकत्वात् कुम्भकारकार्यवत्, यथा हि घटपिठरादिकुलालकार्यं तेन तेन मृन्मर्दनादिप्रकारेणान्तःसन्निविष्टशब्दानुविद्धकुम्भकारप्रवृत्त्या निर्वर्त्तितत्वात् तत्प्रभवं तदात्मकं रूपादिमदर्थविरचनात्मकत्वात् तथा कुम्भकारशरीरमृदाद्यपि ।**

**अतो यथैवेत्यादि** उक्तार्थोपसङ्ग्रहरूपेण दृष्टान्तदण्डको यावत्साक्षाद्भवति तथा तथेति, कुम्भकारः शब्दानुविद्धचेतनात्मकः तत्क्रियापि तदात्मिका विचित्रा पिण्डशिवकाद्यर्थपरिस्पन्दभेदा शब्दचेतनैव, तस्या वैचित्र्येण वृत्तेस्तारतम्येणोत्तरोत्तरोत्कर्षपरम्परयाऽध्यासनं, तेन समुपहितं रूपमस्या घटतायाः सा

---

णाह–**इत्थम्भूतेति,** कंचित्प्रकारं प्राप्त इत्थंभूत, तदाख्याने तृतीयेत्यर्थः । पक्षे हेतुसिद्धिं दर्शयति–**स्तम्भादीति** । स्पष्टवचसामस्वाधीना प्रवृत्तय शब्दानुविद्धचैतन्याविनाभाविन्यः सुमदग्धादिजङ्गमानां पाणिप्रस्फोटनादिप्रवृत्तिदर्शनात् शब्दानुविद्धचैतन्यमनुमीयते, तत्र विज्ञानं तु वादिप्रतिवादिनोः सिद्धमेव शब्दात्मकत्वमेव साध्यत इत्याह–**सुमेति** । न त्विदं केवलमनुमानेनैव साध्यते किन्तु तथाऽऽगमेनापि साध्यत इत्याह–**भगवदिति** । व्याकरोति–**अक्खरेति** । प्रोक्तानुमाने दृष्टान्ततयोपन्यस्तं कुम्भकारवदिति दृष्टान्तं सङ्ग्रहरूपतो वर्णयति–**अतो यथैवेति** । तदेव व्याचष्टे–**कुम्भकार इति,** शब्दानुविद्धचेतनाविशेषकुम्भकारप्रवृत्तिमात्रस्य तत्प्रवृत्तित्वाच्छब्दानुविद्धचेतनात्मकत्वमेव कुम्भकारशक्तिरूपत्वात् ताश्च प्रवृत्तिलक्षणाः शक्तयो विचित्ररूपाः, तद्वैचित्र्येणैव विलक्षणोत्तरोत्तरकार्याणामुदयः, कारणवैचित्र्याद्धि कार्यवैचित्र्यमत एव क्रमसहभाविपिण्डशिवकादिना पृथुबुध्नादिना चोत्तरोत्तरतारतम्याध्यासितोत्कर्षपरम्परया सम्प्राप्तस्वरूपा घटता सापि शब्दादेव भवतीति भावः । **वैचित्र्येण वृत्तेरिति,** शब्दब्रह्मणः स्वातंत्र्यशक्ति-

---

१ छा. भगवदर्हदा० । २ सि. अयेतो० ।

कुम्भकारकरणशब्दचेतनावैचित्र्यवृत्तितारतम्याध्यासन[स]मुपहितरूपा घटता सा साक्षात्प्राप्तो भवति तथा तथा–तेन तेन प्रकारेण पिण्डशिवकादि[ना]रूपादिपृथुबुध्नादिना चेति दृष्टान्तः, दार्ष्टान्तिकोऽर्थोऽधुना–तथा तत्प्रभवमेव–शब्दचेतनाप्रभवमेव कुम्भकारमनुष्यशरीरं मृदादि–मृत्सिकतालोष्टवज्राश्मशिलादिपृथिवीकायतिर्यक्शरीरञ्च, आदिग्रहणादप्तेजोवायुवनस्पतितिर्यक्शरीरं देवशरीरं नारकीयञ्च, तद्भावयति–[1]शब्दोपयोगेत्यादि,–शब्दात्मक उपयोगः श्रुतज्ञानं व्यक्ताव्यक्तं तत्सम्बन्धात्, 'कायवाङ्मनःकर्मयोगः' [ तत्त्वा० अ० ६ सू० १ ] शुभोऽशुभो वा, 'स आस्रवः' [ तत्त्वा० अ० ६ सू० २ ] 'पुण्यपापयोः एकेन्द्रियादिजाति नाम्नः तिर्यग्भेदस्य [ अशुभस्य ] योगवक्रताविसंवादनञ्च, [ तत्त्वा० अ० ६ सू० २१ ] तद्विपरीतं योगावक्रत्वमविसंवादनं शुभस्य मनुष्यदेवपञ्चेन्द्रियजातिनाम्नः, आदिग्रहणाद् [योगावक्रत्वा]विसंवादनग्रहणात्, आदेरिति पञ्चमीनिर्देशाद्धेतोरित्यर्थः, कुम्भकारशरीरमृदादि तथा तथा तत्प्रभवमेवेति वर्तते, उक्तमिदं प्रक्रियायुक्त्या, न पुनर्हेतुना शब्दानुविद्धचैतन्यात्मकत्वमिति चेदेतर्हि ब्रूमः–रूपादिमदर्थविरचनात्मकत्वात्, रूपरसगन्धशब्दस्पर्शसंख्यासंस्थानादयो रूपादयः, ते यस्य सन्ति सोऽर्थः रूपादिमदर्थः, तस्य विरचना–परस्परसम्बन्धानुरूप्येण घटना [सा]ऽऽत्मा यस्य स्वरूपं मनुष्यतिर्यगङ्गोपाङ्गादिनामनिर्वृत्तकुम्भकारशरीरमृदादेरिति धर्मित्वेन सम्बध्यते, कुम्भकारकार्यवदिति दृष्टान्तः, यथाहि घटपिठरादि कुलालकार्यं तेन तेन मृन्मर्दनादिप्रकारेणान्तःसन्निविष्टशब्दानुविद्धकुम्भकारप्रवृत्त्या निर्वर्त्तितत्वात् तत्प्रभवं तदात्मकं[2]–कुम्भकारप्रवृत्त्यात्मकं रूपादिमदर्थविरचनात्मकत्वात् तथा कुम्भकारशरीरमृदाद्यप्यन्तःसन्निविष्टशब्दानुविद्धचैतन्यप्रवृत्त्यात्मकमिति ।

---

रूपस्य आरोपितकलाभेदादिविशिष्टस्य कालस्य सम्बन्धाद्वैचित्र्येण वृत्तिलाभ , तथा च विशिष्टकालसम्बन्धात्कर्मपरिपाकाभिर्विचित्रशक्तिभिर्नानाविधकार्योदय इति भावः । इत्थं दृष्टान्ततात्पर्यमाख्याय दार्ष्टान्तिकार्थमाचष्टे–**तथा तत्प्रभवमेवेति,** शब्दसम्भूतमेव कुम्भकारादिमनुष्यशरीरं पृथिव्यादितिर्यक्छरीरं देवशरीरं नारकशरीरञ्चेति भाव. । हेतुं दर्शयति–**शब्दोपयोगेति** मनुष्यतिर्यग्देवनारकाणां यथायोगं व्यक्ताव्यक्तश्रुतज्ञानसम्बन्धादित्यर्थ । **कायवागिति,** वीर्यान्तरायक्षयोपशमजन्यपर्यायेणात्मन· सम्बन्धो योगः, कायवाङ्मनोभेदात्त्रिविध. गमनादिभाषणचिन्तास्वात्मन. साधनम् , काय शरीरं पुद्गलद्रव्यघटित आत्मन उपग्राहकः, तद्योगाज्जीवस्य वीर्यपरिणाम. काययोग·, आत्मविशिष्टशरीराधीनविसृज्यमानवाग्वर्गणायोग्यस्कन्धा वाक्करणभूताः, एतत्सम्बन्धादात्मनो भाषणशक्तिर्वाग्योगः, शरीरविशिष्टात्मना सर्वप्रदेशैः परिगृहीतमनोवर्गणायोग्यस्कन्धा मननार्थं करणता यान्ति, तत्सम्बन्धादात्मनो वीर्यविशेषो मनोयोग·, एते योगा. शुभाशुभभेदेन द्विविधा , एष त्रिविधोऽपि योग पुण्यपापयोरास्रवसञ्ज्ञको भवति, तत्रैकेन्द्रियादिजात्यादित्र्यधिकाशीतिभेदस्याशुभस्याशुभो योग आस्रव , मद्वेद्यादिद्विचत्वारिंशद्भेदस्य शुभस्य कर्मणः शुभो योग आस्रव इति भावः । अशुभस्यैकेन्द्रियादिजातिप्रभृतिनाम्न आस्रवान्तरमाह–**योगवक्रतेति,** कायवाङ्मनोलक्षणयोगस्य कौटिल्यप्रवृत्तिर्योगवक्रता निर्दिदिक्षितस्यार्थस्यावस्थितस्वभावस्यान्यथाकरणं विसंवादनमशुभनाम्न आस्रव इत्यर्थः । शुभनाम्न आस्रवमाह–**तद्विपरीतमिति ।** शास्त्रीयप्रक्रियया शब्दानुविद्धचैतन्यात्मकत्वं कुम्भकारशरीरादेरभिधायानुमानेन तदाह–**रूपादिमदिति ।** हेतुं व्याचष्टे–**रूपरसेति ।** दृष्टान्तं घटयति–**यथा हीति,** स्पष्टम् । ननु घट साक्षात्प्राप्तो भवतीत्युक्तं तदयुक्तं प्रत्यक्षतो दण्डादेरेव साक्षात्प्रवर्तन-

---

१ सि. × × । २ सि. क्ष. छा. तदात्तदात्मकं ।

अत्राह–प्रत्यक्षत एव दण्डादिबहिर्निमित्तादृते घटाद्यनिर्वृत्तेः कथमिदमवधार्यते नाम्नः साक्षाद्भवति न दण्डादिभ्य इत्यत्रोच्यते–

**नाम्न एव च प्रभावात् तत्प्रेरितप्रयत्नपरिस्पन्दजनितनिष्पत्तिवस्तुनो वस्तुत्वं लभ्यते न बहिर्निमित्तापेक्षम्, तत्प्रवृत्तीनामपि स्थाने स्थाने शब्दचेतननियोजितानामात्मलाभात्तदात्मत्वम्, इतरथा स्वरूपप्रवृत्तिरेव दुर्लभा, कुतो वस्तुत्वम्? तस्मात् सर्वकारकसान्निध्येऽपि कर्तुरौदासीन्ये तदभावे वा क्रियायाः कार्यस्य चाभावाच्छब्दप्रभावप्रभवं सकलं जगत्, तथा हि स्कन्दरुद्रेन्द्राः स्कन्दनरोदनेन्दननिमित्तानुपपत्तावपि जीवस्याजीवस्य वा निमित्तनिरपेक्षाः संज्ञाः क्रियन्ते।**

**नाम्न एव चेत्यादि,** दण्डादीनां सनामप्यकिञ्चित्करत्वाच्छब्दचैतन्यस्यैव प्रभावात् तत्प्रेरितप्रयत्नपरिस्पन्दजनितनिष्पत्तिघटाख्यस्य वस्तुनः तद्वस्तुत्वं घटत्वं नाम्न एव महिम्ना लभ्यते, न बहिर्निमित्तापेक्षम्, तत्प्रवृत्तीनामपि स्थाने स्थाने शब्दचेतननियोजितानामात्मलाभात्तदात्मत्वम्, इतरथा -तेषामतदात्मत्वे स्वरूपप्रवृत्तिरेव दुर्लभा, कुतो घटस्य घटत्वं वस्तुत्वम्? तस्मात् सर्वकारकसान्निध्येऽपि कर्तुरौदासीन्ये तदभावे वा क्रियायाः कार्यस्य चाभावः घटौदनपटवागादेः, अतः शब्दप्रभावप्रभवं सकलं जगदिति, तथा हीत्यादितन्निरूपयति, हिशब्दो निदर्शने–एवञ्च कृत्वा स्कन्दरुद्रेन्द्राः–स्कन्दिर् शोषणे, रुदिर् अश्रुविमोचने, इदि परमैश्वर्ये इति स्कन्दनेन निमित्तेन स्कन्दः, रोदनेन रुद्रः, इन्दनेनेन्द्र इत्येतेषां निमित्तानामनुपपत्तावपि गोपालपशुपालादेर्जीवस्याजीवस्य वा काष्ठकुड्यपाषाणादेर्निमित्तनिरपेक्षा[:]संज्ञा[:]क्रियन्ते[1] स्कन्दो रुद्र इन्द्र इति, गोपालादीनामेव तैस्तैः शब्दैः समाख्याऽऽरोपवशाच्चोच्यते।

स्यान्मतं भवतीति भवो रोदितीति रुद्रः इन्दनाति इन्द्र इति देवताविशेषास्तन्निमित्तभूतार्थभाजः सन्त्यप्रत्यक्षाः समयान्तरप्रसिद्धाः तन्मुख्यप्रवृत्तेरितरत्रोपचारो भविष्यतीत्येतच्चायुक्तम्–

दर्शनादित्याशङ्कते–**अत्राहेति**। शब्दचैतन्यव्यतिरिक्तयावत्कारणसत्त्वेऽपि कुलालरूपशब्दचैतन्यसत्त्व एव घटादिकार्योदयात्तदभावेऽनुदयात्स्वान्वयाच्च प्रधानकारणं शब्दचैतन्यमिति मत्वोत्तरयति–**नाम्न एव चेति**। व्याकरोति–**दण्डादीनामिति,** सर्वं दण्डादिप्रवर्त्तनं शब्दचैतन्यप्रवृत्त्यैव प्रवर्त्तते न तु तामन्तरेण सर्वेषां शब्दचेतनप्रवृत्तित्वेन तदात्मत्वात्, यदि तेषां तदात्मता न स्यात् शब्दचैतन्यं न प्रवर्त्तत एव, जगत् प्रवर्त्तयितुं हि शब्दब्रह्मणः प्रवृत्तिः, तस्मात् घटः साक्षान्नाम्न एव भवतीति भावः। **तत्प्रेरितेति,** तेन प्रेरितो यः प्रयत्नजन्यः परिस्पन्दस्तेन जनिता निष्पत्तिर्यस्य घटस्येत्यर्थः। घटादिवस्तुप्रवृत्तेरिव दण्डादीतरवस्तुप्रवृत्तीनामपि नाम्न प्रभावादेवेत्याह–**तत्प्रवृत्तीनामपीति,** दण्डादिबहिर्निमित्तप्रवृत्तीनामपीत्यर्थः। तत्प्रवृत्तित्वात्तदात्मत्वानभ्युपगमे स्वासम्बद्धप्रवृत्त्यन्तरं प्रति स्वप्रवृत्तेरनुदयाच्छब्दब्रह्म न प्रवर्त्तेतेत्याह–**तेषामतदात्मत्व इति**। अथ निमित्तान्तरानपेक्षात् साक्षात् शब्दादेव सर्वेषां भावात् सर्वभावानां शब्दात्मकत्वाच्च घटनरोदनादिनिमित्तापेक्षामन्तरेणैव घटेन्द्रादिसंज्ञाः जीवस्याजीवस्य वा क्रियन्त इत्याह–**तथा हीति,** सकलस्य जगतः शब्दप्रभावप्रभवत्वाद्धीत्यर्थः। हि शब्दो न हेत्वर्थे अपि तु निदर्शनार्थ इत्याह–**हिशब्द इति**। भावं निरूपयति–**एवञ्च कृत्वेति**। स्कन्दरुद्रेन्द्रशब्दाः स्कन्दनादिनिमित्तवत्सु समयान्तरप्रसिद्धदेवताविशेषेषु मुख्यया वृत्त्या वर्त्तमानास्तथाविधनिमित्तविरहितेषु गोपालादिषूपचारेण प्रवर्त्तन्त इत्याशङ्कते–**स्यान्मतमिति**। गोपालादय एव मुख्यया वृत्त्या स्कन्दादिशब्दैरभिधेयाः प्रत्यक्षत्वात् सर्वलोकप्रसिद्धशब्दाभिधेयत्वाच्च, कार्तिकेयादयस्तु अप्रत्यक्षाः,

---

१ सि. क्ष. डा. घटादिनिर्वृ०। २ सि. शब्दार्थे०। ३ सि क्ष °ते। ४ सि. क्ष. समव्यापारोपवशात्। डा. समव्यारोपवशात्।

**प्रत्यक्षत्वात् गोपालादय एव तद्भूता मुख्यया वृत्त्योच्यन्ते, ते तु भवकार्तिकेयादयः समयान्तरप्रसिद्धशब्दपरिकल्पगम्या न सर्वलोकप्रसिद्धशब्दाभिधेयाः, तस्मात्त एव तेषु प्रत्यक्षाः, येऽपि च ते स्कन्दादयस्तेष्वेकस्मिन्नितरयोरपि संज्ञयोः प्रवृत्तिनिमित्तसद्भावात् त्रयोऽपि परस्परसंज्ञानिर्देश्याः सङ्कीर्णाः स्युः, अन्यतमन्निमित्तमात्रतत्त्वयाऽवधृतया संज्ञया विवक्षितेष्टार्थव्यवहरणात्तु अन्तर्निविष्टशब्दानुविद्धचैतन्यनिमित्तः संज्ञाव्यवहारोऽभ्युपगतो न बहिर्निमित्तं प्रत्यक्षम् ।**

**प्रत्यक्षत्वादित्यादि** यावत्त एव तेषु प्रत्यक्षाः, ते भवकार्तिकेयादयः समयान्तरप्रसिद्धशब्दपरिकल्पगम्या न सर्वलोकप्रसिद्धशब्दाभिधेयाः यथा गोपालादयः प्रत्यक्षाः सर्वलोकप्रसिद्धशब्दाभिधेयाश्चेति, तेषां सत्त्वं तच्छब्दात्मकत्वञ्चाप्रत्यक्षम्, उपचारगम्यञ्चेत्येतेभ्यः कारणेभ्यः तद्भूताः–स्कन्दादिशब्दभूताः, प्रत्यक्षाश्च गोपालादयो मुख्यया च वृत्त्योच्यन्ते, तस्मात्त एव–ते गोपालादय एव स्कन्दादयो न समयान्तरपरिकल्पिताः सन्तीति, तस्माच्छब्दशक्तिप्रभावादेव शब्दसन्निवेशः, न निमित्तान्तरात्, अभ्युपेत्यापि समयान्तरपरिकल्पितानां स्कन्दादीनामस्तित्वं निमित्तनियमाभावदोष उच्यते–येऽपि च त इत्यादि, स्कन्देऽपि रोदनेन्दने,[1] [ ततः ] स रुद्र इन्द्रो वा किं न भवति ? तथा रुद्रेऽपि स्कन्दनेन्दने, ततः स इतर[2] इतरश्च किं न भवति ? एकस्मिन्नितरयोरपि संज्ञयोः प्रवृत्तेर्निमित्तमस्त्येव, तस्मात् त्रयोऽपि परस्परसंज्ञानिर्देश्याः संकीर्णाः[3] स्युः, अथ मा भूदेष दोष इत्यन्यतमदेव निमित्तमेकं तत्त्वमिष्यतेऽसङ्कीर्णसंज्ञाव्यवहारार्थं स्कन्द एव न रुद्रो नेन्द्र इतीष्टार्थविवक्षया, एवं तर्ह्यन्यतमनिमित्तमात्रतत्त्वयाऽवधृतया संज्ञया विवक्षितेष्टा-

---

समयान्तरप्रसिद्धशब्दपरिकल्पगम्याश्च, अतस्ते न स्कन्दादिशब्दभूता इत्याशयेनोत्तरयति–**प्रत्यक्षत्वादिति** । व्याचष्टे–**त इति** आगमान्तरेषु स्कन्दरुद्रादिशब्दानुद्वीक्ष्य परिकल्प्यते सन्ति केचिद्भवकार्तिकेयादयो देवताविशेषा इति, न तु सर्वलोकप्रसिद्धगोपालादिशब्दाभिधेयप्रत्यक्षगोपालादिवत् सर्वलोकप्रसिद्धशब्दाभिधेयत्वं भवकार्तिकेयादीनाम्, तस्मात् सर्वलोकप्रसिद्धशब्दाभिधेयत्वाच्छब्दात्मत्वात् प्रत्यक्षत्वादुपचारागम्यत्वाच्च गोपालादय एव स्कन्दादिशब्दभूता मुख्यया वृत्त्योच्यन्ते तैः तैः शब्दैरिति भावः । स्कन्दादीनां सत्त्वं स्कन्दशब्दात्मकत्वञ्चाप्रत्यक्षमुपचारगम्यञ्चेत्याह–**तेषां सत्त्वमिति**, एवञ्च ते भवकार्तिकेयादयः न सर्वलोकप्रसिद्धशब्दाभिधेया अशब्दात्मका अप्रत्यक्षा उपचारगम्याश्चेत्येतेभ्यः कारणेभ्यो न तद्भूता न वा स्कन्दादिशब्दैर्मुख्यया वृत्त्योच्यन्तेऽतस्ते न सन्त्येवेति दर्शयति–**न समयेति** । कार्तिकेयादीनामभ्युपगमेऽपि शब्दसामर्थ्याच्छब्दसन्निवेशमनभ्युपगम्य निमित्तान्तराच्छब्दसन्निवेशेऽभ्युपगम्यमाने निमित्तान्तरस्य व्यभिचारितया व्यवस्था विशीर्येतेत्याशयेनाह–**अभ्युपेत्यापीति** । निमित्तव्यभिचारं प्रकाशयति–**स्कन्देपीति**, रुद्रेन्द्रशब्दप्रवृत्तिनिमित्तभूतरोदनेन्दनयोस्तद्भिन्ने स्कन्देऽपि सद्भावात् स रुद्रः इन्द्रश्च स्यादिति भावः । हेतुमाह–**एकस्मिन्निति** । बाधकमाह–**त्रयोऽपीति**, स्कन्दरुद्रेन्द्रादयोऽपि प्रत्येकं स्कन्दरुद्रेन्द्रशब्दाभिधेया त्र्यात्मकत्वात्सङ्कीर्णाश्च भवेयुरिति भावः । अथ स्कन्दादौ स्कन्दनरोदनेन्दनादिनिमित्तानां सद्भावेऽपि स्कन्दनमेव निमित्तं मुख्यं तत्त्वं तस्य नेतरे असङ्कीर्णसंज्ञाव्यवहारार्थमभ्युपगम्यत इत्याशङ्का समाधत्ते–**अथ मा भूदिति** । **एवं तर्हीति**, तर्कोऽयं तदा सम्भवति यदा शब्दशक्त्यपरिगृहीतस्यापि तर्कस्यागमार्थनिर्णयजनकत्वं स्यात्, न चैतदस्ति, तस्माच्छब्दाश्रितत्वात्तर्कस्य शब्द एव तत्र निमित्तं वक्तव्यमित्यन्तर्निविष्टस्कन्दशब्दानुविद्धचैतन्यमेव स्कन्दसंज्ञाव्यवहारे निमित्तमिति स्वेष्टसिद्धिः त्वदभ्युपगतबहिर्निमित्तपरित्यागात्त्वदिष्टत्यागश्चेति भावः । इमे एव त्वदिष्टत्यागस्वेष्टसिद्धी तुशब्देन दर्शिते इत्याह–

---

1 सि. क्ष. रोदनं च नोदः । 2 सि. क्ष. डा. डे. इतरस्य । 3 डा. संकारणस्युः ।

र्थव्यवहरणादन्तर्निविष्टशब्दानुविद्धचैतन्यनिमित्तः संज्ञाव्यवहारोऽभ्युपगतो [न] बहिर्निमित्तं प्रत्यक्षमिति दोषः, तुशब्दादनिष्टसंपरिग्रहेष्टत्यागौ विशेषयति ।

किञ्चान्यत्—

**निमित्तप्रत्ययेन संज्ञाप्रवृत्तेश्च यावत् सम्भवं संज्ञासन्निवेशे सर्वव्यपदेशभाक्त्वात् भावकादयोऽपि ते प्राप्ताः, तथा च यावत् किञ्चित् भवननिमित्तग्रस्तं तस्य सर्वस्येन्द्रस्कन्दादिरर्थः, तद्वाचिनश्च पर्यायशब्दा एव, घटकुटशब्दवत्, एवं तावत्सर्वसर्वत्वमविशेषात् ।**

**निमित्तप्रत्ययेनेत्यादि,** यदि स्कन्दनादिनिमित्तप्रत्ययेन संज्ञाप्रवृत्तिस्ततो यावत्सम्भवं यावन्निमित्तानि भवनकरणशयनभाषणचङ्क्रमणवर्त्तनपरिणमनादीनि सम्भवन्ति, तावद्भिर्निमित्तैः संज्ञासन्निवेशे सति रोदनाद्रुद्रो भवनाद्भवो भावकः करणात् कारक इत्यादि सर्वव्यपदेशभाक्त्वात् भावकादयोऽपि ते प्राप्ताः ततश्च—**तथा च यावदित्यादि,** यत्परिमाणमस्य—यावत्, यावदेव किञ्चिद्भवननिमित्तग्रस्तं सर्वमित्यर्थः, तस्य सर्वस्य घटपटादेरिन्द्रस्कन्दादिरर्थः, सर्वधात्वर्थानामन्वर्थत्वात् पर्यायः, तद्वाचिनश्च पर्यायशब्दा एव किमिव ? घटकुटशब्दवत्—सर्व एव सर्वः—घटः स्कन्दः, पटः स्कन्दः, नैयोऽपि स्कन्दः, एवं रुद्रेन्द्रादयश्च, स्कन्दोऽपि घटः पटश्चेत्यादि प्राप्तम्, एवं तावत् सर्वधातूनामन्वर्थत्वात् सर्वसर्वत्वमविशेषात् ।

किञ्चान्यत्—

**विशेषतोऽपि सम्भवघटनादिस्कन्दनादित्वाच्च सर्वसर्वत्वम्, कतमद्द्रव्यं कतमेन निमित्तेन नाभिधीयते ?,**

(**विशेषतोऽपीति**) विशेषतोऽपि सम्भवैघटनादिस्कन्दनादित्वाच्च सर्वसर्वत्वम्, चेष्टाकौटिल्याद्यभिसन्ध्यनभिसन्धिपूर्वकपरिस्पन्दार्थत्वात्—परिणत्यर्थत्वात् सर्वेषां ज्ञानगत्यर्थानां स्कन्दनशोषणविसरणरोदनेन्दनस्तम्भनाद्यर्थानां यावतां यस्मिन्नर्थे सम्भवः तस्य तस्य तथार्थत्वे सर्वसर्वत्वं, वसनाद्वस्तु

**तुशब्दादिति ।** यदि संज्ञाव्यवहारो बहिर्निमित्तापेक्षः स्यात्तर्हि निमित्तानां बहूनां सम्भवात् प्रतिनिमित्तं संज्ञासन्निवेशे प्रतिवस्तु सर्वसंज्ञाव्यपदेश्यं स्यादिति दोषान्तरमाह—**निमित्तप्रत्ययेनेति ।** व्याचष्टे—**यदीति,** यावन्निमित्तं नामधेयशब्दाः, तैरर्थसम्प्रत्ययोऽर्थसंप्रत्ययाच्च व्यवहारो यदि स्यादित्यर्थः । एकस्मिन् वस्तुनि नानानिमित्तानि दर्शयति—**भवनेति,** भावशब्दनिमित्तं भवनं कारकशब्दनिमित्तं करणं शायकशब्दनिमित्तं शयनं भाषकशब्दनिमित्तं भाषणं चङ्क्रमकशब्दनिमित्तं चङ्क्रमणं वर्तकशब्दनिमित्तं वर्तनं परिणामकशब्दनिमित्तं परिणमनमित्येतानि निमित्तानि भवकार्त्तिकेयादौ प्रत्येकं सम्भवन्तीति तत्तच्छब्दैरपि ते व्यवह्रियेरन्निति भावः । ततश्च को दोष इत्यत्राह—**तथा चेति,** घटपटादिसर्वपदार्थस्येन्द्रस्कन्दादिरर्थः पर्यायः, इन्दनादिधात्वर्थस्य संभवात्, तद्वाचकशब्दाश्च पर्यायशब्दा भवेयुः, एवञ्च घटः इन्द्रस्कन्दादिनिखिलशब्दाभिधेयः स्यादेवं पटादयोऽपीति सर्वं सर्वशब्दवाच्यमिति सर्वसर्वत्वं प्रसज्यत इति भावः । **भवननिमित्तग्रस्तमिति** यावत्किञ्चिद्भावमात्रमित्यर्थः । सर्वधात्वर्थानां प्रतिवस्तु अनुगतार्थत्वात् पर्यायत्वमित्याह—**सर्वेति ।** इन्दनस्कन्दनभवनकरणादिधात्वर्थवाचिन इन्द्रस्कन्दभवकारकादिशब्दाः पर्यायशब्दा एवेत्याह—**तद्वाचिनश्चेति ।** आपत्तिमाह—**सर्व एवेति ।** एवमविशेषात्सर्वसर्वत्वमापाद्य विशेषतोऽपि तदापादयति—**विशेषतोऽपीति ।**

१ डा. सर्वधात्वर्थानामन्वर्थत्वात् । २ सि. क्ष. डा. सर्वधातुरन्वर्थत्वात् । ३ सि. क्ष. डा. सम्भवचि घ० ।

वैस्तूनां शयनस्थानासनाद्येकार्थत्वाच्च गतिनिवृत्तिपर्यायाणां शेषधातूनाञ्च वस्त्वर्थानतिवृत्तेः कतमद्द्रव्यं कतमेन निमित्तेन नाभिधीयते? ततः सर्वसर्वत्वम् ।

स्यान्मतमेवं तर्हि सुतरामतिप्रसङ्गापादानद्वारेण त्वयैव सर्वस्य बहिर्निमित्तापेक्षत्वं समर्थितम्, त्वत्पक्षेऽपि च सर्वसर्वाभिधानातिप्रसङ्गो दुर्निवार इत्येतन्नायुक्तमुक्तन्यायेनैव—

**एवमपि तु स्थिते सर्वसर्वाभिधानलक्षणाव्यवस्थाव्यावर्त्तनार्थं बहिर्निमित्तनिरपेक्षसंज्ञामात्रसन्निवेशिनियतार्थाभिधायिस्कन्दादित्वमभ्युपगन्तव्यम्, एवं हि सङ्केतमात्रत्वाच्छब्दार्थसम्बन्धस्य मुख्यार्थाः सर्वदेशभाषा इत्येतदयत्नसिद्धम्, नियतनिरपेक्षत्वात् सङ्केतस्य, स्वोपयोगप्रतिपादनसमर्थत्वाच्च शब्दानाम्, डित्थादिवत्, अत एवेदमप्यभियुक्तानां स्मरणमुपपन्नं 'अनेकार्था धातवः' इति .......................................दृश्यतामिति ।**

**एवमपि तु स्थित इत्यादि** यावत् स्कन्दादित्वमभ्युपगन्तव्यमिति, स्वप्रतिपिपादयिषितार्थप्रतिपादनार्थत्वाच्छब्दप्रयोगस्य प्रसक्तेऽपि सर्वसर्वत्वे सर्वसर्वाभिधानलक्षणाव्यवस्था प्राप्तैव, सा मा भूदिति तद्व्यावर्तनार्थं स्कन्दादिशब्दाः कस्मिंश्चिदर्थे बहिर्निमित्तनिरपेक्षाः संज्ञामात्रत्वेन सन्निवेशिताः सन्तो नियमेन तमेवार्थमभिदधतीति प्राप्तम्, इतरथा सर्वसर्वाभिधानाव्यवस्थाऽवश्यम्भाविनी, तस्मात् संज्ञासंनिवेशात् न मे कश्चिद्दोष इति तस्माद्दोषाभासमेतत् समानदोषत्वादिति, एवं हीत्यादि, अस्य न्यायस्य व्याप्तिप्रदर्शनम्, एवञ्च कृत्वा सङ्केतमात्रत्वाच्छब्दार्थसम्बन्धस्य मुख्यार्थाः सर्वदेशभाषा इत्येतदयत्नसिद्धम्—घटः कुटः कुम्भः, क्षीरं पयः पालि दुग्धम्, अग्निरातुरः किचु मङ्गल इत्यादीनाञ्च सङ्केतवशादभिधित्सितैकार्थवाचित्वं सिद्धम्, नियतनिरपेक्षत्वात् सङ्केतस्य, स्वोपयोगप्रतिपादनसमर्थत्वाच्च तेषां तेषां

---

ननु मां प्रति दोषं प्रदिदर्शयिषुणा भवतापि सर्वाभिधेयाना बहिर्निमित्तापेक्षत्व समर्थनमेव, एवं समर्थयतो भवतोऽपि सर्वसर्वाभिधानप्रसङ्गो दुर्वार इत्याशङ्कते-**स्यान्मतमिति** । स्याद्यदि बहिर्निमित्तापेक्षाऽभिधानप्रवृत्तिरित्यभ्युपगम्येत, न चैवमभ्युपगम्यते, उक्तदोषादेव, किन्तु शब्दप्रभावप्रभवाऽभिधानप्रवृत्तिरिष्यते इत्याशयेनोत्तरयति-**एवमपीति** । वक्ता हि परस्य स्वाभिलषितमर्थं प्रतिपादयितुं शब्दान् प्रयोक्तुमभिवाञ्छति, स च शब्दप्रयोगो यदि बहिर्निमित्तमपेक्ष्योऽर्थं प्रतिपादयेत तर्हि सर्वमर्थं(?)वाद्वस्तुनः प्रोक्तरीत्या सर्वसर्वाभिधानलक्षणाऽव्यवस्था स्यादिति तद्व्यावर्तनाय नियतार्थाभिधायित्वं शब्दानामभ्युपेयम्, नच बहिर्निमित्तानपेक्षं शब्दप्रभावादेव नान्यथेत्याशयेन व्याचष्टे-**स्वेति** । स्वप्रभावादेव नियतार्थप्रतिपादकत्वानभ्युपगमे दोषमादर्शयति-**इतरथेति** । अन्तःसन्निविष्टशब्दानुविद्धचैतन्यनिमित्तः संज्ञाव्यवहार इत्यभ्युपगच्छतो मे न कश्चिद्दोष इत्याशयेनाह-**तस्मादिति** । प्रयोक्तुः सङ्केतवशादेव शब्दानामर्थेषु प्रवृत्तेः निखिलदेशभाषाणामपि सङ्केतेन प्रवृत्तत्वात् मुख्यार्थवाचकत्वमेवेत्याशयेन सङ्केतपूर्वकप्रवृत्तेर्व्यापकत्वमाह-**अस्य न्यायस्येति** । नानादेशेष्वेकस्यैव घटादेर्नानाशब्दैरभिधानं दर्शयति-**घटः कुट इति** । पयसो नामान्तरण्याह-क्षीरं पय इति । अग्नेर्नामान्तराण्याह-**अग्निरातुर इति** । शब्दो हि वक्त्राऽभिधातुमिष्टं वस्तु सङ्केतवशादेव प्रतिपादयति, सङ्केतस्तु यत्किञ्चिन्निमित्तमपेक्ष्य क्रियत इति नियमनिरपेक्षत्वात् सङ्केतमात्रत एव शब्दोऽभिधातुरुपयोगं प्रतिपादयितुं क्षम इत्याह-**नियतनिरपेक्षत्वादिति,** शब्दस्यार्थप्रतिपादने सङ्केतातिरिक्तार्थापेक्षावैधुर्यस्य नियतत्वादित्यर्थः । सङ्केतादेव

---

१ छ. डे डा. वास्तुनी । २ डा. सर्वसर्वत्वे सर्वा० ।

शब्दानाम्, डित्थादिवत्, इदमप्यभियुक्तानामत एव स्मरणमुपपन्नम्–नान्यथा[1], यथा 'अनेकार्था धातवः' इति, गतार्थं यावद् दृश्यतामिति ।

**चेतनाचेतनभेदस्यास्य जगतो भावकं नाम, तस्मादेव घटो भवति, घटस्य द्रव्यं कारणम्, घटं भावयति नाम, घटस्य ततो भवनात्, यद्यतो भवति तत्तस्य कारणं दृष्टम्, यथा मृत्, अनया यथा घटस्तथा नाम्ना, घटक्रियात्मकत्वं वा भावकत्वम्, तस्माद् घटं भावयति नाम, रूपाद्युपयोगभवनं वाऽन्तर्निविष्टशब्दानुबद्धम्, रूपणाद्रूपम्, रस्यत इति रसः घ्रायत इति गन्धः श्रोत्रग्रहणं शब्द इति लक्षणात् रूपादिरपि शब्दो भवति, तस्मान्नामद्रव्यस्यानुपसर्जनतैव ।**

**चेतनाचेतनेत्यादि**, अनेन प्रकारेण यदुक्तं नाम तच्चेतनाचेतनभेदस्य कुम्भकारघटादेः पृथिव्यादिमनुष्यनारकतिर्यक्सिद्धपरमाणुकालाकाशादेः समस्तस्यास्य जगतो भावकं नाम–समस्तं जगन्नाम्नो भवतीति भावितम्, तस्मादेव घटो भवति घटस्य द्रव्यं कारणं घटं भावयति नाम, ततो भवनात्, ततो भवतीति प्रतिपादितत्वात् सिद्धो हेतुः। यद्यतो भवति तत्तस्य कारणं दृष्टम्, यथा मृत्–मृदो भुवो[2] घटस्य कारणं, तथा नाम घटस्य कारणमित्येतमर्थमुपनयति अनयेत्यादि, यथा घटस्य मृद्द्रव्यं भवति तथा नाम्नेत्यर्थः, घटक्रियात्मकत्वं वा भावकत्वम्, नाम्न इति वर्तते, शब्दो द्रव्यं तावत् घटकरणात्मकत्वात् पूर्वोक्तात् प्रतिपद्यते, तस्माद्घटं भावयति नाम, नाम्नो घटो भवतीत्यर्थः, रूपाद्युपयोगेत्यादि, अथवा रूपाद्युपयोगो–रूपादिज्ञानं तस्य भवनमन्तर्निविष्टशब्दानुबद्धं तच्छब्दात्मकं रूपणाद्रूपं रस्यत इति रसः, घ्रायत

शब्दप्रवृत्तेस्तस्य च सर्वेष्वर्थेषु सम्भवादेवानेकार्थप्रतिपादकत्वं धातूनामुक्तमभियुक्तैरपीत्याह–**इदमपीति** । **गतार्थमिति,** अत्र मूलं मृग्यम् । अथ कुम्भकारशरीरमृदादिसर्वं जगत् शब्दप्रभवं शब्दात्मकञ्च रूपादिमदर्थविरचनात्मकत्वात् कुम्भकारकार्यवदिति यत्पूर्वमुक्तं तदित्थं भावितमिति स्मारयति–**चेतनाचेतनेति** । व्याचष्टे–**अनेनेति** । निखिलं वस्तु दर्शयति–**कुम्भकारेति** । नाम कुम्भकारादीन् भावयति जनयति परिणमयतीति भावकमिति तात्पर्यमाह–**समस्तमिति** । भावकत्वमेव स्फुटीकरोति–**तस्मादेवेति**, नाम्न एवेत्यर्थः । तत्पूर्वमेव व्यावर्णितमतो नामप्रभवत्वान्नाम कारणमित्यत्र नामप्रभवत्वं नासिद्धमित्याह–**ततो भवतीति** । अमुमेव व्याप्तिं दर्शयति–**यद्यत इति** । उपनयार्थमाह–**यथेति** । भाव्यत इति भावकस्तस्य भावो भावकत्वमित्याशयेनाह–**घटक्रियात्मकत्वं वेति,** भवदेव भवतीति शब्दो भवनात्मकः भवनान्यवस्थाविशेषाः, अवस्थावस्थावतोरभेदेन नामैवाऽवस्थाः कारणञ्च शब्दस्यैव तत्तदवस्थाभिर्भवनात्, अतः घटक्रियात्मकत्वाच्छब्दो द्रव्यम्, न हि तदनात्मकघटनादिक्रियां प्रति तत्कारणं भवितुमर्हति, तस्माद्घटं भावयति नामेति भावः । किञ्च विज्ञानमात्रस्य शब्दानुविद्धत्वाद् यद् येनानुविद्धं तत्तदात्मकमिति व्याप्त्या रूपादिविज्ञानं शब्दात्मकमित्याशयेनाह–**अथवेति,** रूपादिसर्वं ज्ञानं शब्दसंसृष्टं भासते निर्विकल्पकं सविकल्पकं वा, तस्मादभेदेन शब्दसंसृष्टत्वाच्छब्दात्मकमिति भावः । रूपादिविषयं ज्ञानं यदा रूपमिति रूप्यते तदा तद्रूपमुच्यते यदा रस इति रस्यते तदा रस इति गंध इति घ्रायते यदा तदा गन्ध इत्युच्यते रूपाद्याकारेणैव विज्ञानस्यावभासनात्, तच्च ज्ञानं शब्दानुविद्धत्वाच्छब्दात्मकमिति विज्ञानात्मका रूपादयोऽपि शब्दात्मका एवेति सर्वस्य श्रोत्रग्राह्यत्वाच्छब्द एव प्रधानमित्याह–**रूपणादिति** ।

1 सि. क्ष. डे. नान्यथेति नास्ति । 2 सि. क्ष. भवो ।

इति गन्धः श्रोत्रग्रहणं शब्द इति लक्षणात् तस्योपयोगस्य शब्दात्मकत्वात् रूपादीनाञ्च तदात्मकत्वात् शब्दो रूपादिरपि भवति, तस्मान्नामद्रव्यस्यानुपसर्जनतैव—प्राधान्यमेवेत्यर्थः, एष नामद्रव्यार्थनयपूर्वपक्षः।

अत्रोत्तरमुभयनियमप्रकारः शब्दनयो वक्ष्यमाणः—

**अस्यापि नियमः, प्राधान्येन तु विशेषो नियत इत्युक्तः, अर्थार्थत्वाच्छब्दप्रयोगस्यार्थः प्रधानं न शब्दः, अर्थस्यापि ज्ञानोत्पत्तिनिमित्तत्वात् ज्ञानमेव प्रधानम्, न च ज्ञानशब्दयोरैक्यम्, प्रत्यक्षप्रतीतिविरोधाभ्याम्. प्रत्यक्षमेव हि न नाम्नो घटादिर्भवति, ततस्तु श्रोत्राभिघात एवोत्पद्यते।**

**अस्यापि नियम इत्यादि,** एषोऽपि नामद्रव्यार्थभावो नियतः उपसर्जनत्वेनेष्यते, न प्राधान्येन, प्राधान्येन तु विशेषो नियत इत्युक्तः, न ब्रूमः शब्दो निमित्तमात्रव्यापृत्तो ज्ञानोपकारी नास्तीति[1], ज्ञानस्यैव प्रधानस्योपकारकत्वेन वर्त्तते, ज्ञानेनैव चोत्थाप्यते, अर्थप्रत्यायनार्थत्वाच्छब्दप्रयोगस्य, तस्मादर्थार्थत्वाच्छब्दप्रयोगस्यार्थः प्रधानं न शब्दः, तस्याशब्दार्थत्वात्, अर्थस्यापि ज्ञानोत्पत्तिनिमित्तत्वात् ज्ञानमेव प्रधानम्, न च ज्ञानशब्दयोरैक्यम, प्रत्यक्षप्रतीतिविरोधाभ्याम्, यस्मात् प्रत्यक्षमेव न नाम्नः—शब्दात् श्रोत्राभिघातकरात् घटादिर्भवति,—न शब्दः कारणं घटस्य, ततोऽनुत्पत्तेः, ततस्तु—शब्दात् श्रोत्राभिघात एवोत्पद्यते. तस्माच्छब्दः श्रोत्राभिघाते हेतुर्न घटे न ज्ञाने।

**तथा च यदि शब्दस्य घटोत्पत्तौ द्रव्यत्वं स्यात्ततो घटार्थिनो भवतु घट इति प्रब्रवीरन्, अरिविनाशार्थिनश्च राजानः परबलमेति मा भूदिति वा ब्रूयुः, तस्मात् प्रवृत्तिनिवृत्तिकारणमर्थार्थिनाञ्च क्षायोपशमिको भावः, सोऽपि द्रव्यार्थतां हित्वा भवति, क्षणिकत्वात्, तेनापि**

---

**तदात्मकत्वादिति,** उपयोगात्मकत्वादित्यर्थः। एवं शब्दप्राधान्यवादिनामद्रव्यार्थनयमतमित्युपसंहरति—**एष इति**। शब्दनयभूतोऽयमुभयनियमनयः उक्त नामप्राधान्यनयं शिक्षयति—**अस्यापीति**। त्वदभिमतो द्रव्यभूत. शब्दो न प्रधानम्, विशेषस्यैव प्राधान्यात् किन्तूपसर्जनभूत एवेति व्याचष्टे—**एषोऽपीति**। नैतावता उभयनियमनये शब्दोऽनुपकारित्वान्नास्तीति भ्रमितव्यमित्याह—**न ब्रूम इति**। तर्हि किमित्यत्राह—**ज्ञानस्यैवेति**। वस्तु स्वयं ज्ञात्वा परं बोधयितुं शब्द आश्रीयते, तस्माज्ज्ञानेन शब्द उत्थाप्यते, तेन च शब्देनार्थप्रत्ययो भवति परस्य, तथा चार्थप्रत्यायनार्थशब्दोत्थापकतया ज्ञानमेव प्रधानं शब्द उपसर्जनमित्याह—**ज्ञानेनैवेति**। यो यदर्थस्तत्प्रधानमितरदुपसर्जनम्, यथा भोजनार्थ. पाक., अर्थार्थश्च शब्द इत्यर्थः प्रधानं शब्द उपसर्जनम्, एवं अर्थोऽपि ज्ञानार्थ इति ज्ञानमेव प्रधानमुपसर्जनमर्थ इत्याह—**तस्मादर्थार्थत्वादिति**। ननु ज्ञानं शब्दानुविद्धमतः शब्दात्मकमित्युक्तमित्याशङ्कायामाह—**न च ज्ञानशब्दयोरिति**। विरोधं स्फुटयति—**यस्मादिति,** नामरूपो हि शब्दः केवलं श्रोत्रमभिघातयतीति दृष्टम्, अतः श्रोत्राभिघाते कारणं सः न तु घटादौ, घटादिशब्दात्तदुत्पत्तेरदर्शनात्, यदि शब्दः कारणं द्रव्यं स्यात्तर्हि मृदो घट इव शब्दादपि स उत्पद्येत, तत्स्वामेनाद्भट शब्दः स्यात घटाच्च ज्ञानोत्पत्ते ज्ञानमपि शब्दः स्यात् न चैवं दृश्यतेऽतो विरोध इति भाव। शब्दस्य घटादिकारणद्रव्यत्वेऽनुपपत्तिं प्रसञ्जयति—**तथा चेति**। तदेव व्याचष्टे—

1 सि. क्ष. छा नास्तीति।

**विशेषेणैव** भूयते, उक्ता शब्दार्थव्युत्पत्तिर्वस्त्वर्थश्च, स हि भावागमः, ततः उत्थाप्यते शब्दः, तस्माच्छब्दो द्रव्यागमः, तथा ह्याहुः 'आगमतो जाणए अणुवउत्ते दव्वसुतं' ( अनु० ३२ सू० इति ।

**तथा चेत्यादि** यावत् प्रब्रवीरन्नित्यनिष्टापादनम्, यदि शब्दस्य घटोत्पत्तौ द्रव्यत्वं स्यात् ततो घटार्थिनो भवतु घट इति प्रब्रवीरन्, अरिविनाशार्थिनश्च राजानो-विजिगीषवो न हस्त्यश्वं बिभृयुः, परबलमेति मा भूदितिवा ब्रूयुः, न च तद् दृष्टमिष्टं वा, तस्मात् प्रवृत्तिनिवृत्तिकारणमर्थार्थिनाञ्च क्षायोपशमिको भावः-ज्ञानावरणक्षयोपशमनिमित्तं ज्ञानमित्यर्थः, तत एव प्रवृत्तिनिवृत्तिदर्शनात्, सोऽपि द्रव्यार्थतां हित्वा-क्षायोपशमिको भावः क्षणे क्षणेऽन्यत्वात् द्रव्यार्थतां त्यक्त्वा भवति, क्षणिकत्वात्, तेनापि विशेषेणैव भूयते [सोऽपि] विशेष एव भवति, उक्त[ा]शब्दार्थव्युत्पत्तिः, भवति भवत् प्रधानं भाव इत्युपक्रम्य यावद्बालाविभेदं दृश्यत एवेत्यक्षरार्थो गतः, वस्त्वर्थश्च भावितः-सामान्यमुपसर्जनं विशेषः प्रधानं भावः, शिबिकावाहकयानेश्वरयानवदिति, स हि भावागमः-यस्मात् क्षायोपशमिको भावो ज्ञानं भावागम उच्यते तस्मात् प्रधानं भवति, [आ]मर्यादया अभिविधिना [वा] गमोऽवबोधः ततः शब्दस्यागमत्वं तत उत्थाप्यते शब्दो ज्ञानात्, तस्माच्छब्दो द्रव्यागमः, तथा ह्याहुरिति-शब्दद्रव्यागमत्वे ज्ञापकमार्षम् 'आगमतो जाणए अणुवउत्ते दव्वसुतं' ( अनु० ३२ सू० ) इति ।

इतश्च ज्ञानमेव प्रधानम्,

**तत एव हि वाक्योत्पत्तिः, प्रवृत्तोऽपि शब्दः परतन्त्रः, ज्ञानार्थत्वाच्छ्रोतरि प्रवृत्तेश्च, तादर्थ्येन ज्ञानं प्रधानं शिबिकावाहकयानेश्वरयानवत्, अतस्त्वदुक्तिवत् उपयोगविशेषभवनं प्रधानम्, तत्कार्यत्वाच्छब्दस्य ।**

**यदि शब्दस्येति,** यदि शब्दो घटादेर्द्रव्य स्यात् तर्हि मृदाद्यभावे घटो भवत्विति शब्दप्रयोगादेव घट उत्पद्येत, तदुत्पादकघटशब्दसद्भावात्, परसैन्यविनाशाय च राजान प्रभूतव्ययमाध्यसेनापरिरक्षणव्यतिरेकेण परबलं मा भदिति शब्देनैव तद्विनाशं कुर्युः, शब्दस्यैव तत्कार्यकरणक्षमत्वादिति भाव । किं तर्हि कारणं प्रवृत्तौ निवृत्तौ चार्थाभिलाषुकाणामित्यत्राह-**तस्मादिति,** शब्दस्य कारणत्वे निरुक्तदोषप्रसङ्गादित्यर्थ, ज्ञानावरणक्षयोपशमजन्यज्ञानादेव प्रवृत्तिनिवृत्ती तत एव तयोर्दर्शनादिति भाव । तदपि हि ज्ञानं प्रवृत्तिं निवृत्तिं वा करोतीति द्रव्यं स्यात्, ततश्चाप्रधानमेवेत्याशङ्कायामाह-**सोऽपीति,** ज्ञानावरणक्षयोपमजन्यो भावोऽपीत्यर्थः, पर्यायत्वेन क्षणे क्षणेऽन्यत्वान्नानुवृत्तत्वलक्षणं द्रव्यत्वं प्राप्नोति, किन्तु विशेष एव भवतीति प्रधानमेवेति भाव । भवत प्रधानं कर्तृसाधनं प्रत्ययार्थः, भाव उपसर्जनं भावसाधनं प्रकृत्यर्थः, विशेष एव भवतीति भाव इत्यादि पूर्वग्रन्थेनैतन्नयवादिना शब्दार्थव्युत्पत्तिप्रधानमुखेन विशेषस्यैव प्राधान्यं प्रतिपादितमिति सूचयति-**उक्तेति** । तमेव ग्रन्थं स्मारयति-**भवतीति** । भावार्थोऽपि 'इह स्वरूप घटो विशेषो न घटाद्यभावः, स एव प्रधानं भाव., सामान्यं क्रिया भवनं प्रकृत्यर्थः उपसर्जनमप्रधानम् शिबिकावाहकयानेश्वरयानवदिति' भावित एवेत्याह-**वस्त्वर्थश्चेति** । सोऽयं क्षायोपशमिको भावो भावागम उच्यते, नच ज्ञानं प्रधानम् सर्वव्यापाराणां तदर्थत्वात्, तस्मात् ज्ञानात् परावबोधार्थं शब्द उत्थाप्यतेऽतः शब्दो द्रव्यागमो भवति, ज्ञानस्य कारणत्वात्, तच्छब्दं श्रुत्वा हि परस्यावबोधो भवति, तस्मादप्रधानं शब्द इति कथं शब्दज्ञानयोरैक्यम्, एतादृक्षप्रतीतिकर्मविरोधादित्याशयेनाह-**स हीति** । भावेह-**तस्मादिति** । **आ मर्यादयेति,** अनाकारपूर्वकसाकाररूपया मर्यादयेत्यर्थः । अनुपयुक्तो ज्ञायको द्रव्यश्रुतमागमत उच्यत इत्यर्थकमार्षं वचनं प्रमाणयति शब्दस्याप्राधान्ये-**तथा ह्याहुरिति** । वक्त्रा ज्ञानेन परप्रतिपत्त्यर्थं शब्द उत्थाप्यत इति शब्दो वक्तर्यप्रधानम्, श्रोतर्यपि शब्दो ज्ञानार्थ एवेत्यप्रधानम्, उभयत्र च ज्ञानमेव प्रधानमित्याह-**तत एव हीति,** वक्तृसमवेतज्ञाना-

(**तत एवेति**) यस्मात्तत एव चास्योत्पत्तिः—शब्दस्य ज्ञानादेवोत्पत्तिः, वक्तुर्ज्ञानेनोत्थापितत्वात ज्ञानमेव शब्दस्य कारणम्, प्रवृत्तोऽपि शब्दः परतंत्रो ज्ञानार्थत्वात्—परतंत्रो ज्ञानोत्पादनार्थत्वात् श्रोतरीत्यत आह—प्रवृत्तेश्च, तादर्थ्येन—तन्मूलोत्पत्तितदर्थत्वाभ्यां ज्ञानं प्रधानमित्येतस्मिन्नर्थद्वये दृष्टान्तः—शिबिकावाहकयानेश्वरयानवदिति, वैतनिकानां यानं यात्राप्रेरितेश्वरेण प्रवृत्तं ईश्वरयानार्थमतोऽपि द्विधापि ईश्वर[यान]प्राधान्यवत् ज्ञानप्राधान्यमिति, अतस्त्वदुक्तिवदित्यादि, [उप] सामीप्येन सर्वात्मना योग उपयोगः—रूपाद्यर्थसमीपे सर्वात्मप्रदेशानां तत्प्रवणता, शब्दो[प]योगात्मयोगवक्रतादेः तिर्यङ्मनुष्यनामनिर्वर्त्तितं मृदादि कुम्भकारादि च यथासंख्यं भवति, रूपादिमदर्थविरचनात्मकत्वात् कुम्भकारादिकार्यवत् नाम्नो भवति, 'आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया' (पाणिनिशिक्षा० का० ६) इत्यादि सर्वं त्वदुक्तोपपत्तिजातमुपयोगविशेषभवनप्राधान्यं साधयति, तत्कार्यत्वाच्छब्दस्य—उपयोगस्य शब्दः कार्यं स एव कारणमुपयोगस्य कुम्भकारशरीरादेरिति तत्कारणं तदिति त्वयैव प्राग्भावितं विस्तरेणैतत्।

**अथोच्येत सामान्यमविशेषः तद्भवनमात्रम्, उभयोः परस्परकारणत्वाविशेषत्वादित्यत्रोत्तरम्, अथ कस्मात् उपयोग एव नामत्वमापद्यते? उपयोगत्वप्राप्तेर्नाम्नः सर्वत्र विशेषप्रधानत्वम्, तस्यापि वा नामशब्दस्य उरःप्रभृति द्रव्यमिति नामद्रव्यार्थं हित्वा द्रव्यद्रव्यार्थोऽङ्गीकृतः, ततो मूर्त्तद्रव्यकारणत्वाभ्युपगमः ते विरोधाय आपद्यते, मूर्त्तममूर्त्तस्य हि द्रव्यं न भवति नामशब्दो मूर्त्तः कुड्यादि प्रतिहतगतित्वात्, यथा लोष्टादि, तन्नाम नोपयोगस्य द्रव्यम्, मूर्त्तत्वात्, मृद्वत्, वैधर्म्येणाकाशवत्, उक्तं हि 'न हि मूर्त्तममूर्त्तत्वं नामूर्त्तं याति मूर्त्तताम्। द्रव्यं त्रिष्वपि कालेषु नात्मभावं जहाति हि'॥**

**अथोच्येतेत्यादि** पूर्वपक्षो गतार्थो यावदविशेषत्वादिति, सामान्यमविशेषः तद्भवनमात्रं न विशेष

---

वैत्यर्थः। व्याकरोति—**यस्मादिति,** शब्दस्य ज्ञानमूलोत्पत्तिर्ज्ञानार्था प्रवृत्तिश्चेति शब्दोऽप्रधानमिति भावः। **तादर्थ्येनेति,** ज्ञानमूला हि शब्दस्योत्पत्तिर्ज्ञानार्थत्वं चेति ज्ञानं प्रधानमिति भावः। शब्दस्याप्रधानत्वे ज्ञानस्य च प्राधान्ये चैकमेव दृष्टान्तं दर्शयति—**शिबिकेति** स्वयानार्थं हीश्वरः वाहकानां यानं प्रेरयति तेन प्रवृत्तं तद्यानमीश्वरयानार्थं भवति, अत ईश्वरयानं प्रधानं वाहकानां यानं त्वप्रधानमिति भावः। कुम्भकारमनुष्यशरीरमृदादि नामप्रभवम्, शब्दोपयोगसम्बन्धात योगवक्रताविसंवादनादेः, रूपादिमदर्थविरचनात्मकत्वाच्च कुम्भकारकार्यवदिति यत्त्वयोक्तं तदप्युपयोगविशेषभवनप्राधान्यं साधयतीत्यादर्शयति—**अतस्त्वदुक्तिवदिति**। आत्मा हि सर्वात्मप्रदेशैः शब्दरूपादिमदर्थं उपयुज्यते तदा तस्य शब्दाद्युपयोगः प्रभवति स च ज्ञानमेव तत्सम्बन्धाद्योगवक्रताविसंवादनादेर्मनुष्यशरीरमृदादि भवतीति वदता त्वयैव शब्दाद्युपयोगलक्षणक्षायोपशमिकभावविशेषस्य ज्ञानस्य प्राधान्यमाविष्कृतमिति दर्शयति—**शब्देति**। शिक्षावचनं दर्शयति—**आत्मेति,** आत्मा बुद्धिद्वारेण रूपादिमदर्थान् सम्प्राप्य विवक्षया मनो युङ्क्ते इति तदर्थः, कथमुपयोगविशेषभवनप्राधान्यं साधयतीत्यत्राह—**तत्कार्यत्वादिति**। ननु शब्दात्मकोपयोगसम्बन्धात् सर्वं भवतीति तथा स हि शब्दो भवनात्मको भवनान्यवस्थाविशेषाः स्वप्नादिवत् पुरुषस्य तस्मात् शब्दः कार्यं कारणञ्चेति मयोक्तं, मदुक्तोपपत्तिजातेनोपयोगविशेषभवनप्राधान्यस्य यदि सिद्धिरिष्यते तर्हि भवनमात्रत्वादुपयोगस्य सामान्यता

---

१ सि. क्ष. डे. छा. प्रवृत्तिश्च। २ सि. क्ष. डे. छा. °तमी°। ३ सि. क्ष. छा. °मात्रत्वं न।

**इत्येतदापन्नमिति** भावितार्थः, **उभयोः परस्परकारणत्वाविशेषत्वादिति**, अत्रोत्तरम्–**अथ कस्मादित्यादि यावत् सर्वत्र विशेषप्रधानत्वमिति**, उपयोग एव नामत्वमापद्यत इति ? विशेषस्योपयोगस्य प्राधान्यम्, उपयोगत्व-प्राप्तेर्नान्यः, **तस्यापि वा नामशब्दस्येत्यादि**, **नामशब्द इति** वीणावेणुनालशब्दादिभ्यो विशिष्यते, प्रकृतत्वा-दौपयोगित्वाच्च, **तस्य उरःप्रभृतीत्यादि**, नामद्रव्यार्थं हित्वा त्वया द्रव्यद्रव्यार्थोऽङ्गीकृतः, **तद्यथोक्तम्** 'आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ मारुत-स्तूरसि चरन् मन्द्रं जनयति स्वनम्' (पाणिनिशिक्षा का० ६–७) इत्यादिना मूर्त्तद्रव्याभ्युपगमात्, **आर्षमपि** ज्ञापकं 'नो आगमतो द्रव्यं शरीरमुक्तं तद्यथा–'अहो णं इमे णं सरीरसमुस्सयेणं आदेसमए त्ति पदं आघवितं पण्णवितं' (अनुयो० सू० १६) इत्यादि, तस्माच्छब्दकारणत्वत्यागेन मूर्त्तद्रव्यकारणत्वाभ्यु-पगमस्ते विरोधायापद्यते, अत आह–**मूर्त्तममूर्त्तस्य** द्रव्यं न भवति–**परिणामिकारणमित्यर्थः**, यथा मूर्त्तम-मूर्त्तस्य कारणं न भवतीत्ययमभ्युपगमः तथा नामशब्दस्य मूर्त्तत्वादमूर्त्तोपयोगकारित्वं न युज्यते, **स्यान्मतं** कथं मूर्त्तः शब्दो यतोऽस्यामूर्त्तिज्ञानकारित्वं न भवेदित्यत्र ब्रूमः, **नामशब्दो मूर्त्त इति** प्रतिपद्यताम्, कुड्यादिप्रतिहतगतित्वात्–यस्य गतिः कुड्यादिभिः प्रतिहन्यते तन्मूर्त्तं दृष्टं यथा लोष्टादीति, **तन्नाम नोप-योगस्येत्यादि**, **अर्थप्रदर्शनसाधनं**–उपयोगो न मूर्त्तद्रव्यहेतुकः, अमूर्त्तत्वादाकाशवत्, न ह्याकाशं मृदादि-दण्डादिमूर्त्तद्रव्यस्य कार्यमिति साधर्म्यदृष्टान्तः, मृद्वदिति वैधर्म्येण, यन्मूर्त्तद्रव्यहेतुकं न तदमूर्त्तं यथा

प्राप्ता अविशेषत्वाच्छब्दवदित्याशङ्कते–**अथोच्येतेति** । हेतुमाह–**उभयोरिति**, शब्दोपयोगयोः परस्परमविशिष्ट कारणत्वम्, करो-तीति कारणं द्रव्यं, तच्चाविशिष्टं सामान्यमेव, शब्दोपयोगयोश्च परस्परकारणत्वे कारणधर्मानुस्यूतत्वेनोपयोगस्य शब्दात्मकत्वं स्यात्, यद्यदाकारानुबद्धं तत्तदात्मकमिति व्याप्तेरिति भावः । समाधत्ते–**अथ कस्मादिति** उभयोः परस्परकारणत्वे कथमुपयोग एव शब्द-त्वमापद्यते, न तु शब्द उपयोगत्वमिति न चान्यत्र विशेषे हेतुः, तस्मादुपयोगस्य विशेषस्य प्राधान्यान्नामैवोपयोगत्वमापद्यत इति भावः । किञ्च त्वन्मतेन शब्दस्य न नामद्रव्यत्वं सम्भवति, उरःप्रभृतिभ्यो द्रव्येभ्यस्तदुत्पादाभ्युपगमात् तथा च द्रव्यद्रव्यत्वं प्राप्तमित्या-शयेनाह–**तस्यापि वेति** नामशब्दस्यापि वेत्यर्थः । शब्दे नामत्वविशेषणव्यावर्त्यमाह–**नामशब्द इतीति** । शब्दस्योरआदिभ्य उत्पत्तिप्रदर्शिका पाणिनीयशिक्षां प्रमाणयति–**तद्यथोक्तमिति** । **आत्मेति**, अन्तःकरणावच्छिन्न आत्मा सत्कारकत्वेन स्वगतानर्थान् बुद्ध्या–स्ववृत्त्या समेत्य–एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निमाहन्ति, स कायाग्नि प्रेरयति मारुतम्, स उदीर्णो मारुतः शब्दप्रयोगेच्छयोत्पन्नयत्नाभिहताग्निना नाभिप्रदेशादूर्ध्वं प्रेरितो वेगान्मूर्धपर्यन्तं गत्वा प्रतिनि-वृत्तो वक्त्रं प्राप्योक्तसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्यान्तःस्थितं शब्दं वर्णत्वेनाभिव्यनक्तीति भावार्थः । उरःप्रभृतिस्थानजन्यत्वेन शब्दस्य मूर्त्तद्रव्यात्मकत्वमभ्युपगतं भवतीति नामद्रव्यार्थत्यागो द्रव्यद्रव्यार्थतापातश्चेत्याह–**मूर्त्तद्रव्येति** । अर्हदागममपि प्रमाणयति–**आर्षमपीति** । नामद्रव्यस्य मूर्त्तत्वाच्चामूर्त्तोपयोगस्य कारणं न भवतीत्याह **मूर्त्तममूर्त्तस्येति** । **परिणामीति**, तेनार्थस्योपयोगकारणत्वेऽपि न क्षतिः निमित्तकारणत्वादिति भावः । शब्दस्य मूर्त्तत्वं साधयितुं शङ्कते–**स्या-न्मतमिति** शब्दो हि पुद्गलद्रव्यविशेषपरिणामः, मूर्त्तत्वान्न त्वमूर्त्त आकाशगुणः, अपि तु मूर्त्तः शब्दो हि कुड्यादिप्रतिहतगतिः, तद्व्यवहितैः तदश्रवणात्, यस्य च गतिः कुड्यादिना प्रतिहता भवति तन्मूर्त्तं दृष्टं यथा लोष्टादि, तथा शब्द इति, तस्मान्नामूर्त्तस्यो-पयोगस्य नाम परिणामिकारणं भवितुमर्हतीत्याह–**नामशब्द इति** । इतरथा मृद्द्रव्यमपि नामवदुपयोगस्य द्रव्यं भवेन्न चैवम् तन्न नाम उपयोगकारणं न चोपयोगो मूर्त्तद्रव्यप्रभवः, अमूर्त्तत्वादाकाशवदित्याह–**उपयोग इति**, मूले नामशब्दं पक्षीकृत्य नोप-योगस्य द्रव्यमिति साधितं मूर्त्तत्वहेतुना अत्र तूपयोगो न मूर्त्तद्रव्यहेतुकः किन्तूपयोगो धर्मितयोच्यते तत्कथमित्याशङ्कायां भावार्थ

१ सि. क्ष. सूपरिचरन् । २ सि. क्ष. छा. सामा इ पुषि । ३ सि. क्ष. डे. छा. °दमूर्त्तोऽयं योगकारित्वं ।

मृदिति, अथवा नामूर्त्तस्य द्रव्यं नामशब्दः, मूर्त्तत्वान्मृद्वत्, यदमूर्त्तस्यावगाहादेर्द्रव्यं न तन्मूर्त्तं यथाऽऽकाशमिति, उक्तं हीत्यादि ज्ञापकमाह–न हि मूर्त्तममूर्त्तत्वं–वर्णादिमत्पुद्गलद्रव्यं मूर्त्तं सद्वर्णाद्यात्मकत्वममूर्त्तत्वं न गच्छति न तथा परिणमति जीवाकाशधर्माधर्मत्वं न याति, नामूर्त्तमेति मूर्त्तत्वं–नाप्याकाशाद्यमूर्त्तं मूर्त्तत्वं प्रयाति, द्रव्यं त्रिष्वपि–अतीतानागतवर्त्तमानेषु कालेषु न कदाचिदित्यर्थः, यस्मात् नात्मभावं–यावद्द्रव्यभावी यो धर्मः स आत्मभावः, तमात्मभावं न कदाचित परित्यजति द्रव्यमिति ।

अत्राह–

**नन्वन्योन्यानुगतस्वरूपत्वात् निर्वृत्त्युपकरणेन्द्रियज्ञानतन्वात्मद्रव्यवत् घटाकाशवच्च, द्रव्यं कारणं ज्ञानस्य–द्रव्येन्द्रियं मूर्त्तममूर्त्तस्य ज्ञानस्य द्रव्यं शरीरादि कारणं भवान्तरात्मनः, घटश्च घटाकाशस्य ।**

**नन्वन्योन्यानुगतेत्यादि** यावद्घटाकाशस्येति, नात्मभावं त्यजति पररूपं नाप्नोत्येतदयुक्तं, अन्योन्यानुगतस्वरूपत्वात् क्षीरोदकवत्, अन्योन्यानुगतस्वरूपत्वनिदर्शनं निर्वृत्तीत्यादि यावद्द्रव्यवत्, वत्करणं निर्वृत्त्युपकरणेन्द्रियज्ञानवत्, तन्वात्मद्रव्यवच्चेति प्रत्येकं परिसमाप्यते, द्रव्यं कारणं मूर्त्तममूर्त्तस्य ज्ञानस्य, द्विविधं द्रव्येन्द्रियं निर्वृत्तिरुपकरणञ्च, निर्वृत्तिः पक्ष्मपुटकृष्णतारादिद्रव्यनिष्पत्तिः, निर्वृत्तमुपकरोतीत्युपकरणं मसूरकाकारश्चक्षुर्मध्यप्रदेशः, प्रकाशाञ्जनादयश्चोपकरणानि, एतद्द्विविधमपि ज्ञानस्य द्रव्यं दृष्टम्, तस्य व्याख्यानं–द्रव्येन्द्रियं मूर्त्तममूर्त्तस्य ज्ञानस्य द्रव्यम्, तथा तन्वात्म[द्रव्य]वदित्यस्य व्याख्या–शरीरादि कारणं भवान्तरात्मनः, घटश्च घटाकाशस्येति–मूर्त्तो घटोऽवगाहानुमेयस्याकाशस्यावगाहात्मन इति ।

---

प्रदर्शयितुं तथोक्तं **अर्थप्रदर्शनसाधनमिति** । नामशब्दमेव धर्मितयाऽऽह–**अथ वेति**, एतेन व्याख्यावैचित्र्येण मूर्त्तद्रव्यं नामूर्त्तस्य कारणं, अमूर्त्तश्च न मूर्त्तद्रव्यहेतुकमिति सिद्धमिति तदर्थप्रकाशिकां प्राचां कारिकां प्रदर्शयति–**उक्तं हीति** एतत्समानार्थिका कारिका सम्मतिटीकायां प्रथमकाण्डे ५३ गाथाव्याख्याने टीकाकृद्भिरित्थमुपन्यस्ता दृश्यते 'नामूर्त्तं मूर्त्ततामेति मूर्त्तं नायात्यमूर्त्तताम् । द्रव्यं कालत्रयेऽपीत्थं च्यवते नात्मरूपतः ॥' इति । प्रथमपादं व्याचष्टे–**वर्णादीति**, मूर्त्तममूर्त्ततया न परिणमतीति भावः । अमूर्त्तमपि न मूर्त्ततया परिणमतीत्याह–**नामूर्त्तमिति** । कदाचिदपि द्रव्यं न यावद्द्रव्यभाविनं धर्मं जहातीत्याह–**द्रव्यं त्रिष्वपीति** । ननु क्षीरे नीरमिव नीरे च क्षीरमिव परस्परं मूर्त्तामूर्त्तयोरनुगतस्वरूपत्वात् मूर्त्तद्रव्यमप्यमूर्त्तस्य कारणं भवितुमर्हतीत्याशङ्कते–**नन्वन्योन्येति** । व्याचष्टे–**नात्मभावमिति** । निर्वृत्त्युपकरणेन्द्रियज्ञानतन्वात्मद्रव्ये इवेति निर्वृत्त्युपकरणेन्द्रियज्ञानतन्वात्मद्रव्यवदिति व्युत्पत्तिमभिप्रेत्याह–**वत्करणमिति** । प्रथमदृष्टान्तं व्याकरोति–**द्रव्यं कारणमिति** । भावेन्द्रियमुपयोगः, द्रव्येन्द्रियन्तु निर्वृत्तिरूपमुपकरणरूपञ्च, उभयमपीदं पुद्गलद्रव्यपरिणामरूपत्वाद्द्रव्यम्, अङ्गोपाङ्गनामनिर्माणनामकर्मभ्यां निर्वर्तिताः औदारिकादिशरीरत्रयात्रयविशेषा निर्वृत्तीन्द्रियमुच्यन्ते, तच्च नानाकारं तत्र चक्षुषः पक्ष्मपुटकृष्णतारादि, निर्वर्त्तितस्यानुपघातानुग्रहाभ्यामुपकारि उपकरणेन्द्रियम्, यथा तस्यैव प्रकाशाञ्जनादि, एतदुभयमपि द्रव्येन्द्रियं ज्ञानस्य द्रव्यं भवतीत्यमूर्त्तस्य मूर्त्तं कारणं सिद्धमित्याह–**द्विविधमिति** । द्वितीयं दृष्टान्तं व्याकरोति–**तन्वात्मद्रव्यवदिति**, शरीरादि आत्मद्रव्यस्य द्रव्यं भवेत्, कस्यात्मद्रव्यस्येति चेत् भवान्तरात्मनः–भवः संसारः तदन्तर्गत आत्मा भवान्तरात्मा तस्य, संसारिण इति भावः, भावान्तरं मनुष्यादिपर्यायं गत आत्मा तस्य भावान्तरात्मन इति पाठे बोध्यम् । तृतीयमुदाहरणमाह–**घटश्चेति**, घटावच्छिन्नाकाशं प्रति घटो द्रव्यं स्यादिति भावः ।

---

१ सि. क्ष. डा. कारणाज्ञाना० । २ सि. क्ष. घटस्य ।

अत्रोच्यते—

**आगतं तर्ह्येतद्योऽर्थो द्रव्यं विशेषो वा योऽस्तु सोऽस्तु सर्वथाऽसावस्वतन्त्रो विशेषेण ज्ञानेन तथा तथा भाव्यते सर्वात्मनेति प्रधानं विशेष एव भवतीति, तत्र यदि सेन्द्रियाणि ज्ञानानि तानीन्द्रियकृतत्वादज्ञानानि स्युः, केवलमेवैकं ज्ञानं स्यात्, आत्मानश्च चेतनत्वात् स्वतंत्राः यदि तच्छरीरं स्वतंत्रश्च कर्त्ता, ततश्चाशरीरेण शुद्धेन सिद्धकेवलिना कृतं कर्मान्वेष्यं स्यात्, अनिष्टं च न रागिकृतम्, इष्टमपि स्यात्, आत्मनोऽनन्यत्वात्, तथाऽऽकाशघटयोरनावृत्त्यावृत्त्यात्मकयोरावृत्त्यनावृत्त्यात्मकघटाकाशभवने घटाकाशमिति स्यात् तत्तु त्वन्मतेनाकाशमेवामूर्त्तं तद्विपरीतो घट इति कुतो घटाकाशमुदाहरणं घटते? एवं द्रव्यस्य भवने दृष्टान्तस्य विपर्ययसाधनत्वात् कुतः साऽन्योऽन्यानुगमरूपता? द्रव्यस्य सदा रूपापरित्यागात्।**

**आगतं तर्ह्येतदित्यादि** यावद्विशेष एव भवतीति, योऽर्थो द्रव्यं सामान्यं विशेषो वा-प्रकृत्यर्थः प्रत्ययार्थो वा भवनं भाव इति योऽस्तु सोऽस्तु सर्वथाऽसौ अस्वतंत्रो विशेषेण ज्ञानेन तथा तथा भाव्यते द्रव्येन्द्रियादि तत्सर्वात्मना ज्ञानमात्मा, च विशेषः, स भावयति यद्यपि भवत्सामान्यं भावस्ततोऽप्युपसर्जनम्, विशेषः प्रधानमित्युक्तं भवति, तत्र यदीत्याद्यनिष्टापादनं परस्य, यावदेकं ज्ञानं स्यादिति, हेतुहेतुमद्भावेन गतार्थम्, सेन्द्रियाणि मतिश्रुतावधिमनःपर्यवज्ञानानि तानीन्द्रियकृतत्वादज्ञानानि स्युः, केवलज्ञानमेवैकं ज्ञानं स्यादिति, किञ्चान्यत्-आत्मानश्चेत्यादि, आत्मैव स्वतंत्रश्चेतनत्वात्, यदि तच्छरीरम्, स्वतंत्रश्च कर्त्ता ततश्चाशरीरेण शुद्धेन सिद्धकेवलिना कृतं कर्मान्वेष्यं स्यात्, तच्चात्यन्तदुर्लभम्, मुक्तसंसारप्रसङ्गात्, अनिष्टं च[2] न स्यादिमद्रागिकृतम्, इष्टमपि स्यात् कर्म, तस्यैव संसारित्वेष्टेः, पूर्ववद्धेतुहेतुमद्भावेनापादनं यावदात्मनोऽ[न]न्यत्वात्, एवं प्राच्योदाहरणद्वयं व्यभिचारितम्, तृतीयमपि-तथाऽऽकाशघटयोर्यथासंख्यमनावृत्त्यात्मकत्वादाकाशमावृत्त्यात्मकघटीभवति,[3] घटश्चानावृत्त्यात्मकाऽऽकाशीभवत्यावृत्त्यात्मकः सन्,

अथ चैतन्यविरहिणो मूर्त्तस्यामूर्त्तस्य वा सामान्यस्य प्रकृत्यर्थस्य विशेषस्य प्रत्ययार्थस्य वा स्वातंत्र्याभावान्न कर्तृत्वं किन्तु ज्ञानं चेतनञ्च कर्तृ, तेनैव सर्वे भाव्यन्ते तस्मात् स एव विशेषः प्रधानश्चेत्येतदागतं मूर्त्तस्याप्यमूर्त्तात्मकत्वं वदता त्वन्मतेनापि, अन्तःसन्निविष्टशब्दानुविद्धचैतन्यादेव सर्वस्य भवनाभ्युपगमादित्याशयेनोत्तरयति-**आगतं तर्हीति**। व्याचष्टे-**योऽर्थ इति**, भवनं सामान्यं प्रकृत्यर्थः, भावो विशेषः प्रत्ययार्थः, योऽस्तु सोऽस्तु मूर्त्तोऽमूर्त्तो वा भवतु तत्सर्वमचेतनमकर्तृ, न भावकं, अस्वतंत्रत्वात् स्वतंत्रो हि कर्त्ता तच्च ज्ञानमात्मा वा, तस्यैव सर्वार्थभावकत्वमिति भावः। निर्वृत्त्युपकरणेन्द्रियज्ञानवदिति परोक्तदृष्टान्तेऽनिष्टमापादयति-**तत्र यदीति**, अत्रापाद्यमज्ञानत्वं ज्ञानस्य, आपादकञ्च सेन्द्रियत्वं, यदि ज्ञानं सेन्द्रियं स्यात् तर्ह्यज्ञानं स्यात्, सेन्द्रियत्वञ्च स्वकृतत्वप्रयुक्तस्वात्मकत्वम्, तथा च ज्ञानस्य मूर्त्तत्वमापन्नं यच्च मूर्त्तं तदज्ञानं दृष्टमिति तदिन्द्रियजन्यज्ञानमात्रस्य मतिश्रुतावधिमनःपर्यवात्मकभेदभिन्नस्याज्ञानत्वं प्रसक्तं केवलज्ञानमेवैकमनिन्द्रियत्वाज्ज्ञानं स्यादिति भावः। तन्त्वात्मद्रव्यवदिति दृष्टान्तेऽनिष्टमापादयति-**किञ्चान्यदिति**, आत्मैव स्वतंत्रः चेतनत्वात् स्वतंत्रश्च कर्तेत्यभ्युपगम्यापाद्यापादकभावो वाच्य इत्याशयेनाह-**आत्मैवेति**, यद्यात्मा तन्त्वादिकृतत्वात्तन्त्वाद्यात्मकस्तर्हि सोऽचेतनो भवेत्, एवञ्च स्वतंत्रश्चेतनस्तु अशरीरी सिद्धकेवल्येव स्यात्, तस्य स्वतंत्रचेतनत्वात् कर्तृत्वापत्त्या तत्कृतं किञ्चित्कार्यमभ्युपेयम्, तच्चाप्रसिद्धम्, तथापि यदि किञ्चित् कार्यमभ्युपगम्यते तर्हि मुक्तस्यापि संसारसमागमः सम्पद्यते, तत्रापीष्टापत्तौ स एव संसारी स एव च मुक्त इति मुक्तकृतकार्यं यथेष्टं भवति तथा रागिपुरुषकृतमपि कर्म अनिष्टं न भवेदिष्टमपि भवेदिति भावः। तृतीयं घटाकाशदृष्टान्तमधिकृत्याह-**तृतीयमपीति**, आवृत्तिस्वरूपो घटो यदाऽना-

१ सि. क्ष. डे. छा. तथा०। २ क्ष. छा. अनिष्टंचन। ३ सि. °शमावृत्त्यनावृत्त्यात्मकश्चेदावृत्त्यात्मकघटी०। क्ष. °शमावृत्त्यनावृत्त्यनात्मकघटी०। छा. °शमावृत्त्यनावृत्त्यात्मकं घटी०।

ततो घटाकाशमिति स्यात्, तत्तु त्वन्मतेनाकाशमेवामूर्त्तं तद्विपरीतो घटो-मूर्त्त एवेति कुतो घटाकाशमुदाहरणं घटते ? घटात्मानापत्तेराकाशस्य, आकाशानात्मापत्तेर्घटस्य, आकाशं घटो वा तद्विपरीतगुणः[न]उदाहरणमिति । एवमित्यादि- अनेन प्रकारेण द्रव्यस्य भवने परिगृहीते दृष्टान्तस्य विपर्ययसाधनत्वात् कुतः साऽन्योऽन्यानुगमरूपता ? या त्वया प्रतिज्ञाता, एवं मदुक्तन्यायात् त्वन्मतेन च द्रव्यस्य कारणस्य सदा-[स्व]रूपापरित्यागादित्युक्तं परस्यानिष्टापादनम् ।

अत एव स्वत एव स्वमतविशेषप्रधानभवनसामान्योपसर्जनभवनप्रतिपादनार्थमाह—

**अन्यरूपानुगमात्तु चेतनाचेतनयोरात्मभावत्यागाद्द्रव्यस्य सामान्यभवनमुपसर्जनीकृत्य भवदेव च भवति तस्मात् केनचिद्विशेषः, तदसत्त्वात् सामान्यासत्त्वमापन्नम्, तथा च विशिष्टे स्वविषयेऽप्येकवृक्षादिभवने द्विवचनादिविशेषान्तरनिरपेक्षेणैव तेन भवितव्यम्, न पुनस्तथा भवति सः, नक्षत्रपुनर्वस्वादिसमानाधिकरणवचनलिङ्गादिभेददर्शनात् ।**

**अन्यरूपानुगमान्वित्यादि,** तुशब्दः परमतव्यावृत्तिं स्वमतसिद्धिञ्च विशेषयति, चेतनाचेतनयोरात्मभावत्यागात् त्वदुक्तात् द्रव्यस्य सामान्यभवनं उप[ सर्जनीकृत्य ] भवदेव च भवति, तस्मादर्थान्तराभावात् भवन एव भवनाच्च केनचिद्विशेषो न बाध्यते, यथोक्तं त्वया प्राक् 'वृक्षो वृक्षसामान्यमुपसर्जनीकृत्यैव भवति न क्ष्यादिरपि विशेषवशवर्त्तित्वात् नाम्नः' इत्यादि, तस्मादिदमनिष्टं विशेषासत्त्वं प्रसक्तम्, तदसत्त्वात् सामान्यासत्त्वं दृष्टविरुद्धमापन्नमिति, किञ्चान्यत्-तथा च विशिष्ट इत्यादि, यथा च सामान्येन प्रतिपक्षेण विना विशेषः तन्निरपेक्षो भवति, भवत्येव विशिष्टः, तथा स्वविषयेऽप्येकवृक्षादिभवने द्विवचनादिविशेषान्तरनिरपेक्षेणैव तेनाभिन्नलिङ्गवचनादिना भवितव्यं त्वन्मते, न पुनस्तथा भवति स विशेषः, नक्षत्रपुनर्वस्वादिसमानाधिकरणवचनलिङ्गादिभेददर्शनात् ।

---

मूर्त्तात्मकाकाशस्वरूपं स्यात्तदा घटाकाशं स्यात्, तत्तु न सम्भवति, त्वन्मते आकाशस्यामूर्त्तमात्रतया घटस्य मूर्त्तमात्रतायाश्चाभ्युपगमादिति भावः, अथ वा आकाशं घटो भवति, अतोऽनात्र्यात्मकम्, घटश्चाकाशं भवति, अत आत्र्यनात्र्यात्मकमिति यदि स्यात्तदा घटाकाशमिति स्यात्, यदा च घटो मूर्त्त एव, आकाशममूर्त्तमेवेति त्वदभ्युपगमः, तदा कथं घटाकाशमिति स्यादेन तद्दृष्टान्तो भवेदिति भावः । दृष्टान्तत्वासम्भवं दर्शयति-**घटात्मेति** । एवमन्योन्यानुगमरूपत्वमपि न सम्भवति मूर्त्तस्यामूर्त्तात्मकत्वे मूर्त्तत्वस्य, अमूर्त्तस्य मूर्त्तात्मकत्वेऽमूर्त्तत्वस्य च परित्यागादेकरूपमेवेत्याह-**अनेन प्रकारेणेति** । अथ सामान्यमुपसर्जनभूतं भवनं विशेषश्च प्रधानभूतं भवनमिति प्रतिपादनायाह-**अन्यरूपानुगमात्त्विति** । चेतनाचेतनयोः परस्पररूपापत्तौ परस्पररूपपरित्यागस्य त्वदुक्तस्य बलादेव सामान्यमप्रधानं भवदपि भविता घट एव भवतीति भवनं, सामान्यस्यैव घटीभवनात् सामान्यस्वरूपत्यागाच्च विशेषरूपेणाभिमतो घट एवास्ति, तथा च स कथं विशेषः, सति ह्यर्थान्तरभूते सामान्ये स विशेषः स्यात्, न च नास्ति-स्वरूपपरित्यागात् सोऽविशेष एव, तथा च सति विशेषस्यैवाभावः स्यात्तदभावे च किंनिरूपितं सामान्यं भवेदिति सामान्यस्याप्यभावः प्रसक्तः, स च दृष्टविरुद्ध इत्याशयेन व्याचष्ट-**चेतनेति** । सामान्यानपेक्षस्यैव विशेषस्य विशिष्टत्वे स विशेषो विशेषान्तरनिरपेक्षेणैव विशेषान्तरादविशिष्टः स्यात्, तथा च वृक्षादेर्विशेषस्य लिङ्गसंख्यादिविशेषान्तरनिरपेक्षतया स्वत एव विशिष्टता स्यात् अभिन्नलिङ्गसंख्यत्वात्, दृष्टा च लिङ्गसंख्यादिभिर्विशिष्टतेत्याशयेनाह-**तथा चेति,** सर्वो ह्यर्थो एको द्वौ बहव इत्यादिसंख्यायुक्तो व्यवह्रियते, आश्रयेऽर्थे द्वित्वादिकया संख्यया भेद एकत्वसंख्यया चाभेद इति भेदाभेदविभागो लोकेन क्रियते, तत्र यदि विशेषः स्वत एव विशिष्टः तर्हि किं द्वित्वादिसंख्ययेति भावः । **नक्षत्रेति,** नक्षत्रमेकवचननपुंसकलिङ्गसमानाधिकरणम्, पुनर्वसू च पदं द्विवचनपुंलिङ्गसमानाधिकरणम्, नक्षत्रं सामान्यं पुनर्वसू च विशेषौ तौ यदि स्वतो विशिष्टौ स्यातां किं द्विवचनपुंलिङ्गाभ्याम्,

तद्भावयति–

**यद्येकं न तर्हि द्व्यादि, यदि द्व्यादि नैकम्, विरोधित्वादेकत्वद्वित्वयोरित्यादि सर्वं यथाविषयं प्रतिविधातव्यम्, घटपटादिवदन्योऽन्यस्वरूपापत्तिर्नास्ति विशेषाणां सामान्यात्, दृष्टा च नक्षत्रपुनर्वस्वादिषु, प्रतीतेस्तादर्थ्यमेवेति चेन्न, प्रत्यवयवप्रतीतेरेव वयमपि ब्रूमः 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्' (पा० १-४-२१-२२) इति, यद्येकवचनान्तः शब्दः अभिधानार्थेनाप्येकेन भवितव्यम्, न द्व्यादिना, अथ द्व्यादिः नैकवचनेन शब्देन भवितव्यमुक्तवत्, इदन्त्वभिधानाभिधेयप्रत्यययोर्विसंवादात् प्रतीतिविरुद्धम्, कुमारब्रह्मचारिपितृत्ववत्।**

**यद्येकमित्यादि** साधनद्वयमनिष्टापादनं विरोधित्वादेक[त्व]द्वित्वयोरित्यादि सर्वं यथाविषयं प्रतिविधातव्यमित्यतिदेशाल्लिङ्गकालादावप्यनिष्टापादनसाधनानि द्रष्टव्यानि, यदि पुनर्वसू पुमांसौ न नक्षत्रं नपुंसकम्, पुंस्त्वाद्वृक्षवत्, अथ [नक्षत्रं न पुमांसौ] नपुंसकत्वात् कुण्डवदित्यादि, तथा तारा स्त्रीत्वादित्यादि[1] योज्यम्, घटपटादिवदिति, विशिष्टयोर्घटपटयोरिवान्योन्यस्वरूपापत्तिर्नास्ति विशेषाणां, सामान्याद्, दृष्टा[2] च नक्षत्रपुनर्वस्वादिषु, तस्मादयुक्तमुक्तं सामान्यनिरपेक्षो विशेष एव शब्दार्थो विवक्षितत्वादिति, प्रतीतेस्तादर्थ्यमेवेति चेत्- स्यान्मतं लोकप्रतीतत्वान्नक्षत्रार्थ एव पुनर्वस्वर्थः, पुनर्वस्वर्थ एव च नक्षत्रार्थ इति लोके प्रसिद्धमागोपालादि, तस्मात् सामान्यस्य विशेषत्वाददोषः, इतरथा नैरर्थक्यमेव स्यादिति, अत्रोच्यते–न, प्रत्यवयवप्रतीतेरेवेत्यादि, वयमपि लोकप्रतीतेरेव ब्रूमः 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्' (पा० १-४-२१-२२) इति अर्थानामवयवमवयवं प्रति विवक्षितानामेकत्वाद्यपेक्षयैकवचनादिशब्दप्रयोगप्रसिद्धेः, यद्येकवचनान्तः शब्दोऽभिधानार्थेनाप्येकेन भवितव्यं न द्व्यादिना, अथ

स्वतोऽभिन्नलिङ्गवचनत्वात्, न चैवं स्यात इति भाव । स्वत एव विशिष्टेनाभिन्नलिङ्गवचनादिना भवितव्यमित्यर्थं विशदयति–**यद्येकमिति,** स विशेष स्वत एव विशिष्टो यद्यसहाय एकस्तर्हि न स द्विबह्वादिरूपो द्विबहुवचनादिसमानाधिकरणो भवेत्, यदि द्विबहुवचनादिरूप तर्हि ससहायत्वान्नैक स्यादिति भाव । तद्व्याचष्टे–**साधनद्वयमिति.** यद्येक न तर्हि द्व्यादि, विरोधित्वात् यदि द्व्यादि न तर्ह्येकम्, विरोधित्वादिति साधनद्वयमित्यर्थ । लिङ्गकालादावनिष्टापादनसाधनान्येव दर्शयति–**यदीति । तथा तारेति,** यदि तारा स्त्री न नक्षत्र स्त्रीत्वात्, रमावत, यदि नक्षत्रं न स्त्री, नपुंसकत्वात्, कुण्डवदिति भाव । नवेवमेकत्वद्वित्वाद्योः पुंस्त्वस्त्रीत्वाद्योर्विरोधादन्योन्यस्वरूपापत्तिर्न स्यात्, विरुद्धधर्माभ्यां घटत्वपटत्वाभ्यां विशिष्टयोर्घटपटयोरिव, न हि घटः पटरूपतां पटो वा घटरूपतामापद्यते विशिष्टत्वात्, आपद्यते च नक्षत्रं पुनर्वस्वादिरूपं पुनर्वस्वादि च नक्षत्ररूपम्, तस्मात् सामान्यनिरपेक्ष एव विशेष इत्ययुक्तमित्याह–**घटपटादिवदिति ।** शङ्कते–**प्रतीतेरिति,** सामान्यविशेषयोरभिन्ना प्रतीतिर्लोके दृश्यते, नक्षत्रपुनर्वसुशब्दयोरेकार्थत्वं नक्षत्रं पुनर्वसू इत्यभेदार्थकप्रथमाविभक्तिसमानाधिकरणप्रयोगान्नीलो घट इत्यादिप्रयोगवदवगम्यत इति विशेषसामान्ययोरैक्यमिति भाव । तथैव व्याचष्टे–**स्यान्मतमिति ।** सामान्यस्य विशेषात्मकत्वे लोकेनैव विरोधं दर्शयति–**अत्रोच्यत इति,** वयमपि यदेकं तन्न द्व्यादीति लोकप्रतीतेरेव ब्रूमः, लोकप्रतीतिश्च द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनमिति दृश्यत इति दर्शयति–**न प्रत्यवयवेति,** समुदायरूपार्थावयवगतैकत्वादिसंख्यापेक्षया समुदायादेकवचनद्विवचनादिप्रयोगो भवतीति भावः । एवञ्च शब्दस्यैकवचनान्तत्वेऽर्थेनाप्येकेनैव भवितव्यम्, न तु द्व्यादिना, द्विवचनान्तत्वे चार्थेन द्व्यात्मकेन भवितव्यम्, न त्वेकवचनान्तशब्दवाच्येनेत्यभिधानाभिधेयप्रत्ययनियम इति दर्शयति–**यद्येकवचनान्त इति ।** नक्षत्रपुनर्वस्वादौ तूक्तनियमभङ्गो दृश्यत

१ सि. स्त्रीत्वास्त्रीत्वादित्यादि । २ सि. क्ष. डे. भा. दृष्टं च ।

द्व्यादिर्नैकवचनेन शब्देन भवितव्यमुक्तवत्, इदन्त्वभिधानाभिधेयप्रत्यययोर्विसंवादात् प्रतीतिविरुद्धम्, पुनर्वसुशब्दो द्व्यर्थो द्विवचनान्तत्वादिति प्रत्ययो नक्षत्राभिधेयविषयप्रत्ययेन विसंवदति, स चानेन, किमिव ? कुमारब्रह्मचारिपितृत्ववत्–यदि कुमारब्रह्मचारी कथं पिता ? अथ पिता कथं कुमारब्रह्मचारीति, तद्वदिहेति ।

तद्भावयति–

**लक्षणं हि नाम प्रकृतिप्रत्ययादिविभागान्वाख्यानम्, तद्धि लक्ष्यान् शब्दान् व्यवस्थापयामीति, तेषाञ्चाव्यवस्था, प्रकृत्याद्यर्थायथार्थत्वात्, कुतस्तदन्यलक्षणत्वे प्रतिपत्तिः शब्दव्यवस्था च ? अविभक्तभावितस्वलक्षणविषयत्वात्, अविभक्तभावितस्वलक्षणविषयस्थाणुपुरुषप्रतिपत्तिव्यवस्थावत्, तथा लक्ष्याप्रतिपत्त्यऽव्यवस्थाभ्यामभिधानाभिधेयविषयप्रत्ययद्वयविसंवादः ।**

**लक्षणं हि नामेत्यादि,** शब्दानां लक्षणं प्रकृतिप्रत्ययादिविभागान्वाख्यानं तद्धि लक्ष्यान् शब्दान् व्यवस्थापयामीति, तेषाञ्च–प्रकृत्यादिविभागानामव्यवस्था, प्रकृत्याद्यर्थायथार्थत्वात् तथा च शब्दविषयप्रकृत्याद्यर्थाव्यवस्थायां तदाश्रितलक्षणाव्यवस्था, लक्षणाव्यवस्थानात् कुतस्तदन्यलक्षणत्वे प्रतिपत्तिः ? शब्दव्यवस्था च ? न स्तः, कस्मात् ? अविभक्तभावितस्वलक्षणविषयत्वात्, दृष्टान्तः–अविभक्तभावितेत्यादि–यथाऽविभक्तौ भावितौ स्वलक्षणाभ्यां स्थाणुपुरुषौ, तत्र या स्थाणौ पुरुषप्रतिपत्तिर्व्यवस्था च मिथ्याप्रतिपत्तिव्यवस्थे ते, कस्मात् ? अविभक्तभावितस्वलक्षणविषयत्वात् तथा शब्दानां लक्ष्याणां [अ]प्रतिपत्त्यव्यवस्थे, लक्ष्याप्रतिपत्त्यव्यवस्थाभ्यां चाभिधानाभिधेयविषयप्रत्ययद्वयविसंवादात्, कुमारब्रह्मचारी

इत्याह–**इदन्त्विति** । विसंवादमेव दर्शयति–**पुनर्वसुशब्द इति,** पुनर्वसुशब्दस्य द्व्यर्थत्वेन द्विवचनान्तत्वान्नक्षत्रशब्दस्यैकार्थत्वेनैकवचनान्तत्वादुभयोर्भिन्नार्थतया पुनर्वसू नक्षत्रमित्येकार्थपतिपादकत्वाभावात् पुनर्वस्वर्थ एव नक्षत्रार्थो नक्षत्रार्थ एव पुनर्वस्वर्थ इति विप्रतिपत्तिरेव कुमारब्रह्मचारिपितृत्ववदिति भाव । तथापि यद्येकपुनर्वसुभवनलक्षणविशेषमात्राभिधायी पुनर्वसुशब्द., नक्षत्रशब्दोऽप्येकनक्षत्रभवनलक्षणविशेषाभिधायक नक्षत्रार्थ एव पुनर्वस्वर्थ इतीष्यते नर्हि लक्ष्यशब्दव्यवस्थापकलक्षणव्यवस्था विशीर्यत इत्याह–**लक्षणं हि नामेति** । व्याचष्टे–**शब्दानामिति** प्रकृतिप्रत्ययादिविभागेन पदानि वाक्यानि च व्याकरणेन शब्दलक्षणशास्त्रेण व्याख्यायन्त इत्यर्थ । अन्वाख्यानस्य प्रयोजनमाह–**तद्धीति,** अर्थावबोधोपकारकसाधुशब्दव्यवस्थापनार्थमिति भाव, अत्रेदं तात्पर्यम्–देशकालकर्तृभेदेन वाक्यानामानन्त्यात् प्रतिवाक्य सङ्केतग्रहासम्भवात् तदन्वाख्यानस्य लघूपायेनाशक्यत्वाच्च कल्पनया पदानि प्रविभज्य पदे प्रकृतिप्रत्ययभागकल्पनेन कल्पितान्वयव्यतिरेकाभ्या तत्तदर्थविभागं शास्त्रमात्रविषयं परिकल्पयन्ति स्म व्याकरणाचार्या । तत्र प्रकृतिर्यस्मात् प्रत्यया विधीयन्ते सा, प्रत्ययश्च प्रकृतिपरत्वव्याप्यतया विधीयमान· इति । एतद्विभागस्य एकवचनादीनामेकाद्यभिधेयव्यभिचारित्वेऽव्यवस्था स्यात्, तदव्यवस्थाया द्व्येकयोर्द्विवचनैकवचनेत्यादिलक्षणाव्यवस्था भवेत्, कृपायाश्च व्यवस्थायामनाश्वासे तदन्यलक्षणे वा को वा विश्वास इत्याह–**तेषाञ्चेति** । शब्दाप्रतिपत्त्यव्यवस्थयोर्हेतुमाह–**अविभक्तेति,** लक्ष्यप्रतिपत्तिव्यवस्थे स्वलक्षणाभ्यामविभक्ततया भाविते· यथा स्थाणौ पुरुषप्रतिपत्तिर्व्यवस्था चाविभक्ततया भावितत्वान्मिथ्याप्रतिपत्तिरव्यवस्था च भवति तथैवेयमपीति भाव । दार्ष्टान्तिके घटयति–**तथा शब्दानामिति** । लक्ष्यस्याप्रतिपत्तेरव्यवस्थायाश्च वाच्यवाचकविषयप्रत्ययद्वय विसंवदति वाच्यार्थविषयप्रत्ययोऽन्य वाचकविषयप्रत्ययोऽन्य इति, अथवा नक्षत्र-

१ सि. क्ष. छा. तद्धिलक्ष्याञ्छब्दान्य० । २ सि. क्ष. डे. छा. तथा ३-४-५ सि. क्ष. अविभक्तीभा० ३ छा. अविविक्तीभा० ४ छा. अविभक्तीभावितत्वादि यथा विभक्तौ० । ५ × × सि. छा. । ६ सि. डे. पतिं० य० ।

**पितेति** प्रत्ययवत् नक्षत्रपुनर्वस्वाद्येक[त्व]द्वित्वादिविरोध इति सम्बन्धः, एवं तावत् संख्याविषयप्रकृतिप्रत्ययप्रतिपत्तिविरोध उक्तः ।

अतःपरं पुरुषविषय उच्यते—तद्यथा

**स वृक्ष आस्त इति पुरुषविषयप्रकृतिप्रत्ययसंवादेन स्वयं प्रतिपद्य पुनरेहि मन्य इति तद्विपरीतप्रतिपत्त्या प्रकृत्यादिलक्षणालक्षणीकरणं प्रतिपत्तेश्च तद्वदेवाप्रतिपत्तित्वम्, यदृच्छाप्रतिपत्तित्वात्, अत्र प्रयोगः—एहि मन्ये रथेन यास्यसि न हि यास्यसि यातस्ते पितेत्यादिवाक्यमयथार्थमगमकमसाधु प्रस्तुतक्रियासामानाधिकरण्यविसंवादात् त्वं यामि, अहं यामीति प्रयोगवत्, प्रस्तुतप्रत्ययविसंवादाद्वा, देवदत्तो भूयत इति यथा, अङ्गीकृतपुरुषार्थवैयधिकरण्यवृत्तत्वात्, त्वं पचतीति यथा ।**

**स वृक्ष आस्त इत्यादि** यावदप्रतिपत्तित्वम्, स इति शेषोपपदे आस्त इति पुरुषविषयप्रकृतिप्रत्ययसंवादेन स्वयं प्रतिपद्य पुनरेहि मन्य इति तद्विपरीतप्रतिपत्त्या प्रकृत्यादिलक्षणमलक्षणीकृतम्, प्रतिपत्तिश्चाप्रतिपत्तीकृता तद्वदेवेति—लक्ष्यतत्त्व[ा]प्रतिपत्त्यव्यवस्थाद्वारेणेति, कस्मात्? यदृच्छाप्रतिपत्तित्वात् असमीक्षितपौर्वापर्यप्रत्ययत्वात् ब्रह्मचारिपितृत्ववदित्येव सम्बन्धः, अत्र प्रयोगः—एहि मन्य इत्यादि यावदयथार्थमगमकमसाध्विति प्रतिज्ञाः तिस्रः, प्रस्तुता क्रिया—मन्यतिः, तया सामानाधिकरण्यं विसंवदति प्रत्ययस्योत्तमपुरुषाख्यस्य एहिशब्दप्रयुक्तमध्यमपुरुष[वि]संवादादिति हेत्वर्थः, त्वं यामि अहं यासीति प्रयो-

---

मिति शब्दार्थविषयप्रत्ययोऽन्य पुनर्वसू इति शब्दार्थविषयप्रत्ययोऽन्य इति, यथा कुमारब्रह्मचारीति शब्दार्थप्रत्यय पितेतिशब्दार्थप्रत्ययादन्यः परस्परविरुद्धश्च तथा नक्षत्र पुनर्वसू इत्यादिरपीति भाव. । संख्याविषयविरोधनिरूपणमुपसंहरति—**एवं तावदिति** । अथ पुरुषविषयप्रकृतिप्रत्ययविसंवादं दर्शयति-**स वृक्ष इति** । व्याकरोति—**स इतीति,** लवाच्यकारकवाचियुष्मदर्थप्रतिपादकशब्दे उपपदे मध्यम पुरुष, तथाविधास्मदर्थप्रतिपादकशब्दे उपपदे उत्तमः पुरुषः युष्मदस्मच्छब्दार्थव्यतिरिक्तार्थः शेषस्तस्मिन् प्रथमपुरुषो भवति तत्र स इति युष्मदस्मदर्थव्यतिरिक्तार्थशेषपद तस्मिन्नुपपदे आस्त इति प्रथमपुरुषप्रत्यय इत्यत्र **पुरुष** विषयप्रकृतिप्रत्ययसंवादोऽस्तीति भाव । **एहि मन्य इतीति,** एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्तेपिते '**प्रहासे** च मन्योपपदे मन्यतेरुत्तम एकवच्च'( १–४–१०६ ) इति सूत्रस्यादाहरणम्, मन्यधातुरुपपदं यस्य धातोस्तस्मिन् **प्रकृतिभूते सति**-मध्यम स्यात् परिहासे गम्यमाने मन्यतेरुत्तम स्यात् स चैकार्थस्य वाचक स्यादिति सूत्रार्थ, सत्यपि रथे परिहासशील **शालकादि** प्रतारयन प्रयुंक्ते वाक्यमिदम्—एहि मन्यं मन्यसे इत्यर्थ, अत्र युष्मदर्थप्रतिपादकशब्दसामानाधिकरण्येऽपि उत्तमपुरुष क्रियत इति पुरुषविषयप्रकृतिप्रत्ययविसंवाद इति भाव । **विपरीतप्रतिपत्त्येति,** मन्य इति पदेन मध्यमपुरुषान्तपदजन्यबोधापेक्षया विपरीता प्रतिपत्तिर्जायते, एतया च मध्यमपुरुषलक्षणमव्याप्तीकृतमुत्तमपुरुषलक्षणश्चातिप्रसक्तीकृतमिति भाव । लक्ष्यभूतं तत्त्वं मध्यमपुरुष., तस्याप्रतिपत्तेरव्यवस्थानाच्च मन्य इति प्रतिपत्तिरप्रतिपत्तिरेवेत्याह—**प्रतिपत्तिश्चेति** । हेतुमाह—**यदृच्छेति,** नियमानपेक्षप्रतिपत्तित्वादित्यर्थ । स्वोक्तनियमविरुद्धप्रतिपत्तित्वं सूचयति—**असमीक्षितेति,** पूर्वस्मिन परस्मिन् वा स्वोक्तनियमस्मरणादत्यः सञ्जातप्रत्ययत्वादित्यर्थ । उक्तार्थमेव प्रयोगे दर्शयति—**अत्र प्रयोग इति** । **प्रस्तुतक्रियेति** । मन्य इति मन ज्ञाने इति धातूत्तरमुत्तमपुरुष. श्रूयते, तस्याहङ्कारात्मकचैतन्यविशिष्ट कर्ता वाच्य, नच कर्तृत्व मनधातुवाच्यक्रियासामानाधिकरण्यं न भजते तत्क्रियाया. मध्यमपुरुषवाच्यप्रश्नादिविषयत्वोपगमनयोग्यचैतन्यविशिष्टकर्तृत्वेन समानाधिकरणत्वादित्याशयेनाह—**प्रस्तुता**

---

१ × × सि. । २ सि. प्रवृत्त्यादि ।

गमत्, तदर्थनिदर्शनं हेत्वर्थानुरूपेण अन्यार्थस्वार्थयोर्मध्यमोत्तमविशिष्टयोर्भेदे सति विसंवादादयथार्थागमकासाधुत्ववदिति, प्रस्तुतप्रत्ययविसंवादाद्वेति द्वितीयो हेतुः, देवदत्तो भूयत इति यथेति दृष्टान्तः, देवदत्त इति प्रथमानिर्दिष्टः कर्त्रर्थः प्रकृत्यर्थमात्रवाचिना भावसाधनेन भूयतेशब्देन सामानाधिकरण्यं नार्हति, भवतीत्यनेन तु स्यात् वैधैहिशब्दे प्रस्तुतमध्यमपुरुषान्ते मन्य इत्युत्तमान्तेनायथार्थागमकासाधुत्वान्युपनेयानि, प्रस्तुतप्रत्ययविसंवादस्फुटीकरणार्थमाह—अङ्गीकृतपुरुषार्थवैयधिकरण्यवृत्तत्वादिति, तस्य निदर्शनं त्वं पचतीति यथेति, त्वमिति युष्मदुपपदे पचतीति शेषोपपदप्रथमपुरुषप्रयोगो विसंवदति तथा एहि मन्ये यास्यसीति ।

**अत्र प्रत्ययपरप्रकृतिनियमात् प्रयोगकाले केवलयोः प्रकृतिप्रत्यययोरसम्भवः, तथाऽनर्थकत्वम्, भूलतिप्शबादीनाम्, काकवासितवत्, शिक्षणार्थं तु चित्रभक्तिबिन्दुविन्यसनवत् प्रकृतिप्रत्ययार्थोपदर्शनं पृथक् क्रियते, अपृथक्सिद्धसमुदायार्थप्रतिपत्त्युपायत्वात्, एवमेव कृत्वोक्तम्—'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोः प्रत्ययार्थः प्रधानम्' (महाभा० ३-१-६७ सूत्रे) इति, अत एव च 'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव प्रकृतिः' (महाभा० ३-१-२ सूत्रे) इति, एवञ्च प्रत्ययार्थं नार्पेति प्रकृतिः, तत्परत्वात्, अत एव च मन्यतेः एहिशब्दप्रयोगप्रस्तुतसामानाधिकरण्यत्यागेनास्मत्समानाधिकरणोत्तमैकवचनप्रत्ययोऽयथार्थाभिधानम् ।**

**अथ प्रत्ययेत्यादि,** वाक्यावधिकेऽर्थे पदावधिके वा प्रतिपाद्ये वाक्यं पदं वा प्रतियोगिशब्दार्थापेक्षमेव गमयति, केवलस्याप्रयोगात् पदावधिके तावदयं नियमः 'प्रत्ययपरा [एव] प्रकृतिः प्रयोक्तव्या, प्रकृतेः परः[एव]प्रत्ययः' (महाभा० ३-१-२) इति व्यवस्थापितत्वात्, प्रयोगकाले केवलयोः प्रकृति-

**क्रियेति ।** यद्वोत्तमपुरुषप्रत्ययस्य एहीति मध्यमपुरुषेण नास्ति सवाद इत्याह–**प्रत्ययस्येति । अन्यार्थस्वार्थयोरिति,** कर्तृकर्मविशेषणभूतपरात्मवाचको मध्यमपुरुष, तथाविधस्वात्मवाचक उत्तमपुरुष तयोर्भिन्नत्वादिमवाद इत्यर्थ । कर्तृकर्मविशेषणत्वादेव पुरुषस्य भावविषयता नास्तीति भावलकारे शेषत्वात् प्रथमपुरुष एव प्रयुज्यते तत्र कर्ता तृतीयान्तपदवाच्येन भाव्यम्, तत्र च प्रथमान्तपदप्रयोगे प्रस्तुतप्रत्ययविसवाद एव भवतीति दर्शयति–**प्रस्तुतेति । अङ्गीकृतेति,** एहीत्यत्राङ्गीकृतमध्यमपुरुषवाच्यार्थव्यधिकरणार्थवाचकोत्तमपुरुषघटितत्वान्मन्य इति पदस्यत्यर्थ । एहि मन्य इत्यादिवाक्यस्य प्रकृतिप्रत्ययाभ्यामयथार्थत्वमेव निरूपयति–**अत्रेति ।** व्याचष्टे–**वाक्यावधिक इति,** परस्य बुभुत्सितार्थप्रत्यायनाय शब्दप्रयोग, परस्य प्रवृत्त्यादिविषय एव प्रायेण बुभुत्सित, स च वाक्यार्थ एवेति सर्वे शब्दा तत्परा एव, यत्रापि केवल वृक्ष इति प्रयुज्यते तत्राप्याकाक्षादिवशात् अस्ति चलति छिद्यते वेति पदान्तरार्थानामध्याहार, एव क्रियापदादिमात्रप्रयोगे यथाकाक्ष सर्वकारकाध्याहार, अत एवोक्त प्रतियोगिशब्दार्थापेक्षमेवेति, एवं सर्वत्र वाक्याधस्यैव विषयत्वेऽपि अन्वाख्यानलाघवाय पदानि तत्र च प्रकृतिप्रत्ययभागा, तत्तदर्थाश्च कल्प्यन्ते, तद्द्वारा पदार्थबोधन वाक्यार्थबोधनस्य शास्त्रफलमिति भाव । पदे नियम दर्शयति–**प्रत्ययपरेति,** प्रत्ययो नित्य सदा पर प्रयोक्तव्य इति नियमात् प्रत्यय परो यस्या सा प्रकृतिरित्यर्थ एव प्रत्ययोऽपि प्रकृतिपर एव प्रयोक्तव्य, तेन न केवला प्रकृति प्रयोक्तव्या न च केवल प्रत्यय इति फलितार्थ । अमुमेवार्थं हेतुकृत्याह–**प्रयोगकाल इति** व्यवहारकाल इत्यर्थ, तदानी वाक्यस्यैव प्रयो-

१ सि. क्ष. छा. थार्थानर्थयोः । २ सि. °कसाधुत्वात, क्ष. छा. °कसाधुवदिति । ३ सि. क्ष. छा. तथैहिशब्द-प्रस्तुतमध्यमपुरुषान्तेन मन्य इत्युत्तमान्तायथार्था° ।

**प्रत्ययोरसम्भवात्, असम्भवश्च** तथाऽनर्थकत्वात् भूलतिपृशवादीनाम्, किमिव? काकवाशितवत्–यथा वायसवाशितादीनां न कश्चिदभिधेयोऽर्थोऽस्ति तथा भू[ल]तिवादीनां केवलानाम, किमर्थं तर्हि भू सत्तायाम, 'कर्तरि कृत्' (पा. ३-४-६७) 'लः कर्मणि चे' (पा. ३-४-६९) त्यादिप्रकृतिप्रत्ययार्थपाठः? इति चेदुच्यते–शिक्षणार्थन्तु चित्रभक्तिबिन्दुविन्यसनवत्–पृथगध्ययनं शिष्यान् ग्राहयामीति विभज्य प्रकृतिप्रत्ययार्थौ दर्श्यते, यथैकामेव काष्ठादिभक्तिं लेख्ययिष्यन् चित्रकराचार्यः शिष्यान् पूर्वं बिन्दुविन्यासान् कारयति पश्चात् सयोजयति ततः सा दर्शनीया चक्षूरमणीया पुष्पवल्लीगृहमनुष्यस्त्रीहस्त्यादिसंस्थाना संव्यवहारार्हा भक्तिर्भवत्येवं प्रकृतिप्रत्ययार्थोपदर्शनं पृथक् क्रियते, अपृथक्सिद्धसमुदायार्थप्रतिपत्त्युपायत्वात्, एवमेव कृत्वोक्तमिति ज्ञापकमाह–'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः', (महाभा० ३-१-६७ सूत्रे) इति प्राधान्येन प्रत्ययार्थो विवक्षितो गुणत्वेन प्रकृत्यर्थः, अत एव चेति, यदुक्तं भाष्ये 'प्रकृतिपर[एव] प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरा[एव]प्रकृतिः, (महाभा. ३-१-२ सूत्रे) इति प्रत्ययः परो–विशेषः प्रधानं यस्याः सा प्रत्ययपरा प्रकृति[:] परशब्दस्य प्रधानार्थता वर्ण्यते, एवञ्च–अनेन न्यायेन प्रत्ययार्थं नापैति प्रकृतिः, तत्परत्वात्, अत एव च–प्रत्ययार्थानपायित्वात् मन्यतेरित्यादिना भावयित्वोपसंहरति यावदयथार्थाभिधानमिति, एहिशब्दप्रयोगप्रस्तुतसामानाधिकरण्यत्यागेनास्मत्समानाधिकरणोत्तमैकवचनप्रत्ययोऽयथार्थः, अङ्गीकृतपुरुषार्थवैयधिकरण्यवृत्तत्वात्, त्वं पचतीति प्रयोगवदिति साधूक्तम्, एवं तावत् प्रकृत्ययथार्थत्वं प्रत्ययायथार्थद्वारेणानपायित्वादुक्तम्।

गात् तस्यैवार्थवत्त्वात् केवलयोः प्रकृतिप्रत्यययोरनर्थकत्वेनासम्भव इति भावः। आनर्थक्यमेवाह–**असम्भवश्चेति**। उक्तञ्च 'धात्वादीनां विशुद्धानां लौकिकोऽर्थो न विद्यते। कृत्तद्धितानामर्थश्च केवलानामलौकिकः' ॥ इति। **भूलेति,** भूशब्दः प्रकृतिप्रदर्शकः, लादयः प्रत्ययद्योतकाः, एतेषां केवलानां लौकिकोऽर्थो न विद्यत इति भावः। दृष्टान्तमाह–**काकवाशितवदिति,** तिरश्चां वाशितं रुतम्। येषामर्थो नास्ति तर्हि किमर्थं भू सत्तायामित्येवं धात्वादीनामर्थः पठ्यते कर्त्रर्थे लादीनामित्याशङ्कायामाह–**किमर्थं तर्हीति,** यद्यपि पचति भवतीत्यादयो विशिष्टार्थवृत्तयः सङ्घाताः परमार्थतो निरंशाः तथापि परिकल्पितप्रवृत्तिरवयवप्रविभागेन व्युत्पाद्यन्त इति मन्दमतयाऽतिमाहात्म्यात् उपायोपेययोरेकत्वमध्यवस्यन्ति, न हि शृङ्गग्राहिकया देवदत्तः पचति, गौरित्यादयस्तावज्जन्मसहस्रेणापि बोधयितुं बोद्धुम् शक्याः, आनन्त्यात्, अतः प्रकृतिप्रत्ययविभागतत्तदर्थकल्पनारूपो लघुभूत उपायः समाश्रीयतेऽन्वयव्यतिरेकाभ्यामिति भावः। अत्र दृष्टान्तमाह–**शिक्षणार्थन्त्विति। अपृथक्सिद्धेति,** निरवयवभूतवाक्यार्थबोधे प्रकृतिप्रत्ययार्थयोरुपायत्वादित्यर्थः। **प्रकृतिप्रत्ययाविति,** एतौ प्रतीयमानमर्थं सहैकोपस्थितिविषयीकुरुतः, परस्परं विशेषणविशेष्यभावेन स्वार्थं ब्रूत इत्यर्थः, पचन् पचमान इत्यादौ प्रत्ययार्थप्राधान्यादिति भावः। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यं दर्शयति–**यदुक्तं भाष्य इति,** पातञ्जले महाभाष्य इत्यर्थः, प्रत्ययार्थस्य प्रधानत्वात् प्रत्ययः प्रधानमुच्यत इति भावः। **अनेन न्यायेनेति,** प्रकृतिपर एव प्रत्ययः प्रत्ययपरैव प्रकृतिः, न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्ययः, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इत्यादिन्यायकलापेनेत्यर्थः, प्रकृतिः प्रधानत्वात् प्रत्ययार्थं न त्यजति यतोऽत एव एहिशब्दप्रयोगसामानाधिकरण्येन मन्यधातो मध्यमपुरुषस्यैवाकाङ्क्षितत्वेन तत्परित्यागेनोत्तमपुरुषप्रत्ययं नापेक्षते स, तस्मादेहि मन्ये इत्यादिवचनमयथार्थमेवेत्याशयेनाह–**अत एव चेति** यतः प्रत्ययार्थं नापैति प्रकृतिरत एवेत्यर्थः, निगमयति–**एहिशब्देति।** मन्यधातोर्मध्यमपुरुषस्याकाङ्क्षितत्वात्तदर्थं प्रयुक्त उत्तमपुरुषप्रत्ययोऽयथार्थः, स्वावाच्यवाचकत्वेनोपन्यसनात्, अत एव तत्प्रकृतिरपि मन्यधातुरयथार्थः स्वानाकाङ्क्षिताकाङ्क्षितत्वेनोपन्यसनादिति प्रत्ययायथार्थद्वारेण प्रकृत्ययथार्थत्वमुक्तमित्याह–**एवं तावदिति।** प्रकृत्ययथार्थत्ववत् प्रत्ययपुरुषयोरप्ययथार्थत्वं भावनीयमित्याह–

१ सि. क्ष. डा. °र्थोनापै०। २ सि. क्ष. डा. दे. प्रत्ययायथार्थार्थ्यमंगीकृत०।

**प्रत्ययपुरुषायथार्थत्वेऽप्येषैव भावना इत्यर्थत्रयविषयमयथार्थत्वम्, इदञ्च द्रव्यतः, तथा घटपटादिशेषोपपदविषयो भिन्नव्यवहारो निराक्रियते ।**

( **प्रत्ययेति** ) प्रत्ययपुरुषायथार्थत्वेऽप्येषैव भावना, प्रकृत्यविनाभावित्वात् प्रत्ययस्य प्रत्ययत्वात् एहि मन्ये रथेन यास्यति इत्यस्मात्तद्विपरीतादपि तद्वदेव प्रतिपत्त्या प्रत्ययादिलक्षणालक्षणीकरणं प्रतिपत्तेश्चाप्रतिपत्तित्वं यदृच्छाप्रवृत्तत्वादित्यादि यावदयमवधिः समानभावतः प्रत्ययपुरुषानुरूपेण योज्यत इति, इत्यर्थत्रयविषयमयथार्थत्वमिति निगमनम्, इतिशब्द[स्य]निगमनार्थत्वात्, अनया भावनया भावितमेव भवति–अगमकमसाध्वित्यपि द्रष्टव्यं बुद्धिचक्षुषा, इदञ्च द्रव्यतोऽयथार्थत्वम्–यस्मादेहंत्वमित्यस्मद्युष्मद्द्व्यविपर्ययेणायथार्थत्वमेतत्, यथा चैतत तथा घटपटादिशेषोपपदविषयो भिन्नव्यवहारो निराक्रियते त्वं पचतीत्यादि, कुड्योक्रोष्टुक्यादिप्रयुक्तभिन्नलिङ्गादिविपर्ययार्थशब्दप्रयोगवदिति ।

**प्रहासादिदमसत्यमेवेति चेत्, ननु तर्हि लक्षणालक्षणीकरणं लक्ष्यालक्ष्यीकरणं प्रतिपत्तेश्चाप्रतिपत्तित्वम्, सर्वस्यासत्यत्वात्, तदसत्यत्वं प्रत्याय्यार्थविपर्ययवृत्तत्वात् प्रहासोक्तिवत्, पर्वताधिकरणकर्मवचनासत्यमतिश्च, इह पर्वते वसतीत्येतस्मिन्नधिकरणार्थे पर्वतमधिवसति अध्यास्त इत्यादिकर्मत्वायुक्तेः, 'आधारोऽधिकरणम्' (पा० १-४-४५) ................... अन्यस्यानाधारत्वाद्वा, एतच्च क्षेत्रतः, कालतश्च अग्निष्टोमयाजी पुत्रोऽस्य जनितेति भूतमनागतमिति च विरुद्धार्थम्, शतभिषजा नक्षत्रं गोदौ ग्रामः पुनर्वसू पञ्चतारकाः, देवमनुष्या उभौ राशी, इत्यादिषु भावतोऽयथार्थता, एवञ्च न वाचकता शब्दस्य, न वाच्यताऽर्थस्य, द्रव्यक्षेत्रकालभावविषयविसंवादवृत्तत्वात्, स्वोक्तार्थनिराकरणार्थत्वात्, उन्मत्तप्रलापवत् ।**

( **प्रहासादिति** ) प्रहासादिदमसत्यमेवेति चेत्-स्यान्मतमेहि मन्ये रथेन यास्यति न हि यास्यसि यातस्ते पितेत्येतदसत्यमेव, प्रहासविषयत्वात्, अत एव लक्षणमुक्त- 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च (पा० १-४-१०६) इति तथा द्वि[बहु]वचनविषयावप्युदाहृतौ यास्यथो यास्यथेति, अत्रोच्यते-ननु

**प्रत्ययपुरुषेति** । भावनामेव दर्शयति–**प्रकृतीति,** न केवला प्रकृति प्रयोक्तव्या नापि प्रत्यय इति न्यायेन प्रत्ययस्य प्रकृत्यविनाभावित्वात् प्रकृतिपर एव प्रत्यय इति न्यायेन च प्रकृतिपरत्व एव प्रत्ययत्वाद् एहि मन्य इत्यादौ युष्मदर्थसामानाधिकरण्यस्य मन्य इत्युत्तमपुरुषेऽभावात् स्वयोग्यप्रकृतिपरत्वाभावेन तद्विपरीतास्मदर्थसमानाधिकरणोत्तमपुरुषयोग्यप्रकृतिपरत्वाभावेन प्रकृतिपरत्वं नास्तीति प्रत्ययलक्षणस्यालक्षणीकरणात् तथाविधप्रत्ययजन्यप्रतिपत्तेरप्रतिपत्तित्वाच्च यदृच्छाप्रतिपत्तित्वादसमीक्षितपौर्वापर्यप्रत्ययत्वात् प्रस्तुतप्रत्ययविसंवादाद्वाऽयथार्थमगमकमसाधु एहि मन्य इत्यादिवाक्यमिति भाव । तदेवं प्रकृत्ययथार्थत्वात् प्रत्ययायथार्थत्वात् पुरुषायथार्थत्वात्तद्वाक्यमयथार्थं विज्ञेयमित्याह–**इत्यर्थत्रयेति** । अनयैवायथार्थत्वभावनयाऽगमकत्वमसाधुत्वमपि भावितमेवेत्यतिदिशति–**अनयेति** । अस्मत्पदार्थयुष्मत्पदार्थयोरात्मपरभूतचेतनद्रव्यापेक्षयाऽयथार्थत्वमुपपादितम्, अनयैव दिशा शेषोपपदप्रथमपुरुषविषयायथार्थत्वमपि भावनीयमित्याह–**इदञ्चेति** । एहि मन्य इत्यादिवचनं परिहासशीलेन शालकादिना प्रयुक्तत्वादसत्यार्थमेवेति शङ्कते–**प्रहासादिदमिति** । व्याचष्टे–**स्यान्मतमिति** । एहि मन्य इत्यादौ प्रहासे उत्तमपुरुषविधायक पाणिनिसूत्रमाह–**प्रहासे चेति** । एतं एत वा मन्ये रथेन यास्यति न हि यास्यथ यास्यथ वा यातौ याता वा युवयोर्युष्माकं वा पितरौ पितर इत्येवं द्विबहुवचनयोरप्युदाहार्यावित्याह–**तथेति** । समाधत्ते–**अत्रोच्यत इति** प्रहासविषयलक्ष्यलक्षणयोरलक्ष्यत्वालक्षणत्वाभ्यु-

१ सि. क्ष. डे. छा यस्माच्चाहंत्व० । २ सि. क्ष. डे. छा. कुटुम्कादि० ।

तर्हीत्यादि, बहूनां तर्हि लक्षणानां 'धातुसम्बन्धे प्रत्ययाः' (पा० ३।४।१) 'व्यत्ययो बहुलम्' (पा० ३-१-८५) इत्येवमादीनामलक्षणीकरणं तल्लक्ष्याणाञ्च अग्निष्टोमयाजी अस्य पुत्रो जनिता इत्येवमादीनामलक्ष्यीकरणं प्रतिपत्तेश्चाप्रतिपत्तित्वं सर्वस्यासत्यत्वात्, तदसत्यत्वं प्रत्याय्यार्थविपर्ययवृत्तत्वात्, प्रहासोक्तिवदिति गतार्थम्, न च तेषु लक्षणेषु लक्ष्येषु चासत्यमतिर्भवति, किञ्चान्यत्-पर्वताधिकरणकर्मवचनासत्यमतिः, इह पर्वते वसतीत्येतस्मिन्नधिकरणार्थे पर्वतमधिवसति अध्यास्त इत्यादिकर्मत्वायुक्तेः, अत्र प्रयोगः–पर्वतम[धिव]सतीत्यादसत्यमिदं स्वकारकव्यधिकरणप्रवृत्तत्वात् देवदत्तो भूयत इति, यथेति, एतस्य भावनार्थं 'आधारोऽधिकरणम्' (पा० १-४-४५) इत्यादियावदन्यस्यानाधारत्वादिति गतार्थो ग्रन्थः, एतच्च क्षेत्रविषयमयथार्थत्वमुक्तम्, तथा कालविषयमयथार्थत्वसाधनं भूतमनागतमिति च विरुद्धार्थमिति, अत उत्तरं-शतभिषज इत्यादिभावायथार्थप्रतिपादनं गतार्थं यावत् इत्यादिषु भावतोऽयथार्थतेति, एवञ्च न वाचकता शब्दस्य न वाच्यताऽर्थस्य अयथार्थत्वात्, उक्तशब्दार्थवत् 'यथार्थाभिधानञ्च शब्दः' (तत्त्वार्थ अ. १ सू. ३५ भाष्ये) इत्युक्तम्, तत्सर्वमुपसंहृत्य साधनमाह–द्रव्यक्षेत्रकालभावविषयविसंवादवृत्तत्वादिति हेतुः व्याख्यातार्थः, स्वोक्तार्थनिराकरणार्थत्वादिति साधितार्थोपसंहारार्थो हेतुः, पृथगयथार्थप्रतिपादनार्थो वा उन्मत्तप्रलापवदिति दृष्टान्तः, इदञ्च साधनमतीतप्रपञ्चेन भावितार्थमिति न विव्रियते।

ननु पुष्यस्य देवविशेषविषयनक्षत्रतारासामान्यार्थत्वात् घटविशेषविषयमृत्सामान्या-

पगमे बहूनां लक्ष्याणां तत्प्रतिपादकलक्षणसूत्राणाञ्चालक्ष्यत्वालक्षणत्वाभ्युपगमः प्रसज्यत इत्याह–बहूनां तर्हीति, धातुसम्बन्धे प्रत्यया इति, धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युः, व्यत्ययो बहुलम्, विकरणादीनां बहुलं व्यत्ययः स्याच्छन्दसीत्यर्थः, एवमादीनां लक्षणानामलक्षणीकरणं भवेदिति भावः। उदाहरणमाह–अग्निष्टोमयाजीति, अग्निष्टोमेन इष्टवानित्यग्निष्टोमयाजी भूते णिनि प्रत्ययः, जनितेति भविष्यत्कालत्वेन गताग्निष्टोमयाजीत्यस्य भूतकालविशिष्टार्थस्य विरोधात् सम्बन्धो न स्यादित्येतेन सूत्रेणान्यथाकालप्रत्ययविधानं क्रियते, तस्मादीदृशवचनानामलक्षणत्वं, तल्लक्ष्याणाञ्चालक्ष्यत्वं तज्जन्यप्रतिपत्तेश्चाप्रतिपत्तित्वं प्राप्नोति, इष्टवानित्यादिपदानां स्वप्रत्याय्यभूतकालावशिष्टार्थविपरीतार्थप्रत्यायकत्वादिह मन्य इत्यादिवाक्यवदिति भावः। इष्टापत्तिर्न कर्तुं त्वया शक्येत्याह–न च तेष्विति, अग्निष्टोमयाजीति भूतकालावच्छिन्नोऽर्थो विरुद्धे भविष्यत्कालविशिष्टेऽर्थेऽध्यस्यते स्वकालमजहदेव, न ह्यध्यस्यमानं स्वरूपं जहाति गौत्वमिव वाहीके, तस्मात्तेषु लक्ष्येष्वसत्यत्वमतिर्भवतीति भावः। प्रहासोक्तिवदधिकरणादीनां कर्मत्वादिविधायकवचनमप्ययथार्थमित्याह–किञ्चान्यदिति, पर्वते वसतीत्यर्थे पर्वतमधिवसतीति प्रयोगो भवति, 'उपान्वध्याङ्वसः' (१-४-४८) इति सूत्रेणोपादिपूर्वस्य वसतेराधारस्य कर्मत्ववचनात्, पर्वतमध्यास्ते इत्यत्र च 'अधिशीङ्स्थासां कर्म' (१-४-४७) इत्याधारस्य कर्मत्वम्। अयथार्थत्वं मानप्रयोगतः साधयति–अत्र प्रयोग इति, देवदत्तो भूयत इत्यत्र देवदत्तशब्देन तृतीयान्तेन भवितव्यम्, भूयत इति भावप्रत्ययान्तत्वेन कर्तुरनभिधानादनभिहिते कर्तरि तृतीयाप्रवृत्तेः, तत्र यदि देवदत्त इति प्रयुज्यते तर्हि तद्वाक्यं स्वयोग्यतृतीयाकारकासमानाधिकरणतयाऽसाधु यथा भवति तथा पर्वतमधिवसतीत्यादिवाक्यमपि स्वयोग्याधारसप्तमीव्यधिकरणविभक्तिघटितत्वेनासाध्विति भावः। एतस्येति, भावनाग्रन्थोऽत्र नोपलब्धः। तदेवं पर्वतादिक्षेत्रविषयमयथार्थत्वमुदितमित्याह–एतच्चेति। कालविषयमाह–तथाकालेति, अग्निष्टोमयाजी पुत्रोऽस्य भवितेत्यादौ भूतस्यैव भाविता गम्यते, सा च विरुद्धा, न हि यद्भूतं तदनागतम्, यच्चानागतं तद्भूतमित्ययथार्थं तथाविधं वाक्यमिति भावः। भावविषयायथार्थत्वमाह–शतभिषज इति। पुष्यो नक्षत्रं तारा इत्यत्र देवविशेषवाचकः पुष्यशब्दः, स च देवः सामान्यविषयेण नक्षत्रतारादिनाऽतिदिश्यतेऽतः पुष्यनक्षत्रादिशब्दयोः सामानाधिकरण्यं सम्भवति, यथा विशेषो घटः सामान्यभूतेनार्थेनातिदिश्यतेऽर्थोऽयं घट इति, विवक्षाविशेषेण शब्दप्रयोगादित्याशङ्कते–ननु पुष्यस्येति। व्याकरोति–पुष्यः पुमानिति, पुंसि देवादौ

१ सि. क्ष डे. छा कर्मवचनामस्य०।

**र्थवत्सामानाधिकरण्यमुपपन्नम्, उक्तं हि 'यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान् यथावद्व्यवहार-काले। सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः'॥ (महाभा० १-१-पस्पशाह्निके) इति विवक्षापूर्वकत्वाच्छब्दप्रवृत्तेर्विषयविशेषपरिग्रहणे साधुताऽसाधुता च शब्दानाम्, गावी गोणी गोता गोपोतलिका इत्यादयो गमका अगमकाश्च, यद्येवं तर्हि कया विशेषविवक्षया आप इति दारा गृहा सिकताः? इति।**

**ननु पुष्यस्येत्यादि** पूर्वपक्षो विवक्षाविशेषार्थशब्दप्रयोगन्यायाश्रयेण दोषपरिहारार्थो यावद्गम-काश्चागमकाश्चेति, पुष्यः पुमान् [1]देवविशेषः तद्विषयौ—तदर्थौ नक्षत्रतारासामान्यार्थौ घटविशेषविषय-मृत्सामान्यार्थवत्सामानाधिकरण्यं तस्मादुपपन्नम्, अस्मिंश्च ज्ञापकमाह-उक्तं हीत्यादि-भाष्यकारेणोक्तम् 'यस्तु प्रयुङ्क्ते' (महाभाष्ये १-१ पस्पशाह्निके) इति श्लोकः, विशेषे विवक्षिते प्रधाने गुणभूतान् शब्दान् प्रयुङ्क्ते यः कुशलः, अर्थगत्यर्थत्वाच्छब्दप्रयोगस्य तद्दर्शयन्नाह-विवक्षापूर्वकत्वाच्छब्दप्रवृत्तेरिति, यथावद्व्यवहार-[2]काले यो यः शब्दो व्यवहारकाले यस्य विवक्षितार्थस्य विशिष्टस्य विशिष्ट एव गमक इत्यभिमतः स एव स एव तत्र प्रयुज्यते, नान्योऽन्यत्र वा, गौणमुख्यादिभावेन स्वाभिधेयप्रत्यायनसमर्थत्वात् सर्वशब्दानाम्, सोऽनन्तमाप्नोति जयं परत्र, कः? वाग्योगवित्—य एवमुक्तविशेषविषयशब्दार्थसम्बन्धज्ञः, दुष्यति चापशब्दैरवाग्योगवित्-विशेषविषयप्रयोगानभिज्ञः, तस्माद्विवक्षापूर्वकत्वाच्छब्दप्रवृत्तेर्विषयविशेषपरिग्रहणे साधुताऽसाधुता च शब्दानाम्-असाधुत्वाभिमतानामपि ग[ा]व्यादीनां साधुत्वं विशेषविषयत्वात्, साधुत्वे-नाभिमतानामपि गवादीनामसाधुत्वमिति, तद्दर्शयति-गावी गोणीत्यादि गतार्था भावना शब्दव्युत्पत्त्या, अत्राचार्य आह-यद्येवं तर्हीत्यादि यावत् सिकता इति, एषोऽपि न्यायो व्यभिचारान्न प्रभवति, उदाहरणे-र्व्यभिचारयिष्यन्नविजानन्निव पृच्छति तमेव-कया विशेषविवक्षयेति, आप इति बहुवचनमेकस्मिन्नपि बिन्दौ दृष्टम्, नात्र सामान्यविशेषभावोऽस्ति, तथैकयोषिति दारा गृहा इति बहुवचनं, कया [विशेष]विवक्षयेति

विशेषे पुष्यशब्दो वर्तते नक्षत्रताराशब्दौ तु नक्षत्रसामान्यार्थौ, तस्मात् सामान्यविशेषत्वात्तयोः सामानाधिकरण्यं युज्यते, यथा घटो मृदिति तयोः सामानाधिकरण्यम्, विवक्षाविशेषेण शब्दप्रवृत्तेः, यस्मिन्नर्थे विवक्षया शब्दः प्रयुज्यते तदर्थ एव स साधुर्भवति, अन्यार्थे त्वसाधुरिति भावः। एतदर्थसंवादिनं भाष्ये उपन्यस्तं कात्यायनकृतभ्राजाख्यश्लोकान्तर्गतं श्लोकमुपन्यस्यति-**भाष्यकारेणोक्तमिति**। तं व्याचष्टे-**विशेषे विवक्षित इति**। विवक्षितार्थव्यतिरिक्तार्थे शब्दः कथं वर्तत इत्यत्राह-**गौण-मुख्यादिभावेनेति**, सर्वे सर्वार्थवाचका इत्यभियुक्तोक्तेः विवक्षाऽविवक्षाकृतो गौणमुख्यभावः, तेन सर्वार्थवाचकत्वं शब्दाना-मिति भावः। पर्यवसितार्थमाह **तस्माद्विवक्षेति**, वक्तुरिच्छाधीना शब्दप्रवृत्तिः, व्यवहारकाले यं विशेषार्थमवलम्ब्य शब्दं प्रयुंक्ते तदर्थे स शब्दः साधुरन्यार्थे चासाधुरिति भावः। असाधुत्वेनाभिमतोऽपि साधुर्भवति साधुत्वेनाभिमतोऽप्यसाधुर्भवतीति दर्शयति-**असाधुत्वाभिमतानामपीति**। विषयविशेषविवक्षया शब्दानां यदि साधुत्वासाधुत्वे तर्हि सा विवक्षा आपः दाराः गृहाः इत्यादौ प्रदर्शनीया, कया विशेषविवक्षयाऽर्थस्यैकत्वे बहुवचनान्तेन शब्दः प्रयुज्यत इत्याचार्यः **पृच्छति-यद्येवं तर्हीति**। विषयविशेषविवक्षावैधुर्येऽबादिशब्दास्तथा प्रयुज्यन्त इति व्यभिचारं दर्शयति-**आप इतीति**। **कस्याश्चिद्विवक्षायाः कल्पनेऽपि**

1 देवो वि० छा तद्विपर्ययौ। २ सि. क्ष. के छा. °हारयुक्तो।

वर्तते, एकस्मिंश्च सूक्ष्मशर्कराकणे सिकता इति, किंशब्दस्य क्षेपार्थत्वात् कया विवक्षया—किं तया विवक्षया विपरीतार्थयेति ।

**नित्यमपि बहुवचनं बह्ववयववृत्तत्वादिति चेत्, एकघटेऽप्यत एव नित्यं बहुवचनं प्राप्तम् बिन्द्वादाविवापः, अप्सु वैकवचनं स्यात् नित्यमपि, बह्ववयववृत्तत्वाद्घटवत्, अतिशय्येकात्मनिरासेन त्वया विशेषविषयप्रयोगो गवादिवत्साधुरिष्टः सोऽपि तत एव न्यायाद्व्यभिचरति, सोऽप्शब्द एकवचनान्त एव स्यात्, बह्ववयवात्मकत्वेऽप्येकमिति गृहीतत्वात्, तन्तुपटवत् ।**

(**नित्यमपीति**) नित्यमपि [बहुवचन] बह्ववयववृत्तत्वादिति चेत्—स्यान्मतं बहवोऽवयवाः परमाणुद्व्यणुकादयो बिन्दावपि तदपेक्षया बहुवचनमपि इति, अत्रोच्यते—एकघटेऽपीत्यादि, अत एव—त्वदुक्तबह्ववयववृत्तत्वादिति हेतोरेकस्मिन् घटेऽपि नित्यं बहुवचनं प्राप्तम्, बिन्द्वादाविवाप इत्यनिष्टापादनद्वारेण परोक्तहेतोर्व्यभिचारः, अप्सु वेत्यादि—अप्शब्दादप्येकवचनं स्यात् नित्यमपि, बह्ववयववृत्तत्वाद्घटवत्, अनिष्टञ्चैतत्, अतिशय्येकात्मकेत्यादि—यथाऽस्माभिरुक्तोऽतिशय्येक एवात्मा भवति यस्य किञ्चिदिति तस्य निरासेन त्वया विशेषविषयप्रयोगो गवादिवत् साधुरितीष्टस्तत्रेदं तेऽनिष्टमापाद्यते, कस्मात्? तत एव न्यायात्—बिन्दौ वर्त्तमानोऽप्शब्द एकवचनान्तो न प्रयुज्यते, विशेषविषयत्वात्, गवादिवदतोऽयमपि न्यायो व्यभिचरतीति. किञ्चान्यत्—सोऽप्शब्द एकवचनान्त एव स्यात्, बह्ववयवात्मकत्वेऽप्येकमिति गृहीतत्वात्, तन्तुपटवदिति गतार्थत्वान्न व्याख्यायते, एवं तावदयं संख्याविषयो विचारो न घटते ।

लिङ्गविषयोऽपि विशेषप्रयोगसाधुत्वन्यायो न घटते, अथैकत्वसंख्याभेदानुपपत्तिवल्लिङ्गभेदानुपपत्तिरपीत्यत आह—

तया विपरीतार्थवृत्तित्वादप्रमाणत्वमवेत्याशयेनाह—**किं शब्दस्येति**। ननु बिन्द्ववयवगतं बहुत्वं विशेषमुपादाय समुदायसमुदायिनोरभेदादेको जलबिन्दुराप इति बहुवचनान्तेनोच्यत इति शङ्कते—**नित्यमपीति**। पूर्वपक्षं व्याचष्टे-**स्यान्मतमिति**। एवं तर्हि सर्वत्रावयवगतसंख्यामुपादायैकस्मिन्नपि घटादौ बहुवचनान्तो घटादिशब्दः प्रयुज्यतां बह्ववयववृत्तताया हेतोस्तत्रापि सत्त्वादित्युत्तरयति—**अत्रोच्यत इति**। यदि घटादौ समुदायगतैकत्वसंख्यापेक्षया घट इत्येवमेकवचनान्तेन प्रयुज्यते तर्हि अप्शब्दादपि तथैवैकवचनं गृह्यतामित्याह—**अप्शब्दादपीति**, सदा बह्ववयववृत्तत्वेऽप्येकत्वस्य विवक्षितत्वादित्याशयेन हेतुमाह-**बह्वेति**। ननु मयोक्तं ज्ञानमेव प्रधानं शब्दस्य च ज्ञानोपकारित्वम्, ज्ञानेन हि शब्द उच्चार्यते अर्थप्रत्यायनार्थत्वात् शब्दप्रयोगस्य, तस्मादर्थः प्रधानं न शब्दः, अर्थोऽपि ज्ञानार्थत्वान्न प्रधानम्, ज्ञानमेव प्रधानम्, न च शब्दज्ञानयोरैक्यम्, प्रत्यक्षप्रतीतिविरोधात्स्यादिति, एतन्निरासेनान्योन्यरूपापत्तिमनभ्युपगच्छन् सामान्यनिरपेक्षो विशेष एव शब्दार्थ इति विशेषविषयविवक्षया विशेष एव शब्दप्रयोगे साधुं मन्यसे तथा च सति बिन्दौ वर्त्तमानस्याप्शब्दस्य विशेषविषयत्वाद्बहुवचनान्तत्वमिच्छसि तदपि घटादौ व्यभिचारान्न युज्यत इति स्वयमेव मूलकारो भाषयति—**अतिशयीति**। तत एव न्यायादित्युक्तं न्यायं दर्शयति-**बिन्दाविति**। व्यभिचारं प्राहयति-**सोऽप्शब्द इति**, तन्तूनामनेकत्वेऽपि पट इत्येकत्वेन गृहीतत्वाद्यथा एकवचनान्त एव भवति तथाऽप्शब्दोऽपि बह्ववयवत्वे सत्यप्येकमिति गृहीतत्वात् एकवचनान्त एव स्यादन्यथा पटोऽपि बहुवचनान्त एव भवेदिति भावः । लिङ्गविषयेऽपि ये विशेषप्रयोगास्ते साधवो न भवन्तीत्येनमर्थं वर्णयतीति निरूपयति—**लिङ्गविषयोऽपीति**। लिङ्गविषयविशेषप्रयोगोपन्यसनमुखेन

१ सि. छा. यस्तर्किंचिदिति तस्येनिराशेनतया ।  २ सि. डे. छा. प्रयोगाव्गवादवत ।

**तथा तटस्तटी तटमित्यत्र कतमं वा विशेषमुपादाय लिङ्गभेदः? कतमद्वा सामान्यमतिदिश्यते विशेषप्रतिपादनार्थम्? ननु स्थितिप्रसवसंस्त्यानविशेषविषयो लिङ्गभेदः, न, तटतटीतटानां विषयविशेषो नास्त्यभिन्नस्वरूपत्वात्, घटघटस्वात्मवत्, गोचरविशेषोपपत्तौ वा सोऽपि विशेषो नास्ति, प्रसवस्य संस्त्यानात्मकत्वात्, स्त्रीवत् संस्त्यानस्य प्रसवात्मकत्वात् पुंवत् संस्त्यानप्रसवयोः स्थित्यात्मकत्वात्, स्त्रीपुंसवत्, न तटी संस्त्यानम्, प्रसवात्मकत्वात्, तटवत्, न तटः प्रसवः, संस्त्यानात्मकत्वात् तटीवत्, न तटं नपुंसकम्, स्थित्यनात्मकत्वात् तटीवत् अथ च............... तटीवत्, एवं लिङ्गाभाव एव तटत्वादीनां, प्रसवादिधर्माभावे गोचरविशेषाभावात्।**

**तथा तटस्तटीत्यादि**, कतमं वाऽत्र विशेषमुपादाय लिङ्गभेदः? कतमद्वा सामान्यमतिदिश्यते विशेषप्रतिपादनार्थं? न सम्भवतीत्यर्थः, आह–ननु स्थितिप्रसवसंस्त्यानविशेषविषयो लिङ्गभेदः, 'संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप्प्रसवे पुमान्'। 'उभयोरन्तरं यच्च तदभावे नपुंसकम्'॥ ( महाभाष्ये० ४-१-३ सूत्रे ) स्थितिर्नपुंसकं स्त्री[सं]स्त्यानं प्रसवः पुमानेवार्थाः सर्वमूर्तिषु[1] सम्भवन्त्यत्र यो विशेषो विवक्ष्यते तद्विषयो लिङ्गभेद इत्येतच्च, न, तटतटीतटानां विषयस्य विशेषः एकत्वादर्थस्य स एव विशेषो नास्ति यद्विषयो लिङ्गभेदः स्यात्–स नास्ति, अभिन्नस्वरूपत्वात्, घटघटस्वात्मवत्–यथा घट एव घटस्वात्मा तथा तट एव तटी तटञ्च, अभिन्नस्वरूपत्वान्नास्ति विशेषः, आह–गोचरविशेषोपपत्तेः– भित्त्यादिसंस्थाना तटी कटकादिसंस्थानस्तटः कुड्यादिसंस्थानं तटमिति, तस्माद्विषयविशेषोपपत्तेर्लिङ्गविशेषोपपत्तिरित्यत्रोच्यते– गोचरविशेषोपपत्तौ वा सोऽपि विशेषो नास्ति, यस्मान्न तयोर्गोचरः प्रसवस्य संस्त्यानात्मकत्वात्, संस्त्या-

हेतुं पृच्छति–**तथा तट इति**। व्याचष्टे–**कतममिति**, नियतव्यञ्जनसम्बन्धस्वरूपलौकिकलिङ्गत्रयस्याचेतने तटस्तटी तटमित्यादावसम्भवाल्लिङ्गभेदप्रयोजको विशेषः क इति प्रश्नः, लिङ्गानां वा किं सामान्यं स्वरूपम् यद्भावादत्र तस्याव्यावर्तकतया विशेषो वाच्य इत्यपरः प्रश्नः। पूर्वपक्षसम्मतं लिङ्गस्वरूपमाह–**ननु स्थितीति**, सामान्यं गुणरूपं स्थितिः सततपरिणामिनां गुणानामन्वयिप्रत्ययनिमित्तस्य सामान्यरूपतया नपुंसकम्, प्रसवः–पदार्थानामुपचयावस्था–आविर्भावः–प्रकाशः सत्त्वधर्मः, प्रवृत्तिः क्रिया रजोधर्मः, एवञ्च आविर्भावप्रकाशनियमरूपसत्त्वतमोनुगतः प्रवृत्तिरजोधर्मलक्षणाया विशेषः पुंस्त्वम्, संस्त्यानं तिरोभावो गुणानां स्त्री, इत्येव लिङ्गभेद इत्यर्थः। तत्र भाष्यकारवचनमुपन्यस्यति–**संस्त्यान इति**, अस्योत्तरार्धो भाष्ये 'तस्योक्तौ लोकतो नाम गुणो वा लुपि युक्तवत्' इति दृश्यते। स्त्यायति–संहननमापद्यतेऽस्यां गर्भ इति स्त्री, स्त्यैधातोर्ड्रट्प्रत्ययेन सिद्धः, सूते–सूधातोः सप् सकारस्य पकारादेशो भवति सूते इति पुमान्–अपत्यं जनयतीत्यर्थः, सप्सृन् प्रत्ययेन निष्पन्नः, इति तदर्थः। तत्रैव भाष्ये वचनान्तरमुक्तं दर्शयति–**उभयोरन्तरमिति**। यत्र यत्र लिङ्गान्तराभावे तुल्यजातीयं स्त्रीपुंसव्यतिरेकेण लिङ्गान्तरं तन्नपुंसकमित्यर्थः, अस्य पूर्वार्धो भाष्ये–'स्तनकेशवती स्त्री स्यात् लोमशः पुरुषः स्मृतः'॥ इति। कारिकां व्याचष्टे–**स्थितिरिति**। सर्वाश्च मूर्तयः स्थितिप्रसवसंस्त्यानरूपाः, तथापि योग्यशब्दनिबन्धनविवक्षानियमाश्रयेण कस्यचिदेव लिङ्गभेदस्य कस्मिंश्चिच्छब्दे संस्कारार्थं व्यापार इति विवक्षैव विशेष आश्रीयत इति भावः। तत्र आचार्यो दोषमाह–**तटतटीतटानामिति**, अत्र तटस्यैकत्वेन विषयविशेषो नास्तीति कथं तटशब्दस्य लिङ्गत्रयोपपत्तिरिति भावः। अविशेषत्वे हेतुमाह–**अभिन्नेति**, तटस्तटी तटमित्यत्र तटस्वरूपे भेदाभावादिति भावः। तं भावं दृष्टान्तेन व्यञ्जयति–**यथा घट एवेति**। विषयविशेषमुपपादयति वादी–**गोचरेति**, गोचरो विषयः। लिङ्गभेदप्रयोजकविषयाभावं संस्त्यानप्रसवस्थितीनां परस्परात्मकत्वाद्दर्शयति–**यस्मादिति**, यतः संस्त्यानप्रसवयोर्विषयो नास्ति परस्परात्मकत्वात्तयोरिति भावः, पुलिङ्गादेर्व्यवस्थापकतया हीष्टा.

१ सर्वमूर्तिषु, इदं पदं सि. क्ष. डे. प्रतिषु नास्ति।

नात्मकत्वं तस्यार्थस्य सिद्धं त्वयैवाभ्युपगतत्वात् त्र्यात्मकत्वस्य, स्त्रीवदिति–स्तनकेशवत्याः प्रसवाभाववदिति, एवं शेषसाधने गतार्थे, यावत् स्त्रीपुंसवदिति, एष बाह्यस्त्र्यादिनिदर्शनबलेन गोचरनिषेधः कृतः, अधुना तस्यैवार्थस्य त्रित्वापेक्षया क्रियते–अथ चेत्यादि साधनानि गतार्थानि यावत्तटीवदिति, एवं लिङ्गाभाव एव तटत्वादीनां प्रसवादिधर्माभावे गोचरविशेषाभावादित्युपनयः।

न लिङ्गाभाव एव दोषः, किं तर्हि?—

**ततश्चासत्त्वमप्येषां मूलोद्वर्त्तनेनाक्रियाव्ययत्वे सत्यलिङ्गत्वात् खपुष्पवत्, अथोच्येत नन्वेवं प्रपञ्चेन संस्त्यानात्मकत्वादिना त्रिलिङ्गत्वं व्यवस्थापितमेवेत्येतच्च न, लिङ्गव्यवस्थापनहेत्वभावात्, एकार्थे सन्निधिभावे वा स पुमानेव न स्यात् स्त्रीत्वाद्देवदत्तादिवत्, न स्त्री पुंस्त्वात्, ततोऽस्त्रीपुंसौ नपुंसकत्वात्, पर्वतनदीभवनविषयत्वात्त्रिलिङ्गत्वं विशिष्टविषयमित्येतच्च न, पुमादिभिन्नबाह्याद्येकलिङ्गत्वात्, अर्धर्चादिषु च विशेषादर्शनादपरिहारात्।**

(**ततश्चेति**) ततश्चासत्त्वमप्येषां मूलोद्वर्त्तनेनाक्रियाव्ययत्वे सत्यलिङ्गत्वात्, खपुष्पवत्, मा भूत्पचत्यादिस्वरोपाख्याताव्ययाभिधेयार्थवत् सत्त्वाऽऽशङ्केत्यक्रियाव्ययविशेषणम्, अथोच्येतेत्यादि, परेणोच्येत परिहारः–नन्वेवं प्रपञ्चेन–गोचरलिङ्गनिराकरणव्याख्यानेन संस्त्यानात्मकत्वादित्यादिना त्रिलिङ्गत्वं स्वं स्वं लिङ्गव्यवस्थापनहेतुं परिगृह्णता व्यवस्थापितमेव त्वया, यथा न तटी संस्त्यान[म्] प्रसवात्मकत्वात्, पुरुषवदित्यादि तथा न स्त्रीलिङ्गम्, प्रसवात्मकत्वात् पुरुषवदिति, आदिग्रहणात् संस्त्यानानुभयात्मकत्वाभ्यामपि त्रयाणां त्रिलिङ्गत्वहेतुत्वमित्येतच्च न, लिङ्गव्यवस्थापनहेत्वभावात्,–ननूक्तं त एव हि प्रसवादयो लिङ्गव्यवस्थापनहेतवो न सन्तीति साधितमनन्तरमेव, तस्मान्न किञ्चिदेतत्, अभ्युपगम्यापि प्रसवादीनां एकार्थे सन्निधिभावे वा स पुमानेव न स्यात् स्त्रीत्वाद्देवदत्तादिवत् तस्य स्त्रीत्वं त्वयाऽभ्युपगतम्

संस्त्यानादयः, यदा च त एव परस्परात्मकास्तदा ते कथं व्यवस्थापका भवेयुः, असाधारणत्वादिति तात्पर्यम्। प्रसवादीनां परस्परात्मकत्वं प्रसाध्य तटादौ लिङ्गाभावं साधयति **अधुनेति**, दोषान्तरमभिदधाति–**ततश्चेति**। व्याकरोति–**ततश्चासत्त्वमिति**, तटादयोऽसन्तः, अक्रियाव्ययत्वे सत्यलिङ्गत्वात्, खपुष्पवदिति मानेनैतेषामसत्त्वमेव भवेत्, लिङ्गादेर्मूलभूतस्य निदानस्य निराकृतत्वादिति भावः। सत्यन्तविशेषणकृत्यमाह–**मा भूत् पचत्यादीति**, पचत्यादयोऽलिङ्गाः सन्तश्च, तद्वत् तटादीनामलिङ्गत्वेऽपि सत्त्वं स्यात्तद्वारणाय सत्यन्तमिति भावः। ननु गोचरविशेषस्य लिङ्गस्य चाभावं साधयता भवतैव तटादेर्लिङ्गव्यवस्थापनहेतुवर्णनद्वारा त्रिलिङ्गत्वं व्यवस्थापितमेवेत्याशङ्कते–**नन्वेवं प्रपञ्चेनेति**। तद्दर्शयति **यथा न तटीति**, अनेन तट्याः संस्त्यानात्मकत्वाभावं साधयता प्रसवात्मकत्वं व्यवस्थापितम्। तथा तटी न स्त्रीलिङ्गं प्रसवात्मकत्वादित्यनेनापीत्याह–**तथा नेति**। एवं न तटः प्रसवसंस्त्यानात्मकत्वात्, स्त्रीवत् न तटं पुल्लिङ्गम्, संस्त्यानात्मकत्वात् स्त्रीवत् न तटं नपुंसकम्, अनुभयात्मकत्वात्, स्त्रीपुंसभिन्नत्वे सति स्त्रीपुंसदृशो हि नपुंसको भवतीत्येवं त्र्यात्मकत्वं व्यवस्थापितमित्याह–**आदिग्रहणादिति**। लिङ्गव्यवस्थापनहेतोरेव प्रसवादेरभावस्यान्योन्यस्वरूपापत्त्या प्रसञ्जितत्वेन नायं दोष इत्युत्तरयति–**ननूक्तमिति**। ननु तटादेः प्रसवाद्येकैकात्मकत्वे स्यान्नामैकैकलिङ्गता, प्रसवादीनामभ्युपगमेऽपि यदा तु तटादि सदा त्र्यात्मकमेव तदा कस्य लिङ्गस्य तेन भाव्यमित्याशयेनाह–**अभ्युपगम्यापीति**। देवदत्तो यथा न पुमान् स्त्रीत्वादिति दृष्टान्तमाह–**देवदत्तादिवदिति**। तटशब्दस्य त्रिलिङ्गत्वं विषयविशेषापेक्षम्, विषयविशेषाश्च

१ सि. क्ष. छा. डे. °गतत्वादात्मकस्य। २ क्ष. व्यपत्रे। ३ सि. छा. स्वराप्याख्याता°। ४ सि, क्ष. डे. छा. तथातः पुलिङ्गं।

त्रिलिङ्गत्वात्, तथा न स्त्रीत्वं पुंस्त्वात्, ततोऽस्त्रीपुंसौ नपुंसकत्वात्, इतरवत् दृष्टान्तोऽत्र, पर्वतनदीत्यादि, स्यान्मतं पर्वतः पुमान् तद्विषयस्तटः, नदी स्त्री तद्विषया तटी भवनं नपुंसकं तद्विषयं तटं तस्मात् त्रिलिङ्गत्वं विशिष्टविषयमिति, एतच्च न, पुमादिभिन्नबाह्वाद्येकलिङ्गत्वात्-एकस्मिन् देहे बाहुः पुमान्, जिह्वा स्त्री, अक्षि नपुंसकमिति नियतलिङ्गत्वान्नैतदपि पुष्कलम्, किञ्चान्यत् अर्धर्चादिषु च विशेषादर्शनादपरिहारात् तन्निवर्त्तते, अर्धर्चः अर्धर्चं गोमयः गोमयमित्यादीनां स्त्रीलिङ्गाभावात् त्रिलिंगत्वं नैकार्थम् ।

आह–

**नन्वेकस्य दृष्टं त्रिलिङ्गत्वं भूतिर्भवनं भाव इतीति चेन्न, यदि वयं दृष्टत्वादेव त्वादृशा इव प्रतिपद्यामहे तदा किं विवादेन, तदेव दुर्दृष्टम्, अपि चेदं साध्यम्, यथार्थाभिधानशब्दनयमतेन भिन्नत्वात्, अपि च भावो वेत्येतदपि साध्यम्, प्रकृत्यर्थस्य न्यग्भूतत्वात्, कर्त्रर्थस्यैव सद्भावात्, अपि चैकस्य त्रैलिङ्ग्यायुक्तिविचारे नानालिङ्गनानाशब्दोपन्यासोऽतिविस्पर्धते, एकभवनासत्त्वादर्थैकत्वमपि नैव, सामान्यभवनस्यैकस्य न्यग्भूतत्वात् विशेषभवनस्य भूत्यादिविशिष्टैकरूपत्वात् तस्माददृष्टान्तः ।**

(**नन्विति**) नन्वेकस्य दृष्टं त्रिलिङ्गत्वं भूतिर्भवनं भाव इत्यतोऽव्यभिचार इति चेन्नेत्युच्यते यदि वयमित्यादि, यदि लोके प्रयोगो दृष्ट इत्येतावता प्रतिपद्यामहे त्वादृशा इव परप्रत्ययाः तदे दृष्टत्वादेव कस्मान्न प्रतिपद्यामहे? किं विवादेन तस्मात्तदेव दुर्दृष्टं-प्रसिद्धिरेव दुःप्रसिद्धिरित्यर्थः, अपि चेदमित्यादि, भूतिर्भवनं भाव इत्येतेऽपि त्रयोऽर्था यथार्थाभिधानशब्दनयमतेन भिन्नाः, तस्मादेतत्साध्यं [अ]भावप्येकोऽर्थोऽनेक इति अपि च[1] भावो वेत्येतदपि साध्यं भावः–क्रिया न कर्त्ता, भूवादिशब्दाभिधेयः, स च शब्दनयस्य नास्ति,

पर्वतः नदी भवनञ्चेति तत्सम्बन्धिनस्तटस्य सम्बन्धिलिङ्गेनेति पूर्वपक्षयति–**पर्वतेति** । व्याचष्टे–**स्यान्मतमिति** । विषयविशेषाभावेऽप्येकस्मिन्नेव पुरुषादौ बाह्वाद्यवयवानां विलक्षणलिङ्गता दृष्टेति विषयविशेषाभिसम्बन्धाल्लिङ्गव्यवस्थापनमसम्भवीत्युत्तरयति–**पुमादिभिन्नेति** । ननु वस्तुमात्रस्य स्थितिप्रसवसंस्त्यानलक्षणं त्रिलिङ्गत्वमपि नास्ति, अर्द्धर्चादिषु लिङ्गद्वयस्यैव दर्शनात्, अर्द्धर्चः, अर्द्धर्चमिति, तत्र हि स्त्रीलिङ्गं नास्ति, 'अर्द्धर्चाः पुंसि च' (२-४-३१) इति पुंनपुंसकयोरेवानुशासनादित्याह–**अर्द्धर्चादिषु चेति,** लिङ्गविशेषव्यवस्थापनविशिष्टविषयताया अदर्शनाद्विशिष्टविषयत्वस्य दोषपरिहाराक्षमत्वात् सर्वत्र त्रिलिङ्गताया असिद्धेर्नैकं स्यात्मकमतो द्रव्यार्थतां त्यक्त्वा विशेष एव भवनीत्याशय । **त्रिलिङ्गत्वं नैकार्थमिति,** लिङ्गानां न परस्परं सामानाधिकरण्यमित्यर्थः । अथ तेषां परस्परं सामानाधिकरण्यमेव पुनः शङ्कते–**नन्वेकस्येति** । सङ्घटयति–**नन्वेकस्य दृष्टमिति,** इयं भूतिरिदं भवनमयं भावः, इदं वस्तु इयं व्यक्तिरयमर्थ इति त्रिलिङ्गानां शब्दानां वस्तुमात्रे प्रवृत्तिर्दृश्यतेऽतो न व्यभिचारस्त्रिलिङ्गताया इति भावः । ननु दृश्यन्त एव लोके तथाविधाः प्रयोगाः, किं तैः, न हि वयं निमित्तविशेषव्यतिरेकेण त्रिलिङ्गतां लोकप्रयोगमात्रेण प्रतिपद्यामहे, यदि तन्मात्रेण प्रत्यपत्स्यामहि तर्हि कः विवादः स्यात्, परन्तु तथाप्रयोगप्रसिद्धिः केवलं दुःप्रसिद्धिरेव, न तु स्वीकारयोग्येत्याशयेनोत्तरयति–**यदि लोके प्रयोग इति** । भूतिर्भवनं भाव इति त्रिलिङ्गमेकार्थमिति नास्माकं सम्मतमपि तु तत्प्रतिपाद्या अर्था विभिन्ना एव, तस्मादेकस्यार्थस्यानेकत्वं साध्यमेव, न तु सिद्धमित्याह–**भूतिर्भवनमिति** । भूवादिधात्वर्थो भावः क्रिया न तु कर्त्ता, सा नैव भावः, भवतीति भाव इति व्युत्पत्त्या तस्य कर्तृवाचित्वात्, क्रियायाश्च प्रकृत्यर्थत्वेन गुणभूतत्वात् कर्त्रर्थस्यैव प्रधानतया सत्त्वादेकात्मिकायाः क्रियाया भावत्वं साध्यमेवेत्याह–**भावो वेति** । ननु तटस्यैकस्य तटस्तटी तटमिति

१ सि. इतरवत्तट० । क्ष. छा. डे. इतरवत्तट० । २ सि. क्ष. डे. छा. मायाद्दो । ३ सि. क्ष. छा. °चाभावो ।

प्रकृत्यर्थस्य न्यग्भूतत्वात् कर्त्रर्थस्यैव सद्भावात मत्मतेन, अपि चेत्यादि, तटशब्दस्यैकार्थस्यैकस्य त्रैलिङ्ग्यायुक्तिविचारे नानालिङ्गानां भूत्यादीनां नानाशब्दानामुपन्यासोऽतिविस्पर्धते, इतश्च न घटते तदुपन्यासः, द्रव्यार्थत्वात् सामान्यस्य भूतिभवनभावाख्यस्यैकत्वात तद्विषयमुदाहरणं स्यात्, न पर्यायनयस्य[1] विशेषविषयत्वाच्च, भावशब्दस्यात्र कर्त्तैवैको भवतीति भावो विशिष्ट एवैको घटादिर्न त्वेक एव भूत्यादिरूपो विशेषः कर्त्ता, तस्मादेकभवनासत्त्वादर्थैकत्वमपि नैव, सामान्यभवनस्यैकस्य न्यग्भूतत्वात विशेषभवनस्य भूत्यादिविशिष्टैकरूपत्वान्नास्त्यर्थैकत्वमत्र नयेन द्रव्यार्थक्तं भूत्यादिष्वैक्यं तन्मां प्रत्यसिद्धमित्यर्थः, तस्मादद्दृष्टान्त इति ।

किञ्चान्यत् त्वया–

**यदप्युक्तं नक्षत्रतारार्थातिदेशविषयो नक्षत्रं भवति पुष्योऽयं देवदत्त इति, वृक्षोऽर्थो भवतीति यथा वृक्षस्यार्थेनातिदेशस्तथानक्षत्रादिना देवदत्तस्येति, अत्र देवदत्तस्यैवं नक्षत्रादिनाऽतिदेशो न भवति नक्षत्रादीनामतद्विषयत्वात्, अर्थेन च सता वृक्षोऽतिदिश्यते प्रत्यक्षः सन् परोक्षेण धर्मेण असता वा, वृक्षस्यार्थविषयत्वात् ।**

**यदप्युक्तं नक्षत्रतारार्थातिदेशेत्यादि** तदुक्तप्रत्युच्चारणं सामान्यार्थातिदेशेन विशेषार्थातिसर्गे निदर्शनम्, अयं देवदत्त इति, वृक्षोऽर्थो भवतीति द्वितीयं[म]विशेषं गतार्थं सभावनं यावद्देवदत्तस्येति पूर्वपक्षः, उत्तरपक्षस्तु अत्र युक्तौ देवदत्तस्यैवमित्यादिना वैधर्म्यं निदर्शयत्यतिदेशाभावभावनार्थं यावदतद्विषयत्वादिति प्रथमनिदर्शनस्य, अर्थेन चेत्यादिना द्वितीयनिदर्शनवैधर्म्यं दर्शयति–अर्थेन सता वृक्षोऽतिदिश्यते प्रत्यक्षः सन् परोक्षेण धर्मेण–विशेषेण सामान्येन [वाऽ]सता वा–खपुष्पादिना वा, नक्षत्रादीनामतद्विषयत्वात्–प्रत्यक्षनिर्देश्यस्य पिण्डस्य देवदत्तार्थस्य[ा]तद्विषयत्वात वृक्षस्यार्थविषयत्वाच्च वैधर्म्यम्, तस्मान्न[3] दृष्टान्तः, नक्षत्राद्यतिदेश्यो न भवति पुष्यः, अस्वविषयत्वात, स्थाणुनेव पुरुषः, पुरुषेण वा स्थाणुरिति, यद्यतद्विषयेणाप्यतिदिश्येत घटादावपि नक्षत्रं तारा घट इत्यतिदेशवृत्तिर्युक्ता स्यात्, अतद्विषयत्वात्, पुष्यवदित्यतिप्रसङ्गः ।

---

त्रिलिङ्गता सम्भवति वा न वेति विचारे प्रस्तुते विभिन्नलिङ्गकनानाशब्दोपन्यासो विरुद्ध भूतिभवन भाव इति, विभिन्नार्थत्वेनैकार्थत्वाभावादननुरूपत्वादित्याह–**तटशब्दस्येति** । किञ्च भूतिभवनभावशब्दानामेकार्थत्वे ते शब्दा सामान्यवाचका सम्पन्ना, तथा चेदमुदाहरणं सामान्यविषयम्, न विशेषविषयं पर्यायनयाभीष्टम्, पर्यायनय हि भावशब्दवाच्य कर्तैवैको विशेष प्रधानरूप, न स प्रकृत्यर्थक्रियावाचकभूत्यादिशब्दगम्य, तस्मान्न तस्य दृष्टान्तत्वमित्याह–**इतश्च न घटत इति** । पर्यायनयमतेन तदुदाहरणत्वासम्भवं निरूपयति–**न पर्यायनयस्येति । विशिष्ट एवेति** विलक्षण एवेत्यर्थः । भूत्यादिशब्दाना नास्त्यर्थैकत्वमेकभवनस्यासत्त्वात् तस्यासत्त्वञ्च सामान्यरूपतया न्यग्भूतत्वात, न्यग्भूतत्वञ्च प्रकृत्यर्थत्वेनाप्रधानत्वादित्याह–**तस्मादिति** । पर्यायनयसम्मतार्थमाह–**विशेषभवनस्येति,** प्रत्ययार्थत्वेन प्रधानभूतं विशेषभवन भूत्यादिशब्दवाच्यसामान्यार्थविलक्षणैकार्थरूपमतो भूत्यादिनानाशब्दवाच्यसामान्यरूपैकार्थासिद्ध्या न दृष्टान्ततेति भाव । अथ विवक्षाविशेषेण शब्दप्रवृत्त. सामान्यार्थैर्नक्षत्रादिशब्दैर्देवदत्तविशेषविषयः पुष्योऽतिदिश्यते पुष्यो नक्षत्रमिति यथा घटोऽर्थेन सामान्येनातिदिश्यते घटोऽयमर्थ इति, तदुक्तं पूर्वपक्षिणाऽनूद्य निराकरोति–**यदप्युक्तमिति** । व्याकरोति–**तदुक्तप्रत्युच्चारणमिति** । दृष्टान्तदार्ष्टान्तिकयोरतद्विषयत्वतद्विषयत्वाभ्या वैधर्म्याच्च नक्षत्रतारार्थातिदेशविषयः पुष्य इति समाधत्ते–**उत्तरपक्षस्त्विति** । एतदेव मानमुखेनाह–**नक्षत्राद्यति**

---

1 सि. क्ष. डे. °नयातिविष० । 2 सि. क्ष छा. डे. न सा० । 3 सि. क्ष. छा. °न्नादृष्टा० ।

**ननु पुरुषोऽपि..........................गवादि गोण्येति, सत्यमुच्यते शब्दो हि तेन प्रकारेण वाच्यविशेषं संवादिनं ब्रवीति न तु तद्गतानां विशेषाणां विरोधेन यथा स्त्रीपुंनपुंसकादीनां एकद्विबहुत्वादीनाञ्चैकार्थत्वेन...............संवादव्युदसनवृत्तिरिति ।**

**ननु पुरुषोऽपीत्यादि,** अस्वविषयत्वासिद्ध्युद्भावनं यावद्गवादि गोण्येति, तदुत्तरं सत्यमुच्यते इत्यादि, शब्दो हि तेन प्रकारेण वाच्यविशेषं संवादिनं ब्रवीति, तत्सम्परिग्रहणगुणेन सत्यमुच्यते सोऽर्थविशेषः न तु तद्गतानां विशेषाणां विरोधेनोच्यते, यथा स्त्रीपुंनपुंसकादीनामेकद्विबहुत्वादीनाञ्चैकार्थत्वेनेति संवाद-विसंवाददर्शनो ग्रन्थो यावत् सवादव्युदसनवृत्तिरिति गतार्थः, एवं लिङ्गसंख्याविसंवादवृत्तिहेतुप्रसङ्गेन चोद्यपरिहारप्रपञ्च उक्तः, एषः प्रकृत्यादिविसंवादेष्वप्यशेष आक्षेपपरिहारप्रपञ्च आयोज्यः, समानप्रचर्च-त्वात्, प्रकृतिप्रत्ययाद्यक्षरविशेषोच्चारणमात्रभेदः, प्रह्रासादिदमसत्यमेवेति चोद्योपक्रमप्रभृति यावदेतदवधि लिङ्गादिशेषत्यागेन यथानुपूर्वोत्तरपक्षविरचनो नेय इति ।

**नन्वेवमाख्यापुराख्यानकर्मणि प्रकृत्यर्थस्याख्येयार्थगतविशेषैरवश्यम्भाविभिर्विना तदा-ख्यानासम्भवान्नान्तरीयकसंख्यालिङ्गादिविशेषणोपादानम्, इतरथाऽर्थोपदेशाभाव इत्येतच्च न, क्रियाव्युत्पत्त्यादिभेदेन व्याख्यानोपपत्तेः, उक्तं हि–'क्रियाकारकभेदेन..................' दिवुक्रीडाविजिगीषा.................. स वृक्षः, इहापि ...... क्रियाकारकभेदाभ्यां पुष्यति... ...........खपुष्पं, ........उपोद्घात.........भेदलक्षणाया इति व्याख्यायाः अधिकरणयोगपदार्थ... ..का कथं वाऽनुपपत्तिलिंगाद्यभेदेऽपि, इतश्च व्याख्यानात् लिङ्गाद्यभिन्नार्थगतिरुपपद्यते, यथाऽऽह–'वाग्दिग्भूरश्मि... ........ . . ...' ( ) ........................दृष्या वेति,**

**नन्वेवमित्यादि,** नन्वाख्यापुराख्यानकर्मणिप्रकृत्य[र्थ]स्याख्येयार्थगतविशेषैरवश्यम्भाविभिर्विना तदाख्यान[ा]सम्भवान्नान्तरीयकं विशेषणोपादानम्, तानि च विशेषणानि सख्यालिङ्गादिभेदा एव,

**वेश्य इति ।** अस्वविषयत्वहेतोरसिद्धिमाशङ्क्य समाधत्ते–**अथ पुरुषोऽपीति,** ग्रन्थोऽत्र नापलभ्यते । व्याचष्टे–**अस्वविषयत्वेति ।** वाच्यगतं सवादिनमर्थविशेषं प्रतिपादयन् साधुर्भवति अर्थोऽपि तथाविधशब्दप्रतिपाद्यविशिष्टो यथार्थ उच्यते, न तु वाच्यविरुद्धविशेषप्रतिपादकः शब्दः साधुर्न वाऽर्थो विरुद्धविशेषपरिग्राही यथार्थ इत्याशयेनोत्तरयति–**शब्दो हीति ।** निश्चितेऽपि वस्तुनि पुंस्त्वादौ पुष्यो नक्षत्रं तारा वेति निश्चितेऽपि वस्तुनि एकत्वे दाराः, आपः, गृहा इत्येवं विरुद्धलिङ्गसंख्यासामानाधिकरण्यं शब्दः कथं बोधयितुं क्षमते, इदं हि सामानाधिकरण्यं संवादिनं पुष्यगतं पुंस्त्वं दारार्थगतमेकत्वं व्युदस्यतीति भावः । प्रत्ययाय-थार्थत्वसाधकः लिङ्गसंख्याविसंवादवृत्तित्वसाधको ग्रन्थो प्रकृत्ययथार्थत्वसाधनायापि योजनीय इत्याह–**एष प्रकृत्यादीति ।** ननु व्याकरणेन लाघवेन प्रकृतिप्रत्ययकल्पनया पदानि वाक्यानि चान्वाख्यायन्ते, प्रकृत्या वस्तुन आख्यानं विशेषणमन्तरेण न सम्भवति विशेषणं किञ्चिद्बाह्यं किञ्चिदान्तरं किञ्चिदसदपि कल्पितं भवति यथा चेतनवाचकप्रकृतिर्बहिर्विद्यमानं लिङ्गं स्तनकेशादिनिमित्तं परिगृह्य वस्तु प्रकाशयति बहिरसतोऽपि तारादौ आन्तरं धर्मभेदमाश्रित्य ताराशब्दो बोधयति स्वार्थम्, राहोः शिर इत्यादावसन्तमपि भेदं प्रकल्प्यान्वाख्यायते, एवं सख्यादावपि, तस्मान्नानुपपत्तिः कापीति शङ्कते–**नन्वेवमिति ।** व्याचष्टे–**नन्वाख्येति ।**

१ सि. क्ष. डे. छा. प्रभूतस्या० ।

**इतरथाऽर्थोपदेशाभावः**, अर्थप्रत्यायनार्थत्वाच्छब्दप्रयोगस्यार्थपरतन्त्रस्यानन्तरीयकत्ववल्लिङ्गादिभेदानन्तरीयकत्वमित्येतच्च न, क्रियाव्युत्पत्त्यादिभेदेन व्याख्यानोपपत्तेः, तद्दर्शयति- उक्तं हीत्यादिज्ञापकेन—'क्रियाकारकभेदेनेति, द्रव्यवदाश्रयवृत्तिः स्वस्थापरसाधना त्र्यभिहित[ा]श्च द्वे शून्ये क्षयिणी चेत्यष्टौ ज्ञेयाः क्रियाभेदाः, कारकभेदाः कर्त्रादयः षडष्टौ वा कालोपायमहिताः त एव पर्यायवचने घटकुटकुम्भादीनां वाक्यान्तरे च, 'स्थानिवदादेशोऽनल्विधौ' ( पा० १–१–५६ ) इत्यस्य 'स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशः' ( महाभा० १–१–५६ ) 'गुरुवद्गुरुपुत्रे वर्त्तितव्यमन्यत्रोच्छिष्टभोजनात् पादोपसङ्ग्रहणाच्च' ( महाभा० १–१–५६ सूत्रे ) इत्यादि, अथवाऽऽचार्येणैव क्रियाभेदेन दिवु क्रीडेत्यादि व्याख्यातमेव यावत् स वृक्ष इति गतार्थः, इहापीति सिद्धं व्याख्यानं प्रदर्श्य प्रस्तुतं योजयति -क्रियाकारकभेदाभ्यां पुष्यतीत्यादि यावत् खपुष्पमिति गतार्था व्याख्या, अथवाऽन्या व्याख्या- उपोद्घातेत्यादि यावद्भेदलक्षणाया इति व्याख्यायाः का कथं वेहानुपपत्तिः लिङ्गाद्यभेदेऽपीति सम्भत्स्यते, अथायमपरो व्याख्यामार्गः- तद्यथा—अधिकरणयोगपदार्थेत्यादि यावत् का कथं वाऽनुपपत्तिः लिङ्गाद्यभेदेऽपीति, सोदाहरणं त्वस्य व्याख्यानं **तन्त्रार्थसङ्ग्रहादिभ्यो**ऽधिगन्तव्यम्, इतश्च व्याख्या[ना]न् लिङ्गाद्यभिन्नार्थगतिरुपपद्यते, अनेकार्थैकशब्दग्रहणेनापीत्यादि व्याख्यातृभिरेकः शब्दोऽनेकार्थ इति ब्रुवद्भिर्व्याख्यानात् लिङ्गाद्यभेदेऽप्यर्थाधिगतिरभ्युपगतैवेति, तद्दर्शयति यथाह—'वाग्दिग्भूरश्मी' ( ) त्यादिश्लोकोऽयमाचार्येणैव व्याख्यातो यावद् दृष्ट्या वेति ग्रन्थेनैव, एवं निरवशेषव्याख्येयविषयव्यापिता व्याख्यायाः प्रदर्शिता ।

**अत एव व्याकरणं लक्ष्याधिगतये लक्षणम्, तस्माद्व्याकरणाध्ययने यत्न आस्थेयः, उक्तं हि–'............................ ॥ अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् । तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥' ( वाक्यप० कां० १ श्लोक १३ ) इति ।**

**इतरथेति,** विशेषणानामनुपादाने इत्यर्थः, यत्कारादर्थपुरस्कारेणैव वाचा प्रवृत्ते तदन्तरेणोपदेशासम्भव इति भावः । अर्थं प्रत्याययिष्यामीति वक्ता शब्दप्रयोगाद्यथा शब्दोऽर्थपरतन्त्रो नार्थमन्तरेण शब्दः प्रवर्त्तते तथैव लिङ्गादिविशेषमन्तरेणापि शब्दो न प्रवर्त्तत इति लिङ्गादिभेदानान्तरीयकः शब्द इत्याह–**अर्थप्रत्यायनेति** । प्रकारान्तरेणाप्युपदेशसम्भवेन त्वदीयोपदेशविधानमयुक्तमेवेत्युत्तरयति–**क्रियाव्युत्पत्त्यादीति । कारकभेदा इति,** कर्मादिभेदेन षड्भेदाः, क्रियाकारकपूर्वसम्बन्धाभिधायकषष्ठ्याः कारकत्वात् सप्तविधत्वं, अष्टविधत्वन्तु कालोपायमहितानामेव कर्त्रादय इति भावः । **स्थानिवदादेश इति,** अतिदेशसूत्रमिदम्, स्थानिकार्यमादेशेऽतिदिश्यते, यद्यपि तत्स्थानापन्नस्तद्धर्मं लभत इति स्थानिकार्याण्यादेशा प्राप्नुवन्तीति सूत्रवैयर्थ्यं भाति तथापि स्थान्यादेशयोः पृथक्त्वात् स्थानिकार्यमादेशो न प्राप्नोतीति अतिदेश आवश्यकः, अतिदेशोऽन्यत्रान्यधर्मारोपणम्, स द्विविधः सामान्यातिदेशः, विशेषातिदेशः, आद्ये दृष्टान्तः यथा गुरुवद्गुरुपुत्र इति–गुरुवद्गुरुपुत्रे वर्तितव्यमिति गुरौ यत्कार्यं तद्गुरुपुत्रेऽतिदिश्यते, एवमादेशभूतेऽल्यपि स्थानिकार्यप्राप्तौ तदारणायानल्विधाविति प्रतिषेधः क्रियते, तथा च विशिष्टं स्थानिकार्यमादेशेऽतिदिशति, अतिदेशप्राप्तं उच्छिष्टभोजनं पादोपसङ्ग्रहणञ्च वर्जयित्वा गुरुपुत्रे गुरुकार्यमतिदिश्यत इति विशेषातिदेश इति सूत्रभाष्याभिप्रायः । **दिवु क्रीडेति,** दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु इति दिवुधात्वर्था दश । अग्रेऽस्पष्टत्वान्न व्याक्रियते । **वाग्दिग्भूरिति,** 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रिया पुंसि गौर्लिङ्गं चिह्नशेफसो.' इत्यमरकोशे गोशब्दार्थाः । अथ व्याकरणमिदं लक्ष्यशब्दव्यवस्थाकारि प्रकृतिप्रत्ययादिविभागान्वाख्यानादिद्वारेण, तस्मात्तदध्ययने

---

१ सि. क्ष. °पृथक्त्वात् स्थानिवदति देशः । २ सि. क्ष. °वर्त्तितव्यानित्युच्छिष्ट० ।

**अत एवेत्यादि,** व्याकरणं हि लक्ष्याधिगतये लक्षणम्, कथं नाम शब्दादर्थे ज्ञानमविपरीतं स्यादिति, तस्माद्व्याकरणाध्ययने यत्न आस्थेयः, उक्तं हीत्यादि श्लोकद्वयं व्याकरणस्तवनार्थं निदर्शयति वागादिषु गोशब्द एकोऽनेकार्थः, एकस्मिन् पृथुबुध्नादिलक्षणेऽर्थे घटकुटकुम्भादिशब्दोऽनेक[ः]प्रवृत्त इत्येवमादेः प्रकाश्यस्यार्थस्य प्रकाशकं व्याकरणम्, स्थावरजङ्गमानामिव प्रकाश्यानां सूर्यः, तथा न व्याकरणमन्तरेण वाच्यस्य सूक्ष्मस्य ज्ञानम्, वाचकस्य च शब्दस्य यः शब्दः शब्दकर्मको वाचमेव ब्रूते हसतिजल्पत्यादिः तद्विषयं च ज्ञानं न सम्भवति, तच्च सर्वं व्याकरणज्ञो वेद, तथा अर्थप्रवृत्तितत्त्वानामित्यादि, अर्थाः– अभिधेयाः, प्रवृत्तयः–क्रियाः पुरुषहितहेतवः, अहितहेतवः, तेषामुभयेषां तत्त्वानि स्वान्यविपरीतानि रूपाणि शब्दैरेव ज्ञायन्ते, शब्दानां पुनस्तत्त्वं[न]व्याकरणादृते ज्ञायते, अथवाऽर्थस्य प्रवृत्तितत्त्वानि–यथास्वमेकैकस्यानन्तधर्मात्मविपरिणामाः, तानि शब्दैर्ज्ञायन्ते, शब्दा व्याकरणेनेति, अथवाऽर्थाः–धर्मार्थकाममोक्षाः तद्धेतवः प्रवृत्तयः, तासां तत्त्वानि–यथास्वं साध्यसाधनभावाः, इत्यादिव्याख्याविशेषेषु तद्विषयसम्यग्ज्ञानस्य शब्दाः कारणानि, शब्दज्ञानस्य तु व्याकरणमिति ।

**यदप्युच्येत स्त्रीपुंनपुंसकव्यक्तीनां विरुद्धानां पुष्यनक्षत्रताराणामयुक्तमैकाधिकरण्यं पुनर्वसू नक्षत्रमित्यादिसंख्याविरोधादयुक्तः, विज्ञानमपि तद्विषयमयुक्तम्, इत्यादिवचनखेदोऽयमकस्मात् क्रियते त्वया, अभिजल्पो हि शब्दार्थः, स च शब्द एव, न लिङ्गादिविचारखेदेनार्थोऽसद्विषयत्वात्, खपुष्पविषयविचारखेदवत्, 'सोऽयमित्यभिसम्बन्धात् रूपमेकीकृतं यदा । शब्दस्यार्थेन तं शब्दमभिजल्पं प्रचक्षते ॥' (वाक्यप० का० २ श्लो. १३०) तयोरपृथगात्मत्वे रूढेरव्यभिचारिणि । किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठते ॥ लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्त्तते । शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥ ( वा. कां. २ श्लो.**

यत्न कर्तव्य इत्याह–**अत एवेति** । व्याचष्टे–**व्याकरणं हीति,** लघुनोपायेन लक्ष्याणि न विपरीतरूपतः प्रकाशयति व्याकरणमतस्तदध्येयमिति भावः । तत्स्तावकश्लोकद्वयमुपन्यस्यति–**उक्तं हीति** । प्रथमकारिकाभावार्थमाचष्टे–**वागादिष्विति,** एकः शब्दोऽनेकार्थः, यथा वागादिशब्दाः, एकोऽर्थोऽनेके शब्दाः यथा पृथुबुध्नोदराद्येकार्थे घटकुटकुम्भादिशब्दाः इत्येवमादीनां शब्दानां प्रकाशकं व्याकरणमित्यर्थः । दृष्टान्तमाह–**स्थावरेति** । तथा वाच्यवाचकज्ञानमपि व्याकरणादेवेत्याह–**तथा नेति,** वाक्यार्थेभ्यः पदार्थान् पदार्थेभ्यः प्रकृतिप्रत्ययार्थान् विभज्य वाक्येभ्यः पदानि पदेभ्यश्च प्रकृतिप्रत्ययान् विभज्य प्रकृत्यर्थे प्रकृतेः प्रत्ययार्थे प्रत्ययस्य शक्तिः साधुत्वञ्च व्याकरणेन लघूपायेन बोध्यते, तद्द्वारेण च पदार्थे पदस्य वाक्यार्थे च वाक्यस्य शक्तिः साधुत्वं सुग्रहमिति भावः । **शब्दकर्मक** इति, शब्दः कर्म कारकं येषां ते शब्दकर्मकाः हसतिजल्पत्यादयः हसनजल्पनक्रियायामेते धातवो वर्त्तन्ते । द्वितीया कारिका व्याचष्टे–**अर्थप्रवृत्तीति,** अर्थप्रत्यायकत्वं साध्वसाधुशब्दानां धर्माधर्मसाधनत्वञ्चेति भावः । तद्भावस्तत्त्वं तस्यैव भावो नान्यस्येत्याशयेनाह–**स्वान्येति,** स्वेतरेभ्यो व्यावृत्तानीत्यर्थः, सर्वो हि व्यवहारः शब्दमूलः, नानुच्चार्य शब्दं कश्चिद्व्यवहर्त्तुं शक्नोतीति भावः । ननु एतावता किमायातं व्याकरणस्य, शब्दस्वरूपबोधस्य श्रोत्रेन्द्रियादेव भावादत आह–**शब्दानामिति,** शब्दानां तत्त्वं–अवैकल्यं साधुत्वं यथार्थबोधकत्वं वा तस्यावबोधो–निर्णयः व्याकरणादेव भवति न श्रोत्रादिभ्य इति भावः । प्रकारान्तरेण व्याचष्टे–**अथवेति,** अर्थगता येऽनन्ता धर्मास्तदवबोधः शब्दैरेवेति भावः । व्याख्यान्तरमाह–**अथवेति** धर्मादीनां तत्प्रवृत्तीनाञ्च कार्यकारणभावविषययथार्थज्ञानं शब्दाधीनमिति भावः । अथ पुष्यो नक्षत्रं तारा वेत्यादौ पुष्यस्य स्त्रीनपुंसकलिङ्गसामानाधिकरण्ये पुनर्वसू नक्षत्रमित्यादौ द्विवचनान्तस्यैकवचनान्तेन च सामानाधिकरण्ये तद्विषयं विज्ञानञ्चायुक्तमिति यदुक्तं तदकस्मात् खेद एवेति निरूपयति–**यदप्युच्येतेति** । व्याचष्टे–**स्त्रीपुंनपुंसकेति,** स्पष्टम् ।

**१३२.) दर्शनोत्प्रेक्षाभ्यामर्थमभिधेयत्वेनोपगृह्य तत्र न्यग्भूतस्वशक्तिर्बुद्धौ परिप्लवमानोऽयमित्थमनेन शब्देनोच्यत इत्यान्तरो विज्ञानलक्षणः शब्दात्मा श्रुत्यन्तरस्य बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुः, सोऽभिजल्पाभिधेयाकारपरिग्राही बाह्याच्छब्दादन्य इति भर्तृहर्यादिमतम् ।**

**यदप्युच्यतेत्यादि,** स्त्रीपुंनपुंसकव्यक्तीनां विरुद्धानां पुष्यनक्षत्रतारार्थानामयुक्तमैकाधिकरण्यम् पुनर्वसू नक्षत्रमित्यादिसंख्याविरोधादयुक्तेर्विज्ञानमपि तद्विषयमयुक्तमित्यादिवचनखेदोऽयमकस्मात् क्रियते त्वया, किं कारणं ? अभिजल्पो हि शब्दार्थः, हिशब्दो यस्मादर्थे, शब्दार्थस्याभिजल्पत्वान्न लिङ्गादिविचारखेदेनार्थः, असद्विषयत्वात्, खपुष्पविषयविचारखेदवत्, स्यान्मतं कोऽसावभिजल्प इत्यत्रोच्यते— स च शब्द एव,- स चाभिजल्पः शब्द एव, कथमितिचेदुच्यते—'सोऽयमित्यभिसम्बन्धात्' ( वा० का० २ श्लो० १३० ) इति श्लोकः, योऽर्थः सोऽयं शब्दो घट इत्यभेदोपचारसम्बन्धाद्यदा शब्दस्वरूपमर्थेनैकीकृतं भवति तदा, यथेन्द्रकश्चन्द्रक इतीन्द्रचन्द्राद्यप्रत्यक्षार्थानभिज्ञोऽपि इन्द्रचन्द्रशब्दरूपापन्नगोपालादिमर्थं प्रत्याययन् दृश्यते सोऽर्थेनैकीभूतः शब्द एवाभिजल्प इत्युच्यते [ तयोरपृथगात्मत्वे रूढेरव्यभिचारिणि । किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठते ॥ वा० का० २ श्लो. १३१ ] एवं शब्दार्थयोः क्षीरोदकवत् अपृथगात्मत्वम्, तयोरपृथगात्मत्वे सति अव्यभिचारिणि-अन्योऽन्याविनाभावित्वेऽपि रूढिवशादेव किञ्चिद्रूपं प्राधान्येनावतिष्ठते शब्दरूपमर्थरूपं वा, यथा लौकिका अर्थप्रधानाः शाब्दाः शब्दप्रधाना इति. तमर्थं प्रविभागेन दर्शयति—'लोकेऽर्थरूपतामिति, श्लोको गतार्थः [ लोकेऽर्थरूपता शब्दः प्रतिपन्नः प्रवर्त्तते । शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया ॥ वा० का० २ श्लो० १३२ ] अग्निमानयेत्युक्ते लोके दहनादिलक्षणेऽर्थे सम्प्रत्ययो न शब्दे, शास्त्रे तु 'स्त्रीभ्यो ढक्' ( पा० ४-१ १२० ) इति स्त्रीवाचकेषु सार्थकेषु शब्देषु, 'भुजो कौटिल्ये' इत्येवमादिष्वर्थेष्वेव सम्प्रत्ययः, तद्व्याख्या—दर्शनोत्प्रेक्षाभ्यामित्यादि, प्रधानादिदर्शनेन

---

अध्यासरूपत्वमागतः शब्द एव स्वरूपलक्षणः शब्दस्य वाच्यः, न त्वर्थस्तथा च सङ्ख्यानपुंसकवादिलिङ्गस्वरूपविचारद्वारेण सामानाधिकरण्योपपत्त्यनुपपत्तिप्रसाधनं केवलं श्रम एव, तद्विचारस्यासद्विषयत्वादिति भर्तृहरिमतेनाह—**अभिजल्पो हीति**। शब्दस्याभिजल्परूपतामाह—**स च शब्द एवेति**। तत्र हरिकारिकामुपन्यस्यति—**सोऽयमितीति,** योऽर्थोऽयं शब्द एव, कोऽयमर्थः ? गौरिति, किंनामायं? गौरिति व्यवहारदर्शनादध्यासेन पदार्थस्वरूपमाच्छादितं सत् यदैकीकृतमिव प्रत्याय्यते तदाऽभिजल्पः शब्द उच्यते इति तदर्थः। असद्विषयत्वस्फोरणाय दृष्टान्तमाह—**यथेन्द्रक इति,** इन्द्रचन्द्रादेरर्थस्याप्रत्यक्षतयाऽनभिज्ञोऽपि गोपालादाविन्द्रचन्द्राध्यासेनैकीकृत्य शब्दरूपतया गोपालाद्यर्थं जानातीति असद्विषयत्वं स्पष्टमेवेति भावः। यदा शब्दार्थयोरध्यासेनैकरूपत्वेऽव्यभिचारिणि रूढिवशात् क्वचिल्लोकेऽर्थरूपतां प्रतिपन्नः शब्दोऽयं गौरित्यर्थप्राधान्येन प्रवर्त्तते क्वचिच्च शास्त्रे शब्दप्रधानः क्वचिच्चार्थप्रधानः प्रवर्त्तत इत्याह—**एवं शब्दार्थयोरिति**। विवक्षाकृतविभागस्य दृष्टान्तमाह—**अग्निमानयेति,** न हि वस्तुबोधनाय शब्दः प्रयुज्यते स शब्दः क्रियासु न साधनत्वं प्राप्नोति, अर्थप्रत्यायनार्थत्वेन परतंत्रत्वादिति भावः। एवमेव स्त्रीभ्यो ढक्, भुजो कौटिल्ये इत्यादावपि स्त्रीभुजादिशब्दा अर्थपरा एव, एतावांस्तु विशेषः, स्त्रीशब्देन स्त्रीवाचकाः शब्दा गृह्यन्ते, स्त्र्यादिरूपेऽर्थे ढगादिप्रत्ययासम्भवात्, भुजादिशब्दस्य तु कौटिल्यार्थ एव वाच्यः, स्त्रीशब्दस्तु न ढगादिकार्यभाक्, ग्राहकशक्तिमत्त्वेन सञ्ज्ञात्वात्, ग्राह्यत्वशक्तिमत्प्रयोगस्थसञ्ज्ञिप्रत्यायनमात्रार्थत्वेन परतंत्रत्वादित्याशयेनाह—**शास्त्रे त्विति,** व्याकरणशास्त्रे त्वित्यर्थः। अभिजल्परूपशब्दस्य बाह्यशब्दविलक्षणस्य स्वरूपमुपदर्शयति हरिसम्मतम्—**दर्शनोत्प्रेक्षाभ्यामिति,** आगमेन तदनुगुणेन तर्केण वेऽर्थः, उच्चार्यमाणः

---

१ सि. छा. डे. °भाययुक्तेर्वि० । २ सि. क्ष. छा. संव्यवहारकालेऽर्थरूपतामिति ।

पुरुषस्योत्प्रेक्षया वाऽर्थमभिधेयत्वेनोपगृह्य–पूर्वोक्तचन्द्रादिवत् साकारं तत्र न्यग्भूतस्वशक्तिः–अस्वतंत्रीकृताभिधानसामर्थ्यः बुद्धौ परिप्लवमानोऽयमित्थमनेन शब्देनोच्यत इत्यान्तरो विज्ञानलक्षणः शब्दात्मा श्रुत्यन्तरस्य बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुः–उत्थापकः, सोऽभिजल्पाभिधेयाकारपरिग्राही बाह्याच्छब्दादन्य इति भर्तृहर्यादिमतम् ।

वसुरातस्य भर्तृहर्युपाध्यायस्य मतन्तु स च स्वरूपानुगतार्थरूपमन्तरविभागेन सन्निवेशयति, 'अशक्तेः सर्वशक्तेर्वा शब्दैरेव प्रकल्पिता । एकस्यार्थस्य नियता क्रियादिपरिकल्पना ॥' ( वाक्यप० कां० २ श्लो० १३३ ) इहैकमेवार्थवस्तु एकस्यां पचनावस्थायामेकस्मिन् मुहूर्तादौ काले बहुभिर्वक्तृभिर्युगपदेकेन वा पर्यायेण वक्त्रोच्येत विरुद्धैर्धर्मैः, तद्यथा-ओदनं पचति, पाक ओदनस्य, पाकं निर्वर्त्तयति, करोति निर्वृत्तिं पाकस्य, तत्र यदि अर्थवस्तु शब्देनोच्येत तर्हि विरोधात् कथमोदनस्यैकस्य युगपत् क्रमेण वा कर्मत्वं सम्बंधित्वं पाकं निर्वर्त्तयति पाकस्य निर्वृत्तिं करोतीति कर्मत्वं शेषरूपत्वं च पाकस्य? तस्मादविद्यमाना वा शब्दस्यैव शक्तयः बुद्ध्या बाह्यार्थनिरपेक्षं समध्यारोप्यन्ते सर्वशक्तियोगे वाऽर्थार्थत्वाच्छब्दप्रयोगस्य शब्दः प्रतिनियतमेवार्थं प्रकाशयति, तत्राशक्तिपक्षे वस्तुगता शक्तिरप्रयोजिका शब्दप्रयोगस्य, खपुष्पवदसत्त्वात्, न ह्यस्यावस्तुविषयाभ्यां सन्निधानासन्निधानाभ्यां किञ्चिदपि प्रयोजनमस्ति प्रयोजने सति प्रयोगः स्यात्, तस्यामसत्यामपि बाह्यार्थशक्तौ मत्पक्षे सम्भवत्येव शब्दप्रयोगः, योग्यशब्दनिबन्धना हि विवक्षा अनपेक्ष्यार्थगतशब्दं बुद्धौ शक्तिमध्यारोपयति ।

**(वसुरातस्येति)** वसुरातस्य भर्तृहर्युपाध्यायस्य मतं तु–स च स्वरूपानुगतेत्यादि, स च–अभिजल्पः स्वरूपानुगतमर्थरूपमन्तरविभागेन सन्निवेशयतीति सत्यपि बाह्येऽर्थे तन्निरपेक्षं स्वातंत्र्यमभिजल्पस्य प्रदर्शयितुमाह–'[अ]शक्तेः सर्वशक्तेर्वे ( वाक्यप० का० २ श्लो० १३३ ) त्यादि, या एताः गतिस्थितिजल्पनचिन्तनादयो धातुवाच्याः क्रिया बाह्यार्थशक्त्यभिमताः तद्वानसौ बाह्योऽर्थोऽस्तु अशक्तिरेव वा, द्वयोरपि शक्तिमदशक्तिपक्षयोस्ताः क्रियादिशक्तयो नियता एव, जल्पनादि मनुष्यादीनामेव, सर्पणप्लवनाद्याः सर्पशकुना-

शब्दा नार्थस्य वाचकाः, किन्तु योऽर्थः स शब्दः यः शब्दः सोऽर्थ इति शब्दार्थयोः तादात्म्यादाच्छादितपदार्थस्वरूपोऽभिजल्पनामा तेभ्योऽभिव्यक्तश्च आन्तरः शब्दो वाचकः अयमेव स्फोटः, एतद्व्यञ्जकत्वादेव प्रयोक्ताऽर्थविवक्षया करणव्यापारप्रभवान् शब्दान् प्रयुङ्क्ते, एतस्य शब्दस्य शक्तिरन्तःशब्दस्य व्यञ्जनमात्र एव, प्रत्याय्यप्रत्यायकत्वन्तु बौद्धशब्दार्थयोरेव, बौद्धशब्दस्य बौद्धार्थेन अध्यासरूपसंकेतात्मयोस्तादात्म्यादिति भर्तृहरिमतमिति भावः । तद्गुरोर्वसुरातस्य मतमुपनिबध्नाति–**वसुरातस्येति** । तन्मतं विशदीकरोति–**स चेति**, अभिजल्पस्वरूपः शब्दः स्वान्तोऽर्थस्वरूपमभेदेन सन्निवेशयति यतोऽत एव स्वमाहात्म्योत्थापित एव शब्दार्थः, नार्थेषु पृथक् तस्य शक्तिरस्ति यथा च शब्दैरर्था विधीयन्ते क्रियारूपतया सिद्धरूपतया वा तथैव तेऽवगम्यन्ते, तस्माद्बाह्यार्थनिरपेक्षोऽभिजल्पस्य शक्तिरिति भावः । एषोऽर्थो हरिकारिकया दर्शयति–**अशक्तेरिति** श्लोकाभिप्रायमाचष्टे–**या एता इति,** अर्थः क्रियादिरूपः सर्वशक्तिमान् शक्तिरहितो वेत्यभिप्रायः । **अशक्तिरेव वेति,** अर्थेषु शक्तिर्मा वा भवत्वित्यर्थः । नियतत्वमेव दर्शयति–**जल्पनादीति,** मनुष्यादीनामेव तत्र नैयत्यं सर्पणादौ सर्पस्य प्लवनादौ शकुनादेरित्यर्थः । एता क्रिया अर्थस्य शब्द-

१ सि. क्ष. डे. गतेऽपीत्यादि । २ सि. क्ष. छा. डे. °रूपमंतर० । ३ सि. छा. सर्वे शक्तेऽर्थे० ×× क्ष. छा. ४ सि. डे. गतिस्थितिजल्पचिन्त्यादिधा० । ५ सि. तद्वावसौ ।

दीनामेवेति, सर्वा एव तु एकस्य–कै[स्य]चिदर्थस्यानेकाः शब्दैरेव प्रकल्पिताः–शब्दशक्त्युत्थापिता इत्यर्थः, एतमेवार्थं भाष्येण विवृणोति–इहैकमेवार्थवस्त्वित्यादि, वस्तुत एक ओदन एकस्यां पचनावस्थायामेकस्मिन् मुहूर्तादौ काले बहुभिः वक्तृभिर्युगपदेकेन वा पर्यायेण वक्त्रोच्येत विरुद्धैर्धर्मैः, तद्यथेति निदर्शयति–ओदनमिति, देवदत्तादिकर्तृसमारूढक्रियं कर्म, पाक ओदनस्येति षष्ठ्या सम्बन्धमात्रम्, पाककर्मत्वं, निर्वृत्तिं पाकस्येति च पाकसम्बन्धित्वमिति, तत्र यदीत्यादिना भावयति यावत् पाकस्येति, बाह्येऽर्थे विरुद्धधर्मसम्बन्धाभावात् युगपदेककाले न घटत एव, नापि क्रमेण प्रयोगे वस्तुन एकत्वात् पाकसमवायिनः ओदनाख्यस्य पाकावस्थायाः कालस्य च, तस्मादित्यादि, पारिशेष्यात् अविद्यमाना चेत्यादिना प्रथमविकल्पे दर्शयति–शब्दस्यैव शक्तयो यावत् समध्यारोप्यन्त इति, सर्वशक्तियोगे वेत्यादि द्वितीयविकल्पेऽपि शब्दशक्तिमेव दर्शयति–यावत् प्रकाशयतीति, तत्राशक्तिपक्षे वस्तुगता शक्तिर्नास्त्येवेत्यभ्युपगतत्वादप्रयोजिका शब्दप्रयोगस्य, खपुष्पवदसत्त्वात्, न ह्यस्या इत्यादिभावनागतार्था यावत् किञ्चिदपि प्रयोजनमस्ति, प्रयोजने सति प्रयोगः स्यात्, तस्यामसत्यामपि बाह्यार्थशक्तौ मत्पक्षे सम्भवत्येव शब्दप्रयोगो यस्मात् योग्यशब्दनिबन्धनेत्यादि गतार्थं यावत् शक्तिमध्यारोपयति।

**सर्वशक्तिपक्षे तु मम विशेषणव्यवस्थितां कुतश्चिदनादेयां अव्यतिकीर्णामनन्यशब्दवाच्यां तां तां शक्तिमुपादाय स्वविषयनियताः शब्दाः प्रयुज्यंते प्रयोगसाफल्यमस्तीति, तस्मादुभयोरपि पक्षयोः शब्दप्रयोगसाफल्यं सम्भवतीति।**

शक्तिमहिम्नैवोत्थापिता इत्याह–**सर्वा एव त्विति।** एकरूपमेव इत्थं वस्तु एकदा बहुभिर्नरैर्विरुद्धैर्धर्मैर्युगपदुच्यते ओदनं पचति ओदनस्य पाक इति तत्कथं युज्यते, यद्योदनं कर्म न तर्हि कर्मत्वान्निवृत्तिरूप सम्बन्धित्वं तस्य भवेत्, यदि सम्बन्धि ओदनं न तर्हि कर्म भवेत्, कर्मत्वसम्बन्धित्वयोर्विरोधादेकदैकत्रायुक्तेरित्याभिप्रायेणाह **वस्तुत एक इति,** अत्र बहुभिर्वक्तृभिर्युगपत् एकेन वक्त्रा पर्यायेण विरुद्धधर्मैरुच्येतेति योजनीयम्। **देवदत्तादीति,** कर्तृभूतदेवदत्तादिनिष्ठप्रधानीभूतव्यापारजन्यफलाश्रयमोदनं कर्मेत्यर्थः। पाक ओदनस्येत्यत्रौदनशब्दोत्तरषष्ठ्या पाककर्मत्वानङ्गीकारपूर्वकं सम्बन्धमात्रं प्रतीयते इत्याह–**पाक ओदनस्येतीति।** तस्मान्नार्थेषु शक्तिः पृथगस्ति, न वा शब्देऽर्थनिरूपिता, किन्तु बुद्ध्या बाह्यार्थानपेक्षं बोदेऽभिजल्पगते ... शक्तयः समध्यारोप्यन्ते इत्याह–**पारिशेष्यादिति,** बाह्यार्थे कर्मत्वनिवृत्तिलक्षणविरुद्धधर्मसम्बन्धासम्भवेनैकेन वक्त्रा क्रमेण बहुभिर्वा युगपत्तैर्धर्मैरेकस्य वक्तुमशक्तेः शब्दार्थयोर्वाच्यवाचकभावलक्षणाया बाह्यत्वशक्तेरसम्भवादध्यासस्यैव शरणीकरणीयत्वादिति भावः। प्रथमविकल्पे–अर्थेषु शक्तिर्न पृथगस्तीत्यशक्तिपक्ष इत्यर्थः, सर्वशक्तिपक्षेऽपि शब्दः प्रतिनियतमेवार्थं प्रकाशयति, अर्थानिव्वाच्छब्दप्रयोगस्येत्याह–**सर्वशक्तियोगे वेति।** अर्थवस्तुन्यशक्तिपक्षे शक्त्यभावात्तदर्थबोधनेच्छया शब्दप्रयोगो निरर्थक एव, तत्र शक्तेः शब्दप्रयोगे प्रयोजकत्वाभावात्, असत्त्वात् खपुष्पवत्, तस्या अर्थस्य सन्निधानमसन्निधानं न हि भवति किञ्चित्करम्, यदि भवेत्तर्हि स्याच्छब्दप्रयोगो न चैवमस्ति, ततो न बहिरर्थापेक्षया शक्तिः शब्दप्रयोगप्रयोजिकेत्याह–**तत्राशक्तिपक्ष इति।** तर्हि कथं शब्दप्रयोग इत्यत्राह–**तस्यामसत्यामपीति,** बाह्यार्थविषयशक्त्यभावेऽपीत्यर्थः, अर्थं प्रत्याययिष्यामीति गवाद्यर्थबोधनाय प्रयुक्तो गवादिशब्दः, एवञ्चोच्चारणात् प्रागन्तःकरणवृत्त्या योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द इत्येवमध्यासादन्यव्यावृत्तरूपेण यस्मिन्नर्थे तादात्म्यमापन्नो यः शब्दः सोऽर्थप्रत्ययं जनयतीति नास्ति बहिरर्थगतशक्त्यपेक्षेति भावः। **योग्येति,** योग्यशब्दनिबन्धना विवक्षा–योऽयं गोशब्दः स एव गवार्थः, योऽयं गवार्थः स एव गोशब्द इति गोशब्दोच्चारणात् प्रागन्यव्यावृत्तरूपेण बुद्ध्या विषयीकृतार्थतादात्म्यापन्नशब्दबोधनेच्छेत्यर्थः, तदेवं शब्दप्रयोगसाफल्यमशक्तिपक्षे विज्ञेयम्। सर्वशक्तिपक्षे प्रयोगसाफल्यं दर्शयति–**सर्वशक्तिपक्षे त्विति,** अर्थस्य सर्वशक्तिमत्त्वेऽपि काश्चिदेकामसाधारणीं शक्तिमादायैव शब्दाः स्वमहिम्नैव प्रति-

१ क्ष. कश्चिदर्थस्य। २ सि. क्ष. शक्ति यावत्। ३ सि. क्ष. न हि स्येत्यादि।

(**सर्वेति**) सर्वशक्तिपक्षे तु मम विशेषणव्यवस्थितां कुतश्चिदनादेयामव्यतिकीर्णामनन्यशब्दवाच्यामित्यादि यावत् प्रयुज्यंते प्रयोगसाफल्यमस्तीति, तन्निगमयति–तस्मादुभयोरपीत्यादि यावत् सम्भवतीति पूर्वपक्षः ।

**अत्र वयं ब्रूमः, इदमप्यस्मदभिप्रायसाधनफलम्, योग्यशब्दनिबंधना हि विवक्षाऽनपेक्ष्यार्थगतशब्दं बुद्धौ शक्तिमध्यारोपयतीति, तत्र वस्तु तावदनेन त्वद्वचनेनैव शब्दादन्यत् सिद्धम्, तच्च तदिदंसंबन्धात्मकशब्दार्थयोः शब्दशक्तिबुद्धिविवक्षाख्यस्यार्थस्याधारभूतम्, योग्यशब्दाच्च बाह्यार्थसिद्धिः, योग्यानुरूपः शब्दः केनचिदर्थेन युज्यते, तस्मादर्थात्सिद्धात् पश्चाद्भवति शब्दः, यथारूपं तथा हि स योग्यः, अर्थनिबन्धना हि विवक्षा, इतरथा वचनस्य प्रवृत्त्यसम्भवात्, न हि शब्दोऽनामृष्टप्रत्याय्यप्रत्यायकभावो वक्तुमिष्यते, नच विवक्षामात्रेण, शब्दार्थस्य च शक्तिः शकनात्, शक्नोति वक्तुं शब्दः, शक्यते वक्तुमर्थ इति ।**

(**अत्रेति**) अत्र वयं ब्रूमः–इदमप्यस्मदभिप्रायसाधनफल[म्]सामान्योपसर्जना विशेषा एव भवन्तीत्येतदेव साधयति, एतदस्य फलं भविष्यति, तद्भावयितुकामो योग्यशब्देत्यादि प्रत्युच्चारयति यावदध्यारोपयतीति, अशक्तिपक्षे शब्दशक्तिप्रदर्शनोपसंहारोऽयम्, तत्फलत्वाच्छेषग्रन्थस्य, तत्र वस्तु तावदित्यादि, अनेनैव तावत्त्वद्वचनेन शब्दादन्यद्वस्तु[अ]शक्त्याख्यं शक्तिमद्वा सिद्धम्, तत्पुनर्वस्तु कीदृशमिति चेत् दर्शयति–तदिदं सम्बन्धात्मकेत्यादि, सोऽयमित्यभिसम्बन्धादित्येतस्मादेव वचनात् तच्छब्दवाच्यं वस्तु इदंशब्दवाच्याच्छब्दादन्यत्, अर्थाद्वा तच्छब्दवाच्यादिदंशब्दवाच्यः शब्दोऽन्यः, आधाराधेययोर्भेदात्, तदिदंसम्बन्धात्मकशब्दार्थयोः योऽसौ प्रयुज्यते शब्दः, वक्तुमिष्यते च,–यद्विषया बुद्धिरुत्पादयितुमिष्टेत्यर्थः शक्तिश्च यत्राध्यारोप्यते तद्वस्तु, अर्थस्यास्य–शब्दशक्तिबुद्धिविवक्षाख्यस्यार्थकलापस्याधारभूतं, आधेयानामाधारप्राणतः सिद्धेः, योग्यशब्दाच्च बाह्यार्थसिद्धिः, योग्यानुरूपः शब्दः केनचिदर्थेन–कश्चित्तदनुरूप एव नियतविषया भवन्तीति क्रियादिपरिकल्पना शब्दकृतेति भाव । इत्थं पूर्वपक्षिते उभयानियमनय आह–**अत्र वयं ब्रूम इति ।** व्याचष्टे–**इदमपीति** सामान्यमुपसर्जनं विशेष प्रधानमित्येवंविधमस्मदीयाभिप्रायमेव भवदभ्युपगम साधयतीति भाव । तत्कथमित्यत्राह–**योग्यशब्देति,** अयमभिप्रायोऽशक्तिपक्षे प्रधानभूत शेषाभिप्रायामन्तसमर्थनपरा इति तदभिप्रायपर एव ग्रन्थो गृहीतोऽत्रेत्याह–**अशक्तिपक्ष इति ।** अर्थे शक्तिनास्ति, शब्देरेव क्रियादिपरिकल्पना नियतेत्यादित्वद्वचनेनैव शब्दोऽन्योऽन्यश्चार्थ इति सिद्धमेवेत्याह–**अनेनैवेति ।** शब्द एवार्थ इत्येवं शब्देऽर्थस्य निवेशने सोऽयमित्यभिसम्बन्ध इत्युच्यते त्वया, तेन तयोरेकीकरणं न सम्भवति परोक्षवस्तुशक्तत्वात् तच्छब्दस्य सन्निकृष्टवस्तुविषयत्वाच्चेदंशब्दस्य सन्निकृष्टत्वपरोक्षत्वयोरेकत्र विरोधात्तौ विभिन्नाश्रयावेव भवत इति तच्छब्दवाच्यं वस्तु इदंशब्दवाच्याच्छब्दादन्यत्, परोक्षार्थत्वात्, इदंशब्दवाच्यो वा शब्दस्तच्छब्दवाच्यादर्थादन्यः सन्निकृष्टार्थत्वादिति दर्शयति–**सोऽयमितीति । आधाराधेययोरिति,** वस्तुशब्दयोः शब्दार्थयोर्वा भेदादित्यर्थः । तयोर्भेदमेवाविष्करोति–**तदिदमिति,** तदिदपदार्थयोर्मध्येऽर्थ शब्दस्य शक्तेर्बुद्धेर्विवक्षायाश्चाधारभूतः । आसमन्ताद्धारणं यत्करोति स आधार उच्यते, शब्दादीनामाधेयानां धारकाभावे न कार्यनिष्पत्तिरिति तेषामभाव एव स्यादित्याधेयानां सिद्धिराधारप्राणेत्यर्थोऽवश्यमभ्युपेय इति दर्शयति **आधेयानामिति ।** हेत्वन्तरमाह–**योग्यशब्दाच्चेति,** यथा यो हि शब्दोऽर्थं प्रकाशयति शब्दे योग्यता चार्थतादात्म्यं वास्तु, अर्थविषयबोधजनकत्वं वा भवतु सर्वथाऽर्थः शब्दप्राग्भावित्वेन ज्ञायतेऽतोऽर्थसिद्धिरावश्यकीति भावः । पृथुबुध्नोदराद्यर्थे घटशब्दो योग्योऽनुरूपश्च तत्तादात्म्यात्तद्बोधकत्वात् तद्बोधनेच्छया प्रयुज्यमानत्वेन पश्चादुपस्थितत्वाच्चेत्याशयं प्रकाशयति–**योग्यानुरूप इति ।**

१ सि क्ष डे महायोत्यस्तत्कत्य० ।

शब्दो युज्यते, पृथुबुध्नाद्यर्थेन घटशब्दः, तस्माद्घटाख्यादर्थात् सिद्धात् पश्चाद्भवति शब्दः, अनुशब्दस्य पश्चादर्थत्वात्, सिद्धेऽर्थे पश्चात् शब्देनार्थस्य [1]योगोऽनुरूपः, यथारूपमित्यादि, अथवाऽनुरूपो–योग्यो यथार्थोऽनुशब्दः यथारूपं–यद्यद्रूपं यथारूपम्–अनुरूपं यथा युज्यते तथेत्यर्थः, कथं च युज्यत इत्यत्राह–तथा हि स इत्यादि तेन हि प्रकारेणासौ योगमर्हति योग्यः शब्दः, तमर्थं प्रत्याययिष्यामीति प्रयोगदर्शनात् तस्यार्थस्य वाचकत्वोपेत इत्यर्थः, यो ह्यर्थस्यावाचकः स नानुरूपो न योग्य इत्युक्तं भवति त्वयैव, यस्मादर्थनिबन्धना विवक्षा, हिशब्द[स्य]हेत्वर्थत्वात्, इतरथेति, अर्थप्रत्यायनादृते वचनस्य प्रवृत्त्यसम्भवात्, न हि शब्द इत्यादि, शब्दो हि समीक्षित[प्रत्याय्य]प्रत्यायकसम्बन्धो वक्तुमिष्यते न ह्यनामृष्टप्रत्याय्यप्रत्यायकभावः, विवक्षायाश्चार्थमन्तरेणासम्भवात्–न च विवक्षामात्रेणेत्यादि, स च शब्दो विवक्षितेऽनुरूपेऽर्थे प्रयुक्तः श्रोतृबुद्धौ तां तां शक्तिमाधातुं शक्नोति, नान्यथा, शब्द[स्य]ार्थस्य च शक्तिः शकनात् शक्नोति वक्तुं शब्दः, शक्यते वक्तुमर्थ इति ।

**एवञ्चानेन त्वद्वचनेन पलायमानस्यापि ते बाह्यवस्तुसद्भावोऽनतिक्रमणीयः प्रतिपाद्यते बलात्, अतः स्त्रीपुंनपुंसकैकद्विबहुत्वकर्त्रादिविशेषलक्षणाः शक्तयः परिगृहीता एव त्वया, अस्मन्मतवदेव च विशेषणस्वरूपप्रवृत्त्या विना न कश्चिच्छक्तिमानन्यः किन्तु विशेषा एव विशेषेणास्मदभीष्टाः शक्तय इति यद्युच्यते त्वया, उच्यतां को वारयति ? ताश्च स्वार्थमत्यः शक्तयो विशेषरूपेण विशेषा एव, तासाञ्च तेषु तेषु प्रवृत्तिवस्तुषु स्त्रीत्वादिषु विवक्षैव व्यञ्जिका ।**

**एवञ्चानेनेत्यादि,** सोऽयमित्यभिसम्बन्धादित्यादि [2]प्रक्रम्याशक्तेः सर्वशक्तेर्वेति विकल्प्य त्वदीयमेव व[च]नं पलायमानस्यापि ते बाह्यवस्तुसद्भावमनतिक्रमणीयं प्रतिपादयति बलात् तदनिच्छतोऽपि

प्रकारान्तरेण व्याचष्टे–**सिद्धेऽर्थ इति,** प्राक् सिद्धार्थस्य शब्देन सम्बन्धोऽनुरूपो भवति, नासिद्धस्यार्थस्येति भावः । प्रकारान्तरेणाह–**अथ वेति,** अत्र पक्षेऽनुशब्दो यथापर्याय, अनुरूप–यथारूपमित्यर्थ, एवञ्च यथा युज्यते तथारूप शब्द इत्युक्तं भवति तत्र कथं युज्यत इत्यत्राह–**तेन हीति,** तदर्थवाचकत्वप्रकारेणासौ शब्द तेन सह वाच्यवाचकभावलक्षणं योगमर्हति, तदर्थावाचकत्वेन त्वसौ शब्दो न तेन योगमर्हतीति भाव । तेन प्रकारेण योग्यत्वे हेतुमाह–**यस्मादर्थेति,** विवक्षापूर्विका शब्दप्रवृत्तिर्विवक्षा चार्थनिबन्धना, न ह्यर्थप्रत्यायनव्यतिरेकेण शब्दप्रयोगस्यास्ति किमपि प्रयोजनम्, तस्माच्छब्दोऽर्थस्य प्रत्यायकोऽर्थश्च प्रत्याय्य इत्यवश्यमभ्युपगन्तव्यमेव, न हि शब्दार्थयोः प्रत्याय्यप्रत्यायकभावाभावेऽर्थविवक्षा तद्द्वारेण शब्दप्रयोगो वा शक्यते कर्तुम्, तस्मात् विवक्षितार्थानुरूपेण प्रयुक्तः शब्दः श्रोतरि तथाविधां शक्तिं गमयति सा च शक्तिः शब्देऽर्थे चास्ति यतः शब्दोऽर्थं वक्तुमीष्टेऽतः शब्दे शक्तिरस्ति यतश्चार्थः शक्यते वक्तुं शब्देनातोऽर्थेऽस्ति शक्तिरिति भाव । **शब्दो हीति,** निश्चितवाच्यवाचकभाव शब्दोऽर्थं वक्तुमिष्यत इत्यर्थ । वाच्यवाचकभावसम्बन्धव्यतिरेकेण विवक्षामात्राद्वक्तुमर्थो न शक्यत इत्याह–**न चेति** । शब्दार्थयो शक्तिमाह–**स चेति** । तदेवं योग्यशब्दनिबन्धनविवक्षावचनेन बाह्यवस्तुसद्भावं निरूप्य तस्यैव वचनान्तरेण तत्सद्भावाभ्युपगमापत्तिमुपदर्शयति–**एवञ्चानेनेति** । किं तद्वचनमित्यत्राह–**सोऽयमितीति** । तत्कथं वचनमर्थमनतिक्रमणीयं प्रतिपादयतीति तु प्रागुक्तप्रायमेव, तदिदं सम्बन्धात्मकेत्यादिनेति ध्येयम् । अर्थे

---

१ सि. क्ष. डे. छा. योनानुरूपः यथार्थरूपादित्यादि । २ सि. क्ष. डे. प्रक्रमशक्तेः ।

धरणिसखिशृगालिकापलायनवत्, अतः स्त्रीपुंनपुंसकैकद्विबहुत्वकर्त्रादिविशेषलक्षणाः शक्तयः परिगृहीता एव त्वयेति, इतश्च—असन्मतवदेव चेत्यादि त्वद्वचनादेवास्यार्थस्याविद्यमानाः शक्तयोऽध्यारोप्यन्त इति विकल्पोत्थापनादसम्भवं शक्तिमतोऽन्यस्य वयमपि ब्रूमः—या सा विशेष[ा]णां स्वरूपप्रवृत्तिः तया विना न कश्चिच्छक्तिमान्नामान्यः, किन्तु विशेषा एव विशेषेणास्मदभीष्टाः शक्तय इति यद्युच्यते त्वयोच्यतां को वारयति ? ताश्च स्वार्थसत्यः—स्वेन रूपेण सन्ति शक्तयो विशेषरूपेण-स्त्रीपुंनपुंसकादिभावेन शक्त्यन्तरव्यावृत्तरूपा विशेषा एव—वर्त्तमानाः सन्तीत्यर्थः, तासाञ्च—शक्तीनां तेषु तेषु प्रवृत्तिवस्तुषु स्त्रीत्वादिषु विवक्षैव व्यञ्जिका—विवक्षया व्यज्यन्ते प्रकाश्यन्ते सत्य एव शब्दप्रयोगेण, सैव हि विवक्षा तटस्तटी तटमित्यादीन् सतो विशेषानभिव्य[न]क्तीत्यर्थः, का विवक्षा ? वक्तुमिच्छा ।

**सैव तां तां शक्तिमर्थगतशब्दमनपेक्ष्य सिद्धामध्यारोपयति प्रागात्मनि, पश्चात् प्रयोगात् श्रोतृबुद्धौ, वक्त्रभिप्रायार्थग्रहणप्रयतनात्, अत्र प्रयोगः शब्दनिरपेक्षैव विवक्षाध्यारोप्या शक्तिरर्थः, प्रत्याय्यत्वात्, यः प्रत्याय्यः शब्दनिरपेक्ष एव सिद्धः, अभिजल्पार्थार्थावयववत्, यथा त्वत्प्रयुक्तस्याभिजल्पशब्दस्याभिधेयोऽर्थः समुदायः स च प्रत्याय्योऽवयवार्थाभ्यां समुदायार्थप्रतिपत्तेरवयवार्थप्रतिपत्तिपूर्वकत्वात्, मा भूद्विवक्षाप्रयोगयोरानर्थक्यमिति तावदभ्युपगन्तव्यौ खपुष्पवैलक्षण्येन शब्दनिरपेक्षौ शक्त्याख्यौ त्वया, प्रत्याय्यत्वात् तथा शक्त्याख्योऽर्थः, इतरथाऽभिजल्पशब्दवैयर्थ्यं स्यात् ।**

(**सैवेति**) सैव तां तां शक्तिमर्थगतशब्दमनपेक्ष्य सिद्धामध्यारोपयति प्रागात्मनि—वक्तरि, पश्चात् प्रयोगाच्छ्रोतृबुद्धौ, नासती, वक्त्रभिप्रायग्रहणार्थप्रयतनात्—पुमानयमनेन विवक्षितः, स्त्रीयं, नेतरे इत्या-

परिगृहीते चैता अप्यर्थगता शक्तय परिगृहीता एव, तथा चाभिजल्पो हि शब्दार्थ, स च शब्द एव, तस्माच्च लिङ्गादिविचारखेदनार्थ., असद्विषयत्वात्, खपुष्पविषयविचारखेदवदित्यादिवर्णनमयुक्तमेवेति दर्शयति—**अत इति**। लिङ्गसङ्ख्यादयोऽपि शक्तयः सोऽयमिति सर्वनामप्रत्यवमर्शयोग्यवस्तुगता तदभिन्नात्मका, तत्र त्वयाऽर्थे शक्तिर्नाभ्युपगम्यते यतोऽध्यारोप उच्यते, अस्मन्मतेऽप्यर्थस्योपसर्जनत्वेनासत्त्वाच्च न शक्तिमानिति शक्तिमतोऽन्यस्यार्थस्यासम्भवो वयमपि ब्रूम इत्याह—**त्वद्वचनादेवेति**। तर्हि तव मते शक्तिमान क इत्यत्राह—**या सा इति**, प्रवर्त्तमाना विशेषा एव शक्तिमन्तो न ततोऽन्य कश्चनार्थ शक्तिमान, एवमेव यदि त्वयाप्युच्यते तर्हि न विवदामह इति भाव । ताश्च विशेषरूपा शक्तय स्वेन रूपेण लिङ्गसङ्ख्यादिरूपेण शक्त्यन्तरव्यावृत्तरूपेण च विषयीकृताः सन्तीत्याह- **ताश्च स्वार्थसत्य इति**, ताश्च शक्तय स्वात्मेन रूपेण—विशेषरूपेण सत्यो—विद्यमानाविशेषा शक्त्यन्तरव्यावृत्तरूपा इत्यर्थः । स्त्रीपुंनपुंसकादिषु कस्यचिदेवाभिव्यक्तौ हेतुमाह—**तासाञ्च शक्तीनामिति**। तटस्तटी तटमित्यादौ तटपदार्थे विद्यमानानपि स्त्र्यादिविशेषान प्रतिनियततया व्यवस्थापयति विवक्षेति भाव । विवक्षाया विशेषाभिव्यञ्जकत्वमेव निरूपयति—**सैव तां तामिति** । अर्थो हि शब्दमनपेक्ष्य स्वत सिद्ध, तदिदंसम्बन्धवचनेनैवार्थसिद्धत्वात्, लिङ्गादिशक्तयोऽपि वस्तुषु शब्दमनपेक्ष्यैव सिद्धा, तत्र प्रयोक्ता परस्यार्थबोधनेच्छाया सत्या स्वयं प्रथमं स्त्रीपुंनपुंसकाद्यन्यतमशक्तिं वस्तुगतशब्दमनपेक्ष्यैवाध्यारोपयति स्वात्मनि, स्वस्मिन तज्ज्ञानस्य शब्दव्यतिरेकेणापि सम्भवात, ततः तट पुमानित्यादिशब्दं प्रयुनक्ति श्रोतापि तत्प्रयोगं निशम्य स्वात्मनि तच्छक्तिमध्यारोपयति, अनेनाभिप्रायेणासौ तट इति प्रयोगं कृतवानिति वक्त्रभिप्रायग्रहणप्रयत्नत्वादिति व्याचष्टे—**सैव तां तां शक्तिमिति**। स्वाभिप्रायानुसारेण श्रोत्रा स्वयं स्वात्मन्यध्यस्त-

१ सि. क्ष. छा. सम्भवश० । २ सि. क्ष छा. व्यावृत्यरूपा ।

थनन्यबुद्धिव्यवस्थानेन, अत्र प्रयोगः शब्दनिरपेक्षैव विवक्षाध्यारोप्या शक्तिरर्थ इति प्रतिज्ञा, प्रत्याय्यत्वात् प्रत्यायकेन वक्त्रा श्रोतरि प्रत्ययाधानं प्रत्याय्यत्वं शक्त्याख्यस्यार्थस्य सिद्धमेव, यः प्रत्याय्यः [स]शब्दनिरपेक्ष एव सिद्धोऽभिजल्पार्थार्थावयववत्, यथा त्वत्प्रयुक्तस्याभिजल्पशब्दस्याभिधेयोऽर्थः समुदायः, आभिमुख्येन जल्पोऽभिजल्पः तदिदंसम्बन्धात्मक एकीभावः त्वया शब्दार्थयोर्व्युत्पादितः, स च प्रत्याय्योऽवयवार्थाभ्याम्—अभिशब्दार्थेन जल्पशब्दार्थेन च, आभिमुख्येन जल्पोऽभिजल्प इति, समुदायार्थप्रतिपत्तेरवयवार्थप्रतिपत्तिपूर्वकत्वात्, मा भूद्विवक्षाप्रयोगयोः त्वदीययोरानर्थक्यमिति तावदभ्युपगन्तव्यौ खपुष्पवैलक्षण्येन शब्दनिरपेक्षौ शक्त्याख्यौ त्वया प्रत्याय्यत्वात्, तथा शक्त्याख्योऽर्थः, इतरथाऽभिजल्पशब्दवैयर्थ्यं स्यादिति ।

किञ्चान्यत्

**प्रयोजकत्वाच्चास्या अशक्तिपक्षोक्तमितोमुखं युक्तिजातं विपरिवर्त्तते, सर्वशक्तिपक्षेऽपि वाऽस्मन्मतमेवोच्यते त्वया, अर्थार्थत्वाच्छब्दप्रयोगस्य, व्यवस्थितां शब्देनानादेयामव्यतिकीर्णामनन्यशब्दवाच्यां तां तां शक्तिं विशिष्टामेवोपादाय शब्दाः प्रयुज्यंतेऽभिन्नलिङ्गसंख्यादिविशिष्टैकशक्तिविषयनियताः, लिङ्गादिभिन्नसामानाधिकरण्यक्रियायां व्यतिकरापत्तेः ।**

**प्रयोजकत्वाच्चास्या इत्यादि,** यदुक्तं त्वया तत्राशक्तिपक्षे वस्तुगता शक्तिरप्रयोजिका, न हि तस्या वस्तुविषयाभ्यां सन्निधानासन्निधानाभ्यां किञ्चिदपि प्रयोजनमस्तीति, तदिदमितोमुखं युक्तिजातं विपरिवर्त्तते, शक्तेरेव विवक्षाबीजत्वात् प्रयोजकत्वाच्च, एवंतावदशक्तिपक्षोऽस्मन्मतसिद्धस्त्वद्वचना-

शब्दनिरपेक्षा लिङ्गादिशक्तिमवबुद्ध्य शब्दानपेक्षशक्त्यभ्यस्तप्रयोक्तृज्ञान वक्त्रनुमीयत इत्याशयेन प्रयोगं दर्शयति—**अत्र प्रयोग इति,** शब्दापेक्षारहिता विवक्षयात्मनि परत्र वाऽध्यारोपयितुं योग्या स्त्रीपुंनपुंसकादिशक्तिरेवार्थ इति प्रतिज्ञार्थः । हेतुमाह—**प्रत्याय्यत्वादिति,** प्रत्याययितुं योग्या प्रत्याय्या—श्रोतुर्बोधं विधापयितुं योग्येत्यर्थः, वक्त्रा श्रोतारं प्रत्याय्यते शक्तिरिति प्रत्याय्येति वा तदर्थः । व्याप्तिं दर्शयति-**यः प्रत्याय्य इति ।** दृष्टान्तमाह—**अभिजल्पेति,** अभिजल्पस्यार्थोऽभिजल्पार्थः, अर्थावेवावयवौ अर्थावयवौ, अभिजल्पार्थायार्थावयवौ अभिजल्पार्थार्थावयवौ तद्वत्, अभिजल्पशब्दवाच्यशब्दार्थैकीभावप्रतिपत्तिफलकावयवार्थवदित्यर्थः । असुमेवार्थं विशदयति—**यथेति,** इदं तदिति सर्वनामप्रत्ययमर्शयोग्यं वस्तु शब्दार्थयोरेकीभावः, अर्थस्याभिमुख्येन शब्दस्य जल्पनात्, स चैकीभावः प्रत्याययितुं योग्यः समुदायशब्दार्थत्वात्, स चावयवार्थाभ्यां भवति न हि अभिशब्दार्थं जल्पशब्दार्थञ्चाविज्ञायाभिजल्पशब्दार्थं विज्ञातुमीष्टे, अयमिति अभिशब्दार्थः, स इति जल्पशब्दार्थः, अयमर्थः स शब्द इति अयं शब्दः सोऽर्थ इति वाऽवयवार्थे विज्ञाते एकीकरणरूपोऽभिजल्पशब्दार्थः प्रतीयते, तत्र यदि अवयवशब्दयोः काचिच्छक्तिर्न स्यात्तर्हि समुदायवाचकत्वेनाभिजल्पशब्दस्य विवक्षाप्रयोगौ न भवेताम्, आनर्थक्यात्, तन्मा भूदिति तयोः शक्तिरभ्युपेया सा च शब्दनिरपेक्षैवेति भावः स्यादिति प्रतिभाति । उक्तशक्तिव्यतिरेकेण च विवक्षाप्रयोगौ न भवेतामित्यभिधत्ते—**प्रयोजकत्वाच्चेति ।** एकीकरणात् प्राक् शब्दस्य नार्थेन सम्बन्धः, अन्यथैकीकरणस्यानुपपत्तेः, अर्थप्रत्यायनानन्तरमेवार्थानां गवादीनामात्मसु शब्दस्य हि समारोपकल्पना भवतीति शक्त्याख्यस्यार्थस्याध्यारोपे प्रयोजकत्वात्तस्याप्रयोजकत्वजल्पनमयुक्तमिति व्याकरोति—**यदुक्तं त्वयेति, तदिदमितोमुखमिति,** त्वदीयानिरूपणं मदुपपादिता शब्दनिरपेक्षशक्तिप्रसाधकयुक्तयः निवर्त्तयन्तीति भावः । हेतुमाह—**शक्तेरेवेति,** शब्दनिरपेक्षाया शक्तेर्बुद्ध्युपस्थितौ ह्ययं शब्द एतच्छक्तियोग्य इति योग्यशब्दनिबन्धना विवक्षा तन्नियमेन यत्किञ्चिल्लिङ्गविशिष्टशब्दप्रयोगश्च सम्भवतीति भावः । त्वद्वचनादेव मत्पक्षसिद्धिरित्येतदशक्तिपक्षे प्रतिपादितमित्युपसहरति—**एवं तावदिति ।** सर्वशक्तिपक्षेऽपि तन्निदर्शयति—**सर्वशक्तिपक्षे वेति ।** अर्थगत्यर्थो हि शब्द-

देव नास्ति, सर्वशक्तिपक्षेऽपि वाऽस्मन्मतमेवोच्यते त्वया, कस्मात्? अर्थार्थत्वाच्छब्दप्रयोगस्य, व्यवस्थित[ा]मित्यादिना, व्यवस्थितां शब्देनानादेयामव्यतिकीर्णामनन्यशब्दवाच्यां तां तां शक्ति–स्त्रीपुंनपुंसकादिकां शक्त्यन्तरव्यावृत्त्या विवक्षितां विशिष्टामेवोप[ा]दाय स्वविषयनियताः शब्दाः प्रयुज्यन्तेऽभिन्नलिङ्गसंख्यादिविशिष्टैकशक्तिविषयनियताः, किं कारणं? लिङ्गादिभिन्नसामानाधिकरण्यक्रियायां व्यतिकरापत्तेः, उक्तं प्राक्–'तारापुष्यनक्षत्राणां स्त्रीपुंनपुंसकानां व्यतिकरेण प्रयोगोऽपशब्द' इति, अयञ्च सर्वशक्तिपक्षः ।

**परमार्थतस्तु वादपरमेश्वरवाद एवायम्, एकैकद्रव्यानन्तपर्यायत्वात्, अहं हि त्वयैव सह विरुध्ये, न वादपरमेश्वरेण, तेन च सह को विरोधः? यस्तु विषयोद्ग्राहः इहैकमेवार्थवस्त्वित्यादि यावच्छेषरूपत्वञ्च पाकस्येत्युदाहृत्य तस्मादविद्यमाना वा शक्तय इत्यादिना भावयित्वा तदुपसंहारेऽभिहितं तस्मादुभयोरपि पक्षयोरित्यादि सम्भवतीति, एतन्नातिसम्यक् प्रत्यपेक्षितस्वार्थम्, सर्वस्यास्योदाहृतस्यार्थस्याविरुद्धैकार्थत्वात् ।**

(**परमार्थतस्त्विति**) परमार्थतस्तु वादपरमेश्वरवाद एवायम्, कस्मात्? एकैकद्रव्यानन्तपर्यायत्वादस्मन्मतमेव, अहं हि त्वयैव सह विरुध्ये, न वादपरमेश्वरेण, तेन च सह को विरोधः? तस्य हि मतमेकैकं द्रव्यमनन्तपर्यायम्, सापेक्षनिरपेक्षाश्च परिणामाः पर्यायाः शक्तय इत्युच्यन्ते, द्रव्याणि चान्योऽन्यानुगतशक्तित्वात् सर्वशक्तीनि, यथाह–'अण्णोण्णानुगताणं इमं च तं व त्ति विहयणमयुत्तं । जह दुद्धपाणियाणं जावंत विसेसपज्जाया' (संमति का० १ श्लो. ४७) यस्तु विषयोद्ग्राह इत्यादि, अशक्तेः सर्वशक्तेर्वेत्येतस्याः कारिकाया विषयः शब्दोत्थापिताः क्रियादिपरिकल्पना इत्येतस्यार्थस्य निदर्शनार्थमुद्ग्राह्यते–विरुद्धैर्धर्मैर्युक्तमित्यभिधीयत इत्यादिः स एव च ग्रन्थः प्रत्युच्चार्यः, इहैकमेवार्थवस्त्वित्यादि यावच्छेषरूपत्वञ्च पाकस्येत्युदाहृत्य तस्मादविद्यमाना वा [शब्दस्यैव]शक्तय इत्यादिना भावयित्वा तदुपसंहारेऽभिहितं

प्रयोग:, अर्थश्च सर्वशक्तिमान्, विवक्षया यच्छक्त्याऽर्थोऽभिधीयते सा शक्ति प्रधानमर्थ उपसर्जनमित्यस्मन्मतमेव सिद्ध्यतीत्याशयेन **हेतुमाचष्टे–अर्थार्थत्वादिति,** अर्थस्यानेकशक्तिमत्त्वेऽपि यद्यदुपकारवशाद्यथा प्रयोक्तृभिर्विवक्ष्यते शब्देन सैव शक्ति प्रतिपाद्यते प्रतिनियतप्रयोजनपूर्वकत्वाच्छब्दप्रयोगस्येति भाव । एतन्निरूपयति–**व्यवस्थितामिति,** अर्थस्य सर्वशक्तिमत्त्वेऽपि शब्देन शक्ति प्रतिनियतेति भाव. । **अव्यतिकीर्णामिति,** परस्पररूपानापन्नामित्यर्थ, अनन्यशब्दवाच्या–तत्तच्छक्त्यभिन्नशब्दवाच्यां, एकत्र शक्तौ वर्तमानस्य शब्दस्य न जातु शक्त्यन्तरे वृत्तिस्तदनन्यत्वाभावादिति भाव. । लिङ्गसंख्याविशिष्टायामेकस्या शक्तौ शब्दो नियत इत्याह–**अभिन्नलिङ्गेति** । भेदाङ्गीकारे दोषं पूर्वोक्तं पुष्यस्तारका दारा इत्यादिरूपं स्मारयितुं **हेतुमाह–लिङ्गादिभिन्नेति** । सर्वशक्तिपक्षोऽयं स्याद्वाद एवानन्तपर्यायैकद्रव्यत्वादित्याह–**परमार्थतस्त्विति** । व्याकरोति–**परमार्थतस्त्विति** । वादपरमेश्वरत्व एतस्य हेतुमाह–**एकैकेति,** प्रत्येकं वस्तु अनन्तपर्यायरूपमिति भाव. । नन्वस्य वादपरमेश्वरवादत्वे किमर्थं तेन सह त्वं विरुध्यसे, न हि वादपरमेश्वरेण सह कस्यापि विरोध इत्याशङ्कायामुभयनियमनय आह–**अहं हीति,** सत्यमेव न कस्यापि वादपरमेश्वरेण विरोध:, अहन्तु त्वयैव सर्वशक्तिवादिना विरुध्य इति भाव: । वादपरमेश्वरवादमतमादर्शयति–**तस्य हि मतमिति,** प्रत्येकं घटपटादिद्रव्यमनन्तपर्यायम्, पर्यायाश्च केचित् सापेक्षा केचिच्च निरपेक्षाः, एत एव पर्याया परिणामाः शक्तयश्चोच्यन्ते, एतादृशैः पर्यायैर्युक्तत्वादनुगमनलक्षणं द्रव्यं सर्वशक्तिमत्, नानापर्यायेष्वनुगतशक्तिरूपश्चेति भाव: । अत्र प्रमाणमुट्टङ्कयति–**यथाहेति,** सिद्धसेनाचार्य इति शेषः । **अण्णोण्णानुगताणं इति,** अन्योऽन्यानुगतयोरिदं वा तद्वेति

१ सि क्ष. ॰न्तराव्या॰ । २ सि. एकैकस्यार्थस्यैकैक्द॰ । ३ सि क्ष. यत्तु विषयोद्ग्राह । ४ सि. क्ष. ॰हृता तस्याऽवि॰ ।

*तस्मादुभयोरपि पक्षयोरित्यादि यावत् सम्भवतीति, इत्थं प्रत्युच्चार्योत्तरमाहाऽऽचार्यः–एतन्नातिसम्यक्-प्रत्ययेक्षितस्वार्थम्, कस्मात्? सर्वस्यास्योदाहृतस्यार्थस्याविरुद्धैकार्थत्वात्।*

तद्भावयति–

**ननु सर्व एव प्रयोगा ओदनं पचति ओदनस्य पाकः पाकं करोति विक्लित्तिनिर्वृत्तिं करोति विक्लेदयति पचति पाकं निर्वर्त्तयतीत्यादय एकार्थाः, यदेवोदनं पचतीति पचिविषयं कर्मोदनाख्यं तदेव पाक ओदनस्येत्यनया षष्ठ्योच्यते, पाकशब्देन च भावः पच्यर्थः कृता पचतीति तिङा कर्त्रर्थ उच्यते, स एव पाकं निर्वर्तयतीति निदर्श्यते, कृदभिहितभावद्रव्यत्वात्, पाकं करोतीति द्रव्यवत्कर्मणि द्वितीया, निर्वर्त्तयतीति च करोतीत्यर्थः, कर्त्तुः साध्यत्वात्, विक्लित्तिस्तण्डुलानां पाकः तद्विषयः कर्ता साध्यते यदा चौदनः प्रतीतो भवति तद्विषयभुजिपच्यादिक्रियासन्देहे किं करोतीति प्रश्ने ओदनस्य प्रसिद्धस्यानूद्यमानस्याव्याख्येयत्वादस्यैव पचेर्भुज्यादिव्यतिरेकेण विधानं पचतीति, तस्यैव पचतेः पूर्वस्य व्याख्याने किं करोतीति पृष्टे पाकं करोतीति पचिना प्रतिवचनात् कर्मत्वमुक्तवत्, देवदत्तस्य व्यापारं विशिष्टं स्थाल्यादिव्यापारेभ्यः सम्भवनधारणादीनां प्रकरणात् तत्प्रयोजकत्वात् स्थाल्याद्यपि पचने वर्त्तत इत्येवमादिभिरन्योन्यव्याख्यानप्रयोगैरेक एवार्थो व्याख्यायते यथा 'वृद्धिरादैच्' (पा० १–१–१) इत्यस्य प्रतीतापेक्षव्याख्यानवत्।**

**ननु सर्व एवेत्यादि,** यदेवौदनं पचतीति पचिविषयं कर्म ओदनाख्यं तदेव पाक ओदनस्येत्यनया षष्ठ्योच्यते, 'अनभिहिते' 'कर्मणि द्वितीया' (पा. २–३–१, २) एकत्र, एकत्र च 'कर्त्तृकर्मणोः कृति' (पा. २–३–६५) इति षष्ठ्या तदेव कर्मोच्यते, पाकशब्देन च भावः पच्यर्थः कृता घञोच्यते, पचतीति तिङा कर्त्रर्थः, स एव पाकं निर्वर्त्तयतीति निदर्श्यते, वर्ण्यतेऽनेन तिङेति, किं कारणं? कृदभिहितभावद्रव्यत्वात्, उक्तं हि 'कृदभिहितो भावो द्रव्यवद्भवति' (महाभाष्ये अ. ५ पा. ४ सू. १९) इति, पाकं

विभजनमयुक्तम्। यथा दुग्धपानीययोर्यावन्तो विशेषपर्यायाः॥ इति छाया, परस्परानुप्रविष्टयोर्द्रव्यपर्याययोरिदं द्रव्यमयं पर्याय इति पृथक् करणमघटमानकम्, प्रमाणाभावेन कर्त्तुमशक्यत्वात्, यथा तथाविधयोर्दुग्धपानीययोः, द्रव्यपर्याययोः किं परिमाणोऽयमविभाग इत्यत्राह–यावन्तो विशेषपर्यायास्तावानविभाग अत परमवस्तुत्वप्रसक्तेः, सर्वविशेषाणामन्त्यविशेषपर्यन्तत्वादिति तद्गाथाव्याख्या। ओदनं पचति पाकमोदनस्येत्याद्युदाहृतस्यार्थस्याविरुद्धैकार्थत्वमेव भावयति–**ननु सर्व एवेति।** व्याचष्टे–**यदेवौदनमिति.** ओदनं पचतीत्यत्राख्यातस्य कर्त्रर्थत्वात् पाकानुकूलव्यापाराश्रयस्य तज्जन्यफलाश्रयत्वलक्षणानभिहितकर्मत्वात् कर्मणि द्वितीयेत्यनेन द्वितीयान्तत्वम्। ओदनस्य पाक इत्यत्र तु पचनं पाक इति व्युत्पत्त्या भावे घञो विधानात् तेन कर्मणोऽनुक्तत्वात् द्वितीयायां प्राप्तायां 'कर्तृकर्मणोः कृति' इति षष्ठी कर्मणि भवतीत्याह–**एकत्र चेति,** ओदनस्य पाक इत्यत्रेत्यर्थः। **स एवेति,** कर्त्रर्थ एवेत्यर्थः, सिद्धावस्थापन्नः पाकः क्रियान्तराकाङ्क्षादर्शनात्, सर्वसंख्यादियोगदर्शनाच्च, पाकानुकूलव्यापारकर्त्तृवाच्यस्य पचतीत्यस्यैव पाकं निर्वर्त्तयतीति निदर्शनात् पचधात्वर्थस्य पाकशब्देन आख्यातार्थस्य निर्वर्त्तयतीति शब्देन व्यावर्णनात् साध्यावस्थापन्नपाकस्य सिद्धावस्थापन्नेन पाकेन न कश्चिद्विरोधः, कृदभिहितभावत्वाच्च पाकस्य क्रियान्तराकाङ्क्षणं सर्वसंख्यादियोगश्चेति भावः। भावस्य क्रियाया यदा कृत्प्रत्ययेनाभिधानं तदा द्रव्यमिव स भासत इति दर्शयति–**उक्तं हीति।**

---

१ सि. क्ष. एकरथं।

करोतीति द्रव्यवत्कर्मणि द्वितीया, निर्वर्त्तयतीति च करोतीत्यर्थः, कुतः ? कर्त्तुः साध्यत्वात्, विक्लित्तिस्तण्डुलानां पाकः, तद्विषयः कर्त्ता साध्यते, विक्लित्तिनिर्वृत्तिं कः करोति ? देवदत्तो विक्लेदयति पचति पाकं निर्वर्त्तयतीत्येकार्थत्वात् पचिक्रियाव्यापृतत्वेन साध्यते, देवदत्त इत्यर्थः, यदा चौदनः प्रतीतो भवति तद्विषयभुजिपच्यादिक्रियासंदेहे किं करोतीति प्रश्ने ओदनस्य प्रसिद्धस्यानूद्यमानस्याव्याख्येयत्वात् अस्यैव पचेर्भुज्यादिव्यतिरेकेण विधानं पचतीति, तस्यैव पचतेः पूर्वस्य व्याख्याने किं करोतीति पृष्टे पाकं करोतीति पचिना प्रतिवचनात् कर्मत्वं उक्तवदिति—'अनभिहिते' 'कर्मणि द्वितीया,' कृदभिहितभावद्रव्यत्वादिति, पाकस्य निर्वृत्तिं करोतीति कर्तृप्रत्ययार्थं व्याचष्टे, देवदत्तस्य व्यापारं विशिष्टं स्थाल्यादिव्यापारेभ्यः, सम्भवनधारणादीनां प्रकरणात् तत्प्रयोजकत्वात्, स्थाल्याद्यपि पचने वर्त्तत इत्यादिना सामान्यकारकत्वं, देवदत्ताधीनस्य विशिष्टस्य कारकान्तरप्रवर्त्तनाभावञ्च दर्शयति—इत्येवमादिभिरन्योन्यव्याख्यानप्रयोगैरेक एवार्थो व्याख्यायते, यथा 'वृद्धिरादैच्' ( पा. १–१–१ ) इत्यस्यार्थो वृद्धिरितीयं संज्ञा भवति आदैज्वर्णानाम्—आकारस्य चैचश्चेत्यादिप्रतीतापेक्षव्याख्यानवत् ।

**एवं सर्वत्र पाकः साध्यरूपतायामेव व्यवस्थितः साधनमाकांक्षतीति तस्मिन्नेव काले कर्मत्वं शेषत्वञ्च भजते, शेषस्याकारकविवक्षणात्, तस्मादविरुद्धा क्रियादिपरिकल्पना अर्थशक्तिविषयैव, न शब्दोत्थापिता, अस्मादुद्ग्राहानुरूपोपसंहाराभावादसम्यक्प्रत्यपेक्षितस्वार्थं वचस्त्वदीयमेवम्, तस्माच्छब्दस्याप्रधानत्वात् कुतोस्य कल्पनाशक्तिः ? अत इत्थं कारिका-**

द्रव्यवदवभासनादेव पचनार्थस्य पाकस्य करोतिक्रियाकर्मत्वमित्याह—**पाकमिति** । पचतीत्यस्य पाकं निर्वर्त्तयतीति विवरणाद्धात्वर्थस्य पाकशब्देनाभिधानमाख्यातार्थस्य च निर्वर्त्तयतीति पदेन तदर्थश्च करोतीति दर्शयति—**निर्वर्त्तयतीति चेति** । साध्यं किमित्यत्राह—**कर्त्तुरिति,** कर्तृव्यापारविशिष्टो देवदत्तः साध्यते विधीयत इत्यर्थः, पाकस्य सिद्धत्वेनाविधेयत्वात्तदनूद्यत इति पाकमनूद्य तद्विषयः कर्त्ता विधीयत इति भावः । विक्लित्तिनिर्वृत्तिं कः करोतीति पृष्टे देवदत्तो विक्लेदयति पचतीत्याद्येकार्थं शब्दैः प्रतिवचनादित्याह—**विक्लित्तिनिर्वृत्तिमिति,** पाकनिर्वृत्तिमित्यर्थः । **यदा चौदन इति,** ओदनस्य प्रसिद्धत्वेनाव्याख्येयत्वादनूद्यत्वमेव, तथा च किमोदनं भुनक्ति पचति वेति ओदने विशेषक्रियासंदेहे समुत्पन्ने न भुनक्ति, किन्तु पचतीति विधीयत इति भावः । तस्यापि पचने पाकं करोतीति पूर्ववद्व्याख्यानमित्याह—**तस्यैवेति** । पूर्वोक्तमेव दर्शयति—**अनभिहित इति,** यदेवोदनं पचतीत्यादिपूर्वोदितरीतिर्बोध्या । पाकस्य निर्वृत्तिं करोतीत्यत्र तिप्प्रत्ययार्थः कर्त्ता देवदत्तादिः, तन्निष्ठश्च कर्तृत्वमधिश्रयणोदकासेचनतण्डुलावपनैधोऽपकर्षणादिरूपं विशिष्टं तत्कुर्वन् देवदत्तः करोति दर्शयति—**देवदत्तस्येति,** सम्भवनं—ग्रहणम्, धारणं—स्थिरत्वादा क्रियासमाप्तेस्तण्डुलानां धारणमेतत् क्रियां कुर्वती स्थाली पचतीत्युच्यते, आदिना ज्वलनक्रियादेर्ग्रहणं तत्कुर्वन्ति काष्ठानि पचन्तीत्युच्यत इति भावः । स्थाल्यादीनां सामान्यकारकत्वं देवदत्तगतविशिष्टव्यापारो न कारकान्तरप्रयुक्तः स्थाल्यादयस्तु कर्त्रा सम्भावितक्रिया नियुज्यन्ते, नियुक्ताश्च व्याप्रियन्ते न तु प्रागित्याशयेनाह—**इत्यादिनेति** । देवदत्तः पचति पाकं करोति निर्वर्त्तयति ओदनस्य पाकं करोति स्थाली पचति काष्ठानि पचन्तीत्यादिप्रयोगे एक एव पाकरूपोऽर्थो व्याख्यायते न हि तत्र कश्चिदस्ति विशेष इति दर्शयति—**इत्येवमादिभिरिति** । एकस्यैवार्थस्यानेकधा व्याख्याने निदर्शनमाह—**यथा वृद्धिरादैजिति,** वृद्धिरिति संज्ञा आकारस्यैचश्चेति वृद्धिसंज्ञा विधीयतेऽप्रतीतत्वात्, वृद्धिशब्देनाकारो ऐच्च विज्ञेयाविति आत् ऐच्च विधीयेतेऽप्रतीतत्वादिति यथैकस्य व्याख्यानभेदः प्रतीताप्रतीतत्वापेक्षया भवति तथात्रापीति भावः । एकस्यैव पाकादेरेकदेव

---

१ सि. क्ष. व्यावृत्त्येन ।

**पठितव्या 'शक्तेर्वा सर्वशक्तेर्वा, स्वार्थेनैव प्रकल्पिता। नाप्रधानेन नियता क्रियादिपरिकल्पना' ॥ इति ।**

**एवमित्यादि,** इत्थं व्याख्यानप्रकारेण सर्वत्र पाकः साध्यरूपतायामेव व्यवस्थितः साधनमाकांक्षतीति तस्मिन्नेव काले कर्मत्वं शेषत्वं च भजते, तस्मायुक्तमविरुद्ध[त्व]म्, तादर्थ्यात्–स एव साध्यरूपोऽर्थः कर्मरूपापन्नः शेषरूपापन्नश्च साधनाधीननिर्वृत्तिक उच्यते, कस्मात्? शेषस्याकारकविवक्षणात्–सत्यमेव हि 'कारकाणामविवक्षा शेषः' (महाभा० २–३–५० सूत्रे) उच्यते, तस्मादविरुद्धा क्रियादिपरिकल्पना अर्थशक्तिविषयैव, न शब्दोत्थापिता, अस्मादुद्ग्राहानुरूपोपसंहाराभावादसम्यक्प्रत्यपेक्षितस्वार्थं वचस्त्वदीयमेवमित्युपसंहारः, तस्माच्छब्दस्याप्रधानत्वादवस्थितमर्थमनुवर्त्तमानस्योपसर्जनत्वात् कुतोऽस्य कल्पनाशक्तिः? नास्तीत्यर्थः, अत इति, उक्तन्यायादित्थं कारिका पठितव्या 'शक्तेर्वा सर्वशक्तेर्वा' इत्यादि ।

**विशेषाः शक्तय एवोपसर्जनीभूतसामान्याः, तदर्थो हि शब्दप्रयोगः, यथार्थाभिधानश्च शब्द (त० भा० १०–३५) इत्यस्मन्मतम्, सर्वशक्तेर्वा उक्तवदेकस्यैवार्थस्याविरुद्धशक्तिविशेषस्यानेकशक्त्यात्मकस्य वा स्वार्थेनैव प्रकल्पिता न शब्देनाप्रधानेन नियता-व्यवस्थिता क्रियाकर्मशेषकर्त्रादिपरिकल्पना, अभिजल्पशब्दार्थत्वमपि स्वदर्शनरागेणैवोक्तं नोपपत्त्या, अभिजल्पगत्यर्थाभावात् स च शब्दोऽभिजल्पत्वमागतो वाच्यतां यायात् सोऽयमित्यभिसम्बन्धात् शब्दस्वार्थेन सहैकीकरणात्, न च तत्, शब्दस्यैवार्थत्वात्, न हि कश्चित् शब्दादर्थस्य पृथगसिद्धौ करोत्यैक्यमनयोरभेदोपचारसम्बन्धेन ।**

**(विशेषा इति)** विशेषाः शक्तय एवोपसर्जनीभूतसामान्याः, तदर्थो हि शब्दप्रयोगः -तस्य विवक्षितत्वात् यथार्थाभिधानश्च शब्दः (तत्त्वार्थ० अ० १ सू० भा० ३५) इत्यस्मन्मतमित्युभयनियमनयदृष्ट्या,

कर्मत्वं शेषत्वं च न कार्याविरोध इति निरूपयति-**एव सर्वत्रेति** । एतदेव व्याचष्टे–**इत्थमिति,** प्रोक्तोदाहरणेषु सर्वत्र पाकः साध्यरूपतायामेव सन् साधनमाकाङ्क्षति, यतः पाक इत्येकस्मिन् पदे धर्मद्वययोगो न विरुद्धः, दृष्टं हि पश्य मृगो धावतीत्यादौ धावतीति कर्त्रपेक्षया साध्यरूपाया अपि सगुणक्रियाया दर्शनापेक्षया कर्मत्वं सिद्धधर्मत्वम्, अत एकस्यैव पाकस्य साध्यरूपताकाल एव कर्मत्वं पाकं निर्वर्तयतीति शेषत्वेन पाकस्य निर्वृत्तिं करोतीति सम्भवतीति भावः । **तादर्थ्यादिति,** एकार्थत्वात् सर्वप्रयोगाणामित्यर्थः । एकार्थत्वमेवादर्शयति–**स एवेति,** य एवार्थः कर्मरूपतापन्नश्शेषरूपतापन्नश्च स एव साधनाधीनजन्मत्वात् साध्यरूपतापन्नश्चेत्यर्थः । हेतुमाह–**शेषस्येति,** कारकविवक्षाऽभाव एव शेषत्वादित्यर्थः । महाभाष्यवचनमाह-**कारकाणामिति,** अविवक्षाया एव शेषत्वोक्त्या शेषत्वदशायामपि कारकत्वमस्तीति गम्यतेऽत एकदा कर्मत्वशेषत्वयोरैक्ये न विरोध इति भावः । अविरोधादेव च न शब्दशक्तिमहिम्नैव क्रियादिपरिकल्पना, अपि त्वर्थशक्तिनिबन्धनैवेति त्वद्वचनादेव सिद्धमिति निरूपयति–**तस्मादविरुद्धेति** । यथाप्रतिज्ञमुपसंहाराभावात्त्वदीयं वचनजातं सम्यक्तया प्रत्यवेक्ष्य प्रयुक्तं न भवतीत्याचष्टे–**अस्मादिति** । एवञ्च न शब्दस्य प्रधानता, किन्त्वर्थनिरूपितोपसर्जनतैव नातः शब्दैरेव कल्पिताः शक्तयः, इत्थञ्च भवदुक्तकारिका परिवर्त्त्यैवं पठनीयेत्याह–**तस्माच्छब्दस्येति** । कारिकां व्याचष्टे–**विशेषा इति** । शक्तेरिति पक्षं उभयनियमनयानुसारेणैव प्ररूपयति–**विशेषाः शक्तय एवेति,** उपसर्जनीकृतसामान्याः पुंस्त्र्यादिलक्षणशक्त्यात्मका विशेषा एव वक्तुर्विवक्षितत्वात् तद्बोधेच्छयैव शब्दप्रयोगाच्च प्रधानभूता इति भावः । सर्वशक्तेर्वेति पक्षो वादपरमेश्वरमतमनुसृत्याऽऽख्याति–**सर्वशक्तेर्वेतीति,** एकस्यार्थस्याविरुद्धानन्तशक्तिमत्त्वेन क्रियाकर्मशेषकर्त्रादिपरिकल्पना शब्दवाच्यार्थेनैव प्रकल्पिता

सर्वशक्तेर्वेति वादपरमेश्वरमतेन, उक्तवदेकस्यैवार्थस्याविरुद्धशक्तिविशेषस्यानेकशक्त्यात्मकस्य वा स्वार्थेनैव प्रकल्पिता, न शब्देनाप्रधानेन नियता–व्यवस्थिता क्रियाकर्मशेषकर्त्रादिपरिकल्पना, अभिजल्पशब्दार्थत्वमित्यादि, यदपि च त्वया परिकल्पितमभिजल्पः शब्दार्थ इति तदपि स्व[दर्श]नरागेणैव–स्वदृष्टिपरितुष्टयैवोक्तं नोपपत्त्या, कस्मात्? अभिजल्पगत्यर्थाभावात्–अर्थगतिरेव शब्दगतिरिति वक्ष्यते, स च शब्दोऽभिजल्पत्वमागतो वाच्यतां यायात्–आत्मानमेवार्थरूपापन्नं ब्रूयात् सम्भाव्येतोभयोरुपपत्त्येति, अत आह–सोऽयमित्यभिसम्बन्धात् शब्दस्यार्थेन सहैकीकरणात्, अस्मादेव त्वद्वचनात्, न च तत्–यदभिजल्पत्वमागतो वाच्यतां यातीति, कस्मात्? शब्दस्यैवार्थत्वात्तेव, तदसम्भवं दर्शयति–न हि कश्चिदित्यादि यावत्सम्बन्धेनेति, येन सहैकीक्रियतेऽर्थेन शब्दस्वरूपं स मुख्योऽर्थः, य एकीक्रियते सोऽप्रधान इति शब्दादर्थस्य पृथक् सिद्धौ क्रियैक्यमनयोः, तत्तु नास्ति त्वन्मतेनार्थाभावात्, सम्बन्धस्यापि च द्विष्ठत्वात् पृथगर्थसिद्धिः, इतरथा सम्बन्धाभावात्।

**द्रव्यभवनोपसर्जनत्वादमूर्त्तस्य मूर्त्तलक्षणविशेषात्तस्य प्राधान्यमिति स्थिते बाह्ये येन येन विशेषेण भूयते तदुपसर्जनं तन्नाम बाह्यम्, तद्वशप्रवृत्तित्वात्, भृत्यवत्, नाम वचनादिविशेषवशम्, यथार्थाभिधानशब्दत्वात्, तथाऽऽचार्यसिद्धसेन आह–'यत्र ह्यर्थो वाचं व्यभिचरति नाभिधानं तत्' ( ) इति, व्याख्यातारोऽपि प्रस्थिता नामस्थापनाद्रव्यभिन्नलिङ्गवाच्येष्टाकरणाद्भावयुक्तवाची शब्द इति।**

( **द्रव्येति** ) [1][द्रव्यभवनं विशेषस्य] उपसर्जनं तद्भावात्–द्रव्यभवनोपसर्जनत्वात्, उपसर्जन-

न शब्देन, अप्रधानत्वादिति भावार्थः। अभिजल्पोऽपि न शब्दार्थो भवितुमर्हति, उपपत्त्यभावादित्याह–**यदपि चेति**। शब्देनार्थो गम्यत इति शब्दस्यार्थो विषयो विषयी च शब्दो विषयविषयि[भाव]परतन्त्रत्वाद्याऽर्थस्य गतिः सैव शब्दस्यापि, न ततः पृथक् स्वतन्त्रा काचनास्ति गतिरित्यग्रे वक्ष्यतेऽस्मन्मतेन, त्वन्मतेनाभिजल्पविषयीभूतस्यार्थस्यैवाभावादभिजल्पस्य कुतः शब्दार्थत्वमित्याह–**अभिजल्पगतीति**। शब्दोच्चारणात्पूर्वं योऽयं कम्बुग्रीवादिमानर्थः स घटो योऽयं घटः स कम्बुग्रीवादिमानर्थ इत्येवं तादात्म्याध्यासमभ्युपगतः शब्दोऽर्थप्रत्ययं विदध्यात्, यतो हि सोऽयमित्यभिसम्बन्धात् शब्दस्यार्थेनैकीकरणं क्रियत इत्येतद्द्वयं यदा सम्भाव्येत तदा स्यात्, सम्भावनैव न सम्भवतीति निरूपयति–**स चेति**। कथं सम्भावनं नास्तीत्यत्राह–**न च तदिति,** तदेकीकरणं न च सम्भवति, अभिजल्पत्वमागतो वा वाच्यतां न यातीति भावः। **अथवा** सोऽयमित्यत्र तच्छब्दवाच्योऽर्थ एवासम्भवीति भावः। हेतुमाह–**शब्दस्यैवेति,** आन्तरो विज्ञानलक्षणः शब्दात्मा श्रुत्यन्तरस्य बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुरिति शब्दस्यैवान्तरस्य बाह्यशब्दार्थतास्वीकारादिति वाच्यस्यार्थस्यासम्भव इति भावः। एकीकरणमपि न सम्भवतीत्याह–**न हि कश्चिदिति,** इदंशब्दवाच्ये शब्दे तच्छब्दवाच्यस्यार्थस्याध्यासः क्रियत इति यस्यैकीकरणं स मुख्योऽर्थः, शब्देऽध्यासाच्च शब्दोऽप्रधानमित्येवं प्रधानाप्रधानरूपवस्तुद्वयसद्भाव एवैकीकरणं भवेत्, न त्वर्थस्याभावे तद्युज्यत इति भावः। शब्दार्थयोस्तादात्म्यमभ्युपगम्यते भवता, तादात्म्यञ्च सम्बन्धः सम्बन्धस्य च द्विष्ठत्वनियमादपि शब्दार्थयोः पार्थक्यं मन्तव्यमित्याह–**सम्बन्धस्यापीति**। अथ विशेषप्राधान्यं निरूपयति–**द्रव्यभवनेति**। व्याचष्टे–**द्रव्यभवनमिति,** द्रव्यलक्षणं भवनं हि विशेषस्योपसर्जनं भवनात्मकत्वादमूर्तं मूर्तस्य विशेषस्यात्यन्तापूर्वस्यात-

१ सि. क्ष. छा. डे. स्वेनरागेणैव०। २ सि. क्ष. °त्व०। ३ अत्र क्रियानेशोऽस्मदुपलब्धासु प्रतिषु सर्वासु त्रुटित इवा भासते।

मस्यात्यन्तापूर्वस्य मूर्त्तस्यामूर्त्तलक्षणं भवनं विशेषोऽमूर्त्तस्य मूर्त्तलक्षणम, तस्मात्तस्य विशेषस्य प्राधान्यमिति स्थितमेतत्, इति स्थिते विशेषप्राधान्ये इत्थमान्तरनाम्नां प्रयोगार्हे विशेषप्राधान्यं व्याख्यातम्, प्रयुज्यमाननाम्न्यपि बाह्ये येन येन विशेषेण भूयते—यो यो विशेषो भवति तदुपसर्जनम्—तस्यैव विशेषस्योपसर्जनम्, तन्नाम बाह्यम, अर्थगत्यर्थ[त्व]াच्छब्दप्रयोगस्य, अर्थपरतंत्रो हि शब्दः प्रयुज्यते, तदेव हेतुत्वेनाह- तद्वशप्रवृत्तित्वादिति, भृत्यवदिति दृष्टान्तः, भृत्यो हि स्वामिवशप्रवृत्तिः स्वामिपरतंत्र उपसर्जनं तथा शब्द उपसर्जनमर्थः प्रधानम्, यत्र प्रयुज्यते तद्वशवर्त्ती शब्दः, विशेषोऽर्थ एव प्रधानमिति, तद्दर्शयति—नाम वचनादिविशेषवशम्—वचनं संख्या, आदिग्रहणात् लिङ्गकालकारकपुरुषोपग्रहा गृह्यन्ते विशेषाः, तद्वशं नाम, यथार्थ[ाभिधान]शब्दत्वादिति शब्दलक्षणं स्वसमयसिद्धं हेतुमाह, यो योऽर्थो यथार्थं, शब्दस्तदभिधत्ते, यथा लिङ्गवचनकालकारकपुरुषोपग्रहं यथाऽभिधत्ते तथाऽऽचार्यसिद्धसेन आह—'यत्र ह्यर्थो वाचं व्यभिचरति नाभिधान तत्' (तत्त्वार्थसूत्र ३५ व्याख्यायामुद्धृतम) इति, तथा व्याख्यातारोऽपि प्रस्थिताः—नामस्थापनाद्रव्यभिन्नलिङ्गवाच्येष्टाकरणाद्भावयुक्तवाची शब्द इति ।

अस्यार्थस्य प्रख्यापनमुदाहरणम्—

**वृक्ष इत्यत्र पञ्चकः प्रातिपदिकार्थश्चतुर्थस्त्रिको वा, तथाऽऽख्यातस्यापि, एवमपि वक्तुर्विवक्षापूर्वकत्वात् शब्दप्रवृत्तेः सामस्त्यावगमं परित्यज्य विशेषमेकमेव ब्रूते शब्दः,**

उपसर्जन विशेषश्च प्रधानमिति भाव प्रतिभासते। अत्र वैयाकरणाना वैखरीरूप वर्णावयवान सक्रम शब्द परिहरन्त अक्रमान्तरशब्दरूपतामापद्यमानोऽन्त करणे समवतिष्ठते, पुनरभिधित्सेच्छाया तथा तत आविर्भवन सावयव- सक्रम आगमयति, तत्र प्रयोक्ता स्वान्तस्थमक्रमं शब्द बहि प्रकाशयन सक्रम करोतीति बुद्धिस्थोऽक्रम सक्रमस्य निमित्तम्, श्रोता श्रुतेन सक्रमेण आन्तरमक्रमं पश्चाद्बुध्यते तत्र सक्रमो निमित्तमक्रमस्येति मतम्, तत्र विशेषस्य प्राधान्यं साधितं आन्तरनाम्ना अक्रमभूताना प्रयोगार्हाणा सक्रम प्रति विशेषत्वमेव सक्रमं प्रयुज्यमानमक्रमस्य विशेष, सोऽपि श्रोतरि अक्रम जनयतीति सोऽक्रम सक्रमस्य विशेष इत्याह-**इति स्थित इति,** आन्तरनाम्ना अक्रमभूतानां शब्दानामन्तःकरणवर्तिनामित्यर्थ । वक्त्रा प्रयुज्यमानं नामाप्यर्थगत्यर्थत्वादर्थरूपविशेषापेक्षयोपसर्जनमित्याह-**प्रयुज्यमाननाम्न्यपीति** । बाह्यशब्दस्योपसर्जनत्वे हेतुमाह-**तद्वशेति,** अर्थाधीनप्रवृत्तित्वादित्यर्थः । यथा सेवक स्वामिवश प्रवर्तते तथा नामभृत्य वश शब्दो लिङ्गसंख्याकारककालपुरुषोपग्रहवश इत्याह-**नाम वचनादीति,** वचनं भेदाभेदलक्षणा संख्या, सर्व एवार्थ एक द्वौ बहव इति संख्यायुक्तो व्यवह्रियते द्वित्वादिसंख्यया भेदमेकत्वसंख्यया चाभेदमाश्रये प्रतिभासते, स्तनकेशादिमत्त्वादिरूप लिङ्गं संस्त्यानप्रसवस्थितिरूपं वा, क्रियानिर्वर्तकं कारकं क्रियान्वयि वा, स्थित्युत्पत्तिविनाशनिमित्त कालो वर्तमानादिरूप, उत्तममध्यमप्रथमरूप पुरुष आत्मनेपदपरस्मैपदव्यञ्जय क्रियाया साधनस्य वा विशेष उपग्रह इति ध्येयम् । **यथार्थाभिधानशब्दत्वादिति,** स्वसमयसिद्ध–शब्दनयसिद्धमित्यर्थ, भावघटाद्यर्थाभिधायिशब्दत्वादिति हेत्वर्थ । तमेवार्थमाह-**यो योऽर्थ इति । यत्र ह्यर्थ इति** वस्तुनो वैशिष्ट्यं शब्दकृतमर्थकृतम, तत्र शब्दनयोऽर्थकृतवस्तुविशेषनिराकरणेन शब्दकृत वस्तुविशेषमेवाभ्युपैति, यद्यर्थप्रयुक्त एव विशेषो भवेत्तर्हि घटवर्तमानकाले घट एव निर्विशेषो भवेत्र प्राप्नुयात् कारकभेदात्, तथा च कारककृतो घटं पश्यतीत्यादिव्यवहारो व्युच्छिद्येत, असौ च शब्दनय समानलिङ्गादिशब्दसमुद्भावितमेव वस्त्वभ्युपैति, न तु पुष्यस्तारा नक्षत्र वा, जम्बूनिम्बकदम्बा वनं स पचति त्वं पचसि अहं पचामि इत्यादि विरुद्धलिङ्गसंख्यापुरुषादिसमुद्भावितार्थविशेषम्, घट पट कुम्भ इत्याद्यविरुद्धविशेषं हि वस्त्वभ्युपेतुं युक्तम्, यत्र ह्यर्थो वाचं व्यभिचरति न हि तदभिधान भवितुमर्हतीति भाव । यत्र ह्यर्थ इति वचनस्य व्याख्यातृणामुक्तिं दर्शयति–**तथा व्याख्यातारोऽपीति,** वर्तमान भावघटादिकमेवाश्रयति शब्दनयो न नामस्थापनाद्रव्याणि भावेऽपि भिन्नलिङ्गवचनादीनि, अभिलषितार्थाविधानादिति भाव । अत्रैवोदाहरणमादर्शयति–**वृक्ष इत्यत्रेति ।**

१ सि. क्ष. डे. °विशेषो° ।

**एकद्विबहुवचनेषु प्राप्तेषु विवक्षितसंख्याभिधाय्येकवचनं विधीयते, एकस्य वचनमेकवचनम्, उच्यतेऽनेनार्थः, कर्मणि षष्ठी, तथा च लोके वृक्षशब्दप्रयोगे सामान्यमुपसर्जनं विशेषः प्रधानमिति गम्यते, एकार्थगतेर्द्ध्यादिनिवृत्तेः, इतरथा सामान्यप्राधान्यात् सर्वगतिः संदेहो वा स्यात्, वृक्षे प्रातिपदिक...............भवति ।**

**वृक्ष इत्यत्रेत्यादि,** सभावनम्, स्वार्थलिङ्गद्रव्यसंख्याकर्मादिकारकाणीति पञ्चकः प्रातिपदिकार्थश्चतुर्थस्त्रिको वा संख्याद्रव्यान्तः, तथाऽऽख्यातस्यापि, सर्वस्य नामत्वाविशेषात्, नमयत्यर्थं गमयतीत्यादिनिरुक्तेः, यद्यपि पञ्चकं सम्भवति तथापि तु वक्तुर्विवक्षितपूर्विका शब्दप्रवृत्तिरिति सामस्त्यावगमं परित्यज्य प्रतिपिपादयिषितं विशेषमेकमेव ब्रूते शब्दः, एकद्विबहुवचनेषु प्राप्तेषु विवक्षितसंख्याभिधाय्येकवचनं विधीयते, त्रयाणामन्यतमदेव, नेतरे, वृक्षस्यैकत्वादेकवचनं व्यक्तिकृतं न सर्ववृक्षगतसामान्य[कृत]म् तेनाप्रयोजनात्, एवं द्विबहुवचनयोरपि, एकवचनमिति समासद्वयसम्भवात् सन्देहेऽवधारयति, किमेकस्य वचनमेकवचनम्? एकञ्च तद्वचनञ्च तदेकवचनम्? इति वा, एकस्य वचनमेकवचनमुच्यतेऽनेनार्थः, कर्मणि षष्ठीति शब्दव्युत्पादने[न], तथा चेत्यादि, एवञ्च कृत्वा लोके वृक्षशब्दप्रयोगे सामान्यमुपसर्जनं विशेषः प्रधानमिति गम्यते, कुतः? एकार्थगतेः द्व्यादिनिवृत्तेः, इतरथा सामान्यप्राधान्यात् सर्वगतिः सन्देहो वा स्यात्, युक्ता तु विशेषगतिः, तद्वशवर्तित्वात्सामान्यः, तद्भावना गतार्था वृक्षे प्रातिपदिकेत्यादि यावत् भवतीति ।

अत्राह–

**ननु विशेषाणामप्यस्ववशत्वानवस्थानात् सामान्यभवनप्राधान्यमेव, दृश्यते हि**

भावनापूर्वकं व्याचष्टे–**सभावनमिति । स्वार्थेत्यादि,** स्वार्थः सामान्यं शब्दो वा, द्रव्यं–व्यक्तिः, लिङ्गं स्त्र्यादि, संख्या–एकत्वादि, कारकं–कर्मादि इत्यमी पञ्च वृक्षादिप्रातिपदिकस्यार्थः, वृक्षेत्युक्ते वृक्षत्वसामान्यस्य वृक्षव्यक्तेः लिङ्गसंख्याकारकसामान्यस्य चानुभवात्, तदेवं सामान्यतो ज्ञाते विशेषजिज्ञासोदयात् 'अजाद्यतष्टाप्', 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्', 'कर्मणि द्वितीये'त्यादिसूत्रैर्विधीयमानाः टाबादयो विशिष्टलिङ्गादिद्योतका भवन्तीति पञ्चकं प्रातिपदिकार्थ इति पक्षः । स्वार्थलिङ्गद्रव्यसंख्याचतुष्कं स्वार्थलिङ्गद्रव्यत्रिकं वा प्रातिपदिकार्थ इति पक्षान्तरे, तदेवाह–**चतुर्थस्त्रिको वेति,** संख्यान्तश्चतुर्थः द्रव्यान्तः त्रिको वेत्यर्थः । एवं धातोरपि पञ्च चतुर्थस्त्रिको वाऽर्थः, नामत्वादित्याह–**तथाऽऽख्यातस्यापीति ।** कथं धातोर्नामत्वमित्यत्राह–**नमयतीति ।** सर्वत्र नामपदात् पञ्चकस्य सकलस्य बोधो न भवतीत्याह–**यद्यपीति,** एवञ्च वक्त्रिच्छाविषयप्रयुक्तप्रवृत्तिविषयशब्देन वृक्षाख्येन एक एव वृक्षत्वाविशिष्टो वृक्षः–पुमान् बोध्यते न तु सकलस्वार्थद्रव्यलिङ्गसंख्याकारकाणीति भावः । वृक्षस्यैकत्वं न सामान्यगतं तस्य तत्र बोधने प्रयोजनाभावात् किन्तु वृक्षव्यक्तिगतमेवेत्याह–**वृक्षस्यैकत्वादिति,** तथा चैकस्य वचनमेकवचनमिति षष्ठीसमासः, एकत्वविषयकबोधजनकत्वं तदर्थः, तच्च एकञ्च तद्वचनञ्चेति कर्मधारयेण न लभ्यते, एकाभिन्नवचनस्यैव तेन लाभात्, द्व्यादीनामपि संख्यानामेकत्वादिति भावः । तदेवाह–**एकवचनमितीति ।** तथा च वृक्ष इत्युक्ते वृक्षगतैकत्वबोधात् सामान्यभूतो वृक्षः उपसर्जनं विशेषः एकत्वं प्रधानम्, द्व्यादिसंख्यानिवर्तकत्वात्, वृक्षसामान्यस्य प्रधानत्वे तु निखिलवृक्षावगतिः स्यादविशेषात्, एको वृक्षो द्व्यादिर्वा वृक्षोऽनेन विवक्षित इति सन्देह एव स्यात्, न हि संशयाधानाय शब्दः प्रयुज्यते, किन्तु निश्चायकत्वेनैव तस्य साफल्यात्, एवञ्च सामान्यमुपसर्जनमेवैषितव्यमिति निरूपयति–**एवञ्च कृत्वेति ।** ननु विशेषस्य सामान्यव्यतिरेकेण सत्त्वासम्भवात् परतन्त्रत्वेन कथं प्रधानत्वम्, किन्तु सामान्यमेव स्ववशवर्तित्वेन स्वतन्त्रत्वात् प्रधानमिति शङ्कते–**ननु विशेषाणामपीति ।** व्याचष्टे–

**द्विवचनादिः यथैकवचनं द्विवचनार्थे नक्षत्रं पुनर्वसू पुष्यः तारा..................हेतुः कर्म, सर्वत्राप्येवमेव च विशेषानवस्थानाद्विशेषो विशेष एव न भवितुमर्हति, ततोऽसौ नैव स्यात्, अविशिष्टत्वात्, अस्ववृत्तित्वात्, अस्ववशत्वात् खपुष्पवत् ।**

**ननु विशेषाणामपीत्यादि,** तेऽपि हि विशेषाः परतंत्रा एव, ततोऽस्ववशत्वानवस्थानात् सामान्यभवन[प्रा]धान्यमेव, न हि वृक्षवदेकवचनमेव दृश्यते सर्वत्र, यदि स्यात् स्याद्विशेषप्राधान्यम्, तस्माद्विशेषव्यभिचारात् सामान्य[प्रा]धान्यमेव न्याय्यम्, मा मंस्था विशेषप्राधान्याव्यभिचार इति, दृश्यते हि[द्वि]वचनादिः, तस्माद्विशेषानवस्थानाद्वचनलिङ्गकारकपुरुषोपग्रहादिविशेषाणां स्वस्थितिव्यतिक्रमस्वसमानाधिकरणविशेषाद्यागतिर्लोके दृश्यते, तदुदाहरणानि-यथैकवचनं द्विवचनार्थे नक्षत्रं पुनर्वसू इत्यादीन्युत्तानार्थानि यावद्धेतुः कर्मेति, सर्वत्राप्येवमेव च-यथा[पाश्चा]त्येषूदाहृतमभेदिलिङ्गविशेषव्यभिचारे तथा प्राक्तनेष्वपि वचनादिविशेषव्यभिचारे तद्भावनातो विशेषानवस्थानात् विशेषो विशेष एव न भवितुमर्हति, सामान्याघ्रातरूपत्वात् विशेषात्मानवस्थानात्, ततः किं ? ततोऽसौ नैव स्यात्—भवनमेव नानुभवेत्, अविशिष्टत्वात्, अनन्तरोक्तादविशिष्टत्वमनवस्थानाद्भावितम्, वचनानवस्थानं अस्ववृत्तित्वात् अस्ववशत्वात् भावितमेव, खपुष्पवदिति सर्वत्र दृष्टान्तः, पृथक् पृथग्वा विशेषाभावे हेतवस्त्रयोऽपि खपुष्पदृष्टान्ताः ।

**ततश्च सामान्यमपि नैव, प्रवर्त्तकाभावात्, किमर्थं न प्रवर्त्तयति विशेषः, स्ववशत्वात्, स्ववशो हि विशेषः, विविक्तवृत्तित्वात्, मुक्तवत्, असदेव वा प्रवर्त्तकाभावात् तत् खपुष्पवत्, अर्थान्तराभावात् भवद्भवनाभ्यां केनचिदबाध्यत्वात्, अथ सोऽप्यस्ति**

**तेऽपि हीति,** सत्त्याद्याकृत्यादिविशेषा इत्यर्थः । **अस्ववशत्वेति,** विशेषा न स्ववशा अत एव सर्वत्रावस्थानरहिता अत एव च परतन्त्रा, अस्ववशत्वेन सर्वत्रावस्थानरहिता इति वाऽर्थः, यथा वृक्षा इत्यादावेकवचनस्यानवस्थानं दृश्यते, एवं द्विवचनादीनामपीति भावः । अनवस्थानमेव दर्शयति-**न हि वृक्षवदिति,** प्रकृत्यर्थो यथा न व्यभिचरति सर्ववचनेषु न तथैकवचनादीनीति भावः । क्व विशेषो व्यभिचरतीत्यत्राह-**दृश्यते हीति,** तत्रैकवचनस्य व्यभिचारः स्वस्थितिव्यतिक्रमात्, यथा नक्षत्रं पुनर्वसू इति, अत्र पुनर्वसू द्वे नक्षत्रे तस्मात् नक्षत्रं पुनर्वसू इति स्यात् चैव लोके प्रयुज्यते एवमेकत्वलक्षणविशेषास्थित्यपगमेऽप्येकवचनेन सामानाधिकरण्यं द्विवचनान्तपुनर्वसुशब्दे नास्तीति एकवचनव्यभिचारः, द्विवचनार्थमेकवचनप्रयोगात्, एवं पुष्यस्तारेत्यादौ लिङ्गव्यभिचारः, पर्वतमधिवसतीत्यादौ कारकव्यभिचार इत्येवमगतिर्लोके दृष्टेति भावः । उदाहरणानि दर्शयति-**यथैकवचनमिति** । पूर्वोदितलिङ्गवचनादिव्यभिचारवदेवान्यत्रापि विशेषस्यानवस्थानाद्विशेषो विशेष एव न भवेदित्याह-**सर्वत्रापीति** । **सामान्येति** सामान्यस्याव्यभिचारित्वेन प्राधान्यात्तेन विशेषो गौणीकृत इति सामान्याघ्रातरूपता तस्येति भावः । एवञ्च विशेषो नैव भवेदिति समर्थयति-**ततोऽसाविति** । अविशिष्टत्वं कथं विशेषस्येत्यत्राह-**अनन्तरोक्तेति** । अनवस्थानत्वे हेतुमाह-**अस्ववृत्तित्वादिति**-स्वस्थितिव्यतिक्रमादित्यर्थः । अत्र हेतुः-**अस्ववशत्वादिति,** द्विवचनार्थमप्येकवचनप्रयोगदर्शनात् द्विवचनं न स्ववशे वर्त्तत इति भावः । अथवाऽविशिष्टत्वास्ववृत्तित्वास्ववशत्वानि साधनानि विशेषो न भवेदित्यस्यैव साध्यस्येत्याह-**पृथक् पृथग्वेति।** तदेवं विशेषाभावे सिद्धे निर्विशेषस्य सामान्यस्याभावात् सामान्यमपि न भवेदित्याह-**ततश्चेति** । व्याचष्टे-**ततश्चेति,** भवनस्य

१ दृषयाद्वच०, अत्रापि कियानंशस्त्रुटित इति सम्भाव्यते, प्रतिषु सम्बन्धानुपलब्धेः । २ सि. क्ष. छा. यथात्यमुदा० । ३ छा. सामान्यरूपत्वात् ।

**भेदेनार्थः शब्दाद्यस्य तद्रूपमनेकं सदेकं क्रियते न तर्हि शब्द एव शब्दार्थोऽभिजल्पत्व-मागतो वाच्यः, किं तर्हि ? विशिष्टा शक्तिः शब्दादन्या सर्वशक्तिर्वाऽर्थोऽन्यः ।**

**ततश्चेत्यादि,** ततश्च विशेषाभावात् सामान्यमपि नैव, स्यादिति वर्त्तते, कस्मात् ? प्रवर्त्तकाभावात्, सामान्यस्य हि प्रकृत्यर्थस्य भवनादेः क्रियात्मनः प्रवर्त्तकः प्रत्ययार्थः कर्त्ता स्याद्विशेषः, तदभावान्न प्रवर्त्तते सामान्यम्, किमर्थं न प्रवर्त्तयति विशेषः सामान्यमिति चेत्-स्ववशत्वात्-स्ववशो हि विशेषो नासावस्ववशः, कस्मात् ? विविक्तवृत्तित्वात्, किमिव ? मुक्तवत्-यथा मुक्तात्मानः कर्मपारतंत्र्यापेतत्वात् विविक्तवृत्तयो न किञ्चित् प्रवर्त्तयन्ति, न केनचित् प्रवर्त्त्यन्ते, किन्तु स्वयमेव वर्त्तन्ते तस्मादप्रवर्त्तक[ त्व ]-सामान्याद् दृष्टान्ताः, तद्वद्विशेषोऽप्रवर्त्तकः, असदेव वा प्रवर्त्तकाभावात् तत् सामान्यम्, खपुष्पवदिति, तच्चाचष्टे-अर्थान्तराभावात् भवद्भवनाभ्यां केनचिदबाध्यत्वात्, अर्थान्तरञ्च नास्ति विशेषात्, अर्थाभावे मा भूदेष दोष इति-अथ सोऽप्यस्ति भेदेनार्थः शब्दाद्यस्य तद्रूपमनेकं सदेकं क्रियते, किं ततः ? इदं भवति न तर्हि शब्द एव शब्दार्थोऽभिजल्पत्वमागतो वाच्यः, किं तर्हि ? विशिष्टा शक्तिः शब्दादन्या, सर्वशक्तिर्वाऽर्थोऽन्य इति प्राप्तम् ।

**तत एवेदमयुक्तं तं शब्दमभिजल्पं प्रचक्षते शब्दार्थ इति, स हि यथा शब्द-स्तथाऽर्थोऽभिसम्बन्धेनैकीक्रियमाणत्वात् पृथक् सिद्धः क्षीरोदकवत्, द्वयोरप्येकीकृतत्वे तुल्यत्वात्, अपि चार्थार्थमेवोक्तं प्राक् प्रत्याख्यत्वादभिजल्पार्थावयवत् शब्दनिरपेक्षा विव-**

हि भविता प्रवर्त्तको भवति, यदा तु भवनमेव प्रधानता गतं तदा भविता न प्रवर्त्तकस्तस्य स्यात्, अविशिष्टत्वादिभ्य इति प्रवर्त्तकाभावेन सामान्यस्य प्रवृत्त्यसम्भवेनाकिञ्चित्करत्वादसदेव सामान्यं स्यादिति भावः । **सामान्यस्येति** सामान्यं हि **भवनं प्रकृत्यर्थः** क्रिया, तस्य च प्रवर्त्तकः कर्त्ता भविता प्रत्ययार्थः विशेषः शक्तिरूपः शक्तिभिर्हि क्रिया भाव्यत इति कर्त्रादि-शक्तयः क्रियायाः प्रयोजिकाः, तथा च विशेषाभावे केन क्रिया भाव्येत तस्मात्तदभाव एव स्यादिति भावः । विशेषो यदि परतन्त्रः स्यात्तर्हि सामान्यं प्रवर्त्तयेत्, सोऽपि नास्तीत्याह-**स्ववशत्वादिति,** स्वाधीनो वर्त्तते विशेषः, न तु परेच्छा-यत्तवृत्तिर्येन सत्या परेच्छाया बलात् सामान्यं प्रवर्त्तयेत्, तथा च मुक्तपुरुषवत् स्ववशत्वान्न किञ्चिदपि प्रवर्त्तयतीति भावः । स्ववशत्वं कुत इत्यत्राह-**विविक्तवृत्तित्वादिति,** पृथक् वर्तित्वात् सामान्यानाश्रितत्वादिति भावः । दृष्टान्तं घटयति-**यथेति** । मुक्तात्मतुल्यो विशेषः कथं, चेतनाचेतनयोः साम्याभावादित्यत्राह-**अप्रवर्त्तकत्वेति** । ननु पूर्वमस्वरूपत्वमस्वव-शत्वमुक्तमिदानीं स्वतन्त्रत्वं स्ववशत्वं विशेषस्य कथमुच्यत इत्यत्राह-**असदेव वेति,** तदस्वतन्त्रादिभ्यो हेतुभ्यो विशेषो नास्त्येव ततश्च प्रवर्त्तकाभावात् सामान्यस्याप्यभावः न हि भवद्भवनाभ्यां सामान्यविशेषाभ्यामन्यत् किञ्चिदर्थान्तरं वर्त्तते यत् सामान्यं प्रवर्त्तयेदिति भावः । सामान्यं न केनचिद्बाध्यते, भवद्भवनरूपसामान्यविशेषयोरर्थान्तराभावात्, तस्मात् प्रवर्त्तकाभावात् सामान्यमसदेवेत्याशयेनाह-**अर्थान्तराभावेति** । यदि शब्दार्थयोरर्थान्तरभावमभ्युपगम्यते तदाऽऽह-**अथ सोऽप्यस्तीति,** भिन्नोऽर्थोऽस्ति परन्तु अध्यासादभेदः क्रियत इति भावः । एवं तर्हि सैवार्थव्यक्तिः शक्तिरूपा शब्दवाच्या भवेत्, न शब्द आन्तरोऽभिजल्परूपतामुपागत इत्याह-**न तर्हीति,** विशिष्टा शक्तिः शब्दादन्येति, अर्थस्य शक्तिर्नास्ति किन्तु शब्दस्यैवेति मतमुपदर्शितम्, सर्वशक्तिर्वेत्यर्थस्य सर्वशक्तिपक्षः प्रदर्शित इति । अस्तु तथैव को दोष इत्यत्राह-**तत एवेदमिति ।**

१ सि. क्ष. डे असदेव । २ सि. क्ष. डे उ. अर्थान्तराभावम० ।

**क्षाऽध्यारोपा शक्तिरिति, यदा चैवं तदाऽस्मन्मतं यथार्थाभिधानशब्दत्वमेव प्रतिपन्नमर्थस्य तत्त्वात्, योऽसौ शब्दः सोऽयं नार्थः, अर्थोऽर्थ एव, अस्मात् प्रत्यक्षनिर्देश्यादन्य एवासौ स इति परोक्षनिर्देश्यः. एवंविषय एव शब्दो न शब्दविषयः, किमुक्तं भवति तेनार्यते गम्यते शब्दस्य विषयः, विषयिणो विषयपरतंत्रत्वात् याऽर्थस्य गतिः शब्दस्यापि सैव, नात्मनः पृथक्–स्वतंत्रेति ।**

(**तत एवेति**) तत एवेदञ्चायुक्तं त्वया यथोच्यते–तं शब्दमभिजल्पं प्रचक्षते च शब्दार्थ इति, यस्मात् स यथा शब्दस्तथाऽर्थोऽभिसम्बन्धेनैकीक्रियमाणत्वात् पृथक् सिद्धः, किमिव ? क्षीरोदकवत्, द्वयोरप्येकीकृतत्वे तुल्यत्वादिति साध्यसाधनधर्मानुगमप्रदर्शनम्, अपिचेत्यादि, अर्थार्थमेवोक्तं प्राक् प्रत्याय्यत्वात्, अभिजल्पार्थोर्थावयववदिति तदर्थस्मारणं गतार्थं यावदर्थोऽर्थ एवेत्यवधारणम्, यदा चैवमिति, उक्तक्रमेण पृथक्सिद्धौ प्राधान्ये चार्थस्य तदाऽस्मन्मतं यथार्थाभिधानशब्दत्वमेव प्रतिपन्नम्, अर्थस्य तत्त्वात्, तद्व्याचष्टे–योऽसौ शब्दः सोऽयं नार्थः[अर्थो] न भवति शब्दः, अर्थ एवार्थ इत्युक्तत्वादिति, अस्मादर्थ[ात्]प्रत्यक्षनिर्देश्यादन्य एवासौ स इति परोक्षनिर्देश्यो भेदेन, एवंविषय एव- अर्थविषय एव शब्दो न शब्दविषयः, अर्थो नाप्रधान इत्यर्थः, अर्यतेऽयं तेन शब्देनार्थः, किमुक्तं भवतीति, तेनार्यते–गम्यते ऋ गतौ तस्यार्थः शब्दस्य विषयः, विषयिणो विषयपरतंत्रत्वात् याऽर्थस्य गतिः शब्दस्यापि सैव, नात्मनः पृथक्–स्वतंत्रा, एवं व्याख्यातमर्थप्राधान्यं पार्थक्यञ्च ।

**एवञ्च कृत्वा योग्यशब्दनिबन्धना हि विवक्षाऽर्थमनपेक्ष्य सिद्धां तां तां शक्तिमध्यारोपयतीति स त्वदुक्तो ग्रन्थो युक्तोऽस्मिन् दर्शने योग्य एव शब्दोऽर्थस्य, न योग्यः, यः**

अध्यासरूपत्वमुपागतः शब्द एव शब्दस्य वाच्य इत्यभ्युपगमो न युज्यत इति व्याचष्टे–**यथोच्यत इति ।** शब्दार्थयोर्हि अनेकयोरेकीकरणात् नैकान्ततोऽभेदस्तयोर्भेदाभेदात्मकत्वात् क्षीरोदकवदुभावपि पृथक् पृथक् सिद्धौ, द्वयोरेकीकरणस्य तुल्यत्वादित्याह–**यस्मात् स इति** योऽर्थः स शब्दः यः शब्दः सोऽर्थ इति परस्परमेकीकरणाद्वावपि पृथक् सिद्धाविति भावः । शब्दस्यार्थेनैकीकरणं शब्दः, **अर्थस्य** शब्देनैकीकरणेऽर्थ इत्युभयोरेकीकरणं तुल्यत्वात् पृथक् सिद्धौ स-आर्थाविति सूचयति–**द्वयोरपीति ।** परयाग्यपरामर्शव्यतिरेकेण विवक्षामात्रस्यानुरूपार्थे श्रोतृ शक्त्याधायकत्वासम्भवादर्थगतशब्दनिरपेक्षेणैव वक्तरि शक्त्याधायकत्वाच्छ्रोतर्यपि वक्त्रभिप्रायार्थग्रहणप्रयतनवति प्रयोगतः शक्त्याधायकत्वादर्थार्थ एव शब्दप्रयोगो न शब्दार्थ इति पूर्वनिरूपितमर्थं स्मारयति–**अर्थार्थमेवोक्तमिति ।** तदेवमर्थस्य शब्दात् पृथक् सिद्धि प्राधान्यञ्च प्रोक्तक्रमेण सिद्ध्यति तदा तदभ्युपगमोऽस्मन्मतमेव यथार्थाभिधानं शब्द इत्यस्माभिः स्वीकृतत्वादित्याह–**उक्तक्रमेणेति** एकीकरणादिनेत्यर्थः । **अर्थस्य तत्त्वादिति, अर्थस्य स्वासाधारणरूपेण** सद्भावात्, न तु पररूपतापत्त्येति भावः । तदेवाह–**योऽसौ शब्द इति, अर्थे** शब्दाध्यारोपो **न भवति, असदृशत्वात्,** अर्थ एवार्थ न तु शब्दः, स इति परोक्षनिर्देश्याच्छब्दादयमिति प्रत्यक्षनिर्देश्योऽर्थोऽन्य **एवेति भावः ।** शब्दस्य वाच्योऽपि शब्दो न भवतीत्याह–**एवं विषय एवेति,** शब्दोऽर्थमेव विषयीकरोति वाच्यतया, न तु शब्दमतोऽर्थो नाप्रधान इति भावः । अन्वर्थत्वमर्थशब्दस्याचष्टे–**अर्यत इति** शब्देन योऽर्यते गम्यतेऽसावर्थः, यद्यर्थविषयशब्दो न स्यात्तर्हि शब्दजन्यप्रतिपत्तिविषयत्वाभावात्तस्यार्थत्वमेव न भवेदिति भावः । एवञ्चार्थमनुरुध्य शब्दप्रयोगात् शब्दोऽप्रधानमर्थविषयतंत्रत्वात् प्रधानानुयायित्वाद्गुणानामर्थ एव प्रधानं शब्दादन्यथेति निरूपयति–**विषयिण इति,** शब्दस्येत्यर्थः । **अर्थस्य** सर्वलिङ्गादिमत्त्वेऽपि तदनपेक्ष्य तत्तल्लिङ्गादियोग्यशब्दविवक्षानियमो यद्भवतोक्तः सोऽस्मिन् दर्शने घटत इत्याह–**एवञ्च कृत्वेति ।**

**कश्चित् क्रीडितमेवाऽस्त्विति प्रयुज्यते काकवाशितादिवदबुद्धिपूर्वो वाऽर्थविसंवादादेकीकर्त्तुमशक्यत्वात्, हिशब्दोऽपि च हेत्वर्थे, यस्माद्योग्यशक्ति..................मर्यादया वा, यदपि च स्वलक्षणव्याप्तिप्रदर्शनार्थं लोकगतशब्दार्थसंव्यवहारव्यवस्थापनार्थञ्चोक्तं श्लोकद्वयं तयोरपृथगात्मत्वे रूढेरव्यभिचारिणि। किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठते॥ लोकेऽर्थरूपतां शब्दः प्रतिपन्नः प्रवर्त्तते। शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया [ वाक्य० का० २ श्लो० १३१-१३२ ]॥ इति तदपि च अर्थस्यार्थरूपत्वं शब्दादापन्नमित्येतत्फलमेव।**

**एवञ्च कृत्वेत्यादि** गुणोत्कर्षमस्मन्मते दर्शयिष्यामः, योग्यशब्देत्यादि यावदध्यारोपयतीति, स त्वदुक्तो ग्रन्थो युक्तोऽस्मिन् दर्शने, तद्भावयति—योग्य एव शब्दः—पृथुबुध्नादिलक्षणस्यार्थस्य घटशब्दो न योग्यः—पटादिशब्दः, यः कश्चित् क्रीडितमेवास्त्वियति प्रयुज्यते काकवाशितादिवत अबुद्धिपूर्वो वा, कस्मात्? अर्थविसंवादात्—अर्थेन विसंवादोऽस्य, वाच्यवाचकसम्बन्धाभावः स चैकीकर्त्तुमशक्यत्वात् सम्बन्धयितुम्, हिशब्दोऽपि चेत्यादि, योग्यशब्दनिबन्धना हीत्यत्र हिशब्दो हेत्वर्थे, यस्माद्योग्यशक्तीत्यादि, तद्व्याख्या गतार्था यावत मर्यादया वेति, यदपि चेत्यादि, सोऽयमित्यभिसम्बन्धादिति स्वलक्षणमभिजल्पस्य तदस्मन्मतं समर्थयतीत्युक्तम, तदनन्तरं यत् स्वलक्षणव्याप्तिप्रदर्शनार्थं लोकगतशब्दार्थसंव्यवहारव्यवस्थापनार्थञ्चोक्तं तदपि चास्मन्मतमर्थस्यार्थरूपत्वं शब्दादापन्नमित्येतत्फलमेव, कतमत्तदिदं श्लोकद्वयं? तयोरपृथगात्मत्व इत्यादि।

**वयमत्र निश्चिनुमः तयोरपृथगात्मत्वं रूढेः लोकप्रतीतेः, अतस्य तदुपचारात्, पथिगमनवत्—यथा पन्थाः पाटलिपुत्रं गच्छतीति पथो गमनं पुरुषगत्यभेदोपचारात्, तद्भिनाऽभावाव्यर्थत्वात्तथोच्यते तथा शब्दार्थयोरव्यभिचारादिति, इतरेतरप्रधानोपसर्जनभावाच्च व्यर्थत्वं सन्मित्रवत्, तत्तु त्वद्वचनादेव सिद्धं यथोक्तं त्वया 'किंचिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठत' इति, तथा 'लोकेऽर्थरूपता'मित्येषोऽपि, गामभ्याज शुक्लामिति न शब्दे बुद्धिः, किं तर्हि? अभिधेये लोकसिद्धा, व्याकरणशास्त्रे शब्दरूपतां प्रतिपन्नः प्रवर्त्तते, तुर्विशेषणे, शब्दाधिगमार्थप्रवृत्तिविशेषात् भवतिवत्, तस्माद्भिन्नः, रूपभेदात् अर्थस्य च गोः सास्नादिरूपं भिन्नं**

---

त्वदुक्तोपपत्तिजातमस्मद्दर्शन एव सङ्गच्छत इत्येवंलक्षणो गुणोत्कर्षः प्रदर्श्यत इत्याचष्टे-**गुणोत्कर्षमिति**। तदेव व्याचष्टे-**स त्वदुक्त इति**, शब्दोऽर्थशक्तिमनादृत्य स्वशक्तिवैचित्र्येणैव प्रतिनियतलिङ्गादि बोधयतीति न, अपि तु घटाद्यर्थस्य योग्य एव शब्दस्तेन सहैकीभवति, न हि पृथुबुध्नोदराद्यर्थस्य पटशब्दो योग्य, न वा य· कश्चिच्छब्द· काकवाशितादिवदेवमेव क्रीडया प्रयुज्यते नाप्यज्ञात्वा वाच्यवाचकभाव इति भाव। घटाद्यर्थे कुतो न पटादिशब्द प्रयुज्यत इत्यत्राह-**अर्थविसंवादादिति**, तेनार्थेन तच्छब्दस्य वाच्यवाचकभावलक्षणसम्बन्धाभावात, योग्यतैव हि सम्बन्धो न तादात्म्यम्, तयो. पार्थक्यस्य व्यवस्थापितत्वादिति भाव। कुतो विसवाद इत्यत्राह-**स चैकीकर्त्तुमिति**, शब्दस्यार्थेन सम्बन्धयितुमशक्यत्वाद्विसवाद इत्यर्थः। अभिजल्पलक्षणमप्यस्मन्मतसमर्थकमिति निरूपितमेवेत्याह-**सोऽयमितीति**। शब्दार्थयोरेकरूपत्वे सत्यपि लोके शास्त्रे च क्वचिच्छब्दः क्वचिदर्थ· प्रधानमिति या व्यवस्था कारिकाभ्यां कृता साऽप्यस्मन्मतमेवानुधावतीत्याशयेनाह-**तदनन्तरमिति**।

---

१ सि. क्ष. डे. लोमगत०। २ सि. °स्यार्थानुरत्नशब्दा०।

**तदर्थं गकारादिवर्णानुपूर्वीमात्रोच्चारणम्, तद्धि न कदाचिदर्थो भवितुमर्हति कल्पितं वा, त्वया योऽभिजल्पः कल्प्यः कल्पित एव सः, न भवत्यर्थः अव्यवस्थितत्वात्, व्यतिकीर्णत्वात्, अनियतत्वाच्च, तस्माच्च शब्दोऽर्थरूपतां प्रतिपन्नः प्रवर्त्तते ।**

**(वयमत्रेति)** वयमत्र निश्चिनुमः–तयोरपृथगात्मत्वं रूढेः लोकप्रतीतेरनस्य तदुपचारात्–भिन्नयोः [अ]भेदोपचारात्, किमिव ? पथिगमनवत्–यथा पन्थाः पाटलिपुत्रं गच्छतीति पथो[1] गमनं पुरुषगत्यभेदोपचारात्, तद्विनाऽभावाद्व्यर्थत्वात्त[2]थोच्यते तथा शब्दार्थयोरव्यभिचारात् अविनाभावादभेदोपचारात् लोकरूढेरपृथगात्मत्वं पृथग्भूतयोरेवेति, किञ्चान्यत् -इतरेतरप्रधानोपसर्जनभावात्–शब्दस्योपसर्जनत्वादर्थस्य प्राधान्या[द्]व्यर्थतैव, किमिव ? सन्मित्रवत्–यथा स्निग्धयोर्मित्रयोः पृथक्सिद्धयोरेककार्यप्रवृत्तयोरितरेतरप्रधानोपसर्जनत्वनियमः तथा शब्दार्थ[यो]ः, तत्तु त्वद्वचनादेव सिद्धम्–यथोक्तं त्वया किञ्चिदेवेति यावदवतिष्ठते, यथा प्रथमश्लोकोऽस्मन्मतं समर्थयति तथा लोकेऽर्थरूपतामित्येषोऽपि गामभ्याज शुक्लामिति न शब्दे बुद्धिः, किं तर्हि ? अभिधेये लोकसिद्धा, व्याकरणशास्त्रे शब्दरूपतां प्रतिपन्नः प्रवर्त्तते, तुर्विशेषणे शब्दाधिगमार्थप्रवृत्तिविशेषात, भवतिवदिति, भवतिशब्दमधिगमनिष्पन्नं भूसत्तायां लट्कर्त्तरीत्यादि करोति, तस्माद्भिन्नः[3], इतश्च भिन्नो रूपभेदात्, अर्थस्य चेत्यादि गोः सास्नादिरूपं भिन्नं तदर्थत्वाच्छब्दस्य, गकारादि-

स्वमनेन कारिकाभावार्थमाचष्ट–**वयमत्रेति** । व्याचष्टे–**तयोरपृथगात्मत्वमिति,** वस्तुतः पृथग् भिन्नयोः शब्दार्थयोर्लोकरूढेरेवानस्मिन् तस्योपचाराद्व्यभिचाराभाव इति भावः । उपचारे निदर्शनमाह–**यथा पन्था इति,** पुरुषगमनं पथ्युपचर्य अभेदात् पन्था गच्छतीति प्रयुज्यत इति भावः । अभेदोपचाराभावेऽपृथगात्मता न स्यादित्याह–**तद्विनाऽभावादिति** पुरुषगत्यभेदोपचारेण विना पथो गमनासम्भवादित्यर्थः । **व्यर्थत्वादिति,** अभेदोपचारेण विना तत्प्रयोगस्याप्रज्ञातार्थत्वेन वैयर्थ्यादभेदोपचारेणैव तथोच्यत इति भावः । व्यर्थत्वादिति पाठे उपचारस्य वस्तुद्वयाश्रितत्वादित्यर्थः । अभेदोपचारे हेतुमाह–**अव्यभिचारादिति** । भेदसहाभेदलक्षणतादात्म्यं शब्दार्थयोरित्याह–**लोकरूढेरिति** । क्वचिच्छब्दस्य क्वचिदर्थस्य च प्राधान्यात् प्रधानोपसर्जनभावो न नियतः, अत एव व्यर्थतासिद्धेत्याह–**इतरेतरेति** । दृष्टान्तमाह–**सन्मित्रवदिति** । किञ्चिदेव क्वचिद्रूपं प्राधान्येनावतिष्ठते किञ्चिदेव रूपं शब्दोऽर्थो वा लोके शास्त्रे वा प्राधान्येनातिरिक्ततयाऽवतिष्ठत इति त्वदुक्तेरेव शब्दार्थयोः पार्थक्यमितरेतरप्रधानोपसर्जनभावश्च सिद्ध इत्याह–**तत्तु त्वद्वचनादेवेति** । द्वितीयश्लोकोऽप्यस्मन्मतं समर्थयतीत्याह–**लोकेऽर्थरूपतामिति** । गामभ्याज शुक्लामित्युच्चार्यमाणः शब्दोऽर्थप्रत्यायनार्थत्वान्न शब्दकार्यान्वययोग्यो भवति किन्त्वर्थक्रियासमर्थार्थविषयप्रतिपत्तिजनक एव व्यवहारे, अर्थे विशेषणीभूतस्य क्रियाया विशेषणत्वाद्गोरादित्याशयेनाह–**गामभ्याजेति** । शब्दशास्त्रे तु सूत्रादावुच्चरितस्य अग्नेर्ढगित्यत्रत्यस्याग्निशब्दादेः कार्यान्वयाभावाल्लक्ष्यस्य आग्नेय इत्यत्रत्योऽग्निशब्दो वाच्यत्वेन समवस्थित इत्याह–**व्याकरणशास्त्र इति** । हेतुमाह–**शब्दाधिगमार्थेति** शब्दविषयप्रतिपत्तिफलकसूत्रादिघटकाग्न्याद्युच्चारणलक्षणप्रवृत्तिविशेषत्वाच्छास्त्रस्येति भावः । दृष्टान्तमाह–**भवतिवदिति** । अधिगमनिष्पन्नमिति, अधिको गमोऽधिगमः, गमो ज्ञानं तस्याधिक्यं शास्त्रोपदेशापेक्षणात, अधिगम्यतेऽनेनेत्यधिगमः उपदेशो वा तेन निष्पन्नमित्यर्थः । कथं निष्पन्नो भवतिशब्द इत्यत्राह–**भू सत्तायामिति,** अस्मादुपदेशात् लः कर्मणि भावे चाकर्मकेभ्य इति कर्त्तरि लडुपदेशाच्च भवतिशब्दो निष्पन्न इति भावः । एवं शब्दार्थयोर्भेदे एकं हेतुमुक्त्वा हेत्वन्तरमाह–**इतश्च भिन्न इति,** रूपं स्वरूपं शब्दार्थयोस्तद्भेदादित्यर्थः, गोशब्दस्य सास्नादिरूपमर्थस्वरूपं हि भिन्नम्, गोशब्दस्य तु स्वरूपं गकारोत्तरौकारोत्तरविसर्गरूपं परस्य श्रवणग्राह्यशब्दात्मकं पदार्थबोधकत्वेन लोके प्रसिद्धं ध्वनिसमुदायरूपं नादमात्रम्, तदर्थमेव हि वक्त्रा गकारादिवर्णानुपूर्वीमात्रोच्चारणं क्रियते, न तु परश्रवणग्राह्यनादरूपः शब्दो वक्तृप्रयुक्तवर्णानुपूर्वीरूपस्य शब्दस्यार्थो भवितुमर्हति, न वा त्वया कल्प्यमानः श्रूयमाणशब्दव्यतिरिक्तः तदभिव्यङ्ग्य आन्तरोऽभिजल्पात्मा शब्दः शब्दस्यार्थो भवितुमर्हतीति निरूपयति–**गोः सास्नादिरूपमिति** । कथमभि-

१ सि. क्ष. डे. छा. यथोऽसक्रमनं । २ सि. क्ष. डे. छा. तयोरुच्यते । ३ सि. क्ष. भिन्नो ।

वर्णानुपूर्वीशब्दश्रोत्रा[ग्राह्यं]नादमात्रं तदर्थं शब्दप्रयोगात् गकारादिवर्णानुपूर्वीमात्रोच्चारणम्, तद्धि न कदाचिदर्थो भवितुमर्हति कल्पितं वा, नेति वर्त्तते, त्वया योऽभिजल्पः कल्प्यः कल्पित एव सः, न भवत्यर्थः, कस्मात्? अव्यवस्थितत्वात् व्यतिकीर्णत्वात् अनियतत्वात्, बाह्यवस्तुव्यवस्थितः, देशकालादिभिन्नशब्दशतसंकुलेऽपि घटशब्दस्योर्द्ध्वग्रीवादि[बाह्य]स्वाभिधेये प्रयोगात् [अ]व्यतिकीर्णश्च, नियतः प्रतिपादनेनावश्यवाच्यत्वात् तेनैव शब्देन स एवेति तत्रैव च बुद्ध्युत्पत्तेः, तस्माद्व्यवस्थिताव्यतिकीर्णनियतत्वेभ्यो बाह्यार्थोऽन्यो रूपभेदात् शब्दान्तरात् कल्पितत्वाच्च, तस्मान्न शब्दोऽर्थरूपतां प्रतिपन्नः [प्र]वर्त्तते।

अभ्युपेत्यापि रूढेरपृथगात्मत्व[म्]-

**प्रतिपत्तिव्यभिचारादनयोरेकीभावगतिः पार्थक्ये सति, नान्यथोक्तवत्, 'शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया' इत्येतदप्यस्मन्मतमेवानुधावति, 'यस्तु प्रयुङ्क्ते कुशलो विशेषे' ( महाभा० १-१-१ सूत्रे पृ० ३० ) इत्यादिक्रमेण गोशब्दस्य सास्नादिमति साधुत्वं सिद्धेऽर्थे शब्दे सम्बन्धे च पृथक् गोण्यादावसाधुत्वं रूढितः, अर्थविशेषविवक्षायां गोण्याः साधुत्वमित्यादि, तस्य च प्रयोजनं धर्म इत्यादिरुक्तः सोऽपि पृथगर्थसिद्धिं सूचयति लोकेनाभिधेयेऽर्थे शब्दाः प्रयुक्ताः, तत्रार्थस्य पृथक् सिद्धत्वे शब्दस्य च तद्विषयस्य धर्मार्थः प्रयोगनियमः शास्त्रेण क्रियते भक्ष्याभक्ष्यनियमवदिति ।**

(**प्रतिपत्तीति,**) प्रतिपत्तिव्यभिचारादनयोः, प्रतिपत्तिरपि स्वसम्बन्धादेव, सम्बन्धस्य द्विष्ठत्वात् शब्दार्थयोरेकीभावगतेः प्रतिनियतोऽभिधानाभिधेयसम्बन्धः पार्थक्यमन्तरेण न भवितुमर्हति घटशब्दार्थयोरित्युक्तम्, एकीकरणस्यान्यथाऽसम्भवात्, अत आह--नान्यथा, उक्तवदिति, किञ्चान्यत्--'शास्त्रे तूभयरूपत्वं प्रविभक्तं विवक्षया' इत्येतदप्यस्मन्मतमेवानुधावति. यस्तु प्रयुङ्क्ते कुशलो विशेषे इत्यादिक्रमेण गोशब्दस्य सास्नादिमति साधुत्वम्, 'सिद्धेऽर्थे शब्दे सम्बन्धे च' ( महाभा० १—१—१ सूत्रे पृ० ५५ )

जल्पशब्दो नार्थ इत्यत्राह-**अव्यवस्थितत्वादिति** । उच्चार्यमाणस्तु शब्दो व्यवस्थितोऽव्यतिकीर्णो नियतश्चेति दर्शयति-**बाह्यवस्त्विति,** बाह्ये वस्तुनि घटादौ घटशब्दो व्यवस्थित इत्यर्थ, अव्यतिकीर्णश्च देशकालादिभेदेन नानाशब्दैर्व्याप्तत्वेऽपि घटशब्दस्यैव स्वाभिधेये प्रयोगात्, तेन च प्रतिपादितेन शब्देनावश्यं घटाद्यर्थबोधोदयात् तदर्थे तच्छब्दो नियतश्चेति भाव· । एवञ्च शब्दात्, त्वत्कल्पिताभिजल्पशब्दाच्चार्थो भिन्न एव, तस्मादेव च शब्दोऽर्थरूपता प्रतिपन्नो न प्रवर्तत इत्याह-**तस्माच्चेति** । रूढ्या शब्दार्थयोरपृथगात्मताभ्युपगमेऽपि साऽपृथगात्मना नाव्यभिचारिणीत्याशयेनाह-**प्रतिपत्तीति** । प्रतिपत्तौ हि व्यभिचारो दृश्यते, वाच्यवाचकभावसम्बन्धे सति हि प्रतिपत्ति· स्यात्, स तु न सम्भवति, सम्बन्धस्य द्विष्ठत्वव्याप्यत्वात्, अपृथगात्मतायान्त्वेकत्वात् कथं स सम्बन्ध इत्याशयेन व्याकरोति-**प्रतिपत्तिव्यभिचारादिति** । शास्त्रे क्वचिच्छब्दप्रधान क्वचिच्चार्थप्रधानो निर्देश इति यदुक्तं तदप्यस्मन्मतमेव समर्थयतीत्याह-**किञ्चान्यदिति,** शब्दार्थयोः पार्थक्यमन्तरेण कदाचिच्छब्द· कदाचिच्चार्थ इति विवक्षयाऽपि विभागासम्भव इति भाव । व्याकरणेन हि साधूनेव प्रयुञ्जीत नासाधूनिति गवादय एव साधवो न गाव्यादय इति च नियमद्वयं विधीयते धर्मार्थमिति प्रयोजनवर्णनमपि शब्दात् पृथगर्थसिद्धावेवेति दर्शयति-**यस्तु प्रयुङ्क्त इति,** अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य सूचितम्, स एव शब्द क्वचिदर्थविशेषे केनचिन्निमित्तेन प्रयुक्त साधुर्भवति अन्यथाऽसाधु·, गवि गोणीशब्दः साधर्म्यमूलकाभेदाध्यारोपात् प्रयुक्त· साधुः, जातिप्रयुक्तस्त्वसाधुर्भवतीत्येवं लक्षणस्मरणपूर्वकं य· प्रयुङ्क्ते स एव वाग्योगविदिति भावार्थः । ननु शब्दस्यार्थस्य तत्सम्बन्धस्य च नित्यत्वात् व्याकरणशास्त्रेण किं क्रियते, न हीदानीं शब्दनिष्पत्त्यर्थं व्याकरणम्, शब्दानां स्वतःसिद्धत्वात्, नापि सम्बन्धज्ञानार्थम्, लोकत एव सम्बन्धज्ञानस्य सम्भवादित्याशङ्क्य समाधत्ते-**सिद्धेऽर्थे इति,** अर्थस्य व्यक्ते· शब्दार्थत्वे व्यक्ते प्रवाहतो नित्यता,

१ सि. क्ष. प्रतिपत्तोऽपि । × × क्ष. ।

पृथक् गोण्यादावसाधुत्वं रूढितः, अर्थविशेषविवक्षायां गोण्या आवपने साधुत्वमित्यादि च नान्यथा घटते, तस्य च साध्वसाधुज्ञानस्य प्रयोजनं धर्मः, 'सिद्धे शब्दार्थसम्बन्धे' ( महाभा० १-१-१ सूत्रे पृ० ५५ ) इत्यादिरुक्तः सोऽपि पृथगर्थसिद्धिं सूचयति, लोकेनाभिधेयेऽर्थे शब्दाः प्रयुक्ताः प्रयोजनेन वा, तत्रार्थस्य पृथक् सिद्धत्वे शब्दस्य च तद्विषयस्य धर्मार्थः प्रयोगनियमः साधुत्वार्थः शास्त्रेण क्रियते भक्ष्याभक्ष्यनियमवदिति, तस्मान्नाभिजल्पोऽर्थः ।

**एवमेव च दर्शनोत्प्रेक्षाभ्यामित्यादिदर्शनानि शब्दाद्बहिरर्थसिद्धौ घटन्ते, इतरथा अभिजल्पार्थैक्ये तत्र किं दर्शनम्? का उत्प्रेक्षा?... ...................कुतोऽभिजल्पः? श्रुत्यन्तरप्रवृत्तिहेतुरित्येतदपि च त्वत्कल्पिताभिजल्पे नैवोपपद्यते, अस्मदिष्टे तूपपद्यते श्रुतेरन्या श्रुतिः श्रुत्यन्तरम्, अन्तरेकीभूतोऽभिजल्पपृथग्भूतो ध्वनिर्व्यवहारानुपाती स्यात्, स त्वदिष्टाभ्यामकर्तृभ्यामचेतनाभ्यां करणकर्मभ्यां न प्रवर्त्तते, चेतनात्मत्वात्तु कर्त्ता स प्रवृत्तिहेतुः श्रुत्यन्तरस्य भवितुमर्हति, शब्दार्थयोरेकीभूय वर्त्तमानयोः काऽन्या श्रुतिः श्रुत्यन्तरमित्युच्यते? केन च विशेषेण तत्प्रवृत्तिहेतुरुच्यते? ।**

**एवमेव चेत्यादि,** एवमेव कारिकात्रयाभिहितस्यार्थस्य वर्णकदण्डकोऽपि दर्शनोत्प्रेक्षाभ्यामित्यादि, प्रधानपुरुषेश्वरादिमयमित्यादिदर्शनानि शब्दाद्बहिरर्थसिद्धौ घटन्ते, वस्तुनि भिन्ने घटादौ बाह्ये तु पुरुषाणाञ्चोत्प्रेक्षा नित्यानित्यादित्वेन नियमेन सद्भावे, नान्यथा, इतरथेत्यादि, अभिजल्पार्थैक्ये-नियतबाह्यार्थाभावे प्रधानादिदर्शनासम्भवः, तत्र किं दर्शनम्? नास्तीत्यर्थः, का उत्प्रेक्षा? इत्यादितद्ग्रन्थानुसारेणासम्भवं

जाते. शब्दार्थत्वे तु सुतराम्, शब्दोऽपि नित्य पदं वाक्यमपि नित्यम्, एकेनैव क्रमेण घटपटादिशब्दानां सर्वैरुच्चारणात्, शब्दार्थयो सम्बन्धोऽपि कार्यकारणभावलक्षणो योग्यतालक्षणो वाच्यवाचकभावलक्षणो वा नित्य, सर्वपदशक्त्यग्रहकाले केनापि पदेनार्थाऽऽदेशनस्याशक्यकर्तव्यत्वात्, एवमर्थे शब्दे सम्बन्धे च नित्ये यमर्थमुपादाय लोके शब्दा प्रयुज्यन्ते नैषां निर्वृत्तौ यत्न करिष्यमाण सार्थक, तस्माद्व्याकरणेन साधुत्वं शब्दानां बोध्यते, तज्ज्ञानपूर्वकशब्दप्रयोगे धर्मोत्पत्ते, साधुना शब्देनैवार्थोऽभिधेयो नापशब्देन, एवं क्रियमाणमभ्युदयकारि भवतीति भाव । साध्वसाधुत्वे दृष्टान्तमाह-**पृथग् गोण्यादाविति,** गवाद्यर्थे गोशब्द साधु, गावीगोण्यादयस्तत्रासाधव, गोण्यादेरसाधुत्वं तत्रार्थे रूढित, आवपनलक्षणार्थविशेषविवक्षायाञ्च गोणीशब्द साधु[1], जानपदकुण्डगोणेत्यादिसूत्रेणावपनेऽर्थे ङीब्विधानादिति भाव. । तदेव शब्दवाच्यतामतमुपदर्श्य तदपि पृथग शब्दादर्थस्य सिद्धावेव सम्भवतीति निरूपयति-**सोऽपीति,** शब्दार्थसम्बन्धे नित्ये लोकेन एवार्थज्ञानप्रयोजनकृते शब्दप्रयोगेऽपि सिद्धे शास्त्रेण गवादय एवात्रार्थे प्रयुक्ता साधवो धर्मजनका न गाव्यादय इत्यादि यो नियम क्रियते स शब्दार्थयो पृथक् सिद्धत्वे भवितुमर्हति, यथा भक्ष्याभक्ष्ययो पृथक् सतोरेवेदं भक्ष्यमिदमभक्ष्यमिति धर्मार्थ. नियम कर्तुं शक्यते तद्वत्, तस्मान्नाभिजल्परूप शब्दोऽर्थो भवतीति भाव । अथ दर्शनोत्प्रेक्षाभ्यामर्थमभिधेयत्वेनोपगृह्य तत्र न्यग्भूतस्वशक्तिर्बुद्धौ परिप्लवमानोऽयमित्थमनेन शब्देनोच्यत इत्यान्तरो विज्ञानलक्षण शब्दात्मा श्रुत्यन्तरस्य-बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतु, सोऽभिजल्पाभिधेयाकारपरिग्राही बाह्याच्छब्दादन्य इति यद्भर्तृहर्यादिमतं पूर्वमुपदर्शितं तदपि बाह्यार्थसिद्धावेव स्यादित्याह-**एवमेव चेति** । सोऽयमित्यभिसम्बन्ध, तयोरपृथगात्मत्वे, लोकेऽर्थरूपतामिति कारिकात्रयभावार्थभूतोऽय दर्शनोत्प्रेक्षाभ्यामित्यादिग्रन्थ इति कथयति-**एवमेव कारिकेति** । दर्शनशब्दप्राह्यमाचष्टे-**प्रधानपुरुषेश्वरादिमयमिति,** प्रधानमय पुरुषमयं ईश्वरमयं वेदं सर्वं जगदित्युपदर्शकानि दर्शनानीत्यर्थ. । उत्प्रेक्षापि बाह्यार्थसिद्धौ स्यादित्याह-**वस्तुनि भिन्न इति** शब्दोऽर्थ. सम्बन्धश्च नित्यो वा स्यादनित्यो

१ सि. क्ष. डे. छा. साधोः स्वार्थः । २ सि. क्ष. छा. डे. वस्तुन्यभिन्ने ।

सोपपत्तिकं दर्शयति यावत् कुतोऽभिजल्पो ? हेय इति, सभावनं गतार्थम्, अर्थाभावे न घटते[1], अर्थसद्भावे युज्यत इति पिण्डार्थः, किञ्चान्यत्–श्रुत्यन्तरप्रवृत्तिहेतुरित्येतदपि त्वत्कल्पिताभिजल्पे नैवोपपद्यते, अस्मदिष्टे तूपपद्यते, तद्यथा श्रुतेरन्या श्रुतिः श्रुत्यन्तरम्, अन्तरेकीभूतोऽभिजल्पपृथग्भूतो ध्वनिर्व्यवहारानुपाती स्यात्, स त्वदिष्टाभ्यां शब्दार्थाभ्यां न प्रवर्त्तते, अकर्तृभ्यामचेतनाभ्यां करणकर्मभ्याम्, यथासंख्यं करणकर्मत्वाच्छब्दार्थयोः, चेतनात्मत्वात्तु आत्मा स्वतंत्रः, स्वातंत्र्यात् कर्त्ता स प्रवृत्तिहेतुः श्रुत्यन्तरस्य भवितुमर्हति, यथोक्तम् 'आत्मा बुद्ध्या समेत्यर्थान्' (पा० शि० का० ६) इत्यादि, इदञ्चायुक्तं श्रुत्यन्तरमिति विभज्य कथनम्, शब्दार्थयोरेकीभूय वर्त्तमानयोः काऽन्या श्रुतिः श्रुत्यन्तरमित्युच्यते ? तस्माद्विशेषाभावे कथमविभ्रान्तैरविभक्तः सन् विभक्तः शब्दात्मा उच्यते ? केन च विशेषेण श्रुत्यन्तराभावेन तत्प्रवृत्तिहेतुरुच्यते चैतन्यस्वातंत्र्यकृतं कर्तृत्वविशेषमन्तरेण श्रुत्यन्तरासम्भवे कस्य प्रवृत्तिहेतुत्वम् ? ।

अत्राह–

**अस्ति विशेषः घटार्थप्रत्यायनार्थं श्रुतेरनुरूपा श्रुतिरेव युक्ता, कारणानुरूपत्वात् कार्याणाम्, नार्थो वैरूप्यात्, तस्माच्छ्रुतिः श्रुत्यन्तरस्य प्रवर्त्तिका, नार्थो नाप्यात्मेत्यत्रोच्यते ननु तस्यापि श्रुत्यन्तरस्य प्रवर्त्तकोऽर्थ एव, अर्थाभावे प्रयोगानर्थक्यात्, निरुक्त्यर्थोऽप्यभिजल्पस्य तथा घटते नान्यथा, आभिमुख्येन जल्पत्यर्थं शब्दः, तं प्रयुङ्क्तेऽर्थः अभिजल्पयति तद्विषय एवाभिजल्प इत्युच्यते, एतदुक्तं भवति अर्थविषयः शब्दः शब्दार्थकल्पनायां युक्ततरः स्यात्, न तु त्वत्परिकल्पिते शब्दप्रेरिते, एवं तावद्भर्त्तृहर्यादिदर्शनमयुक्तम् ।**

वा स्यादित्येवमुत्प्रेक्षा नियमेन बाह्यार्थसद्भाव एव स्यादिति भावः । प्रतिनियतबाह्यार्थासद्भावेऽभिजल्पेन सहार्थस्याभेदेऽव्यवस्थिते शास्त्रसंस्कारैर्निमित्तैरेकस्यापि शब्दस्य बहुधाऽर्थः प्रकल्प्यतेऽतो दर्शनभेद इति प्ररूपणमपि न सङ्गच्छते शब्दातिरिक्तार्थाभावादित्याशयेनाह–**इतरथेति** । श्रुत्यन्तरस्य–बाह्यस्य ध्वन्यात्मकस्य प्रवृत्तौ हेतुरिति यदुक्तं तदपि न युज्यत इत्याह–**श्रुत्यन्तरेति** । मन्मत एवैतत्सम्भवतीति दर्शयति–**अस्मदिष्टे त्विति**, श्रुतिः शब्दस्तस्मादन्या श्रुतिः–श्रुतज्ञानोपयोगलक्षणा श्रुत्यन्तरं आन्तरज्ञानात्मकमभिजल्पपृथग्भूतं शब्देनास्य ध्वन्यमानत्वाद्ध्वनिरुच्यते स एव च व्यवहारमनुपतति चेतनात्मकत्वेन व्यवहारकर्तृत्वादिति भावः, श्रुतेर्द्रव्यशब्दादन्या श्रुतिः श्रुत्यन्तरं भावशब्दः अन्तरेकीभूतोऽभिजल्पपृथग्भूतः ज्ञानात्मनैकीभूतः शब्दोपयोगः स एव शब्देन ध्वननाद्ध्वनिः व्यवहारमनुपततीति शब्दार्थः । त्वदभिमतेन बाह्यशब्देन वा तदर्थभूताभिजल्पशब्देन वाऽचेतनत्वादकर्तृभूतेन कर्मभूतेन वा न व्यवहारः सम्भवतीत्याह–**स त्वदिष्टाभ्यामिति**, व्यवहारस्त्वदिष्टाभ्यामित्यर्थः । तयोः शब्दार्थयोः करणकर्मत्वात्, अचेतनाभ्यां व्यवहारो न प्रवर्त्तते इति भावः । मन्मते स शब्दोपयोगश्चेतनात्मकत्वात् प्रवृत्तिहेतुः स्यादित्याह–**चेतनात्मत्वात्त्विति** । तत्र तदुक्तवचनमेवोद्भावयति–**यथोक्तमिति** । सोऽयमन्याभिसम्बन्धात् शब्दार्थयोरेकीकरणात् श्रुतेरन्या श्रुत्यन्तरमपि न स्यादित्याह–**इदञ्चायुक्तमिति** । एवमेकीभवनेऽविशिष्टत्वाच्छब्दार्थयोः कथमविभक्ता श्रुतिर्विभक्ता भवतीति वक्तुं शक्योत्यभ्रान्त इत्याह–**तस्माद्विशेषाभाव इति** । न हि शब्दार्थयोश्चेतनत्वं येन स्वातंत्र्यादन्यस्य प्रवर्तकं भवेत्, तस्मादचेतनत्वादस्वतंत्रत्वाच्छब्दादन्यस्याभावाच्च न कस्यापि प्रवृत्तिहेतुः श्रुतिरित्याशयेनाह–**केन च विशेषेणेति** । नन्वस्ति विशेषः घटाद्यर्थप्रत्यायनलक्षणः, अर्थगत्यर्थत्वाच्छब्दप्रयोगस्य, शब्दार्थयोश्च कार्यकारणभावः, शब्दो हि गवादिरूपेण परिणमते, परिणामपरिणामिनोश्च तादात्म्यं सर्वैरभ्युपगम्यत एवेति श्रुतिः श्रुत्यन्तरस्य प्रवर्त्तिका भवत्येव, परिणामपरिणामिभावे चैतन्यस्यानन्वयत्वादानुरूप्यस्यैव तंत्रत्वादतो नार्थ आत्मा वा प्रवर्तकोऽननुरूपत्वादित्याशङ्कते–**अस्ति विशेष इति** ।

१ सि. क्ष. डे. घटते, अर्थसद्भावेन घटते, अर्थ० । २ सि. क्ष. डे. छा. प्रतिपत्ति । ३ सि. क्ष. डे. छा. °रेकीभूतायांतवर्त्त० ।

**( अस्तीति )** अस्ति विशेषः, तद्यथा घटार्थप्रत्यायनार्थमित्यादि, कारणानुरूपत्वात् कार्याणां ध्वन्यात्मकशब्दोत्पत्तिकार्यदर्शनादन्तर्निविष्टोऽपि तदनुरूपः कारणभूतोऽनुमीयते शाल्यङ्कुरदर्शनाच्छालिबीजवत्, घटशब्दो नोर्द्ध्वग्रीवादिलक्षणार्थः, तद्विरूपत्वात्, उपादानञ्च श्रुतेरनुरूपा श्रुतिरेव युक्ता, नार्थः- घटादिः, वैरूप्यात्, तस्माच्छ्रुतिः श्रुत्यन्तरस्य प्रवर्त्तिका, नार्थो नाप्यात्मेत्ययं विशेष इति, अत्रोच्यते ननु तस्यापि श्रुत्यन्तरस्येत्यादि, एतदप्यनुमानं प्रतितर्कबाध्यम्, विज्ञानसन्निविष्टघटार्थप्रवर्त्या सा श्रुतिः, श्रुतित्वात्, ननु प्रागुक्तमर्थप्रत्यायनार्थं शब्दः प्रयुज्यते, न वायसवाशितादिवन्निरर्थकः क्रीडितमेवास्त्विति चेत्यादि, तस्माच्छ्रुतित्वात् पूर्वश्रुतिवदर्थप्रवर्त्तितः शब्दः, अर्थाभावे प्रयोगानर्थक्यादिति, निरुक्त्यर्थोऽप्यभिजल्पस्य तथा घटते नान्यथा, जप जल्प व्यक्तायां वाचि, आभिमुख्येन जल्पत्यर्थं शब्दः, तं प्रयुङ्क्तेऽर्थः, अभिजल्पयति तद्विषय एवाभिजल्प इत्युच्यते, यद्वाभिमुख्येनावस्थितमर्थं जल्पति ततो[ऽभि]जल्पः शब्दः, सोऽर्थो विषयोऽस्य, तद्विषय एवाभिजल्पः शब्दः, एतदुक्तं भवति, अर्थविषयः शब्दः शब्दार्थकल्पनायां युक्ततरः स्यात्-अर्थोत्थापितशब्दाभिजल्पत्वपक्षेऽभिजल्पशब्दार्थपरिकल्पना युक्ततरा स्यात्, न त्वत्परिकल्पिते शब्दप्रेरिते, एवं तावद्भर्तृहर्यादिदर्शनमयुक्तम् ।

**यत्तु वसुरातो भर्तृहरेरुपाध्यायः स च स्वरूपानुगतमर्थमविभागेन सन्निवेशयति, तेन द्वावपि शब्दोऽर्थश्चाभ्युपगताविति प्राच्यादत्यन्तादर्शनात्तैमिरिकदर्शनमिदं तत्त्वदृष्टिं प्रत्यासीदति, अभिजल्पस्वरूपन्तु पुनस्तेनापि निरस्तम्, ननु स तेन पुष्यशब्दार्थयोरिष्टादन्यान्यलिङ्गादीनि सन्निवेशयिष्यति तथापि शब्दनयाभिहितान् दोषान् परिहर्तुमशक्त एव, ननु शब्दानुगतार्थं अन्तरविभागेनेति ब्रुवताऽर्थतंत्रः शब्दोऽभिहितो न शब्दतंत्रोऽर्थः,**

---

व्याचष्टे-**तद्यथेति** उपादानभूतो वाचकः शब्दः, तस्यार्थात्मना विवर्त्तनात् तयोश्च कार्यकारणभावादेव योऽर्थः स शब्दः, यः शब्दः सोऽर्थ इति तादात्म्यम्, न हि विजातीययोर्घटजलयोरिवोपादानोपादेयभावः सम्भवति, तस्मादूर्ध्वग्रीवादिलक्षणस्य नामवियुतस्य शब्दकार्यत्वासम्भवादेव शब्दस्वरूपो घट एव कार्यं तत्प्रवर्त्तकोऽपि शब्द एवेति आन्तरशब्दस्य बाह्य उच्चार्यमाणशब्दप्रवर्त्तक इति भावः । कार्यकारणयोरनुरूपताया निदर्शनमाह-**शाल्यङ्कुरेति** । अथभूतं वस्तु नानुरूपमित्याह-**घटशब्द इति** । उपादानमपि घटशब्दस्वरूपकार्यस्य शब्द एव स्यादित्याह-**उपादानञ्चेति** । श्रुतेः प्रवर्त्तिका श्रुतिरेवानुरूप्यात्, शाल्यङ्कुरप्रवर्त्तकशालिबीजवदिति तवानुमानम्, सा श्रुतिः विज्ञानसन्निविष्टघटादिवस्तुप्रवर्त्या, श्रुतित्वात्, पूर्वश्रुतिवदिति प्रतितर्केण बाधतमित्युत्तरमाचष्टे-**एतदप्यनुमानमिति** । प्रतितर्कं व्याचष्टे-**ननु प्रागुक्तमिति** । प्रागुक्तग्रन्थमेव स्मारयति-**अर्थप्रत्यायनार्थमिति,** परस्यार्थं बोधयितुं हि शब्दप्रयोगं कुर्वन्ति तज्ज्ञाः न तु निरर्थकं क्रीडार्थं वा, तस्मादर्थ एव प्रधानम्, शब्दोत्थापकत्वात्, यथा त्वयोच्चार्यमाणा प्राथमिकी श्रुतिरन्तःशब्दव्यञ्जिकाऽर्थविवक्षया प्रयोक्त्रा प्रयुज्यत इत्यभ्युपगता, तथेयं श्रुतिरपि विज्ञानविषयीभूतार्थप्रवर्त्यैव न तु शब्दप्रवर्त्येति भावः । अभिजल्पशब्दव्युत्पत्त्यर्थोऽपि तदेव युज्यत इत्याह-**निरुक्त्यर्थोऽपीति** । निरुक्तिं दर्शयति-**आभिमुख्येनेति,** अर्थविषयकः शब्दोऽभिजल्प इत्यर्थः, तमभिजल्पमर्थं प्रयुङ्क्त इत्यर्थः, शब्दमर्थोऽभिजल्पयति, अर्थप्रवर्त्योऽर्थविषयः शब्दोऽभिजल्प उच्यत इति भावः । यतोऽर्थमाभिमुख्येन जल्पति शब्दोऽत एवासावभिजल्प उच्यते, तस्य च विषयोऽर्थ एव, अर्थविषयक एवाभिजल्प इत्याह-**यद्वाभिमुख्येनेति** । अभिजल्पस्यार्थविषयकत्वे अर्थोत्थापितत्वे चैवाभिजल्पशब्दार्थो घटत इति साराशमाह-**एतदुक्तं भवतीति** । तदेवं भर्तृहर्यादिमतनिराकरणमुपसंहरति-**एवं तावदिति** । तदाचार्यमतं निराकर्त्तुमाह-**यत्तु वसुरात इति** । यथाऽऽलोकाच्छुरितो घटो न स्वरूपेण तिरोभवति एवं शब्दस्वरूपोपरक्तोऽर्थोऽपि, एवञ्च वसुरातः शब्दाच्छुरितत्वेऽर्थस्य तत्स्वरूपव्यपगमं नेच्छतीति, शब्दस्वरूपानुगतिमप्यर्थे इच्छती-

**यद्यर्थमनुगतः शब्दोऽन्तरविभागेन सन्निवेश्येत ततः शब्दप्रेरितत्वाच्छब्दावधारणादर्थो व्युदस्तः स्यात्, किन्तु तद्विपरीतमर्थप्राधान्यावलम्बनं कृतं ततोऽर्थतंत्रत्वात् शब्दप्रवृत्तेः तदवस्था दोषाः, अतो विशेष एव व्यवस्थितः ।**

( **यत्त्विति** ) यत्तु वसुरातो भर्तृहरेरुपाध्यायः सच स्वरूपानुगतमित्याद्याह तेन द्वावपि शब्दोऽर्थश्चाभ्युपगतौ, सम्बन्धस्य द्विष्ठत्वात् सम्बन्धिनोरभ्युपगतिः, प्राच्यादत्यन्त[1]दर्शनात्तैमिरिकदर्शनमिदं तत्त्वदृष्टिं प्रत्यासीददिति, न दूरापयातम्, अभिजल्पस्वरूपन्तु पुनस्तेनापि निरस्तम्, किञ्च—ननु स तेनेत्यादि, एतस्मिन्नपि दर्शने यथा पुष्यशब्दार्थयोरन्तःसंनिवेशनमविभागेन सलिङ्गवचनकारकादिभेदयोरेवमेव[1] इष्टाल्लिङ्गादेरन्यान्यलिङ्गादीनि[2] अन्यशब्दार्थगतान्यपि सन्निवेशयिष्यति स इति सामान्योपसर्जनविशेषप्रधानवादिना शब्दनयेनाभिहितान् तत्सामानाधिकरण्याभावादिदोषान्[3] परिहर्तुमशक्त एव तथापि, कस्मात्? ननु शब्दानुगतेत्यादि, स्वरूपमनुगतोऽर्थः, तमर्थमन्तरविभागेनेति ब्रुवताऽर्थतंत्रः शब्दोऽभिहितः, [न]शब्दतंत्रोऽर्थः, यद्यर्थमनुगतः शब्दोऽन्तरविभागेन सन्निवेश्येत ततः शब्दप्रेरितत्वाच्छब्दावधारणादर्थो व्युदस्तः स्यात्, किन्तु तद्विपरीतं शब्दावधारणव्युदसनार्थं अर्थप्राधान्यावलम्बनं कृतम्, ततोऽर्थतंत्रत्वात्—अर्थप्रधानत्वाच्छब्दप्रवृत्तेः,—प्रवर्त्तको हि शब्दस्यार्थः, तस्मात्तदवस्थादोषाः, शब्दप्राधान्यावधारणे तु परिहृताः स्युः, तस्मादुक्तवदेव विशेषप्राधान्यवादिना अर्थान्तरनिरपेक्षाणां पुष्यतारानक्षत्रादिविशेषाणां नास्ति सामानाधिकरण्यम्, अतो विशेष[4] एव व्यवस्थितः, एषा तावद्वस्तुनोऽर्थपर्यायेषु भावना कृता ।

---

न्याचष्टे—**स च स्वरूपेति,** स्वस्वरूपाभ्यामनुगतयोश्शब्दार्थयोरन्तरभ्यन्तरविभागेना याससमभ्युपैति, सत. शब्दार्थयो. कार्यकारणभावो वा योग्यता वा सम्बन्ध, स च द्विष्ठत्वाविनाभावीति शब्दार्थौ द्वावपीच्छतीति भाव । मतमिदमर्थस्य शब्दाभिन्नत्वेनाऽऽदर्शनादन्धकल्पभर्तृहरिमतापेक्षयाऽर्थस्वरूपाभ्युपगमेन तैमिरिकदर्शनवत्तत्त्वदृष्टि प्रति किञ्चित्सामीप्यमुपयातीत्याह—**प्राच्यादत्यन्तादर्शनादिति** । अत्यन्ताभेदलक्षणोऽभिजल्प शब्द शब्दार्थ इति तु नानेनाभ्युपगम्यतेऽर्थस्याप्यभ्युपगतत्वादित्याशयेनाह—**अभिजल्पस्वरूपन्त्विति** । एतस्मिन्नपि मते यदि लिङ्गवचनकारकादिविशिष्टशब्दार्थयोरविभागेनान्तःसन्निवेशनं क्रियते लाघवात्, अन्यथा प्रतिवचनलिङ्गादिविशेष विलक्षणा शब्दा भवेयुरिति गौरव स्यात् पुष्यस्तारका पुनर्वसू नक्षत्रमित्यादिप्रयोगाश्चोपाधिविशेषविवक्षया स्वीक्रियन्ते तर्हि उभयनियमनयेन प्राग्दर्शितविभिन्नलिङ्गवचनसामानाधिकरण्याभावादिदोषा दुर्निवारा एव भवेयुरित्याह—**एतस्मिन्नपीति** । कथं परिहारासम्भव इत्यत्राह—**ननु शब्दानुगतेत्यादीति,** शब्दोऽर्थमर्थस्वरूपानुगतमेवाविभागेनात्मनि सन्निवेशयतीति त्वयाऽङ्गीक्रियते यथा गौर्वाहीक इत्यादौ वाहीके गवाध्यारोपे न केवलं गोमात्र प्रतीयते किन्तु अध्यारोपितगोरूपो वाहीक एवमध्यारोपितशब्दोऽर्थ एव प्रतीयत इति प्रधानमर्थ एव स्यान्न शब्दः, यदि शब्दस्वरूपानुगतमर्थमविभागेन शब्दः सन्निवेश्येत तदाऽर्थस्य शब्दप्रेरितत्वात् शब्देन शब्दस्यैवावधारणादर्थो निरस्तो भवेत्, न चैवमर्थस्वरूपेणैवार्थस्यावभासनेनार्थप्राधान्यमेव स्वीकृतमिति भाव. । अर्थप्राधान्ये तु तस्यैव प्रवर्त्तकत्वाच्छब्द उपसर्जनम्, अर्थस्य सर्वलिङ्गवचनत्वात् आपो दारा, तटस्तटी तटमित्यादिविभिन्नलिङ्गवचनसामानाधिकरण्यानुपपत्ति, विशेषविवक्षाया अत्यन्तसम्भवादित्याशयेनाह—**ततोऽर्थतंत्रत्वादिति** । विशेषस्यैव प्रधानत्वे तस्यार्थान्तरानिरपेक्षत्वान्न केनापि सामानाधिकरण्यमस्तीति न कश्चिद्दोष इत्याह—**उक्तवदिति** । एवमर्थमवलम्ब्यैकस्यापरसामानाधिकरण्यं न सम्भवतीति भावितमित्याह—**एषा तावदिति** । लिङ्गादयो व्यञ्जनपर्याया न शब्द-

---

१ सि. क्ष. डे. °रवमेव । २ सि. क्ष. छा. लिङ्गादीनान्यश° । ३ सि क्ष. डे. छा. °रण्यादि भावादि° । ×× क्ष. । ४ क्ष. डे. विशेष एक एव ।

शब्दगोचरातिक्रान्तेषु व्यञ्जनपर्यायेष्वनेनातिदेशः क्रियते—

**यथा च रूपादय एकैकभवनात्मका न पर्यायान्तरमपेक्षन्ते विशेषत्वात्तथा पुष्यतारानक्षत्रादिपुंलिङ्गादयः, परस्परविरोधित्वाद्विशेषाणामित्येकमेकमेव भवनं भवतीति कुतः सामानाधिकरण्यम्, पुष्यः पुमान् स कथं स्त्री भवति तारेति नपुंसकं वा नक्षत्रमिति, एवञ्च यथार्थाभिधानमेव न्याय्यम्, लक्षणञ्च यथार्थाभिधानं शब्दः, नामस्थापनाद्रव्यभिन्नलिङ्गादिवाच्येष्टाकरणाद्भावयुक्तवाची शब्द इति च, तथाऽऽचार्यसिद्धसेनोऽप्याह—'णामं ठवणा दविये त्ति एस दव्वट्ठियस्स णिक्खेवो। भावो उ पज्जवट्ठियस्स परूवणा एस परमत्थो ॥' (संमति० का० १–६) इति।**

**यथा चेत्यादि,** रूपादयो युगपद्भावाभिमता अप्येकैकभवनात्मका न पर्यायान्तरमपेक्षन्ते विशेषत्वादिति दृष्टान्तः, पुष्यतारानक्षत्रादिपुंलिङ्गादयः परस्परविरोधित्वाद्विशेषाणामिति दार्ष्टान्तिकः, एकमेकमेव भवनं भवति न द्वितीयमिति कुतः सामानाधिकरण्यम्? पुष्यः पुमान् स कथं स्त्री भवति तारेति, नपुंसकं वा नक्षत्रमिति?, एवं वचनकारकपुरुषोपग्रहादिभेदा न परस्परापेक्षा विशेषैकभवना इति भावनीयम्, एवञ्चेत्याद्युक्तार्थोपनयः, तत्र शब्दनयस्यैतद्दर्शनं यथार्थाभिधानमेव न्याय्यम्, लक्षणञ्च 'यथार्थाभिधानं शब्दः' (तत्त्वार्थ भा० अ० १ सू० ३५) तथा 'नामस्थापनाद्रव्यभिन्नलिङ्गादिवाच्येष्टाकरणाद्भावयुक्तवाची शब्दः' (         ) इति च लक्षणान्तरम्. तत्र विभागेन द्रव्यं द्रव्यार्थवाच्यं पूर्वनयेष्टमिष्टं न करोतीति नैगमादिगोचरमनेनापि व्यावर्त्तितमेव, शब्दनयेन व्यवहारगोचरनामद्रव्यार्थवाच्यमपीष्टं न करोतीत्यधुना व्यावर्त्तितम्, ऋजुसूत्रस्यार्थस्य गोचरञ्च भिन्नलिङ्गादिवाच्यमिष्टं न करोतीति, यथा[र्थ]वचनादि साध्विति मन्यमानः शब्दनयः प्रवर्तते युक्त्या च, यथा तस्य मतं शब्दस्य तथा प्रकारान्तरं प्रदर्शितम्, तथाऽऽचार्यसिद्धसेनोऽप्याह—'णामं ठवणा दविये त्ति एस दव्वट्ठियस्स णिक्खेवो। भावो उ पज्जवट्ठियस्स परूवणा एस परमत्थो' (संमति० का० १–६) इति।

गोचरः, शब्दस्यार्थविषयत्वात्, न लिङ्गादयोऽप्यथवत् परस्परानपेक्षा एकैकभवनात्मका इत्याख्याति—**यथा चेति।** पुष्यतारानक्षत्रादिपुंलिङ्गादयः एकैकभवनात्मकाः पर्यायान्तरानपेक्षाः, विशेषत्वात्, रूपादिवदित्यनुमानेन लिङ्गवचनादीनां परस्परानपेक्षैकैकभवनात्मकत्वसिद्ध्या नापरेण सामानाधिकरण्यमित्याशयं दर्शयति—**रूपादय इति,** सहभवनात्मकत्वेनाभिमता रूपरसगन्धस्पर्शशब्दादयः पर्याया इत्यर्थः, स्त्रीपुंनपुंसकानां लिङ्गानां भिन्नत्वान्न पुष्यस्तारा नक्षत्रमिति सामानाधिकरण्यम्, यथा गावश्च इति, सत्त्यानप्रसवस्थितिलक्षणा एते लिङ्गादयः शीतोष्णादिवत् परस्परविरुद्धाः, तस्मात् पुष्यो न तारा नक्षत्रं वेति स्त्रीनपुंसकसामानाधिकरण्यं न भजत एवेति भावः। एवञ्च भावरूपमेवार्थमभिधत्ते शब्द इत्याह—**तत्र शब्दनयस्येति।** लक्षणमाह—**यथार्थेति,** नामस्थापनाद्रव्यवियुतेन भावरूपेणार्थं शब्दोऽभिधत्ते, तस्मादेवाशेषाभिलषितेष्टसिद्धेरिति भावः। एतदेव लक्षणान्तरेणाह—**नामस्थापनेति।** पूर्वनयेषु नैगमसङ्ग्रहनयविषयीभूतद्रव्यस्याभिमतार्थप्रसाधकत्वाभावान्निराकृतमेव, व्यवहारनयगोचरीभूतद्रव्यस्यापि शब्दनयेनानेन व्यावर्त्तितमेवेत्याह—**तत्र विभागेनेति,** तद्विभागेनेत्यर्थः। ऋजुसूत्रनयो वर्त्तमानानेकधर्मरूपमपि वस्तु घटादिशब्देनाभिधीयमानमभ्युपैति तदपीष्टं न करोति विभिन्नलिङ्गसङ्ख्याकारकादिधर्माणामेकत्रासम्भवादित्यनेन यथार्थाभिधानशब्दनयेन व्यावर्त्तितमित्याह—**ऋजुसूत्रस्येति।** नामादिनिक्षेपानां द्रव्यार्थपर्यायार्थप्रविभागव्यवस्थापकं सिद्धसेनाचार्यवचनमत्रोपन्यस्यति—**तथेति,** नामस्थापनाद्रव्याणि द्रव्यार्थिकस्य भावः पर्यायार्थिकस्य प्ररूपणाविषय इति तदर्थः।

१ सि. क्ष. डे. भववादिति।

अधुना सामान्यभेदं स्थापनाद्रव्यार्थमव्यावर्त्तितं व्यावर्तयितुकामः सम्बन्धयति–

**व्यवहारान्तःपातिस्थापनावाच्येष्टाकरणप्रदर्शनार्थन्तु स्थीयते यस्मिंस्तत्स्थानम्, भावः क्रिया, केन स्थीयते? स्थानकर्त्रेति, क्व च स्थीयते? आकारे, आ मर्यादया करणमभिविधिना, प्रस्तुतस्य रूपस्याभिविधिः परिसमापनमभिव्याप्तिः, तेनाऽऽकरणमाभवनम्, तस्मिन् स्थानम्, का मर्यादा? अन्यरूपविलक्षणम्, तस्य स्वतंत्रस्थातृसमवायिनः प्रयोजके हेतुकर्त्तरि विहितो णिः तस्य भावः स्थापना।**

(**व्यवहारेति**) व्यवहारान्तःपातिस्थापनावाच्येष्टाकरणप्रदर्शनार्थन्तु–व्यवहारनयान्तःपातिनी स्थापना सापीष्टं न करोतीत्येतत् प्रदर्शयिष्यते, स्थापनाद्रव्यार्थस्वरूपे चाविदिते न शक्यं तत्प्रदर्शयितुमिति स्थापनाद्रव्यार्थस्वरूपमेव तावदाख्यायते, तत्र स्थानक्रियायाः कर्त्तुः तिष्ठतः प्रयोजके समवेता ण्यन्तवाच्या 'ण्यासश्रन्थो युच्' (पा० ३-३-१०७) इति लक्षणात् क्रिया स्थापना, तां वक्तुकामः स्थानमेव तावद्व्याचष्टे–स्थीयते यस्मिन् तत् स्थानं, भावकरणाधिकरणकर्मसाधनेषु अधिकरणं तावदाह वक्ष्यमाणार्थसम्बन्धात् भावः क्रिया स्थानं कर्त्रा तिष्ठता स्थीयते, ततः तन्निर्णयार्थं पृच्छति–केन स्थीयत इति, तत्प्रतिवचनविशेषावचनात् सर्वगतिरिति, इतिशब्दो हेत्वर्थे, यस्मात् सचित्तस्य देवदत्तादेरचित्तस्य वा घटादेः स्थानमिति विशेष्यानुक्तमतः सामान्यतो येन केनचित् स्थातव्यम्, यस्मिन्नित्यधिकरणस्योक्तस्य निर्णयार्थं पृच्छति–क्व च स्थीयत इति, उच्यते–आकारे स्थीयते, 'आङ् मर्यादाभिविध्योः' (पा० २-१-१३) [आ] मर्यादया करणमभिविधिनाऽभिव्याप्त्याऽऽकारः भूकृञोः सर्वधात्वर्थव्यापित्वादाकरणमाभवनमित्यर्थः, तत्राभिविधिमाचष्टे[3]–अभिविधिः परिसमापनमभिव्याप्तिः, कस्य? प्रस्तुतस्य रूपस्य–भावस्य वस्त्वात्मनः, तेनाभिविधिना प्रस्तुतरूपपरिसमापनेनाऽऽकरणमाभवनं तस्मिन् स्थान, मर्यादया वेत्यर्थमायोजयति–का

अथ स्थापनाद्रव्यार्थं व्यावर्णयति–**व्यवहारान्तरिति**। व्यवहारान्तःपातिस्थापनाविषयोऽप्यभिमतार्थसाधकं न भवतीत्यादर्शयितुं स्थापनामाहेत्याशयेन व्याख्याति–**व्यवहारनयान्तःपातिनीति**। स्थापनाद्रव्यानिरूपणकारणमाह–**स्थापनाद्रव्यार्थेति**। ष्ठा गतिनिवृत्तावित्यस्माद्धातोर्ण्यन्तात् 'ण्यासश्रन्थो युच्' इत्यनेन युच्प्रत्यये स्थापनेति रूपं भवति, तत्र तिष्ठन्तं प्रवर्त्तयति या क्रिया सा स्थापनेत्युच्यत इत्याह–**तत्र स्थानक्रियाया इति,** स्थानक्रियाया कर्त्ता इन्द्रादि, स हि तिष्ठति प्रतिकृत्यादौ, तिष्ठन्तं तं च प्रयोजयति तत्समवेता क्रिया प्रेरणारूपा ण्यन्तधातुवाच्या सा स्थापना शब्देनोच्यत इत्यर्थः। स्थानं दर्शयति–**स्थीयते यस्मिन्निति,** स्थानशब्दो भावे करणेऽधिकरणे कर्मणि च निष्पद्यते प्रकृते चाधिकरणव्युत्पत्तिसिद्धस्थानशब्दो ग्राह्यः क्व च स्थीयत इति वक्ष्यमाणप्रश्नोत्तरानुगुण्येनेत्याह–**भावेति**। भावोऽत्र कर्तृगता स्थानक्रिया ग्राह्येत्याह–**भावः क्रियेति**। कर्तारं निर्णेतुं पृच्छति **केन स्थीयत इति**। अस्योत्तरं विशेषेण वक्तव्यं सामान्यतः स्थानकर्तुः ज्ञातत्वात् परन्तु स्थानकर्त्रेति सामान्यत एव प्रतिवचनात् सर्वे एव स्थितिकर्तारो ज्ञायन्त इत्याह–**तत्प्रतिवचनेति**। सर्वगतिमेव स्फुटीकरोति–**यस्मादिति**। स्थीयते यस्मिन्निति व्युत्पत्तौ कस्मिन् स्थीयत इत्यस्योत्तरमाह–**आकार इति** स्थानकर्त्राऽऽकारे स्थीयत इत्यर्थः आकरणमाकारः, मर्यादयाऽभिव्याप्त्या वा भवनमित्यर्थमाह–**आ मर्यादयेति**। अभिविधिः पूर्णता, प्रस्तुतरूपपरिसमापनेन भवनरूपे आकारे स्थीयत इत्यर्थमाह–**अभिविधिरिति,** घटादिर्हि स्वाकृतौ स्वस्वरूपं परिसमाप्तमित्याकारः प्रस्तुतरूपपरिसमा-

१ सि. क्ष. स्थापमाज्ञाप्यनिष्टं न। २ सि. क्ष. छा. स्थानवार्तावक्तु०। ३ सि. क्ष °विध्याचष्टे। ४ सि. क्ष. छा. वेत्यर्थावयोजयति।

मर्यादा? अन्यरूपविलक्षणम्—रूपान्तरव्यावृत्तिर्नियम इत्यर्थः, न ह्यनाकारं किञ्चिदस्ति सर्वमाकारपरिग्रहेण भवति तिष्ठतीति स्थानमाकारो मर्यादाऽभिविधिभ्याम्, अस्य स्थानस्य स्वतंत्रस्थातृसमवायिनः प्रयोजके हेतुकर्त्तरि विहितो णिः, तस्य भावः क्रियाप्रकर्षयोजनाप्रयोजकत्वं हेतुकर्तृत्वं स्थापनादि।

किमुक्तम्भवति ईषत्तिष्ठतः स्थातुरेकाग्र्याधानं स्वयं तिष्ठतोऽसद्भावेन सर्वत्र विशेष्य स्थाप्यमानपरिसमाप्तं स्थानं स्वविशिष्ट आकारेऽभिव्याप्य तिष्ठति, इन्द्रोऽयं न स्कन्द इत्यादि-रूपान्तरव्यावृत्त्या मर्यादया नियतञ्च, अनिश्चितैकक्रियप्रयोज्यत्ववत्, यथा पचिपठिगम्यादि-क्रियाऽवधारणाभावेनानिश्चितक्रियं स्वतंत्रकर्त्तारं हेतुकर्त्ता पच पचेति नियुंक्ते पचावेव स्थापयति क्रियान्तरव्यावृत्त्या तत्रैव स्थाने पच्याकारे नियमयति सा स्थापना, असद्भावेन वाऽतद्रूपेऽपि स्थूणेन्द्रवत्, तदेव हि वस्तु व्यक्ताव्यक्ताकारपरिणामं स्वयं तथा तथाऽऽकृति-वद्विशेषेऽभीष्टे स्थाप्यते।

(**किमिति**) किमुक्तं भवति- ईषत्तिष्ठतो विप्रकीर्णरूपस्थानस्य स्थातुरेकाग्र्येण स्थानं—तदेकाग्र्याधानम्, तद्व्याचष्टे—स्वयं तिष्ठतोऽसद्भावेन सर्वत्रेति, अक्ष[व]राटकाद्यसमाप्ताभिप्रेताकारं स्वयमेव तिष्ठदसद्भावेन तिष्ठति, तत्तु विशेष्य स्थाप्यमानपरिसमाप्तं स्थानं स्वविशिष्ट आकारेऽभिव्याप्य तिष्ठति, इन्द्रोऽयं [न] स्कन्द इत्यादिरूपान्तरव्यावृत्त्या मर्यादया नियतञ्च, किमिवेत्यत आह--अनिश्चितैकक्रियप्रयोज्यत्ववत्, यथा पचिपठिगम्यादिक्रियावधारणाभावेनानिश्चितक्रियं स्वतंत्रकर्त्तारं हेतुकर्त्ता पच पचेति नियुंक्ते पचावेव स्थापयति, क्रियान्तरव्यावृत्त्या तत्रैव स्थाने पच्याकारे नियमयति सा स्थापना-नियमः, एवं सर्वत्र[ा]कारे सद्भावस्थापनया नियमः प्रस्तुतरूपस्य परिसमाप्त्या रूपान्तरविलक्षणतया मर्यादया वेति स्थानार्थः, तं व्याख्याय स्थापनार्थो व्याख्यातः शब्दव्युत्पत्त्या, एवं तर्ह्यसद्भावस्थापनाया नियमयितुरभावान्न व्यापिता लक्षणस्येति चेन्नेत्युच्यते मुख्यप्रतिपाद्यत्वादादौ सद्भावस्थापनेत्थं प्रतिपादिता, तत्समानं प्रतिपादनमितरस्या-

पनेन भवनरूप इति भावः। अथ मर्यादामाह—**अन्यरूपविलक्षणमिति**। निष्कृष्टार्थमाह—**न हीति,** विवक्षिताकारस्य ह्यन्य-द्रूपमविवक्षिताकारः तद्विलक्षणं व्यावृत्तं, किञ्चिदपि वस्तु नानाकारे भवतीति मर्यादार्थः, सर्वस्याकारपरिग्रहेण भवतीति अभिविध्यर्थः। स्वतन्त्रस्थातृसमवायिन एवम्भूतस्थानस्य यः प्रयोजकः स्थापयिता तस्य भावविशेषः स्थापनेत्युच्यत इत्याह—**अस्य स्थानस्येति**। भावार्थमाह—**किमुक्तम्भवतीति**। व्याचष्टे—**किमुक्तमिति,** या स्थितिः विप्रकीर्णरूपा इतस्ततः प्रसृता तस्या एकाग्र्येण व्यवस्था-पनमित्यर्थः। एतदेवाह—**स्वयं तिष्ठत** इति, यद्वस्तु यत्र क्वापि स्वाभिप्रेते तिष्ठति न मर्यादया न वाऽभिव्याप्त्या तिष्ठति किन्त्व-सद्भावेनानियमिततया, यदा तु तत्स्थाप्यमानं भवति तदा स्वविशिष्टे आकारे इन्द्र एव नान्य इत्यन्यरूपव्यावृत्तिलक्षणमर्यादया नियमेन प्रस्तुतं स्वस्वरूपपरिसमापनरूपाभिव्याप्त्या तिष्ठतीति भावः। तत्र निदर्शनमाह—**अनिश्चितेति,** अनिश्चितक्रियं कर्त्तारं प्रयोजको यथैकस्या क्रियाया नियोजयति, नियुज्यमानश्च स क्रियान्तरे शयनगमनादिभिर्व्यावृत्तः सन् पचिक्रियायामेवाभि-व्याप्य प्रवर्त्तते तद्वदिति भावः। अमुमेवाभिप्रायमाह—**यथेति**। हेतुकर्त्तुः प्रयोज्यस्य यन्नियतक्रियाया नियमनं स एव स्थापना-नियम इत्याशयेनाह—**सा स्थापना-नियम इति,** क्रियान्तरव्यावृत्तिपूर्वकं कर्त्तुरेकक्रियायां स्थापनमिति भावः। आकारे व्यवस्थापनादियं स्थापना सद्भावस्थापनेत्याह—**एवं सर्वत्रेति**। असद्भावस्थापनायामव्याप्तिमाशङ्कते—**एवं तर्हीति**। समाधत्ते—

१ सि. क्ष. छा.° मा रूपान्तर०। २ डा. क्रियाप्रकर्षयोजनाप्रयोजनरप्रयोजकत्वं। ३ सि. क्ष. डे. छा. ईषत्तिष्ठते।

मपीत्यत आह–असद्भावेन वाऽतद्रूपेऽपि स्थूणेन्द्रवत्, तदेव हि वस्तु व्यक्ताव्यक्ताकारपरिणामं स्वयं तथा तथा-[ऽऽकृ]तिवद्विशेषेऽभीष्टे स्थाप्यते–यथा स्थूणा वा संस्कृतावस्थायामप्यव्यक्ततरावयवाकारायां विशिष्यमाणा चित्रावस्थां व्यक्तावयवाकारामप्रत्यासीदती इन्द्र इति स्थाप्यते, तस्मान् सापि स्थाने नियम्यते, अतो व्याप्त्येव लक्षणम् ।

एतेनाव्यक्तताऽवस्था व्याख्यातेत्यतिदिशति–

**तथाऽक्षादिषु, तस्माद्यथा बालादिपिच्छकद्रव्यपाचकादिनामक्रियाभावभेदा विविधा उपपन्नाः सत्याश्चैवं तदाकार एक एव देवदत्तः सर्वभेदोऽपि नान्योन्यश्च, आकारपरमार्थत्वाभेदात्, एवं चित्रलेप्यपुस्तादिभेदोपपत्तावपि तथा तिष्ठतस्तस्य तस्य स्थानस्य प्रयोजनात् सा स्थापना, तत्कर्मणस्तत्त्वापत्तेरिति व्यापिता स्थापनाया इत्येवं स्याद्वादी ब्रूते, स्थापनाद्रव्यैकान्तवादिनस्तु न किञ्चिदाकारव्यतिरिक्तमस्त्यतो भ्रान्तिमात्रं भेदा इति ।**

**तथाऽक्षादिष्विति,** गतार्थम्, तस्माद्यथा बालादीत्यादि, उक्तोपपत्तिनिगमनं सभावनमुदाहरणं यावद्देवदत्तः, बालत्वस्य कारणद्रव्याणि पिच्छकादीनि, युवत्वादीनाञ्चान्यानीति द्रव्यभेद उपपन्नः, तथा पाचको लावकोऽध्यापक इत्यादिर्नामभेदः, क्रियायाः क्षायोपशमिकवीर्यात्मकत्वाद्भावभेदश्चोपपन्नः, विविधशब्दादेवमादिभेदा गृहीताः, सत्याश्चैवं द्रव्यनामभावभेदोपपत्तौ देवदत्ताकारस्याभिन्नत्वात्तदाकारो देवदत्त एकः सर्वभेदोऽपि नान्योऽन्यश्च, आकारपरमार्थत्वाभेदादिति भावयित्वा तेनोदाहरणेन दार्ष्टान्तिकेषु चित्रादिष्वपि भावयितुमाह–एवं चित्रलेप्यपुस्तादिभेदोपपत्तावपि तथा तिष्ठतस्तस्य स्थानस्य प्रयोजनात् सा स्थापना, किं कारणं ? तत्कर्मणस्तत्त्वापत्तेः–चित्रकरकर्मणस्तदिन्द्रत्वापत्तेः, पिच्छकद्रव्यपाचकादिनामभावभेदकर्मणां देवदत्ताकारत्वापत्तिवदिति व्यापिता स्थापनायाः, स्याद्वादी तु सद्भावासद्भावद्रव्यनामभावादिभेदैर्वस्तु वाञ्छन्नेवं ब्रूते, स्थापनाद्रव्यैकान्तवादिनस्तु[न]किञ्चिदाकारव्यतिरिक्तमस्ति, अतो भ्रान्तिमात्रं भेदाः ।

**असद्भावेनेति,** स्थूणादावपि चित्रादाविवेन्द्रादेर्व्यक्तनराकारस्यासद्भावेऽपि अव्यक्त आकारोऽस्त्येव सत्कालेऽसत्काले च, आकारस्यापि सद्भावादेव च स्थान एव नियम्यत नातो नियमयितुरभावाल्लक्षणमव्यापीति भाव । तुल्यऽऽगन्तिताकारत्वक्षादिष्वपि नास्त्यव्याप्तिरित्याह–**तथाऽक्षादिष्विति ।** स्थापनाया द्रव्यत्वमुपदर्शयति **तस्माद्यथेति,** नामभेदे द्रव्यभेदे भावभेदे सत्यपि चाऽऽकारलक्षणस्थापनाया एकत्वादेक एव देवदत्त उच्यते तत्र बाल्ययौवनाद्यवस्थानि द्रव्याणि पिच्छकादय इति द्रव्यभेद, पाचकोऽयं लावकोऽयमध्यापकोऽयमित्येव नामभेदा क्षायोपशमिकवीर्यात्मकक्रिया भावभेद, एव सत्यपि द्रव्यादिभेदे देवदत्ताकारस्यैकत्वादेक एव देवदत्तो भवति नान्योन्य इति भाव । तदेवं नामादिभेदेऽपि तिष्ठतो देवदत्ताऽऽकारस्य यथा प्रयोजक तथा चित्रादावपीति दार्ष्टान्तिकं भावयति–**एवं चित्रलेप्येति,** चित्रकराद्यालिखितं चित्रम्, दुहितृकादिसूत्रचीवरादिविरचितं पुस्तम्, एते सद्भावस्थापनारूपा, अक्षादयोऽसद्भावस्थापनारूपा बोध्या । हेतुमाह–**तत्कर्मण इति,** इन्द्रसमवेतस्थानक्रियाप्रयोजकचित्रकरादिनिष्ठकर्मण इन्द्रत्वापत्तेरित्यर्थ । पूर्वोदितदेवदत्तदृष्टान्तमाह–**पिच्छकद्रव्येति,** यथा पिच्छकादिद्रव्यभेदा पाचकलावकादिनामभेदा, क्षायोपशमिका वीर्यात्मकक्रियाभेदा देवदत्ताकारत्वमापद्यन्ते तथा चित्रकरादिकर्माणि इन्द्रत्वमापद्यन्त इति भाव । अत्र मतभेदमादर्शयति–**स्याद्वादी त्विति,** नामस्थापनादिभेदविशिष्टं वस्तु स्याद्वादिना मते परमार्थ इति भाव । आकारव्यतिरेकेण पदार्थानामवगमासम्भवात् पदार्थमात्रस्याकारव्याप्यत्वेनाकृतिरेव मुख्यं तत्त्वं तद्व्यतिरिक्तस्य कस्यचिद्वस्तुनोऽनाकृतेर्ज्ञानोपायाभावेनासत्त्व शशशृङ्गादिवदिति आकृतिमात्रमेव द्रव्यमुच्यत इति एकान्तनयो मन्यत इत्याह–**स्थापना द्रव्येति ।**

---

१ सि. क्ष. छा. °तदाकारत्वोदे० । २ सि. क्ष. छा. °भेदवत्ववस्तु ।

एषा च स्थापना निक्षेपानुयोगद्वारान्तर्गताऽर्थेन अभिहिता, तस्मात् स्थापनया निक्षेप इति तृतीयासमासे स्थापनानिक्षेप इत्यस्य व्याख्यानार्थमाह–

**स्थापना सद्भावासद्भावाभ्यां वस्तु निक्षिपति, अतद्भूतात्मकं वस्तु तद्भावमापादयत्यात्मानमात्मनेत्युक्तं भवति, पुरुषान्नामकर्मणो देवदत्तादितावत्, यथा पुरुषो नामकर्मप्रागमूर्त्तात्मा लक्षणतः सत्तात्मा कर्मत्वेन मूर्त्तात्मना परिवर्त्तते आभवति ततश्च नामकर्मणो देवदत्तादिता तथा चित्रकरादिः, तत्रात्मवदतथाभूतस्य तथात्वापादनात्तदेकता चित्रकर्मादिदेवदत्तस्य ।**

( **स्थापनेति** ) स्थापना सद्भावासद्भावाभ्यां वस्तु निक्षिपति–सद्भावेनासद्भावेन च स्वात्मनि वस्तु स्थापयतीत्यर्थः, अतद्भूतात्मकं वस्तु तद्भावं–आकारात्मानमापादयत्यात्मानमात्मनेत्युक्तम्भवति, किमिव ? यथा पुरुषो नामकर्मप्रागमूर्त्तात्मा लक्षणतः सत्तात्मा कर्मत्वेन मूर्त्तात्मना परिवर्त्तते आभवति ततश्च नामकर्मणो देवदत्तादिता–तस्मादुपात्ता[त्]कर्मणो नारकतिर्यग्योनिदेवदत्ताख्यमनुष्यत्वापत्तिरेव दृष्टान्तः, दार्ष्टान्तिकः–तथा चित्रकरादिरित्यादि, तद्व्याख्या–तत्रात्मवदतथाभूतस्य तथात्वापादनात्तदेकता चित्रकर्मादिदेवदत्तस्येति–यथा जीवकर्मणोरन्योन्यात्मापत्त्या भिन्नाभिमतयोरेकत्वापत्तिराख्याता तथा चित्रगतवर्णकादिदेवदत्तत्वापत्तिरपीत्यर्थः, अथवाऽभ्युपगच्छामो जीवकर्मणोरपि भेदम्, एक एव जीवाख्योऽर्थः पारिणामिकजीवभव्याभव्यत्वादिभावापत्तिपरिणामः, क्षायोपशमिकौदयिकादिपरिणामश्चैकद्वित्रिचतुरिन्द्रियतिर्यङ्नारकादिः सर्व एव देवदत्तः कर्मात्मैकत्वादिति दृष्टान्तः, महाश्वेतत्वादिदेवदत्ताकाराभेदश्चित्रेऽपीति दार्ष्टान्तिकोऽर्थः ।

कर्मण स्थापनात्मकत्वात्तन्निक्षेपानुयोगद्वारमनुसृत्य, एषा च स्थापनानिक्षेप इति पदस्य स्थापनया निक्षेप इति तृतीयासमास कार्य इत्याह–**एषा चेति ।** तृतीयासमासार्थमाह–**स्थापनेति ।** व्याचष्टे–**सद्भावेनेति,** स्थाप्यमानवस्त्वाकृतिसद्भावेन तदसद्भावेन वा स्वतोऽत्यन्तभेदरहिते वस्तुनि इन्द्रादिवस्तु स्थापयतीत्यर्थः । स्वतोऽत्यन्तभेदरहितत्वमेवोपदर्शयति–**अतद्भूतात्मकमिति,** एतेन कथंचिद्भेद आदर्शित, साक्षादिन्द्रादिरूपत्वाभावात् काष्ठचित्रादे, आकारात्मानमिति कथंचिदभेदो दर्शित., **अन्यथा** कुड्यादिवस्तुनस्तत्प्रतिकृतिरेव न स्यादिति भाव. । तत्र निदर्शनमादर्शयति–**यथा पुरुष इति,** देवदत्तादिनामकर्मण प्राक् सत्स्वरूपोऽमूर्त्त पुरुषो नामकर्मणा देवदत्तादिर्भवति एवञ्च पुरुषो नामकर्मण प्रभावात् नारकोऽयं तिर्यगयं देवदत्तादिरूपो मनुष्योऽयमिति तत्तद्रूपतामापद्यते, तस्मान्नामकर्मणा पुरुषस्य नारकतिर्यग्योनिदेवदत्ताख्यमनुष्यत्वापत्तिरिति स्थापनयाऽतद्भूतात्मकं वस्तु तद्भावमापादयत्यात्मनाऽऽत्मानमित्यर्थे दृष्टान्त इति भाव । दार्ष्टान्तिकमर्थं व्याचष्टे–**तत्रात्मवदिति,** पुरुषस्येव देवदत्तवस्तुनश्चित्रगतस्य देवदत्तत्वापत्तिरिति भाव । तमेव भावमाह–**यथा जीवकर्मणोरिति,** व्याख्येय जीवकर्मणोर्भिन्नयोरेकत्वापत्तिमभ्युपगम्य, एकत्वापत्तिमनभ्युपगम्यापि व्याचष्टे–**अथवेति,** त्वप्रत्ययस्य प्रत्येकमभिसम्बन्धा जीवत्वं–जीवभाव स्वार्थे भावप्रत्यय., असङ्ख्येयप्रदेशा चेतनैव जीवत्वम्, भव्या सिद्धिर्यस्यासौ भव्य उत्तरपदलोपो भीमादिवत्, भव्य एव भव्यत्वम्, अभव्य. सिद्धिगमनायोग्यः, स एवाभव्यत्वम्, एते त्रय. पारिणामिकाभावा स्वाभाविका न कर्मकृता उच्यन्ते, कर्मण. क्षयोपशमाभ्या निर्वृत्त. क्षायोपशमिको भाव ज्ञानाज्ञानाद्यष्टादशभेद, कर्मविपाकाविर्भाव उदय तत्प्रयोजनस्तन्निर्वृत्तो वा परिणाम. औदयिकः गत्याद्येकविंशतिरूपः, सर्व एवैते जीवाख्य एकोऽर्थ स एव च देवदत्तत्वमापद्यन्ते कर्मात्मनोरभेदादिति दृष्टान्तार्थ । दार्ष्टान्तिकार्थमाह–**महाश्वेत-**

१ सि. क्ष. डा. पुरुषात्समकर्म । २ सि. 'लक्षणत. सत्तात्मा' इति नास्ति । क्ष. वक्षणतः सत्तात्मा । ३ सि. क्ष. डा. °ख्यमन्यत्वा० । ४ सि. क्ष डा चरित्रकरादि । ५ क्ष. तमवदतथा० । सि इत्वात्मवदतथा० ।

तद्दर्शयति–

**यथा च जीवत्वादि तत्पूर्वरूपं अव्यक्ताकारं सततं तिष्ठत् स्थाप्यते तथा पुद्गलानामपि वर्णादिपारिणामिका भावा अतस्तयोरेकता, आकारतत्त्वैकत्वात् ।**

**यथा च जीवत्वादि तत्पूर्वरूपमित्यादि** दण्डको गतार्थः, अथवा जीवस्य कर्मपुद्गलानामपि नास्ति परस्परतो भेदो धर्माभेदादित्यत आह–यथा च जीवत्वं तत्पूर्वं जीवपूर्वं पारिणामिकेन चैतन्येन सर्वपरिणामाभिमुखेनाव्यक्ताकारमसद्भावस्थापनं सततं तिष्ठन् स्थाप्यते तथा पुद्गलानामपि वर्णादिपारिणामिका भावा असद्भावस्थापनेन महाश्वेता सिन्दूरादिवर्णकजातम् , अतस्तयोरेकता, कस्मात्? आकारतत्त्वैकत्वात् बुद्ध्या क्रियमाणत्वेनाभेदात् तत्परिणामात्मकत्वात् तथा तथा स्थाननियमादभेद इति ।

अत्र चोदयति–

**यदि स्थापनया व्यतिरिक्तार्थस्वरूपं स्थाप्यं वस्त्वापद्यते ततः कस्मात् स्थाप्यवस्तुस्वरूपं उद्देश्योऽर्थो नापद्यते ? इन्द्रतामक्षादिरापद्यते नाक्षतामिन्द्र इत्यत्र को विशेषहेतुः ? अत्रोच्यते नन्वसावपीन्द्रनामगोत्रकर्मस्थाप्यत्वात् स्थापनानिक्षेपात्मकतां नातिवर्त्तते, तस्मात् स्थापनानिक्षेपत्वे सत्येव जीवकर्मणोर्योगवक्रादिपरिणामवैचित्र्यं व्यक्providedाव्यक्ताकारवैश्वरूप्यं न न युज्यते ।**

**यदि स्थापनयेत्यादि,** अयमभिप्रायः–यदि स्थाप्याकारानाकारवस्तुनोऽतिरिक्तस्योद्देश्यस्य देवदत्तस्य स्वरूपं चित्रादि स्थाप्यवस्त्वापद्यते ततस्तद्वत् चित्रादिः स्थाप्यस्य स्वरूपं कस्मान् देवदत्तादिरुद्देश्योऽर्थो नापद्यते, तुल्ये स्थापयितृवशात् व्यतिरिक्तार्थस्वरूपापत्तिहेतुत्वे स्थापनायाः, तथेन्द्रतामक्षादिरापद्यते, नाक्षतामिन्द्र इत्यत्र को विशेषहेतु ? इति सद्भावासद्भावस्थापनयोश्चोदयमेतत् , अत्रोच्यते–नन्वसावपीत्यादि यावन्न न युज्यते, नैतदनिष्टम् , इष्यत एवैतदतो न दोषः, यथा चित्रलेप्यादिस्थाप्यमिन्द्रोद्देशेनेन्द्रो भवति तथेन्द्रोऽप्यक्षादिर्भवति, अपि च[ा]मा[व]पीन्द्रनामगोत्रकर्मस्थाप्यत्वात् स्थापनानिक्षेपात्मकतां

त्वादीति, आदिना सिन्दूरादिवर्णकजातमादेयम् , इदमेव व्याचष्टे–**यथा चेति** । व्याचष्टे–**यथा च जीवत्वादीति,** जीवभव्याभव्यत्वादिपरिणामवानेक एव जीव यथाऽसद्भावस्थापनया देवदत्तत्वादीनि प्राप्नोति तथा पुद्गलवर्णपरिणामभूता महाश्वेतसिन्दूरादिभावा असद्भावस्थापनया देवदत्तत्वमापद्यन्ते बुद्ध्या आकारस्य देवदत्तत्वस्य च स्थाप्यस्थापकभावस्य क्रियमाणत्वेनाभेदात् स्थाप्यस्थापकयोश्च परिणामपरिणामिभावात् काष्ठपुस्तचित्राक्षादिस्थाननियमाच्च तयोरभेद इति भाव प्रतिभाति । ननु देवदत्तादि आकारेऽनाकारे वा वस्तुनि चित्राक्षादौ स्थाप्यत इति चित्रादि देवदत्तस्वरूपमापद्यत उच्यते, तथैवमविशेषाद्देवदत्तादि चित्रादिस्वरूप कुतो नापद्यत इत्याशङ्कते–**यदि स्थापनयेति** । व्याचष्टे–**अयमभिप्राय इति,** स्थाप्यो देवदत्तादि , तस्याकारभूतादनाकारभूताद्वा चित्रादेर्व्यतिरिक्तस्य–भिन्नस्य स्थापनाया उद्देश्यभूतस्य देवदत्तादे स्वरूपमित्यर्थ , अविशिष्टत्वमेव हेतुत्वेनाह–**तुल्य इति,** स्थापनाया हेतु स्थापयित्रा उद्देश्यभूतदेवदत्तादिव्यतिरिक्तवस्तुस्वरूपापादन, तच्च व्यतिरिक्तार्थस्वरूपापादनं चित्रादिवद्देवदत्तादावप्यस्त्येवेति तुल्यत्वमिति भाव. । सद्भावस्थापनायामापत्तिमुक्त्वाऽसद्भावस्थापनायामपि तामाह–**तथेन्द्रतामिति** । परस्परस्वरूपापत्तावनिष्टापत्ति करोति–**नैतदनिष्टमिति** । इन्द्रादिरपि स्थापनानिक्षेपात्मकता नातिवर्तते, प्रागमूर्तात्मन. पुरुषात् नामकर्मणो देवदत्तादितायाः प्रागुक्तत्वादित्याह–**असावपीति** ! पुरुषेऽपि नामकर्मणो नामकर्मण्यपि पुरुषस्य स्थापना स्यादेव,

१ भा. × × ।

नातिवर्त्तते, पुरुषान्नामकर्मणो देवदत्तादितेत्यादि ग्रन्थेन भावितत्वात्, तस्मात् स्थापनानिक्षेपत्वे सत्येव जीवकर्मणोः योगवक्रादिपरिणामवैचित्र्यं [व्यक्ता]व्यक्ताकारवैश्वरूप्यमभिहितचित्रलेप्यादिदृष्टान्तसाधर्म्यं नातिवर्त्तते, अतो युज्यत एवैतत्, न न युज्यते, द्विः प्रतिषेधस्य प्रकृत्यापत्तेः, एवंतावत् स्थापनया निक्षेप इति तृतीयासमासे स्थापनानिक्षेपद्रव्यार्थनयव्यापिता दर्शिता ।

**अथ च स्थापनाया निक्षेप इति कर्मणि षष्ठीं कृत्वा समासः, किं कर्म? स्थापनैव, का सा? आकारः, कोऽसौ? वस्त्वात्मा, स एव निक्षिप्यते, क्व? स्वात्मनि, कः? घटादिः, केन? कुम्भकारादिभिरिति, मुमुक्षुभिरात्मा कर्मामिश्रः स्वात्मनि, अविविक्तः सन् विविक्तरूपत्वेन, तथेन्द्रोऽपि प्रदर्श्यते, न हि तदाकारमन्तरेणेन्द्रः, घट इव विकुक्षित्वादिविनाभूत इति ।**

**अथ चेत्यादि,** षष्ठीसमासेऽपि दर्शयितुमाह–स्थापनाया निक्षेप इति समासः कर्मणि षष्ठीं कृत्वा, किं कर्म? स्थापनैव, का सा स्थापना? आकारः, कोऽसावाकारः? वस्त्वात्मा, स एव निक्षिप्यते, क्व? स्वात्मनि, कः? घटादिः, केन? कुम्भकारादि[भि]रिति व्याख्यातः षष्ठीसमासार्थोऽपि वस्तुतः प्रस्तुतः, तद्व्यापकत्वप्रदर्शनार्थमाह–मुमुक्षुभिरात्मा स्वात्मनि, निक्षिप्यत इति वर्त्तते, कीदृश इति चेत्–कर्मामिश्रः, स्थाप्यते स्वाकारेऽविविक्तः सन् विविक्तरूपत्वेन, तथेन्द्रोऽपीत्यादि, अविविक्तविविक्तस्थानलक्षणस्थापनानिक्षेपात्मकत्वं जगतः प्रत्यक्षीक्रियते, व्यापित्वाल्लक्षणस्यास्य इन्द्रानिन्द्रयोर्विवेकमजानतां पुंसां स इन्द्रः साक्षात् प्रदर्श्यते, कस्मात्? यस्मान्न तदाकारमित्यादि, नयनशबलवर्ष्मताद्याकारमन्तरेणेन्द्राभावात्, तदाकारतत्त्व एवेन्द्र इत्युक्तत्वात्, किमिव? घट इव विकुक्षित्वादिविनाभूतः, यथा घटो विकुक्षित्वाद्याकारादृते नास्ति तदात्मक एवास्ति तथेन्द्रोऽपि स्वाकारविनाभूतो नास्ति, तदात्मैवास्तीति ।

पुरुषनामकर्मणोरन्योऽन्यापादानमन्तरेण शुभाशुभानमितयोगवक्रादिपरिणामासम्भवेन काद्रवेयादिरूपादि वैश्वरूप्यमात्मनो न स्यादित्याह–**पुरुषादिति** । अन्योन्यरूपापत्ति पुरुषनामकर्मणोर्युज्यत एव न युज्यत इति नेत्ययोगव्यवच्छेदमाह–**अतो युज्यत इति** तृतीयासमासपक्षमुपसंहरति–**एवं तावदिति** । स्थापना कुम्भकारादिभिर्निक्षिप्य, इत्यर्थे स्थापनाया निक्षेप इति कर्मणि षष्ठी विधाय समासे स्थापनानिक्षेप इति भवतीति तत्पक्षाश्रयेण तं निरूपयति–**अथ चेति** । व्याचष्टे **षष्ठीसमासेऽपीति । कर्मणि षष्ठीं** कृत्वेति, कर्मादेकार्थसमवायिनि फलभूते शेषे षष्ठीं कृत्वेत्यर्थः । वस्त्वात्मलक्षणाकार एव निक्षेपणकर्मभूता स्थापनेत्याह– **किं कर्मेति** । कुम्भकारादिकर्तृकं घटादिस्वरूपाधिकरणकं निक्षेपणमित्याह–**क्व स्वात्मनीति** । कुम्भकारादिकर्तृकघटादिस्वात्माधिकरणकनिक्षेपणस्य षष्ठीसमासार्थस्याप्यत्र समासे सम्भवोऽस्तीत्याह–**व्याख्यात इति** । कर्मषष्ठीसमासार्थस्य व्यापकत्वप्रदर्शनाय दृष्टान्तान्तरमाह–**मुमुक्षुभिरिति,** मुमुक्षुभिः कर्मासम्पृक्त आत्मा स्वात्मनि कर्माभिन्नोऽपि भिन्नत्वेन स्थाप्यत इति लक्षणस्य व्यापनाद्व्यापित्वमस्तीति भावः । सामान्यस्वरूपेऽभेदात्मनि द्रव्ये विशेषाणां सर्वेषां कथञ्चिद्भेदरूपेण व्यवस्थापनेन द्रव्यपर्यायात्मकत्वाज्जगतस्तद्रूपेणैव प्रत्यक्षविषयत्वमस्तीत्याह– **अविविक्तेति** । प्रत्यक्षविषयत्वमेवादर्शयति–**इन्द्रानिन्द्रयोरिति** । तत्र हेतुमाह–**यस्मादिति,** इन्द्रव्यपदेशयोग्याकारस्य तत्र सद्भावादिति भावः । न ह्याकारव्यतिरेकेण किमपि वस्तु भवितुमर्हतीति द्रढयितुं निदर्शनमाह–**घट इवेति** । स्थापनाया निक्षेप इति सप्तमीतत्पुरुषसमासाश्रयेणाह–

**१ सि. क्ष. डे. छा. प्रस्तुतो व्यापिकत्व प्र० । २ सि. क्ष. छा तदाकारेत्यादि ।**

**अथ वा स्थापनायां निक्षेपो न नाम्नि, यतो नामापि सहार्थेन तत्तत्तंत्रमेव, स्थानकरणजन्मानो वर्णाः सङ्गत्योच्चरन्तः सुप्तिङन्तादिविशेषाकाराः, पुद्गलाश्च नामाख्यातवाच्यद्रव्यक्रियार्थाकाराः, सर्वं भूताकारतत्त्वस्थापनाविपरिणामविजृम्भितमात्रम् , तदभावे शब्दार्थयोरभावात् , एवं तावन्नामनिक्षेप उक्तः ।**

**अथ वा स्थापनायामित्यादि,** सप्तमीसमासो वा स्थापनायां निक्षेपः स्थापनानिक्षेप इति, एवकारार्थो द्रष्टव्यः, तद्व्याचष्टे—न नाम्नि—न शब्दे निक्षिप्यते, किं तर्हि ? स्थापनायामेव निक्षिप्यते, कस्मादिति चेदत आह—यतो नामापि सहार्थेन तत्तत्तंत्रमेव[1]—आकारतंत्रमेव शब्दोऽर्थश्च[2], तद्भावयति—**स्थानकरणे**त्यादि, अकारादयो वर्णाः प्रतिनियतकंठादि[3]स्थानकरणजन्मानः सङ्गत्या—नैरन्तर्येणोच्चरन्तः सुप्तिङन्तादिविशेषाकाराः, पुद्गलाश्च नामाख्यातवाच्यद्रव्यक्रियार्थाकाराः, सर्वं[4] सद्भूताकारतत्त्वस्थापनाविपरिणामविजृम्भितमात्रम् , किं कारणं ? तदभाव इत्यादि, आकाराभावे शब्दार्थयोरभावात्-आकाराग्रहणे चैतयोरग्रहणात् , एवं तावन्नामनिक्षेपः स्थापनानिक्षेपान्तर्भूत उक्तः ।

द्रव्यनिक्षेपोऽपि स्थापनान्तर्भूत इति ब्रूमः तद्यथा—

**द्रव्यमपि स्थापनानिक्षेप एव, आकारमयत्वात् , यथा श्रीपर्णीदारु द्रव्यं तस्य तस्यान्तर्लीनाकारम् , भावोऽपि क्रियोपयोगरूपादिनीलादिशिवकादिरूपभेदैः साकार एव, एवं निक्षेपत्रयं स्थापनानिक्षेप एव रूपान्तरव्यावर्त्तनेन रूपान्तरकरणात्मकस्थापनास्वरूपानतिक्रमात् ।**

**द्रव्यमपीत्यादि,** द्रव्यनिक्षेपोऽपि स्थापनानिक्षेप एव आकारमयत्वाद्द्रव्यस्य, यथा श्रीपर्णीदारु द्रव्यंकारणमन्तर्लीनाकारं तस्य तस्याऽऽकारविशेषस्य तदव्यक्तसामान्यनिक्षेपः तथाऽऽकारसम्परिग्रहमात्रमिति

**अथवेति ।** सर्वं वाक्यं सावधारणमिति न्यायेनैवकारोऽत्र विगत इत्याह—**एवकारार्थ इति,** नामद्रव्ययोर्न निक्षेप इति परव्यवच्छेदो लभ्यते, तस्मान्नामद्रव्यनिक्षेपयोः स्थापनानिक्षेपान्तर्गतत्वमेव, न तु पार्थक्यमिति भावः । तत्र प्रथमं न नाम्नि निक्षिप्यत इति दर्शयति—**न नाम्नीति ।** तत्र कारणमाह—**यतो नामापीति,** शब्दार्थयोराकाराधीनत्वादित्यर्थः । शब्दस्याऽऽकृतितन्त्रत्वं स्फुटयति—**स्थानकरणेति,** स्थानं कण्ठताल्वादि, करणमन्तःकरणम् , तत्र प्राणो बुद्धितत्त्वेन अन्तराविष्ट ऊर्द्ध्वमभिप्रसृत तत्तत्स्थानेषु सम्बद्धा शब्दपरमाणूनकारादिरूपेण मिश्रतया परिणमयति, ते च वर्णाः तत्तदर्थप्रकाशनयोग्यतयाऽध्यवसानेनोच्चरन्तो घटमिति सुबन्तपदत्वेनाऽऽनयति तिङन्तपदत्वेन च परिणमन्ति, तस्मात् सुबन्ताकारत्वं तिङन्ताकारत्वं पौद्गलिकस्य नामद्रव्यस्य घटादेः पृथुबुध्नोदराद्याकारवदक्षतमेवेति भावः । शब्दस्य नामाख्यातरूपस्य सुबन्ततिङन्तादिर्विशेष आकारः, सामान्याकारश्च तद्वाच्यभूते द्रव्यक्रिये, वाच्यवाचकयोस्तादात्म्यात् , सर्वं चैत आकाराः सद्भावस्थापनापरिणामा इत्याह—**सुप्तिङन्तादीति ।** न हि निराकारः कश्चिच्छब्दोऽर्थो वा गृह्यत इत्याह—**आकाराभाव इति ।** नामनिक्षेपं स्थापनानिक्षेपे आकारत्वादन्तर्भावयित्वा द्रव्यनिक्षेपोऽपि तदन्तर्गत एवेत्यादर्शयति—**द्रव्यमपीति ।** व्याचष्टे—**द्रव्यनिक्षेपोऽपीति ।** यदाकारमयं तत्सर्वं स्थापनानिक्षेप एवेति हेतुमाह—**आकारमयत्वादिति**—आकारप्रचुरत्वादित्यर्थः । परिणामा हि सर्वे परिणामिनि साधनाभिव्यक्तिप्राक्कालेऽव्यक्ताकारास्तिष्ठन्तीति द्रव्यं तेषामव्यक्तस्थापनानिक्षेपविषयत्वात्स्थापनैवेत्याह—**यथा श्रीपर्णीति ।** भावनिक्षेपमप्यन्तर्भावयति—

---

१ सि. क्ष. छा. तत्र तंत्रमेव । २ शब्दार्थश्च । ३ सि. क्ष. कंठादिताल्वा० । ४ सि. क्ष सर्वेऽद्भूता० ।

स्थापनैव द्रव्यमपि, एवं नामद्रव्यनिक्षेपौ स्थापनानिक्षेप एव, भावोऽपीत्यादि, भावनिक्षेपोऽपि स्थापनैव, आगम[तो नोआगमत]श्च, आगमतस्तत्प्राभृतज्ञ उपयुक्त इत्युपयुक्तो भावः पारिणामिकः, क्षायोपशमिकश्चेष्टा जीवस्य वीर्यान्तरायक्षयोपशमजो भावः, पुद्गलानान्तु रूपादिर्युगपद्भावी पारिणामिको भावः, नीलादिर्वा तद्विशेषः, शिवकाद्ययुगपद्भावी वेत्येवमादिरूपा भेदा यस्य सोऽयं क्रियोपयोगरूपादिनीलादिशिवकादिरूपभेदो भावः साकार एव–आभवनमेव पूर्वोक्तविधिना, एवं निक्षेपत्रयं स्थापनानिक्षेप एव संक्षेपतः, रूपान्तरव्यावर्त्तनेन रूपान्तरकरणात्मकस्थापनास्वरूपानतिक्रमात् ।

एतल्लक्षणानुगृहीतत्वादसद्भावस्थापनाऽव्यक्ताकारसती स्थापनेत्यापादयितुकामः पराशङ्कानिवृत्त्यर्थमाह–

**अक्षाद्यसद्भावस्थापनायामपि रूपान्तरञ्चेद्व्यावर्त्य रूपान्तरं न कुर्यादिन्द्रादेरक्षनिक्षेपप्रतिपाद्यस्यावरोधः स्यात् तस्मादविरुद्धाभिप्रेताकारे वृत्तो नाम्ना इन्द्र इति बुद्ध्या वाऽध्यारोपस्तत्कर्मणः, द्रव्यार्थस्थापनेन्द्रस्थूणावत्, एतत्तत्त्वाध्यवसायादेव लिङ्गसमाचारदेवताप्रतिमानमस्करणादि लोके रूढत्वात् स्थापनैव सर्वमिति स्थापनाद्रव्यार्थनयमतमुक्तम् ।**

**अक्षाद्यसद्भावेत्यादि,** अत्रापि रूपान्तरञ्चेद्व्यावर्त्य रूपान्तरं न कुर्यात् रूपान्तरस्येन्द्रादेरक्षनिक्षेपप्रतिपाद्यस्यावरोधः-प्रतिपत्तिर्न स्याद्भवितुम्, तस्मादविरुद्धाभिप्रेताकारे वृत्तो नाम्ना–शब्देनेन्द्र इति बुद्ध्या वाऽध्यारोपः तत्कर्मणः अक्षनिक्षेपस्थापनाकर्मणः, किमिव ? द्रव्यार्थस्थापनेन्द्रस्थूणावत्–यथा रूपा-

---

**भावनिक्षेपोऽपीति ।** चेतनाचेतनयोरपि भावरूपस्य साकारत्वाविनाभावित्वात् स्थापनान्तर्गतत्वमेवेति दर्शयति–**आगमत इति** प्राभृतज्ञस्तत्र उपयुक्तश्च जीव उपयोगरूप, प्राभृतं पूर्वान्तर्गतं यो जानाति स प्राभृतज्ञ, तथोपयोगयुतश्च, **अनुपयुक्तस्य** भावत्वानुपपत्तेः, अनुपयुक्तो द्रव्यमिति लक्षणात्, उपयोगात्मा जीवश्च जीवत्वस्य पारिणामिकत्वात् पारिणामिक उच्यते, **चेष्टा** च वीर्यान्तरायक्षयोपशमजन्यत्वेन क्षायोपशमिको भावश्चेतनस्य, पौद्गलिकानान्तु भाव पारिणामिक एव, तत्र सहभाविनो रूपादयस्तद्विशेषाश्च नीलादयो भावा, क्रमभाविनश्च शिवकस्थासकादयः, सर्वे चैते भावा साकारा एव यत एव चैते प्रस्तुतरूपपरिसमापनेन रूपान्तरव्यावृत्त्या च भवन्ति अत एव स्थापनास्वरूपं नातिक्रामन्तीति भाव । नामद्रव्यभावनिक्षेपाणां स्थापनात्वमेव प्रकटयति–**एवं निक्षेपत्रयमिति ।** ननु रूपान्तरव्यावृत्त्या प्रस्तुतरूपपरिसमापनेन च भवनमेतेषां स्थापनात्वं कुतः ? न ह्याकारमात्रं स्थापनेत्यत्राह–**रूपान्तरेति,** स्थूणादौ ह्ययमिन्द्र इति स्थाप्यते स्थूणात्वादिलक्षणरूपान्तरव्यावर्त्तनेनेन्द्रत्वादिरूपान्तरत्वमापाद्यत इति स स्थापनया इन्द्र उच्यते तथैवैतेऽपीति भाव । असद्भावस्थापनायामप्येतल्लक्षणं व्यापकमिति प्रदर्शयितुं विचारयति–**अक्षादीति** रूपान्तरव्यावृत्तिपूर्वकरूपान्तरकरणलक्षणस्थापनाया अक्षादावनङ्गीकारेऽक्षादाविन्द्रादीनां या प्रतिपत्तिर्लोकेऽनुभूयते तस्याः प्रतिबन्धः स्यादिति व्याचष्टे–**अत्रापीति** असद्भावस्थापनाविषयीभूताक्षादावित्यर्थ, तथा चाकार एव न स्थापनानिक्षेपनियामकः, किन्तु अभिप्रायाकारान्यतरसम्बन्धवत्त्वं तन्नियामकम्, सद्भावस्थापनायामाकारसम्बन्धोऽसद्भावस्थापनायामभिप्रायसम्बन्धः प्रयोजक इति भाव । **तस्मादविरुद्धेति,** बलवदनिष्टाननुबन्धीष्टसाधनताकेत्यर्थः, अभिप्रेताकारे–तद्गतगुणस्मृतिजनकसंस्कारोद्बोधकाभिप्रायविषयीभूते आकारे प्रवृत्त इन्द्रादिशब्देनेन्द्रादिबुद्ध्या वाऽध्यारोप । एवञ्चाऽऽगमबोधितबलवदनिष्टाननुबन्धीष्टसाधनताकतद्गतगुणस्मृतिजनकसंस्कारोद्बोधकाभिप्रायाऽऽकारान्यतरसम्बन्धवत्त्वं स्थापनाया रूपान्तरव्यावृत्तिपूर्वकरूपान्तरकरणलक्षणायाः प्रयोजकमिति ध्येयम्, स्थापनानिक्षेपे नामनिक्षेपस्यान्तर्गतत्वात् नाम्नाऽऽरोपः भावनिक्षेपस्यान्तर्गतत्वाद्बुद्ध्याऽऽरोप इत्युक्तम्, द्रव्यनिक्षेपस्यापि तदन्तर्गतत्वेन दृष्टान्ततयोद्भावितम्, अत्र पक्षे प्रयोजकत्वेऽदावागमबोधितत्वं न देयम्, तत्र स्थापनाव्यतिरिक्तत्वेन तेषामभिधानादिति । दृष्टान्तं स्फुटयति–**यथा रूपान्तरेति ।** एतन्नयमतेन लोकसंवादं दर्शयति–

न्तरव्यावृत्त्या रूपान्तरकरणाद्द्रव्यार्थस्थापनेन्द्रार्था स्थूणा इन्द्रस्तथाऽक्षादिरिति, एतत्तत्त्वाध्यवसायादेव लिङ्गसमाचारदेवताप्रतिमानमस्करणादि लोके, नैतदुपपत्त्या प्रतिपाद्यं स्थापनैव सर्वमिति, लोके रूढत्वात्, तथाहि पाषंडिनां लिङ्गग्रहणानि, यथाऽऽगममाकारविशेषप्रसिद्धः, तत्सहचारिणो नियमाः, अर्हद्रुद्रेन्द्रबुद्धादिदेवताप्रतिमास्थापनानि, तन्नमस्कारजपस्तुतिबलिमाल्यादिभिरभ्यर्चनानि च प्रतिविशिष्टाकारनिबन्धनानि दृष्टानि, न हि दृष्टाद्गरिष्ठं प्रमाणमस्तीति, एवं स्थापनाद्रव्यार्थनयमतमुक्तम् ।

**अत्रापि विशेषाकारस्य परमार्थस्यैकभवनस्य स्थापनानिक्षेपे कार्ये सामान्याकार उपसर्जनं प्रधानस्य परमार्थस्य, उपकारित्वात्, पाण्यङ्गुलित्वगस्थिसंधिवर्णरेखावयवपरमाणुरूपादिभेदेष्विव प्रत्येकं विशेषतत्त्वभवनस्य, इतरदुपसर्जनम्, परमार्थतस्तु तदन्त्यविशेषतत्त्वमविकल्प्यमस्तीति न तानि पाण्यादीनि स्वरूपतः, कुतस्तेषां स्थापना ? क्षेत्रतो युगपद्भावविपर्यायेषु विशेषव्यतिरेकेणार्थाभावात्, कालतोऽपि बालाद्ययुगपद्भावविपर्यायेष्वेकं परमार्थ इति कथं स्थापना क्रियतां कस्य वा ? ।**

**अत्रापीत्यादि,** अस्यापि नयस्योत्तरमिदम्, आकारोऽपि द्विविधः सामान्याकारो विशेषाकारश्च, तत्र विशेषाकारः स्वरूपमेव परमार्थो न सामान्याकारः, तस्य परमार्थस्यैकभवनस्य स्थापनानिक्षेपे कार्ये सामान्याकारो-द्रव्यार्थ उपसर्जनम्, प्रधानस्य परमार्थस्य सद्भावस्यासद्भावः, उपकारित्वात्, पाण्यङ्गुलित्वगस्थिसंधिवर्णरेखावयवपरमाणुरूपादिभेदेष्विव प्रत्येकं विशेषतत्त्वभव[न]स्य, इतरदुपसर्जनम्, परमार्थतस्तु तदन्त्यविशेषतत्त्वमविकल्प्यमस्ति न तानि पाण्यादीनि स्वरूपतः कुतस्तेषां स्थापना, द्रव्य[तः], तथा क्षेत्रतो युगपद्भावविपर्यायेषु विशेषव्यतिरेकेणार्थाभावान्नास्ति स्थापनाऽऽकारः आभवनं आकार्यं आकर्त्तरि

**एतत्तत्त्वाध्यवसायादेवेति,** स्थापनाप्रयोजकरूपाध्यवसायादेवेत्यर्थः, लिङ्गमन्यासनादिलिङ्गस्यैकदण्डकाषायवस्त्रधारण, यथाशास्त्रं तत्राप्याकारविशेषस्य सद्भावात्, तेषां नियमादि न समाचारः, देवतप्रतिमा–अर्हद्रुद्रबुद्धादिदेवप्रतिबिम्बादि, तन्नमनजपस्तुतिपूजादयः सर्वे प्रतिनियताऽऽकारनिमित्तका एव दृश्यन्ते, तस्मात् [illegible] स्थापनैव सर्वमिति व्यवस्थापयितुं न प्रमाणान्तरमपेक्षणीयमिति भावः । प्रमाणान्तरानपेक्षत्वमेवाह-**नैतदुपपत्त्येति,** नानुमानादिनेत्यर्थः । लोके आकाराध्यवसायादेव प्रसिद्धत्वादिति हेतुमाह-**लोके इति** । प्रसिद्धिमेवादर्शयति **तथा हीति** । तस्मात् स्थापनैव सर्वमित्युपसंहरति-**एवमिति** । इत्थं स्थापनाद्रव्यार्थनयेन स्थापनाद्रव्यस्य प्राधान्ये प्रतिपादिते [illegible] आकारस्यापि सामान्यविशेषरूपत्वात् सामान्याकार उपसर्जनं विशेषाकारः प्रधानमिति प्रतिपादयति-**अत्रापीति** । व्याचष्टे-**अस्यापि नयस्येति,** सामान्याकारोऽसद्भूताकारोऽव्यक्ताकारः उपसर्जनभूत, विशेषाकारः सद्भूताकारो व्यक्ताकारः पारमार्थिकः प्रधानभूत इति भावः । **तस्य परमार्थस्येति,** विशेषाकारस्यैकभवनरूपस्य पारमार्थिकस्य स्थापनानिक्षेपे [illegible] सामान्याकारो द्रव्यार्थभूत उपसर्जनं भवति, प्रधानभूतस्य विशेषाकारस्योपकारित्वादिति भावः । पाण्यादीनां विशेषभवनत्वेऽपि तदवयवापेक्षया सामान्यत्वादापरमाणुरूपादिविशेषभवनमुपसर्जनत्वेन परमाणुरूपादि चाऽविभाज्यं विशेषभवनं प्रधानमितरत्सर्वमुपसर्जनमित्याह-**पाण्यङ्गुलीति** । नदेवं प्रधानोपसर्जनभावं सम्भावनयाभिधाय वस्तुतोऽन्त्यभूतपरमाणुरूपादिविशेषभवनस्यैवाविभाज्यतया पारमार्थिकसद्भावात् परेषामभावात् कुतः स्थापनेत्याह-**परमार्थतस्त्विति** । एवं द्रव्यतः स्थापनाया असम्भवमभिधाय क्षेत्रतस्तमाह-**तथा क्षेत्रत इति** रूपरसादियुगपद्भावविपर्यायाणामेव विशेषरूपाणां वस्तुत्वात्ततोऽन्यस्याभावादाकार्यस्याऽऽकर्तुर्वाऽ-

१ सि. क्ष. छा. पाडिनां। २ सि. क्ष. यथागमेकाराविशेष। ×× क्ष. छा. °स्वक्यथंसं०। ४ सि. छा. तदंसत्यविशेषेतस्व०।

वाऽर्थे नास्ति, स्थापनाया आकारत्वात्, कालतोऽप्ययुगपद्भाविपर्यायेषु बालादिष्वेकं–एकविशेषभवनं परमार्थः, तद्भावयति–बालाद्ययुगपद्भावीत्यादि, यावत् कथं स्थापना क्रियताम् ? कस्य वेति गतार्थम् ।

किञ्चान्यत्–सद्भावस्थापनायाः पर्यायार्थत्वादसद्भावस्थापनाया द्रव्यार्थमात्रत्वात् तद्द्वे प्ररूपयता त्वया पर्यायार्थप्राधान्यावलम्बिना द्रव्यं निराकृतम्, द्रव्यार्थप्राधान्ये वा पर्याया निराकृता अक्षाद्यसद्भावेत्यादिना ग्रन्थेनेति तद्दर्शयति–

**असद्भावस्थापनायाश्च प्राधान्ये पर्यायनिराकरणं स्यात्, सद्भावस्थापनायाः प्राधान्ये त्वितरनिराकरणम्, योऽपि नामबुद्ध्यारोप उक्तः सोऽपि नयान्तरयोर्नामद्रव्यपर्यायार्थयोर्विषयः स च विशेषभवनमेव, द्रव्यार्थस्त्वतिक्रान्तभङ्गेषु व्याख्यातो दूषितश्च, इतरस्तु भाव एवैको भवतीति, द्रव्यं द्रव्यार्थवाच्यश्चेष्टं न करोतीति भावितमेव, अतः स्थितमेतत् विशेषभवनमेव परस्परानपेक्षं जगत्तत्त्वमिति, क्रियाफलाविसंवादोऽपि च, ऐहिकमामुष्मिकं वा ओदनादि स्वर्गादि फलं पचिक्रियादिदानादेः, न तत्र काष्ठस्थाल्यादीनि नाममात्राणि न चित्रलिखितानि वा प्रवर्त्तन्ते, किन्तु तथाभूतानि तान्येव विशेषैकभवनानि, न चाग्निना शब्देन पच्यते न वा चित्रलिखितेन, न यथा मानप्रस्थकेन तथा तन्नाम्ना ।**

**असद्भावस्थापनायाश्चेत्यादि**, यावदितरनिराकरणम्, योऽपि नामबुद्ध्यारोप उक्तोऽभिप्रेताकार इत्यादि सोऽपि नयान्तरयोर्नामद्रव्य[पर्याय]ार्थयोर्विषयः,–तत्र नामद्रव्यार्थविषयो नामाध्यारोपः, पर्यायार्थविषयो बुद्ध्यध्यारोपः, 'आगमतो जाणए उवउत्ते भावसामाइए' (अनु० सू० १५०) इति, स च विशेषभवनमेव, द्रव्यार्थस्त्वित्यादि, अतिक्रान्तेषु विधिविध्यादिभङ्गेषु द्रव्यार्थो व्याख्यातो दूषितः पुनर्न वाच्यः, इतरस्तु भाव इत्यादि, अस्मिंश्च शब्दनये उभय[निय]मभङ्गलक्षणे विशेष एवैको भवतीति शब्दार्थव्याख्यानेन, द्रव्यं द्रव्यार्थवाच्यं नामस्था[पना]द्रव्यार्थवाच्यं चेष्टं न करोतीति भावितमेव, अतो नयस्वरूपमुपनय[ति–

सत्त्वेन स्थापनाकारो न सम्भवति, आकार्य–आकारकर्मीभूते आकर्तरि–आकारकर्तरि, आकारव्यतिरिक्तस्य कस्याप्यपारमार्थिकत्वेन नाकारस्य स्थापना सम्भवतीति भावः । कालतोऽपि स्थापनाया असम्भवमाह–**कालतोऽपीति** पूर्वोत्तरपर्यायाणां वर्तमानपर्यायव्यतिरिक्तपर्यायिणश्चाभावेन कस्य कथं वा स्थापना स्यादित्याह **बालादीति,** आदिना कौमारयौवनवार्द्धक्यादयो ग्राह्याः । ननु सद्भावासद्भावस्थापने द्वे अपि त्वया नाभ्युपगन्तुं शक्येते, सद्भावस्थापनाङ्गीकारे तस्याः पर्यायार्थमात्रत्वेन द्रव्यस्य निराकृतिः स्यात्, असद्भावस्थापनाङ्गीकारे च तस्या द्रव्यार्थमात्रतया पर्यायोऽपहस्तितः स्यात्, अन्यथा रूपान्तरव्यावृत्तिपूर्वकरूपान्तरकरणलक्षणस्थापनाया असम्भवः स्यात्, पर्यायपक्षे द्रव्यस्य द्रव्यपक्षे च पर्यायस्य रूपान्तरत्वादिति दोषान्तरमाह–**असद्भावस्थापनायाश्चेति** । व्याचष्टे–**असद्भावेति,** अवतरणिकया व्याख्यातमेव मूलम् । एवमविरुद्धाभिप्रेताकारवृत्तौ नाम्ना इन्द्र इति बुद्ध्या वाऽऽध्यारोपस्तत्कर्मण इति ग्रन्थेन यो निक्षेप उक्तः सोऽपि विशेषभवनमेव नाम्नः बुद्धेश्च पर्यायार्थविषयत्वादित्याह–**योऽपीति** । द्रव्यार्थस्तु विधिविध्यादिभङ्गेषु निरूपितो दूषितश्चेत्याह–**अतिक्रान्तेष्विति** । अस्मिन्नुभयनियमभङ्गे शब्दनये परस्परानपेक्षैकैकभवनात्मकत्वं विशेषाणामर्थानाम्, यथार्थाभिधानश्च शब्दः, नामस्थापनाद्रव्यार्थवाच्यन्तु नेष्टं करोतीति, इतरेतरानपेक्षैकैकभवनलक्षणविशेषतत्त्वमेव जगत्, न तु द्रव्यादितत्त्वमिति निरूपितमेवेत्याह–**अस्मिंश्चेति** । एवमभ्युपगम एव क्रियाफलयोः

१ सि. क्ष. छा. विशेषाद्यति० । २ सि. नामद्रव्यार्थयोरिति पदं नास्ति । ३ सि. क्ष. छा. डे. °माइयं० । ३, ४, क्ष. द्रव्यद्रव्या० ।

अतः]स्थितमेतदित्यादि, यावज्जगत्तत्त्वमिति, एवं तस्य दर्शनस्य लोकसंव्यवहारव्यापितां दर्शयति–क्रियाफलाविसंवादोऽपि चेत्यादि, ऐहिकमोदनादि पचिक्रियादेः स्थालीकाष्ठादिसाधनायाः फलम्, आमुष्मिकं स्वर्गादि दानादेरोदनादिसाधनायाः फलम्, न तत्र काष्ठस्थाल्यादीनि नाममात्राणि न चित्रलिखितानि वा, किन्तु तथाभूतानि पचिदानादीनि, तान्येव विशेषैकभवनानि, तदुक्तं नामचित्रकाष्ठादिव्यवहारमङ्गीकृत्य भावभवनं–क्रिया प्रवर्त्तते, नाग्निना शब्देन पच्यते न वेत्यादि भावितार्थं यावन्न यथा मानं प्रस्थकेन तथा तन्नाम्नेति ।

**नामप्रत्ययनामकर्मतत्त्वात्तेनैवेति चेन्न चेतनाभेदभूतिभूयोग्यविशेषात्मनियततत्त्वाभावे तिर्यग्गतिनिर्वर्त्तनीययोगवक्रतादिपरिणामातिप्रवृत्तेः फलाभावान्नामकर्माद्यनुपपत्तेः, न च चित्रलिखिताग्निप्रस्थकाभ्यां दहनमाने, तयोर्व्यवहाराक्षमत्वात् तथावृत्तिभावस्यैव व्यवहारक्षमत्वात्, द्रव्यमपि च भव्यं तथा तथा भवनात् भाव एव घटते, त्वन्मते द्रव्यभवने तु न तथा तथा भवनार्थेन भावशब्देन द्रव्यशब्दस्य सम्बन्धः, अग्निप्रस्थकादिसर्वमेकभाव एव भूतं द्रव्यार्थाभेदात् ।**

(**नामेति**) नामप्रत्ययनामकर्मतत्त्वात्तेनैवेति चेत्–स्यान्मतं प्रागुक्तचैतन्यनामप्रत्ययायत्तं नामकर्म तत्तत्त्वानि काष्ठादीनीत्यतः तेनैव नाम्ना लोके व्यवहार इत्येतच्च न, चेतनाभेदेत्यादि यावन्नामकर्माद्यनुपपत्तेरिति, अत्रापि चेतनाभेदेषु यानि पृथिव्यादितत्त्वानि नियतानि तथाभूतिभूयोग्ये विशेषात्मनि तेषामभावे तिर्यग्गतिनिर्वर्त्तनीययोगवक्रतादिपरिणामातिप्रवृत्तेः फलाभावः, तदभावात् कुतो नामकर्म? कुतः

कार्यकारणयोरविसंवादोऽव्यभिचरितत्वं सम्भवतीत्याह–**क्रियाफलेति**, यद्ध फलाव्यवहितप्राक्क्षणवृत्ति तदेवाव्यभिचारिकारणं भवितुमर्हति, व्यवहितक्षणवृत्ति च न कारणम्, तदव्यवहितोत्तरक्षणे फलानिष्पत्तेः, एवञ्च तथाविधाना कारणत्वाभिमतानां सद्भावेऽपि यस्य विलम्बात् कार्यविलम्बः, यस्य सत्त्वे उत्तरक्षणेऽवश्यं फलनिष्पादस्तयोरेव क्रियाफलभावो न्याय्यः, तादृशञ्च कारणं विशेषभवनमेव, न तु नाम स्थापना द्रव्यं वा, ओदनादि हि पचिक्रियादेः फलम्, तदव्यवहितोत्तरक्षणे तदुद्भवात्, पचिक्रियादेरेव स्थाल्यादिकारणम्, न त्वोदनादेः, तथा स्वर्गादेर्दानाद्येव कारणम्, न त्वोदनादि, तत्तु दानादेरेव कारणम्, फलाव्यभिचारित्वात्, एवं तन्नामानि तत्स्थापना वा न हेतुरिति निरूपयति–**ऐहिकमिति,** इह–तिर्यग्लोके भवमैहिकमोदनादिफलमित्यर्थः. अमुष्मिन् विप्रकृष्टे लोके स्वर्गादौ भवमामुष्मिकं स्वर्गादि, तल्लोकप्राप्तिरित्यर्थः । निवर्त्त्यान्यादर्शयति–**न तत्रेति,** द्रव्यद्रव्यार्थस्याग्रे निराकार्यत्वादत्र न तद्दर्शितम् । पचिक्रियादानादिरेव विशेषैकभवनरूपा ओदनादिफलसाधनानीत्याह–**किन्तु तथाभूतानीति** । भावद्वारेण नामस्थापने व्यवहाराङ्गे, न तु साक्षात्, भावश्च नामचित्रकाष्ठादिभिरुपकृतः प्रवर्त्तत इत्याह–**तदुक्तमिति** । धान्यानि यथा भावभूतप्रस्थकेन मीयन्ते न तथा प्रस्थकनाम्ना न वा चित्रादिलिखितेन प्रस्थकेनेति दृष्टान्तान्तरमाह–**न यथेति** । ननु पूर्वमुक्तं मया कुम्भकारकरणशब्दचेतनावैचित्र्यवृत्तितारतम्याध्यासनसमुपहितरूपा घटता यथा साक्षान्नाम्नस्तथा तथा भवति एवं कुम्भकारमनुष्यशरीरमृदादि तत्प्रभवमेव, शब्दोपयोगसम्बन्धाद्योगवक्रताविसंवादनादेः, रूपादिमदर्थविरचनात्मकत्वादित्यादि तथा च नाम्नैव लोके व्यवहारो न तु विशेषैकभवनमात्रेणेत्याशङ्कते–**नामप्रत्ययेति** । तद्व्याकरोति–**स्यान्मतमिति,** व्यक्ताव्यक्तस्वरूपशब्दात्मकोपयोगसम्बन्धान्नामकर्म शुभमशुभं वा भवति तदात्मकं काष्ठादि वस्तु, तत्प्रभवत्वात्, तस्मात् सर्वस्य नामात्मकत्वान्नाम्नैव लोके व्यवहारः प्रवर्त्तत इति भावः । समाधत्ते–**अत्रापीति** पृथिव्यादितत्त्वं हि चेतनाभेदव्याप्यम्, तदभावे तदसम्भवात्, एवं भवद्भवनलक्षणविशेषात्मव्याप्यमपि, विशेषैकभवनात्मकं यदि पृथिव्यादितत्त्वं न स्यात्तर्हि सर्वैकरूपताप्रसङ्गेन

१ सि. क्ष. डे छा पचेभोगविधानि ।

काष्ठादिवनस्पतिपृथिव्यम्यादितिर्यक्शरीरत्वादीनि ? अतो विशेषभवनमेव क्रियाफलादिव्यवहारहेतुः, न नामशब्द इति सुष्ठूक्तम्, तथा चित्रकर्मेत्यत आह–न च चित्रलिखिताग्निप्रस्थकाभ्यां दहनमाने, तयोर्व्यवहाराक्षमत्वात् । तथावृत्तिभावस्यैव व्यवहारक्षमत्वात्, द्रव्यमपि च भव्यं तथा तथेति, द्रव्यञ्च भव्ये भवतीति भव्यं तेन तेन प्रकारेण लोकव्यवहारक्षमेण भवनाद्भाव एव घटते, त्वन्मते द्रव्यभवने तु न, अग्निप्रस्थकादि सर्वमेकभाव एव भूतम्, द्रव्यार्थाभेदादतो द्रव्यशब्देनात्यन्तविरुद्धार्थेन भेदवाचिना तथा तथा भावनार्थेन [न] सम्बन्धः ।

अस्मिन्नर्थे निदर्शनमाह—

**तथा प्रस्फुटमेव अग्निर्द्रव्यमिति पुंनपुंसकयोर्भावभेदे सामानाधिकरण्यम्, नान्यथा दारुप्रस्थकवद्वा सामानाधिकरण्ये धरण्यादावपि समानमवतिष्ठेत, द्रव्यत्वादिति, तथाभूत ..... ...............दहनोऽग्निः, एवं प्रतिपदार्थं भावनिक्षेपः शब्दनयस्योक्तो न यथर्जुसूत्रस्य नामादिचतुर्विधनिक्षेपाभिलाषिणः, अत्र च शब्दार्थोऽपि असत्योपाधिसत्यः, नानन्तरनयनिर्दिष्टोऽन्यापोहः, यथोक्तम्–'असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम्' ( वाक्यप० कां० २ श्लो० १२९ ) इति, विशेषा उपाधयोऽसत्याः, सद्भ्यो हितं सत्यं, कर्मणि चतुर्थी, प्रकृतिः सामान्यं प्रतिपाद्यम्, सामान्यवादिमते असत्यैर्विशेषैरेव विकारप्रकृतित्ववत्तदभिधीयते ।**

**तथा प्रस्फुटमित्यादि** अग्निर्द्रव्यमिति पुंनपुंसकयोर्भावभेदे सामानाधिकरण्यं दृष्टं नान्यथा तत्, स्यान्मतं द्रव्यशब्दस्य दारुसमानाधिकरणत्वात्, नपुंसकं प्रस्थक[म्] इत्येतच्चायुक्तम्, यस्मात् दारुप्रस्थक-

योगयत्नादिप्रयुक्तं जगद्वैचित्र्यं न स्यादिति शब्दोपयोगासम्बन्धात् इतो नामकर्म कुतो वा तज्जन्यधर्मादि भवेदिति भावः । तदेवं जगतः सर्वैकत्वापरित्यागाय ऐकान्त्यनिबन्धनं विशेषभवनमेव प्रधानमित्ययमभिप्रायमित्युपदर्शयति–**अतो विशेषभवनमेवेति ।** तदेवं नाममात्रतो व्यवहारो न सम्भवतीत्युक्त्वा स्थापनामात्रेणापि तदसम्भवमाह–**न च चित्रलिखितेति,** चित्रितेनाग्निना न हि दारो दह्यते न वा प्रस्थकेन मीयते, असमर्थत्वात्, किन्तु तत्समर्थविशेषभवनात्मकेनैवाग्निना दाहः प्रस्थकेन मानं व्यवहारक्षमत्वादिति न तत्र स्थापना प्रयोजिकेति भावः । द्रव्यद्रव्यं तोऽप्यसमर्थ एव विशेषभवनव्यतिरेकेणेत्याह–**द्रव्यमपि चेति,** तदपि तेन तेन प्रकारेण भवनरूपमेव व्यवहारसमर्थमिति भावरूपमेव भव्यत्वस्यैव, द्रव्यलक्षणत्वादिति भावः । त्वदभिप्रेतं तु द्रव्यभवनं सामान्यरूपमत एव चाग्निप्रस्थकादिनिखिलं द्रव्यरूपतो भवनाव्यभिचारित्वेनाभिन्नभावरूपमेकमेव, तथा तथा भवनलक्षणभेदवाची तु भावशब्दोऽतोऽत्यन्तविरुद्धार्थत्वं द्रव्यभावयोरिति न तद्वाचकशब्दयोः सामानाधिकरण्यस्वरूपः सम्बन्धः सम्भवतीत्याह–**त्वन्मत इति** द्रव्यभवने तु न घटते, द्रव्यार्थाभेदात्, तथा चाग्निप्रस्थकादिसर्वं एक एव भावः, तस्माद्द्रव्यशब्दार्थ एक एव भावः, भावशब्दार्थो भेदः तथा तथा भवनरूपः, तत उभयोस्तच्छब्दार्थयोर्विरुद्धत्वाद्द्रव्यभावशब्दौ विरुद्धार्थवाचिनाविति न परस्परं सामानाधिकरण्यादिसम्बन्धमर्हत इति भावः । दृष्टञ्च सामानाधिकरण्यं, तच्च भावभेद एव स्यात्, न त्वभेद इति दृष्टान्तं दर्शयति–**तथा प्रस्फुटमेवेति** । व्याचष्टे–**अग्निर्द्रव्यमिति** अग्निद्रव्ययोर्द्रव्यत्वेनाभेदाद्भिन्नप्रवृत्तिनिमित्ताभावेन कथं स्यात् सामानाधिकरण्यम्, मन्मते तु पुंनपुंसकादिभावभेदेन तत्स्यादिति भावः । दारु द्रव्यं तच्च नपुंसकं तदेव दारु प्रस्थकं मानविशेषो भवति ततो भावभेदेऽपि द्रव्याभेदप्रयुक्तमेव सामानाधिकरण्यं नानुपपन्नमित्याशङ्कते–**स्यान्मतमिति** । द्रव्याभेदाद्दारुप्रस्थकयोः सामा-

१ सि. क्ष. डे. छा. °भेदाश्चोद्रव्य० । २ सि. क्ष. डे. छा. भावना० । ३ सि. क्ष. डे. छा. °प्रस्थकत्वाद्वा ।

यद्वा सामानाधिकरण्ये धरण्यादावपि समानमवतिष्ठेतेत्यतिप्रसङ्गदोषः, कथं ? यथा द्रव्यत्वादाकाशस्य-कत्वाभेदस्तथा द्रव्यत्वात् पृथिव्युदकाद्यभेद इति दोष एव, स्वमते तु दोषाभावो गुणोत्कर्षश्चेत्यत आह–त-थाभूतेत्यादि गतार्थं यावद्दहनोऽग्निः, उक्तार्थनिगमनं–एवं प्रतिपदार्थं–सर्वपदार्थेषु भावनिक्षेपः शब्दनय-स्योक्तो न यथर्जुसूत्र[स्य] नामादिचतुर्विधनिक्षेपाभिलाषिणः–यथा ऋजुसूत्रनयस्य वर्त्तमानपर्यायग्राहिणो मतं न तथा भवतीति शब्दमतं दर्शितम् । अत्र चेत्यादि, शब्दार्थोऽप्यसत्योपाधिसत्यो नानन्तरनयनिर्दिष्टो-ऽन्यापोहः, यथोक्तमिति शिष्टान्तरमतं च दर्शयति–'असत्योपाधि यत्सत्यं तद्वा शब्दनिबन्धनम् ॥' ( वाक्यप० का० २ श्लो. १२९ ) इति तद्व्याचष्टे–विशेषा उपाधय इत्यादि तदीय एव ग्रन्थो यावत्तदभिधीयत इति सुवर्णप्रकृत्युपमर्दे कुण्डलविकारस्य विशेषस्यासत्यस्य सामान्यवादिमते सत्यं प्रकृतिः सामान्यं प्रतिपाद्यं तथा पुरुषादिसामान्यस्य प्रतिपादका विशेषा उपाधयः, ततः प्रकृतिपुरुषेश्वरादिष्वागमेषु [3]विशेषैरेव सामान्यमिति प्रतिपादनसाधर्म्येण दृष्टान्तः, तत्र शब्द उपनिबद्धो विकारप्रकृतित्ववदिति, तत्सहत्याऽऽचार्यः सद्भ्यो हितं सत्यमिति तद्धितार्थं व्युत्पाद्य विभक्तिमाह–कर्मणि चतुर्थीति षष्ठी, च 'चतुर्थी चाशिष्यायुष्य-मद्रभद्रकुशलसुखार्थहितैः' ( पा० २-३-७३ ) इति विहितत्वात्, हिनोतेर्दधातेर्वा धातोः कर्मणि द्वितीयस्यां प्राप्तायां षष्ठीचतुर्थ्यौ विभाष्येते ।

अधुना स्वमतं तेन समीकुर्वन् भावयति–

**भवद्व्यापि पर्यायवृत्तितत्त्वमविकल्पं सत्यमसत्याः पुनरुपाधयोऽस्य लिङ्गादि, यथा**

[मानाधिकरण्योपपादनमचारु, पृथिव्युदकादीनामपि द्रव्याभेदात् सामानाधिकरण्यापत्तेरिति समाधत्ते **धरण्यादावपीति** । हेतुस-घटनं विधत्ते–**यथा द्रव्यत्वादिति** । भावनिक्षेपवादी शब्दनयः स्वमतं दर्शयति–**स्वमते त्विति**, साम्प्रताख्ये भावा-भ्युपगन्तरि शब्दनये त्वित्यर्थः । ग्रन्थोऽत्र सुगमः । निगमयति–**एवमिति**, उक्तप्रकारेण भावनिक्षेपोऽयं सर्वत्र शब्दनयसम्मतो न तु यथा चतुर्विधनिक्षेपाभिलाषिण ऋजुसूत्रस्य सम्मत इति भावः । एतस्य शब्दनयस्य मतेन शब्दार्थं दर्शयति–**शब्दार्थोऽपीति**, शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति शब्दार्थः पूर्वनयेऽपोह उक्तः, नायमस्य नयस्य सम्मतः, अत्र तु असत्यो-पाधिसत्यः शब्दार्थः, असत्या उपाधयो लिङ्गादयो यस्य रूपादिशिवकादे सत्यस्यासावसत्योपाधिसत्यः लिङ्गाद्युपहितरूपादिः शब्दार्थ इति भावः । विशेषोपहितसामान्यवादिनां मते रूपाद्युपहितद्रव्यस्य शब्दार्थत्वं यथा तथैवास्मन्मतेऽपीति सूचयितुं शिष्टान्तरमतमुपन्यस्यति–**यथोक्तमिति**, शब्दार्थत्वेनासत्या उपाधयो यस्य सत्यस्य यस्य सामान्यस्य हिरण्यमृदादिविकारतयाऽ-भीष्टा वलयाङ्गुलीयकादिशिवकस्थासकादय उपाधयोऽसत्यभूतास्तदुपहितं सत्यं सुवर्णमृदादि शब्दवाच्यमिति भावः । तदीयव्याख्या [व्या]चष्टे–**सुवर्णेति**, रुचकस्वस्तिककुण्डलादयो विकारा यथा परस्परोपमर्दनेन भवन्तोऽस्थिरप्रत्ययविषयत्वादसत्या समन्वयि-विज्ञानावसेयत्वात् सुवर्णमित्येव तु सत्यं सामान्यवादिना मते तथा सर्वभावेषु महासत्तासामान्यस्यानुगतत्वात् तदेव सिद्धसाध्योपा-ध्युपगृहीतनानात्वं प्रातिपदिकधातुभेदभिन्नैः शब्दैरुच्यते यथा नालिकाछिद्रविवर्त्मनिहितनयनास्तदवकाशावच्छिन्नमेवार्थभागं पश्यन्ति विच्छिन्नार्थदर्शनेन च विषयो न विक्रियते तथा यथाऽध्यवसाय शब्दनिवेशान्महासत्तैव घटपटाद्याकारोपाधिपुरस्सरं घटपटादिशब्दै-रभिमुखीक्रियत इति भावः । विकारप्रकृतित्ववदिति दृष्टान्तो विकारैः पुरुषादिवादिमते यथा पुरुषादिर्विज्ञायते तथाऽसत्यैरुपाधि-भिर्लिङ्गादिभिः सत्यं रूपादिशिवकादिवस्तु शब्देन प्रतिपाद्यत इत्यर्थः प्रदर्शित इत्याह–**ततः प्रकृतिपुरुषेति** । सद्भ्यो हितं सत्यमित्यत्र क्तप्रत्ययान्तस्य दधातेर्हिनोतेर्वा धातोः कर्मवाचकात् सच्छब्दाच्चतुर्थी चाशिष्येत्यादिसूत्रेण कर्मणि षष्ठीचतुर्थ्योर्विधा-नादत्र चतुर्थीत्याह–**सद्भ्यो हितमिति** । तदनेनोपदर्शितेन शिष्टान्तरमतेन स्वमतमुभयनियमरूपं समीकरोति–**भवद्व्यापीति**–]

१ सि. डे. समानाधिकरणादारण्यपि समानमवतिष्ठेतेत्यति० । क्ष छा. सामानाधिकरणीकरणादारण्यपि समानाव-तिष्ठतेत्यति० । २ सि. क्ष. छा. रूपाद्यभावाभावे प्रकृ० । ३ सि. क्ष. छा. डे. विशेषैरिव । ४ सि. क्ष. छा. डे. षष्ठ्यर्थे ।

**द्रव्यमृद्घटकुण्डकुण्डिकादिप्रवृत्तयस्तदाभाः, तद्वस्तु व्यापिवदाभासते, एवमेव चैतद्दर्शनसंवादीदं..............आनीयताम्, सत्यस्य............तदाख्यानमुपसर्जनम्, गृहोपलक्षणकाकवत् उदितस्यार्थवज्जातिशब्दो विशेषार्थ इति त्वद्वचनेनोक्तमपि विशेषवस्तु उक्तवत्, तद्गम्यते जातिगतलिङ्गसंख्यादिसमानाधिकरणगतिनिरूपितं अनर्थिकाया एव तस्या अप्युक्तवत् परार्थत्वादर्थवत्त्वमनर्थकत्वं स्वार्थेन, वाग्विसर्गकालोपलक्षणनक्षत्रदर्शनश्रुतिवत् ।**

**भवद्व्यापीत्यादि,** रूपादिशिवकादिपर्याया वृत्तिरस्य तत्त्वस्य तदविकल्पं शिबिकावाहकर्याननेने[वे]श्वरः, तत् पर्यायवृत्तितत्त्वं[1] व्यापि सततं वर्त्तते, देशभिन्नं रूपादि कालभिन्नं शिवकादि सत्यम्, असत्याः पुनरुपाधयोऽस्य लिङ्गादि, उपाध्युपायेन निदर्शनं द्रव्यमृद्घट इत्यादि प्रवृत्तयस्तदाभाः–रूपादिशिवकादिपर्याय[वृत्ति]तत्त्वाभासाः, तद्वस्तु व्यापिवदाभासते सामान्यं तद्विशेषः परमार्थः सन्, एवमेव चेत्यादि, एतद्दर्शनसंवादीति [इ]दमिति ज्ञापकमेतेन लक्षणेन सङ्गृहीतं यावदानीयतामिति, तद्व्याख्या-सत्यस्येत्यादि यावत्तदाख्यानमुपसर्जनमिति गतार्थम्, दृष्टान्तः–गृहोपलक्षणकाकवदिति. कतरद्देवदत्तस्य गृहमिति प्रश्ने प्रतिवचनं यत्रासौ काक इति काकशब्दो गृहार्थप्रतिपादनार्थत्वात् काकार्थ एव सन् गृहार्थ इत्युच्यते तथा उदितस्यार्थवत् जातिशब्दो विशेषार्थ इति त्वद्वचनेन-तदर्थत्वप्रकारेण वचनेनोक्तमपि विशेषवस्तु उक्तेन

यद्वद्वस्तु यच्च सहक्रमभाविपर्यायात्मना वर्तते तदविकल्पं व्यापि सत्यं भवति तस्य चोपाधयो लिङ्गादयोऽसत्याः, तदेव हि वस्तु भाव उच्यते न हि भावो रूपादिशब्दव्यतिरेकेणोच्यते सामान्यमिव द्रव्यमृद्घटादिशब्दव्यतिरेकेणेति भाव । एतदेव व्याकरोति–**रूपादिशिवकादीति,** एते पर्याया वृत्तिर्वर्तनमस्य भावलक्षणस्य तत्त्वस्य तद्वद्वस्त्वविकल्पम्–तद्रूपेण विकल्पप्रत्ययाविषय, भावत्वेनैव विषयत्वात् तदेतत् पर्यायात्मना वर्तनस्वरूपं भवद्वस्तु व्यापि सतत वर्तत इति भाव । तदेवाविकल्पं भवद्वस्तु प्रदर्शयति–**देशभिन्नमिति,** सहक्रमभाविपर्यायस्वरूपमित्यर्थ । लिङ्गादयोऽस्यासत्यभूता उपाधय इत्याह–**असत्याः पुनरिति** । सामान्यमपि द्रव्यमृद्घटादिः रूपादिशिवकादि पर्यायवृत्तितत्त्वाभासैरवस्थितैर्यथोच्यत इति दृष्टान्तमाह–**उपाध्युपायेनेति,** रूपाद्युपाध्युपायेनेत्यर्थ, निरुपाधिनो वस्तुनोऽव्यवहार्यत्वात् सम्बन्धिभेदात् द्रव्यमृद्घटादिरूपतो भिद्यमानोपचरितभेदं सामान्य पुस्त्रीनपुंसकैकत्वाद्युपाधिभिरुच्यते, ते च द्रव्यमृद्घटादयः सामान्यभूता. सम्बन्धिभेदेन रूपादिशिवकादिभेदात्मभाववदवभासन्ते सामान्यञ्च व्यापि द्रव्यमृद्घटादयः सामान्यभेदाः परमार्थभूता', उपाधयोऽसत्या लिङ्गादय इति भाव । **एतद्दर्शनेति,** परमार्थभूतं वस्तु साक्षात् स्प्रष्टुमशक्ता शब्दा उपलक्षितरूपपृष्ठपातिन', ते चोपलक्षितरूपा उपाधयोऽसत्या आगमापायवशविधुरितनिजस्वरूपत्वात्, तद्द्वारेण च सत्यं वस्तु स्पृशन्ति, तस्मादसत्योपाधिभि शब्दैः सत्यमेवाभिधीयत इत्येतद्दर्शनसंवादि ज्ञापक स्यादिति भाति, यदुक्तं 'सत्यं वस्तु तदाकारैरसत्यैरवधार्यते । असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते ॥ अध्रुवेण निमित्तेन देवदत्तगृहं यथा । गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥' इति, अत्र ज्ञापकं व्याख्या च नोपलभ्यते । असत्योपाधिसत्यशब्दार्थत्वे दृष्टान्तमाह–**गृहोपलक्षणेति** गृहस्योपलक्षणभूतो य काकस्तद्वदित्यर्थः । गृहमुपलक्षयति काकः स्वबोधकत्वे सति स्वेतरबोधकत्वादित्याह–**काकशब्द इति,** अनियतस्वामिकगृहोपलक्षणायोपलक्षणभूत काक', उत्पतितेऽपि तस्मिन्नुपलक्षणस्य कृतत्वादसत्यभूत उपाधिः, तदुपलक्षितं गृहं विशेषेण गृहशब्देनाभिधीयत इति भावः । यथा च काकशब्द. स्वार्थेन न सार्थकः गृहार्थत्वेन तु अर्थवान् तथा जातिशब्दो विशेषार्थ इति त्वद्वचनेन जातिशब्दैर्विशेषस्योपलक्षणतयोक्तत्वेऽप्यनुक्तकल्पत्वमेव उदितस्यैवार्थवत्त्वात्, किन्तु जात्या तद्गम्यते स्वगतलिङ्गसामानाधिकरण्यगत्या, तस्माज्जातेरपि परार्थेनार्थवत्त्वं स्वार्थेन चानर्थकत्वमित्याशयेनाह–**उदितस्यार्थवदिति,** एवञ्च सामान्यवाचिना शब्देन विशेषस्योक्तत्वेऽपि नोक्तत्वमेव परमार्थतः, गौणवृत्त्या

१ सि. क्ष. डा. °यानोननेश्वरः । २ सि. क्ष. डा. वे. तत्त्वव्याति सततं ।

तुल्यमुक्तवन्न परमार्थत उक्तमेव, तद्गम्यते [इ]त्यादि जातिगतानां सत्ताद्रव्यपृथिवीमृद्घटकुण्डकुण्डिकादि-लिङ्गसंख्यादीनां संवादिनां विसंवादिनाञ्च या सामानाधिकरण्यगतिः तया निरूपितं यादृच्छिकार्थवत्त्वम्[1] अनर्थिकाया एव सत्याः तस्या अपि चोक्तवदिति–तस्या अपि जातेरभिहितन्यायेन परार्थत्वादर्थवत्त्व-मनर्थकत्वं स्वार्थेन, किमिव ? वाग्विसर्गकालोपलक्षणनक्षत्रदर्शनश्रुतिवत्–यथा नक्षत्रं दृष्ट्वा वाचो विसृजन्तीति नक्षत्रदर्शनमत्रातंत्रम्, नक्षत्रदर्शनयोग्यः कालोऽत्र तदर्थेन पश्यतिना उक्तवदुक्तः, परमार्थेन तु पश्यतिः स्वार्थ एव वर्त्तते तथा जातिशब्दो विशेषार्थ इति ।

**अन्यथा मुख्यन्यायेन तच्छब्दार्थतायां पुनरुक्तदोषात् विशेषशब्दाप्रयोग एव स्यात्, अत एव सत्यवृत्त्या नोक्तो विशेषः, उपाधिवृत्त्योक्तोऽप्यनुक्त एव, नियमार्था पुनः श्रुतिः, तदर्थत्वात् पूर्वश्रुतेः, नियमः स्वार्थव्यवस्थापनम्, सञ्चारि चैतत् विशेषपरम्परया, तत्र कारणं द्रव्यनय ………………… …… …..युगपदेतस्य विशेषस्य प्रधानस्य प्रत्यायकत्वेन प्रत्ययस्य उपसर्जनमात्रप्रवृत्तिरसत्योपाधिरर्थः, यावच्च……………………..सर्वमनेन शब्दनयशब्दार्थेन व्याप्तम् ।**

**अन्यथा मुख्यन्यायेन तच्छब्दार्थतायामित्यादि,** पुनरुक्तदोषात् सामान्यशब्देनोक्तत्वात् **विशेषशब्दाप्रयोग एव स्यात्,** 'उक्तार्थानामप्रयोगः' (महाभा० १–१–४३ सूत्र, पृ. ३४४) इति न्यायात्, **अत एवे**त्यादि. सत्यवृत्त्या नोक्तो विशेषः, उपाधिवृत्त्योक्तोऽप्यनुक्त एव, नियमार्था पुनः पुनः श्रुतिः–विवक्षितार्था, कस्मात् ? तदर्थत्वात्–विशेषार्थत्वात्–विशेषणार्थत्वात् पूर्वश्रुतेः–सामान्यश्रुतेः ब्राह्मणादेः[2], तस्माच्छ्रवणकालक्रमेण पुनः श्रुतिरिति विशेषशब्द उच्यते, कोऽसौ नियमो नामेत्यत्रोच्यते–नियमः स्वार्थ-

तु गम्यते, तस्मात् प्रकृतिशब्दः विशेषगमकत्वात्सार्थकः स्वार्थेन न सार्थवान् यथा धान्यशब्दो गृहार्थत्वेन सार्थकः काकार्थत्वेन त्वनर्थक इति तात्पर्यम् । दृष्टान्तान्तरमाह–**वाग्विसर्गेति** । व्याचष्टे–**यथेति**, पश्यतिना दृष्ट्वेति शब्दप्रकृतिभूतदृश-धातुनेत्यर्थः, शिष्टं स्पष्टम् । जातिशब्देन विशेषार्थस्य परमार्थेन एवोक्तत्वाङ्गीकारे दोषं निरूपयति–**अन्यथेति** । व्याचष्टे–**पुनरुक्तदोषादिति,** सामान्यशब्देन मुख्यवृत्त्या विशेषाभिधाने विशेषशब्देनापि तदभिधानात् पुनरुक्तता भवेत्, तत्परिहाराय विशेषशब्दानां प्रयोग एव वा न स्यात्, पदान्तरेणार्थेऽभिहिते पुनस्तदभिधानाय शब्दान्तरप्रयोगानिष्टेरिति भावः । नन्वसत्योपाधिभिः सत्यस्य शब्दार्थत्वाऽभ्युपगमेनोपाधयो विशेषा उक्ता एवेत्याशङ्कायामाह–**सत्यवृत्त्येति,** उपस्थितीयमुख्य-विशेष्यतारूपतस्तु उपाधयो नोक्तास्तत्प्रकारताश्रयत्वेनोक्ता अपि अनुक्तकल्पा एवेति भावः । ननूपाधिवृत्त्यापि विशेषाणामुक्तत्वे-नोक्तार्थानामप्रयोग इति दुरुद्धर एवेत्याशंकायामाह–**नियमार्थेति,** प्रसक्तस्यान्यस्य नियमार्था–विशेषणार्था पुनः श्रुतिर्भवति, यथा-पचकस्य शब्दार्थतायां प्रकृत्यैव संख्याकर्माद्युपाध्युपहितसामान्यस्योपस्थितौ पुनर्विभक्तिश्रुतिर्नियमार्था कारकान्तरनिवृत्तिपूर्वकं विवक्षितकारकादिनिर्णयार्थेति भावः, अभिहितानां सामान्यशब्देन विशेषाणां नियमार्था पुनः श्रुतिरिति न्यायादिति तत्त्वार्थभाष्य-टीकायां [ तत्त्वा० भा० टी० पृ० ४१२ ] दृश्यते । यद्यपि निर्विशेषस्य सामान्यस्याभावात् सामान्यशब्देनैव विशेषः उपगृहीतस्तथापि सामान्यश्रुतेर्विशेषस्यावधारणाभावाद्विशेषशब्देन पुनरसौ प्रत्यवमृश्यत एव, विशेषाभिमतेन सामान्याभिमतस्य स्वात्मनि नियमनादित्याशयेनाह–**तदर्थत्वादिति** । कोऽसौ विशेषश्रुतिरित्यत्राह–**तस्मादिति,** सामान्यशब्दश्रवणकालक्रमेण यस्य शब्दस्य पुनः श्रुतिः स विशेषशब्द इत्यर्थः । नियमं दर्शयति–**नियम इति,** सामान्यश्रुतिर्हि प्रतिपत्तारं प्रति विवक्षितविशेषप्रतिपादनेऽशक्तत्वेन सामान्यश्रुत्या सामान्यत उक्तस्यापि पुनर्विशेषश्रुतिर्विवक्षिताविवक्षितविशेषाभिधायिसामान्यश्रुतिमन्यविशेषव्यावृत्तिमाधाय

१ सि. क्ष. डा. डे. °कार्थवंच । २ क्ष. इदं पदं नास्ति । ३ सि. क्ष. ब्राह्मणादेः ।

व्यवस्थापनम्–विवक्षितेऽर्थेऽवधारणम्, सञ्चारि चैतदिति, न पुनस्तत्सामान्यशब्देनोक्तवदुक्तं वस्तु व्यवस्थितमेव, किं तर्हि? सञ्चारिविशेषपरम्परया, तत्र कारणं सञ्चरणे–द्रव्यनयेत्यादि, एवं समवस्थस्यार्थस्य सत्यत्वात्, किं पुनः सत्यमिति चेत् युगपदेतस्य विशेषस्य प्रधानस्य प्रत्ययस्य प्रत्यायकत्वेनोपसर्जनमात्रप्रवृत्तिरसत्योपाधिरर्थः, तद्दर्शयति–यावच्चेत्यादि गतार्थं तावत् सर्वमनेन शब्दनयशब्दार्थेन[1] व्याप्तमिति ।

**एवमेव चेदमपि 'न जातिशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् ॥' (प्रमाणसमुच्चये सामान्यपरीक्षायाम्) इति जातिशब्दो विशेषार्थनियमोक्तेर्भेदानामवाचकः व्यभिचारादानन्त्याच्च, जातिमतो वाचकत्वे च ये दोषास्तेऽन्यापोहवदभिधानेऽपि, प्रतिज्ञा कथं? भेदजातिजातिमदभिधानपक्षेषु दोषदृष्टेरर्थादापन्नमन्यापोहकृच्छ्रुतिरिति 'शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते' ( ) इत्युच्यते, अर्थौ च स्वसामान्यलक्षणावुक्तौ, नातोऽन्यत् प्रमेयमस्तीति स्वार्थ एव तावदवधार्यः, स्वार्थः स्वलक्षणोऽन्यतोऽन्योऽनन्यः स प्रत्यक्षविषयः, स इह न सम्भवति, 'स्वलक्षणमनिर्देश्यं' (प्र० स० श्लो० ५) इत्युक्तत्वात् प्रत्यक्षविषयस्य ।**

एवमेव चेत्यादि, एतच्यायं व्याप्तिप्रदर्शनद्वारेण दर्शनान्तरं निराचिकीर्षुराह–विशेषप्रधानशब्दार्थव्यवस्थापनार्थमिदमपीति तद्विचारवस्तुसूत्रम् 'न जातिशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान ॥' (प्रमा. स.) इति जातिशब्दो विशेषार्थनियमोक्तेर्भेदानामवाचको व्यभिचारादानन्त्याच्च, जातिमतो वाचकत्वे च ये दोषास्तेऽन्यापोह[वद]भिधानेऽपीति, प्रतिज्ञा कथमित्युपपत्तिप्रश्ने भेद[जाति]जातिमदभिधानपक्षेषु दोषदृष्टेरर्थादापन्नमन्यापोहकृच्छ्रुतिरिति, अन्यापोहं वर्णयति–'शब्दान्तरा-

विवक्षितविशेषमवधारयतीति भावः । न हि वस्तु सामान्यशब्देन यथोच्यते तथैव व्यवस्थितम्, तच्छ्रुत्या समुत्पन्नस्य प्रतिपत्तुरनविवक्षिताविवक्षितविशेषविषयसंशयस्यानिवृत्तेः, किन्तु विशेषपरम्परया सञ्चरति वास्तवत्याह–न पुनस्तदिति । तत्र कारणं दर्शयति–द्रव्यनयेत्यादीति, अत्र मूलं नोपलभ्यतेऽतो न व्याख्यायते, द्रव्यनये हि घटापेक्षया मृत् सत्य मृदपेक्षया पृथिवी तदपेक्षया द्रव्यं तदपेक्षया च सत्, परमार्थेन सत्वस्तुनस्तत्रैव व्यवस्थानात्, घटादयस्त्वसत्या इत्यभ्युपगम इति स्यादभिप्रायः । एवन्तु न सत्यत्वम्, किन्तु सामान्येनापि शब्देनाव्यवहितविधिवृत्तिना विधिनाऽनेकात्मकस्य वस्तुनः घटादयः सर्वे भेदाः युगपत्प्रतीयन्त एव तस्मात् सामान्यमुपसर्जनमात्रप्रवृत्तिरसत्योपाधिरर्थः, यथोक्तं सद्द्रव्यपृथिवीमृद्घटादिसम्बन्धादस्ति द्रव्यं पार्थिवो मार्त्तिको घट इति घटं सम्प्रत्यय इति, तस्मात् साक्षादव्यवहितार्थात्मना भेदाः सर्वे समाक्षिप्यन्त एवेति भावः प्रतिभाति । अथ विशेषप्रधानशब्दार्थव्यवस्थापनार्थं दर्शनान्तराणि निराकरणायाह–**एवमेव चेति** । व्याचष्टे–**एतच्यायं इति** । विचारसूत्रं दर्शनान्तरे उक्तं दर्शयति–**न जातिशब्द इति** सदादिशब्दाः जातिशब्दा उच्यन्ते ते भेदानां विशेषाणां न वाचकाः, भेदानामानन्त्यात् समयस्य कर्तुमशक्यत्वात्, व्यभिचाराच्च, विशेषार्थनियमाय तदुक्तेरिति व्याचष्टे–**जातिशब्द इति** । जातिमद्वदपोहवानिति पादं व्याचष्टे–**जातिमत इति** । स्वेष्टार्थसिद्धये प्रतिज्ञा कथं क्रियत इति पृच्छति–**प्रतिज्ञेति** । हेतुनिर्देशपूर्वकं साध्यमाह–**भेदजातीति,** शब्दानां भेदार्थत्वे जात्यर्थत्वे जातिमदर्थत्वे वा दोषदर्शनात् परिशेषानुमानेनान्यापोह एव शब्दार्थ इति सिद्ध्यति तथा चान्यापोहकृच्छ्रुतिरिति प्रतिज्ञा, भेदजातिजातिमदभिधानपक्षेषु दोषदृष्टेरिति हेतुः । तत्र 'अन्यापोहकृच्छ्रुतिः' इति लक्षणकारवचनम्, तद्दिङ्नागो व्याचष्टे–**शब्दान्तरार्थेति,** स्वलक्षणमपि शब्दस्योपचारात् स्वार्थं, तस्मिन् स्वलक्षणात्मके स्वार्थेऽर्थान्तरव्यवच्छेदं शब्दान्तरस्यार्थस्यापोहं जनयन्ती श्रुतिरभिधत्त इत्युच्यत इति तदर्थः । तन्मतेऽर्थं सामान्येन दर्शयति–

[1] क्ष. शब्देन यच्छब्दार्थेन ।

र्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते(      ) इत्युच्यते-इत्यन्यापोहवादिनोक्तम्, अर्थौ च स्वसामान्यलक्षणावुक्तौ नातोऽन्यत् प्रमेयमस्तीति–ततोऽन्यतृतीयार्थासम्भवात्, स्वार्थ एव तावदवधार्यः–तावच्छब्दस्य क्रमार्थत्वादर्थान्तरस्याप्यवधारयिष्यमाणत्वात्, शब्दान्तरार्थापोहमात्रोक्तौ दोषोऽसत्त्वप्राप्तिः तस्मात्तावताऽपरितोषात् स्वार्थे कुर्वतीत्युक्तः, कः स्वार्थः ? उच्यते–स्वार्थः-स्वलक्षणोऽन्यतोऽन्यः–अनन्यः, स एवेत्यर्थः, प्रमाणयोरपि नियतविषयावधृतेः प्रत्यक्षविषयः स स्वार्थ इति, स इहेत्यादि, इह–शब्दार्थे सविकल्पार्थे सामान्यतः सविकल्परूपेऽध्यारोपापवादात्मनि स न सम्भवति स्वार्थः प्रत्यक्षविषयः, 'स्वलक्षणमनिर्देश्यं' (प्रमाणस. श्लो.–५) इत्युक्तत्वात् प्रत्यक्षविषयस्य ।

स्यान्मतं प्रत्यक्षादर्थादन्योऽस्ति स्वार्थ इति चेत्–

**न च ततोऽन्यः स्वार्थः कश्चिदस्ति, लक्ष्यद्वित्वावधारणात् प्रमाणद्वित्वावधारणात्, तिष्ठतु तावत् स्वार्थः, तथाच शब्दवाच्यविचारे प्रस्तुते जातिसम्बन्धजातिमदभिधानानामसम्भवादन्यापोहकृच्छ्रुतिरिति ।**

(**न चेति**) न च ततोऽन्यः–प्रत्यक्षार्थात् स्वार्थः, शब्दान्तरार्थेत्याद्यन्यापोहः स्वार्थो न भवति, तद्व्यतिरिक्तश्च तृतीयो न कश्चिदन्योऽस्ति, लक्ष्यद्वित्वावधारणात् ततश्च प्रमाणद्वित्वावधारणात्, तस्मात्तृतीयोऽर्थोऽपि नास्ति कुतः स्वार्थः ? इत्यत आह–तिष्ठतु तावत् स्वार्थः असत्त्वादविचार्य इत्यर्थः, तथा चेत्यादि, एवञ्च कृत्वा शब्दवाच्यविचारे प्रस्तुते जातिसम्बन्धजातिमदभिधानानामसम्भवादन्यापोह-

**अर्थौ चेति,** स्वलक्षण सामान्यलक्षणश्चेति तावर्थौ, एतद्व्यतिरिक्तप्रमेयस्याभावात् । तत्र कोऽर्थोऽत्र स्वार्थपदेन ग्राह्य इत्यत्राह–**स्वार्थ एव तावदिति** स्वार्थपदेनात्रावधार्य प्रथमोपस्थितत्वादग्रे च सामान्यलक्षणार्थस्यावधारयिष्यमाणत्वाच्च स्वलक्षण एवेति भावः । स्वार्थे कुर्वतीति पदस्य कृत्यमाचष्टे–**शब्दान्तरार्थेति** प्रकृतशब्दादन्य शब्द. शब्दान्तरं तस्यार्थ शब्दान्तरार्थस्तस्यापोह, तन्मात्रोक्तौ शब्दान्तरार्थप्रतिषेधमात्रलाभेन तस्य नि स्वभावतया तुच्छत्वेन शशशृङ्गादेरिवासत्त्वमापद्यत, तस्मात्स्वार्थे कुर्वतीति पर्युदासताख्यापनार्थमुक्त इति भाव । स्वार्थं परिचाययति–**कः स्वार्थ इति** स्वलक्षण एव स्वार्थ स्वस्मादन्यतोऽन्य', अनन्यभूतः स्वलक्षण एवेत्यर्थ । स एवेत्यनेन स्वलक्षण एव कुतो विवक्षित, ततोऽन्य कस्मान्न भवतीत्यत्राह–**प्रमाणयोरपीति,** द्वित्वेन प्रत्यक्षानुमानरूपेणावधारितयो प्रतिनियतविषयत्वेन प्रत्यक्षविषयस्वलक्षणादन्योऽनुमानविषय एव, ततोऽन्यश्च प्रत्यक्षविषय स्वलक्षण एव भवतीति भाव । एवंविध. स्वलक्षण शब्दार्थविचारे स्वार्थो न भवितुमर्हतीत्याह–**स इहेत्यादीति,** यज्ज्ञानं नामजात्यादिभेदोपचारेण विकल्पकं तदध्यारोपरूपकल्पनात्मकत्वान्न प्रत्यक्षम्, यच्च ज्ञानं नामाद्यभेदोपचारेणाविकल्प तत्प्रत्यक्षं तद्विषयः स्वलक्षण तच्चानिर्देश्यम्, तस्मान्न तदिह सम्भवतीति भाव. । तत्र दिङ्नागवचनमाह–**स्वलक्षणमिति** । प्रत्यक्षविषयस्वार्थव्यतिरिक्तस्वार्थाभावमाह–**न च ततोऽन्य इति** । शब्दविषयो न स्वार्थ इत्याह–**शब्दान्तरेति,** प्रमेयद्वयस्य निश्चितत्वात् प्रमाणस्यापि द्वित्वेन तृतीयप्रमाणाभाव एवेति नास्ति तृतीयोऽर्थ कश्चिदित्याह–**लक्ष्येति** । अस्तु स्वार्थं अस्ति न वेत्यधुना विचारोऽनवसरत्वात्तिष्ठतु, शब्दस्य वाच्य क इति चिन्तायामन्यापोह एवेति ब्रूमस्तदन्यस्य जात्यादेरसम्भवादित्याह–**तिष्ठतु तावदिति । भेदपक्षस्येति.** भेदस्य जातिमत्त्वेन तत्पक्षस्य जातिमत्पक्षाऽविशिष्टत्वाज्जातिसम्बन्धजातिमदभिधानानामित्यत्र भेदो न गृहीत इति भाव. । शब्दस्यार्थौ द्वावेव स्याताम्, प्रत्यक्षविषयस्वार्थो वा, अनुमानविषयसामान्यं वेति निश्चित्य न प्रत्यक्षविषयस्वार्थत्वेन शब्दोऽर्थवानित्याद्युक्तम्, तस्मात् तृतीयोऽर्थोऽस्ति न वेति प्रकृते विचारोऽयुक्त

१ सि. क्ष छा. डे. सत्वाप्राप्तिः । २ सि. क्ष. छा. डे. तत्र च ।

कृच्छ्रतिरिति, भेदपक्षस्य जातिमत्त्वाविशिष्टत्वेष्टेः, शब्दार्थावित्यभ्युपेत्योक्तं त्वया, न प्रत्यक्षविषयस्वार्थत्वेनेति त्वद्वचनमेव ज्ञापकम् ।

स्यान्मतमनुमानविषयः स्वार्थ इति तन्न –

**अनुमानविषयोऽपि नैवास्य स्वार्थः, अग्निरनग्निर्नेत्याद्यपोहार्थस्वरूपत्वात्तस्यापि च व्याख्येयत्वात् भेदोपादाने वाऽस्वार्थत्वमपोहार्थादन्यत्वात्, परप्रत्यायनादित्वभिन्नार्थत्वाच्च, अथ क्वचिदक्षानुमानविषयत्वविचारोऽसम्बन्ध इति चेन्न, तृतीयार्थासम्भवादित्यादेः प्रदर्शितत्वात्, यद्यपि प्रत्यक्षानुमानविषययोरदृष्टोऽप्यन्यापोह इत्यस्मादेव शब्दादवगन्तव्यः स्वार्थो न निराश्रयः, उक्तदोषात्, तस्माद्यस्मिन्नन्योऽपोह्यते स स्वार्थ इति घट इत्युक्तेऽघटो न भवतीति घटे पटाद्यपोहाद्घटः स्वार्थ इति शब्दविषय एव स्वार्थो निश्चित इति मतं तथापि स्वार्थ इत्याधाराधेयादर्शनात् स्वरूपविधिविनाभूतत्वाद्विधीयमानस्वार्थानवस्थानादन्यशब्दान्तरार्थयोरस्थितरूपत्वात् कस्मिन् स्वार्थे कोऽसावन्यो यस्मादपोह्यते ? ।**

( **अनुमानेति** ) अनुमानविषयोऽपि नैवास्य–शब्दस्य स्वार्थः, अपोहार्थस्वरूपत्वात्, तद्दर्शयति – अग्निरनग्निर्नेत्यादि, तस्यापि चापोहार्थस्याऽऽख्येयत्वात्, न चाग्न्यातोऽभावीदृशः स्वार्थ इति विशेष्य, स्यान्मतमग्निमत्त्वविशिष्टदेशादिः स्वार्थो भिन्नस्तत्सम्बन्धीति चेत्–एवं तर्हि भेदोपादाने वाऽस्वार्थत्वम्, अपोहार्थादन्यत्वात्, अपोहार्थस्यैव त्वयाऽनुमानत्वेष्टेः, किञ्चान्यत्–परप्रत्यायनादित्वभिन्नार्थत्वाच्च स चानुमानविषयः स्वार्थः आत्मनः प्रत्यायने लिङ्गादिवस्तुरूपः, परप्रत्यायने शब्दवाच्यो ज्ञानरूपः, ज्ञानार्थत्वा-

एवेत्याशयेनाह–**शब्दार्थाविति** । अथानुमानविषयसामान्यमपि न शब्दस्य स्वार्थ इत्याह–**अनुमानविषयोऽपीति** । व्याचष्टे–**अनुमानेति** । कथमनुमानविषयो न शब्दार्थ इत्यत्राह–**अपोहार्थस्वरूपत्वादिति,** अयं भावः शब्दानां वाच्यं न किञ्चिद्यथार्थं वस्तुस्वरूपमस्ति, शाब्दप्रत्ययस्य भिन्नेष्वर्थेष्वभिन्नाकारावसायेन प्रवृत्त्या भ्रमरूपत्वात्, अर्थे विकल्पबुद्ध्याऽऽरोपितमभिन्नरूपमपि अन्यव्यावृत्तस्वलक्षणानुभवबलायातत्वादन्यव्यावृत्तत्वेन स्वस्य प्रतिभासनाच्च भ्रान्तैस्तद्रूपस्य स्वलक्षणेन सहैकतयाऽध्यवसितत्वादन्यापोढपदार्थावगतिफलत्वाच्चान्यापोह इत्युच्यते स एव शब्दार्थ इति । अनुमानविषयीभूतापोहार्थस्य स्वरूपमुपदर्शयति–**अग्निरनग्निरिति.** तत्रापोहस्वरूपमुपदर्शनीय किं लक्षणं दर्शितं, तच्च दोषदर्शितं ततो न शब्दस्य स स्वार्थ इति भावः । ननु नापोहोऽनुमानस्य विषयो येन तत्स्वरूपपरिज्ञानव्यतिरेकेण शब्दार्थत्वसम्भवो न भवेत्, किन्तु अग्निमद्देशविशेषः, स च अपोहाद्भिन्नोऽनुमानस्य विषय इत्याशङ्कते–**स्यान्मतमिति** । एवं तर्ह्यन्यापोहाभिन्नत्वेन स नानुमानस्य स्वार्थः, अपोहस्यैवानुमानविषयत्वेष्टेरित्याह–**एवं तर्हीति** । भेदस्यानुमानविषयत्वे दोषान्तरमाह–**परप्रत्यायनादित्वेति,** आदिपदेनात्मप्रत्यायनं ग्राह्यम्, देशादेः स्वपरसाधारणत्वात् परप्रत्ययजनकोऽयमयञ्च स्वप्रत्ययजनक इति परप्रत्यायकत्वस्वार्थप्रत्यायकत्वलक्षणविशेषाभावेनानुमानस्य स्वार्थपरार्थत्वभेदो न स्यात्, दृष्टश्च भेदः, अतश्च साधारणो देशादिर्नानुमानस्य स्वार्थ इति भावः । अनुमानद्वैविध्यं दर्शयति–**स चेति,** अत्रानुमितिकरणरूपमनुमानमुपदर्शितम्, आत्मनो यः प्रत्ययः पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वलक्षणत्रिरूपविशिष्टलिङ्गादनुमेयार्थविषयं स्वस्य ज्ञानं तज्जनकं लिङ्गादि स्वार्थानुमानम्, परस्य तथाविधज्ञानजनने हेतुभूतं त्रिरूपलिङ्गवचनप्रभवं ज्ञानं परार्थानुमानम्, ततश्च भेदस्य देशादेरनुमानविषयत्वे ईदृशं द्वैरूप्यं न स्यादिति भावः । प्रत्यक्षानु-

१ सि. क्ष. डा. °विशिष्टत्वेष्टः । २ सि. क्ष. डे. °रूपोज्ञानात् नानार्थ० । डा. रूपोज्ञानात्मानार्थत्वा० ।

च्छब्दप्रयोगस्येत्ययुक्तमस्य स्वार्थस्य द्वैरूप्यम्, एवं न प्रत्यक्षविषयो नानुमानविषयः स्वार्थो घटते शब्दस्य त्वन्मतादेव, अथ कश्चिदित्यादि, शब्दार्थविचारे सति अक्षानुमानविषयत्वविचारोऽसम्बन्ध इति चेन्न, तृतीयार्थासम्भवादित्यादेः प्रदर्शितत्वात्, तथापि त्वदनुवृत्त्या यद्यपि प्रत्यक्षानुमानविष[य]योरदृष्टोऽपि अन्यापोह इत्यस्मादेव शब्दादवगन्तव्यः स्वार्थः, अन्यस्यापोहो न स्वस्यार्थस्य स्वार्थे वाऽन्यस्मा[द्]पोहो न निराश्रय उक्तदोषात्, तस्माद्यस्मिन्नन्योऽपोह्यते स स्वार्थ इति घट इत्युक्ते अघटो न भवति-पटादिरिति, घटे पटाद्यपोहात् घटः स्वार्थ इति शब्दविषय एव स्वार्थो निश्चित इति मतं तथापि तदपि न, स्वार्थ इत्याधाराधेयादर्शनात्—स एवाधाराभिमतः स्वार्थः, आधेयाभिमतश्च शब्दो न दृश्येते तौ, स्वरूपविधिविनाभूतत्वात् यस्मिन्नन्यस्य शब्दान्तरार्थस्यापोहं करोतीत्युच्यते स एवाधारार्थो न विधीयते शब्दश्चाधेयः, तस्मात्तयोरदर्शनात् कस्मिन् स्वार्थे अपोह्यत इत्यभिसंभत्स्यते, न चेद्विधीयतेऽन्यस्यार्थस्य सूत्रोक्तस्य भाष्योक्तस्य शब्दान्तरार्थस्य[३] स्वरूपानवस्थानं विधीयमानस्वार्थानवस्थानात्, तस्मिंस्तु विधेयेऽवस्थानात् तस्मिंस्तु विधेयेऽवस्थिते शब्दान्तरमन्यः शब्दः तदर्थश्चेति वक्तुं युज्येत, अत आह-अन्यशब्दान्तरार्थयोरस्थितरूपत्वात् को ह्यसावन्यो यस्य यस्माद्वाऽपोहः क्रियते स्वरूपविधिविनाभूतः ? इति—न सम्भवत्यपोऽर्थ इत्यर्थः।

**अन्योऽनन्यो न भवतीति चेत् ननु स एव विधिः स्वार्थः, तस्याग्रहणे नेत्यादिबुद्धेरभावात्, इतरथाऽन्यो न भवतीति व्यावृत्तिमात्रस्थितित्वादप्रतिष्ठितस्वार्थयोस्ततोऽयमन्यः, अतश्चान्यः स इति तदेतयोर्ग्रहणाभावात् कुतः कोऽन्यः ? कुतोऽस्यापोहः ?, इतरेतराश्रयभावदोषश्च—तस्मादन्यः, अन्यस्मात् स इति ।**

(**अन्य इति**) अन्योऽनन्यो[न][४] भवतीति चेत्—स्यान्मतं यथैव स्वार्थोऽन्यो न भवतीत्यन्यमानविषयस्वार्थत्वं शब्दस्य न विषय इति प्रदर्शि[त]मित्याह-**एवं नेति**। अर्थान्तरविचारप्रसङ्गमाशङ्कते-**शब्दार्थविचार इति**। तृतीयवस्त्वभावस्योक्तत्वेन नाप्रस्तुतविचारप्रसङ्ग इति समाधत्ते-**तृतीयार्थेति** । प्रत्यक्षानुमानाविषयीभूतशब्दावगम्योऽन्यापोहरूपः स्वार्थो निराश्रयो न सम्भवतीत्याशङ्कते-**यद्यपीति** स्वार्थान्यापोह स्वार्थे वाऽन्यापोहोऽन्यापोह शब्दस्यान्यो निराश्रयो न भवितुमर्हति, शब्दान्तरार्थापोहमात्रोक्तौ दोषोऽनवस्थादिरिति दोषस्योक्तत्वादिति भावः । एवञ्चापोहाश्रयीभूतो घटादि शब्दविषयः स्वार्थोऽभ्युपेय आपततीत्याह-**तस्माद्यस्मिन्निति**, निराश्रयत्वदोषप्रसङ्गनिवारणाय यस्मिन् घटादौ तदन्योऽपोह्यते स घटादि स्वार्थः शब्दस्य विषयः तदन्यशब्देन पटादिर्ग्राह्य इति त्वदनुवृत्त्या प्रसज्यत इति भावः । स्वार्थे श्रुतिः शब्दान्तरार्थापोहं कुर्वतीत्युक्त्या स्वार्थ आधारः श्रुतिः शब्द आधेय इति प्रतीयते किन्तु तथा न दृश्यत इत्याह-**स्वार्थ इतीति** । व्याचष्टे-**स एवेति** । अदर्शने हेतुमाह-**स्वरूपविधीति**, स्वार्थो हि शब्दान्तरापोहेऽन्यापोहे वा शब्दार्थं नायाति, तत्र शब्देनाविधानात् विधिविनाभूतः, अविधीयमानत्वाद्विधिर्नाधारः, तदभावे क आधेयः स्यादिति न शब्दस्वार्थयोराधाराधेयरूपतो दर्शनमस्ति, स्वरूपयोराधाराधेययोर्विधानाभावात्, एवञ्च तयोरदर्शनेन कस्मिन् स्वार्थेऽपोह्यत इति भावः । एवञ्च स्वार्थस्याविधीयमानत्वेन स्वरूपानवस्थानात् सूत्रोक्तमर्थान्तरं भाष्योक्तं शब्दान्तरञ्च स्वरूपेऽनवस्थितमेव, स्वार्थे हि विधेये स्वरूपेऽवस्थिते सति शब्दान्तरमर्थान्तरं वा अयमन्यः शब्दः, अन्यश्च तदर्थ इति युज्यते वक्तुम्, अयं प्रकृतः शब्दः, अयञ्च स्वार्थ इति शब्दस्वार्थयोः परिज्ञानमेव नास्ति कथं शब्दान्तरस्यार्थान्तरस्य च परिज्ञानं भवेत् येन तदपोहः प्रकृते स्वार्थे कर्तुं शक्येतेत्याह-**तस्मिंस्तु विधेये इति** । अन्यशब्दान्तरार्थयोर्नानवस्थानं स्वार्थस्यान्यप्रतियोगिकभेदवदन्यस्याप्यनन्यप्रतियोगिकभेदवत्त्वेनानन्यापोहेनान्यः प्रतीयत एवेत्याशङ्कते-**अन्य इति** । व्याचष्टे-**स्यान्मतमिति**, यथा स्वार्थो घटो घटशब्देन पटाद्यन्यापोहरूपतः प्रतीयते तथैव पटा-

१ सि. क्ष. छा. °स्मिन्नन्यापोह्यते । २ सि. °र्थोर्निवि० । ३ सि. क्ष. छा. °दार्थश्च । ४ सि. क्ष. छा. योऽनन्यो० । ५ सि. क्ष. छा. °र्थोऽन्योन्यभव० ।

स्यापोहेन प्रतीयते तथैवान्योऽप्यनन्यो [न] भवतीति तदपोहेन प्रतीयत इति चेन्मन्यसे अत्र ब्रूमो ननु स एव [1]विधिरित्यादि, येन विधेयेनोपलक्षितस्यानन्यस्य प्र[म]णादन्यप्रतीतेरनन्यः स एव स्वार्थो विधेयः, तस्याग्रहणे नेत्यादिबुद्धेरभावादनन्यः स्वार्थो विधेय इत्यापन्नम्, इतरथा अन्यो नेत्यादि यावद्ग्रहणाभावात्—यथा घटादन्यः पट इत्युक्ते स न भवति, एवं पटादन्यो घटः सोऽपि न भवत्येव, द्वयोरपि व्यावृत्तिमात्रस्थितित्वात्, ततश्चाप्रतिष्ठितस्वार्थयोः ततोऽयमन्यः, [अतश्चान्यः] स इति तदेतयोर्ग्रहणाभावः, ततश्च कुतः कोऽन्यः? कुतोऽस्यापोहः? इत्यपोहशब्दार्थाभावः, किञ्चान्यत्—इतरेतराश्रयभावदोषः, कथमिति चेदुच्यते—तस्मादन्यः अन्यस्मात् सः, इति[:] हेत्वर्थे—यस्मादन्यबलात् सः प्रसिद्ध्यति तद्बलादन्यः, इतरेतराश्रयाणि च न प्रकल्पन्त इत्युक्तम्, एवं लौकिकान्यापोहशब्दार्थमात्रानुसारेण परीक्ष्यमाणोऽन्यापोहो न घटते स्वार्थः ।

**अथान्यापोहलक्षणवाक्यव्याख्यानुवृत्त्या व्यावृत्तिमत्स्वार्थो गृह्यते, हिशब्दो यस्मादर्थे, यस्माद्वृक्षशब्दोऽवृक्षशब्दनिवृत्तिं स्वार्थे कुर्वन् स्वार्थं वृक्षलक्षणं प्रत्याययति, एवं निवृत्तिविशिष्टं वस्तु द्रव्यादिसन् शब्दार्थो न निवृत्तिमात्रं खपुष्पतुल्यम्, किन्तु तत् सदसत्, यथा कृतकत्वस्यानित्यत्वविशिष्टशब्दानुमापकत्वमेवं शब्दोऽपि स्वमभिधेयमर्थान्तरव्यवच्छेदेन द्योतयति प्रमाणत्वात् ।**

**अथान्यापोहेत्यादि** यावत् तत्सदसदिति, अन्यापोहलक्षणवाक्यानुसारेण परीक्षामाह—अन्यापोहलक्षणवाक्यं तेनान्यापोहकृच्छ्रुतिरिति तस्य व्याख्या—शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्ते

दिरपि घटाद्यन्यापोहरूपेण पटादिशब्दान्न प्रतीयत इति भावः । अन्यस्मिन्ननन्यप्रतियोगिकेऽपोहे प्रतियोगिभूतस्यानन्यस्यापरिज्ञाने तत्प्रतियोगिकापोहेनान्यस्यापरिज्ञानमेव स्यादतोऽनन्य एव विधेयः, स एवानन्यः स्वार्थ इति, यद्वाऽन्यापोहशब्दस्य व्यवच्छेद्योऽनन्यापोहशब्दार्थः स च विधिरेव निषेधद्वये विधिसद्भावादिति समाधत्ते—**अत्र ब्रूम इति** । अपोहबुद्धौ प्रतियोगिबुद्धेः कारणत्वादाह—**तस्याग्रहण इति,** प्रतियोगिनोऽनन्यस्याग्रहण इत्यर्थः । अविधेयत्वे तु दोषमाह—**इतरथेति,** अन्यो न भवत्यनन्यो न भवतीत्यत्र प्रतियोगिनोरन्यानन्ययोर्विधिरूपयोर्ग्रहणाभावे उभयत्र न भवतीति व्यावृत्तिमात्रस्यैव स्थितिः स्यात्, ततश्च स्वार्थावन्यानन्यावप्रतिष्ठिताविति ततोऽयमन्यः, अतश्चान्यः स इति न वक्तुं शक्यते तयोरग्रहणान्नापोहो विधातुं शक्यत इति भावः । **घटादन्यः पट इति,** अनेन घटव्यावृत्तिः पटे प्रतीयते घटोऽपि पटव्यावृत्तिमान्, एवञ्च घटपटयोर्व्यावृत्तिमात्रेऽवस्थानं स्यात्तथा च घटपटादिलक्षणयोः स्वार्थयोर्व्यावृत्तिमात्ररूपत्वेनाविशिष्टयोः परस्परं विलक्षणतया ग्रहणाभावात् कुतः कोऽन्यः कुतोऽस्यापोह इति भावः । पटादन्यो घट इति प्राक् पटे विज्ञाते तद्बलात् घटः प्रसिद्ध्येत् पटश्च घटादन्य इति घटे विज्ञाते तद्बलात् पटः प्रसिद्ध्यतीति परस्परस्य सिद्धौ परस्परस्यापेक्षितत्वेनान्योन्याश्रयोऽपि, न ह्यन्योन्याश्रितयोः कल्पसहस्रेणापि प्रसिद्धिः, येन सिद्धः सन्नर्थक्रियासु प्रवर्त्ततेत्याह—**इतरेतराश्रयेति** । तद्व्याचष्टे—**तस्मादन्य इति,** तत्प्रसिद्धावन्यप्रसिद्धिः, अन्यस्य प्रसिद्धौ च तत्प्रसिद्धिरिति भावः । तदेवमन्यापोहो लोकप्रसिद्धार्थमनुसृत्य निराकृत इत्याह—**एवमिति** । अन्यापोहलक्षणवाक्यव्याख्यानुसारेण तन्निराकर्त्तुमाह—**अथान्यापोहवाक्यमिति** । व्याचष्टे—**अन्यापोहेति** अन्यापोहमात्रस्य शब्दाभिधेयत्वेऽसत्त्वापत्तिर्व्यावृत्तिमात्रप्रसङ्गश्चेति मन्यमानो लक्षणवाक्यमन्यापोहवत्स्वार्थपरतया व्याचष्टे—**शब्दान्तरेति,** एतद्व्याख्यानुसारेण व्यावृत्तिमान् स्वार्थोऽन्यापोहेन गृह्यत इति भावः । तस्यैव वृत्तकभिक्षोर्व्याख्यान-

1 सि. क्ष. छा. डे. विधेरित्यादिप्त्वेन विधियेनोपा० । 2 सि. क्ष. छा. डे. न इत्यति बुद्धे० । 3 सि. अन्यः स्वार्थो विधेरित्या०, छा० डे. अनन्यः स्वार्थो विधेरित्या० । 4 सि. क्ष. छा. स्वार्थयोस्तरयंश्च अन्यः स इति तदेतयोर्ग्रह० ।

इत्युच्यते तदनुवृत्त्या व्यावृत्तिर्यस्मिन् विद्यते स्वार्थे स गृह्यते, न व्यावृत्तिमात्रम्, हिशब्दस्य हेत्वर्थत्वात्, तद्दर्शयति–हिशब्दो यस्मादर्थे, तन्निरूपयति लौकिकोदाहरणेन–यस्माद्वृक्षशब्द इत्यादि यावत् प्रत्याययतीति, एवं निवृत्तिविशिष्टं वस्तु शब्दवाच्यार्थः, कतमोऽसौ ? द्रव्यादिसम्–द्रव्यपृथिवीमृद्घटत्वादि, न निवृत्तिमात्रं खपुष्पतुल्यमिति दृष्टान्तः, अथवाऽनुमानानुमेयसम्बन्ध एव वाच्यवाचकसम्बन्ध इति मन्यमानो–यथा कृतकत्वस्येत्यादि सत्स्वरूपव्याख्यानमुदाहृत्यानुमानमेवं शब्दोऽपीत्यादि दार्ष्टान्तिकञ्च सत्स्वरूपव्याख्यानं निगमयति, प्रमाणत्वादिति हेतुधर्मश्च तयोस्तुल्यं शेषं गतार्थम्, उभयोरप्यन्यापोहविशिष्टार्थप्रत्यायनतुल्यत्वादिति पिण्डार्थः, यथा वक्ष्यति निदर्शनम्–'न प्रमाणान्तरं शाब्दमनुमानात्' [प्रमाणस०] इति ।

**अत्र ब्रूमोऽत्रापि त्वयैवं ब्रुवतान्यापोहातिरिक्तः स्वार्थ उक्त इति विधिरेवाङ्गीकृतः अन्यव्यावृत्तस्वार्थार्थत्वात्, देवदत्त! गामभ्याज शुक्लामिति गवानयनवाक्यवत्, व्यावृत्तियुक्तस्येत्यादि यावत्प्रदर्शनादिति त्वद्वचनेन निवृत्तिविशिष्टं वस्तु शब्दार्थो द्रव्यादिसन्नित्यादिना ग्रन्थेन च स्वार्थविधानमेव प्रदर्शितम्, अन्यथा सर्वत्रैव व्यावृत्तिमात्रं न स्वार्थो नाम कश्चिदस्तीति स्वार्थे कुर्वती श्रुतिरित्यनर्थकं स्यात् ।**

**अत्र ब्रूमोऽत्रापीत्यादि**, त्वयैवं ब्रुवताऽन्यापोहातिरिक्तः स्वार्थ उक्तोऽतो विधिरेवाङ्गीकृतः, कस्मात् ? अ[न्य]व्यावृत्तस्वार्थार्थत्वात्–अ[न्य]व्यावृत्तस्वार्थोऽर्थोऽस्येति, अन्यव्यावृत्तस्वा[र्थो]र्थो गृह्यत इत्यादि वाक्यम्, यस्या[न्य]व्यावृत्तस्वार्थार्थत्वं तद्वाक्यं विधिमङ्गीकुर्वद् दृष्टम्, यथा देवदत्त! गामभ्याज शुक्लामिति गवानयनविधायकं वाक्यमगवादिदोहादिव्यावृत्तिमद्देवदत्तकर्तृकशुक्लगोकर्मकानयनक्रियस्वार्थं तथा घटः पटो न भवतीत्यन्यापोहोपलक्षितस्वार्थं वाक्यमिति त्वयैवोक्तम्, तद्यथा–व्यावृत्तियुक्तस्येत्यादि

यत–हिशब्द इति । एवञ्च निवृत्तिविशिष्टं द्रव्यमृद्घटादिवस्तु द्रव्यादिशब्दार्थो न केवलमद्रव्यादिव्यावृत्तिमात्रम्, तस्य तुच्छत्वेन खपुष्पतुल्यत्वात्, तस्मात् सद्रूपं वस्तु शब्दार्थं इत्याचष्टे–एवं निवृत्तीति । एवं शब्दप्रमाणस्यानुमानेऽन्तर्भावस्येष्टत्वादनुमानस्येव शब्दस्याप्यपोहविशिष्टं वस्तुविषय इत्याह–अथवेति । न प्रमाणान्तरमिति, न प्रमाणान्तरं शाब्दमनुमानात्तथाहि सः ( तत् ? ) । कृतकत्वादिवत्स्वार्थमन्यापोहेन भाषते ॥ इति तत्त्वसङ्ग्रहटीकायां कमलशीलेनोद्धृतेयं कारिका, यथानुमानमन्यापोहेनाग्निं ज्ञापयति तथा शब्दोऽपि निवृत्तिविशिष्टं वस्तु बोधयतीति न तत् प्रमाणान्तरम्, यथा च कृतकत्वमनित्यत्वविशिष्टं शब्दमनुमापयति तथा शब्दोऽपि स्वमभिधेयमर्थान्तरव्यवच्छेदेन द्योतयति प्रमाणत्वस्यानुमानशब्दयोस्तुल्यत्वात्, तुल्यता चोभयोरन्यापोहविशिष्टस्वार्थप्रत्यायनत्वेनेति प्रतिभाति । अन्यनिवृत्त्यवगाहिस्वार्थस्य शब्दाभिधेयत्वेऽङ्गीकृते विधिरेव शब्दार्थः स्यान्न त्वन्यापोहमात्रमिति निराकरोति–अत्र ब्रूम इति । व्याख्या विदधाति–त्वयैवमिति, अन्यव्यावृत्तं हि वस्तु भवता मतेन स्वलक्षणमसाधारणमेव भवेत्, न ततोऽन्यः कश्चन स्वार्थो विद्यते, लिङ्गजन्यबुद्धेरपि अपोहविषयत्वात्, तस्माद्विधिरेव शब्दार्थो जातो नापोह इति भावः । हेतुमाह–अन्यव्यावृत्तेति । अन्यव्यावृत्तस्वार्थो गृह्यत इति वाक्यं विधिमङ्गीकरोति, अन्यव्यावृत्तस्वार्थार्थत्वात्, यथा देवदत्त! गामभ्याज शुक्लामित्यादिवाक्यमित्यनुमानं दर्शयति–अन्यव्यावृत्तस्वार्थार्थ इति । अत्र गोशब्दोऽगोव्यावृत्तिमतीं गां अभ्याजशब्दः स्वेतरदोहादिव्यावृत्तिमतीं क्रियां शुक्लशब्दोऽशुक्लव्यावृत्तिमतीं शुक्लामाह, तथा च वाक्यार्थमाह–अगवादीति । यस्मिन्नन्योऽपोह्यते स स्वार्थः घट इत्युक्तेऽघटो न भवति पटादिरिति वदता त्वयैवान्यापोहोपलक्षितस्वार्थ इत्युक्तमित्याह–तथा घट इति । कथमुक्तमित्यत्र तदुक्तमदो मूलमेव प्रदर्शयति–व्यावृत्तियुक्तस्येति । स्वार्थस्य

१ सि. क्ष. डे. व्यावृत्तिरिक्तो० । डा. व्यावृत्त्यतिरिक्तो० ।

परवाक्यप्रत्युच्चारणम्, तद्विवरणञ्च–हिशब्दो यस्मादर्थं इत्याद्युपक्रम्य हेत्वर्थभावनोदाहरणं वृक्षशब्दः सव्याख्यो दण्डकः सोत्तरपूर्वपक्षप्रत्युच्चारणं सव्याख्यानं यावत्प्रदर्शनादिति त्वद्वचनादेव स्वार्थस्य विधानं स्फुटीकृतम्, किञ्चान्यत्–निवृत्तिविशिष्टमित्यादि–एवं निवृत्तिविशिष्टं वस्तु शब्दार्थो द्रव्यादिसमित्यादिना ग्रन्थेन कृतकत्वस्यानित्यत्वविशिष्टशब्दानुमेयत्वदृष्टान्तेन संभावनेन एवं शब्दोऽपि स्वमभिधेयमित्यादिना स्वार्थविधानमेव प्रदर्शितम्, अन्यथेत्यादि–एवमनिच्छतस्ते दोषो यथा वृक्षशब्दप्रयोगे पटाद्यवृक्षान्यशब्दार्थव्यावृत्तिरपि प्राप्ता, ततः सर्वत्रैव व्यावृत्तिमात्रं न स्वार्थो नाम कश्चिदस्त्यतः स्वार्थे कुर्वती श्रुतिरित्यनर्थकं स्यात्।

अत्राह–स्यादेतदेवं यदि [अ]वृक्षनिवृत्त्या गम्यते स्वार्थः कश्चिदिति, किं तर्हि? वृक्षः सन्निति असन्न भवतीति तस्यापि वृक्षसत्त्वस्यावृक्षासत्त्व[निवृत्ति]मात्रार्थत्वादन्यापोहमेव शब्दार्थमभ्युपगच्छामीत्यत्र ब्रूमः–

**यदपि च तत्सदित्यसन्न भवतीति सच्छब्दार्थोऽसच्छब्दार्थं निवर्त्तयतीति तदपि परिश्लथम्, युगपदयुगपद्भाविनोऽर्थस्यासत्त्वाविनाभाविन एव सत्त्वात् युगपद्भूतपटाद्यभवनेनैव घटभवनं दृष्टम्, तस्माद्भवनाभवने न न भवत्यसन्निति, अन्यथाऽनुपपत्तेः त्वन्मतवत् उक्तवच्चायुक्तं सदित्यसन्न भवतीति।**

**(यदपि चेति)** यदपि च तत्सदित्यसन्न भवतीति सच्छब्दार्थोऽसच्छब्दार्थं निवर्त्तयतीति, ततः सदित्युक्तेऽसन्न भवतीत्ययमर्थो गम्यते ततोऽन्यापोह एवेति भवतोक्तं तदतिपरिश्लथं–दुर्बद्धदारुभारकवद्विशीर्यत इत्यर्थः, कस्मात्? [युगपद]युगपद्भाविनोऽर्थस्यासत्त्वाविनाभाविन एव सत्त्वात्, तत्र तावत् ननु युगपद्भूतपटाद्यभवनेनैव घटभवनं दृष्टम्, युगपद्भूतरसाद्यभवनेनैव रूपभवनं दृष्टम्, यद्घटस्य सत्त्वं

विधेयत्वानभ्युपगमे स्वार्थे कुर्वती श्रुतिरिति वाक्यखण्डोऽनर्थक एव स्यात्, सर्वशब्दानां व्यावृत्तिमात्रार्थत्वप्राप्तेरित्याह–**एवमनिच्छत इति**। ननु वृक्षशब्दादवृक्षनिवृत्तेरन्यो न कश्चित् स्वार्थो वस्तुरूपो गम्यते स्वार्थे कुर्वतीत्यत्र स्वार्थोऽपि यो द्रव्यादिरूपः सन्नित्युक्तः सोऽपि असन्निवृत्तिमात्रम्, तथा च वृक्षः सन्निति अवृक्षासत्त्वनिवृत्तिमात्रार्थमेवेत्याह–**स्यादेतदेवमिति**, वृक्षः सन्नित्यत्र वृक्षशब्देनावृक्षनिवृत्तिः सच्छब्देनासन्निवृत्तिरित्यवृक्षव्यावृत्तिरसद्व्यावृत्तिरित्यर्थः, तस्मादपोह एव शब्दार्थ इति भावः। समाधत्ते–**यदपि चेति**। व्याकरोति–**यदपि च तदिति**, सच्छब्दार्थोऽसच्छब्दार्थं सदित्यर्थान्तरं च निवर्त्तयतीत्यन्यापोह एव शब्दार्थ इति यदुक्तं तदत्यन्तं शिथिलीभूतं वचनमेवेति भावः। अन्वयनिरपेक्षस्य व्यतिरेकस्याप्रसिद्ध्यानुपलब्धेरितरेतरापेक्षाभ्यामेवान्वयव्यतिरेकाभ्यां सर्वत्रार्थानुभवनान्निवृत्तिमात्रस्य शब्दार्थताऽसङ्गतैवेति निरूपयति–**युगपदयुगपदिति**, सत्त्वमसत्त्वापेक्षत्वादसत्त्वाविनाभावि, असत्त्वमपि सत्त्वापेक्षत्वात् सत्त्वाविनाभावि, असत्त्वानपेक्षञ्च सत्त्वमत्यन्तासदेव वस्तु गमयेत्, विधिरूपाप्रतिलम्भात्, सत्त्वमप्यसत्त्वानपेक्षं सर्वरूपतया वस्तु गमयेत्, निषेधरूपाप्रतिलम्भात्, नहि वस्तु सर्वसद्रूपेण सर्वासद्रूपेण वा भवति, अतः सत्त्वासत्त्वे परस्परसापेक्षे आत्मलाभमासादयत इति भावः। युगपद्भाविघटादिरूपादिवस्तुनः सदसत्त्वं दर्शयति–**तत्र तावदिति**, भवनस्याभवनापेक्षत्वात् घटे नाप्रसक्तं घटभवनं निषिध्यते किन्तु प्रसक्तमेव, पटाद्यभवनन्तु घटस्य धर्मः, तदधीनत्वाद्घटभवनस्य, एवञ्च घटभवनं पटाद्यभवनाविनाभावितया दृष्टम्, रूपभवनञ्च रसाद्यभवनाविनाभावितयैव, अविनाभावित्वादेव यद्घटसत्त्वं तदेव पटाद्यसत्त्वं यच्च रूपसत्त्वं तदेव रसाद्यसत्त्वम्, एवञ्च सतोऽसद्रूपत्वात् सत् असच्च भवतीति न, किन्तु भवत्येव, यदि तु घटसत् पटाद्यसन्न भवेत् पटसद्भवेत्, पटसद्रूपेण च घटसदेव न भवेत्, तस्यावकाशाभावात्, एवञ्च

१ सि. क्ष. डे. छा. सहावनेन।

तत्पटस्यासत्त्वं रसस्य सत्त्वं रूपस्यासत्त्वम्, तस्मात् सदित्यसन्न न भवति–असद् भवत्येव, अन्यथा तद्भवने घटो न भवेत्–पटसत्त्वेन चेष्टत्वे घटावकाशाभावात्, किमिव ? त्वन्मतवत्–तवैव हि शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति मतम्, इतरेतराभावात्मकञ्च तत्त्वमिति, किञ्चान्यत्–उक्तवच्च–अनन्तरातीतनये भावाभावभावनायामित्युपक्रम्य बहुधोक्तं तस्मान्न युक्तं सदित्यसन्न भवतीति, तथा रूपरसादियुगपद्भाविषु योज्यम्, एवं तावद्युगपद्भाविषूक्तम् ।

अयुगपद्भाविष्वपि–

**अयुगपद्भूतपूर्वोत्तरभावाभावे वर्त्तमानभावो दृष्टः, यदि तु सदसन्न भवेत् ततोऽन्यापोहो निर्विषय एव भवेत्, तद्यथा–घट इत्यघटो न भवतीति नैव स्यात्, अघटसत्त्वाभावाद्घटसत्त्वाभावाच्च, घटस्याघटत्वेनात्मासद्रूपेणापि पटादिना भवनात् ।**

[अ]युगपद्भूतेत्यादि, पिण्डो यदि न भवेत् कोशकस्थासककुसूलकादिर्वा यदि न भवेत् ततः शिवको भवेत्, एवं कोशकादिष्वपि, पूर्वोत्तरभावाभावे वर्त्तमानभावो भवेत्, न भावे, तथा कपालशकलशर्करादिभावेषु योज्यम्, बालकुमारयुवमध्यमस्थविरेषु च, तथैव प्रागनेकधा भावितमभवन्नेव भवतीति, अथैवं नेच्छसि–यदि तु सदसन्न भवेत् तव ततोऽन्यापोहो निर्विषय एव भवेत्, तद्यथा–घट इत्यघटो न भवतीति नैव स्यात्, घट इत्युक्ते पट एव स्यात्, घटश्च न भवेत्, अघटसत्त्वभावात् घटसत्त्वाभावाच्च, किं कारणं ? सदसन्न भवतीति घटस्याघटत्वेनात्मासद्रूपेणापि पटादिना भवनात् ।

ततः को दोषः–

**ततश्चेदं दोषजातमापद्यते 'भेदो भेदान्तरार्थन्तु विरोधित्वादपोहते' (प्रभा० स०) इत्यादि यथार्थं तथा न भवति, नापोहताऽप्येवम्, विरोध्यविरोधित्वात्, अथ युगपदयुगपद्भाविसर्वभावभेदभवनस्य भवननियमः सन्नेवासन्न भवतीत्युच्यते घटाद्यसद्व्युदासेनेत्यदोषः, तदपि न,**

प्रसक्तं पटादिसत्त्वं निषिध्यते, न पटाद्यसत्त्वमिति भावः । तद्भवने–पटभवने घटो न भवेदित्यत्र दृष्टान्तमाह–**त्वन्मतवदिति,** यदि घटः पटादिनाऽसन्न भवति पटादिना सन्नेव स्यात्, तव मते हि अन्यस्य निषेधः क्रियते घटसतोऽन्यस्य सर्वस्य पटादिनाऽसतोऽपोहः क्रियते सन्निति चासतोऽपोहः, घटसत्त्वमप्यसन्निवृत्तिमात्रमिति सर्वं निवृत्तिमात्रमेव समस्तमन्यापोहव्यतिरिक्तस्य कस्याप्यभावादिति भावः । ननु भावाभावात्मको घट इत्यत्र भावो विधिः अभावो विशेषः, स च विशेषो घटस्यैवेति यदि नेष्टः, किन्तु अन्यापोहलक्षणपराभाव एवेष्टः, तर्हि घटस्य विशेषाभावे तथा परस्यापि विशेषाभावे च स्वत्वपरत्वयोरव्यवस्थानात् स्वपरयोरितरेतरात्मापत्त्या सामान्यविशेषयोर्भेदेनोपनिपातो न स्यादित्येवं प्राक् बहुधा प्रतिपादितत्वात् सदित्यसन्न भवतीति यदुच्यते तदयुक्तमित्याशयेनाह–**उक्तवच्चेति ।** अनन्तरातीतोभयोभयनयस्योपरि भावाभावभावनायामित्यादिना बहुधा विचारितत्वात् सदित्यसन्न भवतीत्ययुक्तमिति व्याचष्टे–**अनन्तरातीतनय इति ।** अथायुगपद्भाविपिण्डशिवकादीनां सदसद्रूपतामादर्शयति–**अयुगपद्भाविष्वपीति,** शिवकादिभवनं पूर्वपिण्डाद्यभवनाविनाभावि उत्तरकोशकाद्यभवनाविनाभावि च, तथा च यच्छिवकादिसत्त्वं तत् पिण्डादिकोशकाद्यसत्त्वं तस्मात् सदित्यसन्न भवतीति न किन्तु भवत्येवेति भावः । सतो यद्यसत्त्वं नेष्यते तदा दोषमादर्शयति–**अथैवमिति,** यदि सत् असन्न स्यात् तर्हि अन्यापोहोऽपि न स्यान्निर्विषयत्वात्, घट इत्युक्ते घटोऽघट एव–पट एव स्यात् अघटो न भवतीति न स्यात् घटादेरात्मासद्रूपेणापि पटादिना भवनमभ्युपगम्यते यदि तर्हि दोषमाह–**ततश्चेदमिति ।** व्याचष्टे–

१ क्ष. छा. डे. रसस्यास्त्व, सि. प्रतौ पदमिदं नास्ति । २ छा. डे. क्ष. पटस्यसतो घटे भवने घट एव न भवेदित्यधिकः पाठो दृश्यते । ३ सि. क्ष. तवैव ।

**विदितभवनानुवादत्वादेवंवादिनस्ते घटादिरूपाद्यसत्त्वात्तदप्रसिद्धौ घटो रूपादिर्वा भवति न भवति, अपोह्यते नापोह्यते वा, स्वार्थो न स्वार्थ इत्याद्यनुवादायुक्तेः, अनुवदता च त्वया घटादिरूपादेः सदित्यभ्युपगतम्, अतोऽसत्त्वादुक्तदोषाविमोक्षः ।**

**(ततश्चेदमिति)** ततश्चेदं दोषजातं–अनिष्टमापद्यते भेदो भेदान्तरेत्यादि यावदित्यादि, आदिग्रहणात् 'सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः' [प्रमाणस०] इति वा, यथार्थं–यथा त्वयाऽभिवाञ्छितं तथा न **भवति**–अनृतं तदित्यर्थः, अत्र प्रयोगः–नापोहताऽप्येवम्, त्वदुक्तेन विधिना मद्सन्न भवतीति विरोधित्वात्, **अस्मन्मतेन सन्नसन्** भवतीत्यविरोधित्वात् द्विधापि पक्षधर्मसिद्धेर्विरोध्यविरोधित्वादिति, यथा सदित्यसदेव, अनपोहात्, विरोधित्वेऽपि सत्यविरोधित्वात्, तथा वृक्षःशिंशपेत्यवृक्षाशिंशपादि नापोहेतेत्यन्यापोहाभावः, अथ युगपदयुगपदित्यादि यावदुदासेनेति, स्यान्मतं नाहं ब्रवीमि युगपद्भाविनां घटादिरूपादीनां भावानां शिवकादीनां बालादीनां वाऽयुगपद्भाविनां भेदभवनेऽन्यस्याभवनं नास्तीति, किं तर्हि ? संवृतिसत्त्वात् घट एवासन्, सन्तानपतिताश्च रूपादय एवासन्तः, क्षणिकत्वात्, घटरूपादिसंवृतिसतो मुष्टिपंक्त्यादिवदसत्त्वात् सन्नसन्न भवतीति, तस्माद्युगपदयुगपद्भाविसर्वभावभेदभवनस्य भवननियमः सन्नेवासन्न भवतीत्युच्यते घटाद्यसदुदासेनेति. इति[:] हेत्वर्थे अस्माक्यायाददोष इति, अत्रोच्यते तदपि न, विदितभवनानुवादत्वादेवं वादिनस्ते घटादिरूपाद्यसत्त्वात् तदप्रसिद्धौ घटो रूपादिर्वा भवति न भवति,

---

**अनिष्टमापद्यत इति,** भेदोऽपरं भेदमपोहते विरोधित्वात्, सामान्यान्तरं तद्भेदाश्च स्वस्य सामान्यस्य च विरोधिन इत्यर्थिकां तदीयकारिकां दर्शयति–**भेदो भेदान्तरेति** । इत्यादीत्यादिग्रहणग्राह्यमाह–**सामान्यान्तरेति** । येनाभिप्रायेणेमं वचनं उच्यते स तथा न भवत्ययथार्थत्वात् तस्य त्वदीयाभिप्रायोऽसत्य एव, अन्यापोहस्य निर्विषयत्वादित्याह–**यथार्थमिति,** प्रोक्तवचनेन योऽर्थः प्रतीयतेऽभीप्स्यते च स तथा न भवति, यथा भवति तथाऽप्रतीतेरनभीप्सितत्वाच्चानृतं तद्वचनमापद्यत इति भावः । तदेव प्रयोगेण दर्शयति–**अत्र प्रयोग इति,** त्वदुक्तेन विधिना नापोहतेति प्रतिज्ञा, मद्सन्न भवतीति विरोधित्वादिति त्वन्मतेन हेतुः, मन्मतेन च सदसन्न भवतीत्यविरोधित्वादिति हेतुः, तव मते सत् केनापि प्रकारेण नासद्भवति, घटो यदि पटादिनाऽसन् भवेत् तर्हि पटादिना सन्नेव भवेत् पटादिनाऽन्यापोहस्य पटसद्रूपत्वात्, एवञ्च घटस्याघटापोहस्य च विरोधः, एवं मन्मते चासत्त्वस्याभ्युपगमात् सत्त्वासत्त्वयोर्नास्ति विरोधो येन तदपोह्येतेति भावः । एवञ्चोभयमतेनापि विरोध्यविरोधित्वादिति हेतो पक्षधर्मसिद्धिरित्याह–**द्विधापीति** । तथा च सतोऽसत्त्वात् यथा सत् नासदपोहस्य विषयस्तथा वृक्षः शिंशपाद्यपि अवृक्षाशिंशपादिनापोहेत, तस्य केनापि रूपेणावृक्षत्वादशिंशपात्वात्, विरोधित्वे सत्यविरोधित्वादित्याह–**यथा सदितीति** । अथ युगपदयुगपद्भाविनां घटादिरूपादिबालादीनां भावानां भेदरूपेण भवनकालेऽन्यस्य कस्याप्यभवनं न भवत्येवेति न ब्रूमः, येनान्यापोहो न स्यात् किन्तु घटादयो संवृतिसन्त एव ततश्च घटादिभवनं न पटाद्यभवनं तस्माद्घटाद्यभवनस्यापोहः क्रियते स एवापोहः संवृतिसद्रूपघटादि उच्यते, तथाविधघटादिव्यतिरिक्तस्याक्षणिकस्य तस्याभावात्, यथाऽङ्गुलिभ्यो व्यतिरिक्ता मुष्टिरसती, बलाकादिव्यतिरिक्ता पंक्तिरसती तथा संवृतिसन् घटादिरपि अघटाद्यन्यापोहरूप इत्याशयेनाह–**अथ युगपदिति** । नञ्द्वयस्य प्रकृतार्थनियामकत्वं दर्शयति–**तस्मादिति,** भेदभवनेऽन्याभवनस्यानिषेधात् भेदाभवनस्यैव निषेधात् अयं सन्नेव, असन्न भवतीति भेदभवननियम इति भावः । ननु भवने विदितेऽनुवादता भवेत्, न त्वविदिते, भवता च घटादिर्भवति, स पटादिर्न भवति, घटादिर्नापोह्यते पटादिरपोह्यते, घटादिः स्वार्थो न पटादिरित्येवं घटादिरनूद्यते, तन्न सम्भवति घटादेरविदितत्वात्, घटादेरविदितत्वं संवृतिसत्त्वेनासत्त्वात्, सतश्च स्वलक्षणस्य शब्दास्पर्शनादित्याह–**विदितभवना-**

---

**१ सि. क्ष. डा. हे. संवृतिसती । २ सि. क्ष. डा. हे. सन्नेव तत्वद्भवती० ।**

अपोह्यते नापोह्यते वा, स्वार्थो न स्वार्थ इत्याद्यनुवादायुक्तिः, प्रसिद्धविदितार्थविषयत्वादनुवादस्य, अनुवदता च त्वया घटो रूपादि च सदित्यभ्युपगतम्, ततः सदभ्युपगमात् सुतरामसत्त्वमापन्नम्, अतोऽसत्सत्त्वादुक्तदोषाविमोक्षः—तदवस्थ एव ।

नैव चैवं रूपादिव्यतिरिक्तघटाद्यसत्त्वाभ्युपगमेऽनिर्देश्यपरमनिरुद्धक्षणिकसन्तानिव्यतिरिक्तसन्तानरूपाद्यसत्त्वाभ्युपगमे च घटादिविशेषः स्वार्थ इति वचनम्, प्रतिपक्षापेक्षणक्षीणशक्तित्वात्, साध्यविशेषस्वार्थागतिवत् ।

**नैव चैवमित्यादि,** रूपादिव्यतिरिक्तघटाद्यसत्त्वाभ्युपगमेऽनिर्देश्यपरमनिरुद्धक्षणिकसन्तानिव्यतिरिक्तसन्तानरूपाद्यसत्त्वाभ्युपगमे च घटादिविशेषः स्वार्थ इति वचनमगतिकमेव—घटोऽयमिति स्वार्थविशेषेऽगतिः[1] स्यादघटो न भवतीत्यर्थगतेरभ्युपगमे, कस्मात् ? प्रति[पक्षा]पक्षेपणक्षीणशक्तित्वात्—असन्न भवतीति प्रतिपक्षस्यापक्षेपणे क्षीणा शक्तिरस्य घटशब्दस्य, यत्र च शब्दे प्रतिपक्षापक्षेपणक्षीणशक्तित्वं तस्य स्वार्थविशेषवचनगतिर्नास्ति, यथाऽक्षपादपक्षलक्षणे 'साध्यनिर्देशः प्रतिज्ञा' ( गौ० सू० अ० १ आ० १ सू० ३३ ) इत्यस्मिन् वाक्ये[2] साध्ययोः हेतुदृष्टान्ताभासयोरप्यसाध्यत्वनिवृत्तिलक्षितयोः साध्यत्वात् साध्यविशेषस्वार्थागतिः तथा घटो न भवतीत्यघटनिवृत्तौ चरितार्थत्वात् घटस्वार्थविशेषागतिः स्यात् ।

---

**नुवादत्वादिति ।** परस्यानुवादत्वाभ्युपगमं दर्शयति—**अनुवदता चेति,** घटरूपाद्यनुवादेन सतोऽभ्युपगमादिति भावः । एवञ्च निवृत्तिविशिष्टं वस्तु शब्दार्थोऽभ्युपेय इति विधिरेवाभ्युपगतः स्यात्, अन्यव्यावृत्त्यर्थार्थत्वात्, अन्यथा सर्वत्रैव व्यावृत्तिमात्रम्, न स्वार्थो नाम कश्चिदस्तीति स्वार्थे ब्रुवती श्रुतिरित्यनर्थक स्यादित्यसत्सत्त्वपक्षोक्तदोषो दुर्वार इत्याह—**अत इति ।** अन्यापोहवत्स्वार्थोऽपि शब्दार्थो न भवितुमर्हतीत्याह—**नैव चैवमिति,** अन्यापोहवत्स्वार्थोऽपि च नैव शब्दार्थो भवितुं शक्यत इति भावः । तदेव प्रतिपादयति—**रूपादीति,** रूपादय एव परमार्थसन्तः, घटादिस्तु न रूपादिव्यतिरिक्तः सन्नित्यभ्युपगमे इत्यर्थः । **अनिर्देश्येति,** द्विविधः बौद्धमते प्रमाणस्य विषयः ग्राह्योऽध्यवसेयश्च, प्रत्यक्षस्य क्षण एव परमनिरुद्धः परमार्थसन्ननिर्देश्यः सन्तानी ग्राह्यः, अध्यवसेयस्तु प्रत्यक्षबलोत्पन्ननिश्चयविषयः सन्तान एव, स च सन्तानिव्यतिरिक्तोऽर्थक्रियायामसमर्थत्वान्न परमार्थसन्, एवञ्च क्षणव्यतिरिक्तसन्तानस्वरूपस्यासत्त्वाभ्युपगमे चेत्यर्थः । रूपादिव्यतिरिक्तस्य घटादेः सन्तानिव्यतिरिक्तस्य च सन्तानस्यासत्त्वाभ्युपगमे घटादेरघटव्यावृत्तिरूपतया घटविशेषः स्वार्थ इत्युक्तिरयुक्ता, स्वार्थगतेरभावादित्याह—**घटादिविशेष इति ।** अगतौ हेतुमाह—**प्रतिपक्षेति,** घटादिशब्दो हि अघटव्यावृत्तिपूर्वकं घटविशेषमवगमयतीत्यभ्युपगमे तद्वचनस्य गतिः स्यात्, तथा न सम्भवति घटादिशब्दस्य शक्तिरघटव्यावर्त्तनेन क्षीणा सती कथं घटविशेषमवबोधयेत्, तस्मात् स्वार्थविशेषागतिरेवेति भावः । प्रतिपक्षापक्षेपणक्षीणशक्तित्वस्वार्थविशेषवचनागतित्वयोरविनाभावप्रदर्शकं दृष्टान्तमाह—**यथाऽक्षपादपक्षलक्षण इति,** गौतमोक्तप्रतिज्ञालक्षण इत्यर्थः । प्रतिज्ञालक्षणमाह—**साध्यनिर्देश इति,** प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः तस्य निर्देशः—परिग्रहवचनं प्रतिज्ञेत्यर्थः, अनित्यः शब्द इत्युदाहरणम् । तत्र साध्यनिर्देशः प्रतिज्ञेत्युक्तौ साध्ययोर्हेतुदृष्टान्तयोरपि प्रसङ्गः, यथा नित्यः शब्दश्चाक्षुषत्वात् अत्र चाक्षुषत्वं शब्दे साध्यम्, नित्यः शब्दोऽस्पर्शत्वात्, बुद्धिवत्, अत्र बुद्धौ नित्यत्वं साध्यम्, तत्र साध्यपदमसाध्यनिवारणमात्रेण क्षीणशक्तित्वात् साध्यविशेषं न बोधयितुं शक्नोतीति प्रोक्तहेतुदृष्टान्तयोरप्यसाध्यव्यावृत्तिरूपत्वात् साध्यत्वं प्रसक्तम्, तद्व्यावर्त्तकसाध्यविशेषलक्षणस्वार्थस्य तु न तद्बोधयितुं शक्नोतीति तस्मात्तत्र व्याप्तिग्रहात् घटशब्दस्वार्थविशेषागतित्वं सिद्ध्यतीति भावः । ननु भवतु नाम शब्देन घटादिविशेषलक्षणस्वार्थागतिः, किन्तु सामान्यरूपेऽन्यव्यावृत्तिलक्षणे शब्दानां

---

१ सि. क्ष. डा. डे. °विशेषगतिः । २ सि. क्ष. डा. डे. वाक्ये ।

स्यान्मतं साध्यसामान्यगतिवत् घटसामान्यगतिः स्यादिति तन्न—

घटादिसर्वसंवृत्यर्थासत्त्वादगतिरेव, अनन्तरातीतासद्वस्त्वाम्नानात्, अर्थविशेषश्च न वाच्य एव, यथोक्तं 'नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते। तस्य पूर्वमदृष्टत्वात् सामान्यन्तूपदेक्ष्यते' ॥ ( प्रमा० स० ) इति सामान्यस्यासत्त्वाद्विशेषस्यावाच्यत्वात् कतमोऽन्यः स्वार्थः? अस्मन्मतेन त्वभिधेयो विधिरेवावश्यम्, अस्य च वाक्यस्य यदा तदाऽनेनैव विषयेण भवितव्यम्, अन्यस्यार्थस्याभावात्, उक्तवत् तथा चान्यापोहोपेक्षा।

(घटादीति) घटादिसर्वसंवृत्यर्थासत्त्वा[द]गतिरेव, सामान्यार्थस्याप्यसत्त्वेनाभ्युपगतत्वात् त्वयैव, अत एव चास्माभिरेवमिति शिक्षितम्—अनन्तरातीतासद्वस्त्वाम्नानात्, असत्योपाधिसत्यशब्दार्थवादिनोऽस्य नयस्य मतेनापि सामान्यार्थावाच्यत्वान्नास्ति शब्दस्य स्वार्थः, इतश्च नास्ति यस्मात्—अर्थविशेषश्च न वाच्य एव, यथोक्तं 'नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते। तस्य पूर्वमदृष्टत्वात् सामान्यन्तूपदेक्ष्यते ॥' ( प्र. स. ) इति सामान्यस्यासत्त्वात् विशेषस्यावाच्यत्वात् कतमोऽन्यः स्वार्थः? इति, नास्ति त्वन्मतेनैव, अस्मन्मतेन त्वभिधेयो विधिरेवावश्यम्, यस्मात्- अस्य च वाक्यस्य यदा तदाऽनेनैव विषयेण भवितव्यम्—शब्दाभिधेयेनार्थेन चेत् कार्यं सुदूरमपि विचाराध्वना गत्वा यस्मिन् क[स्मि]श्चित् काले विशेषस्यैव वस्तुत्वात्, अन्यस्यार्थस्याभावात्—अनेन विशेषेणैव विषयेण भवितव्यं नान्येन, किमिव? उक्तवत्—ननु युगपद्भूतपटाद्यभवनेनैवेत्यादि यावत् भवनाभवने, ते न भवति [अ]सन्निति, अन्यथानुपपत्तेः, यदि तु सदसत्

प्रवृत्ति, स्यात्, सामान्यविषयत्वाभ्युपगमाच्छब्दादेरित्याशङ्कायामाह—घटादिसर्वेति। ननु सामान्यं त्वया न परमार्थसदिष्यते, अर्थक्रियासामर्थ्याभावादित्याशयेन व्याचष्टे—सामान्यार्थस्यापीति. घटपटादिलक्षणानां सर्वेषां सामान्यानामसतां संवृतिसत्त्वेनावस्तुत्वात् शब्देन नाभिगतिरिति भावः। तस्यावस्तुत्वमेव प्रदर्शयति—अनन्तरेति, उभयोरनयने सामान्यमसद्भूतं वस्त्विति प्रतिपादितम्, 'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः। तेषामन्योन्यसम्बन्धो नार्थं शब्दाः स्पृशन्त्यपी'ति वस्त्वसंस्पर्शित्वेन शब्दस्योक्तेः सामान्यस्य शब्दार्थत्वेऽवस्तुत्वं तस्य सिद्धमेवेति भावः। असत्योपाधीति, सदसत्योपाधि सत्यं स शब्दार्थ इत्येतन्नयेऽप्यपरमार्थभूतत्वादसत्यस्य सामान्यस्य शब्दावाच्यत्वादनतिरेकात् भावः। वस्तु वाच्यं न भवतीत्यत्रोपपत्त्यन्तरमाह—इतश्च नास्तीति। अत्र परोक्ता कारिकामाह-नार्थशब्देति, अर्थविशेषो न वाच्यः, शब्दविशेषोऽपि न वाचकः, असाधारणः स्वलक्षणोऽर्थविशेषः श्रोत्रज्ञानावसेयः शब्दविशेषश्च न वाच्यो वाचको वा, तयोरर्थशब्दविशेषयोः क्षणिकत्वेन पूर्वं सङ्केतकालेऽसत्त्वात्, सङ्केतकालभाविनोश्चैतयोर्व्यवहारकालेऽननुगमात् सङ्केतयोः कथं वाच्यवाचकभावः कथं वा व्यवहारः, अतिप्रसङ्गात्, तस्मान्नार्थशब्दविशेषयोर्वाच्यवाचकते इष्येते, अर्थशब्दसामान्ययोस्तु स्याद्वाच्यवाचकते इति कारिकार्थः। एवञ्च सामान्यस्यासत्त्वात् विशेषस्यावाच्यत्वात्तद्व्यतिरिक्तस्य च नार्थस्याभावात् स्वार्थं कुर्वती श्रुतिरित्यसङ्गतमेवेत्याह—सामान्यस्येति। अस्मन्मतेन तु विधिरेवाभिधेय इत्याह—अस्मन्मतेन त्विति। सामान्योपलक्षितविशेषस्यैव भावस्य सत्यरूपस्य शब्दवाच्यत्वाभ्युपगमादिति भावः। त्वयापि शब्दस्यार्थो विधिरित्यभ्युपेय एव, तेन विनाऽन्यापोहस्य निष्प्रयोजनत्वादित्याह-अस्य वाक्यस्येति, घट इत्युक्तेऽघटो न भवतीति प्रतिषेधद्वयेनार्थान्तरं व्यावर्त्यापि घट एवावश्यं प्रतिपत्तव्यः, स च कुट एवेति कुटत्वेन विना घटत्वाभावात्, कुटत्वस्याप्यविनाभाविनः स्वेनैव रसेन प्रतीयमानत्वादक्लेशेनागतो विधिरेव शब्दार्थ इति भावः। प्रोक्तं ग्रन्थमेव सदसद्रूपशब्दार्थपरामर्शकं स्मारयति—उक्तवदिति। तस्मादन्यापोह उपेक्ष्य

१ सि. क्ष. डे. छा. °मिति क्षिपितं। २ क्ष. छा. °सद्वस्तु आत्मानादसत्यो०। ३ सि. क्ष. छा. डे. विधिनैवा०। ४ सि. क्ष. छा. डे. न च भवति सविति।

भवेदित्यादिना यावत् साध्यविशेषागतिवदित्येतदवधिना ग्रन्थेनासत्त्वस्यापादितत्वात्, तथा चान्यापोहो-पेक्षा-यस्मादन्यापोहरूप एव भावः तस्मादन्यस्यापोहो नास्तीत्युपेक्ष्योऽन्यापोहः ।

आह—

**ननु चात्राप्यपोहो देशकालभेदानां परस्परतः, अत्रोच्यते—अत एवोपेक्ष्यः, पारस्पर्यस्य विशिष्टार्थविषयत्वाद्विधेरेव व्यावृत्तरूपत्वाच्च, भवतु वा तत्रापोहः तथापि सर्वविशेषयुक्तस्यैव स्वार्थस्य गमनमुपलक्ष्यते, स्वरूपविधिविनाभूतस्यासम्भवात्, न च पूर्वदृष्टः सः, नापि पूर्वदृष्टेनार्थः अज्ञातज्ञानार्थत्वाच्छ्रोतुः, एवञ्च 'अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते । तस्य पूर्वमदृष्टत्वात् सामान्यादुपसर्जनात् ॥' इत्थं श्लोकः पठनीयः ।**

**(ननु चेति)** ननु चात्राप्यपोहो देशकालभेदानां परस्परतः—देशतः पटो घटो न भवति घटोऽपि पटो न भवतीति परस्परतोऽपोहः सिद्धः, तथा रूपं रसो न भवति रसोऽपि रूपं न भवतीति, कालतः पूर्वक्षण उत्तरक्षणभाव्यर्थो नास्ति, उत्तरः पूर्वो न भवतीति परस्परापोहसिद्धिरेवेति, अत्रोच्यते—अत एवोपेक्ष्यः, यस्मात् परस्परता विधिरूपेणेत्यनेकधा प्ररूपितम्, तस्माद्विधिरेव विशेषविषयस्य सत्त्वात् ततोऽन्यस्य शब्दार्थस्याभावात् पारस्पर्यस्य विशिष्टार्थविषयत्वात् विधेरेव व्यावृत्तरूपत्वाच्चोपेक्ष्योऽन्यापोह इति सुष्ठूक्तम्, अभ्युपेत्यापि त्वदुक्तन्यायेनान्यापोहमस्मदिष्टविधिरूपाभिधानमेव ब्रूमः—भवतु वा तत्रापोहः तथापि सर्वविशेषयुक्तस्यैव स्वार्थस्य गमनमुपलक्ष्यते, स्वरूपविधि[वि]नाभूतस्यासम्भवादपोहस्य, विशेषाणामेव सद्भावादित्युद्ग्राहितार्थवत् विधिरूपेणैवेति, यदप्युक्तं पूर्वदृष्टसामान्येन धूमेनाग्न्यनुमानवदभिधानं

एव, यतो भावोऽन्यरूपतोऽभावरूप, अतः स्वस्वरूपव्यतिरिक्तस्यान्यस्याभावादपोहो नास्तीति भाव । ननु कथमपोह उपेक्ष्यः देशकालाभ्यां परस्परं भावानामपोहदर्शनात्, दृश्यते हि देशतः पटो घटो न भवति घटो वा पटो न भवति कालतोऽपि शिवकादिः पिण्डादिः श्यामकादिर्वा न भवति, पिण्डश्यामकादिर्वा शिवकादिर्न भवतीत्यन्यस्य घटादेरपोहः सिद्ध एवेत्याशङ्कते **ननु चेति ।** व्याचष्टे—**देशत इति,** युगपद्भाविद्रव्यपर्यायोदाहरणम्, रूपं रसो न भवतीति युगपद्भाविगुणोदाहरणम्, पूर्वक्षण इत्यादि अयुगपद्भाविपर्यायोदाहरणम् । परस्परतोऽपोहस्य-घटादिनाऽसत्त्वस्य पटादिसत्त्वाव्यतिरिक्ततया विधिरूपत्वादेवापोह उपेक्ष्य इत्युच्यत इत्याह—**अत एवोपेक्ष्य इति । परस्परतेति,** भवद्भ्यापि पर्यायवृत्तितत्त्वमविकल्प सत्यमगत्या पुनरुपाधयोऽस्य लिङ्गादि, यथा द्रव्यमृद्घटकुण्डकुण्डिकादिप्रवृत्त्यसदाभा, तद्वस्तु व्यापिवदाभासत इत्यादिग्रन्थेन प्रतिपादितमिति भावः । यद्घटस्य सत्त्वं तत्पटस्यासत्त्वम्, यद्रमस्य सत्त्वं तद्रूपस्यासत्त्वमित्यादिना विधेरेव व्यावृत्तिरूपत्वस्य प्रतिपादितत्वादाह—**विधेरेवेति ।** त्वदुक्तान्यापोहोऽस्मदुक्तविधिरूप एवेत्याचष्टे—**भवतु वेति,** सर्वासत्योपाध्यवच्छिन्नस्वार्थ एव शब्दार्थ इति विज्ञेयम्, अन्यथा विधेयस्यानवस्थानात् स्वरूपविधि विनाभूतत्वादपोहो न स्यादेव, विधेरनवस्थिते त्वयं विधेयादन्य इति ज्ञातुमशक्यत्वात् शब्दान्तरार्थस्यानवस्थितत्वात् क कस्यापोहः स्यादिति भाव । पूर्वं विधिरूपेणैवार्थ उद्ग्राहितो बहुधा तस्माद्विशेषाणां सद्भावात् सर्वविशेषयुक्तस्यैव स्वार्थस्य शब्देन गमनमुपलक्ष्यत इत्याह—**विशेषाणामेवेति ।** ननु पूर्वं महानसादौ दृष्टसाहचर्ययोर्धूमाग्निसामान्ययोर्मध्येऽन्यतरस्य धूमसामान्यस्य पर्वते दर्शनेनापरस्याग्निसामान्यस्यानुमानं यथा भवति तथैव पूर्वं दृष्टस्यैव सामान्यस्य शब्देनाभिधानं स्यात् न तु विशेषस्य, तस्य क्षणिकत्वेन पूर्वदृष्टस्येदानीमभावात्, इदानीन्तनस्य च पूर्वमदृष्टत्वादिति परस्याशङ्का निराकर्तुमाह—**यदप्युक्तमिति ।** श्रोतारमज्ञातमर्थं ज्ञापयामीति हि वक्त्रा शब्दः प्रयुज्यते, स च शब्दो यदि पूर्वदृष्टमेवार्थमभिदधीत तर्हि व्यर्थ एव शब्दप्रयोगः स्यात्, श्रोत्रा तदर्थस्य प्रागेव विज्ञातत्वात्, तस्मात् पूर्वदृष्टं सामान्यं न शब्दाभिधेयम्,

सामान्यस्य शब्देन न विशेषस्य, पूर्वमदृष्टत्वादिति, तत्र च पूर्वदृष्टस्य–नहि लोके पूर्वप्रतिपादनाय शब्दः प्रयुज्यते प्रकाशितप्रकाशनवैयर्थ्यवत् क्षणिकत्वाच्च–पूर्वदृष्टश्चिरविनष्टः क्वासौ कथं वा शब्देनोच्यते? ननूक्तं पूर्वदृष्टसामान्येनेति, उक्तमिदमयुक्तमुक्तम्, सामान्यस्य संवृत्याख्यस्यापोहाख्यस्य वाऽसत्त्वात्, अतो न पूर्वदृष्टस्य गतिः शब्देन, अत आह–न च पूर्वदृष्टस्सः–न हि स पूर्वदृष्टः, नापि पूर्वदृष्टेनार्थः, किं कारणं? अज्ञातज्ञानार्थत्वात् श्रोतुः, श्रोता ह्यज्ञातार्थः, तस्य ज्ञानाधानार्थं शब्दः प्रयुज्यते वक्त्रा, न दृष्टज्ञानार्थम्, उक्तार्थानामप्रयोगात्, एवञ्च 'अर्थशब्दविशेषस्य' इत्यादिः श्लोकः–एवञ्च कृत्वा अज्ञात[ज्ञान]ार्थत्वात् विशेषार्थस्यैव सत्त्वादित्थमस्माभिः पठ्यते–'अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते। तस्य पूर्वमदृष्टत्वात् सामान्यादुपसर्जनात्' ॥ इति।

यथासंख्यमर्थविशेषस्य वाच्यता शब्दविशेषस्यैव वाचकताऽस्माभिरिष्यते, अनयोरेव सत्त्वात्, तस्य विशेषस्य पूर्वमदृष्टत्वात् स एवाज्ञातत्वात् ज्ञाप्यते, सामान्यादुपसर्जनात्, अतद्भेदत्वे सामानाधिकरण्याभावः, असदसच्छब्दाभिधेयवस्त्वविशेषत्वे सतः साक्षादनुक्तेः, कथं साक्षान्न ब्रवीति सत्? अन्यापोहेऽपि हि साक्षात् प्रवर्त्तमानोऽन्यापोहसामान्यगतं नित्यत्वादिभेदं नाक्षिपति, अन्यापोहेऽपक्षीणशक्तित्वात्, किमङ्ग! पुनस्तद्गतान् भेदान् घटादीनाक्षेप्स्यति?

(**यथासंख्यमिति**) यथासंख्यमर्थविशेषस्य वाच्यता शब्दविशेषस्यैव वाचकताऽस्माभिरिष्यते, अनयोरेव सत्त्वात्, सामान्यार्थशब्दयोरसत्त्वात्, तस्य विशेषस्य पूर्वमदृष्टत्वात् स एवाज्ञातत्वात् ज्ञाप्यते, केनोपायेनेति चेदुच्यते–सामान्यादुपसर्जनात्, अतद्भेदत्वे सामानाधिकरण्याभावः, अतद्भेदत्व इति किमुक्तं भवतीति तद्व्याचष्टे–असदसदित्यादि, सदित्युक्तेऽसदपोह्यते–असन्न भवतीति, तदसदसत्, तदेवासदसच्छब्देनाभिधेयं वस्तु असद्व्यावृत्तिसामान्यं तस्य विशेषाः–भेदा न भवन्ति घटादयः सन्तः[3], अतः तेषामसदसच्छब्दाभिधेयवस्त्वविशेषत्वे साक्षादनुक्तः सतः, सामानाधिकरण्याभाव इति वर्त्तते, एतद्भाव-

किमेतत् सामान्यमपोहरूपं संवृतिसद्रूपं वा, उभयथाऽप्यसदेवेति कथं तच्छब्देन गम्यते? विशेषस्तु पूर्वदृष्टः क्षणिकत्वाद्विनष्टो न शब्दगम्यः, इदानीन्तनस्तु न पूर्वदृष्ट इति समाधत्ते–**तत्र चेति**। पूर्वदृष्टविशेषेण न किमपि प्रयोजनम्, श्रोत्रा विज्ञातत्वादित्याह–**नापीति**। एवञ्च नार्थशब्दविशेषस्येत्यादिकारिकेत्थं पठनीयेति शिक्षयति–**एवञ्चेति**, शब्दप्रयोगस्य श्रोतुरज्ञातार्थज्ञापनार्थत्वाद् विशेषस्यैव चार्थत्वादित्यर्थः। कारिकार्थं स्फुटयति–**यथासंख्यमिति**। अर्थश्च शब्दश्चार्थशब्दौ तयोर्विशेषस्तस्य, वाच्यश्च वाचकश्च वाच्यवाचकौ तयोर्भावो वाच्यवाचकता तथा चानुक्रमेणार्थविशेषो वाच्यः शब्दविशेषो वाचक इति व्याचष्टे–**यथासंख्यमिति**। तयोरेव वाच्यवाचकत्वे हेतुमाह–**अनयोरेवेति**, अर्थविशेषशब्दविशेषयोरेवेत्यर्थः। सामान्यरूपयोस्तयोरुपसर्जनत्वेन व्यावृत्तिमात्ररूपतया संवृतिसद्रूपतया वाऽसत्त्वादित्याह–**सामान्येति**। सोऽर्थविशेषः क्षणिकत्वेन पूर्वमदृष्टत्वाज्ज्ञाप्यत इत्याह–**तस्येति**। ज्ञापनाप्रकारं दर्शयति–**सामान्यादिति**। एतदेव स्फुटीकर्त्तुमाह–**अतद्भेदत्व इति**, एकार्थवृत्तित्वं सामानाधिकरण्यम्, शब्दस्य यदन्यव्यावृत्तिलक्षणं सामान्यमर्थस्तर्हि तस्यासद्रूपतया तेन सद्रूपा घटपटादयो नोच्यन्ते, असतः सतो विशेषासम्भवात्, न चानुक्ते विशेषे कथं सामानाधिकरण्यं भवेदित्याशयः। किन्तावदतद्भेदत्वमित्यत्राह–**असदसदिति**, सच्छब्दस्यार्थोऽसद्व्यावृत्तिः असन्न भवतीति, इयमेवासदसत्–अतद्भेदः अयमेव च सच्छब्देनासदसच्छब्देन वोच्यते, अस्य चासद्रूपत्वात् सन्तो विशेषास्तस्य भेदा न भवन्त्यतो वस्त्ववस्तुनोः सम्बन्धाभावान्न सामाना-

१ सि. क्ष. छा. डे. न च पूर्वदृष्टस्य। २ सि. क्ष. छा. डे. अज्ञानार्थज्ञानेनार्थं तस्य। ३ सि. क्ष. छा. सत्त्वंतत्तेषा०।

यितुकामः प्रश्नयति–कथं साक्षान्न ब्रवीति सदिति ? तस्य भावनार्थं व्याकरणं जातिमत्पक्षतुल्यदोषत्वापादनाय च, यस्मादन्यापोहेऽपीत्यादि यावत्तद्गतान् भेदान् घटादीनाक्षेप्स्यतीति, जातिमतीवापोहेऽपि तावदसद्व्यावृत्तिमात्रे साक्षात्प्रवर्त्तमानोऽन्यापोहसामान्यगतं नित्यत्वादिभेदं नाक्षिपति, अन्यापोहेऽपक्षीणशक्तित्वात्, किमङ्ग पुनः ! अन्यापोहेन व्यवहिते सदित्यसन्न भवतीत्यसदसत्त्वेनावच्छिन्नेऽभिधेयभागेऽपोहवतिगतान् घटादिभेदानाक्षेप्स्यतीति, सम्भावना [ना]स्तीति पिण्डार्थः, वक्ष्यत्यस्यार्थस्य तदुक्तमेव सभावनं दृष्टान्तम् ।

सच्छब्दाभिप्रायस्यैवोपवर्णनेनान्यापोहवादिनं तावदुद्धट्टयन्निदमाह–

**एतदर्थव्यक्तीकरणार्थं सदित्यसन्न भवतीति वाक्यमवश्यमुपादेयम्, सच्छब्दमात्रादनभिव्यक्तेः, तत्र चावश्यं भवतिशब्दः प्रयोक्तव्यः, क्रियापदमन्तरेण सच्छब्देन सह प्रयुक्तनञोरर्थाभावात्[1] सदर्थ एव मुख्यः श्रयणीयः, स चाव्याहत एष्टव्यः, एवं गमिष्यमाणघटादिद्रव्यप्रभेदस्य तिरस्कृतपटाद्यपेक्षासत्त्वस्य प्राप्तिर्मनोरथैरपि न लभ्येत, असद्विविक्तसत्त्वप्राप्तावेव यत्नस्ते, कुत एव तदन्यापोहः ? भवत्यसम्भेदेऽविविक्तैकसत्त्वप्राप्तौ तवान्यापोहयत्नवैयर्थ्यमेव, घटस्य पटभावादित्यलमुद्धट्टनेन ।**

**एतदर्थेत्यादि** यावत् कुत एव तदन्यापोहः ?–एतस्यान्यापोहार्थस्य व्यक्तीकरणार्थं सदित्यसन्न भवतीति वाक्यमवश्यमुपादेयम्, सच्छब्दमात्रादनभिव्यक्तेः, तत्र चावश्यं भवतिशब्दः प्रयोक्तव्यः, क्रियापदमन्तरेण सच्छब्देन सह प्रयुक्तनञोरर्थाभावात् भवतिशब्दसहितयोः साफल्यात्, यथोक्तं 'यत्राप्यन्यत् क्रियापदं न श्रूयते तत्राप्यस्तिर्भवन्तीपरःप्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते' ( महाभा० अ० २ पा० ३ सू० १ ) इति, तस्माद्भवतीत्यर्थः स एव मुख्यः श्रयणीयः, कोऽसौ ? सदर्थ एव, स चाव्याहतः–कचिदव्यावृत्तो

धिकरण्यमिति भाव. । साक्षादनुक्तिं प्रश्नपूर्वकं व्याकरोति–**कथं साक्षादिति** । **जातिमत्पक्षेति,** सदादिशब्दानां जातिमन्मात्राभिधायकत्वं न सम्भवति, न हि सच्छब्दात्तद्भेदा घटादयो गम्यन्त इति तत्र सच्छब्दोऽस्वतंत्रोऽतो न घटादिभेदानाक्षेप्स्यति, तथा सदादिशब्दा प्राधान्येन सत्तादौ वर्तन्ते तद्वत्युपचारत., यद्यत्र वर्तमानं सदन्यत्रोपचर्यते न तत्तस्याभिधायकम् मञ्चशब्दो यथा मञ्चस्थपुरुषस्य, एवञ्च सदादिशब्दानामस्वतंत्रत्वात् भेदानाक्षेपात् सद्द्रव्यमित्येवं भेदवाचकशब्देन न सामानाधिकरण्यं सम्भवतीति जातिमत्पक्षदोषोऽत्रापीति प्रतिपादनार्थेन तात्पर्यम्। अन्यापोहवन्मात्रपक्षेऽपि सघटयति–**यस्मादन्यापोहेऽपीति,** सच्छब्दो हि व्यावृत्त्युपसर्जनं तद्वन्तमर्थमाह, न साक्षात्, साक्षात्तु अन्यापोहे प्रवर्त्तते, तत्र प्रवर्तमानोऽन्यापोहगतं नित्यत्वादिधर्ममपि न प्रकाशनायालम्, अपोहमात्रबोधने क्षीणशक्तित्वात्, यदा च स्वगत धर्ममपि बोधयितुं न क्षमते तदाऽन्यापोहव्यवहितस्यान्यापोहवन्मात्रस्य भेदान् घटपटादीनभिधातुमाक्षेप्तुं वा कथं पार्यते परतंत्रत्वात्, तस्मात्ते घटपटादयोऽतद्भेदा', अतद्भेदत्वे च कथं तेन सामानाधिकरण्यं तेषामित्यभिप्रायः । तदुक्तं दृष्टान्तमेवाह–**एतदर्थेति,** अन्यापोहरूपार्थप्रकाशनार्थमित्यर्थ. । सच्छब्दमात्राभिधानेऽन्यापोहस्याभिव्यक्तिर्न भवतीति तत्प्रकाशनाय सदित्यसन्न भवतीति वाक्यमवश्यमुपादेयम्, नत्रासन्नेत्युक्तावपि न तद्व्यक्तिः नञोऽपरेण नञा योगे सति विधेरेव सस्पर्शादपोहगतेरभावात्, तस्मादवश्यं भवतिशब्दः प्रयोक्तव्य क्रियापदव्यतिरेकेण साकांक्षतयाऽर्थबोधाभावादित्याशयतो व्याचष्टे–**एतस्येति** । क्रियापदापेक्षत्वे महाभाष्यकृद्वचनं प्रमाणयति–**यत्राप्यन्यदिति** । भवतिशब्दप्रयोगेऽपि न तदर्थस्य प्राधान्यं किन्तु य सन्न भवति तस्यैव प्राधान्यात् सदर्थ एव प्रधानं भवतीत्याह–**स एवेति** । स च सदर्थो न केनापि व्याहत स्यात्, यदि च सच्छब्देन भेदानामाक्षेपः स्यात्तदाऽधारभेदेनाधेयभेदाच्च घटे विद्यमानं सत्त्वं पटे स्यान्न वा पटे विद्यमानं सत्त्वं घटे, तस्मादेकभेदगतसत्त्वस्यापरभेदेऽविद्यमानतयाऽसत्त्वमपि प्राप्तमित्यसन्न भवतीति न स्यादित्याशयेनाह–**स चाव्याहत इति** । तदेवमसत्त्वसपृक्तसत्त्वप्राप्तिव्युदसनाय भेदाक्षेपो न कर्तव्य

१ सि. क्ष. छा. °र्थभावत् ।

भवेत्तदैवैष्ट्व्यः, भेदे तु घटे वर्त्तमानं सत्त्वं पटादिषु न वर्त्तते [इ]त्यसदपि स्यात्, एवञ्च भवत्यर्थसंभे[द]नं स्यात्, मा भूदेष दोष इति तद्भयादसम्भेदाय भेदो नापेक्ष्यः, एवं गमिष्यमाणघटादिद्रव्यप्रभेदस्य तिरस्कृतपटाद्यपेक्षासत्त्वस्य प्राप्तिर्मनोरथैरपि न लभ्येत, असद्विविक्तसत्त्वप्राप्तावेवं यत्नस्ते कुतस्तेनान्यस्यापोहः ? असदसत्त्वत एवाभिधाने शक्त्यभावः, दूरत एवान्यापोह इति न स्वार्थाभिधानं नान्यापोहं वा कुर्यात् सच्छब्दः, तस्मादप्रतिपत्तिरेव शब्दार्थ[स्य]स्यादिति, अथ मा भूद्भवत्यर्थस्य सम्भेदनं पटाद्यसत्त्वेनेति सर्वत्र भवत्यर्थ एव चेदिष्यते ततः भवत्यसम्भेदेऽविविक्तैकसत्त्वप्राप्तौ तत्रान्यापोहयत्नवैयर्थ्यमेव प्राप्तम्, किं कारणं ? घटस्य पटभावात्, अपि च यदि सन् घट इत्युक्ते पटादिरपि सन्नेवेति सर्वस्य सत्त्वेनैवाक्रान्तत्वे च[ा] सन्न भवतीति किंविषयोऽन्यापोहः स्यात्, असन्नामकार्थस्यात्यन्तमभावादित्यलमत्युद्घट्टनेन ।

(प्रस्तुतमस्तु-)

**अयन्तु गुणधर्म एवैषः स्वतोऽन्यान् व्यावर्त्तयन् द्रव्यमात्रमभिधत्ते पारतन्त्र्यात्, ततश्च घटादिभेदानाक्षेपात्तैः सह सामानाधिकरण्याभावः, स्यादेवं अनाक्षिप्तैरव्याप्तैरपि सामानाधिकरण्यं भविष्यति विवक्षावशात्, अत्र पर एवाह—न ह्यसत्यां व्याप्तौ………… …………रूपं शुक्लं रूपं नीलमिति, तद्वति श्रुतगुणगतभेदाभेदत्वादनाक्षेपस्ततो जातेरपोहाद्वाऽन्यस्य तद्वतः यथा सत्त्वपक्षे शब्दस्वरूपं गुण एव, जातिगुणौ गुणो द्रव्यञ्च, द्रव्यन्तु द्रव्यमेव,**

**अयन्तु गुणधर्म एवेत्यादि,** विशेषणं गुणस्तस्य धर्म एषः, स्वतोऽन्यानित्यादि गतार्थं यावत् सामा-

---

इत्यापततीत्याह-**मा भूदेष इति** । एतदेवाह-**एवं गमिष्यमाणेति,** गम्यमाने घटादौ भेदे पटाद्यसत्त्वस्य तिरस्कार. प्रयत्नशतेनापि न लभ्यते, घटसत्त्वपटसत्त्वयोर्भेदेन घटे पटसत्त्वस्याभावेन पटासत्त्वस्यैव सत्त्वादित्यभिप्राय' । तत्र च प्रयत्नोऽसद्विविक्तसत्त्वप्राप्त्यै, साऽनिष्पन्नेति सच्छब्दो नासदमन्तं ब्रवीतुमीष्टे तस्मात्स्वार्थाभिधान एव शक्त्यभावात् कथं सच्छब्दोऽन्यापोहं स्वार्थं कुर्वन्नभिधत्त इति दर्शयति-**असद्विविक्तेति** । एतद्दोषपरिहाराय सदन्न भवतीति परित्यज्य सदसद्भवतीत्यभ्युपगम्यते तदा स्वपक्षपरित्याग एव भवेदित्याह-**भवत्यसम्भेद इति,** भेदानामाक्षेपे एकभेदगतसत्त्वस्यापरभेदेऽभावेनैकस्मिन् भेदेऽपरभेदासत्त्वस्यैव विद्यमानतयाऽसन्न भवतीति भवत्यर्थसम्भेदनं स्यादिति तदसम्भेद इष्यमाणे विविक्तैकसत्त्वस्यासन्न भवतीत्येवं रूपस्य प्राप्तिर्न भवतीत्यन्यापोहो व्यर्थ एव स्यादिति भावः । वैयर्थ्ये हेतुमाह-**घटस्येति,** असदननुविद्धसन्मात्राप्राप्त्या सद् असदपि भवतीत्यभ्युपगमे घटादिसत' पटाद्यसत्त्वप्राप्त्या घटस्यापि पटत्वादन्यापोहो न जात', अन्यत्वस्यापि प्राप्तेरिति भाव' । एवञ्च घटादेः सर्वस्य स्वव्यतिरिक्तसर्वात्मकत्वात् घटो घटोऽप्यघटोऽपीति कथमघटव्यावृत्तिः, तन्न स्यादित्यन्यापोहो निर्विषय एवेत्याह-**अपि चेति,** सर्वरूपतो भावत्वादेवासत्त्वमप्रसिद्धमिति भाव. । **अयन्तु गुणधर्म इति,** अयन्तु गुणधर्म' स्वतोऽन्यान् व्यावर्त्तयन्नवतिष्ठते, तद्वतो द्रव्यस्य विशेष्येणाभिधानात्, तेनाप्यभिधाने प्रयोजनाभावात्, अत एकार्थत्वाभावात्सामानाधिकरण्याभाव इति भाव' । सन् घट इत्यत्र सच्छब्दोऽसद्व्यावृत्तिमात्रं गुणं ब्रूते न तद्वन्तम्, विशेषणत्वात्, नीलमुत्पलमित्यादौ नीलादि शब्दवत् नीलशब्दो हि विशेषणं प्रधानोपकारपरिणतोऽनीलव्यावृत्तिं स्वार्थमाचष्टे, उत्पलन्तु स्वात्मन्यवस्थितमपरोपकारि अनुग्राह्य-

---

१ सि. क्ष. डा. भावेनैवैष्टव्यो । २ सि. डा. भेदाक्षेपः, क्ष. छे. तेनपक्षः । ३ सि. क्ष. डा. °वेवाप्ययत्ने ।

नाधिकरण्याभावः, सच्छब्दो गुणः विशेषणात्, नीलादिवदिति पिण्डार्थः, विशेष्यमनुग्राहकम्, अनुग्राह्यं प्रधानम्, स्यादेवमित्यादि टीकायां चोदितमनाक्षिप्तैरव्याप्तैरपि सामानाधिकरण्यं भविष्यति विवक्षावशात्—इदं विशेष्यमिदं विशेषणमिति, अत्र भाष्येण पर एवोत्तरमाह—न ह्यसत्यां व्याप्तावित्यादि, साधर्म्यवैधर्म्याभ्यां यावद्रूपं शुक्लं रूपं नीलमिति, अनाक्षिप्तत्वादव्याप्तत्वादिति हेतवः, वक्ष्यमाणशुक्लदृष्टान्तभावनार्थमाह—श्रुतगुणगतभेदाभेदत्वादनाक्षेपः—श्रुतो गुणो विशेषणं शुक्लसदादि, तद्गता भेदाः शुक्लतरादयो[द्रव्यादयो] वा तेषामभेदत्वं तद्वति—अनुवृत्तिपक्षेऽन्यापोहपक्षे वा जातिस्वरूपोपसर्जनमात्रत्वाद्गुणभूतत्वात् अन्यापोहमात्रोपसर्जनत्वाद्गुणभूतत्वाच्च तदभेदत्वादनाक्षेपः, कस्य ? ततो जातेरन्यस्यापोहाद्वाऽन्यस्य तद्वत इति, दृष्टान्तो यथेत्यादि, उद्ग्राहितार्थभावनार्थमुदाहरणं पक्षद्वयसाम्यापादनम्, सत्त्वपक्षे शब्दस्वरूपं गुण एव, जातिगुणौ गुणो द्रव्यञ्च, द्रव्यन्तु द्रव्यमेवेति, उपकारी गुणः, प्रधानं द्रव्यमित्यर्थः, विवक्षावशात्तु प्रतिपाद्यार्थस्य, अपोहपक्षे शब्दस्वरूपं गुण एव, अपोहगुणौ गुणो द्रव्यञ्च, द्रव्यञ्च द्रव्यमेवेति पक्षद्वयेऽपि विशेषणविशेष्यत्वविभागक्रमेण तुल्यदोषत्वापादनेन च सामानाधिकरण्याभावोत्कीर्त्तनो ग्रन्थो यावत् सत्त्वमात्रवदिति प्रायो गतार्थः, विशेषस्तु विव्रियते, अत्र च स्वरूपजातिगुण[ाः]गुणत्वेनोच्य[न्]ते जातिगुणद्रव्याणि च द्रव्यत्वेनेति परेणोक्तत्वान् नोच्यते ।

अत्र च—

**स्वरूपापोहगुणा विशेषणान्यनुग्राहकत्वापेक्षयोच्यन्ते, अपोहगुणद्रव्याणि च प्रधानान्यनुग्राह्यत्वापेक्षया, शुक्लशब्दो ह्यशुक्लत्वनिवृत्त्या शुक्लमाह शुक्लतरादयश्च तद्भेदास्ततश्चा-**

मित्याशयेनाह—**सच्छब्द इति** । सामानाधिकरण्याभावप्रहाणाय बौद्ध कश्चित्स्वटीकायामाह—**स्यादेवमित्यादि** तद्वतोऽनाक्षेपेऽपि वक्तुर्विवक्षया सामानाधिकरण्यं भविष्यति, विवक्षा च वक्तृसन्तानवर्त्तिनी, विशेष्यं हि ज्ञातमपि स्वगतेनात्मभूतेन विशेषणेनानिश्चितमिति तन्निश्चयाय ज्ञापकत्वादेव निश्चितोऽर्थः सदादिगुण प्रवर्त्तमानो विशेषणम्, तत्र ज्ञापक परोपकाराय प्रवर्त्तमानमप्रधानं विशेषणं घटस्तु साक्षात्क्रियासम्बन्धात् प्रधान गुणस्तु तद्द्वारेण क्रियासम्बन्धमनुभवतीति विशेष्यमिदं विशेषणमिदमिति कल्प्या प्रकल्प्य समानाधिकरणीकरणान्न दोष इति भावः । अत्रार्थे भाष्येण परोक्त दूषण प्रदर्शयति—**न ह्यसत्यामिति,** य शब्दात् प्रतीयते स एव सामानाधिकरण्यादिसंस्कारे निमित्तं भवति, एवञ्च सच्छब्दात् सर्वविशेष्यसाधारणात् श्रुतिसामान्याच्च स्वभावादसदपोहमात्रं प्रतीयते श्रुतगुणभेदाभेदत्वात्, न विशेष्य प्रतीयते, विवक्षितस्यापि विशेषस्याप्रतीतस्यासत्समत्वादव्याप्त्या नियतविशेषनिष्ठसामान्यस्याप्रतीत्या तथाविधसामान्याज्जातेरपोहाद्वा साधर्म्येण वैधर्म्येण वा न कस्यचिदन्यस्याक्षेप, तथा च कथं सामानाधिकरण्यं रूपं शुक्लं रूप नीलमिति स्यादिति भाव. प्रतिभाति । **अनाक्षिप्तत्वादिति,** अनाक्षेपे हेतुर्विशेषाव्याप्तत्वम्, व्याप्तस्यैवाक्षेपात्, अन्यथाऽनियतविशेषाणामप्याक्षेपप्रसङ्ग स्यादिति भाव । वक्ष्यमाणशुक्लदृष्टान्तं भावयितुं तदुपायमाह—**श्रुतगुणेति,** अनुवृत्तिपक्षेऽन्यापोहपक्षे वा श्रुतेन विशेषणभूतेन शुक्लसदादिशब्दार्थेन तद्गता भेदा शुक्लतरादयो द्रव्यादयो वा नाक्षिप्यन्ते तेषा भेदाना शुक्लसदाद्यर्थेनाभेदत्वात्, अनुवृत्तिपक्षे हि जातिमात्रमुपसर्जनं विशेषणभूतं शब्दार्थः, **अन्यापोहपक्षे** चान्यापोहमात्रमुपसर्जनं गुणभूतं शब्दार्थः, तदभेदत्वाद्भेदानामनाक्षेप, स्यान्न गर्भविष्टयावद्विशेषत्वात्, तथा च जात्यपोहान्तरव्यतिरिक्तार्थानाक्षेपादेकार्थत्वमघटमानकमिति भावः । के गुणा द्रव्याणि चेत्यत्राह—**सत्त्वपक्ष इति,** जातिपक्षे जातेर्यदा शब्दवाच्यत्वं तदा निमित्तं विना शब्दप्रवृत्तेरसम्भवात् शब्दस्वरूपमेव तत्र निमित्तमिति शब्दस्वरूपं गुण., जातिश्च द्रव्यम्, शब्दस्वरूपन्तु सदा गुण एव भवति जातिः शुक्लादयश्च गुणो द्रव्यमपि भवति, द्रव्यन्तु द्रव्यमेव न गुणः तथाऽपोहपक्षेऽपीति, अत्र मूलटीकाभ्यामर्थप्रतीतिर्न जायत इति न व्याक्रियते । प्रकृतमनुसरति—**स्वरूपापोहेति** । **गुणप्रधानभावं** दर्शयति—

तद्भेदत्वं शुक्लाभेदत्वं तस्माच्छुक्लशब्दो मधुरादिकं नैवाक्षिपति, एवमिहापि सच्छब्दो पूर्वमसन्न भवतीत्यसद्व्यावृत्तिमुक्त्वा तद्वन्तमाह सत्त्वद्रव्यमभेदवदिति नयेन, तस्मात् सद्द्रव्यं सन् गुणः सत्कर्मेत्यादौ सच्छब्द उदकादिना द्रव्यभेदेन रूपादिगुणभेदेन गमनादिकर्मभेदेन वा तद्वत्तं विशेषं तान् विशेषान् वा, सत्त्वमात्रवत्, इति सच्छब्दवाच्यार्थाभेदत्वं द्रव्यादीनां घटादीनाञ्च ।

**स्वरूपापोहेत्यादि** यावदनुग्राह्यत्वापेक्षयेति तत्समानार्थोक्तेः सोऽपि द्रष्टव्यः, एतस्यार्थस्य भावना शुक्लशब्दो हीत्यादि यावत्ततश्चानद्भेदत्वं शुक्लाभेदत्वमिति [1]सत्त्वाभिधानपक्षे दोषोत्कीर्त्तनं निदर्शनत्वेन गतार्थम्, एवमिहापि सच्छब्दो हि पूर्वमसन्न भवतीत्यादि दार्ष्टान्तिकत्वेन सैव परिपाटी तुल्या यावत् सत्त्वद्रव्यमभेदवदिति नयेनेत्यतःप्रभृति उदकादिना द्रव्यभेदेन सत्त्वगुणरूपादिगुणभेदेन कर्मगमनादिकर्मभेदेन वा सत्त्व[व]दिति तं विशेषमिति—एकं वाऽपोहवत् तं द्रव्यादिभेदानामन्यतमं तान् विशेषान् वा—इति सर्वान् भेदान् वा नैवाक्षिपतीति वर्त्तते यत्तत्तद्वदिति तिष्ठतु तावत्तद्विशेषाणामन्यतमः सर्वे वा, किं तर्हि ? विवक्षितमेकं घटादि वा गुणादिविरहितं तद्वस्तु नैवाक्षिपति, नाप्यारातीयं ततो द्रव्यादि वा तद्वस्तु तं विशेषं तद्विशेषान् वा—नारातीयानपि [3]विशेषानभिधत्ते, सत्त्वमात्रवदिति, यथा त्वया निराक्रियते सत्त्वमात्रपक्षे [4]आक्षेपः तथा त्वदिष्टेऽन्यापोहवत्पक्षेऽपि, इति सच्छब्दवाच्यार्थ[ा]भेदत्वं द्रव्यादीनां घटादीनाञ्चेति भावितार्थानुसारेणोपसंहारः ।

**सच्छब्दो हि सदित्यसन्न भवतीत्यसत्त्वादवच्छिन्नं धर्मिणोऽशमात्रमभिधत्ते, न तस्यान्यं कंचिदपोहते, नित्यत्वाद्यंशवत्, तत्स्वरूपजातिविशिष्टद्रव्याभिधायित्वात्, तद्वत्, शुक्लश्रुतिवत् यथाऽशुक्लनिवृत्तिमात्रं धर्मं शुक्लशब्दोऽभिधत्ते तथा सच्छब्दोऽसन्निवृत्तिमात्रमुक्त्वा तदुपसर्जनं द्रव्यमाह, द्रव्यशब्दश्चाद्रव्यं न भवतीत्येतावदभिधत्ते, न तद्विशेषम्, इत्थं तयोरवच्छिन्नभागमात्रविषयत्वादभेदवत्त्वान्निर्विषयत्वम्, निर्विषयत्वात् कुत एकार्थता ? असदसद्रूपेऽपि न सतो भेदा द्रव्यादयः, न द्रव्यस्य घटादयः, न वा सच्छब्दस्य द्रव्यादिशब्दाः, तस्मादतद्भेदत्वम् ।**

**सच्छब्दो हीत्यादि** कारणभावना, सदित्यसन्न भवतीत्यसत्त्वादवच्छिन्नं धर्मिणोंशमात्रं

**स्वरूपापोहेत्यादीति**, गुणो हि विशेषणमुपकारकः सच शब्दस्वरूपमपोहो गुणश्च, एतेऽनुग्राहकत्वापेक्षया गुणा उच्यन्ते, अपोह्यगुणद्रव्याणि चानुग्राह्यत्वात् प्रधानानीत्युच्यन्त इति भावः । निदर्शनमाह—**शुक्लशब्दो हीति.** शुक्लशब्दो जात्युपसर्जनं गुणमाह तद्गता भेदाः शुक्लतरादयो न मधुरादयः, तेषाञ्च भेदानां शुक्लाभेदत्वं तस्मादनाक्षेपः तथा शुक्लशब्दो यदा स्वभेदानेव नाक्षिपति स्वतोऽत्यन्तभिन्नान् मधुरादीन् कथमाक्षिपेदित्याशयः । इदमुदाहरणं जात्यभिधानपक्षे बोध्यं शुक्लशब्देन जातिविशिष्टशुक्लगुणाभिधानादित्याह—**सत्त्वाभिधानेति** । दार्ष्टान्तिकमाह—**एवमिहापीति** सच्छब्दोऽप्यसदपोहमुक्त्वा तद्वन्तमात्रमाह न तद्भेदान् श्रुतगुणभेदाभेदत्वादिति न्यायात्, ततश्चैकं वा सर्वान्वा भेदान्नाक्षिपतीति भावः । **यत्तत्तद्वदिति,** तिष्ठतु तावत्तद्वदिति विशेषाणामन्यतमः सर्वे वा, किन्तु विवक्षितविशेषमपि आरातीयं नाक्षिपतीति भावः । यथा सत्त्वपक्षे त्वया दोष उच्यते तथा त्वत्पक्षेऽपि दोष इत्याह—**सत्त्वमात्रवदिति** । उक्तमेव भावयति—**सच्छब्दो हीति** । व्याचष्टे—**सदिति** असत्त्वव्यावृत्ति-

१ सि. क्ष. छा. डे. यावत्ततश्चात० । २ सि. क्ष. छा. डे. सत्त्वाभिधान० । ३ सि. क्ष. छा. डे. नारातीयाणामपि विशेषाणामभिधानेति । ४ सि. क्ष. छा. डे. नाक्षेपः ।

सच्छब्दोऽभिधत्ते, न तस्यान्यं कञ्चिदपोह[ते] नित्यत्वाद्यंशवत्, मा मंस्था नैवं[1] भवतीति, अत आह–तत्स्वरूपजातिविशिष्टद्रव्याभिधायित्वात्, व्याख्यात एवायं हेतुः, दृष्टान्तस्तु पक्षद्वयप्रसिद्ध्यापादनार्थं तद्वदिति सामान्येनोक्तः, शुक्लश्रुतिवदिति, अशुक्लनिवृत्तिमात्रं धर्मं शुक्लशब्दोऽभिधत्ते [2]तस्यैवांशान्तरमभिधत्ते यथा तथा सच्छब्दोऽसन्निवृत्तिमात्रमुक्त्वा नान्यत् किञ्चिदिति तदुपसर्जनं द्रव्यमाहेति, अत्र द्रव्यशब्दश्चा-द्रव्यं न भवतीत्येतावदद्रव्यापोहमात्रमभिधत्ते तेनैव न्यायेन, न तद्विशेषं–न द्रव्यविशेषं, ततः किमिति चेत्–इत्थं तयोः–सद्द्रव्यशब्दयोरवच्छिन्नभागमात्रविषयत्वादभेदवत्त्वमभेदवत्त्वात् निर्विषयत्वं निर्विषयत्वात् कुत एकार्थता सच्छब्दद्रव्यशब्दयोरिति ? अतोऽसदसद्रूपेऽपि–असद्व्यावृत्तिरूपे सत्यपि न सतो भेदा द्रव्यादयः, न द्रव्यस्य घटादयः, न सच्छब्दस्य द्रव्यादिशब्दाः, तस्मादतद्भेदत्वमनाक्षिप्तत्वात्, अतोऽसामानाधिकरण्यम्, अतद्भेदत्वानाक्षिप्तत्वापादनाय परदूषितपक्षसमानदोषापादनग्रन्थोऽयम्, अत्रापि सच्छब्देनेत्यादिरक्षरविपर्यासेनान्यापोह[वत्]पक्षेऽपि यावत्तदभेदत्वमिति समानः ।

दृष्टमिष्टञ्च सामानाधिकरण्यं सत्त्व[व]दभिधानेऽपोहवदभिधाने चेत्थं प्राप्नोतीत्यत्राह–

**ननु च तत्र दृष्टं शुक्लखण्डादिसामानाधिकरण्यम्, अथवा दृष्टविरुद्धं त्वयोच्यते शुक्लशब्दस्वरूपजातिगुणानां खण्डद्रव्यस्य वाऽत्यन्तभिन्नार्थत्वम्, पुनस्तच्च खण्डं मधुरमिति शुक्लतरः शुक्लतम इति शुक्ला शंखस्य जातिर्नित्येति च, इह वा किं न दृष्टं सद्द्रव्यं सद्गुणः सत्कर्मेति, एतदेव तु दृष्टं सामानाधिकरण्यं गुणशब्दत्वे विशेषणद्वारेण शब्दस्वरूपजात्युपसर्जने तद्वति वा न प्राप्नोतीत्युच्यते परं प्रति दोषः, यथा चैते जातिमत्पक्षेच्छब्देघटाद्यनाक्षेपादिदोषाः शुक्लशब्दमधुरानाक्षेपादिदृष्टान्तास्तथाऽन्यापोहपक्षे सच्छब्देऽपि, असाक्षाद्वचनत्वात् भवत्साक्षाद्वचने**

विशिष्टं कञ्चन धर्मिणं सच्छब्द आह, न निखिलान् विशेषान्, सोऽप्यंशं स्वगतं कञ्चिन्नापोहते, यथा सच्छब्दोऽसन्निवृत्तिव्यतिरेकेण स्वगतं नित्यत्वाद्यंशं नापोहते तथा सोंऽशोऽपीति भावः । तत्र कारणमाह–**तत्स्वरूपेति,** सच्छब्दः सच्छब्दस्वरूपेण जात्या च सत्त्वेन विशिष्टं द्रव्यमभिधत्ते, सदादिशब्दा अर्थजातिमिव स्वासाधारणीं सदादिशब्दस्वरूपां जातिमप्यभिधत्त इति मतेन स्वरूपेत्युक्तम्, द्रव्यमप्यद्रव्यनिवृत्तिमात्रमाह, न स्वगतविशेषानपोहत इति भावः । जातिमदपोहवत्पक्षसाधारण्येन दृष्टान्तं दर्शयति–**तद्वदिति** । निदर्शनं व्याचष्टे–**शुक्लश्रुतिवदिति,** शुक्लशब्दोऽशुक्लनिवृत्तिमात्रविशिष्टमंशविशेषं शुक्लमभिधत्ते न तद्विशेषामपोहत इति भावः । दार्ष्टान्तिकमाह–**सच्छब्द इति,** अयमप्यसन्निवृत्तिमात्रमाचष्टे न तद्गतं कञ्चिन्निवर्तयति, एवं तदुपसर्जनमंशविशेषं द्रव्यमाह, तदपि द्रव्यमद्रव्यनिवृत्तिं वक्ति न तु द्रव्यगतभेदमपोहत इति भाव । सामानाधिकरण्याभावं प्रदर्शयितुमाह–**इत्थं तयोरिति,** सद्द्रव्यमित्यत्र सच्छब्दद्रव्यशब्दयोरन्यापोहमात्रवृत्तित्वादपोहे भेदाभावान्निर्विषयत्वमापन्नम्, न ह्यसदपोहाद्रव्यापोहयोरस्ति भेदो येन भिन्नयोरेकार्थवृत्तित्वलक्षणं सामानाधिकरण्यं भवेदिति भावः । एतमर्थमेव स्फुटयति–**अतोऽसदसद्रूपेऽपीति,** सच्छब्दोऽप्यसदसच्छब्दरूपः, तदर्थोऽप्यसदसद्रूप, एवं द्रव्यशब्दोऽद्रव्यनिवृत्तिरूप, तदर्थोऽप्यद्रव्यनिवृत्तिरूप इत्यन्यव्यावृत्तिरूपतया सतो भेदो न द्रव्यादि, द्रव्यादेर्वा भेदो न घटादि, सच्छब्दस्य वा भेदो न द्रव्यशब्दः, द्रव्यशब्दस्य च भेदो न घटादिशब्द इति भाव । ततश्च किमित्यत्राह–**तस्मादिति,** द्रव्यादीना सदादिभेदत्वासम्भवेन सदादिना द्रव्यादीनामाक्षेपासम्भवात् सद्द्रव्यशब्दार्थानामसद्रूपाणां सामानाधिकरण्यं न स्यादिति भाव । अथ सामानाधिकरण्यं दृष्टमिष्टञ्च समर्थयति पूर्वपक्षी–**ननु चेति** । श्रुतगुणगतभेदानामभेदत्वमत एवानाक्षिप्तत्वञ्च यदुक्तं त्वया सच्छुक्लखण्डादिसामानाधिकरण्यस्य दर्शनात्

१ सि. क्ष. डा. दे. नैवंन भ० । २ सि. क्ष. डा. तस्यैवं शोत्तरमाभि० । क्ष. × × ।

**च गुणपर्यायलक्षणं विशिष्टं भवदेव सत्यं वस्त्वभिधीयते प्राधान्येन, द्रव्यघटपटादिभेदजातं गुणकर्मसामान्यविशेषादि वाऽसत्, संवृतिसत्त्वात्, गुणपर्यायलक्षणो हि विशेष एव सन्, अङ्गुलिव्यतिरिक्तमुष्टिवत् बलाकादिव्यतिरिक्तपंक्त्यादिवच्चेति नास्वतंत्रविशिष्टं भवद्वस्तु असदुपसर्जनं जात्युपसर्जनं वा रूपनीलत्ववदिति।**

**ननु च तत्र दृष्टमित्यादि,** अनाक्षिप्तत्वमतद्वेदत्वञ्चानैकान्तिकं शुक्लखण्डादिसामानाधिकरण्यस्य दर्शनात्, अथवा दृष्टविरुद्धं त्वयोच्यते शुक्लशब्दस्वरूपजातिगुणानां खण्डद्रव्यस्य वाऽत्यन्तभिन्नार्थत्वात् जातिमत्पक्षेऽपोहवत्पक्षे चेति, पुनस्तच्च खण्डं मधुरमिति रूपरसयोर्भेदात् द्रव्यस्य रूपरसाभ्याञ्च भेदादसम्बद्धमेवेदम्, तथा शुक्लतरः शुक्लतम इति गुणजातिगतप्रकर्षभेदस्य द्रव्येणासम्बन्धः, तथा शुक्ला शंखस्य जातिर्नित्येति, शंखद्रव्यशुक्लगुणजातितन्नित्यत्वा[नित्यत्वा]नामत्यन्तं भेदादसम्बन्धः, स च दृष्टः, अत्र [1]दोषतादवस्थ्यादेवमुच्यते, इह वा किं न दृष्टं सद्द्रव्यं सन् गुणः सत्कर्मेति, न हि दृष्टाद्गरिष्ठं प्रमाणमस्ति, तस्यानतिक्रमणीयत्वात्, किं तर्हि ? एतदेव तु दृष्टं सामानाधिकरण्यं गुणशब्दत्वे विशेषणद्वारेण शब्दस्वरूपजात्युपसर्जने तद्वति वा-अन्यापोहवति वा न प्राप्नोतीत्युच्यते परं प्रति दोषः, एतदुभयं तुल्यदोषमित्यापादयति-**यथा चैते जातिमदित्यादि,** यथा परपक्षे सच्छब्दप्रयोगे घटाद्यनाक्षेपोऽतद्भेदत्वमसामानाधिकरण्यञ्च दोषाः शुक्लशब्दमधुरानाक्षेपादिदृष्टान्ताः तथान्यापोहपक्षे सच्छब्देऽपि जातिमत्सच्छब्द-

व्यभिचरितम्, न हि शुक्लशब्देन शुक्लवतोऽनाक्षेपे तत्सामानाधिकरण्यं दृष्टमुपपद्यते तस्माद्द्रवत्येवाक्षेपस्तद्वतः, ततस्तस्यात्यन्ताभेदाभावादित्याशयेन व्याकरोति-**अनाक्षिप्तत्वमिति।** न सामानाधिकरण्यमिति यदुच्यते तद् दृष्टविरुद्धमित्याह-**अथवेति।** शुक्लः खण्ड:-खण्डशर्करा, अत्र सामानाधिकरण्यं नोपपद्यते, शुक्लशब्देन हि शब्दस्वरूपं शुक्लजातिरूपं शुक्लगुणं च विशेषणं प्रतीयते जातिमत्पक्षे, खण्डशब्देन च द्रव्यमत: शुक्लगुणद्रव्ययोरत्यन्तं भेदान्नैकार्थवृत्तित्वलक्षणं सामानाधिकरण्यमिति यदुच्यते तद् दृष्टविरुद्धमित्याह-**शुक्लशब्देति।** प्रकारान्तरेण तदुक्तं सामानाधिकरण्याभावं दर्शयति-**पुनस्तच्चेति,** शुक्लं खण्डं मधुरमिति अत्र यदि खण्डं शुक्लं तर्हि कथं मधुरं यदि मधुरं तर्हि कथं शुक्लम् रूपरसयोर्भेदात्, यदि तु खण्डशब्दो द्रव्यपरस्तर्हि रूपरसाभ्यां द्रव्यस्य भेदात् कथं सम्बन्ध इति यदुच्यते तदपि दृष्टविरुद्धमित्याशयः। प्रकारान्तरेण तदुक्तं तं दर्शयति-**तथा शुक्लतर इति,** तत्रैव शुक्लशब्देन श्रुतगुणगतभेदस्य शुक्लतरशुक्लतमादेराक्षेपेऽपि तस्यात्यन्तभिन्नेन द्रव्येण सहासम्बन्ध इत्युक्तिरपि तादृश्येवेत्यभिप्रायः। पुनरपि प्रकारान्तरेण सामानाधिकरण्याभावं तदुक्तं दर्शयति-**तथा शुक्लेति,** शुक्लः शंख इत्यत्र शुक्लशब्दोपात्ता शुक्लजातिर्नित्या शंखस्त्वनित्यं द्रव्यमिति तयोरत्यन्तभेदान्नैकार्थत्वमित्युक्तिरपि दृष्टविरुद्धेत्याशयः। अत्र दोषाणामुक्तानां दुर्निवारत्वेन दृष्टमपि दुष्टमेवेत्याह-**इह वा किमिति,** शुक्लखण्डादिदृष्टान्तपर्यन्तानुधावनेन किम्? इहैवोपस्थितसद्विषय एव सद्द्रव्यं सन् गुणः, सत् कर्मेति सामानाधिकरण्यं दृश्यत एव, इदञ्च सामानाधिकरण्यं दृष्टत्वादेवानतिक्रमणीयम्, परन्त्विदं सामानाधिकरण्यं सच्छब्दस्य गुणपरत्वे श्रुतगुणगतभेदाभेदत्वादनाक्षेपात्तद्वतो न सम्भवति, न ह्यसत्या त्यासौ तद्वति गुणस्य साधर्म्येण वैधर्म्येण वा तद्वत आक्षेपः सम्भवति यथा रूपं शुक्लमित्यादौ रूपेण गुणेन न तद्वत आक्षेप इति परं प्रति दोष उच्यत इति भावः। एवं जातिमत्पक्षे यथा शुक्लशब्देन मधुररसस्यानाक्षेपः रूपरसयोर्भेदात्तथा जातिमान् यः सच्छब्दस्तेनापि घटादीनामनाक्षेपः सदभेदत्वं मत घट इत्येवं सामानाधिकरण्याभाव इत्यादिदोषाः सम्भवन्ति तथाऽपोहवत्पक्षेऽपि जातिमत्सच्छब्दार्थेन घटाद्यनाक्षेपवत् अपोहवताऽपि घटाद्यनाक्षेपादिदोषास्तुल्या एव, असाक्षाद्वचनत्वात् प्राक् जातिमपोहं वाऽभिधाय पश्चात्तदुपसर्जनद्रव्याभिधानात् तस्य न साक्षादुक्तिरित्यादर्शयति-**यथा चैत इति,** अत्रेदं बोध्यम्-जातिपक्षेऽभेदोपचारेण जातिद्रव्ययोर्जातिशब्देनोपादानम्

1 सि. क्ष. दोषात्साद०। छा. दोषात्तावद०। 2 सि. क्ष. छा. सद्गुणं।

घटाद्यनाक्षेपादिदृष्टान्ताः, उभयत्र तुल्यो हेतुः–असाक्षाद्वचनत्वादिति, तथैतत्सर्वं दोषजातमसत्योपाधिसामान्यसोपानारोहिसत्यभवदर्थविशेषसाक्षाद्वचनपक्षे नास्ति सामानाधिकरण्यञ्चोपपद्यत इति, तत्प्रदर्शनार्थमाह–भवत्साक्षाद्वचने चेत्यादि यावज्जात्युपसर्जनं वेति, रूपनीलत्ववदिति, रूपजातिसामान्यासत्योपाध्यनुगतिद्वारेण नीलविशेषस्य सत्यस्य भवतः–सत एवार्थस्य गति[ः, अ]रूपानीलत्वनिवृत्त्याऽसत्योपाधिद्वारेण वा यथा भवति तथेहास्मदिष्टगुणपर्यायलक्षणं विशिष्टं भवदेव सत्यं वस्त्वभिधीयते, प्राधान्येन–मुख्ययैव वृत्त्या साक्षात्, यत्र द्रव्यघटपटादिभेदजातं गुणकर्मसामान्यविशेषादि वा परिकल्पितं तदसत् संवृतिसत्त्वात्, गुणपर्यायलक्षणो हि विशेष एव सन्, अङ्गुलिव्यतिरिक्तमुष्टिवत्, बलाकादिव्यतिरिक्तपङ्क्त्यादिवच्चेति द्रव्यान्यपि तदेवेति,–एतस्माद्धेतोर्नास्वतंत्रविशिष्टं भवद्वस्तु, तथोक्तविधिना अपोहपक्षापेक्षमसदुपसर्जनं जातिमत्पक्षापेक्षं जात्युपसर्जनं वा द्विधाऽपि न दोष इति ।

**यथा चाहुः सच्छब्देन सह भेदशब्दा न समानाधिकरणाः तदभिधानेनानाक्षिप्तत्वात् शुक्लाभिधानानाक्षिप्तमधुरादिवत्, सच्छब्दो भेदैः सह न सामान्याभिधायी, भेदानाक्षेपात्, यथा शुक्लशब्दो मधुरादिभिः सह न सामान्यवाची, द्रव्यादिशब्दो न साक्षात् विशेषशब्द एव तद्द्वारेण विशेषार्थ एव वा, तद्विशेषासम्बन्धित्वात्, मधुरशब्द इव शुक्लशब्दो न,**

**यथा चाऽऽहुरित्यादि,** टीकाकारैः यानि साधनान्युक्तानि जातिमत्पक्षदोषप्रदर्शनार्थानि तान्येवापोहवत्पक्षेऽपि तद्दोषप्रदर्शनार्थानि, तत्र सच्छब्देनेति प्रथमे साधने भेदशब्दानां सामान्यशब्देन सह सामानाधिकरण्याभावः पक्षीक्रियते, द्वितीये भेदैः सह सामान्यस्य तदभिधानम्, गुणभूतेनान्यापोहेना-

जातिमत्पक्षे च गुणप्रधानभावेनेति । असत्योपाधिसत्यशब्दाभ्युपगन्तृभयनियमनये तु नैते दोषा सम्भवन्तीत्याह–**तथैतत्सर्वमिति,** असत्यरूपो य उपाधिः सामान्यं तदेव सोपानं तत्रारोही विशेषः सामान्यस्यैव विशेषरूपेण भवनात्, अत एव सत्यरूपः प्रधानभूतश्च स एव साक्षाच्छब्देनोच्यते न तु सामान्योपसर्जनद्वारा परतंत्रतया न वाऽऽक्षेपेण, तस्मात्सामानाधिकरण्यमुपपद्यत एवेति भावः । स्वमते दोषाभावं प्रदर्शयितुं प्रथमं रूपनीलत्ववदिति दृष्टान्तं भावयति–**रूपजातिसामान्येति** रूपं नीलमित्यत्र रूपपदं यद्रूपत्वलक्षणं रूपजातिस्वरूपं सामान्यमसत्योपाधि च तदनुगतं नीलगुणमर्थमधिगमयति स च विशेषः सत्योभवनरूपः, इदं च जातिमत्पक्षाभिप्रायेणोक्तम्, अन्यापोहवत्पक्षाभिप्रायेण तु–**अरूपानीलत्वेति,** अत्रासत्योपाधिपदेन रूपशब्देनारूपत्वनिवृत्तिर्नीलशब्देन चानीलत्वव्यावृत्तिर्ग्राह्या तद्द्वारेण सत्यस्य भवतो नीलविशेषस्याधिगतिरिति भावः । दार्ष्टान्तिकं निरूपयति–**तथेहास्मदिष्टेति ।** गुणाः रूपादयः पर्यायाः पिण्डशिवकादयः, एतल्लक्षणं विशिष्टं भवनरूपं वस्तु, असत्योपाधिद्वारेण शब्दैरभिधीयते मुख्यया वृत्त्येति भावः । गुणपर्यायलक्षणो विशेष एव वस्तु, तद्व्यतिरिक्तं परपरिकल्पितं विशेषाधारतया सामान्यात्मकं द्रव्यगुणकर्मसामान्यविशेषादि तद्भेदादि च संवृतिसत्त्वान्न परमार्थसदित्याह–**यत्रेति ।** तदनुरूपं दृष्टान्तमाह–**अङ्गुलीति ।** परोक्तानि प्रयोगाणि प्रदर्शयति–**यथा चाहुरिति ।** जातिमत्पक्षे बौद्धटीकाकारैरुद्भावितानि दोषप्रदर्शनसाधनानि अन्यापोहपक्षेऽपि सम्भवन्तीत्युपदर्शयति–**टीकाकारैरिति,** एते त्वयोद्भाविता दोषा अपोहवत्पक्षवादिनस्तवापि प्रसज्यन्त एवेति प्रदर्शयितुं साधनानामेषामुपन्यास इति भावः । प्रथमप्रयोगे भेदशब्दाः सामान्यशब्देन न समानाधिकरणा इति प्रतिज्ञावाक्यमित्युपदर्शयति–**प्रथमे साधन इति ।** द्वितीये प्रयोगे सामान्यशब्दाः भेदैः सह न सामान्याभिधायिन इति प्रतिज्ञावाक्यमित्यादर्शयति–**द्वितीय इति ।** भेदैः सह सामान्याभिधायित्वं सामान्यशब्दस्य मया नाभ्युपगतमित्यत्राह–**गुणभूतेनेति,** विशेषणभूतेन स्वार्थवृत्तिनाऽन्यापोहेन सहाभिधायित्वं शब्दान्तरार्था-

१ सि. क्ष. छा. डे. सयो० । २ सि. क्ष. छा. डे. सपोष० । ३ क्ष. छा. सङ्गाङ्गुलि० । ४ सि. छा. अपोहावादेक्षापेक्षत्वमसद्रूपं सर्जनम् ।

पोहमस्तमभ्युपगतं लक्षणवाक्ये, शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति वचनात्, भेदानाक्षेपश्चान्यापोहे चरितार्थत्वाविष्टः, अतः सिद्धो हेतुः, सदभिधाने[ना]नाक्षिप्तत्वात् भेदानाम्, तेषामेव च पक्षीकृतत्वात्, शुक्लाभिधानानाक्षिप्तमधुरादिवदिति दृष्टान्तोऽपि भावितार्थः, द्वितीयेऽपि साधने सच्छब्दे पक्षीकृते भेदानाक्षेपात् कस्य तत्सामान्यमपोहो वास्तु ? इति सामान्यानभिधायित्वं सिद्धम्, तस्य दृष्टान्तः शुक्लशब्दो मधुरादिभिः सह[न]सामान्यवाचीति, पूर्वत्र शुक्लशब्दसहयोगावधिका भेदशब्दा एव साध्या दृष्टान्ताश्च, इह तु भेदशब्दावधिकाः सामान्यशब्दा इति विशेषः, तृतीये द्रव्यादिशब्दो वेति,[न]साक्षाद्विशेषशब्द एव तद्द्वारेण विशेषार्थ एव वा, साक्षात्पक्षे असद्विशेषत्वमसदसतः सामान्यस्य न विशेषा द्रव्यादयः, अनाक्षिप्तत्वादुक्तन्यायेन, न च सामान्यं तेषां सम्बन्धि, ते वा तस्येति सिद्धमतद्विशेषसम्बन्धित्वम्, तद्विशेषासम्बन्धित्वात्, अतद्विशेषसम्बन्धित्वादिति वा पाठान्तरे[2] मधुरशब्द एव शुक्लशब्दो[3] नेति गतार्थो दृष्टान्तः ।

सच्छब्दो वाऽसद्व्यावृत्तिमन्तं नाभिधत्ते घटादिशब्दैः सहासमानाधिकरणत्वात्, अनित्यशब्दवत्, यथा चाह 'विद्यमानाः प्रधानेषु न सर्वे भेदहेतवः । विशेषशब्दैरुच्यन्ते व्यावृत्तार्थाभिधायिनः ॥' (वाक्य. कां. ३ श्लो. ४) इति, एतेनैव यत्नेन त्वदीयेन च कृतप्रयोजनत्वान्न पृथग् दूष्यते ।

---

पोह हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति ब्रुवता त्वया सामान्यशब्दस्याभ्युपगतमेवेति भावः । प्रथमप्रयोगे सदभिधानेनानाक्षिप्तत्वादिति हेतोरसिद्धतां निराचष्टे-**भेदानाक्षेपश्चेति**, श्रुतगुणगतभेदाभेदत्वाद्भेदानामनाक्षेप, अन्यापोहाभिधानेन क्षीणशक्तित्वादित्युक्तत्वात्, सद्द्रव्यं सन् गुण, सत्कर्मेत्यादौ सच्छब्देन प्रोक्तं सत्त्ववदिति नोदकादिद्रव्यविशेषं गुणरूपादिगुणविशेषं वा गमनादिकर्मविशेषमेकं सर्वान् वा विशेषानेवाक्षिपतीत्युक्तत्वाच्च सदभिधानेनानाक्षिप्तत्वं भेदानां नासिद्धमिति भावः । अन्यापोहपक्षे प्रदर्शितस्य हेतोर्नासिद्धतेत्याह-**द्वितीयेऽपीति**, सद्द्रव्यमित्यादौ सच्छब्दोऽसन्न भवतीत्यसन्निवृत्तिमात्रं द्रव्यशब्दश्चाद्रव्यनिवृत्तिमात्रमभिधत्ते, न चान्यत् किञ्चिदभिधत्त इत्युक्तत्वात् सामान्यशब्दा न भेदैः सह सामान्याभिधायिन इति सामान्यशब्देन भेदानाक्षेपात् कस्य भेदस्य तत् सामान्यं स्यात्, अपोहो वेति तेन सह सामान्यानभिधायित्वं सिद्धमित्यभिप्रायः । दृष्टान्तमत्रार्थे दर्शयति-**शुक्लशब्द इति** । प्रयोगद्वये साध्यदृष्टान्तस्वरूपभेदमुपदर्शयति-**पूर्वत्रेति**, प्रथमे प्रयोगे प्रतिज्ञायां सामान्यशब्द साध्यांशे भेदशब्दो धर्म्यंशे दृष्टान्ते दार्ष्टान्तिके च प्रविष्टः, द्वितीये प्रयोगे च भेदशब्दः साध्यांशे सामान्यशब्दश्च धर्म्यंश इति भेदो बोध्यः । अथ सद्द्रव्यमित्यादौ सच्छब्दोऽसद्व्यावृत्तिमात्रं द्रव्यशब्दोऽद्रव्यव्यावृत्तिमात्रमभिधत्ते तस्माच्च सतो भेदा द्रव्यादय, न वा द्रव्यस्य घटादयः, न सच्छब्दस्य भेदा द्रव्यादिशब्दाः न वा द्रव्यशब्दस्य घटादिशब्दाः, न ह्यन्यापोहे साक्षात् प्रवर्तमानो यदाऽन्यापोहगतमेव नित्यत्वादिभेदमाक्षिपति, सामान्यशब्दः तत्रैव तस्यापक्षीणशक्तित्वात् तदा किं पुनर्वक्तव्यं अन्यापोहेन व्यवहितेऽन्यापोहवति गतान् द्रव्यादिघटादिभेदानाक्षेप्स्यतीति तस्माच्च सामान्यशब्दो विशेषशब्द एव, सामान्यद्वारेण विशेषार्थो वा, तद्विशेषेण सहासम्बन्धित्वादित्यनुमानमाह-**तृतीय इति** । **न च सामान्यमिति**, असद्व्यावृत्तिः न द्रव्यादिभेदसम्बन्धिनी, द्रव्यस्याप्यद्रव्यव्यावृत्तिरूपतया निर्विषयत्वात्, एवमद्रव्यादिव्यावृत्तयो वाऽसद्व्यावृत्तिसम्बन्धिन्य इति भावः । यथा मधुरशब्दः साक्षाच्च शुक्लशब्दः, स्वार्थद्वारेण विशेषार्थ एव वेति दृष्टान्तमाह-**मधुरशब्द इति**। प्रयोगान्तरमुपन्यस्यति-**सच्छब्दो**

---

१ सि. क्ष. डा. डे. °अपोहमस्तु । २ सि. डा. डे. क्ष. पाठान्तरे । ३ सि. क्ष. डा. डे. शुक्लशब्देनेति ।

**( सच्छब्दो वेति )** सच्छब्दो वाऽसद्व्यावृत्तिमन्तं नाभिधत्ते, अपोहवतः स्वार्थाभिमतस्याभिधानं निराकुर्महे, घटादिशब्दैः सहासमानाधिकरणत्वात्, [सत्]शब्दस्य घटादिशब्दैः सहासमानाधिकरणत्वं भेदानाक्षेपात् सिद्धम्, अनित्यशब्दवत्, अनित्यः शब्द इत्युक्ते नित्यो न भवतीति नित्यत्वव्यावृत्तिमन्तं ब्रूते, नासद्व्यावृत्तिमन्तम्, शब्दशब्देनैव च समानाधिकरणोऽनित्यशब्दो न घटादिशब्दैरतः साध्यसाधनधर्मद्वयं दृष्टान्ते दार्ष्टान्तिके च सिद्धमिति, यथा चाहेति ज्ञापकम्, सम्प्रतिपन्नवाद्यन्तरमतप्रदर्शनं तस्यार्थस्य दृढीकरणार्थम्, प्रधानेषु विशेष्येषु विद्यमाना अपि भेदहेतवो धर्माः सर्वे नोच्यन्ते, कश्चिदेव विशिष्टो विवक्षितः केनचिद्विशेषेण तद्वाचिना विशेषशब्देन उच्यतेऽर्थो[न]विशेषान्तरव्यापारेण, तत्रैव चरितार्थत्वात् तस्य गुणभूतत्वात्, अत एव च ते विशेषशब्दा इत्युच्यन्ते व्यावृत्तार्थाभिधायित्वादिति, एतेनैव यत्नेन त्वदीयेन च–विधिप्रधानसत्त्ववदभिधानपक्षदोषोक्तियत्नेन कृतप्रयोजनत्वान्न पृथग् दूष्यते ।

अत्राह–

**ननु चासदसच्छ्रुतेः सामान्यश्रुतित्वादयमप्रसङ्गः, अत्र ब्रूमः केन तस्याः सामान्यश्रुतित्वम्? यदा सा स्वरूपगुणमात्रविशिष्टं द्रव्यमाह तदा भेदानामनाक्षेपात् कस्य तत्सामान्यमभिवदतीति सामान्यश्रुतिरित्युच्येत, अत्र प्रयोगः न सच्छ्रुतिः सामान्यश्रुतिः भेदानाक्षेपादिति ।**

**( ननु चेति )** ननु चासदसच्छ्रुतेः सामान्यश्रुतित्वादयमप्रसङ्गः[अ]सच्छब्दनिवृत्तित्वा[द्]सदपोहः सर्वत्र वृत्तेः समानः, तद्वाचित्वाच्चासौ सामान्यशब्दः, भेदाश्च घटादयोऽसद्व्यावृत्त्या व्याप्तत्वाद् आक्षिप्तास्तद्भेदा एव, अतः सर्वोऽयं वाग्व्यायामो विफलः,–सामानाधिकरण्यं नास्ति भेदा न भवन्ति

**वेति ।** प्रतिज्ञार्थमाह–**अपोहवत इति** । पक्षे हेतुसत्त्वं दर्शयति–**सच्छब्दस्येति** । दृष्टान्तं घटयति–**अनित्य इति,** अयं स्वान्यव्यावृत्तिमन्तमेवाभिधत्ते न त्वसद्व्यावृत्तिमन्तमिति दृष्टान्ते साध्यसत्त्वमुपदर्शितम् । हेतुसत्त्वं दर्शयति–**शब्दशब्देनैव चेति,** शब्दशब्देनैवानित्यशब्दस्य सामानाधिकरण्यं दृष्टम्, न घटादिशब्दैरिति हेतुसद्भाव इति । वाद्यन्तरवचनमत्र ज्ञापकतयोपन्यस्यति–**यथा चाहेति,** भर्तृहरिरिति शेषः, **प्रधानेष्विति,** प्रधानेषु द्रव्येषु वस्तुमन्तो बहवः सजातीयविजातीयाव्यवच्छेदादयो धर्माः सर्वे चैते न केनापि शक्यन्तेऽवच्छेदेनाभिधातुम्, अनेकव्यावृत्तिविशिष्टैकाभिधायकैकशब्दस्याभावात्, एकैकव्यावृत्तिनिष्ठा हि बहवः शब्दा वस्तुनि प्रवर्त्तन्ते, तथा चैतेऽत्र विशेषशब्दा उच्यन्ते, यदि सर्वविशेषविशिष्टं द्रव्यमेकेन शब्देनाभिधीयेत स्यादसावेकः शब्दः साधारणः, न चैवम्, तस्मात् प्रतिनियतव्यावृत्तिविशिष्टार्थाभिधायिनः शब्दाः, तत्रैव तेषां चरितार्थत्वात् न सर्वविशेषसंस्पर्शिन इति कारिकार्थः । एवञ्च सच्छब्दो नासद्व्यावृत्तिमन्तं ब्रूते सर्वविशेषणविशिष्टवस्त्वभिधायकसाधारणशब्दाभावात्, भेदानाक्षेपात् भेदशब्दसामानाधिकरण्यानभ्युपगमाच्चेति भावः । तदेवं तव यत्नेनैव जातिमत्पक्षदोषप्रदर्शनरूपेण स्वत्पक्षोऽपि निराकृत एवेत्याह–**एतेनैव यत्नेनेति** । ननु सच्छब्दोऽसौ सामान्यशब्दः, असद्व्यावृत्तेः सर्वसाधारणत्वात्, तस्माद्भेदानाक्षेपप्रयुक्तप्रसङ्गानवकाश इत्याशङ्कते–**ननु चेति** । व्याख्याति–**असच्छब्देति,** सच्छब्दोऽसच्छब्दनिवृत्तिरूपः, अर्थोऽप्यसन्निवृत्तिः, तावुभौ सर्वत्र शब्देऽर्थे च सत्त्वात्समानौ, सच्छब्दसामान्यार्थेन चासदपोहेन सर्वे भेदा व्याप्ताः, व्याप्तत्वादेव च ते तेनाक्षिप्यन्ते, तस्मात्सर्वोऽसौ विचारोऽयं विफल इत्यभिप्रायः । विचारमेव निर्दिशति–**सामानाधिकरण्यमिति** । त्वदीयं वचनमेवानुसृत्य मया त्वं पृच्छ्यसे कथं तस्य सामान्यश्रुतित्वम्? भेदापेक्षं हि तत् स्यात्, न चासदसच्छ्रुत्या भेदाक्षेप इत्या-

१ सि.क्ष. छा. °मतस्याभिधानमयथानिरा० । २ सि. क्ष. डा. °त्वाच्चाप्रत्वादाक्षि० ।

सामान्यं न भवत्यनाक्षेपादित्यादिरप्रसक्त एव विचार इति । अत्र ब्रूमः-त्वद्वचनानुवृत्त्यैव त्वमिदं प्रष्टव्योऽसि, केन तस्याः सामान्यश्रुतित्वं?-केन हेतुना तस्या असद्व्यावृत्तार्थायाः सच्छ्रुतेः सामान्यश्रुतित्वम् ? नास्त्येव हेतुरित्यभिप्रायः, त्वन्मतेनैव यदा सा स्व[रूप]गुणमात्रविशिष्टं द्रव्यमाह-स्वरूपं गुणो विशेषणं तत्प्रमाण-[म]स्य तत् स्वरूपगुणमात्रं तेनैव विशिष्टं नाधिकेन, लक्षणवाक्येऽपि शब्दान्तरार्थापोहं हि स्वार्थे कुर्वतीति वचनात् द्रव्यमसद्व्यावृत्तिगुणप्रमाणविशेषणमित्यर्थः, गुणधर्मत्वञ्च सत्त्वपक्षवत् भावितमेव, तदा भेदानाम-नाक्षेपात्कस्य तत्सामान्यं यदभिदधातीति सामान्यश्रुतिरित्युच्येतेति, अत्र प्रयोगः नासत्सच्छ्रुतिरित्यादिः गतार्थः, तस्मात्तदवस्थः प्रयोगो भेदानाक्षेपादिस्त्वन्मतादेवेति ।

अथ वा 'तद्वतो नास्वतंत्रत्वात् भेदाज्ञातेरजातितः ।' (प्रमा० स०) इति सच्छब्दो मुख्यया वृत्त्या प्रकाश्यमानः संवृतिसद्वस्तुस्वरूपव्यवहितमाह, न च स तत्र वृत्तः स्वरूपव्यवहितेऽर्थे सत्यसतो व्यावृत्तेरसंभवात्, न तु तथा किञ्चित्सत् तत्तुल्यमस्ति, सतोऽन्यस्यासत्त्वात्, इत्थं सच्छब्दोऽसद्व्यावृत्तिं न करोति भूतार्थेन किन्तूपचारादसदसद्ब्रवीति, सोऽपोहेऽपि तावददृष्टत्वात्तद्वति दूरत एवेत्यप्रधानत्वादस्वतंत्रः, नहि यत्रोपचर्यते स तमर्थं भूतार्थेनाहेति, तथा चोक्तं 'मञ्चशब्दो यथाऽऽधेयं मञ्चेष्वेव व्यवस्थितः । तत्त्वेनाह तथाऽपोहशब्दो द्रव्येषु वर्तते' इति ।

**अथ वेत्यादि**, यावदपोहशब्दो द्रव्येषु वर्तते, व्याख्यानविकल्पान्तरम् 'तद्वतो नास्वतंत्रत्वात्' (प्रमा० स०) इत्यस्य, सच्छब्दो मुख्यया वृत्त्या-भूतार्थेन स्वरूपेण, प्रकाश्यमान इति-शब्दस्वरूपमात्रेण बुद्ध्या गृह्यमाणः संवृतिसद्वस्तुस्वरूपव्यवहितमाह-[न च]स तत्र वृत्तः, स्वरूपव्यवहितेऽर्थे सति व्यावृत्तेः असतः सन् असन्न भवतीति प्रसज्यप्रतिषेधासम्भवात्, प्रतिषेधसमाश्रयोऽर्थः सन्नेव स्यादसन्निति,

शयेन समाधत्ते-**अत्र ब्रूम इति**, हेत्वभावमेवाह-**यदा सेति**, असदसच्छ्रुतिरसदपोहमात्रं स्वरूपगुणविशिष्टं द्रव्यमाह, तच्च द्रव्यं स्वरूपगुणभूतमेव, श्रुतगुणभेदाभेदत्वात्, अन्यापोहं स्वार्थे कुर्वतीत्युक्त्याऽन्यापोहेन स्वार्थस्य गर्भीकरणाच्चेत्याशयः । तमेवाह-**द्रव्यमिति**, असद्व्यावृत्तिरूपो यो गुणस्तत्प्रमाणमेव द्रव्यं विशेषणमित्यर्थः । गुणश्चान्यव्यावृत्तिमुक्त्वा नान्यत् किञ्चिदभिधत्ते इति तदुपसर्जनं द्रव्यमाह न तद्विशेषधर्मानिति द्रव्यभेदानाक्षेपाद्विशेषाभावेन किं निरूपितं सच्छब्दस्य सामान्यश्रुतित्वमित्याह-**गुणधर्मत्वञ्चेति**, आक्षिप्ते हि विशेषे तन्निरूपितं सामान्यत्वं मतं, तद्वाचकशब्दस्य विशेषशब्दत्वेन तन्निरूपितं सामान्यशब्दत्वं सच्छब्दस्य भवेदित्यभिप्रायः । भावार्थमनुमानेन दर्शयति--**अत्र प्रयोग इति । नासदिति**, असदसच्छ्रुतिर्न सामान्यश्रुतिर्भेदानाक्षेपात्, तदाक्षेपे सति हि तन्निरूपितसामान्यवाचकतया तस्य सामान्यश्रुतित्वं स्यान्न चैवमिति भावः । तद्वतो नास्वतंत्रत्वादित्यस्य व्याख्यानविकल्पान्तरं दर्शयति-**अथवेति** । व्याकरोति-**तद्वत इति**, सच्छब्दः तद्वतो न वाचकः, अस्वतंत्रत्वादिति तदर्थः । **सच्छब्द इति**, मुख्यया वृत्त्या सकारोत्तराकारोत्तरनकारत्वस्वरूपेण बुद्ध्या गृह्यमाणः, वर्णानां क्षणिकत्वेन तावद्वर्णानामेकदा ग्रहणासम्भवात्, सच्छब्दोऽसदसच्छ्रुतित्वेन गृह्यमाणो वा संवृतिसद्वस्तुस्वरूपेण व्यवहितेऽर्थे वर्तेत इत्यभिप्रायः । तत्र वृत्तिश्च तदा भवेद्यदा तद्वान्-अन्यापोहवान् सन् स्यात् स च न सम्भवति, सन् असन्न भवतीत्यसतो व्यावृत्तेस्तत्रासम्भवात्, प्रसज्यप्रतिषेधाश्रयीभूतस्य तद्वतस्सतोऽसत्त्वादित्याशयेनाह-**स्वरूपव्यवहित इति** । पर्युदासलक्षणप्रतिषेधाभ्युपगमे तु सत् नासदिति स्यात्, तत्तु नात्र सम्भवति सतोऽसत्तुल्यत्वाभावादित्याशयेनाह-**प्रतिषेधसमाश्रय इति** । तत्कथमित्यत्राह-

१ सि. छा. भेदानामनाक्षेपात्कस्य । क्ष. भेदानामनाक्षेपात्कस्य । २ सि. क्ष. छा. यदभिदधातीति । ३ सि क्ष. छा. डे. न सत्सतिरित्यादि । × × क्ष. । ४ सि. क्ष. छा. सतु एव ।

'नञिवयुक्तमन्यसदृशाधिकरणे' १० ( महा० ३-१-१२ ) इति परिभाषितत्वात्, अब्राह्मणैर्ब्राह्मणवदधीयत इति ब्राह्मणसदृशे पुरुष एव प्रत्ययो नाश्वे न गवीति यथा, न तु तथा किञ्चित् सत् तत्तुल्यमस्ति, सतोऽन्यस्यासत्त्वात्, असतस्तत्त्वाभावात्तस्मादयुक्तमेवैतत् सदित्यसत्र भवतीति । इत्थं सच्छब्दोऽसद्व्यावृत्तिं न करोति भूतार्थेन, किं तर्हि ? उपचारादसदसद् ब्रवीति–अन्यस्यापोहं गौण्या वृत्त्या ब्रूते स सच्छब्दोऽपोहेऽपि तावददृष्टत्वात्तद्वति–अपोहवति दूरत एव, अदृष्टत्वादप्रधानः, अप्रधानत्वादस्वतंत्रः, न हि यो यत्रोपचर्यते स तमर्थं भूतार्थेनाहेति, सोऽप्येन मुख्यानभिधानेन हेतोरुपचाराप्रधानास्वातंत्र्या[रूपस्या]नुगमं दर्शयति, तथा चोक्तं मञ्चशब्द इत्यादि, तन्निदर्शनम्, मञ्चशब्दो मञ्चस्थान् मैञ्चस्थरूपापन्नानेव ब्रूते, न पुरुषत्वापन्नानिति, तथाऽपोहार्थः शब्दोऽपोह एव व्यवस्थितोऽपोहवत्सु द्रव्येषु वर्त्तत इति दार्ष्टान्तिकम्, पूर्वत्रविशेषणत्वादस्वातंत्र्यम्, इहा[न]भिधानवृत्तेरेवोपचारादस्वातंत्र्यदोष इति विशेषः । इत्यमस्माभिरुत्प्रेक्षितो दोषविकल्पः ।

त्वदुक्तसत्त्वपक्षदूषणानुसारेणाप्येष दोष उच्यते–

**एतदनभ्युपगमेऽप्ययमन्योऽर्थोऽन्यापोहवत्पक्षदूषणः, स्वरूपेऽन्यापोहे च मुख्यया वृत्त्या तद्वत्युपचारेण वर्त्तते शब्दः, नाभिधानेनाह उपचारात्, सच्छब्दो हि अपोहवत्युपचर्यते न स तमर्थमभिधानेनाह, मञ्चशब्दवदिति, सोऽप्युपचारो न घटत इति ब्रूमः, द्वयी ह्युपचारस्य गतिः सारूप्यात्, यथा राजामात्ययोरन्यतरस्मिन् स एवायमिति, प्रत्ययसंक्रान्तेः गुणोपकाराद्वा**

---

**नञिवयुक्तमिति,** नञा इवेन च समभिव्याहृतं पदं तद्भिन्नत्वे सति तत्सदृशं बोधयतीति शब्दार्थैः परिभाषितत्वात्, तथा चासद्भिन्नोऽसत्सदृश एवासदसत्पदजन्यप्रतीतिविषयः स्यात् ततो नासद्व्यावृत्तिः सति सतीति भावः । दृष्टान्तमाह–**अब्राह्मणैरिति,** ब्राह्मणवदब्राह्मणैः शास्त्रमधीयत इत्यत्र ब्राह्मणभिन्नो ब्राह्मणसदृशो क्षत्रियादिपुरुषविशेष एवाब्राह्मणशब्दप्रतिपाद्यो भवति न चाश्वो न च गर्दभ इत्येवमसत्पदमपि सद्भिन्नं सत्सदृशमर्थं बोधयेत्, न च तथाविधं किञ्चिद्वस्तु सत्तुल्यमसदस्ति, वस्तुमात्रस्य सत्त्वेन सतोऽन्यस्याभावात्, प्रतिषेधस्वरूपस्य चासतो वस्तुत्वाभावान्निरर्थकमेव सत् असत्त्र भवतीति वाक्यमिति भावः । तदेवं सच्छब्दः सद्वृत्तिसद्वस्तुस्वरूपविशेषणद्वारेण सतोऽभिधायको न भवतीत्यभिधाय सम्प्रति वाचकवृत्तेरुपचारादसदसन्तं ब्रूत इति व्याख्यान्तरमाह–**इत्थं सच्छब्द इति,** तदेवं मुख्यवृत्त्याऽसद्व्यावृत्तिं न ब्रूते येन तद्विशेषणद्वारेण व्यवहितं ब्रूयादिति भावः । किं तर्हि करोतीत्यत्राह–**उपचारादिति** । उपचारमेव समर्थयति–**अन्यस्यापोहमिति,** यदा चान्यापोहमेव गौण्या वृत्त्या ब्रूते स तदा भूतार्थेनान्यापोह एव तच्छब्दस्यादृष्टत्वात् सुतरां तद्वति भूतार्थेन सोऽदृष्ट एव, तस्मादुपचारादेव दृष्ट इत्यप्रधानः, ततश्चास्वतंत्र इति भावः । व्याप्तिमाह–**न हि यो यत्रेति,** यत्र य उपचर्यते न हि स तमर्थं मुख्यया वृत्त्याऽभिधत्ते इति त्वयोद्भावितजातिमत्पक्षदोषोक्तिसाम्येन मुख्यानभिधानलक्षणसाध्येनोपचाराप्रधानास्वतंत्रत्वहेतूनामविनाभावः स्वपक्षेऽपि सिद्ध इति भावः । तत्र निदर्शनं तदुक्तमेव दर्शयति–**तथा चोक्तमिति** । जातिमत्पक्षोक्तां भर्तृहरिकारिकामपोहपक्षे परिवर्त्य दर्शयति–**मञ्चशब्द इत्यादीति,** मञ्चाः क्रोशन्तीत्यादौ क्रोशनक्रियासम्बन्धस्याधारवचने मञ्चेऽनुपपत्तेराधारामेयेव तदाधेयभूतपुरुषवचनो मञ्चशब्द इति निश्चीयते तथापोहार्थः शब्दोऽपोह एव व्यवस्थितोऽपोहवत्सु द्रव्येषु वर्त्तत इति भावः । व्याख्यानद्वये विशेषमादर्शयति–**पूर्वत्रेति** सच्छब्दो मुख्यया वृत्त्या स्वरूपेणेत्यादिग्रन्थ इत्यर्थः । तदेवं तद्वतो नास्वतंत्रत्वादिति कारिकया त्वया जातिमत्पक्षे ये दोषा आदर्शितास्तेऽपोहपक्षेऽपि मया उत्प्रेक्षिता इत्याह–**इत्यमस्माभिरिति** । अन्येऽपि ये दोषाः जातिपक्षे त्वयोक्तास्ते त्वत्पक्षेऽपि स्युरेवेति दर्शयति–**एतदनभ्युपगमेऽपीति,** एतदुद्भावितदोषानभ्युपगमे-

---

१ सि. क्ष. डा. असत्वोनत्वाभावात् । २ सि. क्ष. डा. साध्येन । ३ सि. क्ष. डा. वे मञ्चस्थ ।

उपधानानुरागादिव स्फटिके रक्तत्वादिबुद्धिः, तत्र न तावत् सारूप्यात् प्रत्ययसंक्रान्तेरुपचारो यमलादिवत् सारूप्यासम्भवे प्रत्ययसंक्रान्त्यसम्भवात्, स्वामिभृत्ययोर्भिन्नत्वात्, यदि सैव बुद्धिः संक्रान्ता स्यात् स्वामिनि भृत्ये च स्वाम्यनुज्ञातमुक्तवति न तु भवति, किं तर्हि ? राजवदमात्य इति भिन्न एवाभेदोपचारा भवति, क्रमवृत्त्यभावाच्च, न हि क्रमेण सकृदुच्चरितः शब्दः क्षणिकत्वादसदपोहवर्त्तित्वात्तद्वति वर्त्तते राजभृत्यबुद्धिवत् ।

(एतदिति) एतदनभ्युपगमेऽप्ययमन्योऽर्थोऽन्यापोहवत्पक्षदूषणः, स्वरूपेऽन्यापोहे चेत्यादि, स्वरूपमन्यरूपनिवृत्त्यात्मकम्, अर्थान्तरनिवृत्त्यात्मकञ्च स्वार्थं मुख्यया वृत्त्याऽभिदधानस्तद्वत्युपचारेण वर्त्तते, नाभिधानेनाह शब्द इति साध्योऽयम्, उपचारादिति हेतुः, सच्छब्दो हीत्यादिरुपनयः, मञ्चशब्दवदिति दृष्टान्तः, तद्वति न वर्त्तते मुख्यया वृत्त्येति साध्यः, एवमुपचारमभ्युपेत्य दूषणमुक्तम्, सोऽप्युपचारो न घटत इति ब्रूमः,–द्वयी हि उपचारस्य गतिः–सारूप्यात्, यथा यमलयोरन्यतरस्मिन् स एवायमिति, प्रत्ययसंक्रान्तेः–राज्ञो भृत्येऽमात्यादौ राजेति वा प्रत्ययः, गुणोपरागाद्वा–उपधानानु[रा]गादिव स्फटिके रक्तत्वादिबुद्धिः, तत्र न तावत् प्रत्ययसंक्रान्तितः सारूप्यादुपचारः सम्भवति, सारूप्यासंभवे प्रत्ययसंक्रान्त्यसम्भवात्, स्वामिभृत्ययोर्भिन्नत्वात्, यदि सैव बुद्धिः संक्रान्ता स्यात्–अभिन्ना स्वामिनि, भृत्ये च स्वाम्यनुज्ञातमुक्तवति[तर्ह्युपचारः] स्यात्, न तु भवति, किं तर्हि ? राजवदमात्य इति भिन्नं एवाभेदोपचारा भवति, तस्मान्न प्रत्ययसंक्रान्तिः, न च सारूप्यमपोहापोहवतोरतो नोपचारो निमित्ताभावात्, किञ्च–क्रमवृत्त्यभावाच्च,

ऽपीत्यर्थः । सच्छब्दोऽसदसच्छ्रुतिस्वरूपः तदर्थश्चान्यापोहो मुख्यया वृत्त्येत्यनभ्युपगमे उपचारवृत्तिरभ्युपेया, तत्र दोषं वक्तुं तन्मतं प्रदर्शयति–स्वरूपमिति, स्वरूपमित्यस्य शब्दस्वरूपमित्युक्तेः शब्दान्तरापोह इत्यर्थः, अन्यापोहश्चार्थान्तरनिवृत्त्यात्मकः, तं मुख्यया वृत्त्याऽभिधत्ते शब्दः, तद्वन्तञ्चोपचारेण, न त्वभिधानवृत्त्या तथा चान्यापोहे प्रधानतया वर्तमानः शब्दस्तद्वत्युपचारेण वर्त्तते न त्वभिधायकः, उपचारात्, यच्च यत्र वर्तमानमन्यत्रोपचर्यते न तत् तस्याभिधायकम्, मञ्चशब्दवदिति भावः। नन्वेवं जातिपक्षे त्वया प्रोक्तो दोषस्तवापीत्याह एवमिति । उपचारोऽप्यत्र न संघटतीत्याह–द्वयी हीति, प्रत्ययसंक्रान्तेः, गुणोपकाराद्वा द्वयी उपचारस्य गतिरित्यर्थः । प्रत्ययसंक्रान्तिश्च सारूप्ये सति स्यात् तच्चापोहतद्वतोर्नास्तीत्याह–सारूप्यादिति । यथा यमलयोः सहजातयोरन्यतरस्मिन् सारूप्ये स एवायमिति प्रत्ययस्य संक्रान्तिरनुवृत्तिर्भवति । दृष्टान्तान्तरमाह–राज्ञो भृत्य इति । द्वितीयामुपचारगतिमाह–गुणोपरागाद्वेति, जपाकुसुमादिगुणस्य रक्तत्वस्य स्फटिकेऽनुरञ्जनात् स्फटिको रक्त इति बुद्धिवदित्यर्थः । उभयगतिरप्यत्र न सम्भवतीत्याह–तत्र न तावदिति, सारूप्यप्रयुक्तप्रत्ययसंक्रान्तिरत्र न सम्भवति, स्वामिभृत्ययोर्भिन्नत्वात्, न हि घटाद्भिन्ने पटादौ सोऽयं घट इति प्रत्ययस्य संक्रान्तिः सम्भवति सारूप्याभावात्, यदि स्वामिनि या राजेति बुद्धिः सैव यदि अभिन्ना स्वाम्यनुज्ञातमुक्तवतिगुरुपुत्रे गुरुवद्वर्तितव्यमित्युक्त्वा प्रोषितवतीव भृत्येऽपि स्यात् तद्युपचारः स्यात्, न चैवं दृश्यते किन्तु गुरुतां प्रियतां वा सम्पश्यन् भिन्ने भृत्यादावभेदोपचारा प्रतीतिर्भवति, तस्मान्न प्रत्ययसंक्रान्तिरिति भावः । अपोहापोहवतोरुपचारोऽपि न सम्भवति सारूप्यादिनिमित्ताभावादित्याह–न च सारूप्यमिति । ननु सच्छब्दोऽसदपोहे वर्तित्वा स एव शब्दो द्रव्ये तद्वति वर्तेत इति न युक्तं वक्तुम्, तथा क्रमेण वृत्त्यभावात्, दर्शनभेदेन हि भिन्ना एव शब्दा अपोहमात्रवचनास्तद्वद्वचनाश्चेति स्युः शब्दानां विरम्य व्यापाराभावात्, क्षणिकत्वादित्याशयेनाह–क्रमवृत्त्यभावाच्चेति, तथा च न सच्छब्दोऽसदपोहे वर्तित्वा तद्वन्तमाहेति भावः । ननु भृत्ये प्रत्ययसंक्रान्त्यभावेऽपि स्वामिगताधिपत्यलक्षणगुणस्य जितकाशिनि

१ सि. क्ष. छा. डे. सामान्योऽयं । २ सि. क्ष. यमलयोरन्य० । ३ सि. क्ष. छा. डे. गुणोपकाराद्वा । ४ सि. क्ष. छा. स्वाम्यनुज्ञातमुक्तवती वचनात् । ५ सि. क्ष. डे, छा. भिन्नैवा. ।

न हि क्रमेण सकृदुच्चरितः शब्दः क्षणिकत्वादसदपोहवर्तित्वात्तद्वति वर्त्तते, राजभृत्यबुद्धिवत्, तस्मादपि नास्ति प्रत्ययसंक्रान्तिः सारूप्यासम्भवादुपचारस्य ।

स्यान्मतं गुणोपरागादिति तत्-

**नापि गुणोपरागात् स्फटिकवत्, विशेषणप्रकर्षमगृहीत्वा विशेष्ये प्रत्ययप्रसङ्गात्, अयथार्थज्ञानापत्तेः, युगपदसम्भवाच्च, यथा च बहवो ग्रहीतारो भवन्ति गुणवतः शुक्लादेः तदा गुणोपकारे विरुध्यते, न हि शक्यं तदा द्रव्येणैकगुणरूपेण स्थातुम्, अनेकात्मकस्याविशिष्टत्वेऽप्येकदेशेन गुणरूपमनुभवितुं शक्यम्, कृत्स्नस्य घटादिरूपप्रतीतेः, अथ पुनः सर्वैर्घटत्वादिभिरुपकारो युगपत् कृत्स्नस्य क्रियते ततः सर्वेषां प्रत्येकं ग्रहीतृणां घटादिरूपग्रहणाभावात् सर्वगुणसङ्करणमेवैकदर्शनं युगपत् सर्वरूपापत्तेः स्यात् स्फटिकवदेव, स्वशब्दार्थप्रवृत्ति......।**

(**नापीति**) नापि गुणोपरागात् स्फटिकवत् विशेष[ण]प्रकर्षमगृहीत्वा विशेष्ये प्रत्ययप्रसङ्गात्- यथा स्फटिके रक्तत्वादिप्रत्यय उपधानप्रकर्षमगृहीत्वा भवति तथा विशेषणप्रकर्षमगृहीत्वा विशेष्ये प्रत्ययः स्यात्, न तु भवति, किञ्च-अयथार्थज्ञानापत्तेः, यथा स्फटिके रक्तत्वादिप्रत्ययो मिथ्याप्रत्ययस्तथा विशेषणसरूपप्रत्ययो विशेष्ये स्यात्. किञ्च-युगपदसम्भवाच्च, यथा च बहवो ग्रहीतारो भवन्ति गुणवतः शुक्लादेः, तद्यथा-घटः पार्थिवो द्रव्यं सन् शुक्लो मधुरः सुरभिरित्येवमादिविशेषैः तदा गुणोपरागे विरुध्यते, न हि शक्यं तदा द्रव्येणैकगुणरूपेण स्थातुम्-अनेकात्मकस्याविशिष्टत्वेऽप्येकदेशेन गुणरूपमनुभवितुं शक्यम्, कृत्स्नस्य घटादिरूपप्रतीतेः, अथ पुनः सर्वैर्घटत्वादिभिरुपरागो युगपत् कृत्स्नस्य क्रियते ततः सर्वेषां प्रत्येकं ग्रहीतृणां घटादिरूपग्रहणाभावात् सर्वगुणसङ्करेण मेचकदर्शनं युगपत् सर्वरूपापत्तेः स्यात् स्फटिकवदेव, न तु भवति, तस्मादयुक्तत्वाद्रूप्यात् प्रत्ययसंक्रान्तेरुपचारो यमलादिवत्, नापि गुणोपकारात् स्फटिकवदिति,

भृत्ये सत्त्वात् यथा तत्र स्वामिशब्दः प्रवर्त्तते तथाऽत्रापि स्यादित्याशंकायामाह-**नापि गुणोपरागादिति।** गुणोपकारादिति पाठे तु विशेष्ये स्वानुरक्तप्रत्ययकारित्वाद्गुण उपकारी भवन्ति, गुणस्य चोपकारो विशेष्ये, लौहित्यं हि स्फटिके स्वानुरक्तं प्रत्ययं कारयति लोहितः स्फटिक इति ध्येयम् । यदि गुणोपरागाद्विशेष्ये प्रत्यय उच्यते तर्हि स्फटिके यथा रक्ततामात्रप्रत्ययो भवति न तु रक्तत्वादिगतं जपाकुसुमसम्बन्धित्वादि प्रकर्षमुपादाय रक्तत्वप्रत्ययः, तथाऽसदपोहगतप्रकर्षव्यतिरेकेण तद्वति प्रत्ययः स्यात्, न चैवम्, असत्प्रतियोगिकत्वविशिष्टापोहस्यैव प्रत्ययादित्याशयेन व्याकरोति-**स्फटिकवदिति.** गुणोपरागाद्रक्तताप्रत्ययः स्फटिके भ्रमात्मकोऽन्यत्रवर्त्तमानस्य धर्मस्य तदरहिते धर्मिणि विषयीकरणात्, तथाऽसदपोहस्य तद्वति गुणोपरागात् प्रत्ययाभ्युपगमे भ्रान्तोऽयं प्रत्ययः स्यादिति दोषान्तरमाचष्टे-**अयथार्थज्ञानेति । विशेषणसरूपेति,** विशेषणानुसारी प्रत्ययः, यथा घटत्वानुसारी घटे घट इति प्रत्ययो रक्तत्वानुसारी रक्त इति प्रत्ययोऽसद्व्यावृत्त्यनुसारी विशेष्ये सदिति प्रत्ययः, एते प्रत्यया यदि गुणोपरागात्तदा मिथ्याप्रत्ययाः स्युरिति भावः । यद्वस्तु येन रूपेण वर्त्तते तत्तथैव प्रत्येयं भवति, घटादिवस्तु चानेकात्मकम्, यत एकदैवानेकैः प्रतिपत्तृभिः घटत्वेन पार्थिवत्वेन द्रव्यत्वेन सत्त्वेन च शुक्लत्वेन मधुरत्वेन सुरभित्वादिभिरेक एव घटादिर्गृह्यते, एतच्च गुणोपरागे विरुध्यते, न ह्यनेकात्मकं वस्तु गुणेनैकेनोपरञ्जितं भवितुं शक्यते, अनेकगुणविशिष्टस्यैव घटस्य घटत्वतया प्रतीतेरित्याशयेनाह- **युगपदसम्भवाच्चेति,** घटादेर्युगपन्मेचकरूपवत्प्रत्ययसम्भवादित्यर्थः ।तदेवाह-**अथ पुनः सर्वैरिति,** न हि सर्वैर्घटत्वादिगुणैरुपरागो युगपत्कर्तुं शक्यते, यदि शक्यते तर्हि बहूनां प्रतिपत्तृणामेकैकगुणोपरागेण यो घटप्रत्ययो जायते स न स्यात्, किन्तु सर्वगुणोपरागेण चित्रप्रत्ययमेव सकृत्सर्वेषां

१ सि. क्ष. छा. तत्रापि गुणोपकारात् । २ सि. क्ष. छा. डे. सयुग० । ३ सि. क्ष. छा. डे. गुणोपकारे० ।

स्वशब्दार्थप्रवृत्तीत्यादि, अथवाऽयमन्योऽर्थोऽस्य विकल्पस्यैव मञ्चशब्द इति श्लोकस्य, अन्त्यपादे पाठान्तरं 'तथा भावशब्दो द्रव्येषु वर्त्तते' इति तस्य व्याख्या—विशेष एव वस्तु परमार्थतोऽस्ति, न द्रव्यार्थः सामान्यं जातिः घटादिस्ते कुम्भवत् किञ्चिदस्ति, तस्य सामान्यस्यासत्त्वात् विशेष एव स्वतंत्रः कल्पितसामान्योपसर्जनो यथा प्राक् प्रक्रान्तः, किमिव ? मञ्चशब्दवत्, सैव व्याख्या गतार्था, भावशब्दस्य गुणपर्यायवाचित्वात् ।

**इतश्च त्वन्मतिवत् तद्वतो न वाचको भेदात्, भिन्ना हि व्यावृत्तिमन्तः सत्त्ववन्त इवार्था घटादयः, असदसन्तोऽर्था घटादयो भेदानाञ्चानन्त्ये सम्बन्धाशक्यत्वात् व्यभिचाराच्चावाचक इत्युक्तं प्राक् त्वयैव ।**

**इतश्च त्वन्मतिवदित्यादि,** हेत्वन्तरमपि भेदादिति, जातिमत्पक्षदूषणवत् असदसत्पक्षदूषणं त्वयैव कृतं 'तद्वतो न वाचकः' इति, भिन्ना हि व्यावृत्तिमन्तः[1] सत्त्व[वं]तः इवार्था घटादय इति हेतुव्याख्या, त्वन्मतवदेव. केऽत्र व्यावृत्तिमन्तः ? इति चेदुच्यते, असदसन्तोऽर्था घटादयः, भेदानाञ्चानन्त्ये सम्बन्ध[ा]शक्यत्वात् व्यभिचाराच्चावाचक इत्युक्तं प्राक्, केन ? त्वयैव ।

अत्राह—

**ननु चायं घटादिषु सत्त्ववन्मात्रपक्ष इवासदसन्मात्रपक्षे भेदानभिधानेन दोषः परिहृत इत्यत्र ब्रूमः यस्याभिधानं शब्द इष्यते सोऽर्थोऽसदसन्मात्राख्यो भेदवत्सत्त्वं वा स्यात्, भेदनिरपेक्षा सत्तैव वा, सत्तासम्बन्धो वा सत्त्ववन्मात्रं वा, तत्र सन्मात्रविधिवादिमतवदपोहवादिमतेऽपि विकल्पचतुष्टये स्थिते समान एवात्रापि विचारो ग्रन्थश्च ।**

**ननु चायं घटादिष्विति,** स[3]त्त्ववन्मात्रपक्षे पूर्वमेव हि द्रव्यादिभेदानभिधानेनानन्त्यव्यभिचारदोषौ परिहृतौ तथेहाप्यसद[4]सन्मात्रपक्षे भेदानभिधानेन तद्दोषपरिहार इति तद्दर्शयति, अत्र ब्रूमः यस्याभि[5]धानमित्यादि-यस्यार्थस्य शब्दो वाचक इष्यते सोऽर्थोऽसदसन्मात्राख्यो भेदवत्सत्त्वं वा स्यात्-भेदव[6]तीति स[त्त्वं]

भवेन्न तु तथा भवतीति भावः । असत्योपाधिमन्यशब्दार्थतापक्षेणाह-**स्वशब्दार्थेति,** अत्र मूलं सुगमम्, अतो न व्याख्यायते, अथ त्वया जातिमत्पक्षस्तद्वतो न वाचकः शब्दः भेदादित्यादिना दूषितस्तथा त्वत्पक्षोऽपि तथैव दूष्यत इत्याह- **इतश्च त्वन्मतिवदिति ।** जातिमता घटपटाद्यर्थानां भेदवदपोहवतामपि घटपटादीनां भेदात् तद्वतो न वाचक इति त्वत्पक्षदूषणं त्वयैव कृतमिति व्याचष्टे-**हेत्वन्तरमपि भेदादिति,** अस्वतंत्रत्वलक्षणव्यतिरिक्तो भेदादिति हेतुरित्यर्थः । हेतुं व्याचष्टे-**भिन्ना हीति ।** न शब्दो व्यावृत्तिमतो वाचकः, तद्वतो घटादीनामानन्त्यात्, न ह्येकस्य शब्दस्यानेकभेदप्रपञ्चेन सम्बन्ध आख्यातुं शक्यः, न चानाख्याते शब्दार्थसम्बन्धे शब्दादर्थप्रतीतिर्युक्ता । यदि चानाख्यातसम्बन्धादपि शब्दोऽर्थं बोधयेत् तर्हि गोशब्दो गामिवाश्वमपि बोधयेदिति व्यभिचार इत्याह-**भेदानाञ्चेति ।** यथा जातिमत्पक्षे प्रसक्तदोषवारणाय तद्वतोऽभिधानं परित्यक्तम्, तथाऽसदसन्मात्रपक्षेऽपि भेदानभिधानेन दोषः परिह्रियत इत्याशङ्कते-**ननु चायमिति ।** तदेव व्याचष्टे-**सत्त्ववन्मात्रपक्ष इति । यस्यार्थस्येति ।** यदर्थवाचकः शब्दः सोऽर्थोऽसदसन्मात्ररूपः धर्म्यंशात्मकः जातिरित्यर्थः । तत्र सन्मात्रपक्षे भेदजाति-

१ सि. छा. क्ष. व्यावृत्तिमंतः सत्त्वंत. । २ क्ष छा. ननु वाच्यं घ० । ३ सि. क्ष. छा सत्त्वन्मात्र० । ४ सि. क्ष. छा. °सदसत्त्वन्मात्र० । ५ सि. क्ष. छा. °धानेत्यादि । ६ सि. क्ष. छा. भेदवती ।

भेदांशस्य जातिरित्यर्थः, किं तत्सन्मात्रमुच्यते ? सत्तामात्रं वा ? भेदनिरपेक्षा सत्तैव वा ? सत्तासम्बन्धो वा ? सत्त्व[ वन् ]मात्रं वा ? सदनुवृत्त्यभिधानपक्षवदेते चत्वारो विकल्पा असदनुवृत्तिमत्यपि पक्षे सम्भवे-[ युः ] गत्यन्तराभावात्, स्यान्मतमसदसदित्यभावपक्षोऽपि सम्भवीति, तन्न, अभावस्य प्रतिषिद्धत्वात्, शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति त्वयैव स्वार्थवचनेनोक्तत्वात्, अस्माभिः स्वार्थ एवं निर्धार्यते इत्यादिना यावदनन्यः प्रत्यक्ष इति ग्रन्थेन विचार्य[ ा ]भा[ व ]स्य प्रतिषिद्धत्वात् परिशेषादेव तावन्त एव विकल्पा भवन्तो भवेयुरसदसन्मात्रमिति शब्दार्थस्य, तत्र सन्मात्रविधिवादिमतवदपोहवादिमतेऽपि चतुष्टये स्थिते समान एवात्रापि विचारो ग्रन्थश्चेति ।

तथैवाह—

'नापोहशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेर्जातिमद्वदपोहवान् ॥
न जातिशब्दो भेदानामानन्त्याद्व्यभिचारतः । वाचको नियमार्थोक्तेः सत्ताद्यर्थोऽप्यतो न सः ॥'

इति, एवं सन्मात्रसत्ताद्यापादनवदिहापीति तुल्यदोषत्वविवक्षया भवन्तमन्यांश्च प्रति न जातिशब्द इत्यादिरारभ्यते, जातिशब्दस्तावत् सदादिः, सच्छब्दो हि जातिसम्बन्धिनो जातिमुपादाय द्रव्यादीनभेदोपचारादाह, तस्माद्व्यपदिश्यते जातिशब्द इति, यथा सिंहो माणवक इति, कस्मान्न वाचकः ? आनन्त्याद्भेदानाम्, आनन्त्ये भेदानामशक्यः शब्देन सम्बन्धः कर्तुम्, आनन्त्याद्वा द्रव्यादीनाम्, ते हि घटपटरथादिभेदेनानन्ताः, सम्बन्धान्तर-विशिष्टाभिधायी शब्दः सम्बन्धान्तरविशिष्टशब्दवाच्यमसमर्थो वक्तुम्, गवाश्वादिवत्, न च कृतसम्बन्धः शब्दः ततो हि सम्बन्धाशक्यता, सम्बन्धाव्युत्पत्तेरनभिधानं स्वरूप-मात्रप्रतीतेः यत्र शब्दस्यार्थेन न सम्बन्धो व्युत्पत्तौ यथा म्लेच्छशब्दानाम् तत्र शब्दमात्रमेव प्रतीयते नार्थ इत्यादिः सह टीकया भाष्यग्रन्थो द्रष्टव्यो यावत्…………………… अगुणत्वादिव्यभिचारादिति, एतावच्च…………स्वाधारो वा तवास्ति सम्भव इति ।

**नापोहशब्दो भेदानामित्यादि** श्लोकद्वयम्, अन्त्यपादे तूपसंहारे विशेषः सत्ताद्यर्थोऽप्यतो न स इति, मात्रशब्दलभ्यार्थे तावदेतच्छ्लोकद्वयं व्याख्यातुकामः सम्बन्धयति—एवं सन्मात्रसत्ताद्यापादनवदि-

तत्सम्बन्धतद्वत्त्वलक्षणचतुर्विकल्पा यथा भवन्ति तथाऽसदसन्मात्रपक्षेऽपि क्रमेण तत्स्थानापन्नाश्चत्वारो विकल्पा इमे इति दर्शयति—**सत्तामात्रं वेत्यादिना**, भेदान्तर्गर्भितसत्त्वमात्रं वेत्यर्थः, विकल्पचतुष्टयाधिकविकल्पासम्भवाद्भेदानुवृत्तसदभिधानपक्षवत् तव मतेऽप्येतावन्त एव विकल्पाः सम्भवन्तीति भावः । अपरं विकल्पमाशङ्कते—**स्यान्मतमिति**, असदभावविकल्पस्य त्वया तुच्छत्वेन शब्दान्तरार्थापोहं स्वार्थे कुर्वतीति वाक्यघटकस्वार्थपदप्रयोजनाभिधानावसरे प्रतिषिद्धत्वादिति भावः । अस्माभिरपि प्रतिषिद्ध इत्याह—**अस्माभिरिति** । एवञ्च विकल्पानां तावतामेव सम्भवात् सन्मात्रपक्षवदसदसन्मात्रपक्षेऽपि समान एव विचारो निरास-श्चेति भावः । एतदेव स्पष्टयति—**नापोहशब्द इति** । तदीयश्लोकद्वयं किञ्चिद्विशिष्टं दर्शयति—**श्लोकद्वयमिति** । असदसन्मात्र-शब्दलभ्यार्थे श्लोकद्वयमेतद्व्याख्यातुकामः सन्मात्रशब्दार्थभेदसत्तातत्सम्बन्धतद्वत्पक्षेषु ये दोषा आपादितास्तेऽसदसन्मात्रपक्षेऽपि समाना इत्याह—**मात्रशब्दलभ्यार्थे इति** । असदसद्विशिष्टसन्मात्रं भेदः सत्तासम्बन्धः सत्ता चेति अन्यापोहवाद्यभि-

१ सि. क्ष. डा. जाति० । २ सि. क्ष. डा. तदसदसन्मात्र० । ३ सि. क्ष. डा. दे. असदनुसत्त्वविच्छावृत्तिमत्यपि । ४ सि. क्ष. तत एव । ५ सि. क्ष. डा. दे. तथासदसन्मात्र० । ६ सि. क्ष. डा. दे. °लभ्यतार्थे तावद् ।

द्वापीति तुल्यदोषत्वविवक्ष[य]ा भवन्तमन्यांश्च प्रतीति गतार्थं यावदारभ्यते, न जातिशब्द इत्यादि तदारम्भः, पूर्वमपोहशब्देन सम्पन्नत्वात् विश्रब्धं परवाचोयुक्त्यैव न जातिशब्द इत्यादिपरग्रन्थमेवोद्दिक्षत्, [अ]सदसद्विशिष्टमन्मात्रभेदसत्तासम्बन्धसत्त्वपक्षाणां त्वदिष्टानां विधिरूपाणाञ्च परेष्टानामविशेषादिति, तद्यथा-न जातिशब्दो भेदानां वाचक इति वक्ष्यति, जातिशब्दस्तावत् सदादिरिति, यस्मात् सच्छब्दो जातिसम्बन्धिनो जातिमुपादायात्मरूपेण द्रव्यादीनभेदोपचारादाह, तस्माद्भेदोपचारहेतुना व्यपदिश्यते जातिशब्द इति, यथा सिंहो माणवक इति सिंहशब्दो माणवकगुणानुपादायाभेदोपचारहेतुप्रवृत्तेरभेदोपचारहेतुना व्यपदिश्यते गुणशब्द इति, कस्मान्न वाचक इति हेतुपरिप्रश्नः, यस्माद्वाक्यमात्रेण[न]श्रद्धीयते, उच्यते-आनन्त्यादिति हेतुः, कस्याऽऽनन्त्यात्? भेदानाम्, यस्मात्ते पूर्वं प्रकृताः, न चान्यः श्रूयते, आनन्त्ये हि भेदानामशक्यः शब्देन सम्बन्धः कर्तुम्, न हि पाटलिपुत्रादिस्था द्रव्यादय इहस्थेन सच्छब्देन सहाख्यातुं शक्याः, कर्तुं-आख्यातुं, करोतेरनेकार्थत्वात्, आनन्त्याद्वा द्रव्यादीनाम्, तथा हि ते घटपटरथादिभेदेनानन्ताः, एवं तावत् सम्बन्धिभेदाद्भेदमभ्युपगम्येदमुच्यते, न तु तस्य वस्तुनः स्वगतो भेदोऽस्ति, तत्रेदमेव कारणं यत् सम्बन्ध्यन्तरविशिष्टाभिधायी शब्दः सम्बन्ध्यन्तरविशिष्टशब्दवाच्यमसमर्थो वक्तुम्, गवाश्वादिवत्तस्माद्भेदानामवाचकः, न च कृतसम्बन्ध इति-अनाख्यातसम्बन्धः शब्द इति, द्विष्ठत्वेऽपि सम्बन्धस्य शब्दस्यैवाविनाभावित्वादर्थप्रत्यायकत्वं दर्शयति, अत्र चानन्त्यं पारम्पर्येणाभिधानहेतुः, ततो हि सम्बन्धाशक्यता, सम्बन्धाव्युत्पत्तेरनभिधानम्, स्वरूपमात्रप्रतीतेरिति, यत्र शब्दस्यार्थे न सम्बन्धः व्युत्पत्तौ

सतानां परेष्टानां विधिरूपाणाञ्च पक्षाणामविशेषात् जातिशब्द इत्यादिकारिकामेवोद्दिष्टवान् व्याख्यातुमित्याह **न जातिशब्द इत्यादीति** । ननु किं सच्छब्दो जात्यभिधायी ? उत भेदाभिधायी तत्र न तावज्जातिस्तेनाभिधीयते सद्द्रव्यमिति भेदवाचिद्रव्यशब्देन सामानाधिकरण्यानुपपत्तेः, न वा भेदोऽभिधीयते भेदानामानन्त्यात् सम्बन्धाख्यानासम्भवात्, न चानाख्याते सम्बन्धे तेनार्थप्रतिपत्तिर्युक्तेति शङ्कायामाह-**जातिशब्दस्तावदिति,** आधारभेदे सह जाते सोऽयमित्यभेदोपचारादभेदे सति सद्वैर्जातिविशिष्टप्रत्ययो भवति, तत्र जातिशब्देन द्रव्यं न स्वेन रूपेणाभिधीयते, अपि तु निमित्तभूतजातिस्वरूपेण, तथा च सच्छब्दो जातिशब्द उच्यते, अभेदोपचारहेतुना प्रवृत्तेः, यथा गुणाभेदोपचारहेतुना प्रवृत्तेः सिंहशब्दो गुणशब्द उच्यत इति भावः । भेदानामवाचकत्वे हेतुं पृच्छति-**कस्मान्नेति,** अन्तरेण हेतुं वचोमात्रेण कस्याप्यपरितोषादिति भावः । साधनमाह-**आनन्त्यादिति,** अपरिमेयत्वादित्यर्थः । ननु भेदानामेवानन्त्यं कुतः, न हि कारिकायां तथोक्तमित्यत्राह-**यस्मात्त इति** । भवतु भेदानामानन्त्यमवाचकत्वं कस्मादित्यत्राह-**आनन्त्य इति,** सच्छब्दस्यैकत्वाद्भेदानामानन्त्याच्चैकस्यानेकेन सम्बन्धः शक्यः आख्यातुमिति भावः । निदर्शनमाह-**न हीति** । प्रकारान्तरेण वाचकभेदाद्वाच्यभेदमभ्युपगम्य व्याचष्टे-**आनन्त्याद्वेति,** भेदानामर्थानामनन्तत्वात् प्रतिभेदं शब्दभेदः, सच्छब्दस्य स्वरूपतो भेदाभावेऽपि सम्बन्धिनो भेदस्य भेदाद्भेदोऽभ्युपगम्यते, तथा च यावद्भेदानां परिज्ञानाभावेन तावच्छब्दानामप्यपरिज्ञानात् विशेषकूटपरिज्ञानाभावे सामान्यस्याप्यपरिज्ञानमेवेति सामान्येन सच्छब्दस्य भेदवाचकत्वं न सेत्स्यतीति भावः । सम्बन्धिभेदाद्भेदं साधयति-**तत्रेदमेवेति,** एकसम्बन्धिवाचकः शब्दोऽन्यं सम्बन्धिनं न ब्रूते यथा गोवाचको गोशब्दो नाश्वम्, तस्मान्नैकः सच्छब्दो भेदानां वाचको नापि सम्बन्ध आख्यातुं शक्यते तस्मादनाख्यातसम्बन्धः शब्दः, यद्यपि सम्बन्धः शब्देऽर्थे च वर्तते द्विष्ठत्वात्, तथापि शब्दस्यैवार्थप्रत्यायकत्वं, तदविनाभावित्वादिति भावः । एतस्मिन् पक्षे परम्परयाऽऽनन्त्यं हेतुरित्याह-**अत्र चानन्त्यमिति,** भेदानन्त्यात् सम्बन्धाशक्यता, ततश्च सम्बन्धापरिज्ञानादनभिधानम्, शब्दस्वरूपमात्रस्यैव केवलं प्रतीतेरित्यर्थः । यत्र सम्बन्धाशक्यता तत्र केवलं शब्दस्वरूपमात्रमेव प्रतीयत इत्याह-**यत्र शब्दस्येति** ।

---

१ सि. क्ष. छा. न चाकृत० । २ सि. क्ष. छा. सम्बन्धे श. । ३ सि. क्ष. छा. चात्यन्तं । ४ सि. क्ष. डे. छा. नास० ।

यथा म्लेच्छशब्दानाम्, तत्र शब्दमात्रमेव प्रतीयते नार्थ इत्यादिः सह टीकया भाष्यग्रन्थो द्रष्टव्यो यावद्-गुणत्वादिव्यभिचारादित्यवधिराचार्येण यावत् कारितः सव्याख्यानः सामान्यपरीक्षाकारलिखित एवा-त्रापीति न लिख्यते तदुपसंहारः–एतावच्चेत्यादि यावत् स्वाधारो वा न वाऽस्ति सम्भव इति यथा विचा-रितमिति मात्रशब्दापादितसत्ताद्यर्थोऽप्यतो न स इत्युपसंहारः, अलमतिप्रसङ्गेनेति–भेदादित्येतत्प्रसङ्गा-गतसाक्षाद्विधिवादिमतदूषणमिदं प्रसङ्गमुक्तम्, मात्रग्रहणस्यैतद्विषयसम्भवानतिवर्तित्वात् ।

अधुना भवन्तं प्रति मात्रग्रहणात् तत्सम्भविनो विकल्पास्त एवेति तान् दूषयिष्यामः, तद्यथा–

**अथवा भेदात्, यस्माद्व्यावृत्तिमानसदसत्तावान्, अतो न तस्य भेदा घटादय इति स एव दोषः, तेन सहाभूतसामान्यत्वात्, यो येन सहाभूतसामान्यस्तस्य तेन सामानाधि-करण्यं न भवति, यथा सत्त्ववदर्थसच्छब्दस्य घटादिभेदार्थत्वाभावात् तेन सहासामानाधि-करण्यं साक्षाद्विधिवादमत इव तवापि सच्छब्दोऽसदसत्त्ववदर्थो न भवतीति ।**

**अथवा भेदादिति** यस्माद्व्यावृत्तिमानित्यादि भेदादित्ययं हेतुः व्यावृत्तिमत्पक्षे दोषमापादयितुं इत्थं व्याख्यायते यस्माद्व्यावृत्तिमान्–असदसत्ता[वा]निति पूर्वेभ्यः पक्षेभ्यो विशेषं दर्शयति, शेषं तुल्यं यावत् स एव–अतद्भेदत्वे सामानाधिकरण्याभाव एव दोषः प्रतिज्ञातस्त्वां प्रत्यापाद्यते, कस्मात्? [ तेन सहाभूतसामान्यत्वात्, अनाक्षेपात् ] तेन सहाभूतसामान्यत्वं सिद्धम्, यो येन सहाभूतसामान्यः तस्य तेन सामानाधिकरण्यं न भवति, यथा सत्त्व[व]दर्थेत्यादि निदर्शनदण्डकः, सत्त्व[व]ानर्थः अस्य सच्छब्दस्य सोऽयं सच्छब्दः सत्त्व[व]दर्थः, तस्य घटादिभेदार्थत्वं नास्ति त्वन्मतेन, तदभावात्तेन सहा-सामानाधिकरण्यं साक्षाद्विधिवादिमत इव तवापि सच्छब्दोऽसद[सत्त्ववद]र्थो–घटादिभेदार्थो न भवति, अतस्तद्वदेव सामानाधिकरण्याभाव इति ।

**शब्दमात्रं हि तत्र प्रतीयते नार्थः, निमित्ताभावात्, छत्रिदण्डिवत्, यथा छत्रनिमि त्तश्छत्री, दण्डनिमित्तो दण्डी, भिन्ननिमित्तत्वात् परस्परासमानाधिकरणौ तथा व्यावृत्तिम-त्सच्छब्दपक्षेऽपि सन् घट इति भिन्नव्यावृत्तिविशिष्टसद्घटत्वसामान्ययोर्भेदादित्यत ऊर्द्ध्वं तुल्यगमनीयमेव विधिपक्षदूषणेन सर्वम् ।**

**शब्दमात्रं हीत्यादि** तन्मतदोषोक्तिस्तुल्या तवापि यावन्निमित्ताभावाच्छत्रिदण्डिवदिति, यथा

मात्रग्रहणसम्भाविविकल्पचतुष्टयदूषणमुपक्रमते-**अथ वेति ।** व्यावृत्तिमत्पक्षदूषणानुगुणं हेतुं व्याचष्टे-**यस्मादिति,** सच्छब्दः सत्त्ववता द्रव्यादीनां घटादीनाञ्च भेदानामिव व्यावृत्तिमता तेषां भेदाणद्वानां न वाचकोऽप्यसदसन्मात्रशब्द, असदसन्मात्रशब्देनासच्च भवतीत्यसदपोह्यतेऽनस्तच्छब्दाभिधेयं वस्तु असद्व्यावृत्तिसामान्य तस्य भेदा घटादयो न भवन्ति, तेषां साक्षादनुक्तेः, अतोऽतद्भेदत्वात् सामानाधिकरण्याभाव, तेन सहाभूतसामान्यत्वादिति भाव. । तमेव हेतुं स्फुटयति-**तेन सहाभूतेति ।** भेदानामभूतसामान्यत्वं तेनानाक्षेपात् सिद्धम्, अनाक्षेपश्चास्वतंत्रत्वात्, यथा सत्त्ववन्मात्रपक्षे सच्छब्देन तद्भेदा घटादयो न गम्यन्तेऽतस्तद्वद्घटादिभेदाना-क्षेपात् सामानाधिकरण्याभाव इति दर्शयति-**यो येन सहेति,** स्पष्टमन्यत् । सद्द्रव्यमित्यादिशब्दत एव केवलं सामानाधिकरण्यं दृश्यते, नार्थविशेषणानां सामानाधिकरण्यं सम्भवति निमित्ताभावादित्याह-**शब्दमात्रं हीति ।** व्याचष्टे-**तन्मतदोषोक्तिरिति,** विधिवादमतदोषोक्तिर्वादित्यर्थ । सन् घट इत्यादौ केवलमसदसन्मात्रं सच्छब्देन प्रतीयते, न त्वर्थो घटादिः कश्चित्, अर्थस्य

१ सि. क्ष. छा. डे. क्ष. त्वन्मत० ।

छत्रनिमित्तश्छत्री, दण्डनिमित्तो दण्डी भिन्ननिमित्तत्वात् परस्पर[ा]समानाधिकरणौ तथा व्यावृत्तिमत्सच्छब्दपक्षेऽपीति भेदाद्व्यावृत्तिसामान्यानामित्यादिविधिपक्षदूषणवदिहापि व्यावृत्तिसामान्यवद्भेदादन्यदेवासद्व्यावृत्तिसामान्यात् [अ]घटनिवृत्तिसामान्यमतः सन् घट इति भिन्नव्यावृत्तिविशिष्टसद्घटत्वसामान्ययोर्भेदादित्यत ऊर्ध्वं तुल्यगमनीयमेव विधिपक्षदूषणेन सर्वमिति ।

**तद्व्याख्या-एकस्मिन्नर्थे घटादौ घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादिभिन्ने वक्तृषु कश्चिद्घट इति ब्रूते कश्चित् पृथिवीत्यादि यावत्सन्निति, तत्र सोऽर्थः घटरूपेण कृत्स्नो वाऽभिधीयेत ? एकदेशेन वा ? न तावत् कृत्स्नः तस्मिन्नेव काले वक्तुं शक्यः, तस्य पृथिवीत्वेनाभिधानासम्भवप्रसङ्गात्, न ह्यघटव्यावृत्तिरूपसामान्यं गृहीत्वाऽतद्रूपाभिधायिशब्दप्रयोगो युक्तः, स चेतरवक्तृवशादपि कृत्स्नो घटरूपेण स्थित इत्यसम्भवो रूपान्तरस्य, कृत्स्नस्यैकव्यावृत्तिसामान्यरूपप्रतीतेः, अथास्यैकदेशं घट इत्यघटनिवृत्त्या गृह्णात्येकः, अपरोऽपार्थिवनिवृत्त्या देशं पार्थिव इति मतं तदयुक्तम्, अप्रतीतेरतदसत्त्ववत्सामान्यविषयत्वाच्च, यथाऽऽचार्यो मातुल इति ।**

(**तद्व्याख्येति**) तद्व्याख्यैवेत्थं लिख्यते-एकस्मिन्नर्थे घटादौ घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादिभिन्ने वक्तृषु कश्चित् घट इति ब्रूते कश्चित् पृथिवीत्यादि यावत् सन्निति, तत्र-घटाभिधाने सोऽर्थो घटरूपेण कृत्स्नो वाऽभिधीयेत ? एकदेशेन वा ?, न तावत् कृत्स्नस्तस्मिन्नेव काले वक्तुं[शक्यः], तस्य पार्थिवत्वेनाभिधानासम्भवप्रसङ्गात्, न हि[अ]घटव्यावृत्तिरूपसामान्यं गृहीत्वाऽतद्रूपाभिधायिशब्दप्रयोगो युक्तः, स चेतरवक्तृवशात् [अपि] कृत्स्नो घटरूपेण स्थित इत्यसम्भवो रूपान्तरस्य, कृत्स्नस्यैकव्यावृत्तिसामान्यरूपप्रतीतेः तद्वतस्तत्सारूप्येण युगपद्वक्त्रभिप्रायभेदे न युक्तो भावः सन् घट इति प्रयोगः, अत्र साधनं—अत्र

सामानाधिकरण्यतायां छत्र्यादौ छत्रादीव न किञ्चिन्निमित्तमस्ति, छत्र्यादौ च छत्रादेर्निमित्तस्य सद्भावेऽपि छत्रवतोऽन्यत्वाद्दण्डवतश्चान्यत्वान्नास्ति परस्परं सामानाधिकरण्यमेकार्थाभावादित्याह-**निमित्ताभावादिति** । दार्ष्टान्तिकेऽप्याह-**व्यावृत्तिमदिति,** सच्छब्दार्थोऽसदसत्त्ववान् घटशब्दार्थोऽघटव्यावृत्तिमान् तयोश्चान्यत्वात्, व्यावृत्तिमतामसदसन्मात्राघटव्यावृत्तिमतां भेदादनन्तत्वाच्च युगपद्ग्रहीतुमशक्यतया सम्बन्धाशक्यत्वाद्व्यभिचाराच्च न वाचकत्वमिति पूर्वोदितदोषा अत्रापीति भावः । तमेवाह **अत ऊर्ध्वमिति ।** व्यावृत्तिमतामानन्त्यमेव तावद्दर्शयति-**तद्व्याख्येति** । एकस्य हि घटस्य बहवो बहुधा ग्रहीतारो भवन्ति, कश्चिद्घटत्वेन, कश्चित् पृथिवीत्वेनापरो द्रव्यत्वेनान्यः सत्त्वेन च, अनेकात्मकत्वाद्घटादिवस्तुनः, तत्र यद्येकेन घट इत्याभधीयेत तदा स किं घटत्वेन रूपेण कृत्स्न एव घटोऽभिहितः, किं वैकदेशेनेत्येतं व्याकरोति-**एकस्मिन्नर्थे इति** । यदि तेन रूपेण कृत्स्न एव घटोऽभिधीयत इत्युच्यते तत्राह-**न तावत् कृत्स्न इति,** यदैव स घटत्वरूपेण कृत्स्नोऽभिधीयते तदैव तस्य पृथिवीत्वाद्यभिधानं न सङ्गतिमञ्चति, न हि पृथिवीत्वेनायं गृहीतः, घटत्वेनैव रूपेण तस्य कार्त्स्न्येन ग्रहणाद्येन रूपेण च यस्य गृहीतं तत्र तद्रूपावच्छिन्नबोधकशब्दप्रयोगो न युज्यत एवेति भावः । ननु तस्य वक्तृत्वथाऽभिधानासम्भवेऽपि वक्त्रन्तरेण स तथाभिधीयेतेत्यत्राह-**स चेतरेति,** न ह्येकस्य घटोऽपरस्य न घट इत्येकस्य घटत्वेन कृत्स्नघटस्य घटशब्दाद्बोधेऽपरस्यापि तथैव बोधात् पृथिवीत्वेन रूपान्तरेणाभिधानस्यासम्भव एवेति भावः । अत्रार्थे हेतुमाह-**कृत्स्नस्येति,** एकधर्मावच्छिन्नत्वेन कृत्स्नस्य घटादेः प्रतीतेर्वक्त्रन्तराभिप्रायेणापि न रूपान्तरावच्छिन्नतद्बोधकशब्दप्रयोगावसरः भावो घटः सन् घट इत्येवमिति भावः । एतदेवानुमानद्वारेण दर्शयति-**अत्र साधनमिति ।** एकधर्मावच्छिन्नत्वेन कार्त्स्न्येन प्रतीयमाने घटेऽन्यतरधर्मावच्छिन्नबोधकशब्दस्य प्रयोगोऽनुपपन्न इति प्रतिज्ञार्थः, कृत्स्नतयाऽभिधेय-

१ सि. क्ष. डा. °भिन्नेषु । २ सि क्ष. डा. दे. °स्यैकस्य वृत्ति० ।

अन्यतरसामान्यविशेषप्रयोगाभाव इति प्रतिज्ञा, कृत्स्नाभिधेयस्वरूपोपादनशब्दाभिहितत्वात्, यत्र कृत्स्नाभिधेयस्वरूपं तदुपादानशब्देनाभिधीयते तत्रान्यस्य सामान्यविशेषप्रयोगस्याभावो दृष्टः, यथा परं प्रतित्वदुदाहृतघटपार्थिवत्वोक्तौ यदि घटत्वेन समस्तं वस्तु विशिष्टं ततः पार्थिवत्वस्यावकाशाभावान्न युज्यत इति दृष्टो दोषः, तथा यद्यघटनिवृत्तिविशिष्टं वस्तु समस्तमुक्तं ततोऽपार्थिवनिवृत्तिविशिष्टं न युज्यत इति समानः, अथास्यैकदेशं घट इत्यघटनिवृत्त्या गृह्णात्येकः, अपरोऽपार्थिवनिवृत्त्या देशं पार्थिव इति गृह्णातीति मतं तदयुक्तम्, अप्रतीतेः, न हि निमित्तान्तरैरुच्यमानस्यैकदेशप्रतीतिर्दृष्टा, यथाऽऽचार्यो मातुल इति, तथा न हि व्यावृत्तिसामान्यशब्दैस्तद्वत एकदेशो वक्तुं शक्यः, कस्मात्? अतदसत्त्ववत्सामान्यविषयत्वात्—अतस्यान्यस्य व्यावृत्तस्यासत्त्वं तदस्यास्ति सन् घट इत्यादिसामान्ये स विषयोऽस्य शब्दस्य सोऽतदसत्त्ववत्सामान्यविषयः, यत्रातदसत्त्व[व]त्सामान्यविषयत्वं शब्दे तस्यैकदेशो न शक्यो वक्तुम्, किमिव? आचार्यो मातुल इत्यादिनिमित्तान्तरोक्तैकदेशानुक्तिवत्।

**अथापि स्यादसद्व्यावृत्तिजातिमत्येकत्रासदसत् वर्तते साक्षात् ततो बह्वर्था सत्ता, तस्यां सत्यां घटादिभेदवादिभिः शब्दैः सामानाधिकरण्यं भविष्यति, तत्सामान्यगुणत्वात्, तद्वाचिशब्दस्यापि तद्व्यवच्छेद्यविषयत्वात् तद्यथा—अनन्यद्रव्यवर्तिनीलगुणसामान्येऽनीलनिवृत्तिसामान्यस्य नीलतरादिद्रव्यवृत्तित्वात् तैस्तद्वाचिभिः सह सामानाधिकरण्यं भवति, यथा नीलतरः पटो नीलतम इति चेति।**

**अथापि स्यादित्यादि,** परमताशङ्का, यथा विधिवादिमतमाशङ्क्यते तथापोहवादिमतमसद्व्यास्वरूपस्य प्रतिपादकशब्देनाभिहितत्वादिति हेत्वर्थः । अविनाभावं ग्राहयति-**यत्रेति** । यथा जातिमत्पक्षे युगपदसम्भवाच्चेति हेतुमभिदधता त्वयोदाहृतघटपार्थिवत्वोक्तौ घटत्वेनैव कृत्स्नं वस्त्वभिहितमिति पार्थिवत्वस्यानवकाशाभाव इत्युक्तस्तद्वदिति दृष्टान्त इत्याह-**यथा परं प्रतीति** । दार्ष्टान्तिकमाह-**तथा यदीति** । ननु घटस्यैकदेश एवैकेनाघटनिवृत्त्या गृह्यते परेण चापार्थिवत्वनिवृत्त्याऽपरेण चाद्रव्यनिवृत्त्येति द्वितीयं विकल्पं दर्शयति-**अथास्यैकदेशमिति** । निमित्तान्तरैर्वस्तुनो देशो न प्रतीयत इति समाधत्ते-**अप्रतीतेरिति,** घटत्वपृथिवीत्वादिनिमित्तैरुच्यते घट इति तत्र घटैकदेशप्रतीतिः कथं भवेदिति भावः । दृष्टान्तमाह-**यथेति,** उपाध्याय एव मातुलः, कश्चनोपाध्यायस्य शिष्यो मातुलस्य भागिनेयं गत्वाऽऽह-उपाध्यायं भवानभिवादयतामिति, स गत्वा मातुलमभिवादयते, तथा मातुलस्य भागिनेय उपाध्यायस्य शिष्यं गत्वाऽऽह मातुलं भवानभिवादयतामिति, स गत्वोपाध्यायमभिवादयत इति, न ह्यत्रोपाध्यायमातुलशब्दाभ्यां पृथक्पृथक् वस्तुनो देशप्रतीतिरिति भावः । व्यावृत्तिसामान्यवाचकशब्दैः तद्वद्वस्तुन एकदेशो नोच्यत इत्यत्र हेतुमाह-**अतदसत्त्ववदिति,** सन् घट इत्यत्र सच्छब्दवाच्ये सन्मात्रे स्वव्यावृत्तप्रतियोगिकासत्त्वं वर्तते तदेवास्य शब्दस्य विषय इति कथमेकदेशस्तेनोच्यते, अन्यथाऽसदसत्त्ववत्सन्मात्रबोधकत्वमेव न स्यात्, यत्र शब्देऽतदसत्त्ववत्सामान्यविषयत्वं वर्तते तेन शब्देन तद्वस्तुन एकदेशो न शक्यते वक्तुम्, यथाऽऽचार्यो मातुल इत्यादौ निमित्तान्तरावलम्बनप्रवृत्तशब्दैरेकदेशो नोच्यत इति भावः । अथासद्व्यावृत्तस्य सामान्यतो घटपटादिवाचकत्वेऽपि तद्वाच्यमसदसत्त्ववत्सामान्यं क्वचिदस्त्येव, तस्मात्सत्ता बह्वर्था सत्ता, आधारतो बहुत्वात् एवञ्च सत्ताधारे या सत्ताऽसदसत्त्ववत्सामान्यरूपा वर्तते तद्वाचिशब्देन सह सच्छब्दस्य सामानाधिकरण्यं स्यादेवेत्याशङ्कते-**अथापि स्यादिति** । विधिवादिना एवमेवाशङ्कितं तद्वत् जातिमत्सामान्यशब्दस्थानेऽसदसत्त्ववत्सामान्यशब्दं प्रक्षिप्यापोहवादी शङ्कत इत्याह-**यथा विधिवादीति** । असदस-

१ सि. क्ष. डे. छा. °पणाभा० । २ सि. क्ष. डे. छा °पणम० । ३ सि क्ष. छा. डे. अतद्सत्वात्सामा० । ४ सि. परमतावाक्य० क्ष. परमताशक्य० ।

वृत्तिजातिमतीत्यादिशब्दविशेषितग्रन्थमर्थतस्तुल्यं यावन्नीलतम इति चेति, अस्य व्याख्या—यद्यप्यसद्सत् पटादिषु न वर्त्तते, तथाप्येकत्रासद्व्यावृत्त्याधारे वर्तते साक्षात्ततो बह्वर्था शङ्कास्ति, तस्याञ्च सत्यां घटादिभेदवादिभिः शब्दैर्येषु सा सत्ता वर्तते तैस्तद्वाचिभिः सामानाधिकरण्यं भविष्यतीति प्रतिज्ञा, तत्सामान्यगुणत्वादिति हेतुः—सा सामान्यगुणो येषां ते बहवोऽर्थाः [तत्] सामान्यगुणाः तद्भावात् तत्सामान्यगुणत्वात् तद्वाचिशब्दस्यापि तद्व्यवच्छेद्यविषयत्वात्—तया सत्तया व्यवच्छेद्याः सर्वे विषया अर्थाः, ते विषयाः-अर्थाः [यस्य] शब्दस्य स तद्व्यवच्छेद्यविषयः तद्भावात् तद्व्यवच्छेद्यविषयत्वात्, यत्र यत्रेत्याद्युपनयः कार्यः दृष्टान्तस्तद्यथा—अनैन्यद्रव्यवर्तिनी[लि]त्यादि, अनीलेतरो हि नीलगुणोऽनैन्यद्रव्यवर्ती-द्रव्ये नीलगुण एव वर्तते नीलतरादिष्ववर्तमानेऽपि तस्मिन् नीलगुणसामान्येऽनीलनिवृत्तिसामान्यस्य नीलतरादिद्रव्यवृत्तित्वात् तैः सह सामानाधिकरण्यं भवति यथा नीलतरः पटो नीलतम इति चेति ।

सोदाहरणोपसंहारे वयमत्र ब्रूमः—

**तच्च न, सामान्यविशेषभावस्य नीलत्वनीलगुणद्रव्यादेरनीलत्वानीलगुणद्रव्यनिवृत्तिलक्षणस्य तच्छब्दार्थाभावात् सम्प्रधार्यत्वात्, नीलशब्दोऽपि हि न द्रव्यं नीलत्वेनाह यत्तत्तरतमादिप्रकर्षभेदस्य सामान्यं स्यात्, किं तर्हि? अनीलवदभावम्, तत्रच न नीलनीलतरनीलतमानां कस्यचिदपि सम्भवः, अनीलाभावभावत्वान्नेति चेत्, एवं विधिशब्दार्थता तर्हि सैव, एवं हि सतोऽपि न सामानाधिकरण्यम्, अभूतसामान्यविशेषविषयत्वात् ।**

(**तच्च नेति**) तच्च न, सामान्यविशेषभावस्य नीलत्वनीलगुणद्रव्यादेरनीलत्वानीलगुणद्रव्यनिवृत्तिलक्षणस्य तच्छब्दार्थाभावात् सम्प्रधार्यत्वात्—नीलत्वजातिशब्दार्थस्यातद्व्यावृत्तिलक्षणस्या[नीलगुणद्रव्यव्यावृत्तिलक्षणस्य]नीलगुणशब्दार्थस्य चाभावादनीलेतरजातिगुणद्रव्यदृष्टान्ताभावात् तत्सामान्यविशेषभा-

---

च्छब्दार्थोऽसदसत्त्ववत्सामान्यं तच्छब्दः साक्षाद्घटपटादिषु वाचकतया न वर्तते, अपि त्वसदसत्सामान्यं क्वचिदाधारे वर्तत एव, तस्माद्बह्वर्थं तदित्याह—**यद्यपीति**, असदसच्छब्दार्थो यस्मिन्नाधारे वर्तते तद्वाचिशब्देन तद्वाचकशब्दस्य सामानाधिकरण्यं भविष्यतीति प्रतिज्ञायत इत्याह-**तस्याञ्च सत्यामिति** । हेतुं वक्ति-**तत्सामान्यगुणत्वादिति**, असदसत्त्ववत्सामान्यस्य बह्वर्थवृत्तिसामान्यगुणत्वादिति तदर्थः, असदसच्छब्दस्या' यसदसत्त्ववत्सामान्येन व्यवच्छेद्यभूता ये बहवोऽर्थाः विषयास्तत्त्वादित्यर्थः । यत्र यत्र तस्य बह्वर्थसामान्यगुणत्वं तद्वाचिशब्दस्य च तद्व्यवच्छेद्यविषयत्वं तत्र तत्र तद्वाचिशब्देन तद्वाचकशब्दस्य सामानाधिकरण्यं दृष्टम्, यथा नीलतरः पटो नीलतमः पट इति चेति दृष्टान्तं वर्णयति-**दृष्टान्तस्तद्यथेति**, अनीलेतरसामान्यवचनो नीलशब्दः, सोऽनन्यद्रव्यस्य सामान्यगुणः, नीलद्रव्यमात्र एव वृत्ते न तु नीलतरनीलतमादिद्रव्यविशेषेषु साक्षाद्वर्तते, नीलद्रव्यसामान्यत्वात्, तेषु नीलतरादिद्रव्येषु पटादिषु स नीलगुणोऽनीलनिवृत्तिलक्षणोऽस्ति तद्वाचिशब्दैः सामानाधिकरण्यं भवतीति भावः । उभयनियमनयमतं दूषयति-**तच्च नेति** । नीलसामान्यनीलगुणद्रव्यादेः सामान्यविशेषात्मकस्य नीलशब्दार्थत्वं तावत्सम्प्रधार्यम् न तु निश्चितम्, नीलशब्दस्यानीलत्वाभावमात्रवाचकत्वात्, अनीलगुणव्यावृत्तिमात्रवाचकत्वाच्च, द्रव्यशब्दस्य चाद्रव्यनिवृत्तिवाचकत्वात्, उभयोश्च शब्दयोरभावार्थत्वेनोभयत्र दृष्टान्ताभाव एव, सामान्यविशेषभावस्यापि प्रमाणान्तरावाप्तिरिति व्याचष्टे-**सामान्यविशेषभावस्येति**, नीलत्वं सामान्यं नीलगुणो विशेषः, नीलगुणः सामान्यं द्रव्यं विशेष इत्येवं सामान्यविशेषभावस्यार्थः । अनीलत्वव्यावृत्तिलक्षणं नीलत्वमनीलगुणव्यावृत्तिलक्षणो नीलगुणः, अद्रव्यनिवृत्तिलक्षणं द्रव्यमित्येवं सर्वेषामभावरूपता, न ह्यभावानां

१ क्ष. पदमिदं नास्ति । २ क्ष. छा तदसद्घटा० । ३ छा. शङ्का । ४ सि. क्ष. छा डे. न त्वद्रव्य० ।

वोऽत्रापि सम्प्रधार्यः, तद्भावनाहेतुर्यतश्च नीलशब्दोऽपीत्यादि–सोऽपि हि नीलशब्दो न द्रव्यं नीलत्वेनाह, यत्तत्तरतमादिप्रकर्षभेदस्य सामान्यं स्यात्, किं तर्हि ¹[अ]नीलवदभावं–अनीलत्वजातेरनीलगुणस्य वा निवृत्तिमाह, तत्र च–अभावे न नीलनीलतरनीलतमानां भेदानां कस्यचिदपि सम्भवः, तस्मादभावमात्राभिधानान्नास्ति सामान्यविशेषभावः, अनीलाभावभावत्वान्नेति चेत्–स्यान्मतमनीलत्वजातिगुणाभावो नीलगुणद्रव्यभाव एव, स च सामान्यं नीलादिभेदानामिति चेन्मन्यसे अत्रोच्यते–एवं विधिशब्दार्थता तर्हि सैव, नीलत्वजातिगुणाधारद्रव्यस्य विधेः, अस्तु को दोष इति चेदुच्यते–यस्मादेवं सतोऽपि न सामानाधिकरण्यं त्वदुक्तन्यायेन, अभूतसामान्यविशेष[विषय]त्वात्, अनन्यद्रव्यवर्तिनि नीलगुणे नीलतरनीलतमप्रकर्षभेदाभावात् सामान्यविशेषत्वाभावः, तस्मादभूतसामान्यविशेषविषयत्वात् त्वदुक्तनीलनीलतरादिवत् सामानाधिकरण्याभाव इति दृष्टान्तासिद्धेः सच्छब्दा[र्था]सद्व्यावृत्त्या भेदानामसद्व्यावृत्तिपक्षे विधिपक्षे वा नास्ति सामानाधिकरण्यम् ।

उपेत्यापि तु व्यावृत्तिमदभिधानं सामान्यविशेषत्वाभावोऽसदघटादिव्यावृत्तिमताम्, जातेरजातितः, न ह्यभिधानप्रत्ययहेतौ सज्जातौ घटत्वजातिरस्ति, यथा नीलगुणे द्रव्ये नीलप्रकर्षभेदः, यतोऽसदसत्त्ववतो वस्तुनोऽघटभावघटात्वादीनुपादाय प्रवर्तेत, द्रव्याणि तावदपोहवादिनस्तेऽस्माकमिव न घटाद्यभिधानानां हेतवः, यानि तत्कारणान्यघटासत्त्वादीनि तानि नासदसत्तायाम्, न चाविद्यमानः स्वात्मन्यर्थः शक्यते विशेष्यवस्तुन्यध्यारोपयितुम्, स्वरूपवत्, तस्माद्विद्यमानतद्रूपं नीलमिव मधुरं न सद्घटादीन् विशेषयिष्यतीति कथं सामानाधिकरण्यं स्यात्? ।

(**उपेत्यापीति**) उपेत्यापि तु व्यावृत्तिमदभिधानं–सच्छब्देनासद्व्यावृत्तिमतः सतोऽभिधान-

निर्विशेषाणां सामान्यविशेषभावः सम्भवतीति न दृष्टान्तत्वसम्भव इति भावः । उक्तार्थमेव हेतुमुखेन भावयति–**तद्भावनाहेतुरिति,** नीलशब्दस्य नीलत्वेन द्रव्यबोधकत्वे हि नीलतरादिप्रकर्षवद्द्रव्यस्य नीलत्वं सामान्यं भवेत्, न चैवम्, तच्छब्दस्य केवलनीलत्वव्यावृत्तेरनीलगुणाभावस्य वा बोधकत्वादिति भावः । अभावबोधकत्वादेवाभावस्य प्रकर्षभेदो नास्तीत्याह–**अभाव इति,** अभावस्य निर्विशेषत्वान्न सामान्यविशेषभाव इति भावः । अनीलाभावो भावात्मक एवेति शङ्कते–**अनीलाभावभावत्वादिति,** अनीलत्वाभावो नीलगुणस्वरूपः, अनीलगुणाभावो, नीलगुणद्रव्यरूपः, ततश्च प्रकर्षसम्भवात् सामान्यविशेषभावो भविष्यतीति भावः । नीलशब्दार्थस्यानीलव्यावृत्तेर्भावरूपत्वे विधिरेव शब्दार्थः सम्पन्न इत्यन्यापोहशब्दार्थताभङ्ग इत्याह–**एवं विधिशब्दार्थतेति** । इष्टापत्तौ दोषमाह–**यस्मादेवं सतोऽपीति,** अनीलाभावस्य भावत्वे सत्यपि सामानाधिकरण्यं न सम्भवत्येवेत्यर्थः । हेतुमाह–**अभूतसामान्येति,** नीलशब्दस्य सामान्यविशेषविषयत्वाभावादित्यर्थः । तत्समर्थयति–**अनन्यद्रव्यवर्तिनीति,** अनन्यद्रव्यवर्तिनीलगुणसामान्ये न नीलतरनीलतमादिप्रकर्षवत्, नीलशब्दार्थस्यानीलत्वव्यावृत्तिमतो नीलगुणस्य नीलतरादयो न प्रकर्षभेदाः, तेन सदाभूतसामान्यत्वादिति सामान्यविशेषत्वाभावेन दृष्टान्तत्वासम्भवेन सच्छब्देनापोहपक्षे विधिपक्षे वा भेदानां बोधाभावात् सन् घट इत्येवं सामानाधिकरण्यमनुपपन्नमेव स्यादिति भावः । तदेवं तद्वतो न वाचकोऽस्वतंत्रत्वात्, भेदादिति हेतुद्वयं व्याख्याय जातेरजातित इति पदं व्याख्यातुमाह–**उपेत्यापीति** । सदादिशब्दानामसद्व्यावृत्तिमतां सदादीनामभिधायकत्वेऽभ्युपगतेऽपि सन् घट इत्येवं सामान्यविशेषभावो न भवेदेवेति व्याचष्टे–**सच्छब्देनेति,** सच्छब्देनासद्व्यावृत्तिमतो घटादिशब्देना-

१ सि. क्ष. छा. डे. °पितु न व्या० ।

मभ्युपगम्यापि सामान्यविशेषत्वाभावोऽसदघटादिव्यावृत्तिमताम् [सद्]घट[दीनां,] कुतः ? **जातेरजातितः**–नास्या जातिर्विद्यत इति [अ]जातिरिति विग्रहात् सामान्यानां सामान्यानाधारतां दर्शयति, **न ह्यभिधानप्रत्ययहेतावित्यादि** यावत् प्रवर्त्तेतेति, सदभिधानप्रत्ययहेतुरसद्भावात्मिका सज्जातिः–सत्ता, तस्यान्त्वघटाभावात्मिका घटत्वजातिर्नास्ति, यथा नीलगुणे द्रव्ये नीलप्रकर्षभेद इति दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यं दर्शयति, यतोऽसदसत्त्ववतो वस्तुनः अघटाभावघटत्वादीनुपादाय प्रवर्त्तेत इत्यसम्भवमन्योऽन्येषु दर्शयति, द्रव्याणि तावदपोहवादिनस्तेऽस्माकमसत्योपाधिमत्यविशेषविधिवादिनामिव घटाद्यभिधानानां न हेतवः, यान्यघटासत्त्वादीनि तत्कारणानि, तानि नासदसत्तायां सन्ति, तस्माज्जातिरजातिरिति सिद्धम्, ततः किं ? ततो–न चाविद्यमानः स्यात्मन्यर्थः–सत्तानीलत्वादिविशेषणे न शक्यते विशेष्यवस्तुनि–घटोत्पलादावध्यारोपयितुम्, किमिव ? स्वरूपवदिति वैधर्म्यदृष्टान्तः–यथा स्वरूपं शब्दो विशेषेऽध्यारोपयति न तथेहेति, तस्मादित्यादि प्रस्तुतोपसंहारो यावत् सामानाधिकरण्यं स्यादिति, गतार्थः, प्रयोगश्चात्र न सद्घटादि विशेषयिष्यति, अविद्यमानतद्रूपत्वात्, अविद्यमानतद्रूपत्वं प्रतिपादितत्वात् सिद्धम्, नीलमिव मधुरमिति दृष्टान्तो गतार्थः।

**अर्थाक्षिप्तास्तर्हि, असद्व्यावृत्तिमतोऽन्यतमघटत्वादिसामान्यविशेषानुबद्धत्वात्, नैतदस्ति, अर्थाक्षेपेऽप्यनेकान्तात्,............ .... ............असद्व्यावृत्तिमता**

घटादिव्यावृत्तिमता बोधनेऽपि न सामान्यविशेषतेत्यर्थः । हेतुमाह–**जातेरजातित इति,** जातेर्जातिमत्त्वाभावादित्यर्थः । जातौ जात्यभावं दर्शयति–**न ह्यभिधानेति,** सदभिधाने प्रत्यये च हेतुरसद्व्यावृत्तिरूपा सत्ता जातिः, तस्याश्च घटाभिधानप्रत्ययहेतुरघटाभावात्मिका घटत्वजातिर्नास्ति, तस्माच्च सामान्यविशेषतेत्यभिप्रायः । अत्रार्थे वैधर्म्यं निदर्शनस्योपनिबध्नाति–**यथा नीलगुण इति,** तत्र परस्परशब्दवाच्ये परस्पराभिधानप्रत्ययहेतोः सत्त्वादिति भावः । एकत्र शब्दवाच्येऽपराभिधानप्रत्ययहेतोरसत्त्व एव तानुपादाय शब्दः प्रवर्तेत न चैवमस्तीति वक्ति–**यतोऽसदसत्त्ववत इति,** सच्छब्दवाच्येऽसदसत्त्ववति घटाभिधानप्रत्ययहेतोरघटाभावलक्षणघटत्वस्य सत्त्वे तदुपादाय सच्छब्दः प्रवर्तेतेत्यर्थः । कुतो नास्तीत्यत्राह–**द्रव्याणि तावदिति,** असत्योपाधिसत्यभूतविधिरूपविशेषस्य शब्दार्थं वदतामस्माकं मते द्रव्याण्यसत्यभूतानि यथा न शब्दाभिधानहेतुभूतानि तथैव तव मतेऽपि, त्वन्मते घटाद्यभिधानेऽघटाभावस्यैव हेतुत्वात् स च सदभिधानहेतावसदसत्तायां नास्तीति जातेरजातित्वं सिद्धमिति भावः । एवञ्च सन् घटो नीलमुत्पलमित्यादौ विशेषणेऽसदसत्तालक्षणसत्तायां नीलव्यावृत्तिलक्षणनीलत्वे चाविद्यमानमघटव्यावृत्तिलक्षणघटत्वानुत्पलव्यावृत्तिलक्षणोत्पलत्वं धर्मं विशेष्ये घटे उत्पले च कथमध्यारोपयेत्, न हि जपाकुसुमेऽविद्यमानं रक्तत्वं स्फटिकेऽध्यारोपयितुं शक्यमित्याह–**न चाविद्यमान इति।** दृष्टान्तमाह–**स्वरूपवदिति,** सर्वः शब्दः प्रथमं स्वासाधारणीं गोशब्दत्वादिजातिरभिधीयते तत्प्रत्यायनादनन्तरमर्थजातीनां गोत्वादिनामात्मसु शब्दजातेरभेदाध्यारोपस्य कल्पना क्रियते, सम्बन्धव्युत्पत्तिकाले गौरयमर्थ इत्यर्थजात्या शब्दजातेर्भेदात् सामानाधिकरण्यान्यथानुपपत्त्याऽभेदाध्यारोपः कल्प्यते, अन्यथा सङ्केतस्यैव कर्तुमशक्यत्वादिति भावः । तथा चाध्यारोपासम्भवेऽनुवृत्तिधर्मत्वात्सामान्यविशेषाभावे सदादिना घटाद्यनभिधानात् सामानाधिकरण्यं कथं भवेदित्याशयेनाह–**तस्मादित्यादीति।** पर्यवसितमनुमानप्रयोगमाह–**प्रयोगश्चात्रेति,** स्पष्टमन्यत्। अथ सदादिशब्देभ्यो घटादिभेदानां भेदाज्जातेरजातित्वेन आक्षेपासम्भवेऽप्यर्थतस्त आक्षिप्यन्त इत्याशङ्कते–**अर्थाक्षिप्तास्तर्हीति** । व्याचष्टे–

१ सि. क्ष. छा. डे. °भावमसद°। २ सि. छा. सामान्यानां मानाभ्याधारतान् द., क्ष. डे. सामान्याभ्यां धारतान् द°। ३ सि. क्ष. छा. डे. अघटीभाव°। ४ सि. क्ष. छा. डे. शब्दो विशेषो°।

**विशेषाक्षेपो युज्यते चेद्भेदानां व्यभिचाराद्रव्यत्वमात्राक्षेपस्तर्हि भविष्यति, तदपि न गुणादिव्यभिचारात्, एतावच्च......।**

**अर्थाक्षिप्तास्तर्हीत्यादि**, यदि घटादयस्तद्भेदत्वादनाक्षिप्ताः सामान्यानाममामान्यत्वादर्थतस्तर्ह्याक्षिप्ता भवितुमर्हन्ति, कुतः? असद्व्यावृत्तिमतोऽन्यतमघटत्वादिसामान्यविशेषानुबद्धत्वात्–असद्व्यावृत्तिमद्धि वस्तु घटत्वादीनां सामान्यविशेषाणामन्यतमेनावश्यमनुबद्धम्, असत्त्वे न भवत्यवश्यं सद्भवति, सच्च घटत्वाद्यन्यतमदिति परो मन्येत, अत्रोच्यते–नैतदस्ति, अर्थाक्षेपेऽप्यनेकान्तात्, अस्य भाष्यं सव्याख्यानं गतार्थं यावदसद्व्यावृत्तिमता विशेषाक्षेपो युज्यते चेत् घटादिभेदानां व्यभिचाराद्रव्यत्वमात्राक्षेपः तर्हि भविष्यति, मात्रग्रहणाद् द्रव्यत्वसामान्यविशेषमात्रं गृह्यते सद्विशेषणेनेति, अत्रोच्यते–तदपि न, गुणादिव्यभिचारात्–गुणकर्मणोरपि सद्भावात् किं द्रव्यं गुणः कर्म वा स स्यात्सद्व्यावृत्तिमदिति संशय एव, एतावच्चेत्याद्युपसंहारः पूर्वविधिवादिदूषणोपसंहारवदन्यापोहमात्रेऽप्युपसंहारस्य नास्ति सम्भवः।

एतेषां विकल्पानां दोषबन्धात् तेन चापोहकृच्छ्रुतिरिति यथा विधिवादिनामपोहवादिनश्च दोषास्तथा सामान्योपसर्जनविधिप्रधानवादिनोऽपीति–

**मा मंस्था अन्यापोहवादिलक्षणवदतिप्रसक्तत्वादपवादोऽस्याप्यारब्धव्यो लक्षणस्येति किमन्यत्वे न सामान्यभेदपर्यायवाची?, किं त्वं मन्यसेऽन्यत्वे सामान्यभेदपर्यायशब्दानामर्थं वृक्षश्रुतिर्नापोहतेऽविरोधात्, विरोधाच्च पटादीनपोहते, अस्य हि विरुद्धाविरुद्धयोरन्यत्वादपोहानपोहप्रसङ्गे तुल्ये त्वयेव मयाऽपवादो नारब्धोऽनारम्यविधित्वात्, विधिना हि सामान्योपसर्जनं विशेषं शब्दोऽभिदधानो विरोधाभावात्तानपि गमयति, त्वया पुनरुत्सर्गवाक्ये**

**यदि घटादय इति**, घटादयः सच्छब्देन नाक्षिप्यन्ते तेषां व्यावृत्तिमतो भेदात्, तथा जातेरजातित्व इति भावः। अर्थापत्त्याऽऽक्षेपं दर्शयति–**अर्थतस्तर्हीति**, असद्व्यावृत्तिमान् हि येन केनचित् घटत्वेन पटत्वेन मठत्वेन कुटत्वेन वा सामान्यविशेषाख्येन धर्मेणावश्यमवच्छिन्नः स्यात्, असतो व्यावृत्तिमतः सत्त्वव्याप्यत्वेन सत्त्ववतश्च घटत्वाद्यन्यतमधर्मव्याप्यत्वात् घटाद्यन्यतमाक्षेपः सम्भवतीति भावः। एतदेवाह–**असद्व्यावृत्तिमद्धीति**। असद्व्यावृत्तिमतः सत्त्वव्याप्यत्वमाह–**असत्त्व इति**, असत्त्वे न भवति सति अवश्यं सद्भवतीत्यर्थः। सत्त्ववतो घटत्वाद्यन्यतमव्याप्यत्वमाह–**सच्चेति**। अर्थाक्षेपपक्षं दूषयति–**अर्थाक्षेपेऽपीति, अर्थापत्त्याऽऽक्षेपे** विषये व्यभिचारो दृश्यते, सच्छब्दो ह्येकः घटादयश्चानेके, सच्छब्देनार्थतो घटस्याक्षेपे कुतो न पटस्याक्षेपः, पटस्य वाऽऽक्षेपे कुतो न मठाऽऽक्षेपः, तस्याप्यसद्व्यावृत्तिमत्त्वादित्येवं व्यभिचार इति भावः। द्रव्यमात्राक्षेपे न दोष इत्याशङ्कते–**द्रव्यमात्राक्षेप इति**। अद्रव्येऽपि गुणे कर्मणि चासद्व्यावृत्तिमत्त्वस्य सत्त्वात् द्रव्यमात्राक्षेपेऽपि व्यभिचार इति समाधत्ते–**गुणादिव्यभिचारादिति**, असद्व्यावृत्तिमान् द्रव्यं गुणः कर्म च तथा च सदित्युक्ते संशय एव स्यात् किं द्रव्यं किं गुणः किं वा कर्मेति, तत्र द्रव्याद्यन्यतममात्राक्षेपे व्यभिचारो दुर्वार एवेति भावः। विधिवादिपक्षवदत्रापि दोषोपसंहारमाह–**एतावच्चेति**। प्रोक्तपक्षेपूक्ता दोषाः सामान्योपसर्जनविधिप्रधानवादिमते नास्ति सम्भव इत्यादर्शयितुमाह–**एतेषां विकल्पानामिति**, भेदाश्रितसम्बन्धतद्विकल्पानामित्यर्थः। अन्यापोहकृच्छ्रुतिरिति लक्षणस्यापवादो यथाऽतिप्रसक्तत्वाद्दर्शितस्तथा सामान्योपसर्जनविशेषप्रधानशब्दार्थताया अप्यपवाद इति मा मंस्था इत्याह–**मा मंस्था इति**। वृक्षशब्दस्तावत् वृक्षस्य पृथिवीत्वात् शिंशपादित्वात् तरुत्वाच्च

१ सि. क्ष. छा. डे. °कान्तोऽस्य०। २ सि. क्ष. छा. डे. भेदानामाक्ष्य०। ३ सि० क्ष० छा० डे. संहारामवास्ति सं०।

**महता क्लेशेन प्रतिपाद्यान्यापोहोऽपवादेन त्यक्तः, अनिर्वाहकत्वात्, सामान्यादिशब्दान्तरार्थापोहानिष्टेः, ततः सामान्यादिशब्दान्तरार्थात्यागात्तु नन्वयमेव परमविधिः विधानं विधिः लक्षणतस्त्वनपवादं प्रतिपत्त्याधानम्, स च शब्दार्थः सामान्यादिशब्दार्थेष्वव्याहतत्वात् परमः।**

(**मा मंस्था इति**) मा मंस्थाः–मा च मंस्था अन्यापोहवादिलक्षणवदतिप्रसक्तत्वादपवादोऽस्याप्यारब्धव्यो लक्षणस्येति, अत आह–किमन्यत्वे न सामान्यभेदपर्यायवाची ? अपवादविरोधादिति वाक्यशेषः–किमिति प्रश्ने, किं त्वं मन्यसेऽन्यत्वे सामान्यभेदपर्यायशब्दानामर्थं वृक्षश्रुतिर्नापोहते ?–पृथिवीशिंशपातर्वादिशब्दानाम्, अविरोधात्, विरोधाच्च पटादीनपोहते ? इति, यतोऽस्य विरुद्धाविरुद्धयोरन्यत्वात् अपोहानपोहप्रसङ्गे तुल्ये त्वयेव मयापि[3] [ अपवादो नारब्धव्यः ] यथा शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति लक्षणस्यातिप्रसङ्गभयादारब्धम्. अन्यत्वेऽपि न सामान्यभेदपर्यायवाची अपवाद[4]विरोधात्, किं कारणम् ? अनारभ्यविधिः, विधिना हि सामान्योपसर्जनं विशेषं शब्दोऽभिदधानो विरोधाभावात्तानपि गमयति, तदङ्गभावाद्विध्येकीभूतार्थत्वादिति कारणं वक्ष्यति, नन्विदमेव विधिना वाचकत्वेऽनुमानं शब्दस्य. यदन्यत्वेऽपि सामान्यादीनां विशेषानुगुणानां गतिः, समहश्च प्रकृतिप्रत्ययादीनां तदर्थान्तरवाचक इति युक्त्या वक्ष्यामः, त्वया पुनरुत्सर्गवाक्ये महता क्लेशेन प्रतिपाद्यापवादेन त्यक्तः, किं कारणं ? अनिर्वाहकत्वात्, किमनेन प्रतिज्ञातमर्थमनिर्वहता ? शब्दान्तरार्थापोहं स्वार्थे कुर्वती तदर्थाऽन्यापोहार्था स्यात्, तत्तु नोक्तं. अत्यन्तं सामान्यादिशब्दान्तरार्थापोहानिष्टेः तस्मात्त्यक्तोऽन्यापोहः,

सामान्यभेदपर्यायान् पृथिवीशिंशपातर्वादीन् नापोहते, अविरोधात्, घटपटादींस्त्वपोहते विरोधादिति स्थिते पृच्छत्यन्यापोहवादिनं घटपटादीनामिव सामान्यभेदतर्वादीनामन्यत्वे तुल्ये सामान्यभेदपर्यायाणां किं वृक्षादिशब्दो न वाचक इति मन्यसे इत्याह–**किमन्यत्व इति,** अन्यापोहपक्षेऽन्यत्वे घटपटादौ सामान्यादौ समाने वृक्षादिशब्दः किं सामान्यादीन् ब्रूते, अपवादेन शब्दान्तरार्थापोहमित्यादिवाक्येनापोहकृच्छ्रुतिरिति वाक्यापवादभूतेन विरोधात्, पृथिवीशिंशपादयो हि शब्दान्तरार्थाः, तदपोहं वृक्षशब्दः करोत्येवेति भावः, अनुवादिविरोधादिति पाठेऽनु पश्चाद्वदनं शब्दान्तरेत्यादिवाक्यस्य कथनं यस्येति व्युत्पत्त्याऽनुवादि–अन्यापोहकृच्छ्रुतिरिति वाक्यं तेन सह विरोधादित्यर्थो विज्ञेयः। प्रश्नार्थं स्फुटयति–**किं त्वं मन्यस इति,** वृक्षशब्दस्तुल्येऽप्यन्यत्वे सामान्यादीन् घटपटादींश्चाविरोधात् विरोधाच्च नापोहतेऽपोहते चेति भावः। **यतोऽस्येति,** घटपटादिसामान्यभेदाद्योर्विरुद्धाविरुद्धयोरन्यत्वस्य तुल्यत्वात् सर्वेषामपोहस्यानपोहस्य वा प्रसङ्गः स्यादित्यन्यापोहकृच्छ्रुतिरिति लक्षणस्यातिप्रसङ्गभयात्त्वयाऽपवाद आरब्धः, मया तु नारब्धव्य इति भावः। त्वया कथमपवाद आरब्ध इत्यत्राह–**यथा शब्दान्तरेति।** कुतो मया नारब्धव्य इत्यत्र कारणमाह–**अनारभ्यविधिरिति,** अपवादमनारभ्य विधीयमानत्वादिति भावः। अपवादानारम्भमेव दर्शयति–**विधिना हीति,** वृक्षादिशब्दाः सामान्योपसर्जनं विशेषं विधिनाऽभिदधानाः पृथिवीशिंशपातर्वादीनपि वक्ष्यमाणकारणाद्ब्रुवत इति भावः। तदङ्गत्वविध्येकीभूतार्थत्वलक्षणं कारणमेव शब्दो विधिरूपेणार्थस्य वाचक इति साधयतीत्याह–**नन्विदमेवेति।** ननु भवतु विशेषो विधिरूपस्तदन्यत्सामान्यन्त्वन्यापोहरूपमेवेत्यत्राह–**यदन्यत्वेऽपीति,** योऽयमन्यापोहः सामान्यमिष्यते सोऽपि यदि विशेषस्यानुरूपो भवेत्तदैव तस्य शब्देन गतिर्भवति नान्यथेति सूच्यतेऽत्र इति भावः। त्वया तूत्सर्गवाक्योदितान्यापोहोऽपवादेन त्यक्त इत्याह–**त्वया पुनरिति।** त्यागे कारणमाह–**अनिर्वाहकत्वादिति।** अपवादस्योत्सर्गवाक्योक्तार्थानिर्वाहकत्वं दर्शयति–**शब्दान्तरेति,**

---

1 सि. क्ष. छा. डे. वाक्यनुवादि विरो०। 2 सि. क्ष. छा. डे. मन्यसे व्यक्तेः सा०। 3 सि. क्ष. छा. डे. मयापि यथा। 4 सि. क्ष. छा. डे. अनुवाद०। 5 सि. वादेनेत्युक्तः।

ततः किं ? ततः सामान्यादिशब्दान्तरार्थात्यागात्तु त्वदनिष्टो नन्वयमेव परमविधिः, कोऽक्षरार्थो विधेरित्यत आह–विधानं विधिरिति, लक्षणतस्त्वनपवादप्रतिपत्त्याधानं विधिः, स च–विधिरेव शब्दार्थः सामान्याद्यन्यशब्दार्थेष्वव्याहतत्वात् परमः ।

**तत्र तावत्सामान्यादुक्तिः सामान्ये विशेषविध्यर्थो न व्याहन्यते, त्वयैव सामान्यं नापनुदतीत्युक्तत्वात्, अस्मदिष्ट उपसर्जनीकृतसामान्यो विशेषो विधिनैवोक्तः, यथा न हि घटादिबाह्यवस्तु सामान्योपसर्जनमन्तरेण भवितुमर्हति वस्तुत्वात्, आत्मवत्, यथा नामरूपसन्तानाख्य आत्मा शरीरादिप्रतिक्षणदेशभिन्नरूपादिसुखविज्ञानादिविशेषतत्त्वार्थो नरकमनुजादिविशेषतत्त्व आमुक्तेः सन्तानाख्यसामान्योपसर्जनमन्तरेण न भवितुमर्हति, एवं घटशब्देनाप्यागृहीता मृदादयस्तच्छब्दार्थान्तःपातित्वात्, आकारादिवत्, एवं तावद्घटे विशेषशब्दार्थे पार्थिवद्रव्यसत्त्वादिसामान्यात्यागो युक्तो विधिप्रधानशब्दार्थत्वात् ।**

( **तत्रेति** ) तत्र तावत् सामान्यादुक्तेः सामान्ये विशेषविध्यर्थो न व्याहन्यते, त्वयैव सामान्यं न [ प ] नुदतीत्युक्तत्वात्, अस्मदिष्ट उपसर्जनीकृतसामान्यो विशेषो विधिनैवोक्त इति, तस्य निदर्शनम् यथा न हि घटादीत्यादि, साधनमिदं–सामान्योपसर्जनमेव–न सामान्यानुपसर्जनं भवितुमर्हति घटपटादिबाह्यवस्त्विति प्रतिज्ञा वस्तुत्वादिति हेतुः, आत्मवदिति दृष्टान्तः, आन्तरोऽर्थो नामरूपसन्तानाख्य आत्मा, यथा स शरीरादिप्रतिक्षणदेशभिन्नरूपादिसुखविज्ञानादिविशेषतत्त्वार्थः सन्तानाख्यसामान्योपसर्जनत्वमन्तरेण भवितुमर्हति नरकमनुजादिविशेषतत्त्वः [ आ ] मुक्तेः– यावन्मोक्षस्तावद्विशेषाः सामान्यानुविद्धा एव, तथा घटादयोऽपि बाह्या इत्यत आह–एवं घटशब्देनाप्यागृहीता मृदादय इति साध्ये बाह्ये

वाक्यमिदमन्यापोहार्थं यदि स्यात्तर्हि नाक्षरार्थकं भवेत्, न चैवम्, अस्य वाक्यस्य सामान्यादिशब्दान्तरार्थस्यात्यन्तमपोहो नाभिप्रेतः, तत एवान्यापोहोऽनेन परित्यक्त इति भावः । एवञ्च तत्रापि विधिरेव शब्दार्थ इष्ट इत्याह–**ततः सामान्यादीति** । विधिलक्षणमाह–**लक्षणतस्त्विति**, अपवादरहितप्रतिपत्तिजनक इत्यर्थः । **विधिरेवेति**, विधिरूप एव शब्दार्थः स च अन्यत्वाभिमतेषु सामान्यादिष्वप्यबाधितत्वात् परमत्वं प्राप्नोतीति भावः । अधुना सामान्यादीनां शब्दार्थत्वमाह–**तत्र तावदिति** । सत् घट इत्यादौ सच्छब्देन सत्तावत्त्वेन सामान्यतो घटपटादयः सर्वे प्रोच्यन्ते, तदेवं सामान्यतयाऽभिहिते घटादौ घटशब्देन सदाद्यपनोदद्वारा घटविशेषविधाने न कोऽपि विरोधः सामान्यतोऽभिधानस्य त्वयाऽप्यभ्युपगमादिति व्याकरोति–**तत्र तावत्सामान्यादुक्तिरिति**, सामान्यशब्दप्रयोग इत्यर्थः । एतत्स्वयमस्मताथमाह–**अस्मदिष्ट इति**, सत्त्वोपसर्जना घटपटादयो विधिरूपतया सच्छब्दार्थ इति भावः । तत्र दृष्टान्तमाह–**यथा न हीति**, घटपटादिबाह्यवस्तु नहि सामान्योपसर्जनमन्तरेण भवितुमर्हति वस्तुत्वादात्मवदिति वस्तुस्वरूपसाधनम् । दृष्टान्तं स्फुटयति–**आन्तरोऽर्थ इति**, बौद्धमतविशेषाभिप्रायेणाऽऽत्मा नामरूपसन्तानाख्य उक्तः, क्षणिकशरीरात्मकरूपादिविज्ञानलक्षणविशेष एवाऽऽत्मतत्त्व तथा मनुजनरकादिविशेषतत्त्वश्च यावन्मुक्ति, मुक्तौ निरुपप्लवचित्तसन्तानस्यैवाऽऽत्मत्वात्, एवञ्च स आत्मा नामरूपसन्तानस्वरूपत्वात् सन्तानाख्यसामान्योपसर्जनं नामरूपादिविशेषतत्त्वश्चेति सामान्योपसर्जनं विना स यथा न भवितुमर्हति तथा घटादिवस्त्वपीति भावः । **यथा स इति**, शरीरादीति रूपविशेषतत्त्वता नरकमनुजेति नामविशेषतत्त्वतोक्ता, आमुक्तेरिति नामरूपात्मकत्वस्यावधिरुक्तः । तदेवं वस्तुतः सामान्योपसर्जनविशेषप्रधानत्वमुपदर्श्य शब्दवाच्यमपि तथेत्याह–**एवं घटशब्देनेति**, एवञ्च घटादिशब्दो मृदादिसामान्योपसर्जनं घटादिविशेषमाहेति भावः । तदेवाह–

१ सि. क्ष. छा. डे. °न्यादस्यत्र० । २ सि. क्ष. छा. सामानान्यदुक्तेः । ३ सि. क्ष. छा. डे. °विष्टमुप० । ४ सि. क्ष डे. नामारूप० ।

सामान्यमृदाद्युपसर्जनं घट[ादि]विशेषार्थं दर्शयति, तच्छब्दार्थान्तःपातित्वादिति आत्मघटाद्यविशेषया-विना सर्वनाम्ना वस्तुत्वसामान्यस्य साध्यतानुगतत्वं विशेषाविनाभाविनो दर्शयति, आकारादिवदिति, प्रतिक्षणदेशादिभिन्नरूपादिविशेषपरमार्थस्योर्द्ध्वग्रीवपृथुकुक्षित्वादिसामान्योपसर्जनस्य सद्भावात्, एवं तावद्घटे विशेषशब्दार्थे पार्थिवद्रव्यसत्त्वादिसामान्यात्यागो युक्तो विधिप्रधानशब्दार्थत्वात्।

एवं तर्हि वृक्षः शिंशपेति शिंशपाविशेषो विधिना कथमुच्यते वृक्षविधावनुपसर्जनः ? इत्यत्रोच्यते—

**भेदास्तूच्यन्त एव, घटसामान्यस्य तदङ्गत्वात्, तद्भवनात्मकत्वात्, रूपादिस्वरूपशब्दार्थत्ववत् सामान्योपसर्जनद्वारेण प्रतिपादनार्थं सामान्यशब्दाः प्रयुज्यन्ते न तु परमार्थसता कल्पितेन वा विना तेन शब्दार्था भवितुमर्हन्तीति सामान्यशब्दप्रयोगो विशेषप्रतिपादनार्थः, विशेषास्तु विवक्षिता एव विशेषपरमार्थत्वादस्य नयस्य।**

(**भेदा इति**) भेदास्तूच्यन्त एव, वृक्षः शिंशपेत्यादिवत् घटस्य विशेषाः रूपादयो युगपदयुगपद्भाविनस्त एव मुख्यशब्दार्थत्वादुच्यन्ते, घटसामान्यस्य तदङ्गत्वात्, घटाद्युपसर्जनरूपादिविशेषपरमार्थत्वात् तद्भवनात्मकत्वात्—स हि[वि]शेषो भवनं भावः प्रत्येकं निर्विकल्परूपादिभवनमात्मलाभः, तद्भवनमात्माऽस्य घटस्येति तद्भवनात्मको घटः, शिबिकावाहकयानेश्वरस्येव यानवदित्युक्तं प्राक्, तन्निरूपयति—रूपादिस्वरूपशब्दार्थत्ववदिति, यद्यपि युगपद्भाविनो रूपादिस्वभावा एव सन्तो रूपरसगन्धस्पर्शशब्दा एव निर्विकल्पा वस्तुत्वाच्छब्दार्थः, प्रतिक्षणवर्त्त्ययुगपद्भाविनो वा विशेषास्तथा[पि] सामान्योपसर्जनद्वारेण प्रति[पाद

साध्ये वाद्य इति। हेतुं दर्शयति—**तच्छब्दार्थान्तःपातित्वादिति।** यत्र यत्र तच्छब्दार्थान्तःपातित्वं तत्र तत्र सामान्योपसर्जनविशेषत्वं दृष्टम्, यथाऽऽत्मा, दृष्टान्ते तच्छब्देनाऽऽत्मा प्राह्य दार्ष्टान्तिके च तच्छब्देन घटादि प्राह्यम्, तच्छब्दस्याऽऽत्मघटाद्यविशेषवाचित्वात्, सर्वनाम्ना बुद्ध्युपस्थितवस्तुपरामर्शित्वात् एवञ्च घटपटादिवस्तुमात्रस्य तच्छब्दार्थान्तःपातित्वाद्वस्तुसामान्यं हेतुः साध्याविनाभावीति निरूपयतीति दर्शयति—**आत्मघटादीति। आकारवदिति,** घटस्याऽऽकारादय ऊर्द्ध्वग्रीवादयो यथा स्वोपसर्जनप्रतिक्षणभाविरूपादिविशेषतत्त्वा घटशब्दार्थान्तःपातित्वादिति भावः। उपसंहरति—**एवन्तावद्घट इति।** ननु वृक्ष इत्युक्त्या पृथिवीद्रव्यत्वसत्त्वादिसामान्योपसर्जनो वृक्षलक्षणविशेष एवोच्यते न तु वृक्षसामान्योपसर्जनः शिंशपादिविशेषस्तत्त्व, तथा च वृक्षः शिंशपेति वृक्षविधौ वृक्षानुपसर्जनः शिंशपादिः कथमुच्यत इत्याशङ्कायामाह—**भेदास्त्विति,** शिंशपादिव्यतिरिक्तस्य वृक्षस्याभावाच्छिंशपादेर्वृक्षात्मत्वात् वृक्षस्य च शिंशपाद्यङ्गत्वात् वृक्षोपसर्जनाः शिंशपादयोऽप्युच्यन्त एवेति भावः। घटादिशब्दैर्विशेषा मुख्यतयोच्यन्त एव यथा वृक्षशब्देन कदम्बाम्रजम्ब्वाम्रशिंशपादयो मुख्यवृत्त्योच्यन्ते वृक्षसामान्यन्तूपसर्जनतया तद्वदित्याह—**वृक्षः शिंशपेत्यादिवदिति।** के मुख्यतयोच्यमाना घटस्य विशेषा इत्यत्राह—**घटस्य विशेषा इति।** युगपदयुगपद्भाविविशेषाणामुपादानतया घटस्याङ्गभूतत्वात्सामान्यमुपसर्जनतयोच्यते तथा च घटाद्युपसर्जनयुगपदयुगपद्भाविरूपादिविशेषा घटादिपदानां परमोऽर्थ इत्याह—**घटसामान्यस्येति।** रूपादयो मुख्योऽर्थः घटादय उपसर्जनभूतार्था इति कथमित्यत्राह—**तद्भवनेति,** घटो हि रूपादेरात्मलाभार्थः, तद्व्यतिरेकेण तदसम्भवाद्रूपादिभवनमेव घटस्यात्मा, तथा च रूपादिभवनात्मकत्वाद्घटस्य घटाद्युपसर्जनरूपादिप्रधानं घटशब्दार्थः। घटस्य विशेषाङ्गत्वे दृष्टान्तमाह—**शिबिकेति,** शिबिकावाहकानां यानमीश्वरयानार्थमत ईश्वरयानाङ्गभूतमिति भावः। सामान्यस्योपसर्जनतयाऽभिधाने कारणमाह—**रूपादिस्वरूपेति,** रूपादिस्वरूपशब्दस्यार्थवदित्यर्थः। भावार्थमाह—**यद्यपीति,** अयमभिप्रायः यथा निर्विकल्पा रूपादिशिवकस्थासकादिभेदाः परस्परभिन्ना नोच्यन्ते शब्दैः,

१ क्षा. तच्छब्दार्थतः। × × क्ष. २ सि० क्ष. छा. डे. घटस्यापोषरूपा०। × × सि.।

नार्थं]सामान्यशब्दाः प्रयुज्यन्ते, न तु कल्पितेन परमार्थसता वा विना तेन-सामान्येन शब्दार्थो भवितुमर्हन्तीति, तस्मात् सामान्यशब्दप्रयोगो विशेषप्रतिपादनार्थो विशेषास्तु विवक्षिता एव, [विशेष]परमार्थत्वादस्य नयस्येति ।

**पर्यायशब्दा अपि तद्विधानाः, घटनविशेषस्य कुटनकुम्भाद्यर्थात्मकत्वात्, कुटनघटनाभ्यां विना नास्ति कुम्भता नाम काचित्, तया वा विना न घटनकुटने स्त इत्येतदवगम्यतां घट इत्युक्ते तत्प्रतिपक्षशब्दार्थवदप्रतिपक्षसामान्यविशेषपर्यायशब्दार्था अन्ये ततस्तेषामन्यत्वे तुल्ये विधिप्राधान्यादेव ताननापोहते, अतोऽस्माकमपवादलक्षणान्तरारम्भक्लेशादृते व्यापि युक्तश्चासत्योपाधिसत्यविध्यर्थलक्षणशब्दार्थकथनम्, भवतस्तु विध्यतिक्रमेण प्रस्तुतासत्त्वशब्दार्थानापत्तिरन्यापोहायुक्तिश्च ।**

**पर्यायशब्दा अपीत्यादि**, ये पुनः पर्यायशब्दास्ते तद्विधानाः—एवमेव विशेषं विदधति, घटनविशेषस्य कुटनकुम्भाद्यर्थात्मकत्वात् तस्य कुटिलता कुटनं, घटनं चेष्टा, कुम्भता वृत्तत्वं ताभ्यां कुटनघटनाभ्यां विना नास्ति कुम्भता नाम काचित्, तया वा विना न घटनकुटने स्त इति हि कुटनेत्यादिनाऽन्योन्याविनाभावं दर्शयति, प्रकृतमुपसंहरति-इत्येतदवगम्यतामित्यादिना, इत्थं प्रतिपद्यस्व यथा घट इत्युक्ते पट इति तत्प्रतिपक्षशब्दार्थोऽन्यः, तथैवाप्रतिपक्षसामान्यविशेषपर्यायशब्दार्था अन्ये, ततस्तेषामन्यत्वे तुल्ये विधिप्राधान्यादेव ताननापोहते, नान्यत्करणं विधेः, अतोऽस्माकमपवादलक्षणान्तरारम्भक्लेशादृते व्यापि युक्तश्चासत्योपाधिसत्यैविध्यर्थलक्षणशब्दार्थकथनं श्रेयोगुणप्रकर्षयुक्तश्च, भवतस्तु विध्यतिक्रमेण प्रस्तुतासत्त्वशब्दार्थो[ना]पत्तिरन्यापोहायुक्तिश्च ।

तत्संस्पर्शाशक्यत्वात्, किन्तु अभेदभूतेन केनचिद्वस्तुना उच्यन्ते, तेन सहाभेदमापन्नेन सत्ताशब्दादिना च, तथा च रूपादिशब्दा भिन्ना रूपादिस्वभावा एव रूपादिशब्दानामर्था, एवं बालाद्यवस्था अपि साक्षाच्छब्देन स्प्रष्टुमशक्यत्वादवस्थानुरूपमुपादायैव शब्दैः प्रोच्यन्ते तद्वत् सामान्यमप्यनन्तत्वादसाधारणत्वादहेयत्वात् विशेषप्रतिपादनोपायत्वाच्च सामान्यशब्दैः प्रोच्यन्ते सामान्योपाधिद्वारेणैव विशेषाणां शब्दैर्बोधयितुं शक्यत्वात्तच्च सामान्यं परमार्थसदेव वाक्यात् कल्पितं वा स्यात्, सामान्यं विना तु न शब्दार्थो भवितुमर्हन्तीति । एवञ्च सामान्यशब्दप्रयोगः सामान्यद्वारेण विशेषाणां प्रतिपादनार्थं, विशेषा एव च विवक्षिता अतस्त एव प्रधानमित्याह-**तस्मादिति** । सदादिघटादिसामान्यविशेषशब्दवत् पर्यायशब्दा अपि सामान्योपसर्जनविशेषप्रधानवादिन इत्याह-**पर्यायशब्दा अपीति** । व्याचष्टे-**ये पुनरिति** । हेतुमाह-**घटनविशेषस्येति**, घटनकुटनकुम्भानां परस्परमविनाभावादित्यर्थः । एषामर्थमाह-**तस्य कुटिलतेति**, घटस्य कुटिलता कुटनमुच्यत इत्यर्थः, एवमग्रेऽपि । अविनाभावं दर्शयति-**ताभ्यामिति** । एवञ्च घटकुटकुम्भादिपर्यायशब्दार्थानां परस्पराविनाभावित्वेऽपि घटकुटकुम्भादीनां घटशब्दप्रतिपक्षपटशब्दवाच्यपटस्यान्यत्ववत् घटशब्दाप्रतिपक्षसद्घटकुटकुम्भादिशब्दानां सद्घटकुटकुम्भादीनामन्यत्वमित्याह-**इत्थं प्रतिपद्यस्वेति** । तदेवमन्यत्वे तुल्येऽपि शब्दाः परं न कमप्यर्थमपोहन्ते, विधिप्राधान्यादित्याह-**ततस्तेषामिति**, तदेवमन्यत्वे तुल्ये सामान्यभेदपर्यायवाच्येष्व शब्दः, न तु तानपोहते, एवञ्च विधेः नान्यत्किमपि क्रियत इत्यपवादारम्भक्लेशोऽस्माकमनवसर एवेति विधिव्यापीति भावः । युक्तश्चासत्योपाधिसत्यविध्यर्थस्वरूपः शब्दार्थ इत्याचष्टे-**युक्तश्चेति**, प्रशस्यस्वरूपगुणप्रकर्षयुक्तमित्यर्थः । अपोहवादिनो दोषमाह-**भवतस्त्विति**, अन्यापोहकल्पनातिरिति विधेरुल्लङ्घनेनापोह्यस्यासत्स्वरूपस्य शब्दार्थतानापत्तिः, युक्त्या विचार्यमाणेऽन्या-

१ सि. छा० डे ०प्राधान्यादेवदनापा० । क्ष. ०प्राधान्ये देवदनापा० । २ सि. क्ष. छा. क्लेशादृते । ३ सि. सत्यपि व्यर्थल०, क्ष. छा. सत्यपि अर्थल० । ४ सि. क्ष. छा. युक्तपि ।

यदि विधिर्नेष्यते ततो न केवलविर्ध्यतिप्रसङ्गदोष एव, किं तर्हि ?—

**एषोऽप्यनिष्टोपचयः उदकाद्याहरणार्थिने घट इत्युक्तेऽप्रस्तुतव्यावृत्तिशब्दार्थतापत्तिः, विधिपक्षे च साक्षादेव स्वार्थं ब्रूत इत्येष च विशेषः, पर्यायशब्दस्य तावत् घटकुटादेर्विधेय एवार्थः, दर्शनात्, तदेव हि विधेयं घटनं कुटनमुभयं वा, द्विमातृवत्, यथा विशेषणद्वारेण विशेष्यप्रधाने निर्देशे राधकमाता पूर्णकमाता राधकपूर्णकमातेति द्वाभ्यामन्यतरेण वा विशिष्यते सैव, तथा विशेषणस्वरूपापन्नविशेष्यप्रतीतित्वात् युगपदप्रयोगेऽपि स एव निमित्तोपलक्षितो भेदः प्रतीयते, न हि स्वार्थानुपातित्वाद्विधिः स्वरससमापतितः प्रतिक्षेप्तुं युक्तो निमित्तान्तरेणापि तस्यैव प्रतीतेः ।**

(**एषोऽपीति**) एषोऽप्यनिष्टोपचयः उदकाद्याहरणार्थिने घट इत्युक्ते तत्राप्रस्तुतस्य पटादेरघटस्य व्यावृत्तिरविवक्षितोऽशब्दार्थ एव शब्दार्थ इत्येतदापन्नम्, अनिष्टश्चैतदिति, किञ्च विधिपक्षेऽस्मदिष्टे साक्षादेवाव्यवहितमेव स्वार्थं ब्रूत इत्येष च विशेषः, तद्यथा-पर्यायशब्दस्य तावदित्यादि यावत् प्रतिक्षेप्तुं युक्त इति, पर्यायशब्दस्य घटकुटादेर्विधेय एवार्थः, कस्मात् ? दर्शनात्-विधेयत्वदर्शनात्, तदेव हि विधेयं घटनं कुटनं उभयं वा, किमिव ? द्विमातृवत्-यथा विशेष[ण]द्वारेण विशेष्यप्रधाने निर्देशे राधकमाता पूर्णकमाता राधकपूर्णकमातेति द्वाभ्यामन्यतरेण वा विशिष्यते सैव, तथा विशेषणस्वरूपापन्नविशेष्यप्रतीतित्वात्-सम्बन्धिविशिष्टरूपप्रतिपत्तेरित्यर्थः, युगपदप्रयोगेऽपीति, निमित्तभेदेऽप्यर्थैकत्वात् युगपदप्रयोगेऽपि स एव निमित्तोपलक्षितो भेदः प्रतीयते, स्यान्मतं निमित्तभेदे निमित्तिभेदात् किमर्थं निमित्तान्तरापोहो न भवतीति, एतच्च न, न हि स्वार्थानुपातित्वाद्विधिः स्वर[स]समापतितः प्रतिक्षेप्तुं युक्तो निमित्तान्तरेणापि तस्यैव

गोहस्याप्यप्रस्तुतत्वमेवेति भावः । तत्र दोषान्तरमप्यस्तीत्यादर्शयतीत्याह-**यदीति** । किं दोषान्तरमित्यत्राह-**एषोऽपीति,** इदमपि ते दोषाधिक्यमित्यर्थः । अप्रस्तुतस्यापि शब्दार्थतापत्तिदोषमाह-**उदकादीति,** जलाद्याहरणार्थिनं प्रति घटमानयेत्युक्ते तस्य घटशब्देनाघटनिवृत्तिरेव प्रतीयेत न घट इति प्रवृत्तिस्तस्य न स्यादिति भावः । विधिपक्षे च साक्षादेव घटशब्दाद्घटप्रतीतेर्न दोष इत्याह-**विधिपक्ष इति** । एतदेव निरूपयति-**पर्यायशब्दस्येति** । हेतुमाह-**दर्शनादिति,** तथैव दर्शनादित्यर्थः । दर्शनमेव प्रकाशयति-**तदेव हीति** । कथं घटादिशब्दस्य घटनं कुटनमुभयं वा विधेयमित्यत्र निदर्शनं निदर्शयति-**द्विमातृवदिति,** विशेषणद्वारेण विशेष्यप्रधाने निर्देशे एकमेव वस्तु द्वाभ्यामन्यतरेण वा विशिष्यते, मातुर्विशेष्यस्य राधकपूर्णकस्वरूपविशेषणनिर्देश्यत्वे मातैव राधकमातृत्वेन पूर्णकमातृत्वेन राधकपूर्णकमातृत्वेन निर्दिश्यते, एवं घटनकुटनाभ्यां विशेषणाभ्यां विशिष्यमाणे घटो घटत्वेन कुटत्वेनोभयेन वा विशिष्यत इति भावः । हेतुमाह-**विशेषणस्वरूपापन्नेति,** घटादिप्रत्यया घटत्वादिविशेषणानुरूपविशेष्यप्रत्ययाः, एवञ्च यावतां विशेषणानां सम्भवस्तावद्भिरेक एवार्थो विशिष्यते निमित्तभेदेऽपि वस्तुतो वस्तुन एकत्वात्, केवलं निमित्तमात्रभेदप्रयुक्त औपाधिको भेदो न स्वरसत इति भावः । तदेवाह-**युगपदिति** । ननु निमित्तभेदे निमित्तिनो भेदस्यावश्यकत्वात् किमित्येकं निमित्तं निमित्तान्तरं नापोहत इत्याशङ्कते-**स्यान्मतमिति,** गुणजात्यादेर्निमित्तस्य निमित्तिन्यर्थे द्रव्ये निमित्तस्वरूपप्रत्ययो जायमानः स्वप्रत्ययं विभक्तमेव दर्शयति तस्मान्निमित्तान्तरापोहो भवत्येवेति भावः । तत्प्रतिक्षिपति-**न हि स्वार्थानुपाति-**

**१ सि. क्ष. केवल विध्यापतिप्रसङ्गदोषाभेव, छा. केवलाविध्यावतिप्रसंगदोषावेव । २ सि. क्ष. °देवावविहतमेव, छा. °देवाव्विहतमेव ।**

विशेषार्थस्य प्रतीतेः स एवार्थः स्वेनैव रसेन समापतितः प्रतिपादयितुमिष्टश्च किमिति प्रतिक्षिप्यते ? न हि स्वार्थप्रतिक्षेपो युक्तः ।

किं कारणम् ?—

**सुदूरमपि गत्वा तेन विना तदगतेरक्लेशेनागतो विधिरेव शब्दार्थः पर्याय इति, अत एव चाविनाभावात् सामान्यशब्देनापि स एव विशेषार्थः साक्षाद्विधिना प्रतीयते सर्वथाऽव्यवहितविधिवृत्तिना विधिना स्वभेदाः समाक्षिप्तास्तद्रूपपरमार्थत्वेनाङ्गाङ्गिभावगत्या, प्रतिषेधव्यापारनिराकांक्षं विधिरूपेण विवक्षितविध्यर्थस्य प्रतिपत्तौ तस्योपसर्जनत्वेनापोहबुद्धेरनुत्पत्तेरेव स्वात्मा विधिः प्रधानोऽपोहोऽप्रधानः, शिंशपाद्युपहारिवृक्षशब्दार्थेऽघटावतारवत्, यथा वृक्ष इत्युक्ते शिंशपादिभेदानामन्यतमेन विनाऽर्थवान्न भवति वृक्षशब्द इति शिंशपाद्युपहरन्नर्थवान्, तस्मिन् मूलादिमति शिंशपाद्यवश्यम्भाविविशेषस्वभावेऽर्थेऽघटानवतारः, अघटो न भवतीत्यस्य तु दूरत एव ।**

(**सुदूरमपीति**) [सु]दूरमपि गत्वा तेन विना तदगतेः—घट इत्युक्तेऽघटो न भवतीति प्रतिषेधद्वयेनार्थान्तरं व्यावर्त्यापि घट एवावश्यं प्रतिपत्तव्यः, स च कुट एवेति कुटत्वेन विना घटत्वाभावात् कुटत्वस्याप्यविनाभाविनः स्वेनैव रसेन प्रतीयमानत्वादक्लेशेनाऽऽगतो विधिरेव शब्दार्थः पर्याय इति, किञ्चान्यत्-अत एवाविनाभावात् सामान्यशब्देनापि घटस्य पार्थिव[त्व]ादिना सामान्यसामान्यशब्देन वा द्रव्यसत्त्वादिना विधीयमानः स एव विशेषार्थो घटाख्यः साक्षात्-अव्यवहितवृत्तिना विधिना प्रतीयते-तानि हि भेदरूपाण्यनेकात्मकस्य वस्तुनः सामान्याद्याकारेणापि गृह्यमाणानि कथं न विधीयन्ते ? सर्वथेत्यादि, तस्मादव्यवहितविधिवृत्तिना शब्देन घटस्यैव स्वभेदाः समाक्षिप्ताः, यथोक्तं-'सद्द्रव्यपृथिवीमृद्घट[त्व]ादिसम्बन्धादस्तिद्रव्यं पार्थिवो मार्तिको घट इति घटे सम्प्रत्ययः' (                ) इति, तत्कथमिति चेदुच्यते तद्रूपपरमार्थत्वेन-तानि भेदरूपाण्येव सामान्यादिवदाभासमानान्यविद्यमानान्येव वा सामान्यादिरूपाणि

---

**त्वादिति,** विधिर्हि अनपवादप्रतिपत्त्याधानम्, स च स्वभाव एव वर्तेन न निमित्तान्तरमपवदति, स्वार्थानुपातित्वात्, निमित्तान्तरेणापि तस्यैवार्थस्य प्रतिपत्तेर्न प्रतिक्षेपो युक्त इति भावः । निमित्तान्तरानपोहे कारणमाह **सुदूरमपीति** । नन्वयं घट इत्यादौ घटशब्देन यदघटो न भवतीति प्रतिषिध्यते तदयमघटो न भवतीति अघटप्रतिषेधेऽप्ययमघटो न भवतु नाम, परं कोऽयमिति शङ्काया अनिवृत्तेरवश्यं घट इति प्रतिपत्तव्य, घटप्रतिपत्तिमन्तरेण गत्यन्तराभावात्, न हि केवलमघटप्रतिषेधमात्रेण कृतार्थो भवति प्रयोक्ता, प्रतिपाद्यबुभुत्सितार्थाप्रतिपादनात्, तस्मादवश्यं घट इति प्रतिपत्तव्ये स घटवत् कुटोऽपि, तेन विना घटत्वाभावात्, कुटत्वस्यापि घटत्वाविनाभाविनः स्वरसत प्रतीतेरिति विधिरेव स घटकुटकुम्भादिपर्याय शब्दार्थ इत्यक्लेशेनापि समापतित एवेत्याशयेनाह—**घट इत्युक्त इति** । यथा घट इत्युक्ते कुटत्वकुम्भत्वादिना विना घटत्वस्याभावात् घटशब्देन घटकुटकुम्भादयो विधिरूपेण प्रतीयन्ते तथा स एव घटः सामान्यशब्देन पार्थिवत्वेन सामान्यसामान्यशब्देन वा द्रव्यत्वसत्त्वादिना विधीयमानो घटकुटकुम्भादिरूपेणाव्यवधानाद्विधिरूपेण प्रतीयत एवेत्याह—**अत एवेति** । एवं घटशब्देन स्वभेदा अपि युगपदयुगपद्भाविपर्यायाः अव्यवहितविधिवृत्तिना विधिरूपेण समाक्षिप्यन्त एवेत्याह—**तस्मादव्यवहितेति,** आदौ घटशब्देन घटं प्रतिपाद्य पश्चाद्भेदाः समाक्षिप्यन्त इति न, किन्तु अव्यवधानेनैकदैवेति भावः । सामान्याद्याकारेण गृह्यमाणं वस्तु स्वभेदान् समाक्षिपतीत्यत्र मानमाह—**यथोक्तमिति** । तत्समर्थयति—**तद्रूपपरमार्थत्वेनेति,** घटाद्युपसर्जनरूपादिभेदपरमार्थत्वेनेत्यर्थः । तदेवाह—**तानि भेदरूपा-**

भेदप्रतिपादनपरतया तस्यैव विशेषस्य परमार्थरूपत्वेनाङ्गाङ्गिभावं गतानि, असत्योपाधिसत्यशब्दार्थत्वात् तथा चाङ्गाङ्गिभावगत्या तद्रूपपरमार्थरूपया, अव्यवहितवृत्तिना विधिना स्वभेदाः समाक्षिप्ता इति वर्तते, प्रतिषेधव्यापारनिराकांक्षमित्यादि यावत् [अ]घटावतार इति, योऽपि त्वयाऽन्यापोह इष्टः सोऽपि विधिमन्तरेण न भवति, यस्माद् घटो न भवतीत्येतदविवक्षितं द्विःप्रतिषेधमनादृत्यानपेक्ष्य विधिरूपेण विवक्षितविध्यर्थस्य घटस्य प्रतिपत्तौ सत्यामुत्तरकालं भवति नाप्रतिपत्तौ, तस्यैव चरितविध्यर्थस्य घटस्योपसर्जनत्वेनापोहबुद्धेरघटाभावबुद्धेरनुत्पत्तेरेव स्वात्मविधिः प्रधानोऽप्रधानोऽपोह इति, किमिव ? शिंशपाद्युपहारिवृक्षशब्दार्थेऽघटानवतारवत्, यथा वृक्ष इत्युक्ते शिंशपादिभेदानामन्यतमेन विनाऽर्थवान्न भवति वृक्षशब्द इति शिंशपाद्युपहरन्नर्थवान् तस्मिन् मूलादिमति शिंशपाद्यवश्यम्भाविविशेषस्वभावेऽर्थेऽघटानवतारः, अघटो न भवतीत्यस्य तु दूरत एव—नैवामौ शब्दार्थौ गुडमाधुर्यगतिवदर्थापत्तिलभ्यत्वात्, घटानवतार इत्येव वा पाठः-घटस्य वृक्षार्थेऽवकाशाभाववदनुपात्तावृक्षापोहस्य कोऽवकाश इति।

स्यान्मतमत्रापि वृक्ष इत्यवृक्षो न भवतीत्यपोह एवोच्यते, नहि शिंशपाद्युपहारः, तस्यैव विसंवादस्थानत्वान्न स्वार्थ इत्यत्रोच्यते—

**यदि तु सोऽप्यपोहपर एव स्यात् ततः सोऽवृक्षव्यावृत्तिवृत्तत्वाद्वृक्षभेदाञ्शिंशपादीन्नाक्षिपेत् नानुमन्येत न व्युदस्येत वा, अनर्थित्वादवृक्षाभवनवत्, अवृक्षो घटादि तदभवनस्य भेदानाक्षेपवद्वृक्षशब्दस्य व्यावृत्तिवृत्तत्वाद्भेदाक्षेपे व्यापार एव नास्ति, यदसौ वृक्षार्थं घटादिभ्योऽन्यत्वेन शिंशपादिभेदात्मकं स्वार्थमनन्यत्वेनाक्षिपति तस्मात्तेन सह सामानाधिक-**

**ण्येवेति**। भेदरूपाणामङ्गित्वं सामान्यस्य च तदङ्गत्वमित्याह-**अङ्गाङ्गिभावं गतानीति**। तस्माद्घटशब्देनाव्यवहितविधिवृत्तिना घटस्य भेदाः समाक्षिप्यन्त इत्याह-**तथा चेति**। शेषं पूरयति- **अव्यवहितेनेति**। शब्दस्यासत्योपाधिसत्यविशेषविधिबोधने प्रतिषेधव्यापाराऽपेक्षा नास्तीत्याशयेनाह-**प्रतिषेधव्यापारेति**, तत प्रतिषेधव्यापारानपेक्ष. शब्द. स्वार्थं विधिरूपेण प्रतिपादयति, विवक्षितविध्यर्थज्ञानानन्तरमर्थापत्त्याऽघटो न भवतीत्यन्यापोहप्रतिपत्तिर्न तु शब्दार्थत्वेन विध्यर्थस्योपसर्जनतया, प्रतिषेधबुद्धेर्विवक्षितविध्यर्थज्ञानानन्तरमुपजायमानत्वेन शब्दस्य सामान्योपसर्जनविधिप्रधानबोधनेन चरितार्थतया पश्चात्प्रतिभासमानोऽन्यापोह शाब्दबुद्धौ नोपसर्जनं नापि प्रधानं किन्तु स्वात्मा विधि प्रधानमप्रधानमन्यापोह इति भावः। शब्दार्थघटकतयाऽन्यापोहस्यानवतार इत्यत्र निदर्शनमाह-**शिंशपादीति**, मूलस्कन्धशाखादिमद्भेदशिंशपाद्यन्यतमोपग्राहिवृक्षशब्दार्थे घटपटादेरनन्तर्गतत्ववदित्यर्थः, तदेव प्रकटीकरोति-**यथा वृक्ष इत्युक्त इति**। यदा च वृक्षशब्दार्थान्तर्गततयाऽघटादेरेव नास्त्यवतारस्तदा तद्धर्मस्याघटापोहस्य कथमन्तःपातितासम्भव ?, नास्त्येवेत्याह-**तस्मिन् मूलादिमतीति**। **गुडमाधुर्येति**, गुडशब्दाद्यथा माधुर्यप्रतीतिरर्थापत्त्या तथाऽघटापोहप्रतीतिरप्यर्थापत्त्यैव, न तु शब्दार्थतयेति भाव। अघटानवतार इत्यत्र घटानवतार इत्यपि पाठान्तरमुपलभ्यत इत्याह-**घटानवतार इति**। वृक्षशब्दार्थे घटस्य यथा नावकाशस्तथा वृक्षापोहस्यापीत्याह-**घटस्येति**। अथ शिंशपाद्युपहारिवृक्षार्थेऽघटानवतारवार्तेति दृष्टान्तेन वृक्षशब्दाच्छिंशपाद्युपहार इति यदुच्यते तद्विवादस्थानत्वान्न सिद्धमपि तु वृक्ष इत्यवृक्षो न भवतीत्येवोच्यत इत्याशङ्कां समाधत्ते-**यदि त्विति**। व्याचष्टे-**यदि तु सोऽपीति**। वृक्ष शिंशपेत्येवं दृश्यते

१ सि. डी. छा. घटानव०। २ सि. क्ष. छा. °नपेक्षविधि०। ३ सि. क्ष. छा डे० °पत्तौसत्यामुत्तर०। ४ सि. क्ष. छा. मा प्रति०। ५ सि. क्ष० छा. डे °बुद्धेरुपत्ते०। ६ सि. क्ष. घटघटानवतार०। ७ २ क्ष. छा. °घघटावतारः।

**रण्यं प्रतिपद्यते वृक्षः शिंशपेति तद्भवनविध्येकार्थीभावात्, तद्भवनभवनविधिविनाभावे तु न युज्यते, भवनविधिविनाभूतस्य भेदाक्षेपाभावात्, साधनमप्यत्र भवनविधिविनाभूतं भेदानाक्षेपि न समानाधिकरणं वृक्षः शिंशपेति त्वदभिमतं वस्तु स्यात्, अभावत्वात् वन्ध्यापुत्रवत् ।**

**यदि तु सोऽप्यपोहपर एव स्यादित्यादि.** यदि तु सोऽपि वृक्षशब्दोऽपोहपर एवाभविष्यत् ततः सोऽवृक्षव्यावृत्तिवृत्तत्वाद्वृक्षभेदशिंशपादीन् [ नाक्षिपेत् ] आक्षिपतीति चेष्टम्, शिंशपादिसामानाधिकरण्यदर्शनात्, तथा नानुमन्येत, अनाक्षिप्तत्वात्तमर्थं, अनुमन्यते तु, न व्युदस्ये[ त ]व[ । ], अपोह एवेत्यभावमात्रार्थत्वात्, खपुष्पवत्, वक्ष्यति चोपसंहारे शून्यमात्रत्वात् किं कः केन कस्माद्वाऽपोहत इति, कुतोऽनाक्षेपाननुमत्यव्युदासा इति चेदुच्यते-अनर्थित्वात्-अनर्थी हि शिंशपादिना भेदेन वृक्षशब्दः, तस्मान्नाक्षेपादीन् कुरुते, किमिव ? अवृक्षाभवनवत्, तद्व्याख्या-अवृक्षो घटादीत्यादि गतार्था यावद्व्यापार एव नास्तीति, यदसावित्यादि, विधिवादे त्वस्मत्पक्षे यस्मादसौ वृक्षशब्दो वृक्षार्थं घटादिभ्योऽन्यत्वेन शिंशपादिभेदात्मकं स्वार्थमनन्यत्वेनाक्षिपति, तस्मात्तेन सह सामानाधिकरण्यं प्रतिपद्यते वृक्षः शिंशपेति, तद्भवनविध्येकार्थीभावात् तद्भवनभवनविधिविनाभावे[3] तु न युज्यते-तत्समानाधिकरणीभवनं भवनमस्य तद्भवनभवनं तस्य तद्भवनभवनस्य विधिरात्मलाभः स्थितिराचारः तेन विना भावे-तद्विरहितत्वे न घटते-घटां नापैति, भवनविधिविनाभूतस्य भेदाक्षेपाभावात्, न ह्यभवतो भेदा आक्षेपकत्वं वाऽस्ति यतः समानाधिकरणता स्यात्, साधनमप्यत्र-भवनविधि[ विना ]भूतं भेदानाक्षेपि न समानाधिकरणं वृक्षः शिंशपेति त्वदभिमतं वस्तु स्यात्, अभावत्वाद्वन्ध्यापुत्रवत्-अनुपपन्नसामानाधिकरण्यभेदाक्षेपानुमतं त्वदिष्टं वृक्षः शिंशपेति पदद्वयाभिधेयमभावत्वाद्वन्ध्यापुत्रवत् ।

सामानाधिकरण्यम्, तच्च वृक्षशब्देन शिंशपादिप्रतीतौ स्यादेकार्थत्वात्, तत्र यदि वृक्षशब्दोऽवृक्षापोह एवाभविष्यत् नाक्षिपेद्वृक्षभेदं शिंशपादि, तत्रैव शब्दस्य प्रतीतगर्भत्वात् भेदानामानन्त्यव्यभिचारात्, न च भिन्नार्थवाचकानां सामानाधिकरण्यं गवाश्वयोरिव दृष्टम्, दृष्टश्चाक्षेपो भेदानाम्, सामानाधिकरण्यदर्शनादिति भावः । भेदार्थस्त्वया न स्वीकार्यः, अपोहमात्रत्वेन भेदानाक्षेपादित्याह-**नानुमन्येतेति** । अपोहमात्रार्थत्वेन भेदाश्च व्युदस्येत चेत्याह-**न व्युदस्येत चेति** । एवञ्च भेदानामाक्षेपानुमतिव्युदासासम्भवेनाभावमात्रताप्रसङ्ग इत्याह-**वक्ष्यति चेति,** एवञ्च सर्वमिदं इत्यादिवाक्यस्वरूपमप्यन्येनेति भावः । अनाक्षेपादौ निमित्तं दर्शयति-**कुतोऽनाक्षेपेति,** वृक्षशब्दो भेदानामर्थयतेऽर्थीत्यतो नाक्षेपादि विधत्त इति भावः । दृष्टान्तमाह-**अवृक्षाभवनवदिति,** अवृक्षो घटादिभवनं तदभावोऽवृक्षाभवनम्, तच्च न भेदानाक्षिपति अनर्थित्वात्, एवं तद्वाचकशब्दोऽपि तस्य ह्यपोहचरितार्थस्य भेदाक्षेपे व्यापार एव नास्ति, अनर्थित्वादिति भावः । विधिपक्षे भेदाक्षेपमाह-**विधिवादे त्विति,** वृक्षशब्दो घटादिभ्योऽन्यत्वेन वृक्षार्थं वृक्षानन्यत्वेन शिंशपादिभेदात्मकं स्वार्थमाक्षिपति तस्मादेव च वृक्षः शिंशपेति शिंशपया सार्कं सामानाधिकरण्यं प्रतिपद्यत इति भावः । तत्र हेतुमाह-**तद्भवनेति,** शिंशपादिभवनेन सह वृक्षस्यैकार्थीभावात्-अभेदात् सामानाधिकरण्यादिति वाऽर्थः । **तत्समानाधिकरणीभवनमिति,** शिंशपादिना सह समानाधिकरणीभवनमेव वृक्षभवनम्, तदर्थं एव वृक्षस्यात्मलाभः स्थितिः आचारः-मर्यादा वा, एवञ्च शिंशपादिसमानाधिकरणीभवनभवनविधिं विना समानाधिकरणता न घटत एव तथाविधभवनविधिविनाभूतञ्च वस्तु न भेदानाक्षिपतीति भावः । तदेव समर्थयति-**न ह्यभवत इति,** तद्भवनभवनविधिरहितस्य न कश्चिद्भेदो न वा भेदाक्षेपकत्वं सम्भवति येन सामानाधिकरण्यं भवेदिति भावः । प्रयोगमाह-**साधनमप्यत्रेति,** भवनविधिविनाभूतं

१ सि. छा. वृक्षव्यावृत्तिव्यावृत्तत्वात्, सि. वृक्षव्यावृत्तत्वात् । २ सि. क्ष. डे. °विधिकार्थी० । ३ सि. क्ष. छा. डे. °भावेनुप्रयु० । ४ सि. क्ष. छा. घटानोपैति । ५ सि. क्ष. छा. °क्षेपानुमतित्वदि० । ६ सि. क्ष. छा. °द्वयाभिधेय० ।

इतर आह–

कुतोऽस्य भेदस्य भेदत्वम्? वृक्षसामान्यस्यावृक्षाभावत्वे सत्यसिद्धत्वात्, कथं सोऽपि तदभेदो न भवति शिंशपादिर्वृक्षः? अनिवृत्तेः, शिंशपा वृक्षाभावाव्यावृत्तो वृक्ष एव न भवति कुतोऽभेदः, अत्रोच्यते यद्यसावपि भेदो न भवति न तर्हि वृक्षो वृक्षो भवति, अभूतशिंशपादिभेदत्वात्, घटवत् सोऽप्येवमेव, अभूतग्रीवादिभेदत्वात्, वृक्षवत्, एवं ग्रीवादिरभूतकपालादित्वादित्यादि यावत् परमाणुर्न भवत्यभूतरूपादिभेदत्वात्, विज्ञानवत्, रूपादिरप्यरूपादि, अभूतरूपक्षणभेदत्वात्, विज्ञानवदेव, सर्वत्र वा सामान्येन न भवन्त्यतोऽर्थाः स्वभेदशून्यत्वात् खपुष्पवत्, एवञ्च सर्वमिदं दृश्यादिवस्तु शून्यमापद्यते त्वन्मतेनैव कः किं केन कस्माद्वाऽपोहते?

(कुत इति) कुतोऽस्य भेदस्य भेदत्वं?–शिंशपादेर्वृक्षभेदाभिमतस्य तद्भेदत्वं, वृक्षसामान्यस्यानुवृत्तिलक्षणस्य[अ]वृक्षाभावत्वे सत्यसिद्धत्वात् कस्य भेदः शिंशपादिः?, तस्माद्भेदस्य शिंशपादेर्भेदत्वं कुतः? नैवास्तीत्यर्थः, कथं सोऽपि तदभेदो न भवति शिंशपादिर्वृक्षः.[न]अभेदो यस्मादनिवृत्तोऽनपोहः, शिंशपा वृक्षाभावाव्यावृत्तो वृक्ष एव न भवति, कुतोऽभेदः शिंशपादिर्वृक्ष इति, अत्रोच्यते–यद्यसावपीत्यादि–अनिष्टापादनसाधनम्, यद्यसावपि भेदो न भवति शिंशपादि न तर्हि वृक्षो[वृक्षो]भवतीति वृक्षस्यैवावृक्षत्वमवस्तुत्वं प्रतिज्ञायते, हेतुः– अभूतशिंशपादिभेदत्वात्, घटवदिति दृष्टान्तः, सोऽप्येवमेवेत्यादि–यदि तु सोऽपि घटो न भवति भेद इतीष्यते तस्याप्यघटत्वमभूतग्रीवादिभेदत्वात्, वृक्षवत्, एवं ग्रीवादिरभूतकपालादित्वादित्यादि यावत् परमाणुर्न भवत्यभूतरूपादिभेदत्वाद्विज्ञानवत्, रूपादिरप्यरूपादि, अभूतरूपक्षणभेदत्वात् विज्ञानवदेव, सर्वत्र वा सामान्येन न भवन्त्यतोऽर्थाः स्वभेदशून्यत्वात् खपुष्पवदिति, एवञ्चेत्यादि, प्रयुक्त[प्र]स्तुतदोषापादनोपसंहारः, एवमनेन विधिना सर्वमिदं दृश्यादि–प्रत्यक्षाभिमतमनुमेयमभि-

त्वदभिमतं वस्तु भेदानाक्षेपि, न समानाधिकरणम्, अभावत्वात्, बन्ध्यापुत्रवदिति प्रयोगः, स्पष्टोऽर्थः। ननु भेदानाक्षेपित्वं यत्साध्यते तन्न युक्तम्; सिद्धसाधनत्वात्, न हि वृक्षशब्दार्थस्यावृक्षाभावस्य शिंशपादयो भेदा भवितुमर्हन्ति, तद्भेदत्वासिद्धेरित्याशङ्कते–कुतोऽस्येति। तद्व्याचष्टे–शिंशपादेरिति। हेतुमाह–वृक्षसामान्यस्येति, तद्धि वृक्षसामान्यमनुवृत्तिलक्षणमवृक्षाभावरूपम्, अत एव च तद्भेदत्वं शिंशपादेरसिद्धमिति भावः। अथ यदि शिंशपादिर्वृक्षस्य भेदो न भवति भवतु तर्हि वृक्षेणाभेदः शिंशपादिर्वृक्ष इति, न चैवमिति शङ्कते–कथं सोऽपीति। अभेदस्तदा स्याद्यदा शिंशपादिर्वृक्षाभावव्यावृत्तः स्यात्, यदा तु न वृक्षाभावाद्व्यावृत्तस्तदाऽसौ वृक्ष एव न भवति कुतस्तदभेद इति वादी समाधत्ते–नाभेद इति। विशेषेण विना सामान्यं न भवतीति सर्वसिद्धम्, तथा च यदि शिंशपादिर्वृक्षभेदो न स्यात्तर्हि वृक्षो वृक्षः, वृक्षो वस्त्वेव न भवेदित्यग्रो नयोऽनिष्टमापादयति–यद्यसावपीति। वृक्षो न वृक्षो वस्तु नेत्यत्र हेतुमाह–अभूतेति। अभूतः शिंशपादिर्भेदो यस्य स, तद्भावात्, यस्य वृक्षस्य शिंशपादिर्भेदो न जातस्तत्त्वादित्यर्थः, घटो यथाऽभूतशिंशपादिभेदोऽयं न न वृक्षस्तथा वृक्षोऽप्यभूतशिंशपादिभेदो न वृक्षश्चेति भावार्थः। तद्वदेव घटादिरपि घटादिर्न भवत्यभूतग्रीवादिभेदत्वादित्याह–यदि त्विति। यो घटो मृदादेर्भेद इतीष्यते सोऽपि न घटोऽभूतभेदत्वादिति भावः। एवं ग्रीवादयो न ग्रीवादयोऽभूतकपालादिभेदत्वात् घटवत्, स कपालोऽप्यकपालोऽभूतस्वभेदत्वादित्येवमापरमाणु सर्वेषां भावे सर्वशून्यतैवेत्याह–एवं ग्रीवादिरिति। परमाणोरप्यभावमाह–परमाणुरिति, रूपादयो हि तद्भेदास्तेषां भेदत्वाभावे परमाणुरपि न स्यादिति भावः। रूपादीनामप्यरूपादित्वमाह–रूपादिरपीति। एवं विशेषतो वस्त्वभावं प्रसाध्य सामान्यतोऽभावं साधयति–सर्वत्र वा सामान्येनेति। ततः किमित्यत्रोपसंहारमुखेन दोषमाह–एवमनेन विधिनेति, प्रमाणत्रयविषयीभूतं वस्तु शून्यमापद्यते त्वदुक्ति-

धेयं वा वस्तु शून्यमापद्यते, त्वन्मतेनैव कः किं केन कस्माद्वाऽपोहते ? सर्वस्य शून्यत्वे कः किमित्यादि कर्मकरणापादानभूतानां शब्दादीनामभावेऽपोहाभाव एवमित्यर्थः ।

अथ कथञ्चित् भवत्यपि वृक्षोऽवृक्षो न भवति शिंशपा न भवति शिंशपाभवत्यपीतीष्यते ततो ब्रूमः स्वार्थे इत्युक्तेर्विधिर्विषयः संवृत्तोऽर्थः, तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः, उक्तवदेवेत्येष शब्दस्य विशेषार्थविधिः, एतेन सामान्यशब्दार्थविशेषताप्युक्तैव ।

अथ कथञ्चिदित्यादि, मा भूदेष सर्वशून्यत्वदोष इति त्यक्त्वा भवनाभावमात्रार्थैकान्तापोहकल्पनां केनचित्प्रकारेण भवत्यपि वृक्षोऽवृक्षो न भवति शिंशपा न भवति शिंशपा भवत्यपीतीष्यते शब्दार्थशून्यत्वदोषभयात् ततो वयं ब्रूमः, स्वार्थे इत्युक्तेः-स्वार्थे कुर्वती श्रुतिरभिधत्त इत्यादिवचनाद्विध एव विधिर्विषयः संवृत्तोऽर्थः, तदिदानीं प्रस्तुतनयमतेन शब्दार्थं योजयति-तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः विशेषार्थस्य विधेरुपसर्जनोऽपोहः, स चासत्त्वादसत्यः, उक्तवदेव प्राग्विस्तरेणासत्योपाधिसत्यः शब्दार्थः, स च विशेषमेव विदधाति नापोहत इत्येष शब्दार्थविधिरिति, एतेन सामान्यशब्दार्थविशेषताप्युक्तैव ।

यथाऽन्यत्वे विशेषप्राधान्यात् सामान्यभेदपर्यायशब्दार्थास्तदङ्गत्वात्तदात्मकत्वाद्वा नापोह्यन्ते तथा विवक्षितशब्दादन्यस्याविशेषशब्दस्य स्वार्थं विशेषशब्दोऽभिधत्तेऽतत्त्वेनासमानं विदधत् अभेदत्वाच्च सत्त्वापत्तिपरित्यागेनैकान्तं विविक्तम्, नाप्यवृक्षाद्यसत्त्वापत्तिमेव, किन्तु शिंशपादिशब्दः तत्सम्परिग्रहेण शिंशपादि, अत्यजन्नेवानुवृत्तिव्यावृत्ती तदुपसर्जनाशिंशपाऽभवनबीजतां यन् स्वार्थमभिधत्ते, इतरथा किमित्यभावपोहेताप्रतिपादयन् किञ्चित् ? यदि सोऽप्यपोहपर एव स्यात् शिंशपाशब्दो न विदध्याद्वृक्षार्थम्, शिंशपाविशेषात्माप्रत्यव्यावृत्तत्वात्, नानुमन्येत नाप्यपोहेत वाऽर्थापत्तिलभ्यत्वाद्वृक्षार्थो मा भूत्, तथा चोपात्तार्थविरोध इति, कुतोऽविध्यननुमत्यव्युदासा इति चेदनार्थत्वात्, अनर्थो हि शिंशपाशब्दो वृक्षादिना सामान्येन, अशिंशपाभवनवत्, अशिंशपा घटादि तदभवन एवापक्षीणशक्तितया वृक्षादिसामान्यात्मकशिंशपाविधाने व्यापार एव नास्ति, यदसौ शिंशपाशब्दो शिंशपार्थं घटादिभ्योऽन्यत्वेन वृक्षादिसामान्यात्मकं स्वार्थमनन्यत्वेन विदधाति ततस्तेन सह वृक्षः शिंशपेति सामानाधिकरण्यं प्रतिपद्यते । वृक्षः शिंशपेति तद्भवनविध्येकार्थीभावात् तद्भवन-

थिनीति भाव. । एवं सर्वशून्यत्वादपोह एव न स्यात् तत्कर्तृकर्मकरणापादानभूतानां कस्याप्यभावादिति दर्शयति-कः किमिति । अथान्यापोहमात्रार्थकल्पनां परित्यज्य कथमप्ययं वृक्षो भवत्यपि शिंशपा वृक्षः शिंशपेति, तद्भवनविध्येकार्थीभावात्, तद्भवनभवनविधिविनाभावे न युज्यते भवत्यप्यवृक्षो न भवति शिंशपा न भवति, उक्तशून्यताप्रसङ्गादिति चाहेअथ कथञ्चिदिति । व्याचष्टे-मा भूदेष इति, एकान्तेन भवनाभावरूपोऽपोहः शब्दार्थ इति कल्पना भवनाऽभावविशिष्टो भाव शब्दार्थः स्वीक्रियत इति भाव. । वृक्ष वृक्षान्तररूपो भवनान्यापोहात्मकोऽपि, स एव शिंशपा भवन् शिंशपा न भवत्यपि, शिंशपाया अवृक्षात्मकत्वाभावादित्याशयेनाह-केनचित्प्रकारेणेति । अन्यापोहे शब्दान्तरार्थापोहे वा स्वार्थे कुर्वती श्रुतिरभिधत्त इति वचनात् स्वार्थेति वचनात्तेनोक्तोऽर्थो विधिरेव मुख्योऽर्थः सम्पन्न इत्याशयेन प्रस्तुतनयः स्वाभ्युपगमाद्युक्ततामस्य दर्शयति-स्वार्थ इत्युक्तेरिति, एतद्वचनाशप्रतिपाद्योऽर्थो विधिः सम्यग्विषयः संवृत्त इत्यर्थः । भवतु किं तत इत्यत्राह-तदिदानीमिति, एवं विधिविषयेऽभ्युपगम्यमानेऽयं नयो योजयति स्वमतेन शब्दार्थमित्यर्थः । तदुपसर्जन इति, विशेषार्थस्योपभूतो-

१ सि. स्वार्थाद्युक्तेः क्ष. डे. स्वार्थोयुक्तेः । २ सि. क्ष. डे. डे. संवृत्तोऽ ।

विधिविनाभावे तु न युज्यते, भवनविधिविनाभूतं सामान्यानाक्षेपि न समानाधिकरणं, वृक्षः शिंशपेति त्वदभिमतं वस्तु स्यात् भावत्वादवृक्षत्वाद्वन्ध्यापुत्रवत्, कुतोऽस्य सामान्यस्य सामान्यत्वम् ? शिंशपादि भेदस्याभावत्वे सत्यसिद्धत्वात्, कथं तर्हि सोऽपि भेदो न भवति वृक्षः शिंशपादिः, अन्यस्मादव्यावृत्तेः, वृक्षः शिंशपाभावादाम्रादेरव्यावृत्तेः शिंशपैव न भवति कुतो भेदः ? अत्रोच्यते यद्यसावप्यभेदो न भवति न तर्हि शिंशपा शिंशपा भवति, अभूतवृक्षादिभेदत्वात् घटवत् सोऽप्येवमेव, अभूतमृदाद्यभेदत्वात्, एवं सर्वत्र सामान्येन न भवन्त्यर्थाः स्वसामान्यशून्यत्वात्, खपुष्पवदेवञ्च सर्वमिदं दृश्यादिवस्तु शून्यमापद्यते त्वन्मतेनैवेति कः केन कस्माद्वाऽपोह्यते, अथ कथञ्चित् भवन्नपि वृक्षो वृक्षो न भवतीति शिंशपा भवत्यपि शिंशपा न भवतीतीष्यते ततो विधिर्विषयः संवृत्तस्तदुपसर्जनश्चापोहोऽसत्त्वादसत्यः उक्तवदेवेत्येष शब्दस्य विशेषार्थविधिरिति ।

( यथेति ), यथान्यत्वे विशेषप्राधान्यात् सामान्यभेदपर्यायशब्दार्थास्तदङ्गत्वात्तदात्मकत्वाद्वा नापोह्यन्ते तथा विवक्षितशब्दार्थादन्यस्य विशेषशब्दार्थस्य[ा]विशेषशब्दार्थस्य वा सामान्यस्य स्वार्थं विशेषशब्दोऽभिधत्ते, कथम् ? तत्त्वेनात्मानं—सामान्येन सहैकीभावं विदधत् आत्मनः उपसर्जनभावे सहायकीकारयन्, किं करोति ? स्वार्थं विधत्त इति वर्तते, अभेदत्वात् [न]सत्त्वापत्तिपरित्यागेन—न च वृक्षपार्थिवद्रव्यसत्त्वसामान्यानि त्यक्त्वा [2]विशेषं तैरेकान्तेन विविक्तं प्रतिपादयति, तथारूपार्थासम्भवात् सामान्योपसर्जनत्वोपायप्रतिपाद्यविशेषात्मलाभात्वात्, नाप्यवृक्षाशिंशपादि न भवतीत्यसत्त्वापत्तिमेव स्वार्थप्रतिपत्तिरहितां ब्रूते, अभिधेयाभावे शब्दार्थव्यवहारोच्छित्तिप्रसङ्गात्, कोऽसौ विशेषशब्दस्तदर्थो

ऽपोहः सङ्गतिसत्त्वादस्य गुणपर्यायलक्षणो हि विशेष एव सन्, अङ्गुल्यतिरिक्तमुष्टिवदित्यसत्योपाधिसत्य शब्दार्थः सम्पन्नः, तस्य च विधित्वाद्विधिना सामान्योपसर्जनं विशेषमभिदधानः शब्दो न किञ्चिदपोहते, अनपवादप्रतिपत्तिजनकत्वाद्विधेरित्युक्तत्वादिति भावः । सामान्यशब्दस्य सामान्यं विशेषाविध्यर्थत्वात् न किञ्चिदपोह्यत इत्युक्त एवेत्याशयेनाह—एतेनेति । इदमेव समर्थयति—यथाऽन्यत्व इति । वृक्षादिशब्दस्यानारभ्यविधित्वाद्विधिप्राधान्येन विशेषमभिदधद्घटादीनामिव पृथिवीशिंशपात्वादिसामान्यभेदपर्यायशब्दार्थानामन्यत्वस्य तुल्यत्वे विरोधाविरोधाभ्यामपोहानपोहप्रसङ्गे तदङ्गत्वतद्भवनात्मकत्वाद्वा न सामान्याद्योऽपोह्यन्त इत्याह—यथाऽन्यत्वे विशेषप्राधान्यादिति । तथा विवक्षितवृक्षादिशब्दादन्यस्य सामान्यशब्दस्य स्वार्थं पृथिवीद्रव्यादिकं विशेषशब्दः सामान्येन सह स्वार्थमेकीभावं विदधत् प्रतिपादयतीत्याह—तथा विवक्षितेति । सामान्येनात्मानमेकीभावं विदधत् कथमभिधत्त इत्यत्राह—आत्मन इति । न सामान्यं परित्यज्य केवलं विशेषं विशेषशब्दः प्रतिपादयितुं क्षम इत्याह—न सत्त्वापत्तीति । सामान्यासम्पृक्तविशेषात्मकवस्तुनोऽसम्भवादिति हेतुमाह तथा रूपार्थेति । सामान्यमुपसर्जनत्वाद्विशेषप्रतिपादनायोपायत्वात्तस्यैव विशेषस्य परमार्थत्वेन तदङ्गभावं गतमिति न तत्परित्यागेन विशेषं विशेषशब्दोऽभिधत्त इत्याह—सामान्योपसर्जनत्वेति । नापि केवलं विशेषं विनाऽवृक्षाद्यपोहमेव वृक्षशब्दो ब्रूत इत्याह—नाप्यवृक्षेति । अभावमात्रार्थत्वे भेदानाक्षेपस्य भेदशून्यत्वात् सर्वशून्यतापत्त्याऽभिधेयाभावाच्छब्दार्थव्यवहारभङ्गप्रसङ्ग इत्याचष्टे—अभिधेयाभाव इति । शिंशपादिविशेषशब्दः सत्त्वानुवृत्तिस्वरूपवृक्षसामान्यस्य सम्परिग्रहणेनावृक्षाद्यसत्त्वपरिग्रहेण च शिंशपादि ब्रूते इत्याह—कोऽसाविति, शिंशपादिशब्दः वृक्षादिसामान्यसम्परिग्रहेणावृक्षापोहपरिग्रहेण चानुवृत्तिव्यावृत्ती अत्यजन्नेव स्वार्थमाचष्टे इति

१ विवक्षितशब्दादन्यस्याविशेषशब्दस्य सामान्यशब्दस्य स्वार्थं विशेषशब्दोऽभिधत्ते इति पाठः स्यादितिसम्भाव्यते, सामान्यशब्दार्थविशेषतायाः प्रतिपाद्यत्वात् । २ सि. क्ष. डा. डे. °भ्यात् सवडप° । ३ सि. क्ष. डा. विशेषवैरका° ।

चेति चेदुच्यते शिंशपादिः, तत्सम्परिग्रहेण वृक्षादेः सत्त्वस्यानुवृत्तेः सामान्यस्य सम्परिग्रहेण तदभावावृक्षाद्यसदतद्व्यावृत्त्यपोहपरिग्रहेण चात्यजन्नेवानुवृत्तिव्यावृत्ती। किं कारणं न ते त्यज्यतीति चेदुच्यते- यस्मात् तदुपसर्जनाशिंशपाऽभवनबीजतां यन् स्वार्थमभिधत्ते, गच्छन्- व्रजन्नित्यर्थः, स्वार्थानुवृत्तिसामान्योपसर्जनत्वस्याशिंशपायाः-घटादेः तत्राभवनलक्षणस्य च व्यावृत्तिसामान्यस्य स्वार्थः- शिंशपाशब्दस्य शिंशपार्थः स बीजं तयोरनुवृत्तिव्यावृत्त्योः, इतरथा किमित्यसावपोहेत, अप्रतिपादयन् किञ्चित् ?, यदि तु सोऽपीत्यादि पूर्ववद्ग्रन्थ ईषद्विशिष्टः प्रसङ्गो यावद्विशेषार्थविधिरित्युपनयः, तत्र विशेष उच्यते-वृक्षः शिंशपेत्यत्र शिंशपाशब्दो न विदध्यात् वृक्षार्थं, शिंशपाविशेषात्मापन्नव्यावृत्तत्वात् इति पूर्ववद्गमोऽर्थापत्त्या नानुमन्येत वा, अवृक्षो न भवतीत्युक्तेऽर्थादापन्नं वृक्षो भवतीत्ययमर्थो मा भूत्, इष्यते चासौ, कुतः ? उपात्तार्थाविरोधात्, उपात्तार्थाविरोध इत्यत्रेतिशब्दस्य हेत्वर्थत्वात्, अशिंशपाभवनवदित्यदिरवृक्षाभवनवदित्यादितुल्यः, सामान्यगमविपर्ययेण तदविनाभाविविशेषार्थो गमनिकया नेयः, अभावत्वादवृक्षत्वादित्यादिहेतुकः, अभावमात्राभ्युपगमाच्च हेतुसिद्धिः, तद्विपर्ययेऽसत्पक्षापत्तिः, शेषग्रन्थभावना पूर्वग्रंथभावनातुल्या, एवं तावत् सामान्यभेदपर्यायशब्दार्थानपोहवत् सामान्यसामान्यशब्दार्थानपोहोऽन्तर्निविष्टविशेषाभिधायिसामान्यशब्दार्थविधिश्चोक्तः, विधेरेव शब्दार्थत्वात्।

**यत्त्वविरोधादित्युक्तं सोऽप्येवमेवाविरोधो घटते भवनविध्येकार्थीभूतत्वात्सामान्यापोहे,**

भावः, सत्त्वमनुवृत्तिश्च सामान्यपर्यायौ, असदभावावृक्षाद्यसदतद्व्यावृत्तिशब्दा अपोहपर्याया इति ध्येयम्। अनुवृत्तिव्यावृत्त्योरत्यागे कारणमाह-**यस्मादिति**। शिंशपादिशब्दो वृक्षसामान्योपसर्जनत्वमशिंशपाव्यावृत्तिञ्चोपगच्छन् स्वार्थं शिंशपा ब्रूतेऽत एव शिंशपा वृक्षोपसर्जनत्वस्यानुवृत्तेः अशिंशपाऽभवनस्य व्यावृत्तिसामान्यस्य च बीजभूतेति भावः, गच्छन् व्रजन्निति यन्निति पदस्यार्थः। यदि शिंशपाशब्दः शिंशपां नाभिदधीत वृक्षादि कस्य सामान्यं स्यात्, अपोहो वा कस्मादन्यस्य स्यात्तस्माच्छिंशपा तयोर्बीजमित्याशयेनाह-**इतरथेति,** तस्मात् विशेषशब्दः स्वार्थं वृक्षोपसर्जनं वक्तीति भावः। यदि तु स शब्दोऽशिंशपाव्यावृत्तिमात्रं ब्रवीति न तु वृक्षोपसर्जनशिंशपामित्युच्यते तर्हि वृक्षादिसामान्यशब्दस्यावृक्षो न भवतीत्यपोहमात्राभिधाने यदि तु सोऽप्यपोहपर एव स्यादित्यादिग्रन्थेनोक्ता दोषाः प्रसज्यन्त इत्याह-**यदि तु सोऽपीत्यादीति**। वृक्षः शिंशपेत्यत्र शिंशपाशब्दस्यापोहमात्रपरत्वे वृक्षविधिपरत्वं न स्यात् शिंशपास्वरूपापन्नव्यावृत्तत्वात्, स्वसमानाधिकरणवृक्षशब्दार्थेनावृक्षो न भवतीत्येवंरूपेणार्थादापन्नं वृक्षार्थं वा नानुमन्येत शिंशपाशब्दः, अनुमन्यते तु, शिंशपाशब्दोपात्तार्थेनाविरोधादिति पूर्वग्रन्थतोऽत्र विशेषमादर्शयति-**तत्र विशेष इति**। शिंशपाशब्दो वृक्षादिसामान्येनानर्थित्वाद्वृक्षसामान्यं न विदधीत नानुमन्येत नाप्यपोहेत चेत्यत्र दृष्टान्तं विशिष्टमाह-**अशिंशपाभवनवदिति,** शिंशपाशब्दस्य घटाद्यशिंशपाव्यावृत्तिकरण एवोपक्षीणशक्तित्वेन वृक्षादिविधानादौ व्यापार एव नास्तीति भावः। यतश्च वृक्षादिसामान्यात्मकं शिंशपादि न विधत्तेऽत एव तद्भवनविध्येकार्थीभावे यत्सामानाधिकरण्यं भवति तद्भवनविधिविनाभावे न घटतेऽतः वृक्षः शिंशपेति तथा भवनविधिविनाभूतं सामान्याविधायि न समानाधिकरणं त्वदभिमतं वस्तु स्यात्, अभावत्वादवृक्षत्वाद्वन्ध्यापुत्रवदिति साधकहेतुमादर्शयति पूर्वग्रन्थोक्ताद्विशिष्टं हेतुं दर्शयन्-**अभावत्वादवृक्षत्वादिति**। शेषभावना पूर्वभावनातुल्येत्याह-**शेषेति,** उपसंहरति-**एवं तावदिति। अन्तर्निविष्टेति,** अभ्यन्तरीकृतविशेषं सामान्यं सामान्यशब्दो विधत्ते, विधेरेव शब्दार्थत्वादिति भावः। **अथ वृक्षशब्दः** सामान्यभेदपर्यायशब्दानामर्थं नापोहतेऽन्यत्वे तुल्येऽपि, अविरोधात्, विरोधात्तु घटादीनपोहत इति यदुच्यते तत्राविरोधोऽपि विधिशब्दार्थतापक्ष एव घटते सामान्यापोहपक्ष इत्याह-**यत्त्वविरोधादित्युक्तमिति। व्याचष्टे-यदपि त्वयेति, वृक्षशब्द**

१ सि. क्ष. छा. डे. पोहोऽन्तर्निविष्टविशेषा० ।

अन्यत्वाविशेषात्, अभावतुल्यत्वाच्च, समूहश्च प्रकृतिप्रत्ययादीनां तदर्थान्तरवाचकः, एवञ्च विधिप्रधानशब्दार्थत्वात् सामान्यविशेषशब्दयोः प्रकृतिप्रत्यययोर्भवनसामान्यापरित्यागिनोस्तद्विशेषकर्तृपदार्थवाचित्वं समूहेन भवतीति नीलोत्पलमिति वर्तिपदार्थभवनसामान्यवाचिनोर्विशेषणविशेष्यत्वसम्बन्धलक्षणसामान्यविशेषभाविवृत्त्यर्थवाचित्वम्, वृक्षादिसमूहस्य वाक्यार्थवाचकत्वम्, उपात्तार्थाविरोधिसामान्योपसर्जनप्रकृतविध्यर्थत्वात् सर्वशब्दानाम् ।

यच्चाविरोधादित्यादि, यदपि त्वया कारणमुक्तमन्यत्वेऽपि सामान्यादिशब्दार्थानपोहे तेषामविरोधादिति सोऽप्येवमेवाविरोधो घटते, भवनविध्येकार्थीभूतत्वात्—सामान्याख्यं विशेषाख्यञ्च यत्किञ्चिद्वस्तु तत्सर्वं भवनमेवान्योन्यात्मापत्त्यैकीभूतं स एव शब्दार्थो विवक्षितार्थोपकाराविनाभावित्वेनैकीभूतो विधीयमानत्वादेवाविरुद्ध इति युज्यते, नान्यापोहे, अन्यत्वाविशेषात्, अभावतुल्यत्वाच्च कौ विरोधाविरोधाविति, समूहश्च[प्रकृतिप्रत्ययादीनां]तथा तदर्थान्तरवाचकः, तद्व्याख्या—एवञ्चेत्यादि, एवञ्च कृत्वा विधिप्रधानशब्दार्थत्वात् सामान्यविशेषशब्दयोरित्यादि यावत् वा[क्या]र्थवाचकत्वमिति, प्रकृतिप्रत्यययोर्भवनसामान्यापरित्यागिनोः तद्विशेषकर्तृपदार्थवाचित्वं समूहेन भवतीति नीलोत्पलमिति वर्तिपदार्थभवनसामान्य-

सामान्यभेदपर्यायशब्दार्थानामपोहनेऽन्यत्वे तुल्येऽपीत्यत्र त्वया यत्कारणमुक्तं तेषामविरोधादिति सोऽविरोधो नापोहशब्दार्थतापक्षे सम्भवति किन्तु विधिशब्दार्थतापक्ष एवेति भावः । हेतुमाह—**भवनेति,** सामान्यं विशेषश्च भवनलक्षणात्मलाभेनानन्यार्थभूतः अनन्यभूतत्वादेव सामान्यरूपं विशेषरूपञ्च यत्किञ्चिद्वस्तु विवक्षितार्थोपकारित्वाविनाभावित्वेन शब्देन विधीयमानत्वादविरुद्धं भवति, न त्वन्यापोहे वृक्षाद्विभेदे पटादेरिव पृथिवीशिंशपानत्वादिशब्दार्थानामप्यन्यत्वस्याविशिष्टत्वात्, पटादेर्विरुद्धत्वं सामान्यादेरविरुद्धत्वमित्यत्र नियामकाभावः, अन्यापोहस्याप्यभावस्वरूपत्वेन निर्धर्मकत्वात् विरुद्धत्वाविरुद्धत्वधर्मयोस्तत्रावकाश एव नास्तीति भावः । पूर्वं समूहश्च प्रकृतिप्रत्ययादीनां तदर्थान्तरवाचक इति युक्त्या वक्ष्याम इत्युक्तं तामुपदर्शयति—**समूहश्चेति,** घटः पटः इत्यादिप्रकृतिप्रत्ययसमुदायभूतं नामपदमेकत्वादिविशिष्टं घटं बोधयति, एवं पचतीत्यादिप्रकृतिप्रत्ययसमुदायभूतमाख्यातपदं पाककर्तारं बोधयति, अर्थस्य हि बहवोऽवस्थाभेदाः सन्ति, येन च योऽवस्थाभेदः परिदृष्टस्तेनैवासौ समाख्यायते, यथा वीरस्येदं वैरं वीराया इदं वैरं वा गच्छति गर्जति गरति गदति गुवति वा गारित्यादि, तत्र चान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययतदर्थविभागः क्रियते, तत्र प्रकृत्यर्थः सामान्यं प्रत्ययभेदेऽपि तदभेदात्, यथा वृक्षः वृक्षौ वृक्षाः, पचति पचतः पचन्तीत्यादि, प्रत्ययार्थश्च विशेषः प्रधानम्, प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययार्थः प्रधानमित्युक्तत्वात्, एवञ्च सामान्यविशेषशब्दयोः प्रकृतिप्रत्यययोः समुदायस्य भवनसामान्यापरित्यागितद्विशेषवाचकत्वं विधिरूपेणैव दृष्टम् । व्यस्तपदानां विधिप्रधानशब्दार्थत्वमुपदर्श्य समस्तपदानां तद्दर्शयति—**नीलोत्पलमितीति,** वर्तिपदार्थभवनसामान्यवाचिनोः—समासघटकनीलपदोत्पलपदयोर्नीलगुणविशिष्टद्रव्योत्पलत्वविशिष्टद्रव्यवाचिनोरित्यर्थः, विशेषणविशेष्यभावरूपसम्बन्धलक्षणः सामान्यविशेषभावरूपो वृत्त्यर्थः समासार्थः, तद्वाचित्वं नीलोत्पलशब्दस्य समस्तस्येत्यर्थः, ननु नीलशब्दो नीलगुणविशिष्टं द्रव्यमाह, उत्पलशब्द उत्पलत्वविशिष्टं द्रव्यम्, द्वावपि द्रव्यशब्दौ परस्परानुपकारकप्रधानार्थवाचकाविति कथं विशेषणविशेष्यभावः, अत्रोच्यते नीलशब्दो द्रव्यमाह स च गुणनिमित्तक इति तत्र नियतजातीयतया निश्चयो नास्ति, अविनाभावात्तु द्रव्यजातिमात्रमाह तथा च नियतजातीयाकाङ्क्षास्ति, उत्पलशब्दोऽपि जातिनिमित्तोऽनिश्चितनियतगुणसम्बन्धे द्रव्ये वर्तत इति तस्य नियतगुणविशेषाकाङ्क्षाऽस्ति ततश्च नीलगुणविशिष्टमुत्पलं स्यादन्यद्वा, उत्पलत्वजातिविशिष्टं द्रव्यं नीलं स्यादन्यद्वेति संशयः स्यात्, तञ्च संशयं वाक्यैकवाक्यतालक्षणसमासो निराकरोति नीलशब्दो उत्पलशब्देनाभिसम्बध्यमानः विशेषवचनः, उत्पलशब्दश्च नीलशब्देनाभिसम्बध्यमानो विशेषवचन इति स च सम्बन्धः सामानाधिकरण्यरूपः भिन्ननिमित्तप्रयुक्तयोरेकस्मिन्नर्थे वृत्तेः, यदेव च द्रव्यमुत्पलं तदेव नीलमित्यभेदान्नीलोत्पलयोर्विशेषणविशेष्यभावश्चेति भावः । एवं राजपुरुषादयोऽपि शब्दाः राजाभिसम्बन्धिपुरुषविशेषवचनाः सामान्योपसर्जनविशेषप्रधाना एवेत्याह—

१ सि. क्ष. भा. डे. सोऽविरोधादिति ।

वाचिनोः विशेषणविशेष्यत्वसम्बन्धलक्षणसामान्यविशेषभाविभूत्यर्थवाचित्वं तथा राजपुरुषादीनां राजाभिसम्बन्धविशेषणादीनां ज्ञेयम्, व्यादिसमूहस्येति, देवदत्तस्तिष्ठति देवदत्तो गृहे तिष्ठति देवदत्त गामभ्याज शुक्लामित्यादि द्वि[त्रि]चतुःपञ्चादिपदसमूहानां वाक्यार्थवाचकत्वमुपात्तार्थाविरोधिसामान्यो[पसर्जन]प्रकृतविध्यर्थत्वात् सर्वशब्दानामिति ।

अयञ्च...... ॥ अनेन पारतंत्र्यात् सच्छब्दानाक्षेपवचनेन सन् घट इति सामानाधिकरण्यं न प्राप्नोतीति प्रत्युक्तं प्रतिषेधसामानाधिकरण्यं वेदितव्यम् ।

अयञ्चेत्यादि श्लोकः, यदुक्तं त्वया घटादिभेदानाक्षेपित्वात् सच्छब्दस्य जातिस्वरूपोपसर्जनद्रव्यमात्राभिधानात् पारतंत्र्यात् घटादिभेदाभेदत्वात्तैः सह सामानाधिकरण्याभाव इति यथा परेषां दोषस्तथा तवाप्यसन्निषेधमात्राभिधानपारतंत्र्यान्नाक्षिपत्येव सद्भेदान् घटादीनिति तुल्यदोषसम्भवे किं मुधा भ्राम्यते त्वया ? इति, अनेनेत्यादि, तद्भावना–पारतंत्र्यात् सच्छब्दानाक्षेपवचनेन सन् घट इति सामानाधिकरण्यं न प्राप्नोतीति प्रत्युक्तं प्रतिषेधसामानाधिकरण्यं वेदितव्यम् ।

आह च–'तन्मात्राकाङ्क्षणाद्भेदः स्वसामान्येन नोज्झितः । नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः ॥ (प्रमा० स०) इति, आत्मार्पणामात्रमाकाङ्क्षति सामान्यं स्वभेदे, अतस्तन्मात्राकांक्षणाद्भेदः शिंशपा वृक्षेण सामान्येन नास्ति ततोऽन्यश्चेति किं तर्ह्युपात्त एव तदनुबद्धत्वात्, अन्यत्वे सत्यप्येककार्यत्वादेकार्थता सामान्यविशेषयोरन्योऽन्यापरित्यागे सत्यात्मलाभादन्यतरत्यागे स्वरूपाप्रतिलम्भात्, अत्र यदुक्तं 'नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता

तथा राजपुरुषादीनामिति । एवं पदद्वयसमूहस्य सामान्योपसर्जनविशेषविधिप्रधानवाचित्वमुक्त्वाऽसमस्तद्वित्र्यादिपदसमुदायस्यापि तथात्वमाह–देवदत्त इति, देवदत्त गामभ्याज शुक्लामित्यादावाकांक्षायोग्यताऽऽसत्तिमत्पदसंघाते सर्वतः परिपूर्णार्थप्रकाशके पदसंघाते यदि देवदत्तपदं सामान्यमात्रे प्रथमं प्रवर्तेत तर्हि तस्य गवादिपदकालेऽसत्त्वात् कथं तस्य विशेषेऽवस्थानम् ?, वाचः क्रमवर्तित्वात्, गवादिपदकाले तत्सत्त्वाभ्युपगमेऽपि तेनोपात्ताया सकलविशेषसाधारणताया त्यागायोगात् विशेषेऽवस्थापनासम्भव एव त्यागे वा पदान्तरबोध्यविशेषार्थं वाचकत्वाभावादेव कथं तत्र स्थितिः स्यात्, तस्मान्न वाक्यघटकाः शब्दाः वाचकाः किन्तु तथाविधपदसमूह एव विशिष्टपरिणामापन्नः सामान्योपसर्जनविशेषविधिप्रधानमर्थं ब्रूते बालानां वाक्यार्थप्रतिपादनाय परिकल्पितपदविभागोत्थापितार्थाविरोधेनेति भावः । यदुक्तं प्राक् अयन्तु गुणधर्मः य स्वतोऽन्यान् व्यावर्तयन् द्रव्यमाह न तु द्रव्यविशेषानाक्षिपति परतन्त्रत्वात्, अतः सामानाधिकरण्याभावः, सत्त्वनाक्षिप्तैर्व्याप्तैरपि सामानाधिकरण्यं भविष्यति विवक्षावशात्, न ह्यसत्या व्याप्तौ साधर्म्यवैधर्म्याभ्यां कस्याप्याक्षेपः सम्भवति रूपं शुक्लं रूपं नीलमिति, तस्माच्छ्रुतगुणभेदाभेदत्वादनाक्षेपस्ततोऽन्यस्य तद्वत् इत्यादि सत्त्वपक्षे दोषः स तवापीत्याह–अयञ्चेति । व्याकरोति–यदुक्तं त्वयेति, द्रव्यादिशब्दो द्रव्यत्वं तद्वन्तं वाऽभिदधत् न द्रव्याद्दीन् तद्विशेषान् वाऽऽक्षिपेत्, श्रुतगुणभेदाभेदत्वात्, पारतंत्र्याच्च, ततश्च विशेषैः सह न सामानाधिकरण्यमित्यर्थः । अयं दोषोऽपोहपक्षेऽपोहवत्पक्षे च दुर्वार इत्याह–तथा तवापीति । असन्निषेधेति, सन् घट इत्यादौ सद्घटशब्दयोरेकस्मिन्नर्थे वृत्तिर्न सम्भवति, तद्वाच्ययोरपोहयोर्भिन्नत्वात्, न चोभयोर्व्यावृत्त्योरेकार्थे वृत्तेरर्थद्वारकं शब्दयोः सामानाधिकरण्यं सम्भवतीति वाच्यम्, नीरूपयोर्व्यावृत्त्योराधेयताऽसम्भवात्, वन्ध्यापुत्रवत्, सम्भवेऽपि न सद्घटौ वस्तुभूतौ शब्देन गम्येते, अत एव च यैव व्यावृत्तिः स एव व्यावृत्त इति प्रत्युक्तं, व्यावृत्तेर्व्यावृत्तत्वे वस्तुनः शब्दादिवाच्यतापत्तेः, तस्मान्नापोहपक्षे ऐकार्थ्यम् । व्यावृत्तिमद्वस्तुनि शब्दवाच्यत्वेऽङ्गीक्रियमाणेऽपि सदादिभेदानां घटादीनां सदादिशब्दैराक्षेपोऽशक्य एव, सदादिशब्दस्य परतंत्रत्वात्, स हि असद्व्यावृत्त्युपसर्जनं तद्वन्तमाह, न साक्षात्, साक्षादनभिधाने च न तद्गतभेदाक्षेपो युज्यते मधुरशब्देन शुक्लादेरिति भावः । अथ प्रकारान्तरेण व्यावृत्तेराक्षेपकत्वं सामानाधिकरण्यमावर्णयति–आह चेति । व्याचष्टे–

तयोः ॥' इति तत् कुतः संशयः ? कुतो वा साम्यैकार्थते, अनुपात्तत्वाद्विशेषाणाम्, उपात्तत्वान्न संशयः स्याद्वृक्षवदिति चेन्न, उक्तत्वात् ।

आह चेति, उक्तार्थसङ्ग्रहकारिका, 'तन्मात्राकांक्षणात' इत्यादि, आत्मार्पणामात्रमाकांक्षति सामान्यं स्वभेदेऽतस्तन्मात्राकांक्षणाद्भेदः—शिंशपा वृक्षेण सामान्येन[विना]नास्ति ततोऽत्य[क्त]श्चेति, किं तर्हि ? उपात्त एव, कस्मात् ? तदनुबद्धतत्त्वात्—तेन सह [1]विशेषेण सामान्यस्यानुबद्धत्वे सति तत्त्वात्—एकत्वापत्तेः, विशेषैप्रवणत्वात, अन्यत्वे सत्यप्येककार्यत्वादेकार्थता सामान्यविशेषयोरन्योऽन्यापरित्यागे सत्यात्मलाभात्, अन्यतरत्यागे स्वरूपाप्रतिलम्भात् सामानाधिकरण्यम्, न हि वृक्षेण विना शिंशपा, शिंश[प]या विनो वा वृक्षोऽस्तीति, अत्र यदुक्तं 'नोपात्तः संशयोत्पत्तेः साम्ये चैकार्थता तयोः' ॥ इति तत्कुतः संशयः ? कुतो वा साम्यैकार्थते—संशयस्तावत्—अन्यापोहमात्रोक्तेः अनुपात्तत्वाद्विशेषाणां सामान्यशब्देन नास्ति, यद्युपात्ताः स्युर्विशेषाः स्यात् संशय[:]साम्यमपि च नास्ति, अनुपात्तत्वात कुतः सामानाधिकरण्यं ?, उपात्तत्वान्न संशयः स्याद्वृक्षवदिति चेन्न, उक्तत्वात्—सामान्यादुपसर्जनात् विधिविशेषार्थान्नियमे निश्चयदर्शनादिति ।

किञ्चान्यत्—

अनेकश्च सामान्यमिह वृक्षः शिंशपेत्युक्ते भेदशब्देनोपात्तम्, शिंशपाविध्येकार्थीभूतार्थत्वात्, अतस्तयोर्भिन्ना विशेषणविशेष्यता, विवक्षावशात्, शिंशपा वृक्षः वृक्षः शिंशपेत्यनियमदर्शनात्, नामाद्यनेकं सामान्यं, पूर्वोक्तविधिना सर्वस्य नामादित्वात्, शिंशपैव वा नामाद्य-

तन्मात्राकांक्षणादिति, सामान्यं स्वभेदे आत्मार्पणमात्र—भेदेषु स्वानुरूपप्रत्ययजनकत्वेनात्मार्पणमात्रमाकांक्षति, तस्मात् सामान्येन विना भेदस्य स्वरूपमेव नास्ति, तस्मात् तेन सामान्येन स्वभेदा परित्यज्यन्ते [2] उपेक्ष्यन्ते वा [3] किन्तु परिगृह्यन्त एव, विशेषेण व्याप्तत्वे सति एकात्मत्वात्, ततश्च विशेषणप्रवणत्वेन सामानाधिकरण्यं स्यादेव विशेषस्योपात्तत्वात्, अनुपात्तत्वे हि संशयः स्यादिति कारिकाभावार्थः । उपात्तत्वे हेतुमाह-तदनुबद्धतत्त्वादिति, विशेषेण विना सामान्यस्यासम्भवात् तेनानुबद्धं सामान्यम्, यंव व्याप्तिः स एव व्याप्त इत्येकत्वापत्तिरपीत्यर्थः । भेदे आत्मार्पणाकाङ्क्षणात् वृक्षाविनाभावित्वं शिंशपादेः भेदानुबद्धत्वाच्च विशेषाविनाभावित्वं सामान्यस्येति परस्पराविनाभावित्वेन तयोरात्मलाभ इत्याह-सामान्यविशेषयोरिति । परस्परं विना भावित्वे तत्स्वरूपमेव न स्यादित्याह-अन्यतरत्याग इति, तदेवं सामान्यविशेषयोरन्यत्वेऽपि सम्भूयैककार्यकारित्वात् एकार्थता सामानाधिकरण्यं स्यादेवेति भावः । परस्पराविनाभावमेव दर्शयति-न हीति । अत्राचार्यो मतमिदं निराचष्टे-अत्र यदुक्तमिति, सामान्येन विशेषानुपादाने संशयापत्तिः साम्यं चैकार्थता या त्वयोक्ता तत्कुतः सम्भवति वृक्षादिशब्देनावृक्षापोहमात्रस्योक्तत्वात्, तावता च विशेषाणामनुपस्थित्या पुरोवर्तीदं शिंशपादि वा निम्बादि वेति संशयप्रसङ्गाभाव एव, विशेषस्योपादानेऽप्यवस्तुत्वमेव, सामान्येन स्वात्मार्पणात, सामान्यं हि अवृक्षापोहोऽभावात्मा, स्वात्मार्पणाच्च भेदोऽप्यभाव एवेति सुतरां संशयाभाव इति भावः । तदेवाह-संशयस्तावदिति, न हि नीरूपोऽभावः कमप्युपादत्त इति भावः । अनुपात्तत्वादेव च साम्यमपि नास्ति येनैकार्थता भवेदित्याह-साम्यमपि चेति, एकात्मतापि चेत्यर्थः । ननु वृक्षशब्देन वृक्षस्यैव भेदा अप्युपात्ताः नातः संशयादिरित्याशङ्कते- उपात्तत्वाच्चेति । सामान्योपसर्जनविशेषविधिप्रधानशब्दार्थत्वनियमे तु निश्चयोत्पत्तेर्न संशयादि स्यात्, न वा सामानाधिकरण्याद्यनुपपत्तिरित्युक्तत्वादिति समाधत्ते-उक्तत्वादिति । अथ विशेषणविशेष्ययोर्विनिगमनाविरहेण सामान्योपसर्जनभेदप्रधानपक्षे संशयमुपपादयितुमाह-अनेकश्चेति । विशेषणविशेष्यभाववैपरीत्ये वृक्षः शिंशपेत्यत्र नियः-

[1] सि. तदनुबन्धतत्त्वात्. क्ष. डा. तदनुबद्धतत्त्वात् । [2] सि. क्ष. डा. विशेषणेन । [3] सि. क्ष. डा. विशेषण. । [4] सि. क्ष. डा. विशेषणतो. । [5] सि. क्ष. डा. °भिन्नता ते इ. ।

**पेक्षया सामान्यम्, तच्चेदं भेदेन वृक्षेण व्यभिचारिणा विध्येकार्थीभूतत्वादुपात्तं ततः संशयः स्यात्, अवृक्षशिंशपाव्यावृत्त्यर्थं वृक्षशिंशपामानयेति भवत्येव विशेष्यविशेषणत्वानियमः, न तु यथोच्यते त्वया न तयोस्तुल्ये विशेषणविशेष्यते इति, दृष्टत्वान्नियमेन तुल्यत्वस्य ।**

**अनेकं चेत्यादि,** इह विधिप्रधाने शब्दार्थे वृक्षः शिंशपेति चोक्ते भेदशब्देन अनेकञ्च सामान्यं पृथिवीद्रव्यसदादिनामस्थापनाद्रव्यभावाख्यं सर्वमप्युपात्तम्–अव्यभिचारिणा भेदेन, शिंशपादिविध्येकार्थीभूतत्वात्, अतस्तयोश्चित्रा–सामान्यविशेषशब्दयोर्विशेषणविशेष्यता, विवक्षावशात् कदाचिद्वृक्षेण शिंशपा विशेष्यते कदाचिच्छिंशपया वृक्षः, शिंशपा वृक्षो वृक्ष[ः]शिंशपेत्यनियमदर्शनात्, तस्यानियमस्य हेतुं दर्शयति–नामाद्यनेकमित्यादि, नामशिंशपा स्थापनाशिंशपा द्रव्यशिंशपा भावशिंशपा, कन्यायाः शिंशपेति नाम्नि कृते नामशिंशपा, तच्च सामान्यं पूर्वोक्तविधिना सर्वस्य नामत्वात्, शिंशपैव वा नामाद्यपेक्षया सामान्यम्, तच्चेदं भेदेन वृक्षेण व्यभिचारिणा विध्येकार्थीभूतत्वादुपात्तम्, ततः संशयः स्यात्, अवृक्षशिंशपा कन्या नामशिंशपा तद्व्यावृत्त्यर्थं वृक्षशिंशपामौदयिकभावात्मिकां भावशिंशपा[मा]नयेति भवत्येव विशेषणत्वं वृक्षस्य शिंशपायाश्च विशेष्यत्वमनियमः, न तु यथोच्येत त्वया न तयोः तुल्ये विशेषणविशेष्यते[इति]दृष्टत्वान्नियमेन तुल्यत्वस्येति, एवं तावन्नेयं यावत् सदिति ।

पयति–**इह विधिप्रधान इति,** वृक्षः शिंशपेत्यादौ सामान्यशब्दो विशेषशब्दश्चोभौ सामान्यभेदपर्यायशब्दार्थानाहतुरिति प्राग् विस्तरेण प्रपञ्चितम्, तत्र यदा भेदशब्देन शिंशपाशब्देन वृक्षपृथिवीद्रव्यसत्त्वादीनि नामस्थापनाद्रव्यभावशिंशपादीनि सर्वाण्युच्यन्ते, तेषां शिंशपाभेदाव्यभिचारात् शिंशपाविध्येकीभूतार्थत्वाच्च तदा सामान्यविशेषशब्दयोर्विशेषणविशेष्यभावे वैचित्र्यं भवतीति भावः । चित्रताया हेतुमाह–**विवक्षावशादिति,** यतो विशेष्यविशेषणते ज्ञानाज्ञातत्वप्रयुक्ते, न तु प्रतिनियते, ज्ञानञ्च वक्तृसमवेतं तदिच्छाजन्यञ्च, अतो वक्त्रिच्छानुविधायित्वं विशेषणविशेष्यभावस्येति भावः । विवक्षाया नियामकत्वे लोकेऽनियतप्रयोगदर्शनमेव प्रयोजकमित्याह–**शिंशपावृक्ष इति** । ननु नाम्नि सर्वत्रानियम नीलोत्पलमिति उत्पलनीलमिति च प्रयोगानियमादर्शनात्, न चोत्पलशब्देन जात्यात्मकमेव द्रव्यं प्रतीयते, उत्पत्तिप्रभृत्याविनाशं जातेरपरित्यागात्, न हि भवति शाबलेयस्य गौरिति, किन्तु गौः शाबलेय इत्येव, नीलादिशब्दास्तु गुणवचनाः गुणाश्चोत्पादविनाशधर्माः, उत्पलस्य नीलमिति द्रव्यव्यतिरिक्ता अपि प्रतीयन्तेऽतो न द्रव्यस्य गुणात्मकत्वमिति गुणशब्दोऽप्रधानमेव जातिशब्दश्च प्रधानमेवेति नानियमदर्शनमिति वाच्यम् । तत्र तथा भवतु नाम, यत्र तु द्वयोर्जातिवचनत्वं वृक्षः शिंशपेति तत्रोभयोर्जातिवचनत्वाद्द्रव्यवाचित्वात् प्रधानत्वादन्यतरस्य विशेषणत्वेनानियमो भवत्येवेति, न चात्रापि वृक्षशब्दः प्रथममुच्यमानो भेदवाचकत्वेऽपि सतो भेदान् प्रतिपादयतीति तद्विशेषणाय गृह्यमाणो विशेषणमेव भवति न तु विशेष्यम्, प्रथमं शिंशपेत्युक्तौ तस्य सामान्यस्यापि वाचकत्वेन शिंशपा वृक्ष इति प्रतीतेर्विशेषत्वाविनाभूतत्वात्, न हि भवति वृक्षः शिंशपेति वाच्यम्, शिंशपाशब्देन नामस्थापनाद्रव्यभावशिंशपाया अपि बोधात् कन्यादेर्नामशिंशपाया विशेषणायोपादीयमानो वृक्षशब्दस्तद्विशेषणं भवत्येवेति अनियतप्रयोगदर्शनमस्त्येवेति निरूपयति-**नामाद्यनेकमिति** । ननु नामादिशिंशपानां सामान्यभेदपर्यायशब्दार्थत्वाभावात् शिंशपाशब्दार्थः कथमित्यत्राह–**तच्च सामान्यमिति,** अनेकं नामादिसामान्यमित्यर्थः । अथवा नामादिषु शिंशपाया अनुवृत्तेः शिंशपैव तेषां सामान्यमित्याह–**शिंशपैव वेति** । तच्चेदं नामादिभेदेन–शिंशपादिभेदशब्देन नामशिंशपादेर्वृक्षव्यभिचारित्वात्तद्वाचकेन शिंशपादिविध्येकार्थीभूतत्वात् परिगृहीतमेवेत्याह–**तच्चेदमिति** । ततश्च प्रथमं शिंशपेत्युक्तौ किं शिंशपाशब्देन शिंशपाभिधाना कन्या विवक्षिता उत वृक्षभूतशिंशपा विवक्षितेति सन्देहे तद्विशेषणायोपादीयमानो वृक्षो भवत्येव विशेषणं वृक्षशिंशपामानयेति, तस्माद्विशेषणविशेष्यभावस्यानियम एवेत्याह–**ततः संशय इति** । तस्माद्वृक्षः शिंशपेत्यादौ विशेष्यविशेषणभावस्य व्यवस्थितत्वोक्तिर्न युक्ता, किन्तु विशेष्याभिमतेनापि विशेषणाभिमतस्य स्वात्मनि नियमनात्तस्यापि तं प्रति विशेषणत्वमिति द्वयोरपि विशेषणविशेष्यते नियमेन तुल्यत्वदर्शनादित्याशयेनाह–**न तु यथोच्यतेति** । सान्व्यम्, द्रव्यं, घटः इत्यादावपि तथैव साध्यमित्याह–**एवं तावन्नेयमिति** । घटादिभेदशब्दे भेदान्तरवाचकपटादिशब्दार्थान् पटादीन् विरोधित्वादपोहत इति यदुक्तं तत्र किञ्चित्

यदप्युच्यते त्वया 'भेदो भेदान्तरार्थन्तु विरोधित्वादपोहते। सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः॥'' (प्रमा० स०) इति, तत्रापि न तु विरोधित्वादपोहते, विरोधाभावात्, अङ्गाङ्गिभावेन सामान्यविशेषभावापत्तेः सर्वस्य, कस्मात्तर्हि अपोहते? उच्यते-'स्वार्थावबद्धशक्तिश्च भेदो भेदमपोहते। सामान्यार्थविशेषार्थविधिमन्नियमश्रुते॥' इति स्वार्थावबद्धशक्तित्वात् शिंशपाशब्दः खदिरादिमपोहते, सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेर्भेदान्तरस्याविवक्षितत्वात्, न तु विरोधित्वात्, सामान्यविशेषयोरविनाभावित्वे सामान्याविनाभाविना विशेषान्तरेण स्वरूपेणैव कथं विरुध्यते विशेषः? एतेन सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिन इत्यादि सर्वमभिहितन्यायेन प्रत्युक्तार्थमित्यलमतिप्रसङ्गेन।

(यदुच्यत इति) यदुच्यते त्वया 'भेदो भेदान्तरार्थन्तु विरोधित्वादपोहते। सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिनः॥'(प्रमा० स०)इति, तत्रापि न तु विरोधित्वादपोहते, विरोधाभावात्, अङ्गाङ्गिभावेन सामान्यविशेषभावापत्तेरुक्तन्यायेन सर्वस्य नामाद्यपेक्षस्य, कस्मात्तर्ह्यपोहते? उच्यते-यस्मादित्थं 'स्वार्थावबद्धशक्तिश्च भेदो भेदमपोहते। सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेः॥' (ग्रन्थकारस्य)इति, स्वार्थेऽवबद्धा शक्तिरस्य शिंशपाशब्दस्य वृक्षसामान्यसहायस्य शिंशपायामेवावबद्धा, तस्या एव विवक्षितत्वात्तु शब्दान्तरार्थप्रतिपादनसहायभावाप्रतिपत्तिः, अतः स्वार्थावबद्धशक्तित्वात् शिंशपाशब्दः खदिरादिमपोहते, किं कारण? सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेः-येयमभिहितानां सामान्यशब्देनोपसर्जनसामान्यार्थेन विशेषाणा नियमार्था

शिक्षयितुमाह यदप्युच्यते त्वयेति। व्याकरोति-यदुच्यत इति, भेदो-विशेषशब्दो भेदान्तरार्थं-विशेषशब्दान्तरवाच्यमर्थं विरोधित्वाद्व्यावर्तयति, विजातीयव्यावृत्तिमन्तो विशेषार्थो हि उपात्तसामान्यस्य विरोधिन यथाऽघटादिव्यावृत्तिविजातीयापटादिव्यावृत्तिमन्त पटादयोऽघटव्यावृत्तेर्विरोधिन, अत एव च घटशब्द पटादिशब्दार्थं व्यावर्तयतीति कारिकार्थः। अत्र भेदान्तरार्थव्यावृत्तौ विरोधित्वादिति यो हेतुरुक्त सोऽहेतुरेव, घटादिपटाद्योर्विरोधाभावादिति शिक्षयति-तत्रापि न त्विति, घटशब्देन हि सद्द्रव्यपृथिवीमृद्घटनीलशुक्लकृष्णादितत्तद्घटकुटकुम्भकलशादय नामस्थापनाद्रव्यभावघटाश्च प्रोच्यन्ते, तत्र सदादिसामान्येन तद्वत् सर्वे पटादयो विशेषा अपि तद्रूपेणोपस्थिता एव, अत एव नास्ति घटादीना पटादिना विरोधः घटादेः केनचिद्रूपेणाघटादित्वादिति, अङ्गाङ्गिभावगत्या-प्रधानोपसर्जनभावेन सर्वस्य जगतः सामान्यविशेषभावापत्तेरुक्तत्वान्नास्ति कस्यापि केनचिद्विरोध इति भाव। ननु यदि सर्वं सर्वात्मकत्वादविरुद्धं तर्हि घटादिशिंशपादिशब्दैः पटादिखदिरादेर्न कुतो बोध कुतो वा तदपोहन इत्याशङ्कते-कस्मात्तर्ह्यपोहत इति। कारिकामुखेनास्या समाधिमाह-स्वार्थावबद्धेति, यस्माद्भेदशब्दस्य शक्ति स्वार्थे प्रतिबद्धा तस्मादेव स भेदान्तरशब्दार्थमपोहते, सामान्यशब्दप्रतिपाद्यसामान्योपसर्जनविशेषार्थनियामकश्रुतित्वादिति तदर्थ। सामान्यपदसमभिव्याहृतविशेषपदस्थले विशेषपद सामान्यपदेनाभिव्यक्तस्याभिव्यञ्जकम्, सामान्यपदेन हि सामान्यखचिताखिलविशेषावगतिर्भवति तत्र तत्र तदुत्तरमुपन्यस्यमानो विशेषशब्दस्तन्नियमायापवादाय वा स्यात्, ततश्च शिंशपादिशब्द शिंशपा नियमयति, अपोहते च खदिरादिमिति भावार्थमाचष्टे-स्वार्थेऽवबद्धेति। शिंशपादेः शिंशपादावेव कुतोऽवबद्धा शक्तिरित्यत्राह-तस्या एवेति, शिंशपाया एव वक्तुर्विवक्षितत्वाच्छब्दान्तरार्थखदिरादिप्रतिपादने शिंशपाशब्दो वृक्षशब्दस्य सहायभाव न प्रतिपद्यत इति भाव। नियामकत्वमेवादर्शयति-अत इति, यत शब्दान्तरार्थप्रतिपादनसहायभावाप्रतिपत्तिरत एव शिंशपावबद्धशक्तित्वात् शिंशपाशब्द खदिराद्यर्थमपोहमान स्वार्थमाचष्टे इति भावः। वृक्षशब्देन प्रसक्तस्यान्यस्य नियामकत्वादिति हेतुमाह-सामान्यार्थेति, सामान्यशब्देन प्रतिपाद्यो य सामान्योपसर्जनविशेषार्थस्तं विधिरूपेणैव नियमयति विशेषश्रुतिरित्यर्थः। तमेवार्थं स्फुटयति-येयमभिहितानामिति, वृक्षशब्देनाभिहिताना सद्द्रव्य-

१ सि. क्ष. छा. डे. °क्षस्याकस्मा०। २ सि. क्ष. छा. डे. °श्रुतिः। ३ सि. क्ष. छा. डे. °रार्थप्र०। ४ सि. क्ष. छा. डे. °प्रतिपत्तिः।

**विशेषश्रुतिः**, इष्टायाः शिंशपायाः प्रतिपादनस्य तद्द्वारत्वात्, यथाऽस्माभिः प्राग्विस्तरेण व्याख्याता सा सामान्यार्थविशेषार्थगुणप्रधानयुक्तविधेयार्थवती तस्माद्धेतोः तस्याः सामान्यार्थविशेषार्थविधिमन्नियमश्रुतेर्भेदान्तरस्याविवक्षितत्वात् प्रयोजनाभावात् स्वार्थावबद्धशक्तित्वात् भेदः शिंशपादिः भेदं -खदिरादिमपोहते, न तु विरोधित्वात्, सामान्यविशेषयोरन्योन्याविनाभावित्वे सामान्याविनाभाविना विशेषान्तरेण स्वरूपेणैव कथं विरुध्यते विशेषः?-शिंशपादिः खदिरादिनेति, एतेन सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिन इत्यादिसर्वमभिहितेन न्यायेन—सामान्यविशेषभवनविद्धैकीभूतार्थत्वादिना प्रत्युक्तार्थम्—प्रत्युक्त.-प्रतिषिद्धः स्वार्थः त्वदीयस्य एवमादिनो वचनस्य, इत्यलमतिप्रसङ्गेन—अन्यापोहशब्दार्थनिराकरणप्रसङ्गपरम्परागतः तिष्ठतु विचारः, प्रकृतमस्त्वित्यर्थः ।

**यत्तूक्तं कथं पुनः शब्दस्यार्थान्तरापोहेन स्वार्थाभिधानम्? पूर्वदोषाप्रसङ्गश्च कथम्? इत्यत्र त्वया 'अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात्। श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता ॥ [ प्रमा० समु० ] अनुमानानुमेयसम्बन्धो हि अभिधानाभिधेयसम्बन्धः, तत्र यथा धूमस्यैकदेशे दर्शनादग्नेरनग्नेर्वाऽदर्शनादनग्निव्युदासेनाग्निप्रतीतिः तथा शब्दस्यान्वयव्यतिरेकावर्थाभिधाने द्वारम्, तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती, तत्र तुल्ये नावश्यं सर्वत्र वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात्, न हि संभवोऽस्ति वृक्षशब्दस्य सर्ववृक्षेषु दर्शनेन, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवोऽग्निधूमादिवत्, यद्यपि च क्वचिदस्ति डित्थादिषु सम्भवस्तथापि न तद्द्वारेणानुमानम्, सर्वात्मनाऽप्रतीतेः, गुणसमुदायो हि डित्थाख्योऽर्थः, न च सर्वे काणकुण्टादयो डित्थशब्दाद्गम्यन्ते, एवमन्वयद्वारेणानुमानाभावः ।**

**यत्तूक्तमित्यादि,** कथं पुनः शब्दस्यार्थान्तरेत्यादिचोद्यं परामिप्रायं गृहीत्वा स्वमतनिर्दोषताप्रदर्शनार्थं स्वमतं प्रत्युच्चारयता उत्थापितं यावत् पूर्वदोषा[ा]प्रसङ्ग इति. भेदजातितत्सम्बन्धतद्वत्पक्षगता पृथिवीवृक्षत्वोपसृष्टवृक्षविशेषाणां नियमार्था शिंशपाविशेषशब्दश्रुतिः, अभीप्सितशिंशपाद्यर्थप्रतिपादनस्य सामान्यशब्दार्थोपसृष्टविधेयनियमद्वारत्वात्, यदि वृक्षशब्दो भेदान् शिंशपादीन् नाभिदधीत, ततः शिंशपायास्तद्वत्त्वं न स्यात्, वृक्षोऽपि वृक्षो न भवेदभूतशिंशपादिभेदत्वात्, एवं शिंशपाशब्दो यदि वृक्षसामान्यं न विदधीत ततः वृक्षस्य तत्सामान्यत्वं न स्यात्, शिंशपाऽपि शिंशपा न भवेत्, सामान्यविशेषापन्नव्यावृत्त्यर्थत्वादित्यादिना प्रागभिधानात् सामान्यविशेषशब्दार्थयोरङ्गाङ्गिभावगत्या विशेषपरमार्थत्वेन भवनविध्येकार्थीभूतत्वात् शिंशपाश्रुतिः सामान्यार्थविशेषार्थविधिमन्नियमश्रुतिरिति भावः । इदमेवाह-**सा सामान्यार्थेति** । यस्मान्नियमयति विशेषश्रुतिः सामान्यार्थविशेषार्थं तत एव भेदान्तरस्याविवक्षितत्वात्तदभिधाने प्रयोजनाभावात् स्वार्थावबद्धशक्तिः शिंशपादिविशेषशब्दः खदिरादिभेदान्तरमपोहते, न तु भेदान्तरेण विरोधादित्याह—**तस्माद्धेतोरिति** । अविरोधं प्रदर्शयति-**सामान्यविशेषयोरिति,** भेदस्य भेदान्तरेण नास्ति विरोधः, स्वसामान्याविनाभावित्वेन स्वस्वरूपत्वादिति भावः । सामान्यान्तरभेदार्थाः स्वसामान्यविरोधिन इत्यपि यदुक्तं त्वया तदपि प्रतिक्षिप्तम्, सामान्याख्यं विशेषाख्यं च यत्किञ्चिद्वस्तु तत्सर्वं भवनमेव, **अन्योऽन्यात्मापत्त्या** चैकीभूतं तदेव शब्दार्थः, स चाविरुद्धः, विवक्षितार्थापकाराविनाभावित्वेनैकीभूततया विधीयमानत्वादिप्रागुक्तत्वान्नान्यापोहः शब्दार्थो युज्यत इत्याह-**एतेनेति** । नन्वन्यापोहेन स्वार्थं शब्दो यद्युच्यते तर्हि भेदजातितत्सम्बन्धतद्वच्छब्दार्थतापक्षेषु य आनन्त्यव्यभिचारादिभिः समयासम्भवलक्षणदोष उक्तः सोऽन्यापोहवत्पक्षे कथं न स्यादित्यत्रापोहवाद्युदीरितसमाधिपरिजिहीर्षयाऽऽह-**यत्तूक्तमिति** । अर्थान्तरापोहपूर्वकस्वार्थाभिधानं शब्दस्य कथं युज्यते इत्यादिग्रन्थो भेदजात्यादिवाद्यभिप्रायं परिगृह्य स्वमते ते दोषा न सन्तीति प्रदिदर्शयिषया स्वमतमुपवर्णयताऽपोहवादिनोद्भाविता इत्याख्याति-**कथं पुनरिति** । पूर्वपक्षाभिप्रायमाह स एव-**भेदजातीति,** भेदो-विशेषो वा जातिर्वा जातिसम्बन्धो वा जाति-

दोषास्तत्राप्यानन्त्यव्यभिचारादयः कथं [न] स्युरिति ननु शब्दस्यार्थान्तरापोहेनेति परपक्षदोषाभिधानमात्रेण स्वपक्षासिद्धितः पृच्छति, कथं वाऽर्थान्तरापोहेन स्वार्थाभिधानं, पक्षसिद्धिरिति वाक्यशेषः, पूर्वदोषाप्रसङ्गश्च कथं अर्थान्तरापोहेन स्वार्थाभिधाने, अत्रोच्यते त्वया–'अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनात्। [श्रुतेः सम्बन्धसौकर्यं न चास्ति व्यभिचारिता]॥' (प्र. समु.) अन्यापोहेनार्थाभिधानसिद्धिरिति वाक्यशेषः, अनुमानानुमेयसम्बन्धो ह्यभिधानाभिधेयसम्बन्धः, तत्र यथा धूमस्यैकदेशे दर्शनादग्नेः, अनग्नेर्वाऽदर्शनादनग्न्यव्युदासेनाग्निप्रतीतिः, तथा शब्दस्यान्वयव्यतिरेकावर्थाभिधाने द्वारम्, तौ च तुल्यातुल्ययोर्वृत्त्यवृत्ती, तत्र तुल्ये नावश्य सर्वत्र वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याऽऽख्यानासम्भवात्, न हि सम्भवोऽस्ति वृक्षशब्दस्य सर्ववृक्षेषु दर्शने[न], नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवः, अग्निधूमादिवद्यपि च क्वचिदस्ति डित्थादिषु सम्भवः, तथापि न तद्द्वारेणानुमानम्, सर्वात्मनाऽप्रतीतेः गुणसमुदायो हि डित्थाख्योऽर्थः, न च सर्वे काणकुण्टादयो डित्थशब्दाद् गम्यन्ते, एवमन्वयद्वारेणानुमानाभावः।

स्यादेतद्व्यतिरेकस्याप्यसम्भवः, तत आह–

**अतुल्ये तु सत्यप्यानन्त्येऽशक्यमदर्शनमात्रेणाख्यानम्, अदर्शनेऽप्रवृत्तेः, अत एव च स्वसम्बन्धिभ्योऽन्यत्रादर्शनात्तद्व्यवच्छेदानुमानम्, एवञ्च कृत्वा वृक्षशब्दाद् द्रव्य-**

---

मान्वा शब्दस्यार्थं इति पक्षगना इत्यर्थः। के दोषा इत्यत्राह–**आनन्त्येति,** आनन्त्यपदेन समयाभाव उच्यते भेदस्य विशेषस्य स्वलक्षणस्य क्षणिकत्वेन सङ्केतव्यवहारप्राप्तकालाव्यापकत्वात्, न ह्यतीतानागतभेदभिन्नेष्वनन्तेषु भेदेषु समयः सम्भवत्यतिप्रसङ्गात् जातितद्योगयोरसिद्धत्वात्तद्वतोऽप्यसम्भवादानन्त्येन समयासम्भव एव, अविद्यमानानामप्येषां शब्दार्थत्वे व्यभिचार इति भाव सत्त्ववादी जात्यादिपक्षे दोषप्रदर्शनमात्रेण स्वपक्षासिद्धमभिमन्यमान प्रश्नयतीत्याह–**ननु शब्दस्येति**। अत्र बौद्धस्योक्तिमुपन्यस्यत्याचार्यः–**अत्रोच्यते त्वयेति,** वाच्यवाचकभावो नानुमानानुमेयसम्बन्धादन्य, शब्दस्यान्यशब्दार्थेऽदर्शनात् स्वार्थैकदेशे दर्शनाच्चान्यापोहेन स्वार्थाभिधानसिद्धिरिति भावः। अनुमानानुमेयभावसम्बन्धमेव तावद्दर्शयति–**तत्र यथेति,** धूमस्याग्नेरेकदेशे दर्शनात्, अनग्निमत्यदर्शनाद्यथा धूमोऽनग्निव्यावृत्त्या वह्निं गमयतीत्यर्थः। तथा शब्दोऽप्यन्वयव्यतिरेकौ द्वारीकृत्य स्वार्थमभिदधीतेत्याह–**तथा शब्दस्येति**। तौ चान्वयव्यतिरेकौ तुल्ये वृत्तिरतुल्ये चावृत्तिरित्येवरूपावित्याह–**तौ चेति**। तत्र तुल्ये सर्वत्रावश्यं शब्दस्य वृत्तेराख्यानं न सम्भवतीत्याशयेनाह–**तत्र तुल्य इति**। अनाख्येयत्वे कारणमाह–**क्वचिदानन्त्य इति,** स्थलविशेषेऽर्थस्यानन्तत्वेन सर्वत्र शब्दस्य वृत्तेराख्यानासम्भवादन्वयग्रहासम्भव इति भावः। असम्भवमेव दर्शयति–**न हीति,** वृक्षाख्योऽर्थोऽनन्त, सर्वेषु वृक्षेषु भूतभविष्यद्वर्तमानेषु न वृक्षशब्दस्य दर्शनं सम्भवतीति भाव.। ननु लिङ्गलिङ्गिभावेन स्यादवगतिरित्यत्राह–**नापीति,** नापि सर्वेषु वृक्षेषु लिङ्गिषु सर्वेषां वृक्षादिशब्दानां लिङ्गानां दर्शनं सम्भवतीति भावः। धूमादग्नेरनुमानवत् डित्थादिशब्दात् डित्थादेरवगतिः स्यात् वाच्यवाचकयोरेकत्वादित्याशङ्कायामाह–**अग्निधूमादिवदिति**। तत्रापि डित्थादिशब्दान्न डित्थाद्यर्थानुमानं सम्भवतीत्याह–**तथापीति**। हेतुमाह–**सर्वात्मनेति,** डित्थादेर्गुणसमुदायात्मनोऽर्थस्य सर्वस्वरूपेण न डित्थशब्दादवगम इति भावः। तदेवं तुल्ये वृत्तेराख्यानासम्भवेन नार्थानुमानसम्भव इत्युपसंहरति–**एवमिति**। अतुल्येऽवृत्तिलक्षणव्यतिरेकद्वारेणाप्यनुमानं न सम्भवतीत्याह–**अतुल्य इति**। अतुल्ये–विपक्षेऽन्य-

---

१ सि. क्ष. छा. डे. °रन्यशब्दार्थस्वार्थ०। २ सि. क्ष. छा. डे. अन्यापोहेन नार्था०।

**त्वानुमानमुपपन्नं भवति, अन्वयद्वारेण चानुमानेऽयं दोषः, यस्मादनुगतोऽस्ति वृक्षशब्दार्थादिसहितस्य शिंशपादिषु तस्मात् केवलेनाप्यनुमानं प्राप्नोति ।**

( **अतुल्ये त्विति** ) अतुल्ये तु सत्यप्यानन्त्येऽशक्यमदर्शनमात्रेण अदर्शनेऽप्रवृत्तेराख्यानम्, अदर्शनमात्रत्वात्, अदर्शनं हि दर्शनाभावमात्रम्, अत एव चेति, यस्माद्दर्शनस्य सर्वत्रासम्भवः सत्यपि च दर्शने सर्वथाऽनुमानाभावोऽत एव स्वसम्बन्धिभ्य इति, यत्र दृष्टः सोऽत्र सम्बन्ध्यभिप्रेतः, न त्वविनाभावित्वसम्बन्धेन, अन्यत्र[ा]दर्शनादिति–अभिधेयाभावे अदर्शनात्, अन्यथा हि वृक्षशब्दस्य तस्मिन् वस्तुनि पृथिवीद्रव्याद्यभावेऽपि दर्शनं वक्तव्यं स्यात्, तद्व्यवच्छेदानुमानमिति, यथैवादर्शनमुक्तं वृक्षाभावेऽवृक्षे ततो व्यवच्छेदानुमानं–अवृक्षो न भवतीति, एवं[च]कृत्वा वृक्षशब्दाद् द्रव्यत्वाद्यनुमानमुपपन्नं भवति, अन्वयद्वारेण चानुमानेऽयं दोषः, यस्मादनुगतोऽस्ति वृक्षशब्दार्थादिसहितस्य शिंशपादिषु तस्मात् केवलेनाप्यनुमानं प्राप्नोति ।

**अथ बहुषु पलाशादिष्वपि दृष्ट इति संशयो भवतीति चेत्, एवं सति वृक्षार्थे पार्थिवत्वद्रव्यत्वसत्तार्थाः सन्ति तेषु वृक्षशब्दस्य समानत्वात् संशयः स्यात्, निश्चयस्तु दृष्टः शब्दाद्वृक्षनिवृत्त्यर्थाभिधानवदपार्थिवादिव्यावृत्त्या वृक्षाभिधानात्, तथापि वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः, न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्ति, आह च 'बहुत्वेऽप्यभिधेयस्य न शब्दात् सर्वथा गतिः। स्वसम्बन्धानुरूप्येण व्यवच्छेदार्थकार्यसौ ॥' अनेकधर्मा शब्दोऽपि० ( प्रमा० स० )**

---

शब्दार्थेऽदृष्टिमात्रेणावृत्तेराख्यानं न सम्भवतीति व्याचष्टे–**अतुल्ये त्विति** । अदर्शनं हि दर्शनाभावमात्रम्, तन्मात्रत्वे च कथं प्रवृत्तिराख्यानस्य, तस्माददर्शनेऽप्रवृत्तेराख्यानमशक्यमेवेत्याह–**अदर्शनेऽप्रवृत्तेरिति** । तदेव हि दर्शनमङ्गं यदि निःशेषे सपक्षे हेतोर्दर्शनं स्यात्, एवं तदेवादर्शनमङ्गं यदि निःशेषे साध्यव्यतिरेके हेतोरदर्शनं स्यात्, यत एव च निःशेषे हेतोर्दर्शनमानन्त्यान्न सम्भवति डित्थादौ सत्यपि च दर्शने सर्वात्मनाऽप्रतीतेर्न तद्द्वारेणानुमानम्, उक्तमपि 'लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि । गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥' इति, अत एव स्वसम्बन्धिभ्योऽन्यत्रादर्शनात्तद्व्यवच्छेदानुमानं भवतीत्याशयेन भाष्यग्रन्थमाह–**यस्माद्दर्शनस्येति** । अस्य व्याख्याटीकाग्रन्थमाह–**यत्र दृष्ट इति,** अत्र स्वसम्बन्धिपदेनाविनाभावित्वसम्बन्धेन स्वस्य सम्बन्धी यो य इति न विवक्षितः किन्तु यत्र स दृष्टः स स्वसम्बन्धीति भावः । वृक्षशब्दसम्बन्धिभ्योऽन्यत्र वृक्षशब्दानभिधेये वृक्षशब्दस्यादर्शनाद्वृक्षशब्दोऽवृक्षव्यवच्छेदं गमयतीति दर्शयति–**अन्यत्रेति** । स्वसम्बन्धिभ्योऽन्यत्र येषामभावे यस्यादर्शनं तेन तद्व्यवच्छेदानुमानं भवति, दृष्टं हि वृक्षशब्दसम्बन्धिनोऽन्यत्र पृथिवीद्रव्याद्यभावेऽपि वृक्षशब्दस्यादर्शनम्, न हि पृथिवीद्रव्यसत्त्वाद्यभावे दर्शनं वृक्षस्याभ्युपगम्यते, वृक्षस्य वृक्षशब्दसम्बन्धित्वदर्शनवत् पृथिव्यादेरपि वृक्षशब्दसम्बन्धित्वदर्शनादित्याशयेनाह–**अन्यथा हीति** । पृथिव्यादेर्वृक्षशब्दसम्बन्धित्वदर्शनाभावे हीत्यर्थः । ततश्च किमित्यत्राह–**तद्व्यवच्छेदानुमानमिति,** वृक्षशब्दसम्बन्धिवृक्षाभावेऽवृक्षे वृक्षशब्दादर्शनात् यथा तच्छब्देनावृक्षव्यवच्छेदानुमानं भवति तथा पृथिवीद्रव्याद्यभावेऽपि तस्यादर्शनात्तच्छब्देन तद्व्यवच्छेदानुमानमपि स्यात्तथा च वृक्षश्रुतिरपृथिवीद्रव्याद्यपोहकृत् स्यादिति भावः । तमेव दोषमाह–**यथैवेति** । यत्र दृष्टः सोऽत्र सम्बन्धीत्यन्वयं द्वारीकृत्यानुमानस्याभिधानेऽयं दोष इत्याह–**अन्वयद्वारेणेति** । स्वसम्बन्धित्वमेव पृथिवीद्रव्यादेर्दर्शयति– **यस्मादनुगत इति** । ननु वृक्षशब्दः शिंशपातदभावसहचरितत्वेन दृष्टोऽतो वृक्षशब्दः किं शिंशपां गमयेत् किं वा पलाशादीति संशय एव स्यादित्याशङ्कते–**अथ बहुष्विति** । समाधत्ते–**एवं सतीति** । एवं

---

१ छा. °रात्मानमदृ°० ।

( **अथेति** ) अथ बहुषु पलाशादिष्वपि दृष्ट इति संशयो भवति, एवं सति वृक्षार्थे पार्थिवत्वद्रव्यत्वसत्तार्थाः सन्ति तेषु वृक्षशब्दस्य समानत्वात् संशयः स्यात्, निश्चयस्तु दृष्टः शब्दात्, वृक्षशब्दोऽवृक्षनिवृत्त्यैव[स्वा]र्थकोऽपार्थिवव्यावृत्त्यापि स्वार्थे वर्तते तथापि वृक्षपार्थिवद्रव्यसच्छब्दा[आ]नुलोम्येन त्रिष्वेकार्थनिश्चयहेतवः, एवमर्थान्तरव्युदासेनार्थान्तराभिधानमुपपन्नम्, न च सम्बन्धद्वारं मुक्त्वा शब्दस्येति यथा भेदाद्यनभिधानं पूर्वमुक्तं तद्दर्शयति–आह चेति, एतमेवार्थं श्लोकद्वयेनापि दर्शयति–'बहुत्वेऽप्यभिधेयस्ये'ति, शिंशपादिभेदा अत्राभिप्रेताः, न द्रव्यादयः, तथा हि वृक्षवद्भेदेषु संशयो दृष्टः, अर्थतस्तु द्रव्यादिषु निश्चयः, 'स्वसम्बन्धानुरूप्यात्त्वि'ति, यस्मादसौ तज्जातीये दृश्यमानोऽर्थान्तरनिवृत्तिद्वारेणैव दृष्टोऽभिधायकः प्रागेवान्यत्रा[1]दृश्यमानः, तस्मात् सम्बन्धानुरूप्यात् तद्विशिष्टमेवार्थमाह, 'अनेकधर्मा शब्दोऽपि' सामान्यधर्मैकगुणत्वादिभिः वृक्षार्थं[2] तस्मिन् वस्तुनि नाभिधत्ते, तथा हि ते विनापि वृक्षार्थेन रसादिषु दृष्टाः, न तु वृक्षशब्दोऽन्यत्र दृष्टः, तस्माद्वृक्षशब्देनैव प्रत्यायनमनुपपन्नमित्युक्त्वा स्वपक्षसिद्धावुपपत्तिः[3] पूर्वदोषाभावश्च यस्माच्छ्रुतेः सम्बन्धसौकर्य[म्]बहुत्वेऽपि तुल्यातुल्ययोर्वृत्त्यवृत्ती सम्बन्धसौकर्यात् न चापि व्यभिचारिता भेदानभिधानात्, एवं तावद्भेदानभिधाने येऽपि दोषा उक्ताः ते परिहृता इति अन्यापोहवादिपक्षः ।

आचार्योऽस्यापि दूषणं वक्तुकामः प्राक् तावत् तत्र यदिदं श्रुतिसम्बन्धसौकर्यमुच्यत इति परिहारबीजमेव दूषयितुमाह–

**एतदयुक्तं यतोऽन्वयव्यतिरेकावपीह न घटेते, 'अन्यापोहार्थनैर्मूल्यात् स्वार्थस्यांशेऽप्यदर्शनात् । श्रुतेः सम्बन्धदौष्कर्यात् तथापि व्यभिचारिता ॥' ( ग्रन्थकृतः )**

सति वृक्षशब्दस्यावृक्षनिवृत्तिरप्यर्थो न स्यात्, अवृक्षव्यावृत्तानन्दभावसहचरितत्वाद्वृक्षशब्दस्यावृक्षनिवृत्तिर्वाऽपृथिव्यादिनिवृत्तिर्वाऽर्थः स्यादिति संशय एव स्यात्, न तु दृष्टो निश्चयो भवेदिति भावः । एवञ्च वृक्षशब्दस्यावृक्षनिवृत्त्यैवार्थवत्त्वम्, अपृथिव्यादिव्यावृत्तिनिश्चयश्चार्थतः, अत एव वृक्षशब्दः पार्थिवद्रव्यसदर्थनिश्चयहेतुः, पार्थिवशब्दो द्रव्यसदर्थनिश्चयहेतुः, सच्छब्दः सदर्थनिश्चयहेतुरित्याह–**वृक्षशब्द इति** । अर्थान्तरव्युदासेनार्थान्तराभिधानमपि स्वसम्बन्धिभ्योऽन्यत्रेत्यादिप्रकारेण **सम्बन्धद्वारं** मुक्त्वा न भवतीत्याशयेनाह–**न च सम्बन्धद्वारमिति** । ननु वृक्षशब्दवाच्येषु बहुषु पलाशादिषु वृक्षोऽयमिति प्रत्ययो **दृष्टः**, एषां मध्ये कतमो विवक्षित इति सामान्यात् संशयो भवतीत्याशङ्कते–**बहुत्वेऽपीति**, अभिधेयस्य बहुत्वादिति भावः । **भेदशब्देन** विवक्षितमाह–**शिंशपादीति** । द्रव्यादयः कुतो न विवक्षिता इत्यत्राह–**अर्थतस्त्विति**, अर्थापत्त्या द्रव्यादौ निश्चय **एव** भवति, वृक्षस्य द्रव्यादिनैयत्यादिति भावः । अर्थान्तरनिवृत्तिद्वारेणाभिधायकत्वमादर्शयति–**यस्मादसाविति** । वृक्षादिशब्दो वृक्षजातीये दृश्यमानो घटादावन्यत्रादृश्यमानोऽवृक्षनिवृत्तिद्वारेणाभिधायको दृष्ट इत्यर्थः । यस्मात्तथा दृष्टस्तस्मादर्थान्तरनिवृत्तिविशिष्टमर्थं शब्द आहेत्याह–**तस्मादिति** । वृक्षशब्दोऽवृक्षनिवृत्तिविशिष्टमेवाह, न तु अपार्थिवत्वादिव्यावृत्तिविशिष्टम्, तज्जातीये दृश्यमानोऽन्यत्रादृश्यमानोऽर्थान्तरनिवृत्तिद्वारेणाभिधायक इति सम्बन्धानुरूपताया अभावादित्यादर्शयति–**अनेकधर्मेति** । ते–गुणत्वादयः, प्रत्यायन–अपार्थिवादिव्यावृत्त्या वृक्षादिबोधनम्, अर्थान्तरापोहेन स्वार्थाभिधानमिति स्वपक्षसिद्धौ **सम्बन्धानुरूप्यतोपपत्तिः**, आनन्त्यव्यभिचारादयः पूर्वदोषा भेदानभिधानेन परिहृता इति बोध्यम् । एतदेवादर्शयति **यस्माच्छ्रुतेरिति** । एवमन्यापोहवादिपक्षं प्रदर्श्य प्रथमं श्रुतिसम्बन्धसौकर्यं बीजभूतमेवाचार्यो दूषयति–**तत्र यदिदमिति** । तत्र कारणमाह–

---

१ क्ष. °अद० । २ सि. क्ष. छा. वृक्षार्थी । ३ सि. क्ष. °सिद्धावुपप० ।

**इति, यदिद मुक्तमर्थान्तरापोहेन स्वार्थाभिधानमिति, अत्रार्थान्तरं नामाऽन्योऽर्थ इति यस्माद्भवति तस्मात्तत्तावद्विचार्यते, स किमन्योऽर्थः स एव भवति विधिना? उतान्यो न भवतीत्यपोहेन?**

**एतदयुक्तं यत इत्यादि।** यावन्न घटेते इति, यस्मात्तावदन्वयव्यतिरेकावपीह न घटेते दूरत एव यावर्थाभिधानहेतू तुल्यातुल्यवृत्त्यवृत्तिभ्यां भवत इत्यभिमतौ, तस्मादयुक्तं सम्बन्धसौकर्यमिति प्रतिज्ञातं तदुपपादनार्थमाह–अन्यापोहार्थनैर्मूल्यात्' इत्यादि श्लोकः, अपोहाथ[ ]भावात् सम्बन्धाभावः स्वार्थगन्ध[3]स्याप्यदर्शनात् संशयबीजमपि नास्ति कुतो व्यभिचाराऽऽशङ्केत्युपन्यासः, ततो यदिदमुक्तं चोद्यपक्ष एवार्थान्तरापोहेन स्वार्थाभिधानमित्यत्रार्थान्तरं नामान्योऽर्थ इति यस्माद्भवति तस्मात्तत्तावद्विचार्यते–स किमन्योऽर्थः स एव भवति विधिना अन्याख्योऽर्थ उच्यते? उतान्यो न भवतीत्यपोहेन? इति द्वयी कल्पना स्यात्।

**तत्र यदि तावन्मतमन्य इति स एव भवतीति ततः तच्छब्दोत्पाद्यविज्ञानविषयत्वात् स इति शब्देन यद्विज्ञानं तस्य स्वार्थ एवान्याख्यार्थो विषयः संवृत्तः, ततश्च स्वार्थे तस्मिन्नव्यावृत्त्या विधिनैव प्रतिपन्ने किमपोहेन क्रियते? अर्थप्रतीतेर्वृत्तत्वात्, अथापि स्यादन्यापोहेन प्रयोजनमित्थं–तदा तस्मिन् विधिनाऽन्यविज्ञानकाले यद्यन्यो भवति ततः स न भवति, अथ स भवत्यन्यो न भवतीत्यर्थादापन्नं तदन्ययोरुभयोरपि तत्त्वतश्च स्वत एव सिद्धम्, तस्मात् स्यादप्यनयोरन्यापोहप्रत्ययः उपसर्जनो विधिर्न भवितुमर्हति, असत्योपाधिसत्यशब्दार्थत्वात्, इत्थमन्यप्रतिपत्तिर्विधिरेव न व्यावृत्तिः।**

(**तत्रेति**) तत्र यदि तावन्मतमन्य इति स एवान्याख्यो भवतीति ततः स इति शब्देनोत्पद्यते यद्विज्ञानं तस्य विज्ञानस्य स्वार्थोऽभिधेय एवान्याख्यार्थो विषयः संवृत्तः स एव, ततश्च तस्मिन्नव्यावृत्त्याऽन्याख्येऽर्थे विधिनैव प्रतिपत्तेः किमन्यापोहेन क्रियते? नार्थोऽपोहेनेत्यर्थः, कस्मात्? अर्थप्रतीतेर्वृत्तत्वात् अर्थप्रतीत्यर्थो हि शब्दप्रयोगः, अन्यापोहकल्पना च तदभिधानस्वरूपपरिज्ञानार्था तदर्थप्रतीतौ व्यर्था सा, अथापि स्यादन्यापोहेन प्रयोजनमित्थं स्यात्, नान्यथा, तद्यथा–तदा तस्मिन् विधिनाऽन्यविज्ञानकाले यद्यन्यो

**यस्मात्तावदिति,** शब्दस्यार्थाभिधानेऽन्वयव्यतिरेकौ द्वारमिति यदुक्तं तदेव न घटत इति भाव । दूषणं कारिकयाऽऽह–**अन्यापोहार्थेति,** अन्यापोहरूपार्थस्य निर्मूलतयाऽसम्भवात्, शब्देन केनापि रूपेणार्थस्यानभिधानादभिधेयबहुत्वासम्भवेन संशयासम्भवात् व्यभिचाराभावाच्च श्रुतिसम्बन्धदौष्कर्यमिति भाव । तत्रान्यापोहार्थनैर्मूल्यं दर्शयितुमाह-**ततो यदिदमुक्तमिति,** अर्थान्तरापोहेन स्वार्थाभिधानं त्वयोक्तं तत्रान्योऽर्थोऽर्थान्तरमुच्यते, अन्यश्चासावर्थः किं विधिरूपेण उत प्रतिषेधरूपेण प्रोच्यत इति भावः। तत्र प्रथमं पक्षं दूषयितुमाह–**तत्र यदि तावदिति।** तद्व्याचष्टे–**तत्र यदि तावन्मतमिति।** यद्यन्याख्यार्थः स एव स्यात्तर्हि तच्छब्दजन्यविज्ञानविषयः अन्याख्योऽर्थः स एवाभिधेयो जातः स च नान्यव्यावृत्तो विधिना च प्रतिपन्न इति तत्प्रतिपत्त्यर्थोऽन्यापोहो निरर्थक इति भावः । अन्यापोहवैयर्थ्ये हेतुमाह–**अर्थप्रतीतेरिति,** अर्थविषयप्रतिपत्तिजनकत्वप्रकारकेच्छाविषयत्वेन शब्दप्रयोगस्यान्यापोहव्यतिरेकेणापि शब्देनार्थविषयप्रतीतेर्जातत्वाद्वैयर्थ्यमिति भावः। अन्यापोहप्रकल्पना च शब्दवाच्यार्थस्वरूपपरिज्ञानाय भवेत, तद्भिन्नव तदर्थप्रतिपत्तौ तु तत्कल्पना व्यर्थैवेत्याह–**अन्यापोहेति।** एवमपि यद्यन्यापोहस्य प्रयोजनमिष्यते तर्हि वक्ष्यमाणप्रकारेणैव स्यादित्याह–**अथापीति।** शब्देनाभिधेये विधिना-

१ क्ष. भाव इ सि. भावत इ०। २ सि. क्ष. वैर्मल्यात्। ३ सि. प्रंथस्या० क्ष. यथस्या०। सि. क्ष. नान्याख्योऽर्थ।

भवति ततः स न भवति, अथ स भवति अन्यो न भवतीत्यर्थादापन्नं तदन्ययोरुभयोरपि तत्त्वं, तच्च स्वत एव सिद्धम्, तस्मात् स्यादप्यनयोः–तदन्ययोरन्यापोहप्रत्ययः स चोपसर्जनो विधिर्न भवितुमर्हति, कस्मात्? असत्योपाधिसत्यशब्दार्थत्वात्, इत्थमन्यप्रतिपत्तिर्विधिरेव न व्यावृत्तिः।

अथान्यो न भवतीति तस्याप्यन्यस्य यदि व्यावृत्तिरेव स्वरूपम्, ततोऽपि प्रश्नाव्यवस्था, सर्वत्रास्याक्षेपस्य तुल्यत्वादुक्तवत्, अन्यत्वस्य चोभयविषयत्वात् तदग्रहणे कोऽसावन्यः? यदपोहादन्यापोहः स्यात्, कुतो वान्यो न भवतीत्युच्यते? यतोऽस्यान्यस्यान्यत्वं सिद्ध्येत् निर्धार्यमेतदन्यत्वम्।

( **अथेति** ) अथान्यो न भवति–अथ मा भूदेष दोष इत्यन्यो न भवतीति तस्याप्यन्यास्व्यस्यार्थस्य[1] व्यावृत्तिरेव अन्यो न भवतीति स्यात् स्वरूपम्, ततः किं? ततोऽपि प्रश्नाव्यवस्था–सोऽपि योऽन्यो न भवतीत्युच्यमानोऽर्थः किं स एव भवति, उतान्यो न भवतीति पृच्छ्यसे त्वम्, तत्र यदि स एव भवतीति ब्रूयास्त्वं पूर्ववद्विधिरर्थः, अथान्यो न भवति सोऽप्यन्यः तथा प्रष्टव्यः योऽन्यो न भवतीत्युच्यते ततोऽप्यन्यः प्रष्टव्य इति प्रश्नानवस्था। कस्मात्? सर्वत्रास्याक्षेपस्य तुल्यत्वादुक्तवत्, किञ्चान्यत्–अन्यत्वस्य चोभयविषयत्वात्–अन्य इति स उच्यतेऽन्यापेक्षया, सोऽप्येतदपेक्षया, अयमस्मादन्यो यमस्मादन्य इति, तयोर्द्वयोरपि स्वरूपतः सिद्धौ द्विष्ठं तदन्यत्वं सिद्ध्यति ततस्तस्यान्यत्वस्योभयविषयत्वात् तदग्रहे कोऽसावन्यः? तयोरन्ययोर्विधिरूपेणाग्रहणे कोऽसावन्यो नाम? यदपोहादन्यापोहः स्यात्, कुतो वाऽन्यो न भवतीत्युच्यते? यतोऽस्यान्यस्यान्यत्वं सिद्ध्येत्–यतोऽन्यः, योऽन्य इत्येतद् द्विष्ठत्वादन्यत्वस्य निर्धार्यमेतदन्यत्वम्–नान्यथा [2]निर्धारयितुं शक्यमित्यभिप्रायः।

एवन्तु न स कश्चिदर्थो भविता, उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि न दृश्यत एव, अन्यो न भवतीत्युच्यमाने उभयतोऽपि न भवति न भवतीत्यन्यस्याव्यावृ-

ऽन्यताविज्ञानकाले तत्तदन्ययोरुपस्थितौ परस्परभेदप्रत्यय पश्चादर्थतो भवति सोऽन्यस्माद्भिन्न, अन्यश्च तस्माद्भिन्न इत्यन्योन्यमन्यापोहप्रत्यया जायते स उपसर्जन एव, असत्योपाधिसत्यशब्दार्थत्वादिति शब्दादन्यप्रतीतिर्विधिरूपत एव न व्यावृत्तिरूपेण इति भावः। एवमन्यापोहवैयर्थ्यप्रसङ्गे तद्वारणाय वादी प्राह–**अथान्य इति**। व्याचष्टे–**अथ मा भूदिति**, द्वितीयो विकल्प एषः, अन्यापोह इत्यत्रान्याख्योऽर्थो न विधिरपि तु सोऽप्यन्यापोहरूप एवेति न पूर्वदोष इति भाव। अत्रानवस्थामापादयितुमाह–**ततोऽपीति**, अन्यस्य यदन्यो न भवतीति स्वरूपमुच्यते तत्राप्यन्यपदार्थः स एव, उतान्यापोह, आद्ये विधित्वप्रसक्तिरन्त्ये सोऽप्यन्य. किं स एवोतान्यो न भवतीत्येव प्रश्नस्याविरतिरिति भाव। हेतुमाह–**सर्वत्रेति**। अन्यत्वस्य प्रतियोग्यनुयोगिविषयत्वात् प्रतियोग्यनुयोगिनोश्च विधिरूपेणाग्रहणे तत्स्वरूपापरिज्ञानात् कस्य कस्मादन्यत्वमित्याशयेनाह–**अन्यत्वस्य चेति**। सोऽन्यापेक्षयाऽन्य इत्युच्यत इति तस्मिन्नन्यप्रतियोगिकान्यता, अन्योऽपि तच्छब्दवाच्यार्थप्रतियोगिकान्यतावानिति प्रतियोगिनोऽन्यस्यानुयोगिनस्तस्य च विधिरूपेण सिद्धौ सत्यां प्रतियोग्यनुयोगिनिष्ठमन्यत्वं सेत्स्यति नान्यथा, तयोर्हि तदन्ययोरसिद्धौ क कस्मादन्यता स्यादिति नान्यापोह इति भावः। उभयविषयत्वमेवाह–**अन्य इतीति** तस्मिन्नन्यत्वमन्यापेक्षमिति भाव.। **सोऽपीति** अन्यास्मिन्नपि तत्त्वमेतदपेक्षमिति भावः। तत्रान्यत्वयोः स्वत सिद्धौ अयमन्यस्मादन्य इत्युभयापेक्षमन्यत्वं सिद्ध्यति नान्यथेत्याह–**तयोर्द्वयोरपीति**। अन्यताया निर्धार्यतामाह–**यतोऽस्येति**। अन्यताया अनिर्णीतत्वे नान्यापोहवाच्च काश्चद्भवति, तदन्ययोस्तत्तदन्यत्वानिर्णयात्तस्मिन् तत्त्वस्यान्यस्मिन्नन्यत्वस्य चाभाव प्रसज्येत इत्याह–**एवन्तु नेति**। तदेव व्याचष्टे–

१ सि. क्ष. छा. डे ॰र्थस्यानन्या॰। २ सि. क्ष. छा. डे. निर्धारितुं।

**त्तिरेव न कश्चिद्विधिगन्धोऽपीत्यन्यथावृत्तेरभवनपरमार्थत्वादात्मान्यत्वाभावः, ततश्चाभूतस्वान्यत्वाद्वन्ध्यापुत्रवदविषय एव, स च निबन्धनमन्यापोहस्य स्यात् ततश्चाप्रतिपत्तिरेव वन्ध्यापुत्राप्रतिपत्तिवत् ।**

**एवन्त्वित्यादि,** इत्थमुक्तन्यायेन न स कश्चिदर्थो भविता—न कदाचित्तादृग्विधो भवति, अन्योऽप्यन्यो न भवति, सोऽपि स[न]भवतीति, उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि—गन्धोऽपि न दृश्यत एव, एतस्यार्थस्य भावना—अन्यो न भवतीत्युच्यमाने किं सम्प्रवृत्तं? उभयतोऽपि न भवति न भवतीति, अन्यस्याव्यावृत्तिरेव, न कश्चिद्विधिगन्धोऽपीति, अतोऽन्यथावृत्तेर्हेतोरभवनमेव परमार्थः, तत्परमार्थत्वादात्मान्यत्वाभावः, ततश्चाभूतस्वान्यत्वाद्वन्ध्यापुत्रवदविषय एव, न हि वंध्यापुत्रादिरभावः शब्दार्थो भवितुमर्हति, स चाभावस्तेऽन्यापोहस्य निबन्धनं प्राप्तः, ततश्चाप्रतिपत्तिरेव स्यात्, शब्दार्थस्यात्यन्ताभावनिबन्धनत्वात्, वन्ध्यापुत्राप्रतिपत्तिवत्, एवं तावद्यदि स एव भवति अन्यो न भवतीति च विकल्पयोर्विधिवादप्रसङ्गोऽन्यापोहनैर्मूल्यञ्चोक्तौ दोषौ ।

अथ तद्दोषद्वयपरिहारार्थः—

**अथोच्येतान्योऽप्यनन्यो न भवति, अन्यापोहशब्दार्थव्यापित्वात् व्यावृत्त्यैव गमयतीति, अत्रोच्यते यद्यन्य इत्यनन्यो न भवति ततोऽन्यस्यैवानुवदनात् किमुक्तं भवति योऽयमन्यः सोऽन्य एव सन्ननन्य उच्यते, स एव स्वयमेव भवति ततो योऽसावनन्यो नाम सोऽन्य एव सन्ननन्य इत्युक्तं भवति, तस्मात्तस्यैवानन्यशब्देनाप्यनुवदनात् कोऽसावन्यः पृथक्? यद्यर्थान्तरं स्यादन्यान्यत्वतदनन्यत्वात्तुल्यः शब्दार्थः स्यात् यथा वैधर्म्येण घट इत्युक्तेऽघटो नान्यतदनन्यात्तुल्यो दृश्यते न तथेह कश्चिदनन्यशब्देनाभिन्नोऽनन्योऽस्ति, यतोऽस्यान्यान्यस्माद्भिन्नस्य पटवदवृत्तिः स्यात्, अन्योऽन्यापेक्षत्वादन्यत्वस्य, अन्यशब्दार्थस्य चानन्यशब्दार्थाद्भिन्नत्वेऽन्य इत्युक्तेऽनन्यो न भवतीत्यपोहार्थो विधिर्भिन्नः स्यात्, अतुल्येऽन्यस्मिन्नवृत्तेः, घटपटवत्, न त्वस्ति, अन्यस्यैवान्यस्यानन्यत्वात् ।**

(**अथोच्येतेति**) अथोच्येत, अन्योऽप्यनन्यो न भवति-अन्य इति न स एव भवति, नाप्यन्यो

---

**इत्थमुक्तन्यायेनेति,** घटादन्यः पट इत्युक्ते पटः घटो न भवति, एवं पटादन्यो घट इति घटोऽपि पटो न भवतीति घटपटयोर्द्वयोरपि न भवति न भवतीति व्यावृत्तमात्रेऽवस्थितत्वात्तयोः स्वरूपमसिद्धमेव तद्वदेव तदन्ययोरन्यत्वप्रतियोग्यनुयोगिनोः स्वरूपतो ग्रहणासम्भवादन्यापोहार्थनैर्मूल्यमिति भावः । स्वार्थस्यांशोऽप्यदर्शनादिति पादं व्याचष्टे-**स्वार्थस्यांशोऽपीति,** विधिगन्धस्याप्यदर्शनादिति भावः । तदेव भावयति-**अन्यो न भवतीति** अन्यापोहस्यान्यो न भवतीत्यर्थे उच्यमानेऽन्यस्याव्यावृत्तिरेव भवेत्, ततदन्ययोः स्वरूपासिद्धावुभयविषयान्यताग्रहाभावात्, एवञ्चान्यताया अव्यावृत्त्या क्वापि विधिरूपता न सिद्ध्येत्, तथा च तस्य तद्रूपतयाऽन्यस्यान्यरूपतयाऽवृत्तेरन्यथावृत्तित्वं तयोः, तस्मादभवनमेव परमोऽर्थः सवृत्त, अभवनपरमार्थत्वाच्च तत्त्वमपि नास्ति, अन्यत्वमपि नास्ति, अभूतस्वात्मान्यत्वाद्वन्ध्यापुत्रवदविषय एव शब्दः स्यात्, न ह्यभावः शब्दार्थो भवितुमर्हति, ततश्च शब्दान्न कस्याप्यर्थस्य प्रतिपत्तिः स्यादिति भावः । एवमन्यान्योऽर्थः स एव भवति, अन्यो वा न भवतीति विकल्पयोर्विधिवादप्रसङ्गोऽन्यापोहार्थनैर्मूल्यं वा स्यादित्युपसंहरति-**एवं तावदिति** । प्रोक्तदोषद्वयपरिहारायान्यापोहवादी शङ्कते-**अथोच्येतेति** । व्याचष्टे-**अन्योऽपीति,** अन्यस्मिन् तत्त्वमन्यत्वस्य व्यावृत्तिर्वा नोच्यते किन्तु अन्यप्रतियोगिकान्यताया व्यावृत्तिः

न भवति, किं तर्हि ? ततो अन्यस्मादन्योऽनन्यो न भवति, अन्यापोहशब्दार्थव्यापित्वात् व्यावृत्त्यैव गमयति, अतो न विधिप्रसङ्गोऽभावमात्रं वेत्यत्रोच्यते-यद्यन्य इत्यनन्यो न भवति ततोऽन्यस्यैवानुवदनादित्यादि यावदतुल्येऽन्यस्मिन्नवृत्तेरित्युत्तरपक्षः, किमुक्तं भवति योऽयमन्यः सोऽन्य एव सन् अ[न]न्य उच्यते स एव-अनन्यएव-स्वयमेव भवति परमनपेक्ष्येत्यर्थः, ततः किं ? ततो योऽसावनन्यो नाम सोऽन्य एव स एवान्याख्योऽन्यः सन्ननन्य इत्युक्तं भवति, तस्मात्तस्यैव-अन्यत्वस्यानन्यशब्देनाप्यनुवदनात् कोऽसावन्यः पृथक् ? ततोऽन्यस्मादनन्यो नाम नास्तीत्यर्थः, यदि स्यात् परापेक्षः स्यादिति निरूपयति-अन्यान्यत्वतद-नन्यत्वातुल्यः शब्दार्थ इति—अन्यस्मादन्योऽन्यान्यः, तद्भावोऽन्यान्यत्वं, तस्माद्भिन्नेनानन्यत्वेनातुल्यः अन्या-ऽन्यत्वात्, कोऽसौ अन्यान्यत्वतदनन्यत्वातुल्यः ? शब्दार्थः, यथा वैधर्म्येण घट इत्युक्तेऽघटो नान्यतद-नन्यातुल्यो दृश्यते—पटादिरपोह्यः घटशब्देन, न तथेह कश्चिदन्यशब्देन[1] भिन्नोऽनन्योऽस्ति, यतोऽस्मा-[द]न्यस्य[2]—अन्यान्यस्माद्भिन्नस्य पटवद्[3]वृत्तिः स्यात्, अन्यान्यापेक्षत्वाद[न]न्यत्वस्य[4], स च नास्तीत्थम्, किञ्चान्यत्—अन्यशब्दार्थस्य चेत्यादि, अन्यापोहेनायं दर्शयति, यदा चान्यशब्दार्थादनन्यशब्दार्थो भिन्नो भवति तस्माच्चान्यशब्दार्थः, तदाऽन्य इत्युक्तेऽनन्यो न भवतीत्यपोहार्थो विधिर्भिन्नः स्यात्, किं कारणं ? अतुल्येऽन्यस्मिन्नवृत्तेः, घटपटवत्, न त्वस्त्यन्यस्यैवान्यस्यानन्यत्वात्, तस्मात् स्वार्थापोह एव स्यात्।

---

क्रियते, अन्यस्मादन्यो ह्यनन्यस्तद्व्यावृत्तिः क्रियत इति व्यावृत्तिरूपेण वस्तुनो बोधनान्नोक्तदोषप्रसङ्ग इति भावः। समाधत्ते-**यद्यन्य इतीति,** यद्यन्यस्मिन्ननन्यो न भवतीत्युच्यते तर्हि तेनान्यत्वमेवानूदितं भवति, अन्यस्मादन्यस्यैवानन्यत्वादिति भावः। तत्कथमित्यत्राह- **किमुक्तं भवतीति,** अन्यपदार्थोऽन्य एव सन्ननन्यो भवति, अत्रानन्यो ह्यन्य एव, अन्यस्मादन्यस्यैवानन्यत्वात् ततश्चान्य एव प्रतियोगी, स च स्व एवेति परानपेक्ष स्वतो भवनरूपमनन्यत्वं निष्प्रतियोगिकमनन्यत्वमिति यावत्, एवञ्चानन्यान्य-शब्दार्थयोरपृथग्भावः, अनन्यशब्देनाप्यन्यत्वस्यैवानुवदनात् अन्यस्मादन्यस्यैवानन्यशब्दार्थत्वात् ततश्चान्यपदार्थाद्भिन्नस्यानन्य-पदार्थस्याभावे ह्यन्याख्योऽर्थः अनन्यो न भवतीति किं वच इति भावः। **योऽयमन्य इति,** अनेनान्यस्मिन्ननन्यताऽऽपादिता। **ततो योऽसाविति,** अनेन चानन्येऽन्यताऽऽपादिता, योऽसावनन्यः स अन्यत्वे सन्नेव स्वयमेवानन्यो भवति न तु परमपेक्ष्यानन्यो भवति, ततश्च योऽसावनन्यः सोऽन्य एव सन् स्वत एवानन्यो भवति, ततश्चान्यशब्दार्थानन्यशब्दार्थयोरपृथग्भाव इति भावः। यद्यन्यस्मादनन्यपदार्थो भिन्नः स्यात्तर्हि परापेक्षः स्यादित्याह-**यदि स्यादिति**। स्वात्मनि व्यवस्थितस्यान्यस्य यदनन्यत्वं तत्त्वं न स्यात्तर्ह्यनन्यत्वं परापेक्षं स्यात्, स्वतः सिद्धान्यपदार्थव्यतिरिक्तत्वात्, अन्यप्रतियोगिकं यदन्यत्वं तदेवानन्यत्वमतः प्रतियोग्यप्यन्य एव स्वात्मकानन्यरूपं, तस्मादत्र परत्वमन्यव्यतिरिक्तं प्राप्य तदपेक्षं स्यात्, अन्यव्यतिरिक्तप्रतियोग्यपेक्षमनन्यत्वं स्यादिति भावः। एतदेवाह- **अन्यान्यत्वेति,** अन्यान्यत्वतदनन्यत्वाभ्यां शब्दार्थौ न तुल्यौ न समानः, अन्यान्यत्वं हि स्वापेक्षं तदनन्यत्वन्तु अन्यव्यतिरिक्तप्रतियोग्यपेक्षमिति अन्यस्मादन्यस्यान्यान्यत्वं तदनन्यत्वञ्च धर्मौ तत्रान्यान्यत्वं स्वापेक्षान्यत्वं तदनन्यत्वन्तु परापेक्षा-न्यत्वरूपमिति भावः। व्याचष्टे **अन्यस्मादिति,** अन्यस्माद्यदनन्यो व्यतिरिक्तस्तदाऽनन्यादन्यो न समानो व्यतिरिक्तत्वादिति भावः। तत्र वैधर्म्यदृष्टान्तमाह-**यथा वैधर्म्येणेति,** घट इत्युक्ते घट शब्देनापोह्यो योऽघटः पटादिः सोऽन्यतदनन्याभ्यामसमानः, घटान्यपटानन्ययोरसमानतेति यावत्। **न तथेहेति,** अन्यशब्देनापोह्यो अन्यस्मात् भिन्नोऽनन्यो नाम न कश्चिदस्ति येनान्यशब्दोऽतुल्येऽनन्येऽवृत्तिः स्यात् अनन्यशब्दोऽप्यन्यस्मिन्नवृत्तिः स्यात्, यथा घटः पटे पटो वा घटे न वर्तते तथेति परन्तु तथा नास्तीति भावः। अन्यानन्ययोरभेदे दोषान्तरमाह-**यदा चान्येति,** अन्यशब्दार्थानन्यशब्दार्थयोर्भेदे सति अन्यशब्दस्या-

---

१ सि. क्ष. छा. शब्देनाभिन्नो०। २ सि. क्ष. छा. यतोसान्यस्य। ३ सि. क्ष. छा. घटव०। ४ सि. क्ष. छा. अन्योन्यापेक्षत्वादन्यत्वस्य।

इतर आह—

**स्यादेतदेवं यद्यन्य एवान्यत्वे स्थितोऽनन्य उच्येत परापेक्षान्यत्वात् स एवान्य इति, किन्तर्हि स्वापेक्षान्यत्वादेव, योऽसौ तदतत्त्वातुल्यः स स्वतोऽन्यस्मादेवान्यस्मात् अन्यः सन् घटात् पटानन्यत्ववदनन्यः, न हि घटस्य इतरापेक्षान्यत्ववदन्यत्वम्, पटस्य वाऽनन्यत्वं घटान्यत्ववत्, यथोक्तद्वित्वतुल्यतायामपि तत एवात्मनोऽनन्यत्वं तत्त्वम् तस्मादन्यत्वमपि स्वत एव, अनन्यत्वमपि तथेति व्यवस्थिते भवत्यन्यापोह इति ।**

(**स्यादेतदेवमिति**) स्यादेतदेवं यद्यन्य एवान्यत्वे स्थितोऽ[न]न्य उच्यते परापेक्षान्यत्वादनन्यः स एवान्य इति, किं तर्हि? स्वापेक्षान्यत्व एवान्य इत्युच्यते, तद्भावयितुकाम आह-योऽसावित्यादि यावद् घटात् पटानन्यत्ववदनन्यत्वमिति, योऽसौ तस्यान्यस्यातद्भावेन-अतत्त्वेनातुल्यः आत्मीयेन स स्वतोऽन्यस्मादेव अन्यस्मात्–आत्मान्यत्वा[द]न्यः सन् अ[न]न्य इत्युच्यते, निदर्शनं अतुल्यं हि घटस्यान्यत्वं पटाद[न्य]स्मादन्यस्मात्, न हि घटस्येत्यादिना घटान्यत्वस्य पटानन्यत्वेनासङ्करं दर्शयति, या[व]दितरान्यत्ववदन्यत्वम्, पटस्य वेत्यादिना पटा[न]न्यत्वस्य घटान्यत्वासङ्करं यावद्घटान्यत्ववदिति भावितार्थमेष दृष्टान्तोऽयमर्थोपनयः यथोक्तद्वित्वतुल्यतायामपीत्यादि- त्वदुक्ता या द्विष्ठत्वादन्यता—परस्परापेक्षता तस्यां तुल्यतायामपीतरेतरापेक्षान्यतायां तत एव—स्वत एवात्मनोऽनन्यत्वं तत्त्वं स एव घटोऽनन्य[:]शेषः पूर्वेण तुल्योऽन्यत्वभावनाग्रन्थेनासङ्करप्रदर्शनग्रन्थः, तस्मादन्यत्वमपि स्वत एव, अनन्यत्वमपि तथेति व्यवस्थिते भवत्यन्यापोह इति।

अत्रोच्यन्ते नव दोषाः—

**नन्वेवं सोऽपि अन्यस्मात् अन्य एव भवन् अनन्यो भवति, तस्यान्यस्य स्वात्मनि व्यवस्थितस्य तदनन्यत्वं तत्त्वमपोहमानोऽन्यापोहस्तदपोह एव भवति नान्यापोह इति स्ववचनाद्यशेषपक्षविरोधापत्तिः, विधिवादापत्तिश्चैवम्, अथान्यापोह इति चानन्योऽपोहो न भवतीत्यपि न परिहार एव, अन्यापोह इत्यनन्याभावापोहो न भवति, यतोऽर्थान्तरापोहेन स्वार्थेऽपोहे वृत्त्यर्थेऽन्यविशिष्टोऽपोह इति, ।**

**नन्वेवमित्यादि** यावत् स्ववचनाद्यशेषपक्षविरोधापत्तिरिति, नन्वित्यनुज्ञापयति परम्, नन्वित्थं

नन्येऽवृत्तेरन्य इत्युक्तेऽनन्यापोहोऽन्यापोहाद्भिन्नोऽर्थः स्यात्, न चैवमस्ति, अन्यान्यानन्ययोरभेदेनान्यशब्दस्यानन्येऽपि वृत्तेरनन्यो न भवतीत्यनेनान्यापोह एवोक्तः स्यादित्यन्यशब्दस्य य स्वार्थमार्गेऽत्रापि ह कृत स्यादिति भाव । अन्योऽन्य सन्ननन्य इति यदुक्तं तत्रेतर शङ्कते-**स्यादेतदेवमिति** । व्याचष्टे-**यद्यन्य इति,** अन्य परापेक्षान्यत्वान्नानन्य, किन्तु स्वापेक्षान्यत्वादनन्य इति भाव । इदमेव स्फुटीकरोति-**योऽसाविति,** अन्यस्य ह्यनन्यत्वं न तत्त्वमत एवातुल्यमन्यत्वमनन्यत्वेन, अतुल्यत्वादेव ततो नानन्य उच्यते, किन्तु स्वतोऽन्यस्मादेवान्यस्मात्, यथा घट इत्यत्र घटान्यत्वपटानन्यत्वयोर्न तुल्यत्वम्, तथा चान्यत्वानन्यत्वयोः न परस्परापेक्षत्व किन्तु स्वत एवेति भाव । तत्रान्यतायाः परानपेक्षत्वं दर्शयति-**न हि घटस्येत्यादिनेति** अन्यापेक्षया स इति, तदपेक्षयाऽन्य इति तदन्ययो परस्परापेक्षतायां तुल्यतायामपि अनन्यत्वं स्वत एव न तु परापेक्षमित्याह-**यथोक्तद्वित्वेति,** अन्यापेक्षया स, तदपेक्षयाऽन्य इति तयोर्द्वयोरपि स्वरूपतः सिद्धौ द्विष्ठ तदन्यत्वं सिद्ध्यति, तस्मात् स्वत एवान्यत्वं तत्त्वञ्च वस्तुनः, अन्यथा तदन्ययो स्वरूपाग्रहात् कोऽसावन्यः यदपोहादन्यापोहः स्यात्, कुतो वाऽन्यो न भवतीति सर्वं पूर्ववदिति भावः । पर्यवसितमाह-**तस्मादन्यत्वमिति** । एवं वादिनोक्ते समाधत्ते-**नन्वेवमिति** । व्याचष्टे-**नन्वितीति,**

१ सि. क्ष. छा पटादन्य० । २ सि. क्ष. छा. तद्विशिष्टवा० ।

सोऽपि योऽन्योऽन्यस्मात्–अन्यस्वरूपात् स्वत एव सिद्धान्यत्वात्–अन्याख्यादर्थात् अन्य एव भवन्–अन्यः सन् अनन्यो भवति स एव भवति, तस्यान्यस्य स्वात्मनि व्यवस्थितस्य तदनन्यत्वं तत्त्वं–आत्मत्वमपोहमानो-ऽन्यापोहः तदपोह एव भवति–स्वापोह एव, नान्यापोहस्त्वदिष्टः परापोह इत्यर्थः, इति–इत्थं स्ववचनविरोधोऽन्यापोह इति वचनात्, तथाभ्युपगमादभ्युपगमविरोधः, लोकविरोधश्चेत्थं लोकेऽदृष्टत्वात् स्वार्थप्रतीतेः, तथा प्रत्यक्षदर्शनात् प्रत्यक्षविरोधः, अनुमानविरोधश्चैवमनुमानादित्यशेषाः पक्षदोषा आपन्नाः, विधिवादापत्तिश्चैवम्, इत्येवं तावद्वस्तुनो लक्षणानुसारेण दूषणमुक्तम्, स्यान्मतमन्यापोहशब्दार्थानुसारच्छायामात्रेण परिहरामीति, तद्यथा–अन्यापोह इति चानन्यापोहो न भवतीति अन्यविशेषणविशिष्टापोहस्यानन्यविशेषणविशिष्टापोहः प्रतिपक्षः स न भवतीत्यर्थः, स चान्योऽन्यस्मात्, अतोऽन्यापोह एवात्रापीति, अत्रोच्यते–इत्यपि न परिहार एव, कस्मात्? अन्यापोह इत्यनन्याभावापोहो न भवतीति यतोऽर्थान्तरापोहेन स्वार्थेऽपोहे वृत्त्यर्थेऽन्यविशिष्टोऽपोह इति, किमुक्तं भवति–अनन्यस्याभावोऽन्यः अन्यस्य वाऽभावोऽनन्यः प्रतिपक्षः तद्वदपोहस्यानपोहः प्रतिपक्षः, अनपोहस्यापोह इति भवति।

तं दृष्टान्तत्वेन न्यायं दर्शयति—

**यथाऽपोह इत्यनपोहो न भवति तथा अन्यापोह इत्युक्तेऽन्याभावार्थान्यशब्दतायां सत्यामनन्याभावस्य व्यावृत्तेरपोहो भवतीत्यन्यापोहार्थः संवृत्तः, तस्य चेदनन्याभावस्यान्यस्यापोहो न भवति न तर्ह्यनन्यस्यानपोहो न भवति तत्प्रतिपक्षत्वादनन्यानपोहस्येति, तथेहानन्य इत्यन्यशब्दार्थे त्वदीयेऽन्यापोह इति नान्याभावस्यापोहो न भवति, किन्तु स्वाभावस्यापोहो न भवतीत्यन्यापोह एव न भवति, किन्तु अनन्यापोहः स्वापोह एवेत्यनिष्टः ते प्राप्तः, अन्यस्यैवापोहो नानन्यस्येत्यवधारणान्नैष दोष इति तन्न, तत्रापि कोऽन्यः?**

घटादिवस्तु तदपि–अनन्यदपि, अन्यदपि, तस्य तत्त्वमन्यत्वञ्च स्वत एव, तत्त्वन्तु नान्यत्वमन्यत्वमपि न तत्त्वम्, तथा चानन्यद्रूपं तदपि स्वतः सिद्धान्यत्वाद् यदेव भवदनन्यदुच्यते त्वया, तथा चानन्यत्वमपि घटादिवस्तुनस्तत्त्वम्, अन्योऽनन्यो न भवतीति वदता च त्वया तदपोह एव कृतः स्वापोह एव कृतो न परापोह इति स्ववचनविरोध इति भावः। अभ्युपगमादिविरोधानुद्भावयति–**तथाभ्युपगमादिति,** परापोहाभ्युपगमादित्यर्थः। **स्वार्थप्रतीतेरिति,** अन्यापोह इत्यत्रान्यपदात् स्वार्थप्रतीतेर्लोकेऽदृष्टत्वाल्लोकविरोध इति भावः। घटे दृष्टे पटादेरन्यस्यैव भेदानुभवात् प्रत्यक्षविरोध इत्याह–**तथा प्रत्यक्षेति।** तथैवानुमानादनुमानविरोधमाह–**अनुमानेति।** तत्त्वान्यत्वयोः स्वतस्त्वे निरपेक्षत्वेन विधिरूपतापत्तिः, न तु व्यावृत्तिरूपता सप्रतियोगिकत्वेन स्वतस्त्वविरोध इत्याशयेनाह–**विधिवादेति।** अर्थान्तरापोहं स्वार्थे कुर्वती श्रुतिरित्यादिलक्षणानुसारेणान्यापोहदूषणमुक्तमित्याह–**इत्येवं तावदिति।** ननु यथा घटादेरघटादि प्रतिपक्षः, तदपोहः क्रियते, तथाऽन्यापोहस्य प्रतिपक्षोऽनन्यापोहः, तस्यापोहः क्रियते अनन्यापोहो न भवतीति चान्यस्मादन्य इत्यनन्यापोहाद्यन्यापोह एवेति नोक्तदोषा इत्याशङ्कते–**स्यान्मतमिति।** परिहरति–**इत्यपीति,** स्वतः सिद्धान्यस्मादन्यत्वादनन्योऽन्यशब्देनोच्यते, तस्य प्रतिपक्षोऽनन्याभावः, तदपोहोऽन्यशब्दार्थः, न भवतीत्यपोहशब्दार्थः, तथा चानन्याभावापोहो न भवतीत्यन्यापोहशब्दार्थः। तदेव समर्थयति–**किमुक्तं भवतीति,** अन्यस्य प्रतिपक्षोऽनन्याभावः, अन्याभावार्थान्यशब्दत्वात्, अनन्यस्य चान्याभावः प्रतिपक्षः, तथाऽनन्याभावस्यान्यः, अन्याभावस्यानन्यः प्रतिपक्षः, अपोहस्यानपोहः, अनपोहस्यापोहः, प्रतिपक्षोऽर्थान्तरत्वादिति भावः। अन्यशब्दार्थोऽनन्यः, तत्प्रतिपक्षोऽनन्याभावस्तदपोहोऽर्थान्तरापोहं स्वार्थे कुर्वतीति न्यायेनान्यशब्दार्थः, तस्यापोहो न भवतीत्यनेन प्रतीयत इति अनन्याभावापोहो न भवतीत्यन्यापोहपदार्थ इत्यत्र न्यायं दृष्टान्तेन समीकरोति–**यथापोह इति।** यथाऽपोहशब्देनापोहप्रति-

**कोऽनन्यः ? कोऽपोहः ? कोऽनपोहः ?** इति विचारणायामनन्याभाव एव, उक्तवदनवधारणात् विधिवादापत्तेः सर्वथाऽन्यापोहनैर्मूल्यमिति स्थितमेतत्, अनन्याभावस्यापोहो न भवतीति ।

**यथाऽपोह इत्यनपोहो न भवतीति,** तथाऽन्यविशेषणापोहप्रदर्शनार्थमित्यादिदार्ष्टान्तिकम्, किमुक्तं भवति यथाऽपोह इत्युक्तेऽनपोहो न भवतीति पदार्थे द्विःप्रतिषेधः प्रकृत्यापादनात् अपोह एवार्थो भवति तथान्यविशेषणविशिष्टस्यापोहस्य प्रदर्शनार्थमन्यापोह इत्युक्तेऽन्यस्याभावः-अनन्यः, सोऽर्थोऽस्येति अन्याभावार्थोऽन्यशब्दः, तद्भावोऽन्याभावार्थान्यशब्दता, सत्याञ्च तस्यां-अन्याभावार्थान्यशब्दतायामन्यापोह इत्यनन्याभावस्यानन्यापोहस्य तद्व्यावृत्तेरपोहो भवतीत्यन्यापोहार्थः संवृत्तः, तस्य चेदनन्याभावस्यान्यस्यापोहो न भवति न तर्ह्यनन्यस्यानपोहः न भवति, तत्प्रतिपक्षत्वाद[न]न्यानपोहस्येति यथा विशेष्यविपक्षव्यावृत्तः तथे-हैतस्मिन् अनन्यो भवतीत्यन्यशब्दार्थे त्वदीयेऽन्यापोह इत्यन्याभावस्यापोहो न भवति, [ इति न भवति किन्तु ] स्वस्य अनन्यस्याभावो-अन्यः-अनन्याभावः, तस्यापोहो न भवति इत्यन्यापोह एव न भवति, अनन्यापोहः स्वापोह एवेत्यनन्याभावार्थः, स चानिष्टस्ते शब्दानुसारेणापि दोषः प्राप्तः, स्यान्मतं-अन्यस्यैवापोहो नानन्यस्येत्यवधारणान्नैष दोष इति, तच्च न, तत्रापि कोऽन्यः ? कोऽनन्यः ? कोऽपोहः ? कोऽनपोह ? इति विचारणायामनन्याभाव एव, उक्तवदनवधारणात्-अन्यस्यैव नानन्यस्येति विधिवादापत्तेः, अनन्यस्यापोह एव, नानपोह इति स्वस्यापोहानपोहाभ्यामनवधारणाभ्यां विधिप्रतिषेधादन्यानन्यविचारे च विधिप्रसङ्गात्

पक्षस्यानपोहस्य व्यावृत्तिः क्रियतेऽनपोहो न भवतीति तथाऽन्यापोहशब्देनापि अन्याभावस्वरूपानन्यस्यान्यशब्दार्थत्वे तत्प्रतिपक्षस्यानन्याभावस्य योऽपोहस्तद्व्यावृत्तिः प्रतीयतेऽनन्याभावापोहापोहार्थ तस्य सत्त्व इति व्याचष्टे-**तथाऽन्यविशेषणेति,** अन्यस्वरूपं यद्विशेषणं तद्विशिष्टापोहशब्दार्थप्रदर्शनायेत्यर्थः । अनपोहो न भवतीत्यस्य तात्पर्यार्थोऽपोह एव भवतीति, नञ्-द्वयेन प्रकृत्यर्थप्रकाशनादित्याह-**अनपोह इति ।** अन्यापोह इत्यत्रान्यशब्दोऽनन्यपरः, अनन्यस्यान्यस्य तस्यार्थ इति दर्शयति-**तथाऽन्येति ।** अन्यशब्दार्थं दर्शयति-**अन्यस्याभाव इति,** अन्यापोहशब्दार्थोऽनन्यापोह इति स्वरूपं, तत्रानन्यशब्देनानन्याभावापोहोऽर्थोऽन्यापोह स्वार्थे पूर्वनीत्यादिवचनेन प्रतीयते, स न भवतीत्यपोहशब्दार्थः अनन्यापोहव्यावृत्तिर्न भवतीति भावः । एवञ्चान्यापोह इत्यत्रान्यशब्दस्यानन्याभावापोहार्थ, तत्र यद्यनन्याभावस्यापोहो न स्यात् तर्ह्यनन्यस्यानपोह एव स्यात्, तथा चानन्यापोहाभावादन्यापोह एव न स्यात्, अनन्यापोहस्य हि प्रतिपक्षोऽनन्यानपोह एवास्ति, तस्माद्यथा तस्माद्विपक्षाद्व्यावर्त्यते तथैव अनन्यो न भवतीति त्वदिष्टान्यशब्दार्थानन्यत्वपक्षेऽन्यापोहशब्दात् अन्याभावापोहो न भवतीतीदं न प्रतीयेत किन्तु स्वाभावस्यापोहो न भवतीत्येव प्रतीयेत, स्वाभावापोहस्यापोहोऽनन्यापोह एव, न त्वन्यापोह इत्याशयेनाह-**तस्य चेदिति । अनन्यो भवतीति,** अन्यशब्दार्थोऽनन्यो भवतीति त्वदीये पक्षे इत्यर्थः, अत्र पक्षेऽन्यापोहशब्दार्थः अनन्याभावापोहो न भवतीत्येव, न त्वन्याभावस्यापोहो न भवतीति, ईदृशोऽन्यापोहो न वस्तुतोऽन्यापोह किन्त्वनन्यापोह एवेत्यनिष्टप्रसङ्ग इति भावः । यद्यप्यन्यशब्दार्थोऽन्योऽनन्योऽपि भवति तथापि अन्यापोहशब्देनान्यस्यैवापोहः क्रियते नानन्यस्येति नायं दोष इत्याशङ्कते-**स्यान्मतमिति ।** निराकरोति-**तच्च नेति,** अस्मिन्नप्यवधारणेऽन्योऽर्थः किं स एव भवति विधिना, उतान्यो न भवतीत्यपोहेनेति चिन्तायामाद्ये विधिवादस्य द्वितीयेऽन्यत्वस्योभयविषयत्वात्तयोर्विधिरूपेणाग्रहणे कोऽन्यः कोऽनन्यः कोऽपोहः कोऽनपोह इत्यन्यस्यानिर्धारणस्य च प्रसङ्गेन विधिवादापत्तेरन्यापोहनैर्मूल्याच्च तथावधारणासम्भव इति भावः । अपोहशब्दार्थविवक्षयाऽवधारणासम्भवमाह-**अनन्यस्यापोह एवेति ।** एवञ्च भवन्मतेऽन्यापोहशब्दार्थोऽनन्याभावस्यापोहो न भवतीति स्थितमित्याह-

१ सि. क्ष. डे. छा. °भावस्यानन्यस्या० । २ छा. एतस्मिन्ननभवतीत्यन्यस्या० । ३ छा. °सारणाविशेषः ।

सर्वथाऽन्यापोहनैर्मूल्यमित्ययमपि न निःसरणोपायः, स्थितमेतदनन्याभावस्यापोहो न भवतीति यतोऽर्थान्तरापोहेन स्वार्थाभिधानेन स्यात् ।

एवं प्रक्रमेऽपि च न स कश्चिदर्थो भविता, उभयतोऽप्यभावप्रसङ्गात्, स्वार्थस्यांशोऽपि न दृश्यत एव, अनन्यो न भवतीत्युच्यमाने उभयतोऽपि न भवति न भवतीत्यनन्यस्याव्यावृत्तिरेव, न कश्चिद्विधिगन्धोऽपीत्यन्यथावृत्तेरभवनपरमार्थत्वादभूतस्वानन्यत्वाद्वन्ध्यापुत्रवदविषय एव, स च निबन्धनमन्यापोहस्य स्यात्, येषामपि चार्थान्तराणां मध्ये यत्तदर्थान्तरं तत् किं भवदेव भवति ? अभवद्वा ? यदि तावत् स एव भवन्नर्थोऽर्थान्तरत्वेन स्थितः तदा तच्छब्दोत्पाद्यविज्ञानविषयस्य सिद्धत्वात् तस्मिन्नव्यावृत्त्या विधिवृत्त्यैकगतिगुरुतरप्रतिपत्त्यात्मके बहुतरविषये विधिवादे प्रतिपन्ने किमपोहेन पुनः क्रियते ?

**एवं प्रक्रमेऽपि चेत्यादि,**—एवमापादितशब्दार्थन्यायेऽपि च न स कश्चिदित्यादिनाऽपोहनैर्मूल्यमापादयन् उपसंहरति पूर्वान्यविकल्पदूष[ण]वत् विपर्ययेणानन्यविकल्पदूषणं यावदभूतस्वानन्यत्वाद्वन्ध्यापुत्रवदविषय एव, स च निबन्धनमन्यापोहस्य स्यादिति गतार्थम्, येषामपि चार्थान्तराणामित्यादि, यदप्युक्तमर्थान्तरापोहेन स्वार्थाभिधान इत्यत्रार्थान्तराणि—अर्थेभ्योऽन्यानि, तेषामर्थान्तराणां मध्ये यत्तदर्थान्तरं सोऽर्थादन्योऽर्थः ननु किमिति पूर्ववद्विकल्पद्वयम्, भवदेव अर्थान्तरमपोह्य ? उत न वा भवदिति प्रश्नः, यदि तावदित्यादि प्रथमविकल्पे दूषणम्—स एव भवन्नर्थोऽर्थान्तरत्वे[न] स्थितः स भवतीति चेदिष्टः तच्छब्दोत्पाद्यविज्ञानविषयः तस्य विषयस्य सिद्धत्वात् तस्मिन्नव्यावृत्त्या सिद्धः, सा च प्रतिपत्तिरस्मदिष्टाया विधिवृत्त्यैकगतेर्लघीयस्या एकार्थविषयाया गरीयसी तेषामर्थानां भूयसां प्रतिपत्तिः स च विधिवाद एव भूयोऽर्थविषयो गरीयःप्रतिपत्त्यात्मकश्च तस्मिंश्च विधिवृत्त्यैकगतिगुरुतरप्रतिपत्त्यात्मके बहुतरविषये विधि

**स्थितमेतदिति,** निगमनमेतदिदं । भवतु नोऽयं को दोष इत्यत्राह—**एवं प्रक्रमेऽपि चेति ।** व्याकरोति—**एवमापादितेति,** अन्योऽनन्यो न भवतीत्युच्यते तथापि अन्यापोहशब्दार्थव्यापारेणापादितपक्षेऽपि न कोऽप्यर्थो विधिरूप सेत्स्यति, अन्योऽनन्यो न भवतीति सोऽप्यनन्यो न भवतीत्युभयतोऽप्यभावप्रसङ्गात् विधिरूपस्यार्थस्य गन्धोऽपि न गम्यते, तस्मादभवनमेव परमार्थः स्यात्, अन्यथा तु ग, अत एव च नास्ति स्वमनन्यमपि, अतोऽभूतस्वानन्यत्वाद्वन्ध्यापुत्रवच्छब्दस्याविषयत्वात्तस्यान्यापोहनिबन्धनत्वेऽप्रतिपत्तिरेव स्यात्, शब्दार्थस्यान्यापोहस्याभावनिबन्धनत्वात्, वन्ध्यापुत्राप्रतिपत्तिवदित्यन्यापोहनैर्मूल्यमिति भावः । शब्दस्यार्थान्तरापोहेन स्वार्थाभिधायकत्वं पूर्वपक्षिणा यदुक्तं तत्रापोह्यं यदर्थान्तरं अन्यार्थरूपं तत् किं भवदेवार्थान्तरमपोह्यमुच्यते उताभवदेवार्थान्तरमपोह्यमिति पूर्ववदेव विकल्पः कर्तव्य इत्याह—**येषामपि चेति ।** अर्थान्तराणां मध्ये विवक्षितस्यार्थान्तरस्यापोह्यस्य भवत एवापोहो यदि विवक्ष्यते तत्र दोषमाह—**यदि तावदित्यादीति,** यदि स एवार्थो भवदर्थान्तरमुच्यते तर्हि स एवार्थान्तराणीति तत्र स इति तच्छब्देनोत्पद्यमानं विज्ञानं विध्यात्मकं सार्थविषयम्, तस्यैव चार्थान्तरत्वे तद्विज्ञानं विध्यात्मकबहुतरविषयम्, अव्यावृत्तविषयम् अर्थान्तरव्यापारेण विज्ञानस्याकाङ्क्षाभावविज्ञानविषयत्वात्, तस्माद्विधिनैवाव्यावृत्त्या स इति विज्ञानविषयस्य प्रतिपत्त्याऽर्थान्तरापोहकल्पना निष्फलेति भावः । एतदेवाह—**तच्छब्दोत्पाद्येति,** स एवार्थान्तराणीत्यत्र तच्छब्देनोत्पाद्यं यद्विज्ञानं तद्विषयो व्यावृत्तिव्यतिरेकेणैव सिद्ध इति भावः । **सा चेति,** स एवार्थान्तराणीति प्रतिपत्तिर्गुर्वी बहुतरार्थान्तरविषयत्वात्, कस्माद्गुर्वी ? अस्मदिष्टविधिवृत्त्यैकविषयाया स इति प्रतिपत्तेरिति भावः । अर्थान्तराणाञ्च तद्रूपत्वे विध्यात्मकत्वात्पत्त्याऽपोहकल्पना निष्फलेत्याह **स च विधिवाद एवेति ।** तत्र कारणमाह—**सर्वार्थेति ।** तथापि प्रयोजन-

१ सि. क्ष. छा. डे. तत्र नाभ ।

वादे प्रतिपन्ने किमपोहेन पुनः क्रियते ? सर्वार्थविषयस्य स एवेति विधिप्रतिपत्तेः प्रागेव वृत्तत्वात्, त्वमेव हि बहुतरार्थविषयशब्दविधिवादी संवृत्तोऽनन्तार्थशब्दवादी चेत्यतः किमपोहकल्पनया क्रियते ?

**तदा ह्यर्थापत्त्या अनुगतसामान्यज्ञानं व्यावृत्तिसामान्यज्ञानञ्च भवति यदि स्वार्थः अर्थान्तराणि चैतदुभयं स्वत एव सिद्धात्मस्वभावं विधिनैव भवतु, को वारयति ? असत्योपाधिसत्यशब्दार्थत्वात् पूर्ववत् ।**

**तदा ह्यर्थापत्त्येत्यादि,** स्वार्थश्च विवक्षितोऽर्थः ये चान्येऽर्था अर्थान्तराणि तदेतदुभयं स्वत एव सिद्धात्मस्वभावं विधिनैव, यत्पुनरत्र सन् घट इत्युक्ते सदित्यनुगमसामान्यज्ञानं असन्नघटश्च न भवतीति व्यावृत्तिसामान्यज्ञानञ्च तदुभयमर्थापत्त्या यदि भवति भवतु गुडमाधुर्यवदुरमर्जनीकृतात्मस्वरूपं को वारयति ? असत्योपाधिसत्यशब्दार्थत्वात् पूर्ववत्, एवं तावद्भवदर्थान्तरञ्चेद्भवति तत उक्तो दोषः ।

**अथार्थान्तरं न भवतीति मन्यसे ततोऽनवस्था प्रश्नस्य, पूर्वव्याख्यातान्यशब्दार्थप्रश्नानवस्थानवत्, अर्थान्तरस्य वोभयविषयत्वात्तदग्रहणे किं तदर्थान्तरम् ? कुतो वाऽर्थान्तरं न भवतीत्युच्यते ? इति द्विष्ठत्वादर्थान्तरत्वं निर्धार्यम्, एवन्तु न स कश्चिदर्थो भविता, उभयतोऽप्यभावप्रसङ्गात् स्वार्थस्यांशोऽपि न दृश्यत एव, अर्थान्तरं न भवतीत्युच्यमाने उभयतोऽपि न भवति न भवतीत्यर्थान्तरस्याव्यावृत्तिरेव न कश्चिद्विधिगन्धोऽपीति अन्यथा वृत्तेरभवनपरमार्थत्वादात्मार्थान्तरत्वाभावः, ततश्चाभूतस्वार्थान्तरत्वाद्वन्ध्यापुत्रवदविषय एव, स च निबन्धनमर्थान्तरापोहस्य स्यात्, अथोच्यतेऽर्थान्तरमनर्थान्तरं न भवतीति, अत्रोच्यते यद्यनर्थान्तरं न भवति ततोऽर्थान्तरस्यैवानुवदनात्, किमुक्तं भवति यदर्थान्तरं तदर्थान्तरमेव सदनर्थान्तरमुच्यते तदेव स्वयमेव भवति ततो यदिदमनर्थान्तरं नाम तदर्थान्तरमेव सदनर्थान्तरमित्युक्तं भवति, तस्मात्तस्यैवानर्थान्तरशब्देनाप्यनुवदनात् किं तदर्थान्तरं पृथक् ? यद्यर्थान्तरं स्यादर्थान्तरार्थान्तरत्वतदनर्थान्तरत्वातुल्यः शब्दार्थः स्यात्, यथा वैधर्म्येण घट इत्युक्तेऽघटो नार्थान्तरतदनर्थान्तरातुल्यो दृश्यते न तथेह कश्चिदनर्थान्तरशब्देनाभिन्नमनर्थान्तरमस्ति यतोऽस्यार्थान्तरस्य पटवदवृत्तिः स्यात्, अर्थान्तरशब्दार्थस्य चानर्थान्तरशब्दार्थाद्भिन्नत्वेऽर्थान्तरमित्युक्तेऽनर्थान्तरं न भवतीत्यपोहार्थो विधिर्भिन्नः स्यात्, अतुल्ये तस्मिन्नवृत्तेः, घटपटवत्, स्यादेतदेवं यद्यर्थान्तरमेवार्थान्तरत्वे स्थितमनर्थान्तरमुच्येत परापेक्षार्थान्तरत्वात्तदेवार्थान्तरमिति, किन्तर्हि ? स्वापेक्षार्थान्तरत्वादेव, योऽसौ तदतत्त्वातुल्यः तस्य स्वतः**

मन्यापोहस्य चेन्नहि तस्य प्रतीतिरर्थापत्त्या स्यादित्याह—**तदा हीति** । स्वार्थव्यावर्त्ययोः घटपटयोर्विधिना स्वरूपतः प्रतिपन्नो सत्या घटो विवक्षितोऽर्थः, पटश्च ततोऽर्थान्तरं तस्माच्च व्यावृत्तो घट इति अर्थान्तरतायामज्ञातायां तेथ ज्ञानं पश्चादर्थाद्भवति न तु वस्तुप्रतिपत्तिकाल एव, तथा यदि स्वीक्रियते भवतु नाम, नास्माकं तत्राग्रहः, अस्मन्मते असत्योपाधिसत्यशब्दार्थतया सिद्धत्वादित्याशयेन व्याकरोति—**स्वार्थश्चेति** । सद्घटयोः स्वरूपतः सिद्धस्वभावः, तत्र सत्तासामान्यज्ञानमन्यव्यावृत्तिज्ञानञ्च परत इत्याचष्टे यदि ततो नास्माकं विरोध इत्याह—**सन् घट इत्युक्त** इति । द्वितीयं विकल्पमपहस्तयितुमाह—**अथार्थान्तरमिति** । अर्थान्तरमर्थान्तरं न भवतीत्यत्र निषेधप्रतियोगि यदर्थान्तरं तदपि किं भवत् किं वाऽभवदिति प्रश्ने आद्ये विधिवादप्रसङ्गः, द्वितीये

तस्मादेव पटाद्घटानर्थान्तरत्ववदनर्थान्तरत्वम्, नन्वेवं तदप्यर्थान्तरं अर्थान्तरादर्थान्तरमेव भवदनर्थान्तरं भवति, तस्यार्थान्तरस्य स्वात्मनि व्यवस्थितस्य तदनर्थान्तरत्वं तत्त्वमपोहमानोऽर्थान्तरापोहस्तदपोह एव भवति नान्यापोह इति स्ववचनाद्यशेषपक्षविरोधापत्तिः, अथार्थान्तरापोह इत्यनर्थान्तरापोहो न भवतीत्यपि न परिहार एव, अर्थान्तरापोह इत्यनर्थान्तराभावापोहो न भवति यत इत्यादिः स एव ग्रन्थोऽत्र द्रष्टव्यः, एवमुपक्रमेऽपि च न स कश्चिदर्थो भविता, उभयतोऽप्यभावप्रसङ्गात्, स्वार्थस्यांशोऽपि न दृश्यत एव, अनर्थान्तरं न भवतीत्युच्यमाने उभयतोऽपि न भवति न भवतीत्यनर्थान्तरस्याव्यावृत्तिरेव, न कश्चित् विधिगन्धोऽपीत्यन्यथावृत्तेरभवनपरमार्थत्वादभूतस्वानर्थान्तरत्वाद्वन्ध्यापुत्रवदविषय एव स च निबन्धनमर्थान्तरापोहस्य स्यादिति ।

( अथेति ) अथार्थान्तरं न भवतीति मन्यसे ततोऽनवस्था प्रश्नस्य, पूर्वव्याख्यातान्यशब्दार्थप्रश्नानवस्थानवत्, अर्थान्तरस्य चोभयविषयत्वादित्यादिशेषमन्यत्वस्य चोभयविषयत्वादित्यादिना तुल्यं यावत् स च निबन्धनमन्यापोहस्य स्यादिति, [ अथोच्यत इत्यादि ] यावन्न भवतीति पूर्ववदेव पूर्वपक्षः, उत्तरपक्षोऽपि यद्यनर्थान्तरमित्यादि तथैव, यावदतुल्ये तस्मिन्नवृत्तेरिति, योऽसौ तदतत्त्वातुल्य इत्यादि पूर्ववदेव पूर्वपक्षः, यावत्तस्मादेव पटात् घटानर्थान्तरवदनर्थान्तरत्वमिति, तत्रोत्तरपक्षो नन्वेवं तदप्यर्थान्तरमित्यादि यावदशेषपक्षविरोधापत्तिरिति इयदक्षरविपर्यासेन गतार्थः, अपरस्तु तुल्याक्षर एवेति, अत्रार्थान्तरापोह इत्यनर्थान्तरापोहो न भवतीति पूर्ववत् परेण परिहारेऽभिहिते इत्यपि न परिहार एव, अन्यापोह इत्यनन्याभावापोहो न भवतीति यत इत्यादिः स एव ग्रन्थोऽत्रापि तुल्यार्थ इति न विशिष्य लिख्यते तथात्र द्रष्टव्य इत्यतिदिश्यते, एवमुपक्रमे न स इत्यादि स एव ग्रन्थः तुल्यार्थो यावदन्यापोहस्य स्यादिति, विशेषस्त्वर्थान्तरस्वार्थस्यांशोऽपि दर्शनात्, श्रुतेः सम्बन्धसौकर्यमित्येतत्पादत्रयं दूषितम् ।

चतुर्थपादेन यत्त्वयोक्तं न चास्ति व्यभिचारितेति सा तावदास्तां स्वपक्षगतापोहवादिनः तवाव्यभिचारिता विप्रकृष्टत्वात्, भेदपक्षे संशयदोषापादनार्थं यत्तूक्तं त्वया व्यभिचारत इति, तन्न विधिवादे तदतद्भावात्मकस्य संशयज्ञानस्य प्राप्तत्वात् किमिव न प्राप्तमभिधानम्? अत्र तूक्तन्यायेन त्वत्पक्षे संशयाद्यनास्पदम्, तदतद्भावभावात्मकशब्दार्थत्वात् तद्व्यक्तेरस्वार्थत्वात् न भवति न भवतीत्युभयतोऽप्यभावविषयत्वात् ।

पुनस्तत्रार्थान्तरे पर्यनुयोगस्य जागरूकता, तत्रापि पुनरित्यनवस्था प्रश्नस्येत्याह–**अथार्थान्तरं न भवतीति** । अर्थोऽन्योऽर्थश्च परस्परापेक्षयाऽर्थान्तरं भवतः, अतोऽर्थान्तरत्वमुभयविषयम्, तयोरुभयोर्विधिरूपेणाग्रहणे किन्तदर्थान्तरं? यदपोहादर्थान्तरापोहः स्यात्, कस्माद्वाऽर्थान्तरं न भवतीत्युच्यते? यतोऽस्यार्थान्तरत्वं सिद्ध्येत्, अर्थस्यार्थान्तरस्य चाभवनरूपत्वेनाव्यावृत्त्या विधिगन्धस्याप्यभावेनान्यथावृत्तेरभवनमेव परमार्थः स्यात्, ततश्चान्मार्थान्तरत्वाभावादभूतस्वार्थान्तरत्वादविषय एव वन्ध्यापुत्रवत् न ह्यभावः शब्दार्थो भवितुमर्हति ततश्चाप्रतिपत्तिरेव स्यात्, अथार्थान्तरमप्यनर्थान्तरं न भवतीत्युच्यते ततोऽर्थान्तरस्यैवानर्थान्तरशब्देनाप्यनुवदनात् किं तदन्यदर्थान्तरम्? इत्येवं प्रागुक्तान्यपक्षविचारोऽत्रावतार्य क्वचिदक्षरविपर्यासेन, क्वचिच्च तुल्याक्षरत्वेनैवेति भावनीयमित्याह–**अर्थान्तरस्य चेति**, स्पष्टं सर्वं मूलेनैव । अथ चतुर्थे पादे न चास्ति व्यभिचारितेति **दूषयितुमाह–चतुर्थपादेनेति** । न चास्ति व्यभिचारितेत्यनेन यदव्यभिचारित्वमपोहवादिना त्वयोक्तं तत्तावदास्ताम्, तद्विचारस्य विप्रकृ-

१ सि. क्ष. डे. तावच्चेति । २ सि. क्ष. डे. छा. अपरिकारस्तु ।

(**चतुर्थेति**) चतुर्थपादेन यत्त्वयोक्तं न चास्ति व्यभिचारिता इति सा तावदास्तां स्वपक्षगतापोहवादिनः तवाव्यभिचारिता, विप्रकृष्टत्वात्, भेदपक्षे संशयदोषापादनार्थं यत्तूक्तं त्वया व्यभिचारत इति,-सच्छब्दो हि यथा द्रव्ये वर्त्तते तथा घटादिष्वपीति व्यभिचारात् संशयः स्यात्, नाभिधाने इत्यत्र ब्रूमः, तत्र विधिवादे सचासञ्च विधेयव्यावर्त्यौ भावौ, तयोः- तस्यातस्य च भावस्य सम्भवो यस्यात्मा तद्भवति तदतदात्मकं संशयज्ञान तस्य संशयज्ञानस्य प्राप्तत्वात् किमिव न प्राप्तमभिधानम्? निश्चयो विपर्ययो वाऽनध्यवसायो वा सर्वं प्राप्तमित्यर्थः, तत्सर्वं विधिवाद एव घटते, अत्र तूक्तन्यायेन-अन्यापोहार्थ-, नैर्मूल्यात् स्वार्थांशस्याप्यदर्शनात् त्वत्पक्षे संशया [च] नास्पदम्, आदिग्रहणात् विपर्ययानध्यवसायनिर्णया अप्यनास्पदाः, निर्विषया इत्यर्थः, कस्मात्? तदतद्भावभावात्मकशब्दार्थत्वात्-स चासञ्च भवन् भावो भवतीत्युक्तमस्माभिः, तस्य भावः आत्मा यस्य शब्दार्थस्य त्वदभिमतस्य, तस्य भावात्-तदतद्भावभावात्मकशब्दार्थत्वात्, तद्व्यक्तेरस्वार्थत्वात् न भवति न भवतीत्युभयतोऽप्यभावविषयत्वात्-तद्व्यक्तेरन्वयव्यतिरेकविषयत्वासत्त्वादिति संशयविपर्ययावपि निर्विषयौ, विध्यर्थाभावात्, अनध्यवसायोऽपि स्वार्थभावात्मकस्याध्यवसायस्य पर्युदासेऽनध्यवसायोऽध्यवसायादन्य इति भवति, उभयतोऽप्यभावे कुतोऽनध्यवसायः? निर्विषयत्वात् खपुष्पवदिति ।

**अथवा त्वन्मतवदेवादर्शनादन्यशब्दार्थः स्वार्थस्य वांशेऽप्यदर्शनादिति, यथोक्तं वृक्षशब्दस्य वृक्षेषु सर्वेषु नहि दर्शनेनास्ति सम्भवः, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवोऽग्निधूमादिवत्, यद्यपि च क्वचिदस्ति डित्थादिषु सम्भवः तथापि न तद्द्वारेणानुमानम्।**

ष्टत्वात्, सम्प्रति तु संशयादिदोषापादनं त्वदीयं विचार्यमित्याशयेनाह-**सा तावदास्तामिति.** अपोहार्थाभावाद्वाच्यवाचकसम्बन्धाभावेन स्वार्थगन्धस्याप्यदर्शनात् संशयकारणस्यैवाभावे कुतो व्यभिचाराव्यभिचारविचार इति विप्रकृष्टत्वं बोध्यम् । भेदाभिधानपक्षे सच्छब्दस्य द्रव्य इव घटपटादिष्वपि दर्शनादेकाभिधानेऽपरत्र व्यभिचारात् किमिदमभिधेयमिदं वेति संशयः स्यात्, तस्मादभिधेयानां बहुत्वेन शब्दान्न सर्वथा गतिर्भवति, अपोहस्य शब्दार्थत्वे तु न संशयः, अर्थान्तरव्युदासेनार्थान्तराभिधानादित्याशङ्कते-**भेदपक्ष इति** । विधिपक्ष एव संशयादीनां सम्भवो नापोहपक्ष इत्याशयेनोत्तरयति-**तत्र विधिवाद इति** । संशयो हि विधेयव्यावर्त्यभावविषयं विज्ञानं, विधिव्यावृत्त्योश्च भावात्मकत्वादभिधानपक्षेऽपि संशयादि भवत्येव, न त्वेतदपोहशब्दार्थतायां घटत इत्यभिधातुं संशयज्ञानं दर्शयति-**सचासञ्चेति** । निश्चयादिरपि विधिवाद एव घटते, नान्यत्रेत्याह-**निश्चय इति** । अपोहवादे न घटत इति दर्शयति-**अत्र त्विति** । न्यायं दर्शयति **अन्यापोहार्थेति** । हेतुमाह-**तदतद्भावेति,** त्वदभिमतः शब्दार्थस्तदतद्भावभावात्मकः, अस्माभिरर्थस्यासत्त्वाविनाभाविन एव सत्त्वमुक्तं, स एव त्वदभिमतः शब्दार्थः, तत्र तद्व्यक्तिरूपो योऽर्थः स न शब्दस्य स्वार्थः, अनिर्देश्यत्वाभ्युपगमात्, घटादन्यः पट इत्युक्ते पटः स न भवति एवं पटादन्यो घट इत्युक्ते घटोऽपि स न भवतीत्यपोह्यापोहवतोरुभयोरपि व्यावृत्तमात्रस्थितत्वाच्छब्दार्थस्याभावविषयत्वापत्तिः, तद्व्यक्तेश्चान्वयविषयत्वव्यतिरेकविषयत्वयोरभावात् संशयविपर्ययौ न सम्भवतः विधिरूपार्थाभावादिति भावः । अनध्यवसायोऽपि निर्विषय इत्याह-**अनध्यवसायोऽपीति,** स्वार्थं भावं विषयीकुर्वतोऽध्यवसायाद्भिन्नमध्यवसायसदृशञ्च यज्ज्ञानं सोऽनध्यवसाय उच्यते, यदा तूभयतोऽप्यभाव एव, स्वार्थगन्धोऽपि नास्ति तदा निर्विषयत्वात् कुतोऽध्यवसायोऽनध्यवसायो वा स्यादिति भावः । कारिकाया

१ सि. क्ष. तत्र । २ सि. क्ष. °नत्वात् । ३ सि. क्ष. छा. °तद्भावाभावा० । ४ सि. क्ष. छा. °तद्भावात्मकत् वा भावात्मक श० । छा. × × । ५ : ६ सि. क्ष. तद्व्यक्ति० । ७ सि. क्ष. °दासेनाध्य० ।

**सर्वात्मनाऽप्रतीतेः गुणसमुदायो हि डित्थाख्योऽर्थः, न च सर्वे काणकुण्टादयो डित्थशब्दाद्गम्यन्ते एवमन्वयद्वारेणानुमानासम्भव इत्यनेनोत्तरवचनेन त्वदीयेन स्वार्थांशेऽप्यदर्शनमेवेत्युक्तं भवति, तत एव चानुमानासम्भव इत्युच्यतेऽस्माभिः क्वचिददर्शनात् ।**

**अथ वेत्यादि,** पाठान्तरे पूर्वार्धं तदेव, तस्य व्याख्या-त्वन्मतवदेवादर्शनादन्यशब्दार्थ इति प्रथमपादार्थः त्वद्व्याख्यात एव, स्वार्थस्वांशेऽप्यदर्शनात्त्वन्मतवदेवेति द्वितीयपादार्थः, तं भावयति-यथोक्तमित्यादिटीकाग्रन्थ एव, वृक्षशब्दस्य वृक्षेत्यादि यावद्दर्शने नास्ति सम्भवो नापि सर्वत्र लिङ्गिनीत्यादि, शब्दस्यानुमानत्वात् सर्वत्रानुमेये दर्शनासम्भवोऽयोगुडाङ्गाराभ्यामनुमेयधूमादिलिङ्गादर्शनवदिति, अत्र परो ब्रूयात्-ननु डित्थादिस्वाभिधेये सर्वत्र दर्शनमित्यत्र त्वयोत्तरं यदुक्तं यद्यपि क्वचिदित्यादि स एव टीकाग्रन्थो यावदनुमानासम्भव इति, वयं त्वन्मतादेव ब्रूमः-अनेनोत्तरवचनेन त्वदीयेन यदपि तदेकदेशे [ दर्श ] नमिष्टं स्वार्थांशे तदप्यदर्शनमेवेत्युक्तं भवति, काणकुण्टादयः सर्वे गुणास्तस्य गुणसमुदायात्मकस्य न गम्यन्त इति वचनात्, सर्वात्मस्वदर्शना [ त् ] शब्दस्य सर्वात्मनाऽप्रतीतेरुदाहरणेऽभिहितत्वात् [ अ ] दर्शनं स्वार्थांशेऽपि समर्थितम्, तत एव चानुमानासम्भव इत्युच्यतेऽस्माभिः क्वचिददर्शनादिति ।

अत्र ब्रूयास्त्वम्—

**अन्वयानुयुक्त्युदाहृतेः व्यावृत्त्या डित्थोदाहरणमेतदिति चेन्न, तत्प्रतिपत्तिनिर्मूलत्वात्, अनवगतपर्युदासकस्वार्थत्वात्, अविदिते देवदत्ते न भवत्यदेवदत्त इति वचनवत्, एवञ्च शब्दस्यार्थाभावेन सम्बन्धाशक्यत्वदोषो य उक्तः स इहापीति श्रुतेः सम्बन्ध-**

---

अदृष्टेरन्यशब्दार्थे इत्यस्याः प्रकारान्तरेण व्याख्यामाह-**अथ वेति** । व्याकरोति-**पूर्वार्धमिति,** अदृष्टेरन्यशब्दार्थे स्वार्थस्यांशेऽपि दर्शनादिति पूर्वार्धं तद्वदेवेत्यर्थः । तत्र प्रथमपादार्थः शब्दः शब्दान्तरार्थे न दृश्यत इति । द्वितीयं पादार्थं वक्तुमाह-**स्वार्थस्वांशेऽपीति** । धूमस्यैकदेशदर्शनेन वह्नेरवह्नेर्दर्शनादवह्निव्युदासेन प्रतीतिः तथैव शब्दादर्थान्तरापोहेन स्वार्थाभिधानम्, किन्तु अर्थाभिधानेऽन्वयव्यतिरेकौ शब्दस्य द्वारम्, तौ च तुल्ये वृत्तिरतुल्येऽवृत्तिरित्येवं रूपौ, तत्र तुल्ये सर्वत्र नावश्यं वृत्तिराख्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात्, वृक्षशब्दस्य वृक्षेषु सर्वेषु न हि दर्शनेनास्ति सम्भवः, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भवः, यथाऽयोगुडाङ्गाराभ्यामनुमेये धूमादिलिङ्गादर्शनमित्यादितदीयटीकाग्रन्थमेवोपन्यस्यति-**यथोक्तमित्यादीति** । लिङ्गिलिङ्गोपन्यासे कारणमाह-**शब्दस्यानुमानत्वादिति,** वाच्यवाचकसम्बन्धस्यानुमानानुमेयसम्बन्धत्वोक्तेः शब्दस्यानुमानत्वमिति भावः । एवमन्वयासम्भवप्रस्तावे परः तत्सम्भवमाशङ्कते-**अत्र पर इति,** इयमाशङ्कापि टीकाग्रन्थ एवं कृता – यद्यपि च क्वचिदस्ति सम्भवो डित्थादिषु, इयं शङ्का डित्थस्यैकव्यक्त्यभिप्रायेण, अवयवसमुदायव्यतिरिक्तावयव्यभावेन काणकुण्टादिनिखिलावयवाख्यानासम्भवात् अन्वयासम्भव एवेत्युत्तरयति तत्रैव-तथापि न तद्द्वारेणानुमानम्, गुणसमुदायो हि डित्थाख्योऽर्थः न च सर्वे काणकुण्टादयो डित्थशब्दाद्गम्यन्ते, एवमन्वयद्वारेणानुमानासम्भव इति । आचार्योऽत्रोत्तरमाह-**वयं त्वन्मतादेवेति,** धूमस्यैकदेशदर्शनेनेति यदेकदेशदर्शनमिष्टं तदप्यदर्शनमेव, डित्थादेर्यथाऽदर्शनमुक्तं तथा तदवयवस्यैकस्याप्यदर्शनमेव स्यात्, तस्यापि गुणसमुदायात्मकत्वाविशेषात्, तथा च गुणसमुदायो हि डित्थाख्योऽर्थः, न च सर्वे काणकुण्टादयो डित्थशब्दाद्गम्यन्त इति वचनेन स्वार्थस्यांशेऽप्यदर्शनं त्वयैव समर्थितं भवत्यत एव चानुमानासम्भव इति भावः । **सर्वात्मस्विति,** काणकुण्टादिषु डित्थादिषु च शब्दस्यादर्शनात् सर्वात्मना न प्रतीतिः कस्यापीत्यर्थः । ननु यद्यपि च क्वचिदस्ति सम्भवो डित्थादिष्विति यदुक्तं डित्थाद्युदाहरणं तदन्वयाभावेऽपि शब्दादडित्थो न भवतीति व्यावृत्त्या डित्थार्थगतिमभ्युपेत्योक्तमिति शङ्कते-**अन्वयानुयुक्त्यु-**

---

१ सि. क्ष. छा. स्वांशे० । २ सि. क्ष. छा. °सम्भवेऽप्यगो० ।

**दौष्कर्यम्, यः स वृक्षशब्दो यस्य स वृक्षोऽर्थस्तदितरो वा तस्य शब्दस्य तेनार्थेन न शक्यते सम्बन्धः कर्तुम्, तेन सहात्यन्तमदृष्टत्वात् श्रावणत्वनित्यानित्यत्ववत् ।**

**अन्वयानुयुक्त्युदाहृतेरित्यादि,** यावदेतदिति चेदिति, एतदुक्तं भवति डित्थ इत्यस्य[ ा]डित्थो न भवतीति व्यावृत्त्या डित्थार्थगतेरन्वयाभावादेव डित्थोदाहरणमिति, एतच्च न, तत्प्रतिपत्तिनिर्मूलत्वात्–नैतद-डित्थ[व्यु]दासमात्रमुपपद्यते प्रतिपत्तेरभावप्रसङ्गात्, न भवति न भवतीत्युभयतोऽप्यभावमात्रत्वात् प्रतिपत्तिनिर्मूलत्वम्, कस्मात्? अनवगतपर्युदासकस्वार्थत्वात्–अनवगतः पर्युदासो यस्य स्वार्थस्य सोऽनवगतपर्युदासकस्वार्थः, तद्भावादनवगतपर्युदासकस्वार्थत्वात् नास्ति प्रतिपत्तेर्बीजम्, दृष्टान्तः–अविदिते देवदत्ते न भवत्यदेवदत्त इति वचनमप्रतिपत्तेरेव कारणम्, निर्मूलत्वात्, तथैव तदिति, तद्भावयति–एवञ्च शब्दस्येत्यादि यावत् स इहापीति, यथा पूर्वमुक्तं आस्तां ते शब्दसम्बन्धोऽर्थाभावादिति सम्बन्धाशक्यत्वं दोषः, स एव ततोऽन्यस्य चार्थस्याभावादलब्धात्मकेऽर्थद्वये शब्दस्य केन सहाविनाभावः सम्बन्धः स्यादिति श्रुतेः सम्बन्धदौष्कर्यम्, तदुपसंहृत्य प्रतिज्ञायते यः स वृक्षशब्दो यस्य स वृक्षोऽर्थः तदितरो वेत्यवृक्षशब्दावृक्षार्थयोः सम्बन्धो वृक्षशब्दार्थयोः प्रतिपत्त्यर्थः, तस्य शब्दस्य तेनार्थेन लोकप्रसिद्धेन वा त्वदभिप्रायेण न शक्यते सम्बन्धः कर्तुमिति पक्षः, तेन सहात्यन्तमदृष्टत्वात्, श्रावणत्वनित्यानित्यत्ववदिति गतार्थं साधनम् ।

न च सम्बन्धद्वारं मुक्त्वा शब्दस्य लिङ्गस्य वा स्वार्थख्यापनशक्तिरस्तीति त्वयैवोक्तोऽयं न्याय इति दर्शयति—

**स च सम्बन्धो नास्ति, उक्तवत्, अत एव यदुक्तं त्वया भेदाभिधानपक्षे दोषजातं व्यक्तत्वात् तन्नास्त्येव, असाधारणधर्मत्वात्, बाह्यसाधारणः पक्षधर्मा... .. ........ ..**

**दाहृतेरिति,** अन्वयप्रश्नोदाहरणत्वादित्यर्थः । व्याचष्टे–**एतदुक्तं भवतीति** । एवं सति डित्थादि प्रतिपत्तिरेव न स्यादित्युत्तरयति–**तत्प्रतिपत्तीति** । विधिकल्पनया डित्थप्रतिपत्तेर्निर्मूलत्वादित्यर्थः, कथमित्यत्राह–**न भवतीति** । **अनवगतेति,** डित्थशब्दार्थस्याडित्थो न भवतीत्यर्थकल्पेऽसत्या डित्थावगतावडित्थज्ञानाभावतोऽडित्थो न भवतीति स्वार्थो न ज्ञायते स्वपर्युदासप्रतिपत्त्यभावादिति भावः । दृष्टान्तं दर्शयति–**अविदित इति** । एवं प्रतिपत्तेर्निर्मूलत्वादेव शब्दस्यार्थाभावात् सम्बन्धाशक्यत्वदोषोऽत्राप्यस्तीत्याह–**एवञ्च शब्दस्येति** । पूर्वोक्तं स्मारयति–**यथा पूर्वमिति** । अभिधानाभिधेयसम्बन्धस्यानुमानानुमेयसम्बन्धस्वरूपत्वमभ्युपगतम्, स च सम्बन्धोऽविनाभावरूपः, शब्दस्यार्थेन सहाविनाभावसम्बन्धेन भवितव्यम्, यदा च स्वार्थोऽन्यापोहो वाऽर्थस्याभावेनालब्धात्मकमर्थद्वयं तदा केन सह शब्दस्याविनाभावसम्बन्धः स्यात् सम्बन्धस्य द्विष्ठत्वादतः श्रुतेः सम्बन्धदौष्कर्यमेवेति तृतीयपादार्थः । श्रुतेः सम्बन्धदौष्कर्यमेव मानेन साधयति–**यः स वृक्षशब्द इति,** योऽसौ वृक्षशब्दो यश्च तदर्थो वृक्षः तदितरो वा न तदर्थेन तस्य शब्दस्य सम्बन्धः कर्तुं शक्यते इति प्रतिज्ञा, तेन सहात्यन्तमदृष्टत्वात् श्रावणत्वनित्यानित्यत्ववदिति साधनम् । तत्र तदितरपदविवक्षितमाह–**अवृक्षेति,** शब्दान्तरार्थापोहं स्वार्थे कुर्वती श्रुतिरिति हि न्यायः, तत्र वृक्षशब्दाच्छब्दान्तरमवृक्षशब्दस्तदर्थश्चावृक्षः, तयोः सम्बन्धप्रतिपत्तिव्यतिरेकेण न तदपोहरूपवृक्षशब्दार्थयोः प्रतिपत्तिः स्यात्, तस्मात्तदितरोऽपि विवक्षित एवेति भावः । **तेन सहेति,** तदर्थेन तच्छब्दस्यात्यन्तमदर्शनादित्यर्थः । दृष्टान्तमाह–**श्रावणत्वेति,** श्रावणत्वं शब्दस्यैव धर्मत्वादसाधारणम्, तत्र न ज्ञायते नित्यस्य सतः शब्दस्य धर्मः श्रावणत्वमुतानित्यस्येति, न वा दृष्टं क्वचिदपि नित्यत्वेनानित्यत्वेन वा सह श्रावणत्वं येनाविनाभावलक्षणसम्बन्धस्तयोः स्यादिति भावः । न वाऽभिधानाभिधेयसम्बन्धमनुमानानुमेयसम्बन्धं वा

१ सि क्ष छा. डे भायोन्यश क्यते ।

**एकान्तव्यावृत्तेश्च, इदमपि चात्र यदन्वयव्यतिरेकौ शब्दस्यार्थाभिधाने द्वारमित्युक्त्वा पुनरन्वयस्य निराकरणं तद्भवतः केनाभिप्रायेणेति न विद्मः, किमज्ञानात्? अस्मद्बुद्धिपरिभवात्? इहपरलोकाभ्यामयशसश्चाभीरुत्वात्? इति।**

(**स चेति**) स च सम्बन्धो नास्ति, उक्तवत्, उक्तं सम्बन्धदौष्कर्यम्, अत एवेत्यादि एतस्मादेव सम्बन्धदौष्कर्यात् यदुक्तं त्वया भेदाभिधानपक्षे दोषजातं व्यक्तत्वात्तु नास्त्येव व्यभिचारितादोष इति पक्षः, असाधारणधर्मत्वादिति हेतुः, असाधारणधर्मत्वं सपक्षासपक्षयोरदृष्टत्वात्, तद्व्याचष्ट-बाह्यसाधारणः पक्षधर्मेत्यादि यावदेकान्तव्यावृत्तेश्चेति, तद्व्याख्यया गतार्थम्, किञ्चान्यत्–इदमपि चात्रेत्यादि, अन्वयस्य निर्मूलनीयत्वात् यदन्वयव्यतिरेकौ शब्दस्यार्थाभिधाने द्वारमित्युक्त्वा पुनरन्वयस्य निराकरणं तद्भवतः केनाभिप्रायेणेति न विद्मः, किमज्ञानात्? अस्मद्बुद्धिपरिभवात्? इहपरलोकाभ्यामयशसश्चाभीरुत्वादिति। कतमदन्वयनिराकरणमिति चेदुच्यते यदन्वयविषय एकदेशो निरूप्यते त्वया वृक्ष इत्यवृक्षो न भवतीत्यवृक्षव्युदासेन।

कथं पुनरनेन त्वया निराक्रियत इति चेद्ब्रूमः—

**नन्वेवं सर्ववृक्षार्थदर्शनासम्भवात् भेदानन्त्याच्च स्वार्थदेशव्याप्यन्वयाभावात् गुणसमुदायमात्रत्वादभिधानाभिधेययोः कोऽसौ सम्बन्धो येनाभिधानाभिधेयाभाव उपपद्येत, लिङ्ग्येकदेशसम्भविलिङ्गस्य गमकत्ववत्तु न स्वार्थांशमात्रे सम्भवति।**

**नन्वेवमित्यादि,** यावत् कोऽसौ सम्बन्धो येनेति, इति भावना गतार्था तत्र कारणमाह–सर्ववृक्षार्थदर्शनासम्भवात् भेदानन्त्याच्चासम्भव उक्तः, स्वार्थदेशव्याप्यन्वयो नास्तीति चोक्तो गुणसमुदायमात्रत्वात् गुणभूतेष्ववयवेष्वसत्त्वं दर्शनस्योक्तं त्वयैव, तस्मादन्वयाभावेऽनुमानानुमेयसम्बन्धाभावादनुमानानुपपत्तिवदभिधानाभिधेयभावस्यानुपपत्तिरिति, स्यान्मतं लिङ्ग्येकदेशसम्भविलिङ्गवदभिधेयैकदेशसम्भव्यभिधानदर्शनादस्त्यन्वयोऽभिधानस्येत्यत्रोच्यते तदप्यभ्युपेत्य–लिङ्ग्येकदेशेत्यादि, लिङ्गिनामग्नीनामेकदेशेऽग्नाविना शब्दो लिङ्गं वा स्वार्थं प्रख्यापयितुं शक्नोतीति त्वयैवोक्तमित्याह–**स चेति**। व्याचष्टे–**स च सम्बन्ध इति**। भेदाभिधानपक्षे सच्छब्दो यथा द्रव्ये वर्तते तथा घटादिष्वपीति व्यभिचारितादोषो यस्त्वयोक्तः स नास्त्येव, असाधारणधर्मत्वादित्याह–**एतस्मादेवेति** अत्र मूलं मृग्यम्। अथ शब्दस्यार्थाभिधानेऽन्वयो व्यतिरेकश्च द्वारमिति प्रोच्य तत्र यदन्वयस्य निराकरणं क्रियते तत्केन हेतुनेति पृच्छति–**इदमपि चेति**। अन्वयनिराकरणं दर्शयति–**यदन्वयेति,** अन्यापोहविशिष्टार्थैकदेशविषयोऽन्वयः, तद्विषय एकदेशो निरूप्यते, अर्थान्तरापोहेन स्वार्थमभिधत्ते श्रुतिरिति न्यायादिति भावः। तन्निराकरणप्रकारमाह–**नन्वेवमिति**। वृक्षाणामानन्त्यात् सम्बन्धाशक्यत्वाच्च वृक्षशब्दस्य सर्वेषु वृक्षेषु दर्शनं न सम्भवतीति दर्शयति–**सर्ववृक्षार्थेति**। डित्थादेरेकत्वेन तत्र डित्थादिशब्दस्य दर्शनसम्भवो यद्यप्यस्ति तथापि गुणसमुदायमात्ररूपस्य डित्थादेः सर्वात्मनाऽप्रतीतिरेवेत्याह–**स्वार्थदेशेति,** डित्थादेः स्वार्थस्य यो देशः काणकुण्टादिस्तद्व्याप्यन्वयो नास्तीत्यर्थः। गुणभूतस्यावयवस्यापि गुणसमुदायमात्रत्वेन सर्वथाऽप्रतीतिरेवेत्याह–**गुणभूतेष्विति**। तदेवं तुल्ये वृत्तिरूपस्यान्वयस्यानुपपत्तौ तज्ज्ञाप्यानुमानानुमेयसम्बन्धस्याग्रहेणानुमानासम्भवात् शब्दार्थयोरभिधानाभिधेयसम्बन्धस्याप्यग्रहादेवानुपपत्तिरित्याह–**तस्मादिति**। ननु सर्वत्र लिङ्गिनि सर्वलिङ्गदर्शनासम्भवेऽपि लिङ्ग्येकदेशेऽग्नावेकस्मिन् लिङ्गस्य धूमस्य दर्शनेन यथा तल्लिङ्गं धूमोऽग्नेर्गमकं भवति तथाभिधेयेष्वेकाभिधेयेनाभिधानस्य दर्शनात् अन्वयग्रहः शब्दस्याभिधायकत्वञ्चोपपद्यत इत्याशङ्कते–**स्यान्मतमिति**। शब्दादेकदेशाभिधेयप्रतिपत्तिर्न भवितुमर्हतीत्याह–**लिङ्गिना-**

---

१ सि. क्ष. छा. डे. सता। २ सि. क्ष. छा. डे. एकदेशो। ३ सि. क्ष. छा. डे. कासासम्बन्धयइति।

वेकस्मिन् सम्भवतो धूमस्य लिङ्गस्याग्नेर्गमकत्ववत्तु न स्वार्थांशमात्रे सम्भवतीति, शब्दादभिधेयप्रतिपत्तिर्न भवितुमर्हति ।

**प्रत्यक्षवृक्षसम्बन्धाशक्यत्वे प्रतिपत्त्यभाववदेकत्वेऽपि मूलकोटरादिभेदानां सम्बन्धाशक्यत्वादप्रतिपत्तिः किमङ्ग ! पुनरत्यन्तपरोक्षस्वर्गादिशब्दस्वार्थांशमात्रे नो चेद्धवखदिराद्यनन्तभेदाभिधानं वृक्षशब्दस्य स्यात्, अदृष्टस्वार्थांशत्वात्, अव्यापिपक्षधर्मत्वात्, अवृक्षव्यवच्छिन्नस्यापि स्वार्थस्य नानुमानाय नाभिधानाय स्याद्वृक्षशब्दः, तदेकदेशवर्तित्वात्, अवनस्पतिव्यवच्छिन्नचैतन्यसाधनार्थस्वापवत् ।**

**प्रत्यक्षवृक्षेत्यादि,** अयं वृक्ष इति प्रत्यक्षस्यापि मूलादिमतः साक्षादुपलभ्यमानस्य संज्ञाव्युत्पत्तिकाले सम्बधकरणं नास्ति, शिंशपादिभेदानन्त्यात् जातिशब्दस्य भेदैरनन्तैः सम्बन्धाशक्यत्वे प्रतिपत्त्यभाववत्, एकत्वेऽपि स्वार्थाख्ये मूलादिकोटरादिह्रस्वदीर्घ[ त ]नुविशालादिभेदानां सम्बन्धाशक्यत्वं कचिददृष्टत्वात्, किमङ्ग ! पुनरत्यन्तपरोक्षस्वर्गादिशब्दस्वार्थांशमात्रेऽपि तद्वदेवाप्रतिपत्तेः, नो चेद्धवखदिराद्यनन्तभेदाभिधानं वृक्षशब्दस्य स्यात्, अदृष्टस्वार्थांशत्वात्, अत्रानिष्टापादनसाधनं-अवृक्षव्यवच्छिन्नस्यापि स्वार्थस्य नानुमानाय नाभिधानाय स्याद्वृक्षशब्दः, न प्रभवतीत्यर्थः, तदेकदेशवर्तित्वात्–स्वार्थस्य धर्मिणः पक्षस्यानुमेयस्याभिधेयस्यैकदेशे वर्तितुं शीलमस्येति तदेकदेशवर्ती, किमुक्तं भवति अव्यापिपक्षधर्मत्वात्–समस्तानुमेयावृत्तित्वादित्यर्थः, अवनस्पतिव्यवच्छिन्नचैतन्यसाधनार्थस्वापवत्–यथा सचेतना वनस्पतय इति प्रतिज्ञायां स्वापादिति हेतुर्धर्मिणो वनस्पतेरेकदेशे शिरीषादौ वर्तमानोऽपि तालादिष्ववर्तमानो न चैतन्यानुमानाय प्रभवति, अव्यापित्वात् तथा वृक्षशब्दोऽपि अवृक्षव्यावृत्त्यर्थो वृक्षस्वार्थांशवृत्तिर्नानुमानाय नाभिधानाय प्रभवति, एतत् पुनः स्वार्थांशवृत्त्यभ्युपगम्यानिष्टापादनम्, नैव वृत्तिरपीत्युक्तमेव, वक्ष्यामश्चानुमानस्यापि स्वार्थाभावम् ।

मिति । तदेव समर्थयति-**प्रत्यक्षवृक्षेति** । व्याचष्टे-**अयं वृक्ष इति,** शब्दव्युत्पत्तिकाले हि प्रत्यक्षदृष्टमूलशाखाकोटरादिमद्वृक्षसामान्यस्य वृक्षशब्दस्य सम्बन्धकरणं न सम्भवति वृक्षभेदानां शिंशपापनसनिम्बकदम्बाम्रादीनामनन्तत्वात्, न हि सम्बन्धमन्तरेण शब्दोऽर्थमभिधातुं क्षमः, अन्यथा सर्वं सर्वेण प्रत्याय्येत, एवं सामान्यशब्दस्य भेदानन्त्येन सम्बन्धाशक्यत्वात् तदर्थप्रतिपत्त्यभावः, एकोऽपि वृक्षो न तेन प्रत्येतुं शक्यः, गुणसमुदायरूपस्य तस्य गुणानां मूलकोटरादीनां बहुत्वेन तैः सह कचिददृष्टत्वात् सम्बन्धाशक्यत्वादिति भावः । तदेवं प्रत्यक्षदृष्टे सम्बन्धाशक्यत्वे किं पुनरत्यन्तपरोक्षस्वर्गाद्यर्थांशमात्रे इत्याह-**किमङ्ग ! पुनरिति ।** यदि स्वार्थांशानामदृष्टत्वेऽपि वृक्षशब्दः स्वार्थमभिधत्ते तर्हि धवखदिराद्यनन्तभेदानभिदधीत, अविशेषादित्याह-**नो चेदिति,** स्वार्थांशानामदर्शनात् स्वार्थं न ब्रवीतीति नो चेदिति भावः । एवञ्चाभिधेयैकदेशवर्तिशब्दो नार्थान्तरव्युदासेन स्वार्थं गमयतीति साधयति-**अवृक्षेति ।** अवृक्षव्यावृत्तं स्वार्थमनुमातुमभिधातुं वा न प्रभवति वृक्षशब्दः, अनुमेयस्याभिधेयस्य चैकदेशे वृत्तित्वाद्वृक्षशब्दस्य, स ह्येकमेव शिंशपादिभेदमभिधत्ते, अतो वृक्षशब्दः पक्षमनुमेयमभिधेयं वा स्वार्थं न व्याप्नोति निखिलेष्वनुमेयेष्वभिधेयेषु वा स्वार्थाभिमतेष्ववृत्तेरिति भावः । दृष्टान्तमाह–**अवनस्पतीति ।** दृष्टान्तं घटयति-**यथा सचेतना इति ।** एकस्मिन् वृक्षविशेषे शिंशपादौ वृक्षशब्दो वर्तत इत्यभ्युपगम्यानिष्टापादनं साधनमुक्तम्, शिंशपादावपि न वर्तत एव वृक्षशब्दः, गुणसमुदायमात्रत्वाच्छिंशपादेर्गुणानाञ्च बहुत्वात् सर्वथाऽप्रतीतेः सम्बन्धाशक्यत्वादित्याशयेनाह-**एतत्पुनरिति** । नन्वनित्यः शब्दः

१ क्ष प्रत्यक्षेत्यादि । २ सि. क्ष. छा. भेदागान्त्यजाति० । ३ सि. क्ष. छा. °कत्वेऽपि । ४ सि. क्ष. छा. डे. °मस्येति धर्मः साध्यव्यावृत्तिरस्येति । ५ सि. क्ष. छा. डे. °त्वापि । ६ सि. क्ष. छा. डे. न वक्ष्मी ।

स्यान्मतं साध्याशेषानित्यत्वाव्यापिप्रयत्नानन्तरीयकत्ववदनुमानं स्यात्, वनस्पत्यव्यापिस्वापवदनुमानाभासः स्यादिति सन्देह इत्येतच्च न–

अशेषपक्षाव्यापी वृक्षशब्दो ह्यशेषमवृक्षव्यवच्छिन्नं वृक्षार्थं नामवृक्षं स्थापनावृक्षं वा सपक्षं ननु न व्याप्नोति, नाप्यनुमानेऽत्र दोषः तत्र कः सम्बन्धः साध्याशेषानित्यत्वाव्यापिप्रयत्नानन्तरीयकत्वानुमानत्वप्राप्तेः? स्वापोदाहरणनिरपेक्षादृष्टदेशवर्तित्वाभ्युपगमे त्वतुल्येऽपि वृत्तिप्रसङ्गः? अवृक्षे घटादौ वृक्षश्रुतेः अदृष्टदेशवर्तित्वात्, मूलादिमति पलाशादौ स्वार्थांशे वा वृत्तिवत्, तस्मादेव चानन्त्यादकृतसम्बन्धजातिशब्दभेदवाचित्वेऽप्यदोषः, तथाऽर्थांशेऽदृष्टत्वात्, अपोहस्वार्थवत्, त्वन्मतस्वार्थेऽपि वा तद्वद्दोष एव स्यादिति कुतः तुल्यातुल्ययोर्वृत्त्यवृत्तिभ्यामन्वयव्यतिरेकौ? कुतो वा शब्दस्याभिधेयस्य पक्षधर्मत्वम्? लिङ्गवल्लिङ्गिनः कुतस्त्रैलक्षण्यम्? कुतोऽनुमानत्वम्?

अशेषपक्षाव्यापीत्यादि, प्रयत्नानन्तरीयकं हि सपक्षं न व्याप्नोति स्वापस्तु पक्षमेव न व्याप्नोतीति परिहारः, वृक्षशब्दो ह्यशेषमवृक्षव्यवच्छिन्नं वृक्षार्थं नामवृक्षं मनुष्यादि स्थापनावृक्षं–चित्रादि वाऽस्मन्मतेन साध्यधर्मसामान्येन समानं सपक्षं न तु न व्याप्नोति, नाप्यनुमानेऽत्र दोषः, स्वार्थांशवृत्तित्वात्–अव्यापिपक्षधर्मत्वात् वनस्पतिचैतन्ये स्वापवदित्युदाहृतम्, तस्मान्नानुमानाय स्याद्वृक्षशब्द इति साधूक्तम्, तत्र कः सम्बन्धः साध्या[ शेष ]नित्यत्वाव्यापिप्रयत्नानन्तरीयकत्वानुमानत्वप्राप्तेरिति, स्यान्मतमुक्तस्वापदृष्टान्तमनुपेक्ष्य वृक्षशब्दो यत्र न दृष्टः तानपि स्वार्थादन्यान गमयति, दृष्टस्वार्थानुमानसाधर्म्यात्, अंशे दृष्टशक्तित्वादित्येतच्चायुक्तम्, अपोह्ये वृत्तिप्रसङ्गात्, अत आह–स्वापोदाहरणनिरपेक्षादृष्टदेशवर्तित्वाभ्युपगमे त्वतुल्येऽपि वृत्तिप्रसङ्गः–अतुल्ये साध्यविपक्षे वृत्तिः स्यात् अवृक्षे पटादौ वृक्षश्रुतेः, अदृष्टदेशवर्त्तित्वात्

प्रयत्नानन्तरीयकत्वाद्घटादिवदित्यत्र हेतुर्यत्र यत्रानित्यत्वं न तत्र सर्वत्र वर्तत इति साध्याशेषानित्यत्वाव्यापी, तद्वत् किं वृक्षशब्दादिति हेतुः स्यात्? किं वा सचेतना वनस्पतयः स्वापादिति यावद्वनस्पत्यव्यापि स्वापवद्धेत्वाभासः पक्षैकदेशावृत्तित्वरूपः स्यादिति चोक्तहेत्वाभाससंशयात् गमकतेति संशयं निराचष्टे–अशेषपक्षाव्यापीति। व्याकरोति–प्रयत्नानन्तरीयकं हीति, प्रयत्नानन्तरीयकत्वं न पक्षैकदेशाव्यापि किन्तु सपक्षमात्राव्यापि, ततश्च तद्गमकमेव नाभासः, स्वापस्तु पक्षमेव न व्याप्नोतीति हेत्वाभासः, वृक्षशब्दश्चैतत्तुल्य एव, न प्रयत्नान्तरीयकत्वसदृशोऽतो न संशय इति भावः। वृक्षशब्दः सपक्षं व्याप्नोतीति दर्शयति–वृक्षशब्दो हीति, निखिलान् वृक्षान् नामवृक्षं स्थापनावृक्षञ्च वृक्षशब्दो व्याप्नोत्येव नामस्थापनावृक्षौ चास्मन्मतेन सपक्षौ, वृक्षसामान्येन समानत्वादिति भावः। अवृक्षव्यवच्छिन्नं स्वार्थमनुमातुमभिधातुं वा न प्रभवति वृक्षशब्दः, तदेकदेशवर्तित्वात्, अव्यापिपक्षधर्मत्वादित्युक्तेऽनुमाने च वनस्पतिचैतन्ये स्वापवदित्युदाहृतत्वान्न दोष इत्याह–नाप्यनुमान इति, एवञ्च स्वापोदाहरणादेवानित्यः शब्दः प्रयत्नानन्तरीयकत्वादित्यनुमानवदिदमनुमानं स्यादित्याशङ्काया अवसर एव नास्तीति भावः। ननु स्वार्थभूतशिंशपादिव्यतिरिक्तपनसादीनपि वृक्षशब्दो गमयति, अंशे शिंशपादौ दृष्टशक्तित्वात् शिंशपादीनिवेत्यनुमानात् पनसाद्यनुमापकत्वमभिधायकत्वं वा वृक्षशब्दस्य स्यान्न तु स्वापानुमानसाधर्म्यात् तदनभिधायकत्वानुमानमित्याशङ्कते–स्यान्मतमिति। स्वार्थादन्यत्र वृक्षशब्दस्य वृत्त्यभ्युपगमे वृक्षशब्दोऽर्थान्तरेऽपोह्ये वर्तेत न ततो व्यावृत्तः स्याद्वृक्षशब्द इति विपक्षवृत्तित्वादगमक एव स्यादित्युत्तरयति–स्वापोदाहरणेति। अतुल्येऽपीति, साध्यधर्मसामान्येनासदृशेऽवृक्षे घटादौ वृक्षशब्दस्य वृत्तिप्रसङ्गः, यथा शिंशपादिस्वार्थांशव्यतिरिक्तस्वार्थांशे पलाशादौ वृक्षश्रुतिर्वर्तते तदेकदेशवर्तित्वात्तद्वदिति भावः। तदेवं वृक्षशब्दस्यावृक्षनिवृत्तिविशिष्टस्वार्थार्थत्वे तत्स्वार्थस्य मूलस्कन्धशाखाकोटरादिभेदेनानन्तत्वेऽपि तद्वाचित्वे न कश्चिद्दोषस्तथैव भेदानामानन्त्येनाकृतसम्बन्धेऽपि जातिशब्दानां तुल्ययुक्त्या जातिमद्भे-

१ सि. क्ष. डे. °षोपसवृक्षाव्यव० । × × क्ष. ।

मूलादिमति पलाशादौ स्वार्थांशे वा वृत्तिवर्त्, तस्मादेव चानन्त्यादकृतसम्बन्धजातिशब्दभेदवाचित्वेऽप्यदोषः तथार्थांशेऽदृष्टत्वात्—अदृष्टस्वार्थांशत्वादित्यर्थः, अपोहस्वार्थवत्—अवृक्षो न भवतीत्यवृक्षापोहस्य स्वार्थो मूलादिमाननन्तःकोटरादिभेदेन तद्वाचित्वे चादोषो दृष्ट एवं भेदवादिनोऽप्यानन्त्येऽपि भेदानामकृतसम्बन्धेऽपि दोषाभावः स्यात्, त्वन्मतस्वार्थेऽपि वा तद्वद्दोष एव स्यादिति कुतः तुल्यातुल्ययोर्वृत्त्यवृत्तिभ्यामन्वयव्यतिरेकौ? कुतो वा शब्दस्याभिधेयस्य पक्षस्य धर्मत्वं? लिङ्गवल्लिङ्गिनः कुतस्त्रैलक्षण्यम्? कुतोऽनुमानत्वमिति।

**एवञ्च शब्दलिङ्गगतपक्षापक्षमिष्यते तदेव पक्षाद्यतथार्थत्वादतत्तत्प्रत्ययात्मकत्वादनुमानमप्रमाणम्, अलातचक्रे चक्रमिति प्रत्ययवत्, तस्मात् साधूक्तं 'नाप्रमाणान्तरं शाब्दमनुमानात्तथाहि तत्। कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत्॥ ( ग्रन्थकर्तुः ) इति, इदमपि वाऽत एव पूर्ववदलक्षणं यत्त्वयोक्तं यथा लिङ्गं लिङ्गिनं नातिक्रामति येन रूपेण तेनैव रूपेण चान्यतो व्यावृत्त्यात्मकेन गमयति, सत्त्वाद्यनेकधर्मापि सन् तैस्तान् व्यभिचारान्न गमयति, गम्यन्ते च लिङ्ग्यनुबन्धिनः सामान्यधर्माः तैरविनाभावात्, लिङ्गस्य विशेषा न गम्यन्ते तस्यैव व्यभिचारित्वात्, एवं लिङ्गस्यान्यव्यावृत्तं सामान्यं गमकं नाव्यावृत्तम्, लिङ्गिनः सामान्यं गम्यं निवृत्तम्, लिङ्गे त्वयं विशेषः 'लिङ्गानुबन्धिनः स्वार्थाः' ( ग्रन्थकर्तुः )**

( **एवञ्चेति** ) एवञ्च शब्दलिङ्गगतपक्षापक्षमिष्यते तदेव पक्षाद्यतथार्थत्वात् अतस्मिंस्तदिति प्रत्ययोऽनुमानमिति सुभाषितार्थम्, तस्मादतत्तत्प्रत्ययात्मकत्वात् अनुमानमप्रमाणम्, अलातचक्रे भ्रमदृष्टेः पुंसोऽचक्रे चक्रमिति प्रत्ययवदिति, तस्मात् साधूक्तं 'नाप्रमाणान्तरं शाब्दमनुमानात्तथाहि तत्। कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत्॥' इति, अप्रमाणादनुमानात् परपरिकल्पितं शाब्दमपि नाप्रमाणान्तरं नार्थान्तरं—अप्रमाणमेवानुमानवदिति प्रकृतोपसंहारार्थः, इदमपि वाऽत एव पूर्ववदलक्षणं—'न प्रमाणान्तरं शाब्द'मिति श्लोको यथाऽलक्षणं तथेदमपि लिङ्गलिङ्गिनोर्गमकगम्यनियमार्थकम्, कतमत्तदिति चेदुच्यते-यत्त्वयोक्तं यथा[लि]ङ्गमित्यादि, लिङ्गमङ्ग—धूमकृतकत्वादि लिङ्गिनं—अग्न्यनित्यत्वादिविशिष्टं देशादाभिधानेऽपि न कश्चिद्दोषः स्यात्। यदि त्वत्र पक्षे दोषो मन्यते तर्हि त्वदाभिमतस्वार्थेऽपि दोषः स्यादित्येवाह-**तस्मादेव चेति**। उक्तमेव भावं वर्णयति-**अवृक्षो नेति**। जातिपक्षवत्त्वत्पक्षेऽपि दोषस्य तुल्यत्वेन शब्दस्य हेतोस्तुल्ये वृत्तित्वादतुल्येऽवृत्तित्वाच्च यावन्वयव्यतिरेकौ तौ कुतो भवेताम्? कुतो वाऽभिधेयस्य पक्षस्य धर्मः शब्दः स्यात्, कुतो वाऽग्नेर्लिङ्गिनो लिङ्गस्य धूमस्य त्रैलक्षण्यमिव शब्दस्य त्रैलक्षण्यम्? कुतश्च वाऽनुमानत्वमित्याह-**कुत इति**। एवमनुमानस्याप्रमाणमाह **एवञ्चेति**। तवान्यापोहाभ्युपगन्तुर्मतेन न कश्चिच्छब्दो नामास्ति यः पक्षो लिङ्गं वा भवेत्, न भवति न भवतीत्यभवनपरमार्थत्वादुभयतोऽप्यभावमात्रत्वात् तस्मिंश्चासति कथं पक्षः स्यात् पक्षधर्मः सपक्षधर्मो वा, तथापि पक्षाद्यभ्युपगमेऽतस्मिंस्तदिति प्रत्ययात्मकत्वेन पक्षादेरतथार्थत्वादतत्तत्प्रत्ययात्मकत्वाच्चानुमानमप्रमाणं स्यात्, भ्रान्तदृष्टेरलातचक्रे चक्रबुद्धिवदिति भावः स्यादिति प्रतिभाति। इत्थमनुमानस्याप्रमाणत्वे न प्रमाणान्तरं शाब्दमित्यादि कारिकैव वाच्येत्याशयेनाह-**तस्मात् साधूक्तमिति**। संक्षेपेण तदर्थमाह-**अप्रमाणादिति**। अथ लिङ्गलिङ्गिनोर्गमकगम्यनियमार्थकमपि त्वद्वचनं न प्रमाणान्तरं शाब्दमित्यादिवचनवदलक्षणमिति दर्शयति-**इदमपीति**। तद्वचनमेवाह-**यथा लिङ्गमित्यादीति,** लिङ्गं धूमादि सत्त्वद्रव्यत्वाद्यनेकधर्मयुतम्, तथापि तद्धूमादि सत्त्वादिधर्मैरवच्छिन्नं सपा-

१ क्ष. तथार्थांशे दृष्टस्वार्थांशत्वादिपलाशादित्यधिकं दृश्यते। २ सि. क्ष. छा तानन्त्या०। ३ क्ष. छा. तथावर्थांशेदृष्टस्वार्थांशत्वादित्यर्थः। ४ क्ष. छा. तुल्यानुमेययो०। ५ सि. क्ष. छा. डे. पक्षमिष्येते। ६ क्ष. डे छा. यस्त्वयोक्तं यथा गमित्यादि।

शब्दादिमर्थं नातिक्रम्य वर्तते येन रूपेण, केन च नातिवर्तते ? धूम इत्यधूमो न भवति कृतक इत्यकृतको न भवतीत्यधूमाकृतकनिवृत्त्यात्मना नातिक्रामति तेनैव च रूपेणान्यतो व्यावृत्त्यात्मकेन गमयति, सत्त्वद्रव्य[त्व]ाद्यनेकधर्मोपि सन् तैस्तान् व्यभिचारान्न गमयति—सत्त्वादिसामान्यधर्मैरिति, एष तावद्गमकनियमः, गम्यनियमोऽपि—गम्यन्त इत्यादि, लिङ्गिनोऽनुबन्धिनः सा[मा]न्यधर्माः सत्त्वद्रव्यत्वादयो गम्यन्ते, तैरविनाभावान्, लिङ्गस्य विशेषास्तौषकारीषादयो न गम्यन्ते तस्यैव व्यभिचारित्वात्—लिङ्गस्य विशेषैः सहादृष्टत्वात्, एवं लिङ्गस्यान्यव्यावृत्तं सामान्यं गमकं नाव्यावृत्तमन्यतः, सत्त्वादिलिङ्गिनः सामान्यं गम्यं निवृत्तं—अ[न]ग्न्यादिभ्यः, अग्नित्वं सत्त्वादि चाग्निनाऽनुबद्धमव्यभिचारादिति, लिङ्गे त्वयं पुनर्विशेषः 'लिङ्गानुबन्धिनः स्वार्थाः इत्यादि श्लोकः, पूर्वोदाहृताः सामान्यधर्माः सत्त्वादयो लिङ्गस्य धूमस्य न गमयत्युक्तकारणत्वात्, विशेषास्तु केचिर्ल्लिङ्ग्यविनाभाविनः प्रतीताः प्रतिपादकाः पाण्डुत्वबहलत्वादय इति ।

एतत्पुनः कथं पूर्ववदलक्षणमित्यत आह—

**किमङ्ग**... ..... ...... .. ...... .. । .. ..................... ॥ ...
....... . ...... ... .. । .......... . ... ॥ ......
......... . . . । .. .... . ..... ॥ **यत्तूक्तं न सर्वत्र लिङ्गिनि लिङ्गं संभवत्यग्निधूमादिवदिति तदिदमपि यदि लिङ्ग्यत्र, कथं तस्य लिङ्गं नास्ति ? अथ नास्ति लिङ्गं कथं तद्वानिति स्ववचनविरोधि ते वचनम् ।**

ग्निमद्देशादिकं गमयति, व्यभिचारात् किन्तु अधूमादिव्यावृत्तिरूपेणैव तं गमयति, एवं कृतकत्वादिकमपि अकृतकनिवृत्त्यात्मनाऽनित्यत्वविशिष्टं शब्दं गमयतीति गमकस्य नियम इति भावः । गम्यनियममाह—**गम्यनियमोऽपीति,** लिङ्गिनि अग्न्यादौ गताः केचित्सामान्यधर्माः सत्त्वद्रव्यत्वादयो गम्यन्ते, ते स्वव्यापकव्यापकैः सह लिङ्गस्याव्यभिचारात् केचिच्च तदभावादेव विशेषास्तौषकारीषादयो न गम्यन्ते, तेषां लिङ्गेनापि व्यभिचारादिति भावः । तदेवाह—**एवमिति,** लिङ्गगतं परेभ्यो व्यावृत्तमेव सामान्यं गमकं भवति लिङ्गिनिष्ठं सत्त्वादिसामान्यमन्यव्यावृत्तं गम्यं भवति । नन्वं सामान्यमग्नित्वं सत्त्वादि च, अग्न्यनुबद्धत्वेनाव्यभिचारादिति भावः । अथमत्र भावः, कार्यं कारणादुत्पत्तेर्यदि कारणस्य गमकं तर्हि सर्वथा गम्यगमकभावः प्रसज्यते, अग्नेः सामान्यधर्मवद्विशेषधर्मा अपि तार्णपार्णत्वादयो गम्याः स्युः, धूमस्यापि विशेषधर्मवत् सत्त्वद्रव्यत्वपार्थिवत्वादयोऽपि सामान्यधर्मा गमका भवेयुः, सर्वथा जन्यजनकभावात्, यथा हि अग्निरग्नित्वद्रव्यत्वसत्त्वादिभिः सामान्यधर्मैर्जनकः तथा तार्णपार्णत्वादिभिरपि विशेषैः । यथा च धूमो धूमत्वपाण्डुत्वबहलत्वादिभिः स्वनियतैर्विशेषधर्मैर्युक्तो जन्यस्तथा सामान्यधर्मैरपि सत्त्वद्रव्यत्वादिभिः, ततश्च यथा तयोः कार्यकारणभावस्तथैव गम्यगमकभावः स्यादिति चेन्न, न हि सर्वथा जन्यजनकभावः ततश्च कथं तथा गम्यगमकभावः स्यात् तार्णपार्णत्वादिविशेषधर्माणामभावे भवतो धूममात्रस्य तदुत्पत्तिनियमाभावात्, एवमग्न्यभावे भवतो द्रव्यत्वादिसामान्यधर्मस्याग्नेरुत्पत्तिनियमो नास्ति, एवञ्च स्वगतैर्यावद्भिर्धूमत्वादिभिः धूमोऽग्निगतैर्यावद्भिरग्नित्वद्रव्यत्वादिभिर्विना न भवति तेषां कारणगतसामान्यधर्माणां कार्यं गमकम् । न हि तत् सामान्यधर्मात् कदाचिदपि कार्यं व्यभिचरति, एवं कारणगताः सामान्यधर्मा गम्याः, कार्यमपि तैरेव स्वगतैः कारणगतानां धर्माणां गमकम्, येऽर्थान्तरागम्भविनो धूमत्वपाण्डुत्वबहलत्वादयो विशेषरूपाः, एते हि कारणगतैः सामान्यधर्मैर्विना न भवन्तीति । लिङ्गे विशेषं प्रागुक्तं दर्शयति—**लिङ्गानुबन्धिन इति,** लिङ्गगताः सत्त्वद्रव्यत्वादिसामान्यधर्मा न लिङ्गिनं गमयन्ति, अधूमेऽपि तेषां वृत्तेः, लिङ्गिव्याप्याव्याप्यत्वात्, केचित्तु लिङ्गनिष्ठाः विशेषाः पाण्डुत्वबहलत्वाविच्छिन्नमूलत्वादिधर्मा लिङ्ग्यविनाभाविनो लिङ्गिव्याप्यव्याप्यत्वाल्लिङ्गिनं गमयन्त्येवेति भावः । उक्तगम्यगमकनियमोऽपि पूर्ववदलक्षणमेवेत्याह—**किमङ्गमिति ।**

१ सि. क्ष. छा. डे. °नुबद्धमव्य° । २ सि. क्ष. छा. डे. लिङ्गस्याधू° ।

**किमङ्गमित्यादि,** श्लोकत्रयं प्रेर्यप्रस्तावेनोपन्यस्तं समस्तस्य त्वदुक्तस्यार्थजातस्य पूर्वोक्तेन न भवति न भवतीत्यभवनपरमार्थत्वात् खपुष्पवदभावेन गम्यगमकनियमो नास्त्येवेति गतार्थम्, किञ्चान्यत्–यत्तूक्तमित्यादि पूर्वपक्षप्रत्युच्चारणं यावद्धूमादि[वदि]ति, यत् स्वार्थस्यांशेऽप्यदर्शनात्मकत्वं समर्थयतोक्तं–न सर्वत्र लिङ्गिनि लिङ्गं सम्भवतीति तदिदमप्यप्रेक्ष्यवादितया न वा धियां कौशलमित्यभिप्रायः, तद्व्याचष्टे–यदि लिङ्ग्येवेत्यादि, लिङ्गमस्यास्तीति लिङ्गि, यदि तत्सर्वं लिङ्गि, भस्मांगारायोगुडपाकाद्यभ्याख्यं वस्तु कथं तस्य लिङ्गं नास्ति ? लिङ्गाभावे लिङ्गित्वस्यैव[ा]भावात्, मत्वर्थीयनिर्देश्यलिङ्गित्वाभ्युपगमादेव लिङ्गास्तित्वमित्यभिप्रायः । अथ नास्ति लिङ्गं कथं तद्वान् ? लिङ्गमस्यास्तीति लिङ्गवान्, लिङ्गीत्यर्थः, मत्वर्थीयनिर्देश्यो न भवितुमर्हति सोऽर्थः, तन्निमित्ताभावादिति स्ववचनविरोधि ते वचनमिति ।

**अग्निधूमोदाहरणे चेदमः प्रत्यक्षविषयस्य सप्तम्यन्तनिर्देशेऽत्रेति प्रत्यक्षोपलभ्यधूमाधारप्रदेशाभिसम्बन्धो धूमवत्त्वाद्धूमादिति, यथाऽग्निरत्रेति साध्याधारप्रदेशप्रत्यक्षनिर्देशादग्नेः परोक्षस्य जिज्ञासितत्वात् तद्वत्त्वेन देशस्य साध्यत्वम्, इतरथाऽत्रेत्यनर्थको निर्देशः स्यात्, तस्मात् सर्वलोकप्रसिद्धिमत्यग्निमति प्रदेशे साध्ये सर्वत्र धूमवत्त्वं लिङ्गमस्त्येव, न च सर्वाग्निमत्प्रदेशसाध्यत्वम्, तत्र दृष्टान्ताभावादसाधारणतादिदोषप्रसङ्गात् ।**

**अग्निधूमोदाहरणे चेत्यादि,** इदं तावत् प्रष्टव्योऽसि[?]अग्निरत्र धूमादिति इदमः प्रत्यक्षविषयस्य प्रातिपदिकस्य सप्तम्यन्तनिर्देशेऽत्रेति प्रत्यक्षोपलभ्यधूमाधारप्रदेशाभिसम्बन्धिधूमवत्त्वाद्धूमादिति, यथाऽग्निरत्रेति साध्याधारप्रदेशप्रत्यक्षनिर्देशादग्नेः परोक्षस्य जिज्ञासितत्वात् तद्वत्त्वेन देशस्य साध्यत्वात्, इतरथा-

व्याचष्टे–**श्लोकत्रयमिति,** नास्माभिरेनदुपलब्धमिति न व्याख्यायते, प्रेर्यप्रस्तावेन–त्वदुदिते आक्षेपकर्तु. प्रसङ्गेनोपन्यस्तस्यार्थजातस्य त्वदीयाभ्युपगमेनाभावमात्रविषयत्वात् खपुष्पवदसत्त्वेन कोऽसौ नियम इति भाव । उक्तयन्तरस्याप्यप्रेक्ष्यवादत्वमाह–**यत्तूक्तमिति,** अन्वयव्यतिरेकद्वारभूते तुल्यातुल्ययोर्वृत्त्यवृत्ती प्रदर्शयता तत्र तुल्ये नावश्यं सर्वत्र प्रतिपत्तव्येया, क्वचिदानन्त्येऽर्थस्याख्यानासम्भवात्, न हि सम्भवोऽस्ति वृक्षशब्दस्य सर्ववृक्षेषु दर्शनस्य, नापि सर्वत्र लिङ्गिनि सर्वलिङ्गस्य सम्भव., अग्निधूमादिवदित्युक्तं त्वया तदपि न युज्यत इति भाव । अयुक्ततामेव प्रदर्शयति **यदि लिङ्ग्येवेति**–भस्मच्छन्नाग्न्यङ्गारायोऽग्निगुडपाकाभ्यादीनां सर्वेषां यदि लिङ्गित्वं तर्हि न लिङ्गासम्भव , लिङ्गमस्यास्तीति लिङ्गीति व्युत्पत्त्या तेषां लिङ्गसत्त्वसिद्धे , अन्यथा ते लिङ्गिन एव न भवेयु., ते न लिङ्गिन इति वाभ्युपगम्यन्ते त्वया, तत्कथं लिङ्गासम्भव लिङ्गासम्भवे वा ते कथं लिङ्गिन , लिङ्गिशब्दप्रवृत्तिनिमित्तस्य लिङ्गस्याभावादिति तेषां लिङ्गित्वोक्तिः लिङ्गं नास्तीति स्ववचनेनैव विरुध्यत इति भाव । अग्निधूमोदाहरणेऽपि सर्वत्र लिङ्गिनि लिङ्गमस्त्येवेति दर्शयति–**अग्निधूमोदाहरणे चेति । इदं तावदिति,** अत्र तावत् प्रश्नोऽस्फुट । सर्वत्र लिङ्गिनि लिङ्गास्तित्वप्रतिपादनाय अग्निरत्र धूमादिति वाक्येऽत्रेति पदं धूमपदेनाग्निपदेन च योजयित्वाऽर्थमाह–**इदम इति,** इदंशब्दात् सप्तम्यर्थे त्रल् प्रत्ययः, अत्रेदंशब्द प्रत्यक्षविषयदेशविषयः, सप्तम्यर्थोऽभिसम्बन्धः, सोऽपि प्रत्यक्षविषयो देशो धूमाधारो ग्राह्य., अत्रशब्दस्य धूमशब्देनाभिसम्बन्धात्, तथा चात्र धूमादित्यस्य प्रत्यक्षविषयधूमाधारप्रदेशाभिसम्बन्धिधूमवत्त्वादित्यर्थः, शब्दबोधस्यैकदेशत्वेऽपि हेतुत्वेनाभिमतो धूमादित्येवेति भावः । तन्निदर्शनं दर्शयति–**यथाऽग्निरत्रेति ।** अत्रपदसमभिव्याहृताग्निपदमहिम्ना यथा प्रत्यक्षविषयीभूताग्न्याधारप्रदेशलाभेऽपि प्रदेशस्य प्रत्यक्षविषयत्वेनाजिज्ञासितत्वात् परोक्षविषयाग्नेरेव जिज्ञासितत्वम्, अत एव प्रदेशत्वादिना प्रदेशस्य सिद्धत्वेऽपि अग्निमत्त्वेन प्रदेशः साध्यं भवति तद्वदित्यर्थ. । अन्यथा प्रदेशस्य तत्त्वेनासाध्यत्वेऽजिज्ञासितत्वादग्नेरेव साध्यत्वसम्भवेऽत्रेति पदोपादानं व्यर्थं स्यादित्याह–**इतरथेति ।** एवम् लिङ्गाधारप्रदेशाभिसम्बन्धिहेतोरेव लिङ्गत्वात् साध्याधार-

१ सि क्ष छा डे प्रेयप्रस्तारेणो० । २ सि. क्ष डे. सम्बन्धो । ३ सि. क्ष. छा. डे. सप्ताधार० ।

ऽग्नेत्यनर्थको निर्देशः स्यात्, तस्मात् सर्वलोकप्रसिद्धेऽग्निमति प्रदेशे साध्ये सर्वत्र धूम[व]त्त्वं लिङ्गमस्त्येव, न च सर्वाग्निमत्प्रदेशसाध्यत्वम्, तत्र दृष्टान्ताभावादसाधारणतादिदोषप्रसङ्गात् तस्मादस्ति सर्वत्र लिङ्गिनि लिङ्गमिति।

**अयोगुडाङ्गाराद्यग्नौ धूमासम्भवादिति चेन्न, अग्निसत्त्वस्य सिद्धत्वात्, अयोगुडाङ्गारभस्मच्छन्नाग्निष्वपि धूममात्रायाः कस्याश्चिद्दर्शनात्तदविनाभावात् तद्विषयलिङ्गालिङ्गत्वात्तदलिङ्गित्वात् प्रत्यक्षविषयवत्।**

(**अयोगुडेति**) अयोगुडाङ्गाराद्यग्नौ धूमासम्भवादिति चेत्-स्यान्मतं सर्वत्र लिङ्गिनि लिङ्गं नास्ति, अयोऽग्नौ गुडाग्नौ अङ्गाराग्नौ च[1] सत्यपि धूमस्य प्रत्यक्षत एवादर्शनादित्येतच्च न, अग्निमत्त्वस्य सिद्धत्वात्-न ह्यग्निरत्रेति प्रतिज्ञायामप्रतीतमग्निसामान्यं साध्यते, अग्निसत्तायाः प्रतीतत्वात्, लोके प्रत्यक्षोपलब्धधूमबलेनात्रेति देशविशिष्टस्याप्रत्यक्षस्य सिषाधयिषितत्वात्, अयोगुडांगारभस्मछन्नाग्निष्वपि धूममात्रायाः कस्याश्चिद्दर्शनात्तदविनाभावात्, तद्विषयलिङ्गालिङ्गत्वादिति-अयोगुडाङ्गारादिविषयस्य लिङ्गस्य धूमस्यालिङ्गत्वात्[2]-अविवक्षितत्वादप्रत्यक्षत्वाद्वेत्यर्थः, तदलिङ्गित्वात् प्रत्यक्षविषयवदिति-ते ह्ययोगुडाङ्गाराद्यग्नयो न लिङ्गिनो लिङ्गाभावात्तेषाम्, तस्यामवस्थायां देशे च तस्मिन्नविज्ञातत्वात्[3], लिङ्ग्यते च लिङ्गदर्शनबलेन लिङ्गि वस्तु, न हि ते लिङ्ग्यन्ते लिङ्गदर्शनात्, लिङ्गनिरपेक्षप्रसिद्धेश्च, यथा प्रत्यक्षोपलब्धिकाले, तस्मात्तेषामलिङ्गित्वात् प्रत्यक्ष[विषय]वदिति, [न] लिङ्गं धूमस्तेषाम्, यत्र चासौ लिङ्गं तत्र लिङ्गिनि देशे सिद्धत्वादेव लिङ्गम्, तत्रासिद्धेरग्नि[म]त्त्वेन[4] देशो लिङ्ग्यतेवेति।

प्रदेशस्यैव लिङ्गित्वात् प्रदेशविशेषयोरुभयोरप्यत्रेत्येकपदोपादानेनाभेदात् सर्वलोकप्रसिद्धेऽग्निमति प्रदेशे साध्ये सर्वत्र धूमवत्त्वं लिङ्गमस्त्येवेति सर्वत्र लिङ्गिनि लिङ्गासम्भवोक्तिरयुक्तेति भावः। ननु यावन्तोऽग्निमत्प्रदेशास्ते सर्वे साध्यन्ते न च तत्र सर्वत्र लिङ्गसम्भव इत्याशङ्कते-**न चेति**। तथा च निश्चितसाध्यवतः सपक्षस्याभावात् सपक्षवृत्तित्वलक्षणान्वयस्याभावेन व्यतिरेकस्याप्यभावात् सर्वसपक्षविपक्षव्यावृत्तलक्षणासाधारणत्वादिदोषाः प्रसज्यन्त इत्युत्तरयति-**तत्र दृष्टान्ताभावादिति**। नन्वयोऽग्न्यादिलिङ्गिनो न लिङ्गसम्भवः, तत्र धूमादेः प्रत्यक्षत एवादर्शनादिति शङ्कते-**अयोगुडेति**। व्याकरोति-**स्यान्मतमिति**। न ह्ययोऽग्न्यादयो लिङ्गिन, तेषां प्रतीतत्वात्, न ह्यग्निरत्रेति प्रतिज्ञायामप्रतीतमग्निसामान्यं साध्यते, अग्नेश्च प्रतीतत्वादेव न लिङ्गित्वम्, किन्तु देशविशिष्टोऽग्निरेव लिङ्गी, देशविशिष्टत्वेनाग्नेरप्रत्यक्षत्वेन सिषाधयिषितत्वात्, सोऽपि देशो लिङ्गाधार एव ग्राह्यः, लोके प्रदेशविशेषे लिङ्गं दृष्ट्वैव लिङ्गिनोऽनुमानादित्याशयेन समाधत्ते-**अग्निसत्त्वस्येति**। वस्तुतस्तु अयोऽग्न्यादिष्वपि ईषद्धूमो दृश्यत एव, तथापि नासौ लिङ्गत्वेन विवक्षितः, अप्रत्यक्षत्वात्, अत एव प्रत्यक्षदृष्टस्याग्नेरलिङ्गित्ववदयोऽग्न्यादीनामप्यलिङ्गित्वमित्याशयेनाह-**अयोगुडाङ्गारेति**। तद्धूमस्यालिङ्गत्वमाह-**तद्विषयेति**, अयोगुडाङ्गाराद्यग्न्यविनाभाविधूममात्रावगाहिदर्शनविषयेत्यर्थः। अयोऽग्न्यादेरलिङ्गित्वमाह-**तदलिङ्गित्वादिति**। कथं लिङ्गाभाव इत्यत्राह-**तस्यामवस्थायामिति**, धूममात्राऽवस्थायां स्तोकत्वात्तव तस्मिन् प्रदेशेऽविज्ञातत्वादिति भावः। लिङ्गदर्शनबलेन यदेव वस्तु लिङ्ग्यते तदेव लिङ्गीत्युच्यते, न ह्ययोऽग्न्यादयः स्वत एव सिद्धा लिङ्गदर्शनबलेन लिङ्ग्यन्ते तत्र लिङ्गादर्शनादित्याह-**लिङ्ग्यते चेति**। प्रत्यक्षसिद्धाग्निं दृष्टान्तयति-**यथेति**। एवञ्च प्रत्यक्षदृष्टाग्निवदयोऽग्न्यादीनामलिङ्गित्वात्तेषां धूमो लिङ्गं न भवतीत्याह-**तस्मात्तेषामिति**। अग्निमति सिद्धो धूमो लिङ्गं भवति अग्निमत्त्वेनासिद्धो देशो लिङ्गी भवतीत्याह-**यत्र चासाविति**। स्यान्नाम न लिङ्गिनोऽयोऽग्न्यादयस्तदा, यदा ते सिद्धाः भवन्ति

१ सि. क्ष. चकनस्त्वपि। २ सि. छा असत्त्वादित्यधिकं दृश्यते। ३ सि क्ष. छा. डे. ˚ऽनिज्ञानत्वात्। ४ सि. क्ष. डे. छा. तत्रास्सिद्धे˚

स्यान्मतमयोऽग्न्यादीनामप्यसिद्धत्वात् पक्षान्तर्गतत्वे सत्युच्यते न सर्वत्र लिङ्गिन्यग्निमति दृश्यते धूम इत्येतदयुक्तम्—

**तदसिद्धौ पक्षधर्मादिनिर्मूलत्वाद्वनस्पतिचैतन्ये स्वापवत् स्यात्, देशविशेषानपेक्षाग्निसामान्यसाध्यत्वेऽसाधारणत्वमत्रेत्यभिधानवैयर्थ्यञ्च, तन्मा भूदित्यत्रशब्दवाच्यस्याग्निविशिष्टस्य धूमपक्षविसंवादे साधर्म्याभावाल्लिङ्गशब्दयोः कुतोऽनुमानत्वं शब्दस्य? यदि लिङ्गवच्छब्दः त्रिलक्षणोऽन्यापोहेन स्वार्थं गमयतीति मन्यसे ततो वृक्षशब्दस्य व्यवच्छिन्नात् वृक्षादभिधेयादन्यत्र तुल्ये सपक्षे वृत्तिः स्यात्, अनुमानत्वात्, अन्वयदर्शनार्थप्रयुक्तघटादिवत् ।**

(**तदसिद्धाविति**) तदसिद्धौ पक्षधर्मादिनिर्मूलत्वात्-तेषामप्ययोऽग्न्यादीनां साध्यत्वे धूमः सर्वत्र धर्मिण्यभावात् [1]व्यापिपक्षधर्मासिद्धौ वनस्पतिचैतन्ये स्वापवत् स्यात्, देशविशेषानपेक्षाग्निसामान्यसाध्यत्वे सपक्षाभावादसाधारणत्वम्, अत्रेत्यभिधानवैयर्थ्यञ्च स्यात्, तन्मा भूदिति अत्रशब्दवाच्यस्याग्निविशिष्टस्य धूमपक्षविसंवादे साधर्म्याभावाल्लिङ्गशब्दयोः कुतोऽनुमानत्वं शब्दस्येति, तद्व्याख्या—यदि लिङ्गवच्छब्द इत्यादि, यदि कृतकत्वादिलिङ्गवच्छब्दस्त्रिलक्षणोऽन्यापोहेन स्वार्थं गमयतीति मन्यसे ततो वृक्षशब्दस्य [2]व्यवच्छिन्नाद्वृक्षादभिधेयात् स्वार्थाख्यादन्यत्र[3] तुल्ये सपक्षे वृत्तिः स्यात्,—पक्षधर्माद्वृक्षशब्दादन्यस्य वृक्षशब्दादिवाच्ये ततो व्यवच्छिन्ने, कृतकत्वानित्यत्वाश्रये घटे इव वृत्तिः स्यात्, अनुमानत्वात्, अन्वयदर्शनार्थप्रयुक्तघटादिवदिति गतार्थम् ।

**ननु वृक्ष एव वृत्तिः स्यात् पक्षत्वाद्वृक्षाणाम्, अनुमानत्वादेव त्वदभिमतावृक्षाग्निवृत्तिमात्रं वृक्षता, नान्यस्मिन्नपि साध्यधर्मसामान्येन समानार्थाभिमतितुल्यार्थान्तरे वृक्षशब्दस्य**

यदा तु तेऽसिद्धास्तदा तेऽपि पक्षकुक्षिप्रविष्टाः, तथा च न सर्वत्राग्निमति धूमो दृश्यत इत्यत उच्यते सर्वत्र लिङ्गिनि लिङ्गासम्भव इतीत्याशङ्कते-**स्यान्मतमिति** । समाधत्ते-**तदसिद्धाविति** । व्याचष्टे-**तेषामपीति**, अयोऽग्न्यादीनामप्यसिद्धत्वेन साध्यत्वे धूमोऽव्यापिपक्षधर्मः स्यात्, यथा सचेतना वनस्पतयः, स्वापादित्यत्र वनस्पतौ तालादाववर्तमानः स्वापो हेतुरिति भावः । आदिपदग्राह्यं दोषान्तरमाह-**देशविशेषेति**, निखिलानामग्नीनां साध्यान्तर्गतत्वेन निखिलाग्निमत्पक्षाभावात्सपक्षविपक्षव्यावृत्तत्वेन धूमोऽसाधारणः स्यात् केवलं पक्ष एव वृत्तेः, देशविशेषानपेक्षायाञ्च तद्बोधकात्रशब्दोपन्यासो निष्फल इति भावः । अत्रशब्दसाफल्याय तदर्थोऽग्निसम्बन्धीष्यते तदा सोऽग्निसम्बन्धी किं धूमः, उत सपक्ष इति विसंवादः स्यात्, देशविशेषानपेक्षणात्, एवञ्च पक्षमात्रवृत्तिना सपक्षावृत्तिना वा लिङ्गेन सार्धं शब्दस्य त्रैलक्षण्यरूपसाधर्म्याभावात् कथं लिङ्गवच्छब्दोऽनुमानं स्यात्, यदुच्यते त्वया 'कृतकत्वादिवत्स्वार्थमन्यापोहेन भाषते' इतीत्याह-**तन्मा भूदिति**। भवतु लिङ्गस्य त्रैलक्षण्यं परन्तु यदि शब्दोऽपि तद्वदिष्यते तर्हि सपक्षवृत्तिः स्यात्, अवृक्षव्यवच्छिन्नं हि स्वार्थं गमयति वृक्षशब्दः, तत्र कोऽसौ पक्षादन्यः पक्षसदृशः सपक्षोऽवृक्षव्यवच्छिन्नोऽभिधेयात् स्वार्थादन्यः ? यत्र वृक्षशब्दो वृत्तिः स्यात्, यथाऽनित्यत्वेन निश्चिते सपक्षे पक्षाच्छब्दादन्यस्मिन् घटादौ कृतकत्वं वर्तते वृक्षशब्दस्यानुमानत्वादित्याशयेन व्याकरोति-**यदि कृतकत्वादीति** । यत्र यत्र कृतकत्वं तत्र तत्रानित्यत्वमित्यन्वयं प्रदर्शयितुं प्रयुक्ते घटे सपक्षेऽनित्यत्ववति कृतकत्वस्य हेतोर्वृत्तित्ववदिति दृष्टान्तमाह-**अन्वयेति**, अत्रैवं भाति-न चैवमत्र सपक्षोऽस्ति, पक्षधर्मभूताद्वृक्षशब्दादन्यस्य वृक्षशब्दस्य पक्षधर्मभूतवृक्षशब्दवाच्याद्विषे स्वार्थादन्यस्मिन् सपक्ष इत्यर्थः, पक्षधर्मभूतधूमाद्धि महानसादिवृत्तिधूमोऽन्यः साध्यभूताद्धर्माभिन्नश्चेति महानसादिः सपक्ष इत्याशयः स्यादिति । अथ वृक्ष एव वृक्षशब्दस्य वृत्तिरिति निरूपयति-**ननु वृक्ष एवेति** ।

१ सि० क्ष. छा. डे. अव्यापीपक्षधर्मोऽसिद्धौ । २ सि. क्ष. डे. छा. °स्याव्यवच्छिन्नेषु । ३ सि. क्ष. छा. डे. °न्यत्रातुल्ये ।

**वृत्तिरस्ति, सपक्षधर्मार्थावच्छिन्नार्थत्वात्, कृतकत्वस्येवानित्येषु, तस्मात् सपक्षाभावात्तत्तुल्ये नास्ति वृत्तिः शब्दस्य, किं तर्हि? तत्रैव वृत्तिः, तस्मात्त्रैलक्षण्याभावान्नानुमानं शब्दः, त्वन्मतवत्तत्रैव वृत्तावसपक्षवृत्तिगतदोषापत्तिश्च ।**

(**नन्विति**) ननु वृक्षेषु वृत्तिः स्यात्, किं कारणम्? पक्षत्वाद्वृक्षाणाम्-पक्ष एव वृक्षशब्दाख्यस्य धर्मस्य धर्मिणो वृक्षार्थाः सपक्षादवच्छिन्नाः, तेष्वेव ननु वृत्तिः स्यात्, अनुमानत्वादेव त्वदभित[ा]वृक्षाभिवृत्तिमात्रं वृक्षता, नान्यस्मिन्नपि-साध्यधर्मसामान्येन समा[ने]नार्थेन तदभिमतया तुल्यत्वं येषु साध्याद्वृक्षाद्भिन्नेषु अर्थान्तरेषु वृक्षशब्दस्य वृत्तिर्नास्ति पक्षधर्माभिमतस्य, कस्मात्? सपक्षधर्मार्थावच्छिन्नार्थत्वात्, किमिव? कृतक[त्व]स्येव[ा] नित्येष्विति, तस्मादिति वैधर्म्येण, तस्मात् सपक्षाभावात्तत्तुल्ये नास्ति वृत्तिः शब्दस्य, किं तर्हि? तत्रैव वृत्तिः, तस्मात्त्रैलक्षण्याभावान्नानुमानं शब्दः, किञ्चान्यत्-त्वन्मतवत्तत्रैव वृत्तावसपक्षवृत्तिगतदोषापत्तिः सपक्षादन्यो वा सपक्षाभावो वा स्यादसपक्षः, स च साध्यधर्मसामान्येन समानादर्थात्, सपक्षादन्यः[स]पक्षाभावः पक्ष एवासपक्षः, इह तत्रैव वृक्षार्थे वृत्तत्वात् वृक्षशब्दस्तद्धर्मोऽपि सन् विरुद्धोऽसाधारणानैकांतिको वा स्यात् ।

**हेत्वपवादनियमितत्वादसद्वृत्तिगतदोषो नेति चेन्न, पक्षसपक्षासपक्षाव्यवस्थायां तद्व्यवस्थाभावात्, आपत्त्यभ्युपगमे त्वन्यापोहान्यथात्वात् स्वार्थापोह एव स्यात्, सपक्षावच्छिन्नस्यापि सपक्षत्वात् ।**

**हेत्वपवादेत्यादि**, यावन्नेति चेत्-स्यान्मतं 'स हेतुर्विपरीतोऽस्माद्विरुद्धोऽन्यस्त्वनिश्चितः ॥' (        ) इति लक्षणात् त्रिलक्षणस्य हेतोरपवादो-हेत्वाभासो विरुद्धोऽसाधारणः साधारणोऽसिद्धो वेति नियमितत्वात् [2]असपक्षवृत्तिगतदोषाभावोऽस्य वृक्षशब्दस्येति, एतच्च न, प[क्षसप]क्षासपक्ष[ा]व्यवस्थायां तद्व्यवस्थाभावात्-हेतुहेत्वाभासव्यवस्था[याः]पक्षसपक्षासपक्षव्यवस्थायां सिद्धायां सिद्धि[3]स्तदसिद्धा-

व्याकरोति-**ननु वृक्षेष्विति**, वृक्षेष्वेव वृक्षशब्दास्तिता, ते च सपक्षाद्भिन्ना पक्षस्वरूपा एव, अनुमानत्वादेव वृक्षशब्दस्य नान्यत्र वृत्तिताऽस्ति, अन्यापोहेन हि स्वार्थं गमयति वृक्षशब्दः तथा च स्वार्थादन्यत्र साध्यधर्मसामान्येन तुल्ये कथं वृत्तिः स्यात्, वृक्षशब्दस्य सपक्षधर्मोऽव्यावृत्तरूपत्वादिति भावः । कारणमाह-**सपक्षधर्मेति** । सपक्षधर्मरूपो योऽर्थस्तदव्यवच्छिन्नार्थत्वादित्यर्थः, वैधर्म्यदृष्टान्तमाह-**कृतकत्वस्येति**, यथाऽनित्येभ्यो घटादिभ्यः सपक्षेभ्यः कृतकत्वं न व्यावृत्तरूपं तद्वैधर्म्याद्वृक्षशब्दः सपक्षाभावान्न तुल्ये वर्तते किन्तु केवलं पक्ष एव वर्तत इति कथं शब्दोऽनुमानं त्रैलक्षण्याभावादिति भावः । यदि तत्रैव वृत्तिरभ्युपगम्यते तदा दोषान्तरमाह-**त्वन्मतवदिति । असपक्षवृत्तीति**, असपक्षपदेन साध्यधर्मसामान्येन समानार्थात् सपक्षादन्यः, विरुद्धो धर्मी तत्रैव हेतोर्वृत्तौ विरोधो दोषः, यस्य सपक्षो नास्ति तथाविधः पक्ष एवासपक्षः, तत्रैव वृत्तौ दोषोऽसाधारणानैकान्तिकत्वम्, तदाऽऽपद्यत इति भावः । नन्वयं हेतुरयन्तु हेत्वाभास इति प्रतिनियमितत्वात् वृक्षशब्दस्य हेतुत्वेन कथमसपक्षगता दोषास्तत्रापद्यन्त इत्याशङ्कते-**हेत्वपवादेति** । व्याचष्टे-**स्यान्मतमिति**, स हेतुः यस्त्रिलक्षणसम्पन्नः, अस्माद्विपरीतस्तु द्विविधः एको विरुद्धः, अन्यस्त्वनिश्चितः, अनिश्चितश्च त्रिविधः, साधारणासाधारणासिद्धभेदादित्यर्थो भाति, तदेवं हेतुतदाभासयोर्नियतत्वाद्वृक्षशब्दस्य हेतुत्वेनासपक्षगतदोषापत्तिर्नास्तीति भावः । समाधत्ते-**एतच्च नेति**, पक्षसपक्षासपक्षव्यवस्थाधीना हेतुतदाभासव्यवस्था, 'हेत्वाभासास्ततोऽपरे'

१ सि. क्ष. छा. डे. समानोऽर्थः सपक्षा० । २ सि. क्ष. छा. डे. असद्वृत्तिगत० । ३ सि. क्ष. छा. सिद्धेस्तद० ।

वसिद्धिः, हेतुतदाभासव्यवस्थानियमस्य पक्षादिव्यवस्थाश्रयत्वात्, पक्ष एव तावदव्यवस्थितः, उभयतोऽभवनपरमार्थत्वादित्युक्तत्वात्, सपक्षस्त्वनन्तरन्यायो नास्ति, असपक्षस्तु स एव पक्षः त्वन्मताभ्युपगमात् स्यात् सपक्षाभवमात्रत्वात्, इतरथा नैव स्यादुक्तवदेव, तस्माद्धेत्वपवादनियमादसपक्षवृत्तिगतदोषापत्तिस्तदवस्थैव, आपेत्त्यभ्युपगमे त्वित्यादि, यद्येवमापत्तिदोषमभ्युपैष्यसपक्षवृत्तिगतं ततोऽन्यापोहान्यथात्वं दोषः—अन्यापोहोऽपि तर्ह्यन्याभावात्तदपोहाभावाच्च स्वार्थापोह एव स्यात्, कस्मात्? सपक्षावच्छिन्नस्यापि सपक्षत्वात्—पक्षादन्यः सपक्षः, ततोऽवच्छिन्नोऽसपक्षो वा स एव पक्षः, ततः[स]पक्षादन्यः पक्ष एव पक्षादन्यः, सपक्षादन्यत्वात्, ततोऽन्यापोहः पक्षापोहः स्वार्थापोह इत्यापन्नः।

किञ्चान्यत्—

**सपक्षापक्षेपणक्षीणशक्तेश्च पक्षापक्षयोर्विशेषं गमयितुं नालम्, साध्यनिर्देशवत्, तद्विषयपक्षधर्मत्वादेव तुल्ये वृत्तिरिति चेत्, अननुमानं तर्हि शब्दोऽद्विलक्षणत्वात्, असाधारणवत् विरुद्धोऽपि तद्विषयमात्रार्थत्वादन्यापोहशब्दार्थत्वस्य, व्यतिरेकस्य स्वार्थासम्भवादपि व्यर्थतैव वा, पक्षमात्रस्याप्यलक्षणत्वात्, अव्यक्तश्रुतिवत्।**

---

इति श्रुक्तम्, तत्र तत इत्यनेन त्रिलक्षणयुतस्य हेतोरेव ग्रहणात्तद्व्यवस्थाधीनत्व हेत्वाभासस्य, 'अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽसति। निश्चितानुपलम्भाऽऽत्मकार्याख्या हेतवस्त्रयः।' पक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपत्रैलक्षण्ययुतो हेतुरुक्त, तस्मात् पक्षादिव्यवस्थाश्रया हेतुतदाभासव्यवस्थेति भाव। न च तद्व्यवस्थाया तव मतेन पक्ष एव न व्यवस्थित, स्वान्ययोर्न भवति न भवतीत्यभावविषयत्वेनाभवनपरमार्थत्वात् तयोरभावेन तस्यैव चाभावस्यान्यापोहनिबंधनत्वाच्च कश्चिच्छब्दार्थ इति पक्षाव्यवस्थेत्याशयेनाह—**पक्ष एव तावदिति**। सपक्षोऽपि नास्ति, वृक्षाणां पक्षत्वस्योक्तत्वादित्याह—**सपक्षस्त्विति**। सपक्षाभावरूपोऽसपक्षः पक्ष एव, स चाव्यवस्थित इत्याह—**असपक्षस्त्विति,** साध्यधर्मसामान्येन समानः सपक्षभिन्नः पक्षव्यतिरिक्तश्च नास्ति कश्चन, सपक्षादन्य किन्तु पक्ष एवासपक्ष, यदि स्यात् सपक्षादन्यः सोऽप्यभवनपरमार्थत्वादसन्नेवेति भावः। भवत्वसपक्षवृत्तिगतदोषापत्तिरित्युच्यते तर्हि अन्यापोहस्यान्यथात्वं स्यात्, यथा त्वयाऽन्यापोह इष्यते तद्विपरीतार्थो भवेदित्याह—**यद्येवमिति,** अन्यत्वं हि पक्षादन्य सपक्ष, सपक्षादन्य पक्ष इत्युभयं विषयीकरोति, सपक्षस्य पक्षादन्यत्वात पक्षस्य सपक्षादन्यत्वाच्च, पक्षसपक्षयोर्द्वयो स्वरूपतो ग्रहणाभावेऽन्यत्वस्य तन्निष्ठस्याग्रहात् कोऽसौ पक्षादन्यो यदपोहादन्यापोह. सपक्षापोहः सिद्ध्येत, कस्माद्वा सपक्षोऽन्य, यतोऽन्यस्यान्यत्वं सिद्ध्येत, तदेवं परस्परापेक्षया परस्परस्यान्यत्वे च पक्षोऽप्यन्यो न भवति, सपक्षोऽप्यन्यो न भवतीत्युभयतोऽप्यभवनमेव परमार्थ. स्यादित्यादिरूपतोऽन्यापोह स्वार्थापोहो भवतीति भावः। कथमन्यापोह स्वार्थापोह इत्यत्राह—**सपक्षेति**। प्रथममन्यापोहं दर्शयति—**पक्षादन्य इति,** पक्षादन्य. सपक्षो भवति तद्व्यावृत्तश्च पक्षो भवतीति भावः। तदन्यथात्वमाह—**ततः सपक्षादन्य इति,** पक्ष एव पक्षादन्यः स्यात्, तस्य सपक्षादन्यत्वात्, तथा चान्यशब्देन पक्षग्रहणात् पक्षापोह एवान्यापोह. संवृत्त स तु स्वार्थापोह एव नान्यापोह· परापोहरूपत्वदिष्ट इति भावः। किञ्च पक्षशब्दोऽपक्षनिवृत्तिमात्रं विधत्ते न तु पक्षं गमयितुं समर्थः, तत्रैव पक्षशब्दसामर्थ्यस्यापक्षीणत्वादित्याह—**सपक्षापक्षेपणेति**। असपक्षशब्दस्य य. प्रतिपक्षः सपक्षस्तस्यापक्षेपणे शक्तेः क्षीणत्वात् सपक्षव्यावृत्तिमात्रे वृत्तेर्न तद्व्यावृत्तं पक्षं अपक्षं वा

---

१ सि. क्ष. छा तस्माद्धेत्वादिरिति। २ सि. क्ष. डा. डे. आपत्त्युप०। ३ सि. क्ष. डे. छा. °भ्युपेत्य०० ४ क्ष. एवऽप०।

(**सपक्षेति**) सपक्षापक्षेपणक्षीणशक्तेश्च-सपक्षादन्योऽसपक्षः पक्ष इत्युक्ते सपक्षव्यावृत्तिमात्रे चरितार्थत्वात् पक्षापक्षयोर्विशेषं गमयितुं नालं पक्ष एवायं नापक्ष इति, कस्मात्? उक्तकारणात्, किमिव? साध्यनिर्देशवत्-यथा 'साध्यनिर्देशः प्रतिज्ञा' (गौ. १. १. ३३) इत्यक्षपादपक्षलक्षणं सिद्धिनिवृत्तौ चरितार्थत्वात् साध्यविशेषं पक्षमेव असिद्धात् दृष्टान्तेभ्यो व्यतिरिक्तं न गमयितुमलम्, विपक्षापक्षेपणक्षीणशक्तित्वात् तदा सपक्षादन्योऽसपक्ष इति सपक्षात् पक्षं विशेष्य न गमयितुमलम्, सामान्यमात्रवृत्तेः, त्वया तु विशेषवृत्तेः पक्ष एव सपक्षावच्छिन्नवृत्तिरिष्यते, तत्तु न सिद्ध्यतीत्थं न्यायात्, स्यान्मतं तद्विषये-त्यादि यावद्वेदिति, स एव वृक्षार्थो विषयः पक्षः, तस्य पक्षस्य धर्मो वृक्षशब्दः, तस्मात्तद्विषयपक्षधर्मत्वादेव तुल्ये वृत्तिर्वृक्षार्थे, तच्च दृष्टं, पक्षस्य धर्मो हेतुरित्यनयैवोक्त्या गतत्वात् विशेषार्थगतिरेवेत्यर्थः, अत्रोच्यते-अननुमानं तर्हि शब्दः, अनुमानाभास इत्यर्थः, पक्ष एव वृत्तत्वात्, तच्च कारणत्वेनाह-अद्विलक्षणत्वादसाधारणवदित्यादि गतार्थं यावत् तद्विषयमात्रार्थत्वात् अन्यापोहशब्दार्थत्वस्येति, स एव विषयस्तद्विषयो वृक्षः, तन्मात्रमेव वाच्यमित्युक्तमन्यापोहशब्दार्थत्वम्, अतोऽसाधारणविरुद्धते, किञ्चान्यत्-व्यतिरेकस्य स्वार्थासम्भवादपि व्यर्थतैव वा-अन्यापोहो हि व्यतिरेकमात्रम्, न भवति न भवतीत्यभवनपरमार्थत्वादुभयतोऽप्यभाव एव वन्ध्यापुत्रवन्न स्वार्थः कश्चिदित्युक्तम्, तस्माद्वृक्षशब्दस्य व्यर्थतैव, पक्ष[धर्म]मात्रस्याप्य-

---

बोधयितुं शक्तिरस्तीति व्याचष्टे-**सपक्षादन्य इति**। विशेषमाह-**पक्ष एवायं नापक्ष इतीति** पक्षं वाऽपक्षं वा विविच्यासपक्षशब्दो न गमयतीति भावः। हेतुमाह-**उक्तकारणादिति**, सपक्षापक्षेपणक्षीणशक्तिरूपकारणादित्यर्थः। दृष्टान्तमाह-**साध्यनिर्देशवदिति**, । व्याचष्टे-**यथेति**, साध्यनिर्देशः प्रतिज्ञेत्यत्र साध्यपदं सिद्धिनिवृत्तावेव चरितार्थमतो दृष्टान्तेभ्यो व्यतिरिक्तमसिद्धहेत्वाभासव्यावृत्तं साध्यविशेषं पक्षमेव न गमयितुं क्षममिति पूर्वं व्याख्यातमेव, साध्यविपक्षस्य सिद्धेर्व्यावृत्तिमात्रेणोपशान्तसामर्थ्यात् तथाऽसपक्षपदमपि सपक्षाद्विशिष्टं पक्षं प्रबोधयितुमशक्तम्, सपक्षव्यावृत्तिलक्षणसामान्यमात्रे वृत्तेरिति भावः। एवञ्च त्वदभीप्सितं सपक्षव्यावृत्तपक्षवृत्तित्वमसपक्षशब्दस्य न सेत्स्यतीत्याह-**त्वया त्विति**। **इत्थं न्यायादिति**, असपक्षशब्दः पक्षविशेषस्वार्थागमकः, विपक्षापक्षेपणक्षीणशक्तित्वात्, यत्र च शब्दे विपक्षापक्षेपणक्षीणशक्तित्वं तन्न विशेषस्वार्थगमकम्, साध्यनिर्देशवदिति न्यायादित्यर्थः। हेतुरयमसपक्षवृत्तिरित्युक्तौ सपक्षव्यावृत्तिमात्रपरत्वेऽप्यसपक्षशब्दस्य तद्विषयः पक्ष एव, तद्धर्मत्वाद्धेतोस्तुल्यवृत्तित्वमिति विशेषार्थस्य पक्षस्यावगतिर्भवत्येवेत्याशङ्कते-**स्यान्मतमिति**, हेतुः पक्षस्य धर्मो भवति, अत्र पक्षशब्दस्य सपक्षव्यावृत्तिपरत्वेऽपि व्यावृत्तेरपक्षस्य वा धर्मो हेतुर्न भवितुमर्हतीत्यर्थात् व्यावृत्तिमन्तं पक्षविशेषस्यावगतिः स्यादेवेति भावः। एवञ्चेत्तर्हि शब्दो नानुमानं स्यादित्युत्तरयति **अननुमानमिति**, पक्षमात्रवृत्तित्वेनायं हेतुरहेतुरेवेत्यर्थः। कारणमाह **अद्विलक्षणत्वादिति**, सपक्षसत्त्वविपक्षासत्त्वरूपद्विलक्षणरहितत्वादित्यर्थः, वृक्षार्थ एव वृत्तत्वाद्वृक्षशब्दस्य सपक्षाभावेन सपक्षवृत्तित्वाभावादत एवान्वयाभावेऽतुल्यावृत्तित्वरूपव्यतिरेकस्याप्यभावादसाधारणवदनुमानाभास इति भावः। पक्षशब्दो हि पक्षान्यापोहवचनः, तत्रान्यापोहशब्दस्यान्यव्यावृत्तिमात्रपरत्वे साध्यधर्मसामान्येन समानो यः पक्षान्यस्तदभावरूपतया तत्रैवान्यापोहशब्दस्य क्षीणशक्तित्वाद्व्यावृत्तिमतो न बोधः, कथञ्चिद्बोधेऽप्यसाधारणत्वमुक्तम्, यदि चान्यापोहपदस्यान्यव्यावृत्त्यवच्छिन्नस्वार्थपरत्वं तदा साध्यधर्मसामान्येन समानात् पक्षादन्याद्व्यावृत्तो न साध्यवान् भवितुमर्हति किन्तु साध्यशून्यधर्म्येवेति तस्य विपक्षरूपत्वात्तथाविधवृक्षान्यव्यावृत्ते वृक्षे एव वृक्षशब्दस्य वृत्तेर्विरुद्धता स्यादित्याशयेनाह-**स एवेति**। व्यावृत्तिव्यावृत्तिमद्रूपार्थद्वयपक्षेऽपि वृक्षशब्दस्य वृक्षमात्रे वृत्तिः, अतोऽसपक्षवृत्तिगतदोषापत्तिरुक्ता, वस्तुतोऽन्यापोहस्याभावमात्ररूपतया न स्वार्थः कश्चिदस्तीति अन्यतदपोहयोरभवनपरमार्थत्वोक्तेर्वृक्षशब्दो व्यर्थ एवेत्याशयेनाह-**व्यतिरेकस्येति**। उक्तप्रकारेण पक्षोऽपि न वृक्षशब्दार्थो येन पक्षधर्मता स्यादित्याह-

---

१ सि. क्ष. डे. नासप॰। २ सि. क्ष. छा. डे. असिद्धन्तु। ३ सि. क्ष. डे. छा. एवासय। ४ सि. क्ष. छा. डे. तद्विषद इत्यादि।

लक्षणत्वादव्यक्तश्रुतिवत्, यथा म्लेच्छप्रयुक्तशब्दार्थो व्यावृत्तिमात्रार्थत्वात् स्वार्थमात्रस्याप्यलक्षणात्, व्यर्थो हिस्तमिश्र[ ? ]इत्यादि तथा वृक्षशब्दः स्यादिति ।

तदर्थाभावप्रदर्शनार्थमाह—

**गुणसमुदायो हि वृक्षार्थः उक्तवत्, संवृतिसतः सामान्यसमुदायाख्यस्यासत्त्वात् विशेषाणामृजुवक्रविवरकोटरादीनामवाच्यत्वात् तदेकलक्षणतापि नास्ति कुतः स्वार्थाद्भिन्नस्याभूतस्य प्रतिपत्तिः ? अन्यस्य यतोऽपोहः सिद्ध्येत्, स तु नास्ति, तदभावात्, यश्च वृक्षशब्दस्तस्य वृक्षार्थाभावात् पक्षधर्मत्वाभावः, तत्कथं वृक्षार्थो नास्ति ? गुणसमुदायसंवृत्त्यर्थत्वात् सेनाशब्दवत् वृक्षशब्दस्य समुदायार्थवृत्तितैवेति चेन्न, अभ्युपगतमूलादीनां तदात्मत्वेनैकत्वे तदतुल्यत्वात् वृक्षार्थस्य तुल्यातुल्यवृत्त्यवृत्त्यादिवचनवैयर्थ्यमेव ।**

**गुणसमुदायो हीत्यादि**, तस्मात्तद्द्वारेणानुमानासम्भव[ इति ] उक्तवदिति प्रागुक्तं तन्मतमेव स्मारयति-संवृतिसतः सामान्यसमुदायाख्यस्यासत्त्वाद्विशेषाणामृजुवक्रविवरकोटरादीनामवाच्यत्वादिति, तस्मात्तदेकलक्षणताऽपि नास्ति कुत एव स्वार्थाद्भिन्नस्याभूतस्य प्रतिपत्तिः ? अन्यस्य यतोऽपोहः सिद्ध्येत्, स तु नास्त्यन्यः, तदभावात्-तत्प्रतिपत्तिनिश्चयलभ्यप्रतिपत्तिलभ्यो अन्यो नास्ति, तत्प्रतिपत्तिनिश्चयलभ्यो हि तुल्यातुल्यविवेकात्मेति, यश्च वृक्षशब्द इत्यादि, वृक्षार्थस्य पक्षस्याभावात् पक्षधर्मत्वाभावो वृक्षशब्दस्येति तद्भावनाग्रन्थः, तत्कथमित्यादि यावत् सेनाशब्दवदिति गतार्थः, गुणसमुदायसंवृत्त्यर्थत्वादिति हेतुः, वृक्षशब्दस्य समुदायार्थवृत्तितैवेति चेत्—स्यान्मतं वृक्षशब्दः समुदायेनार्थेनार्थवान्, मूलादीनाञ्च समुदायो वृक्ष उच्यते, तस्मात् समुदायार्थवत्त्वाददोष इत्येतच्च न, अभ्युपगतेत्यादि, अभ्युपगतानां मूलादीनां तदात्म-

**पक्षधर्ममात्रस्यापीति** । दृष्टान्तमाह—**अव्यक्तश्रुतिवदिति**, असंस्कृतपुरुषप्रयुक्तशब्दवदित्यर्थः । वृक्षशब्दस्य स्वार्थाभावमेव दर्शयति-**गुणसमुदायो हीति** । तुल्ये वृत्तिस्वरूपान्वयद्वारेणानुमानासम्भवः पूर्वमुक्तस्तन्मतमेवोक्तवदिति स्मारयतीत्याह-**तस्मादिति** । अर्थस्यानन्त्यात्तुल्ये सर्वत्र वृत्तेराख्यानासम्भवादित्यर्थः । वृक्षादयोऽर्था गुणसमुदायरूपाः समुदायः सामान्यमिति पर्यायौ, समुदायो न परमार्थभूतो गुणेभ्यो व्यतिरिक्तः, अवयविवादापत्तेः, स्थैर्यवादापत्तेश्च, किन्तु स्थिरत्वेन व्यतिरिक्तत्वेन चानादिवासनापरिकल्पितत्वात् केवलं संवृत्यैव सन्, अत एव परमार्थतोऽसन्, गुणभूता ऋजुवक्रकोटरादयो न केनचित् प्रमाणेन बाध्यन्त इति त एव परमार्थसन्तः तेषामानन्त्येनावाच्यत्वं नहि वृक्षशब्देन ऋजुवक्रादय उच्यन्ते, तस्माद्वृक्षार्थाभावात् पक्षमात्रस्य वृक्षस्य धर्मो वृक्षशब्द इति पक्षव्यापकत्वैकलक्षणताऽपि नास्तीति स्वार्थस्यैवाप्रतिपत्त्या कुतस्तदन्यस्य प्रतिपत्तिर्यस्मादपोहः स्यादित्याह-**संवृतिसत इति** । अन्यस्तु नास्ति, स्वार्थाभावात्, स्वार्थप्रतिपत्तिजन्यप्रतिपत्तिविषयोऽन्यो नास्ति, ततोऽपोहोऽपि नास्ति, स्वार्थतदन्यप्रतिपत्त्यैव हि सपक्षस्तुल्योऽसपक्षोऽतुल्य इत्येवं विवेकः कर्तुं शक्यते नान्यथेति व्याचष्टे-**स तु नास्तीति** । वृक्षशब्दस्य पक्षधर्मत्वाभावं भावयति-**वृक्षार्थस्येति** । **गुणसमुदायेति**, अवयवसमुदाय एव संवृतिविषयीभूतोऽर्थः शब्दस्य, अनादिकालीनवासनाप्रभवविकल्पप्रतिभास्यर्थस्यैव विषयत्वेन शब्देनात्मसात्करणात्, समुदायस्य चासत्त्वादिति भावः । समुदायः सन्नसन् वा भवतु, किन्तु समुदायस्य प्रतिभासनात्, प्रतिभासमानार्थं प्रतिपिपादयिषया च शब्दप्रयोगात् समुदाय एव शब्दस्यार्थ इति न वृक्षशब्दस्य स्वार्थाभावाद्व्यर्थतेत्याशङ्कते-**वृक्षशब्दस्येति** । व्याचष्टे-**स्यान्मतमिति** । मूलादीनां समुदायो वृक्षपदार्थः, समुदायसमुदायिनोश्चाभेदः, अतो मूलादीनां वृक्षात्मकत्वमिति मूलादयः सपक्षाः साध्यधर्मसामान्येन समानत्वात्, अत एव सपक्षादन्यत्स्वरूपः पक्षश्च, मूलादयः पारमार्थिकसन्तः वृक्षस्तु समुदायरूपत्वात्संवृतिसन् तस्मात् सपक्षादतुल्यो वृक्षार्थः, वृक्षशब्दस्य च अतुल्यवृत्तित्वाव्यभिचारात् तुल्ये वृत्तिरतुल्ये चावृत्तिरित्यादिविभागवचनं व्यर्थमेवेत्याह-**अभ्युपगतानामिति** । ननु सेनेत्युक्ते

कत्वेनैकत्वे सपक्षत्वं सपक्षादन्यत्वं पक्षत्वं, तेनातुल्यमन्यत्वं सपक्षाद्वृक्षार्थस्य तदतुल्यत्वात् तुल्यातुल्यवृत्त्यवृत्त्याविवचनवैयर्थ्यमेव ।

किञ्चान्यत्—

**संवृतिसत्यत्वाच्च समुदायस्यापि वृक्षवदनर्थत्वात् सेनावनादेरपि व्यर्थत्वमेव, मूलादिस्वरूपसत्तामात्रत्वेनाप्यतुल्य एव वृत्तिः, रूपादिभेदसमुदायसंवृत्यर्थत्वात्, रूपादिसत्यत्वप्रतिपादनार्थेऽपि च डित्थाद्युदाहरणे त्वयैव समुदायाभावोक्त्याऽन्यापोहप्रयासे रूपादिपरस्परव्यावृत्त्याऽभवनपरमार्थत्वान्न किञ्चित्सत्यम्, सजातीयासजातीयव्यावृत्तस्वरूपत्वात्, तत्सत्यस्यापि क्षणातिपातित्वादत्यन्तापूर्वत्वादनिर्देश्यस्वलक्षणत्वात् कतमद्रूपम्? एवं सर्वत्रातुल्य एव वृत्तिः शब्दस्य, अप्रामाण्यं वा ।**

(**संवृतीति**) संवृतिसत्यत्वाच्च समुदायस्यापि वृक्षवदनर्थत्वात् सेनावनादेरपि व्यर्थत्वमेव । अवृक्षो न भवति वृक्ष इत्यस्य मूलादिस्वरूपसत्तामात्रत्वेनाप्यतुल्य एव वृत्तिः, रूपादिभेदसमुदायसंवृत्यर्थत्वात्, रूपादिसत्त्वादर्थवान् स्यादिति चेत्तदपि न, रूपादिसत्यत्वप्रतिपादनार्थेऽपि च डित्थाद्युदाहरणे त्वयैव काणकुण्टादिगुणसमुदायाभावोक्त्याऽन्यापोहप्रयासे क्रियमाणे रूपादिपरस्परव्यावृत्त्याऽन्वयाभावे व्यतिरेकस्याभावान्न भवति न भवतीत्यभवनपरमार्थत्वान्न किञ्चित् सत्यम्, तत्कारणमाह—सजातीयासजातीयव्यावृत्तस्वरूपत्वादिति, तत्सत्यस्यापि पुनः क्षणातिपातित्वात्-क्षणे क्षणेऽत्यन्तान्यत्वात् द्वितीयक्षणे तदभावात् कतमद्रूपम्? अत्यन्तापूर्वत्वात्, निर्बीजत्वात्, अनिर्देश्यस्वलक्षणत्वात् 'स्वलक्षणमनिर्देश्यं रूपमिन्द्रियगोचरः' (प्रमा० स० प्रत्य०) इति ह्युक्तम्, तस्मादतुल्ये पक्षसपक्षव्यावृत्त्या तत्रैव वृत्तिः शब्दस्य, नास्त्येव चार्थे वृत्तिः,

वनमिति वोक्ते प्रत्येकं गजतुरगादेर्धवखदिरादेर्वा नोपजायते प्रतीतिः, किन्तु समुदायेन ते प्रतीयन्त इति सेनावनादिशब्दाः समुदायेनार्थेनार्थवन्तो दृष्टा इत्याशङ्कायामाह—**संवृतिसत्यत्वाच्चेति** । तुल्यातुल्यवृत्त्यवृत्तिवचनसार्थक्याय संवृतिसतः समुदायस्य वृक्षशब्दार्थत्वासम्भवो यथा तथैव सेनावनादिशब्दानामपि नास्ति कश्चिदर्थ इत्याशयेन व्याकरोति—**संवृतीति** । ननु वृक्षशब्दार्थस्यावृक्षो न भवति वृक्ष इत्यस्य न मूलादिसमुदायोऽर्थः, तस्यासत्त्वात्, किन्तु स्वरूपसन्मूलादिरेव तथा च नातुल्य एव वृत्तिर्वृक्षशब्दस्येत्याशङ्कायामाह—**अवृक्षो न भवतीति,** मूलादिस्वरूपसत्तामात्रत्वेनार्थवत्त्वेऽपि वृक्षशब्दोऽतुल्य एव वर्तते, मूलादेरपि रूपरसादिगुणसमुदायात्मकसंवृतिसत्त्वात् तदर्थत्वाद्वृक्षशब्दस्येति भावः । ननु न रूपादिसमुदायोऽर्थः तस्यासत्त्वात्, किन्तु स्वरूपसद्रूपादिरेवेत्याशङ्कायामाह—**तदपि नेति,** रूपादीनां गुणानामेव सत्त्वं प्रतिपादयितुं त्वयैव डित्थाद्युदाहरणमुपन्यस्य समुदायाभावः प्रतिपादितः नहि सर्वे काणकुण्टादयो डित्थशब्दाद्गम्यन्त इति, तत्राभिधानाभिधेययोः सम्बन्धनिर्णयबीजभूतान्यापोहविचारे क्रियमाणे सति रूपापेक्षया रसस्यान्यत्वेनाभवनरूपतया रूपस्यापि रसापेक्षया व्यावृत्तत्वेनाभवनरूपत्वात्तद्भावे तद्भावरूपस्यान्वयस्याभावेन तदभावेऽभावरूपस्याप्यभावाच्च न किञ्चिद्वस्तु सत्यमस्तीति कथं रूपादयः सद्रूपाः स्युरिति भावः । उक्तभावार्थकं हेतुमाह—**सजातीयेति,** तुल्यादतुल्याच्च व्यावृत्तरूपत्वाद्रूपादीनां गगनकुसुमादिवदसत्यत्वमिति भावः । ननु नीलोत्पलमित्यादावनीलोत्पलात् सजातीयादनुत्पलाद्विजातीयाच्च व्यावृत्तस्वरूपस्यैकस्य नीलोत्पलस्य सत्यत्ववद्रूपादेः कथं न सत्यतेत्याशङ्कायामाह—**तत्सत्यस्यापीति,** सतां रूपादीनामपि क्षणातिपातित्वेन क्षणमात्रस्थितित्वात्तद्वस्तु रूपमिति कथमुच्यते रूपणाद्धि रूपम्, नहि क्षणिकं रूपितुं शक्यम्, अत्यन्तापूर्वत्वात्, पूर्वं पूर्वकालसम्बन्धः यस्य सुतरां नास्त्यसावत्यन्तापूर्वः, तद्भावस्तस्मान्निष्कारणत्वादित्यर्थः, तच्च वस्तु, अनिर्देश्यं तस्मादपि न तद्रूपम्, एवञ्चात्यन्तापूर्वत्वेन सङ्केतासम्भवात् शब्दप्रवृत्तिबीजाभावात् रूपमिति निर्देशासम्भवात् कथं तद्वस्तु शब्दार्थः स्यात्तस्मादतुल्य एव शब्दस्य वृत्तिर्न पक्षे न वा सपक्ष इति भावः । तद्वस्तुनो रूपणाविषयत्वे हेतुमाह—**अत्यन्तापूर्वत्वादिति,** सङ्केतव्यवहारकालाव्यापित्वादिति भावः । उपसंहरति—**तस्मादतुल्य इति** ।

अथवा शब्दस्याप्रामाण्यं प्रतिपन्नमेव त्वया, यस्मादेतत्त्वन्मतानुसार्येव ज्ञापकं 'शास्त्रेषु प्रक्रियाभेदैः' (वाक्य० का० २, श्लो० २३५) इत्यादिश्लोको गतार्थः, एवं सर्वत्रातुल्य इत्यादि लिङ्गवच्छब्दोऽनुमानं भवति प्रमाणमेव वा नभवतीत्युक्तस्यार्थस्य यथाप्रतिज्ञं प्रतिपादितस्योपसंहारः ।

प्रोक्तार्थक्रमसङ्ग्रहात्मकेन लिङ्गमपि शब्दवन्न भवतीत्युपपादयिष्यामीत्यत आह -

**शब्दवत्तु लिङ्गाद्वैलक्षण्यमेव स्यादनुमानत्वात्, अननुमानं वाऽद्विलक्षणत्वादसाधारणवत्, अन्वयव्यतिरेकाभावात् पक्षधर्मत्वमात्रं विरुद्धवत्, सपक्षवृत्त्यभावात्, किमुक्तं भवति अन्यत्र वृत्त्यसम्भवात्, अत एवान्वयाभावाद्व्यतिरेकव्यापारावकाशाभावस्तस्मादेकलक्षणं शब्दवदिति, सन्निधानमप्यनुमानत्वार्थप्रतिपत्तावकारणम्, तावन्तरेणापि तदुपपत्तेः, साध्यधर्मसाधनव्याप्तिवत्, ततस्तयोरकारणत्वात् पक्षधर्मत्वमात्रकारणत्वादेकलक्षणं शब्दवल्लिङ्गमपि, अनुमानत्वात्, एकलक्षणत्वाच्च विरुद्धमपि, उक्तवत् ।**

**शब्दवत्तु लिङ्गाद्वैलक्षण्यमेव स्यादित्यादि**, प्रथममेव तावदनुमानत्वाच्छब्दव[द]द्विलक्षणं लिङ्गमिति साधयति, ततोऽद्विलक्षणत्वादसाधारण[वत्]इत्यादि यदुक्तमनन्तरं शब्दे दोषजातं तत्सर्वं लिङ्गस्य शब्दवदित्येवोक्तक्रमेण ज्ञेयमेकलक्षणत्वम्, अन्वयव्यतिरेकाभावात् पक्षधर्मत्वमात्रं विरुद्धवदिति शब्दे यदुक्तं तल्लिङ्गे, अस्य व्याख्या-सपक्षवृत्त्यभावात्, किमुक्तं भवति-अन्यत्र वृत्त्यसम्भवात् पक्षादन्यत्रावृत्तेरित्यर्थः, अत एवान्वयाभावाद्व्यतिरेकव्यापारावकाशाभावः, तस्माद्व्यतिरेकव्यापारावकाशाभावात् एकलक्षणं शब्दवदिति लिङ्गमपि शब्दस्येवैकलक्षणं प्रागुक्तं विरुद्धवदन्वयव्यतिरेकाभावादिति, स[३]न्निधानमप्यनुमानत्वार्थप्रतिपत्तावकारणम्, तावन्तरेणाप्यनुमानत्वोपपत्तेः विनापि ताभ्यामर्थगतेस्तयोः

विकल्पप्रतिभास्यर्थविषयतायाः शब्दस्य त्वया स्वीकृतत्वाच्छब्दप्रतिभास्यर्थस्य च विपरीताकाराभिनिवेशिनार्थान्तरीयप्रत्ययेषु भावादतथाविधे तथाविधप्रत्ययजनकत्वाच्छब्दोऽप्रमाणमेवेत्याशयेनाह-**अथ वेति** । शब्दात् परस्परविरुद्धार्थप्रतिभासो भवतीत्यत्र मतान्तरीयसंवादमाह-**शास्त्रेष्विति** । एवं सर्वत्रेत्यादिग्रन्थो पूर्वं प्रतिज्ञातस्य लिङ्गवच्छब्दोऽनुमानमित्यस्य सर्वत्रातुल्य एव वृत्तिः शब्दस्येत्यनेनोपसंहारः, अननुमानं तर्हि शब्द इत्यस्य चोपसंहारोऽप्रामाण्यं वेत्यनेन कृत इत्याह-**एवं सर्वत्रेति** । पूर्वोदितार्थान् क्रमेण सगृह्य शब्दवल्लिङ्गमपि अनुमानत्वेनाद्विलक्षणं यद्वा प्रमाणं न भवतीति निरूपयिष्यामीत्याचष्टे-**प्रोक्तार्थेति** । शब्दस्यैकलक्षणत्वेऽपि यथाऽनुमानत्वमिष्टं तथैव लिङ्गस्याप्यनुमानत्वादद्वैलक्षण्यं स्यादिति निरूपयति **शब्दवत्त्विति**, शब्द इव लिङ्गमप्यद्विलक्षणं स्यात्, अनुमानत्वादिति भावः । व्याचष्टे-**प्रथममेवेति** । अद्विलक्षणत्वसिद्धावननुमानं वा तर्हि लिङ्गमद्विलक्षणत्वादसाधारणवदित्यादिग्रन्थं योजयित्वैकलक्षणत्वमुपपादनीयमित्याह-**तत इति** । तदेव दर्शयति-**अन्वयव्यतिरेकाभावादिति**, पक्षादन्यत्रावृत्तेस्सपक्षवृत्त्यसम्भवेनान्वयाभावः, ततश्च व्यतिरेकोऽपि नास्ति, सपक्षवृत्तित्वं ह्यसपक्षावृत्तित्वरूपं तत एव सपक्षवृत्तित्वाभावेऽसपक्षावृत्तित्वरूपो व्यतिरेकोऽपि नास्तीति दर्शयति-**किमुक्तमिति** । तात्पर्यमाह-**लिङ्गमपीति**, पक्ष एव वृत्तेः पक्षस्यासपक्षत्वाच्च विरुद्धत्वं तन्मात्रवृत्तिलिङ्गस्येति भावः । यत्र क्वचिल्लिङ्गे पक्षधर्मत्वस्येवान्वयव्यतिरेकौ सन्निहितौ तत्रापि तावकिञ्चित्करावेव, अन्तरेणापि ताभ्यामनुमानस्य शब्दाच्चार्थगतेः सम्भवादित्याह-**सन्निधानमपीति**, अन्वयव्यतिरेकयोः सन्निधानमपीत्यर्थः । तयोरकिञ्चित्करत्वे

१ क्ष. छा. यथार्थप्रतिपादित० । २ सि. छा. क्ष. डे. °सङ्ग्रहात्मकटिक । ३ सि. क्ष. छा. डे. सन्निहितावप्यनुमानत्वं अर्थप्रतिपत्तावकारणत्वं ।

सन्निधानमप्यकारणम् । किमिव ? साध्यधर्मसाधनव्याप्तिवत्—यथा यत्कृतकं तदनित्यमिति कृतकत्वस्यानित्यत्वेनाविनाभावेन व्याप्तत्वादविनाभाविनोऽनित्यत्वस्य गतिः कृतकत्वादिष्टा, न तु यदनित्यं तत्कृतकमित्यनित्यत्वस्य कृतकत्वेनाविनाभाविना व्याप्तौ सत्यामप्यगतेरन्यत्र तदभावे सत्यविवक्षितत्वात् प्रयत्नानन्तरीयकत्वादौ त्वन्मतेन यथा तथेहाप्यन्वयव्यतिरेकौ सन्निहितावप्यकारणम्, शब्दार्थे पक्षधर्मत्वमात्रात्तद्गतेः, तस्मादन्वयव्यतिरेकसन्निधानेऽप्यकारणत्वान्नार्थः शब्दार्थगतौ ताभ्याम्, यथाऽनुमानविचारेऽभिहितं 'प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपोहते । लिङ्गे लिङ्गिनि[च]व्याप्तिस्तस्मात् सत्यप्यकारणम् ॥' इत्यादिकारिकार्थानुगमः कार्यः, ततः किम् ? ततस्तयोरकारणत्वात् पक्षधर्मत्वमात्रकारणत्वादेकलक्षणं शब्द[वत]लिङ्गमपि, अनुमानत्वात्, एकलक्षणत्वाच्च विरुद्धमपि तेऽनुमानमित्यापन्नम्, एकलक्षणत्वाच्छब्दवत्, अभिमतत्रिलक्षणलिङ्गस्य त्वमत्रेष्टं एकलक्षणत्वमसिद्धमित्यत आह स्मारणार्थमुक्तन्यायसिद्धस्यैकलक्षणत्वस्य—उक्तवत्-शब्दवदिति।

**शब्दोऽपि वा नानुमानं विरुद्धवदिति लिङ्गस्यापि प्राप्तम्, व्यर्थतैव वा, स्वार्थस्यासम्भवात्, पक्षधर्ममात्रस्याप्यभावोऽनध्यवसायात् म्लेच्छशब्दज्ञानवत्, विपर्ययाद्वा विरुद्धज्ञानवदग्निरत्र धूमादित्यस्मिन्नपि स्वार्थानुमाने गुणसमुदायो हि धूमाख्योऽर्थः बहलकुटिलत्वाद्यानन्त्ये च धूमत्वाभावो ज्ञातसम्बन्धत्वाभावात्, संवृतिमात्रत्वाच्च समुदायस्य तदर्थागतेस्तद्द्वारेण नानुमानमित्यलक्षणं लिङ्गं स्वार्थमात्रस्यापीति तदेकलक्षणतापि नैव, इत्थं कुत एव तस्यागृहीतत्वादुभयप्रतिपत्तेरभावेऽन्यापोहः ?**

**शब्दोऽपि वा[ना]नुमानं विरुद्धवदिति** शब्दस्यानुमानत्वाभावे लिङ्गस्यापि प्राप्तमेव, अ[न]नुमान[त्वं]द्वयोरपीत्यभिप्रायः, व्यर्थतैव वेत्यादि, शब्दवल्लिङ्गस्य वैयर्थ्यं प्राग्व्याख्यातविधिना योज्यम्, स्वार्थस्येति, पक्षधर्ममात्रस्याप्यभावोऽनध्यवसायात्, म्लेच्छशब्दज्ञानवत्, विपर्ययाद्वेति, विरुद्धज्ञानवत्,

दृष्टान्तमाह—**साध्यधर्मेति**, साध्यधर्मेऽनित्यत्वे या साधनस्य कृतकत्वस्य व्याप्ति सा यथा न साध्यसाधिका तद्वदित्यर्थः । दृष्टान्तमेव व्याकरोति—**यथेति**, कृतकत्वनिष्ठाऽनित्यत्वव्याप्तिर्गमकत्वेन विवक्षिता, अव्यभिचारात्, अनित्यत्वनिष्ठा तु कृतकत्वव्याप्तिर्न गमकत्वेन विवक्षिता, व्यभिचारात्, अनित्यस्य सर्वस्य प्रयत्नानन्तरीयकत्वाभावेन कृतकत्वाभावात् नानित्यत्वेन कृतकत्वस्य गतिरिति भावः । दार्ष्टान्तिकमाह—**तथेहापीति**, शब्दे पक्षधर्मतामात्रेणार्थगतेर्लिङ्गेऽपि तस्यैव लक्षणत्वौचित्यात् सन्निहितावप्यन्वयव्यतिरेकौ न कारणमिति भावः । उक्तमेतदनुमानविचारे त्वयैवेत्याह **यथेति । प्रतिषेध्येति**, यस्मात् प्रतिषेध्यमपोहते व्याप्तिर्न प्रकर्षेण गमयति, सा लिङ्गे लिङ्गिनि च यद्यपि वर्तते तथापि तस्मादेव क्वचित् सा सत्यपि न कारणमिति तदर्थः, भावार्थस्त्वग्रे व्यक्तीभविष्यति । सन्निहितयोस्तयोरकारणत्व भवतु तेन किमित्यत्राह—**ततस्तयोरिति** । तदेवं प्रथममेवोक्तस्यानुमानत्वाद्विलक्षणत्वसाधनस्योपसंहार. । अननुमानत्वं तावदाह—**एकलक्षणत्वादिति** । ननु लिङ्गे त्रिलक्षणत्वमेवेष्टमिति हेतुरयमसिद्ध इत्यत्राह—**अभिमतेति** । शब्देऽप्यननुमानत्वं साधयति—**शब्दोऽपि वेति** । ननु लिङ्गे शब्दे प्रोक्तदोषा वाच्याः तत्कथमत्र शब्देऽननुमानत्वं साध्यत इत्यत्राह—**शब्दस्येति**, एकलक्षणत्वादिति भाव. । तदेकस्याप्यभवनपरमार्थत्वेनासत्त्वाद्व्यर्थता लिङ्गस्य, लिङ्गिनोऽभावादित्याशयेनाह—**शब्दवदिति** । अग्नेर्धूमज्ञाप्यस्यार्थस्यासत्त्वात्तद्धूमस्याप्यभावोऽभवनपरमार्थत्वेनाध्यवसायाविषयत्वात्, यथा म्लेच्छोदितशब्दस्य परिज्ञानं न भवतीत्याह—**पक्षधर्ममात्रस्येति**, पक्षधर्मतयाभिमतस्य लिङ्गस्येत्यर्थ. । अनुमानस्यास्य विपरीतप्रतिपत्त्यात्मकत्वाद्विरुद्धज्ञानवदननुमानतेत्याह—**विपर्ययाद्वेति** । कथं विपर्यय इत्यत्राह—

१ सि. °र्थेत्वम्मा° क्ष. छा. डे. °र्थेन्वत्वामा°। २ सि. क्ष. छा. डे विरुद्धोऽपि । ३ °वत्वमात्रात्ष्टा°, क्ष. डे. वत्वमात्राब्दो°। ४ सि. क्ष डे. वानुमानं। ५ सि. क्ष. डे. छा. व्यर्थतेत्तद्वेत्यादि। ६ सि. सायोयावत्. क्ष. छा. डे. सायवत्।

तद्भावयति–अग्निरत्र धूमादित्यस्मिन्नपि स्वार्थानुमाने गुणसमुदायो हि धूमाख्योऽर्थ इति, वृक्षस्य मूलाग्रकोटराद्यानन्त्ये वाच्यत्वाभाववद् बहलकुटिलत्वाद्यानन्त्ये च धूमत्वाभावो ज्ञातसम्बन्धत्वाभावात्[1]। संवृतिमात्रत्वाच्च समुदायस्य तदर्थागतेः, तस्मात्तद्द्वारेण[न]ानुमानमित्यलक्षणं लिङ्गं स्वार्थमात्रस्यापीति, इति तदेकलक्षणतापि–नैव, इत्थं–उक्तस्वार्थमात्रस्यालक्षणत्वे[2] कुत एव तस्यागृहीतत्वात् स भवति धूमो नाधूमः, अन्यो न भवतीत्यविषयत्वादुभयप्रतिपत्तेरभावेऽन्याभावादन्यापोहः ? कुतोऽग्निरित्यनग्निर्न भवति, धूम इत्यधूमो न भवतीति च दूरत एवैतत् तत्र घटामियर्ति ।

पक्षधर्मे च वाऽग्निः धूमस्याधारः प्राप्नोत्यनुमेयत्वादिति सपक्षस्य तुल्यादेरभावस्तदभ्युपगमे पक्षाभावः, प्रागुक्तशब्दानुमानविषयवदिति तस्मिन्नेव पक्षधर्ममात्रलक्षणा वृत्तिः स्यादन्यत्र न, तस्मादन्वयव्यतिरेकौ न स्तः, अथ भवति ज्ञानं धूमोऽयमग्निरयं वृक्षोऽयमिति ततः शाब्दलिङ्गिके अपि ज्ञाने प्राप्ते प्रत्यक्षे, अन्वयव्यतिरेकवियुततथ्यज्ञानत्वात्, सन्निकृष्टार्थवत् ।

**पक्षधर्मे च वेत्यादि**, यथैव वृक्ष एव न कश्चित् सपक्ष इति प्रसञ्जिता शब्द[स्य]ार्थे वृत्तिः तथाऽग्निरिति पक्षधर्म[स्य]धूमस्या[3]धारः प्राप्नोति, अनुमेयत्वादिति सपक्षस्य तुल्यादेरभावः तदभ्युपगमे पक्षाभावः, प्रागुक्तशब्दानुमानविषयवदिति तस्मिन्नेव वृत्तिः स्यात् पक्षमात्रे, सपक्षाभावात्, सा कीदृशीति चेदुच्यते–पक्षधर्ममात्रलक्षणा, किमुक्तं भवति न तुल्यान्वयात्मिका, अन्वयार्थाभावात् न स्याद्वृत्तिः, अन्यत्र नेत्यादि, पक्षधर्मस्य चान्यत्र सपक्षे वृत्तौ[4] तुल्ये तद्वदतुल्येऽपि वृत्तिः स्यात् इत्याशङ्काया व्यावृत्तये व्यतिरेका-

---

**अग्निरत्रेति**, अपिशब्देन शब्दार्थ इवेति सूच्यते तत्र यथा वृक्षो गुणसमुदायरूपः संवृतिरूपत्वादसन् तथा धूमोऽपि बहलकुटिलत्वतुलत्वपाण्डुत्वादिगुणसमुदायरूपः, मूलकोटरादिगुणानामानन्त्येन सम्बन्धग्रहासम्भवादज्ञातसम्बन्धेन वृक्षशब्देन यथाऽवाच्यत्वं तथैव बहलकुटिलादीनामानन्त्याद्व्यभिचाराद्वाविनाभावसम्बन्धग्रहासम्भवादगमकत्वादलिङ्गत्वमिति भावः । ननु बहलकुटिलादिनामानन्त्यं भवतु नाम, तेषां समुदायो हि धूम उच्यते, स च ज्ञातसम्बन्ध एवेत्यत्राह–**संवृतिमात्रत्वाच्चेति**, कल्पितो हि समुदायो न पारमार्थिकः, तस्मान्न ततो धूमस्य ज्ञानमिति समुदायद्वारेणापि नानुमानसम्भव इति न धूमादिलिङ्गमग्न्यादेर्गमकमिति भावः । तदेवं धूमो न स्वार्थमपि गमयितुं क्षम इति स्वरूपापरिज्ञानादयं धूमो न त्वधूम इति, अग्निरयं न त्वनग्निरिति स्वपरयोर्विज्ञानाभावादुभयविषयोऽन्यापोहः कथं भवतीत्याह–**उक्तस्वार्थमात्रस्येति** । पक्षधर्मं धूममभ्युपेत्यापि दूषणमाह–**पक्षधर्मे च वेति** । ननु वृक्षशब्दार्थोऽवृक्षाभिवृत्तिमात्रं तदेव वृक्षत्वं, तथा च सर्वे वृक्षाः पक्षान्तर्गताः न हि कश्चिदस्ति साध्यधर्मसामान्येन पक्षभिन्नः पक्षसमानः यः सपक्षो भवेत् तस्मात्तत्रैव वृत्तिः शब्दस्येति यथोक्तं तथैव लिङ्गस्याप्यन्यापोहेन स्वार्थबोधनादनग्निनिवृत्तिमात्रमग्नित्वं तच्च सर्वेष्वग्निषु, न च स कश्चिदग्निरस्ति अग्निसदृशोऽग्निभिन्नो यः सपक्षो भवेत्, तस्मात् स एव धूमस्य पक्षधर्मस्याधारः स्यात्, तत्रैव धूमः पक्षधर्ममात्रत्वेन वृत्तिः स्यात् न तु सपक्षवृत्तिः सपक्षाभावादित्याशयेन व्याचष्टे–**यथैव वृक्ष एवेति** । पक्षधर्ममात्रलक्षणेत्यत्र मात्रपदार्थं स्फुटयति–**किमुक्तम्भवतीति**, तुल्यधर्मरूपा न वृत्तिः, तुल्यस्य सपक्षस्यान्वयविषयस्यैवाभावाच्च तद्धर्मो धूम इति भावः । यदि पक्षादन्यत्र धूमो वृत्तिः स्यात्तर्हि अन्यत्र तुल्य एव वर्तते नातुल्य इत्यत्र नियामकाभावात् पक्षादन्यत्वस्य च तुल्येऽतुल्ये च समानत्वादतुल्ये वृत्तित्वशङ्का स्यात्, तद्व्यावर्तनाय च व्यतिरेकस्य तदभावे तदभाव एवेत्येवंविधस्याकाङ्क्षा स्यात्, यदा च सपक्ष एव नास्ति ततः कुतो विपक्षवृत्तित्वशङ्का ? तस्मान्नास्त्यन्वयव्यतिरेकौ, अत एकलक्षणं लिङ्गमिति निगमयति–**पक्षधर्मस्य चेति** । ननु सपक्षवृत्तित्वासपक्षवृत्तित्वाभावेनान्वयव्यतिरेकाभावात् कथं शब्दलिङ्गाभ्यां स्वार्थलिङ्गिप्रतिपत्तिः स्यात्,

---

१ सि. क्ष. छा. डे. छा. °भावात् । २ सि. क्ष. डे. छा. °मात्रस्याक्ष° । ३ सि. क्ष. छा. डे० पक्षधर्मो धूमस्याधा. । ४ सि. क्ष. डे सपक्षवृत्तौ

कांक्षा स्यात्, सा तु सपक्षस्यैवाभावान्नास्ति व्यतिरेकाकांक्षा, तस्मादन्वयव्यतिरेकौ न स्तः। अथ भवति ज्ञानमिति--विनाप्यन्वयव्यतिरेकाभ्यां भवति ज्ञानं धूमोऽयमग्निरयं वृक्षोऽयमिति, ततः किं ? ततः प्राप्ते प्रत्यक्षे, कतमे ते प्राप्ते ? शाब्दलिङ्गिके अपि ज्ञाने प्रत्यक्षे एव प्राप्नुतः, कस्मात् ? अन्वयव्यतिरेकवियुत-तथ्यज्ञानत्वात् अविकल्पकत्वात्, सन्निकृष्टार्थवदिति व्याख्यातोऽर्थसङ्ग्रहः साधनं स्वार्थपरार्थानुमानयोः शा[1]ब्दलिङ्गिकयोः प्रत्यक्षत्वासञ्जनं गतार्थम्।

किञ्चान्यत्–

**अत इदं स्वप्रतिपाद्यवस्तुधर्मत्वे सत्यन्वयव्यतिरेकाभ्यां तस्य गमकत्वादनुमानं शब्द इति पूर्वापरासमीक्ष्यैवोक्तम्, अन्वयव्यतिरेकरहितत्वस्योक्तत्वात् प्रत्यक्षत्वस्योपपादितत्वात्, एष तु पाठो घटमान उपलक्ष्यते 'नाप्रमाणान्तरं शाब्दमनुमानात्तथा हि तत्। कृतकत्वाद्यपि स्वार्थमात्मापोहेन नाशयेत्॥' (ग्रन्थकृतः) इति, यदि न प्रमाणान्तरं शाब्दमनुमानात्तथा हि तत्। कृतकत्वादिवदिति मन्यते ततोऽन्यापोहार्थकृता दोषाः, न शब्द एवैकस्मिन् दोषाः, तद्वि-धदोषजालोपनिपातसम्बन्ध्येव तेऽनुमानमपि, नन्वेवं कृतकत्वाद्यप्यनुमानं स्वार्थमात्मापोहेन नाशयेदेव, अन्यापोहेन स्वार्थप्रतिपत्त्यगमकत्वात्, अन्यापोहशब्दार्थवत्, धूम इत्यधूमो न भव-तीति निरन्वया प्रतिपत्तिरेव, ग्राह्यस्य दर्शनरहितत्वात्, अगृहीतब्राह्मणाब्राह्मणार्थप्रतिपत्तिवत् गुणसमुदायो हि धूमाख्योऽर्थः, पाण्डुबहलोत्सङ्गाद्यानन्त्ये धूमाभावात्, संवृतिमात्रत्वाच्च समुदायःस्य तदर्थागतेः कुत एवान्यापोहः ? एवं तावद्धूमार्थ एव न निश्चीयते, किं पुनर्यत्रासौ धूमः स, ताभ्यां चान्ययोरपोहौ ? तदभावात् कुतः तावपि ? इति।**

**अत इदमित्यादि।** स्वप्रतिपाद्यवस्तुधर्मत्वे सत्यन्वयव्यतिरेकाभ्यां तस्य गमकत्वात् अनुमानं शब्दो नानुमानादन्यत् प्रमाणमित्येतदप्यत एव पूर्वापरासमीक्ष्यैवोक्तम्, अन्वयव्यतिरेकरहितत्वस्योक्तत्वात्,

---

तथापि यदि भवतीत्युच्यते तदा दोषमादर्शयति-**अथ भवतीति,** प्रत्यक्षभिन्नप्रमाणान्तरतयाऽभ्युपगतं शाब्दं लैङ्गिकञ्च ज्ञानं प्रत्यक्षमेव स्यात्, अन्वयव्यतिरेकाजन्ययथार्थज्ञानत्वात्, अयथार्थज्ञानवारणाय यथार्थेति, प्रत्यक्षवदिति दृष्टान्त इति भावः। तमेव हेतुं दर्शयति-**अन्वयेति,** अन्वयव्यतिरेकाभ्यामसंस्पृष्टं कारणतया प्रतिभासनया वा तथा तथ्यं साक्षाद्विषयजन्यं ज्ञानं तद्भावस्त-स्मात्, इन्द्रियसन्निकर्षानन्तरभाविप्रत्यक्षं विषयजन्यमनुवृत्तिव्यावृत्तिधर्मानवभासि तद्वदेव लैङ्गिकं शाब्दञ्च ज्ञानं तथ्यमन्वयात्मक-सामान्यव्यतिरेकात्मकव्यावृत्तिरहितञ्चात एव जात्यादिकल्पनाशून्यत्वादविकल्पकमिति भाव। शब्दस्यानुमानतासाधकं हेत्वन्तरं दूषयति-**अत इदमिति,** शाब्दलैङ्गिकयोरन्वयव्यतिरेकव्यतिरेकेण भवनस्यापादितत्वादेवेत्यर्थ, स्वेन प्रतिपाद्यं यद्वस्तु तद्धर्मत्वे सति अन्वयव्यतिरेकसहकारेण स्वार्थगमकत्वादनुमानं शब्द इति यदुच्यते तद्विरुद्धम्, शब्दो हि स्वप्रतिपाद्यस्य वृक्षार्थस्य धर्मः अन्वयव्यति-रेकराहित्येन वृक्षार्थस्य गमकश्च, सपक्षासपक्षाभावात्, धूमादिरपि स्वप्रतिपाद्यस्याग्न्यादेर्धर्मः सपक्षासपक्षाभावादेव तुल्यातुल्यवृत्त्य-वृत्त्यभावादन्वयव्यतिरेकनिरपेक्षेण अग्न्यादेर्गमकः अत एव शाब्दं लैङ्गिकं च ज्ञानं प्रत्यक्षमित्युपपादितमित्यतो विरुद्धमिति भावः। एतदेव निरूपयति-**स्वप्रतिपाद्येति।** तन्निराकरोति-**अत एवेति,** अन्वयव्यतिरेकापेक्षारहितज्ञानत्वादेवेत्यर्थ, उपपादितं हि अन्वयव्यतिरेकरहितत्वं प्रत्यक्षत्वञ्च तदसमीक्ष्यैव त्वयोच्यत इति भावः। अतोऽप्रमाणादनुमानाच्चाप्रमाणान्तरं शाब्दमित्येव

---

1 सि. क्ष. प्राप्तेऽशाब्द०।

प्रत्यक्षत्वस्योपपादितत्वात्, एष तु पाठो घटमान उपलक्ष्यते, 'नाप्रमाण[ान्तर]मित्यादि श्लोकः, यदि न प्रमाणान्तरमित्येतदेव प्रत्युच्चारयति यावत् कृतकत्वादिवदिति, ततोऽन्यापोहार्थेत्यादि दोषोपन्यासः, न शब्द एवैकस्मिन्निति यथा मयोक्ताः शब्दप्रत्यक्षप्रसङ्गादिदोषा अन्यापोहार्थकृताः केवले, किं तर्हि ? तद्विधदोषजालोपनिपातसम्बन्ध्येव तेऽनुमानमपि, तत्कथमिति चेत्तर्हि तदेवं प्रकाश्यते—नन्वेवं कृतकत्वाद्यप्यनुमानं स्वार्थं परार्थं वा त्रिलक्षणं लिङ्गं शब्दवदुक्तविधिना स्वार्थमात्मापोहेन नाशयेदेव, न न नाशयति, इयं प्रतिज्ञा, हेतुरन्यापोहेनेत्यादि गतार्थः, दृष्टान्तश्च यावदन्यापोहशब्दार्थवदिति साधनम्, तस्य भावना-साधनं धूम इति [अ]धूमो न भवतीति निरन्वयाऽप्रतिपत्तिरेव, प्रतिज्ञा, माद्यस्य दर्शनरहितत्वादिति हेतुः, स्थाण्वस्थाण्वप्रतिपत्तिवदिति दृष्टान्तः, यथा स्थाण्वस्थाणुविषयविज्ञानरहितस्य माद्यस्य [द]र्शनाभावादप्रतिपत्तिः निरन्वयत्वात् तथा धूम इत्यधूमो न भवतीति, तद्व्याख्या- गुणसमुदायो हीत्यादि पूर्ववदेव भावनीयं पाण्डुत्वाद्यक्षरविशेषं यावत् कुत एवान्यापोहः ? अगृहीतब्राह्मणाब्राह्मणार्थप्रतिपत्तिवदिति साधनेनैव भावितमप्रतिपत्तित्वम्, एवं तावद्धूमार्थ एव न निश्चीयते, किंपुनर्यत्राग्नौ धूमो गुणसमुदायेऽपरमार्थेऽग्नौ वर्तते सोऽपि न निश्चीयतेऽग्निरित्यर्थः, ताभ्याञ्चाग्निधूमाभ्यां ततोऽन्ययोः-अनग्न्यधूमयोरपोहौ स्याताम् ? तदभावात् कुतः तावपि ? इति ।

**यच्च धूम…………गुणसमुदायोऽसौ नाग्निदेशौ नाम कौचिदपि स्तः, तज्ज्ञानाभ्यां तु तदध्यारोपणेनेत्यादि आ नन्वित्येतस्माद्ग्रन्थात् स एव ग्रन्थो यावदन्योपादानमात्मनश्च त्याग इति, एवं तावत् पक्षधर्मस्य चानुपपत्तिः किं भवदेव भवति ? उताभवत् ? अन्यापोहश्च गुणसमुदायपरमार्थश्च स्वार्थ इत्यादि विकल्पैरात्मापोहात्, तैरेव विकल्पैर्विचार्यमाणयोः सपक्षासपक्षयोरभावात्, एवमनुमानमप्रमाणमेव, अतत्तत्प्रत्ययात्मकत्वात्, अलातचक्रधीवदिति ।**

सङ्गतार्थम्, न तु न प्रमाणान्तरं शाब्दमितीत्याह-**एष तु पाठ इति** । यदि तु न प्रमाणान्तरं शाब्दमनुमानात्तथाहि तत्, कृतकत्वादिवत् अन्यापोहेन स्वार्थं गमयतीति मन्यते तर्हि अन्यापोहनैर्मूल्यादिप्रयुक्ताः प्रागुक्ता दोषाः स्युरित्याह-**यदि न प्रमाणान्तरमित्येतदेवेति** । न केवलं शब्द एवैते दोषाः प्रसज्यन्ते, अपि तु ते अनुमानमपि तथाविधदोषजालकलुषितमेव अन्यापोहेन स्वार्थगमकत्वाभ्युपगमादित्याह-**न शब्द एवेति** । अनुमाने शब्दवत्त एव दोषाः प्रसज्यन्त इति साधनेन दर्शयति-**नन्वेवमिति,** कृतकत्वाद्यनुमानं स्वार्थं वा परार्थं वा त्रिलक्षणयुतं लिङ्गमवश्यं नाशयति स्वप्रतिपाद्यमर्थमात्मापोहेन, अन्यापोहार्थनैर्मूल्यस्वार्थत्वाशादर्शनश्रुतिसम्बन्धदौष्कर्यव्यभिचाराभवनपरमार्थत्वादिविधिना शब्दवदन्यापोहेन स्वार्थप्रतिपत्त्यजनकत्वादिति मानार्थः । दृष्टान्तमाह **अन्यापोहशब्दार्थवदिति,** उभयविषयस्यान्यत्वस्याग्रहणेन तदपोहप्रतिपत्त्यजननादन्यापोहशब्दो यथा स्वार्थं नाशयति तद्वदित्यर्थः । आत्मनोऽपोहमेव भावयति **धूम इतीति,** इयं प्रतीतिः स्वार्थरहिताभावप्रतिपत्तिरेव, स्वार्थाभावेनेयमप्रतिपत्तिरेव, गगनकुसुमादिप्रतिपत्तिवदिति भावः । हेतुमाह-**माद्यस्येति,** माद्यस्य स्वलक्षणस्यानिर्देश्यत्वादत्यन्तापूर्वत्वान्निर्बीजत्वात्, धूमस्य च स्वार्थस्य संवृतिरूपसमुदायात्मकत्वादभवनपरमार्थत्वाच्च दर्शनाभावादिति भावः । अत्र टीकाकारो दृष्टान्तमाह-**स्थाण्विति** । व्याचष्टे-**यथेति** । निरन्वयत्वमेव तावद्दर्शयति-**गुणसमुदायो हीति** । मूलकृदुक्तदृष्टान्तं दर्शयति-**अगृहीतेति** । तदेवं लिङ्गस्यात्मापोहं निगमयति-**एवं तावदिति** । एवं स्वस्यैवानिश्चये स्वप्रतिपाद्यस्य स्वधर्मिणो गुणसमुदायरूपस्यापरमार्थस्याग्नेः कथं निश्चयस्तेन स्यात् ? धूमाग्न्योश्चाग्रहणे कथं तदन्ययोः प्रतिपत्तिः ? कथं वा तदग्रहणेऽन्ययोरपोहौ स्याताम् ? अन्यापोहाभावे च कथमन्यापोहेन स्वार्थप्रतिपत्तिः ? नास्त्येवेति स्वार्थमात्मापोहेन नाशयेदेवेत्याह-**किं पुनरिति,**

१ स माद्यामद० । २ सि. क्ष. छा. स्यापूर्वत्वान्त्वप्र० ।

**यच्च धूम इत्यादि,** समासदण्डको यावद्गुणसमुदायोऽसौ नाग्निदेशौ नाम कौचिदपि स्त इति तमेव तदुक्तन्यायं दर्शयति, तज्ज्ञानाभ्यां त्विति–अग्निदेशज्ञानाभ्यां तदर्थाध्यारोपणेनेत्यादिना तमेवाशेषमतीतं ग्रन्थमतिदिशति यावदन्योपादानमात्मनश्च त्याग इति ग्रन्थावधिञ्च दर्शयति समानप्रचर्चत्वादिति, एवं तावत् पक्षधर्मस्य चानुपपत्तिर्व्याख्याता, किं भवदेव भवति ? उताभवत् अन्यापोहश्च गुणसमुदायपरमार्थश्च स्वार्थ इत्यादिविकल्पैरात्मापोहात् सपक्षासपक्षयोरप्येवमेवेत्यतिदिशति-तैरेव विकल्पैर्विचार्यमाणयोः सपक्षासपक्षयोरप्यभावात्–सपक्षासपक्षावपि भवन्तावेव भवतः ? उताभवन्तावन्यापोहौ गुणसमुदायस्वार्थौ वेत्यादिविकल्पैरात्मापोह इति समानत्वात्, आ-कुत आरभ्य ग्रन्थ इति चेदुच्यते किम-[न्य]त्वेन सामान्यभेदपर्यायवाच्युत विधिः, नन्वित्येनस्माद्ग्रन्थावधेरारभ्य ततो ग्रन्थो योज्यः, कियदवधेरिति चेदुच्यते इयदस्मिन्नन्तरे यावदात्मनश्चेत्येतस्य ग्रन्थस्योपर्युपसंहारग्रन्थः प्रागुक्तन्यायप्राण एव, यथा कृतकत्वादेः न पक्षोऽनित्यः शब्दोऽग्निरत्रेति वा स्वार्थपरार्थयोस्तेनैव न्यायेन न पक्षोऽग्निविशिष्टो देशोऽनित्यत्वविशिष्टः शब्दो वाऽन्योपोहवादिनः, न भवति न भवतीत्यभवनपरमार्थत्वादुभयतोऽप्यभावमात्रत्वात् तस्मिंश्चासति प्रदेशशब्दादिधर्मिणि पक्षे कुतस्तस्य पक्षधर्मः ? इति पक्षधर्मौ न स्तः, एवं नास्य सपक्षो नासपक्ष इति तथा भावितार्थमेव बहुधा, एवमनुमानमप्रमाणमेव. अनन्तप्रत्ययात्मकत्वात्, अलातचक्रधीवदिति, पक्षसपक्षासपक्षव्यवस्थानाद्धि त्रैलक्षण्यव्यवस्था ततश्चानुमानप्रामाण्यम् । ......... .....[?]

स्पष्टमन्यत् । अथ पक्षधर्माद्यनुपपत्तिमाह–**यच्चेति** । **समासदण्डक इति,** ग्रन्थोऽत्रास्पष्ट इति न व्याख्यायते । अग्नितदाधारदेशस्य च धूमवद्गुणसमुदायरूपतयाऽसत्त्वात् पक्षधर्माद्यनुपपत्तिरिति भाव. प्रतिभाति । नन्वग्निदेशज्ञानयोरग्निदेशावभेदेन प्रतीयेते, तस्मात्तत्र तावध्यारोप्येते, यथा स्वरूपं शब्दोऽर्थात्मसु अध्यारोपयति अयमर्थो गौरिति नैव, अविद्यमानतद्रूपत्वेनाध्यारोपासम्भवात्, अनग्निव्यावृत्त्यादितोऽग्न्यादीनामर्थाक्षेपोऽपि न सम्भवति, आक्षेपे हि यद्यव्यभिचारो निबन्धनं तर्हि द्रव्यत्वादीनप्याक्षिपेत्, अतद्भेदत्वाच्च नाक्षेप, न ह्यनग्निव्यावृत्तेर्भेदोऽग्न्यादय इत्यादिदोषप्रसङ्गेनान्यापोहकृच्छ्रुतिरिति लक्षणस्यापवाद आरभ्यते त्वया शब्दान्तरार्थापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति, इदमपि वचनमात्रनिर्वाहकमेव, सामान्यादिशब्दान्तरार्थापोहानिष्टे, तस्मात्त्यक्तोऽन्यापोह, अनिष्टविधिशब्दार्थत्वप्रसङ्गश्चेत्याद्युक्तमत्र भाव्यमित्यतिदिशति–**अग्निदेशज्ञानाभ्यामिति** । तदेवमन्यापोहाभावादपक्षो न भवतीत्येवं रूपस्य पक्षार्थस्याभावेन पक्षधर्मोऽप्यनुपपन्न इत्याह–**एवं तावदिति** । अर्थान्तरापोहेन स्वार्थमभिधत्त इति मताश्रयेणानुपपत्तिमाह–**किं भवदेव भवतीति,** उक्तपक्षद्वयविचारेणार्थान्तरापोहासम्भवो गुणसमुदायपरमार्थत्वात् स्वार्थासम्भव इत्यादिप्रागुदितविकल्पं पक्षाद्यपोह इति भावः । अनेनैव न्यायेन सपक्षासपक्षावपि न स्त इत्याह–**सपक्षासपक्षयोरिति** । अनिदिश्यमानग्रन्थारम्भमर्यादामाह–**कुत आरभ्येति,** किं त्वं मन्यसे अन्यत्वे न सामान्यभेदपर्यायवाची वृक्षशब्दः, अविरोधात्, विरोधाच्च पटादीनपोहते इत्याशङ्क्य नन्विदमेव विधिना वाचकत्वेऽनुमानमित्यादि पूर्वोदितग्रन्थमारभ्येत्यर्थः । पर्यन्तावधिमाह–**इयदिति** । नन्वेवं कृतकत्वाद्यनुमानं स्वार्थमात्मापोहेन नाशयेदेव, अन्यापोहेन स्वार्थप्रतिपत्त्यगमकत्वात्, अन्यापोहशब्दार्थवदिति स्वार्थानुमानेऽनित्य शब्द इति न पक्षः, अग्निरत्र धूमादिति परार्थानुमानेऽग्निरत्रेति च न पक्षः, अभवनपरमार्थत्वात्, तस्माच्छब्दप्रदेशयोरभावे कृतकत्वधूमयोः कथं पक्षधर्मत्वमित्याह–**यथा कृतकत्वादेरिति** । एवं सपक्षासपक्षावपीत्याह–**एवं नास्येति** । एवञ्च पक्षाद्यतथार्थत्वादतस्मिंस्तदिति प्रत्ययात्मकत्वादनुमानमप्रमाणमेव, अलातचक्रे चक्रमिति प्रत्ययवदिति दर्शयति–**एवमिति** । व्यवस्थिते हि पक्षादौ लिङ्गे त्रैलक्षण्यसम्भवादनुमानं प्रमाणं स्यात्, न चैवं तस्मादप्रमाणमेवेति भावः । अत. परं कियान् ग्रन्थस्त्रुटित इव

१ सि. क्ष. छा. डे. तं ज्ञान० । २ सि. क्ष. छा. डे. भवन्तावेव भवत उताभवन्तावन्यावन्यापोहौ । ३ सि. क्ष. छा. डे. °पर्यायवाच्युत विधि० । ४ सि. क्ष. छा. डे. °रभ्यातातो ग्र० । ५ सि. क्ष. छा. डे. °प्रामाण्यमविशिष्टत्वेन स्वमात्मनैवा० ।

प्रत्यक्षाग्निसामान्यसाध्यत्वे सपक्षाभावादसाधारणत्वमत्रेत्यभिधानवैयर्थ्यञ्च स्यात्, तन्माभूदित्यत्रशब्दवाच्यस्याग्निविशिष्टस्य धूमविशिष्टत्वेन स्वयमात्मनैवाऽऽत्मनः साध्यत्वात् साधनत्वाच्च लिङ्गित्वं लिङ्गत्वञ्चेत्यत आह—

**अत्रेत्यभिधेयस्य लिङ्गित्वाल्लिङ्गत्वाच्चाग्निमद्धूमवत्तयोश्च विभागविवक्षायां साध्यसाधनधर्मभावाल्लिङ्गिनि लिङ्गस्यासम्भवो न सम्भवति, तयोस्तत्रैव प्रधानोपसर्जनभावेन परस्परं नियतभावत्वात्, तौ देशस्यैकस्य भेदविवक्षायां साध्यसाधने भवतः।**

**अत्रेत्यभिधेयस्य** लिङ्गित्वात् [ लिङ्गत्वाच्च ] अग्निमद्धूमवत्तयोश्च विभागविवक्षायां साध्यसाधनधर्मभावादिति, स एव हि प्रदेशोऽग्निमत्त्वेन साध्योऽप्रत्यक्षाग्निकत्वात् धूमवत्त्वेन साधनं प्रत्यक्षधूमकत्वात् तस्माद्विशिष्टदेशसाध्यसाधनधर्मभावात्-लिङ्गिनि साध्ये लिङ्गस्य साधनस्यासम्भवो न सम्भवति सम्भव एव सम्भवतीत्यर्थः कस्मात् ? तयोस्तत्रैव प्रधानोपसर्जनभावेन परस्परं नियतभावत्वात्—अग्निः प्रधानं धूमनिर्वृत्तौ, धूमस्याग्निपरिणामत्वात् तन्निर्वर्त्यत्वात् धूम उपसर्जनं अग्निनिर्वृत्तौ, तत्परिणामत्वाभावात्—अतन्निर्वर्त्यत्वात्, धूमः प्रधानम् अग्निगतौ तल्लिङ्गत्वात्, तमन्तरेणानिर्वृत्तेः—अनुपपत्तेः अविनाभावात्, उपसर्जनमग्निः, धूमगतावप्रत्यक्षत्वात्तत्कालदेशयोः, अन्यथा भवत्येवेत्युक्तत्वात्, तेनान्योऽन्यप्रधानोपसर्जनभावेन नियमेन भवन्तौ तौ—अग्निधूमाख्यौ देशस्यैकस्य भेदविवक्षायां साध्यसाधने भवतः।

तद्व्याख्या—

**अग्निमत्पक्षोपरि विचिकित्सायां……… … …तत्सम्बन्धिमत्प्रतिपत्तिश्च, यदि च तस्य देशस्य…………… … ..तयोरेकवस्तुधर्मत्वात्, न चेदिच्छसि ततो नासम्भव-**

भाति। **प्रत्यक्षेति,** अग्निरत्र धूमादित्यत्र नाग्निसामान्यं साध्यं, प्रतीतत्वात्, सपक्षाभावात्, अत्रपदवैयर्थ्याच्च, नापि धूमो हेतुः, अग्निमद्देशेन सहाविनाभावासम्भवादतः प्रत्यक्षविषयीभूतधूमाधारप्रदेशात् परोक्षभूतोऽग्न्याधारप्रदेशः साध्यते, तस्मात्तस्यैव देशस्य साध्यत्वं साधनत्वञ्चेति भावः। इममेव साध्यसाधनभावमाह—**अत्रेत्यभिधेयस्येति,** एतत्प्रदेशस्याग्निमत्त्वेन विवक्षाया तद्रूपेण तस्याप्रत्यक्षत्वात् साध्यत्वम्, धूमवत्त्वेन विवक्षायाञ्च तद्रूपेण तस्य प्रत्यक्षत्वात् साधनत्वम्, तस्मात् सर्वत्र लिङ्गिनि लिङ्गस्य नासम्भव इति भावः। हेतुमाह—**तयोरिति,** विशिष्टदेशस्य साध्यसाधनभावादेव अग्निधूमयोः साध्यसाधनभाव इति भावः। हेतुं व्याचष्टे—**अग्निः प्रधानमिति,** धूमोत्पत्तावग्निः प्रधानम्, धूमो हि अग्नेः परिणामः, अग्निश्च धूमनिर्वृत्तौ योग्य इति भावः। **धूम इति,** अग्निनिर्वृत्तौ धूमो गौणः, नहि धूमपरिणामोऽग्निः, अग्निनिर्वृत्तियोग्यत्वाभावादिति भावः। कार्यकारणभावाश्रयेण प्रधानोपसर्जनभावमुक्त्वा ज्ञाप्यज्ञापकभावाश्रयेण तमाह—**धूमः प्रधानमिति,** अग्निज्ञानज्ञापकत्वात्, अग्निना विना धूमस्यानुत्पत्तेः, अनुपपन्नत्वाच्चाग्न्यविनाभावादिति भावः। **उपसर्जनमग्निरिति,** धूमे ज्ञातेऽपि तस्याप्रत्यक्षत्वात् तद्विशिष्टदेशकालयोरपि तथात्वादिति भावः। तदेवं प्रधानोपसर्जनभावनियमेन देशस्यैकस्यैव अग्निमद्धूमवत्तया भेदविवक्षाया साध्यसाधनभावो भवत इत्याह—**तेनान्योऽन्येति,** लोके हि प्रदेश एवाग्निः प्रतिपद्यते, देशकालाद्यपेक्षयैव कार्यहेतुर्गमकः, यत्र यदा धूमः तत्र तदा ह्यग्निः साध्यते, न त्वग्निमन्यदेशे भस्मकाले वा, अन्यथा हेतुर्व्यभिचारी स्यात्, तस्माद्देशाद्यपेक्षया धूमवत्तयाऽग्निसाधने गृह्यमाणस्य देशस्य साध्यता न विरुध्यत इति भावः। तदेव व्याचष्टे—**अग्निमदिति।** पूर्वं यथोदितक्रमेण

१ सि. क्ष. छा डे. °साध्ये प्रत्यक्षाग्निसामान्यसाध्यत्वे सपक्षाभावादसाधारणत्वमत्रेत्यभिधानवैयर्थ्यं च स्यात्तन्माभूदित्यत्रशब्दवाच्यस्याग्निविशिष्टस्य धूमविशिष्टत्वेन स्वयमात्मनैवात्मनः साध्यत्वात् साधनत्वाच्च लिङ्गित्वं लिङ्गत्वं चेत्यत आह अत्रेत्यभिधेयस्य लिङ्गित्वादग्निमद्धूमवत्तयोश्च विभागविवक्षाया साध्यसाधनधर्मभावादिति, स एव हि प्रदेशोऽग्निमत्त्वेन साध्यो प्र०।

**धूमो लिङ्गतां लभते, अपक्षधर्मत्वात्, यथा तस्मिन् प्रदेशे प्रभादेः धूमोऽयोध्यादि काले वा, वनस्पतिचैतन्ये स्वापवच्च धूमः सन्देहहेतुः स्यात् पक्षाव्यापिसाधनधर्मत्वात् तत्प्रतिपत्त्याधानाधारधर्मभावात्मकप्रत्ययाव्यवस्थानकारणत्वात् स्थाणुपुरुषभावाभावप्रतिपत्तिवत् ।**

**अग्निमत्पक्षोपरि विचिकित्सायामित्यादि**, पूर्वं गमकत्वेन लिङ्गस्य धूमस्य प्राधान्यं गम्यस्य लिङ्गिनोऽग्नेर्गुणभावं दर्शयति यावत्सम्बन्धिमत्प्रतिपत्तिश्चेति, ततः परं यदि च तस्य देशस्येत्यादिना निर्वृत्तावग्नेः प्राधान्यं धूम[ा]प्राधान्यञ्च यावल्लिङ्गतां लभत इति पक्षधर्मत्वसपक्षानुगतिविपक्षव्यावृत्तिरूपतां व्याख्याय धूमस्य पूर्वेणाग्निसाध्यतां गमयति, उत्तरेणाग्निविशिष्टदेशसाध्यतां व्याख्याय तद्बलनिर्वृत्तधूमप्रत्यक्षतायां त्रैलक्षण्येन गमकत्वं धूमस्य व्याचष्टे—तयोरेकवस्तुधर्मत्वादिति-एतदुक्तं भवति सम्भवतोरेव लिङ्गलिङ्गिनोः साध्यसाधनभावोऽन्वयप्राधान्यापोहप्राधान्येन, न चेदिच्छसि ततोऽनिष्टापादनसाधनं-नासम्भवन् धूमो लिङ्गतां लभते, अपक्षधर्मत्वात, त्वन्मतादेव सर्व[त्र]लिङ्गिन्यसम्भवात् सिद्धमपक्षधर्मत्वं यत्र यत्रापक्षधर्मत्वं तत्र तत्र तल्लिङ्गत्वाभावः यथा तस्मिन् प्रदेशेऽग्नेः प्रभादेर्धूमोऽयोध्यादिकाले वा, किञ्चान्यत्—प्राक् शब्दे व्याख्यातमधुना लिङ्गेऽप्युच्यते—वनस्पतिचैतन्ये स्वापवदित्यादि, अग्निमानयं देशो धूमवत्त्वादित्यस्मिन् साधने त्वदभिमत्या धूमः संदेहहेतुः स्यात् पक्षाव्यापिसाधनधर्मत्वात, तद्व्याख्या—तत्प्रतिपत्त्याधानेत्यादिर्दण्डकहेतुः-तस्य प्रतिपत्तिस्तत्प्रतिपत्तिः, तस्या आधानं तत्प्रतिपत्त्याधानं तस्याधारो धर्मः, तस्य भाव आत्मा यस्य स भवति तत्प्रतिपत्त्याधानाधारधर्मभावात्मकः प्रत्ययः यथास्माभिर्व्याख्यातः, तस्य प्रत्ययस्याव्यवस्थाने कारणीभवति स धूम-

गम्यगमकभावात् प्रधानोपसर्जनभावेन भवत्यामग्निधूमाभ्यां सम्बन्धिनो देशस्यैकस्यैव भेदविवक्षाया साध्यसाधनभावादेकस्य सम्बन्धिमत्प्रदेशस्य ज्ञानादपरसम्बन्धिमत्प्रतिपत्तिं प्रथमं दर्शयतीत्याह–**पूर्वमिति**, ज्ञाप्यज्ञापकभावेन प्रधानोपसर्जनभावोऽत्र विज्ञेय । यदि च देशस्येति ग्रन्थेन वक्तव्यमाह–**निर्वृत्ताविति**, कार्यकारणभावेनात्र प्रधानोपसर्जनभावो बोद्धव्यः । ज्ञाप्यज्ञापकभावलक्षणप्रथमकल्पे धूमोऽग्नेः साधनम्, कार्यकारणभावपक्षेऽग्निमद्देश साध्यो नाग्निरित्याह-**धूमस्येति** । अग्निसामर्थ्याद्धूमस्य निर्वृत्ति, कार्यकारणभावस्य तद्भावे भाव, तदभावेऽभाव इत्यन्वयव्यतिरेकगम्यत्वेन धूमे त्रैलक्षण्य दुर्वारम्, अग्निरूपेण परिणतस्यैव धूमरूपेण परिणतत्वादग्निधूमयोरेकवस्तुधर्मत्वमतो धूमो गमकोऽग्निर्गम्य इत्याह-**तद्बलनिर्वृत्तेति** । लिङ्गिनि साध्ये लिङ्गस्य सम्भव एव, एकस्मिन देशे प्रधानोपासर्जनभावेन परस्पर तयोर्नियतत्वात, तौ च सम्भवल्लिङ्गलिङ्गिनौ अन्वयप्राधान्येन व्यतिरेकप्राधान्येन च साध्यसाधनभावं भजत इति पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तिरूपत्रैलक्षण्यसम्पत्समन्वितावित्याशयं वर्णयति-**एतदुक्तं भवतीति** । अन्यथाऽनिष्टमापादयति-**न चेदिच्छसीति**, सम्भवतोर्लिङ्गलिङ्गिनोः साध्यसाधनभावं यदि नेच्छसि तर्हि असम्भवद्धूमो लिङ्गतां न लभते, पक्षधर्मत्वाभावात, न सर्वत्र लिङ्गिनि लिङ्गस्य सम्भव इति यतो वाञ्छसि ततोऽपक्षधर्मत्वं धूमे सिद्धमेव, यत्र च प्रभादौ नभोदेशवर्तिनि अपक्षधर्मत्वमस्ति अयोध्यादिकाले वा धूमे न तत्र लिङ्गत्वमस्तीति धूमो लिङ्गं न भवेदिति भावः । यथा वृक्षशब्दोऽव्यापिपक्षधर्मत्वाद्वनस्पतिषु चैतन्यसाधने स्वाप- संदेहहेतु तथा धूमहेतुरपि, किमयं धूमोऽशेषानित्यत्वाध्यापिप्रयत्नानन्तरीयकत्ववदनुमानं स्यात् ? किं वा वनस्पत्यव्यापिस्वापवदनुमानाभासः स्यादितीत्याह–**प्राक् शब्द इति** । संदेहहेतुत्वमेव स्पष्टयति–**तत्प्रतिपत्त्याधानेति** । **तस्येति** । अयं भावोऽत्र प्रतिभाति अग्निरिति प्रतिपत्तिजननाधारो धर्म धूमो धूमवत्त्वं वा तस्य भावस्त्रैलक्षण्यं स एवात्मा यस्य प्रत्ययस्य त्रिलक्षणो धूम इति ज्ञानस्य त्रिलक्षणधूमकारणत्वस्य वा सः तत्प्रतिपत्त्याधानाधारधर्मभावात्मकप्रत्ययः, प्रदेशस्यैकस्यैव लिङ्गलिङ्गित्वे अभिधाय प्रधानोपसर्जनभावेन भेदविवक्षायां तस्यैव नियतभावत्वात् सम्भवतोरेवाग्निधूमयोः साध्यसाधनभावस्य

1 सि. क्ष. डे. छा. अग्नेमत्पक्षोपरिविचिकित्सायाम्० ।

त्वन्मतेन, पक्षाव्यापिसाधनधर्मत्वात्–सर्वत्र लिङ्गिन्यभावात्-अनियतलिङ्गिसम्भवत्वात्, किमिव स्थाणुपुरुषभावाभावप्रतिपत्तिवत्–यथा स्थाणावभवन् वक्रसंयमनादिधर्मः पुरुषे च भवन् स्थाणुरिति प्रतिपत्त्याधानाधार[धर्म]भावात्मकप्रत्ययाव्यवस्थानकारणत्वात्[त]द्विषयसंदेहकृत्, एकदोभयत्राभावात् किं स्थाणुः स्यात् किं पुरुषः स्यात् तथा वयोनिलयनादिः पुंस्यभवन् स्थाणौ भवन् उभयविषयं संशयं करोति, यत्र दृष्टस्तत्र निश्चयहेतुरेव, स्थाणौ वयोनिलयनं पुरुषे च वक्रसंयमनम्, तत्र भवनात्, तथाऽयमप्यग्निरत्र धूमादिति संदेहहेतुः स्यात्, साध्ये भवनानियमात् ।

यत्तु तदन्यत्रादर्शनं प्रत्यक्षतस्तर्क्यते तत्र सपक्षे सर्वत्र दर्शनाभावेऽदोष एव, लिङ्गिन्यदर्शने तु स्याद्दोषः, लिङ्गी चात्र प्रदेशः प्रत्यक्षधूमसम्बन्धी तत्र सर्वत्र दृश्यत एव, तस्माद्भ्रान्तवचनमेतत् सर्वत्र लिङ्गिन्यदर्शनात्त्वदिष्टवत् प्रतिपत्तिरिति, एवञ्च दर्शनबलादेव गमयतीत्युक्ते यस्तद्विपरीतः प्रकाश्यप्रकाशकत्वभेदपाठः 'सम्बन्धो यद्यपि द्विष्ठः सहभाव्यङ्गलिङ्गिनोः । आधाराधेयवद्वृत्तिः तस्य संयोगिवन्न तु ॥' ( प्रमा. स. ) इति "यथाहि सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मा भवति, नाप्याधेयः आधारधर्मा तथा न कदाचिल्लिङ्गं लिङ्गि भवति लिङ्गि च लिङ्गं, संयोगी तु यथैकस्तथा द्वितीय इति न तद्वदिहेति, तथा हि 'लिङ्गे लिङ्गि भवत्येव लिङ्गिन्येवेतरत् पुनः । नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः ॥' ( प्रमा. स. ) यस्माच्च लिङ्गे लिङ्गी भवत्येव तस्माद्युक्तं यदग्निमद्धूमो द्रव्यत्वादीनामस्ति प्रकाशको न तैक्ष्ण्यादीनाम्, यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद्युक्तं यद्धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिरिति ।

यत्तु तदित्यादि, यत्त्वयेदं साध्यादन्यत्रायोगुडाङ्गाराग्न्यादावदर्शनं प्रत्यक्षतस्तर्क्यते धूमस्य तत्र सपक्षे लिङ्गस्य सर्वत्र दर्शनाभावे लिङ्गत्वाव्याख्यानाददोष एव, लिङ्गिन्यदर्शने तु स्याद्दोषः, लिङ्गी चात्र प्रदेशः प्रत्यक्षधूमसम्बन्धी, तत्र सर्वत्र दृश्यत एव, तस्माद्भ्रान्तवचनमेतत् सर्वत्र लिङ्गिन्यदर्शनात्त्वदिष्टतत्प्रतिपत्तिरिति

एकवस्तुधर्मत्वेन च लिङ्गे त्रैलक्षण्येन गमकत्वस्य मया प्रतिपादितत्वात्, एतत्त्रैलक्षण्यप्रत्ययस्य व्यवस्थापने त्वन्मतेन धूमो न क्षमो भवति पक्षाव्यापिसाधनधर्मत्वात्, न सर्वत्र लिङ्गिनि लिङ्गस्य सम्भव इत्यभ्युपगमात्, अयोग्याद्व्यतिरिक्तलिङ्गिन्येव लिङ्गस्य सम्भवाभ्युपगमाच्चेति । दृष्टान्तमाह–स्थाणुपुरुषेति, स्थाणुत्वाभावाविनाभाविवक्रसंयमनादिधर्म, पुरुषत्वाविनाभाविवयोनिलयनादिधर्म प्रत्येकं पुरुषस्थाणुप्रतिपत्त्याधानाधारधर्म, प्रत्येकं यत्र स दृष्टः तत्र तत्प्रतिपत्तिजननात्, तौ च धर्मौ एकदोभयत्र न स्त एव तथा च पुरोवर्तिनि यदा वक्रसंयमनादिज्ञानं तदा पुरुषत्वस्य यदा च वयोनिलयनादिधर्मज्ञानं तदा स्थाणुत्वस्योपस्थित्या तटस्थस्य संशयो भवति किमयं स्थाणुर्वा पुरुषो वेति, तयोर्धर्मयोः पक्षाव्यापिसाधनधर्मत्वादिति । प्रत्येकं तयोरविनाभावं दर्शयति–यत्र दृष्ट इति । यच्चायोगुडाङ्गाराग्न्यादौ धूमो न दृश्यत इत्युक्तं तत्राह–यत्त्विति । व्याचष्टे–यत्त्वयेदमिति त्वया हि साध्यादन्यत्र साधनस्य प्रत्यक्षेणादर्शनं तर्क्यते, न तु लिङ्गिनीति भावः । तथा च भावमाह–तत्र सपक्ष इति, निखिलेषु सपक्षेषु लिङ्गेनावश्यन्तया भवितव्यमित्यनियमः, प्रत्यक्षविषयस्यैवायोग्यादेरलिङ्गित्वात् तत्र लिङ्गस्यादर्शनेऽपि न लिङ्गत्वं व्याहन्यते लिङ्गिनि तस्यादर्शने हि लिङ्गत्वं विहन्यते, लिङ्गी च प्रत्यक्षतो धूमत्वेन परिदृश्यमानोऽत्रेति शब्दवाच्यः प्रदेश एव, तत्र सर्वत्र धूमो लिङ्गं दृश्यत एवेति भावः । एवञ्च न हि सर्वत्र लिङ्गिनि लिङ्गं सम्भवतीति लिङ्गे लिङ्गी भवत्येवेति च प्रतिपत्तिर्भ्रान्तेत्याह–तस्मादिति । अन्योन्यप्रधानोपसर्जनभावेन नियमेन भवन्तौ लिङ्गलिङ्गिनौ देश-

१ सि. क्ष. छा. डे. °धानाधाराभावा° ।

किञ्चान्यत्–एवञ्चेत्यादि, अनेनैव न्यायेन दर्शनबलादेव गमयतीत्युक्ते[1] यस्तद्विपरीतः प्रकाश[क]ाप्रकाशकत्वभेदपाठः सोऽप्यसम्यक्, कतमोऽसाविति चेदुच्यते 'सम्बन्धो यद्यपि द्विष्ठः' इत्यादिकारिका:[2] सामान्याः तद्यथा–ननु द्विगतत्वात् सम्बन्धस्य संयोगिवैल्लिङ्गधर्मेण लिङ्गिना भवितव्यमिति चोदिते नैतदस्ति सम्बन्धो यद्यपि द्विष्ठ इत्यादि, यथा हि सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मो भवति, नाप्याधेय आधारधर्मो तथा न कदाचिल्लिङ्गं लिङ्गि भवति लिङ्गि च लिङ्गम्, संयोगी तु यथैकस्तथा द्वितीय इति न तद्वदिह, तथाहि 'लिङ्गे लिङ्गि भवत्येव' इत्यादिश्लोकः, यस्माच्च लिङ्गे लिङ्गि भवत्येव तस्माद्युक्तं यदग्निमद्धूमो द्रव्यत्वादीनामस्ति प्रकाशको न तैक्ष्ण्यादीनाम्, यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद्युक्तं यद्धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिरित्येवं ह्यवधारणवैपरीत्ये न सम्बन्धो लिङ्गलिङ्गिनोः ।

**ननु च लिङ्गमपि लिङ्गिनि भवत्येव, यथा कृतकत्वमनित्यत्वे, 'कामं लिङ्गमपि व्यापि लिङ्गिन्यङ्गि न तत्त्वतः । व्यापित्वान्ननु तत्तस्य गमकं गोविषाणवत् ॥' ( प्रमा. स. ) यद्यपि किञ्चिल्लिङ्गं लिङ्गिनि भवत्येव, न तु तत्त्वेन लिङ्गिनं गमयति, तद्यथा-विषाणित्वेन गोर्व्यापित्वेऽपि न गोः प्रकाशकत्वम् व्यापित्वात्तु तदेव गोत्वेन प्रकाश्यं भवति, 'प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपोहने । लिङ्गे लिङ्गिनि च व्याप्तिः तस्मात् सत्यप्यकारणम् ॥' ( प्रमा. स. ) कृतकत्वस्य ह्यनित्यार्थव्यापित्वेऽपि नित्यत्वप्रतिषेधेन गमकत्वम्, तस्माद्यदनित्यार्थेऽपि कृतकत्वव्यापित्वं तेनाकृतकत्वानवकाशादनित्यत्वस्य कृतकार्थव्यापित्वेऽप्यकृतकत्वप्रतिषेधेन गम्यतैव स्यान्न गमकत्वे तुल्यत्वमिति चेन्न, विषाणित्वे व्यभिचारात् ।**

( **ननु चेति** ) ननु च लिङ्गमपि लिङ्गिनि भवत्येव, यथा कृतकत्वमनित्यत्वे, 'कामं लिङ्गमपि

स्यैकस्य भेदविवक्षायां साध्यसाधनं भवत, सर्वत्र सपक्षे लिङ्गस्य दर्शनाभावेऽपि लिङ्गत्वाव्याहते सर्वत्र लिङ्गिनि प्रत्यक्षधूमसम्बन्धिनि प्रदेशे धूमस्य दर्शनादेवान्वयव्यतिरेकयो पतिपत्तिसम्भवात्तद्रूपगीनप्रकाशकाप्रकाशकत्वपाठभेदो यस्त्वया क्रियते सोऽयुक्त इत्याह-**अनेनैवेति** । पाठभेदप्रकाशिका व्याख्याभिहिता पद्यकारिका प्रदर्शयति-**सम्बन्ध इति,** सम्बन्धस्य द्विनिष्ठत्वाद्व्याप्तिरूपसम्बन्धस्याप्युभयत्रैकविधत्वात् लिङ्गस्य लिङ्गिधर्मवाल्लिङ्गिनोऽपि लिङ्गधर्मत्व स्यात् तथा च लिङ्ग एव गमको न लिङ्गीति नियमो न स्यादित्याशङ्कायामियं कारिका दिङ्नागेनोक्ता, तदर्थश्चाधाराधेयभावलक्षणसम्बन्धस्य द्विगतत्वेऽपि नाधारस्याधेयत्वमाधेयस्य वाऽऽधारत्वं तथा लिङ्गलिङ्गिनोर्व्याप्तिरपि धूमादावन्यथा, इतरथा त्वग्न्यादौ धूम एव गमकत्वाल्लिङ्गं गम्यत्वादग्निरेव लिङ्गी, संयोगी तु न तथा, घटसंयोगि गगनं गगनसंयोगी घट इत्यभिधानात्, न तथेह वृत्तिरिति भावः । कारिकावतरणमाह-**ननु द्विगतत्वादिति** । कारिका व्याचष्टे-**यथाहीति** । व्याप्तेरुभयत्र नैकाकारत्वादर्शयति-**लिङ्ग इति,** तं व्याचष्टे-**यस्माच्चेति,** साधने सति साध्यं भवत्येव, सति हि धूमे यथाऽग्निर्भवत्येव तथाऽग्नित्वद्रव्यत्वादयोऽपि भवन्त्येवेति तानपि प्रकाशयति धूम, न तु तैक्ष्ण्यादीन्, ते भवन्त्येवेत्यनियमात, यस्माच्च साध्य एव साधनं भवति, धूमो हि अर्थान्तरासम्भविभि धूमत्वपाण्डुत्वादिधर्मैरग्निं प्रकाशयति, कार्यगतविशेषधर्माणां कारणगतसामान्यधर्मापेक्षया कार्यत्वनियमात, न तु द्रव्यत्वादिभिः प्रकाशक, तेषामर्थान्तरसम्भावित्वेनाविनाभावासत्त्वात, प्रोक्तक्रमेणायोगान्ययोगव्यवच्छेदरूपयोरवधारणयोर्वैपरीत्ये लिङ्गलिङ्गिनोर्न व्याप्तिरिति भावः । अथ साधनमपि साध्ये सति भवत्येवेत्याशङ्कते-**ननु चेति** ।

१ सि. क्ष. °त्युक्तेनयः । २ सि. कारिका. समाप्ताः, क्ष डे. छा. कारिकासामान्यः । ३ सि छा. °गिवल्लिङ्गिधर्मिणो लिंगिन भवि० ।

व्यापि' इत्यादि, यद्यपि किञ्चिल्लिङ्गं लिङ्गिनि भवत्येव, न तु तत्त्वेन-व्यापित्वेन लिङ्गिनं गमयति तद्यथा—विषाणित्वेन गोव्यापित्वेऽपि न गोप्रकाशकत्वम्, व्यापित्वात्तु तदेव गोत्वेन प्रकाश्यं भवति, किं कारणम्? 'प्रतिषेध्याप्रचारेण इत्यादिश्लोकः, कृतकत्वस्य अनित्यार्थव्यापित्वेऽपि नित्यत्वप्रतिषेधेन गमकत्वम्, तस्माद्यदनित्यार्थेऽपि कृतकत्वव्यापित्वं तेनाकृतकत्वानवकाशात् अनित्यत्वस्य कृतकार्थव्यापित्वेऽप्यकृतकत्वप्रतिषेधेन गम्यतैव स्यान्न गम[क]त्वे तुल्य[त्व]मिति चेन्न, विषाणित्वे व्यभिचारादिति ।

**आह च 'नाशिनः कृतकत्वेन' इति ( प्रमाणस० ) 'विषाणित्वेन गोव्याप्तिः' इति च ( प्रमाणस० ) निर्दिष्टं स्वार्थमनुमानं गम्यगमकनियमव्यवस्थोक्तेः ।**

**आह चेत्यादि,** एतस्यार्थस्य निदर्शनभावनार्थे कारिके 'नाशिनः कृतकत्वेने'त्यादि, 'विषाणित्वेन' इत्यादि च, पूर्विकया कारिकया कृतकत्वेनानित्यत्वं व्याप्तं न साधनम्, अविवक्षितत्वात्, यस्मान्नित्याभावोऽनित्यत्वम्, कृतकोऽर्थो न प्रदर्श्यते यदनित्यं तत्कृतकमिति, किं तर्हि? नित्याभावेनाकृतकाभावस्य कृतकस्य व्याप्तेर्विवक्षितत्वात् कृतकेऽर्थे अनित्यत्वं प्रदर्श्यते यत्कृतकं तदनित्यमिति, द्वितीयया तस्यार्थस्य स्फुटीकरणार्थं विवक्षिताविवक्षितयोर्व्याप्त्योर्व्यभिचाराव्यभिचारनिदर्शनं क्रियते-विषाणित्वाद्गौरिति व्यभिचरति. गोत्वाद्विषाणीति न व्यभिचरति, अतो न गमयति[गमयति]चेति, प्रतिषेध्याप्रचाररूपा व्याप्तिर्गमयति न विधेयप्रचाररूपेति निर्दिष्टं स्वार्थमनुमानम्, गम्यगमकनियमव्यवस्थोक्तेः मयैव न वादवि[धि]कारादिभिरित्याहोपूरुषिकयोपसंहरत्यन्यापोहिकः ।

व्याकरोति-**यद्यपीति** कृतकत्वानित्यत्वयोः समशीलत्वात् अनित्यत्वे सति कृतकत्वं भवत्येव, तथा कृतकत्वे सति अनित्यत्वं भवत्येवेत्याशंक्योत्तरमाह किञ्चिल्लिङ्गं कृतकत्वादि लिङ्गिनि सति-अनित्यत्वे सति भवत्येव तथापि तद्व्यापकत्वेन रूपेण लिङ्गिनं न गमयति, व्यभिचारसम्भवात्, यथा गोव्यापकं विषाणित्वं न गोप्रकाशकं महिषादिभिर्व्यभिचारात्, किन्तु व्यापकत्वादेव विषाणित्वं गोत्वेन प्रकाश्यं भवतीति भावः । अनित्यत्वकृतकत्वयोर्व्याप्तेरविशेषेण सद्भावेऽपि गम्यगमकभावनैयत्ये कारणमाह-**प्रतिषेध्याप्रचारेणेति** । अत्रार्थे तदीये कारिके उपन्यस्यति-**आह चेति** । नाशिनः कृतकत्वेन व्याप्तिर्न हि विवक्षिता । अनित्यत्वेन तु व्याप्तिः कृतकत्वे विवक्षिता ॥ विषाणित्वेन गोव्याप्तिर्विषाणित्वं प्रसाधयेत् । गोत्वव्याप्तिर्विषाणित्वे न गवार्थप्रसाधिका ॥ इति कारिके सम्भाव्येते । व्याचष्टे-**एतस्यार्थस्येति** । प्रथमकारिकाभावार्थमाह-**पूर्विकयेति,** प्रथमोपन्यस्तयेत्यर्थः, यदेव कृतकं तदेवानित्यं यदेवानित्यं तदेव कृतकमिति कृतकानित्ययोरभेदः, यदेवाभूत्वा भवनं भावस्य तदेव कृतकत्वं यदेव च भूत्वाऽभवनमनवस्थायित्वं तदेवानित्यत्वमित्येतावन्मात्रकृतस्तयोर्भेदः, अनुमानञ्च विवक्षापूर्वकम्, ज्ञापकहेत्वधिकारात्, अनित्यत्वस्य कृतकत्वव्याप्तत्वेऽपि न साधनभावः, अविवक्षितत्वादिति भावः । अविवक्षाया हेतुमाह-**यस्मादिति,** नित्याभावो ह्यनित्यत्वम्, तद्गतिं कृतकोऽर्थो न प्रदर्श्यते कृतकत्वं नाभिधीयते यदनित्यं तत्कृतकमिति, निरन्तरसदृशापरापरोत्पत्तिलक्षणविभ्रमकारणसद्भावेनानित्यत्वस्यानिश्चितत्वात् कथञ्चिन्निश्चयमकृतकव्यावृत्तेन कृतकत्वेन नित्यव्यावृत्तमनित्यत्वमेव निश्चेयमिति नानित्ये कृतकोऽर्थः प्रदर्श्यत इति भावः । तर्हि क्व प्रदर्श्यत इत्यत्राह-**नित्याभावेनेति,** अनित्यत्वेन कृतकत्वं व्याप्तम्, निश्चितत्वेन विवक्षितत्वात्, तेन कृतकेऽर्थे नित्यत्वव्यावृत्तमनित्यत्वं प्रदर्श्यते यत्कृतकं तदनित्यमितीति भावः । विवक्षाविवक्षाभ्यां साधनासाधनत्वेऽव्यभिचारव्यभिचारौ निबन्धनं भवतीति निदर्शनमाह द्वितीयया कारिकया-**द्वितीययेति,** विषाणित्वं गोसाधनतां नास्ति महिषादौ व्यभिचारित्वेनाविवक्षितत्वात्, गोत्वन्तु विषाणित्वसाधकं भवत्येव, अव्यभिचारित्वेन विवक्षितत्वादिति भावः । भावार्थप्रदर्शनपूर्वकमन्यापोहवादिमतमुपसंहरति-**प्रतिषेध्येति,** धूमो

१ सि क्ष डे. छा. तथाऽनित्यत्वस्य कृतकार्थव्यापित्वेऽपि अकृतकत्वप्रतिषेधेन गमकत्वं, इति अधिकं दृश्यते ।
२ सि. डे. अनित्यत्वेन कृतकत्वस्याकृतकत्वप्रतिषेधेन गम्यतैव स्यान्न गमत्वे ।

**अत्रास्माभिरुच्यते 'तद्भावदर्शनादेव साध्यसाधनधर्मयोः । विधेः संयोगिवद्वृत्तिर्नाधाराधेययोरिव ॥ ( ग्रन्थकर्त्तुः ) इति, यत्तद्भावदर्शनं स एवाग्निर्धूमो भवति तेनैवाग्निना धूमेन भूयते तद्देशेन्धनादिसम्बन्धेन, नान्येन, न सोऽग्निर्धूमो न भवतीति तद्भावस्यास्वनिवृत्तिहेतुना वा भूतस्य दर्शनादेव धूमो धूमो भवन्नेवाग्निं गमयति न तु यत्र न दृष्टस्तदवच्छेदेन, तद्भावाग्रहणे दोषदर्शनात्, अतद्भावान्वयशब्दार्थतायामग्निधूमविपक्षव्यावृत्तिमात्रेष्टावनिष्टं स्यात्, अधूमस्य पटस्याभावो घटो वन्ध्यापुत्रो वा स्यात् एवं लिङ्गिन्यपि तथा तत्रेत्यभूतान्वयसाधनार्थातथार्थत्वात्, अतस्तद्भावदर्शनादेव तु साध्यसाधनधर्मयोस्तथाभूतान्वयदर्शनहेतोः लिङ्गिनि परस्परप्रत्ययाधाराधेयप्रधानोपसर्जनभावेनाविनाभावात् संयोगिवद्वृत्तिर्न तु कुण्डबदरयोराधाराधेययोरिव, तुल्यकक्षत्वादुभयोः ।**

(**अत्रेति**) अत्रास्माभिरुच्यते—'तद्भावदर्शनादेव' इत्यादिश्लोकस्तद्विपरीतार्थः, संयोगिवत्, नाधाराधेयवदिति, तद्भावदर्शनं यत्तदित्यादि, स एवाग्निर्धूमो भवति तेनैवाग्निना धूमेन भूयते तद्देशेन्धनादिसम्बन्धेन, नान्येन-अयोग्न्यादिनाऽवादितो वा धूमेन भूयते, न सोऽग्निर्धूमो न भवति भवत्येवेति तद्भावस्यास्वनिवृत्तिहेतुना वा भूतस्य दर्शनादेव धूमो धूमो भवन्नेवाग्निं गमयति, न यत्र न दृष्टस्तदवच्छेदेन, त्वन्मतेनाधूमो न भवति यतस्तस्मादनग्निर्न भवतीति तद्भावाग्रहणे दोषदर्शनात्, को दोष इति चेदुच्यते-अतद्भावान्वयशब्दार्थतायां विधिरूपतद्भावान्वयशब्दार्थविपरीतकल्पनायामग्निरत्र धूमादित्यस्मिन्ननुमानेऽग्निधूमविपक्षव्यावृत्तिमात्रेष्टौ अनिष्टं-अधूमस्य पटस्याभावो घटो वन्ध्यापुत्रो वा स्यात्, अनिष्टञ्चैतदेष लिङ्गे दोषः, एवं लिङ्गिन्यपि तथा-अनग्नेरपचनस्याभाव उदकं खपुष्पं वा स्यादसम्बद्धम्, अनिष्टञ्चैतदपि, किं कारणं ? तत्रेत्यभूतान्वयसाध-

धूमत्वेनाग्निमग्नित्वेन गमयतीति धूमत्वेनाग्नित्वेन विधेयभूतेनानुबद्धा व्याप्तिर्न, किन्तु अधूमव्यावृत्त्याऽनग्निव्यावृत्त्या प्रतिषेध्याभावात्मनाऽनुबद्धा व्याप्तिरिति स्वार्थानुमानं विवेचितमिति भावः । यद्यदात्मना भवति तदेव साध्यम्, यत्तस्य परिणामः तदेव साधनम्, अग्निरेव धूमो भवतीति साध्यमग्निः साधनञ्च धूमः, अयमेव साध्यसाधननियम इत्याशयेनाचार्य आह-**अत्रास्माभिरिति** । अत्रार्थे कारिकामाह-**तद्भावदर्शनादेवेति** । साध्यसाधनयोः संयोगिवद्वृत्तिः, न त्वाधाराधेयभावेन, तद्भावस्य तथाऽदर्शनादित्याह-**संयोगिवदिति** । पर्वतादिदेशेन्धनादिसामग्रीसन्निधानेऽग्निर्धूमरूपेण परिणमति, न त्वयोऽग्निरवादिर्वा धूमात्मना परिणतो भवति, अग्निर्धूमो न भवतीति न, किन्तु भवत्येवेति नाग्निर्धूमस्यात्मीयत्वनिवर्तकहेतुः, तेन भूतो धूमोऽग्नेर्भावः इति तद्भावस्य धूमस्य दर्शनादेव भवनात्मको धूमोऽग्निं गमयति, न त्वधूमव्यावृत्त्यात्मनैव धूमोऽनग्निव्यावृत्त्यात्मनाऽग्निम्, तद्भावग्रहणव्यतिरेकेण तथाऽभ्युपगमे दोषदर्शनादित्याह-**स एवाग्निरिति,** अस्वनिवृत्तिहेतुना वाऽभूतस्येति पाठे धूमनिवृत्तावहेतुरयोग्न्यादिरवादिर्वा तेनाभूतस्येत्यर्थः । अन्यव्यावृत्त्यात्मना साध्यसाधनभावे दोषमादर्शयति-**अतद्भावेति,** तद्भावरूपो योऽन्वयो विधिरूपोऽग्निधूमादिशब्दार्थः तद्विपरीतकल्पनायां अन्यापोहरूपव्यतिरेकशब्दार्थकल्पनायामित्यर्थः, अग्निरत्र धूमादित्यनुमाने धूमादिशब्दस्य यद्यधूमव्यावृत्तिरेवार्थस्तर्हि अधूमः-धूमभिन्नः पटादिः, तद्व्यावृत्तिर्घटो वन्ध्यापुत्रो वा असम्बद्धः स्यात्, एवमग्निरित्यनग्निभूतपटादिव्यावृत्तिर्घटो वा वन्ध्यापुत्रो वा स्यात्, धूम एवाग्निरेव तथाविध इति न स्यात्, एवं लिङ्गे लिङ्गिनि च दोष आपद्यत इति भावः । कुतस्तथाविधो घटो वा वन्ध्यापुत्रो वा स्यादित्यत्राह-**तत्रेत्यभूतान्वयेति,** त्वया हि यत्र धूमस्तत्राग्निरित्यस्य यत्राधूमव्यावृत्तिः तत्रानग्निव्यावृत्तिरित्यर्थो मन्यते न तु भावरूपेण यत्र धूमस्तत्राग्निरिति, स चार्थो घटखपुष्पादिसाधारणत्वाद-

---

१ सि. क्ष. डा. डे. अतदभावा० । २ सि. क्ष. डे. अनिष्टं हि तत्, एवलिङ्गि० ।

नार्थातथार्थत्वात्-यत्र धूमस्तत्राग्निरित्यन्वयसहितः साधनार्थः तथार्थः सत्यः, तद्भावात्-तत्प्रदेशसम्बन्ध्यग्नि-धूमभावादन्यथा त्वदिष्टानदभावात्मकस्याभूतान्वयसाधनार्थस्यातथार्थत्वादनन्तरनिर्दिष्टानिष्टप्राप्तिः, अत एतर्ह्यस्मदिष्टतद्भावदर्शनादेव तु साध्यसाधनधर्मयोरग्निधूमयोः-तथाभूतान्वयदर्शनहेतोः संयोगिनोरङ्गुल्योरि-व-यथैवास्य तथापि द्वितीयस्यापि तद्भावाविशिष्टा वृत्तिरिष्टा सा चाधाराधेय[योरिव]प्रधानोपसर्जनभावेना-विनाभावात् प्राग्व्याख्याननिर्व[च]न[गम]कगम्यभावेनैकवस्तुधर्मत्वात् कृतकानित्यत्ववत्, यथा हि प्रागभा-वप्रध्वंसाभावलक्षण एक एव हि अभूत्वा भवन् भूत्वा चाभवन् कृतकश्चानित्यश्च भावः साध्यसाधनाख्यां लभते तथेहाग्निधूमाख्य एक एव साध्यसाधनव्यपदेशं लभते प्रदेशेन्धनादिर्भावः, तस्मात् साध्यसाधन-धर्मयोर्लिङ्गिन्याधारे परस्परप्रत्ययाधाराधेयप्रधानोपसर्जनभावेनाविनाभावात् संयोगिवद्वृत्तिर्न तु कुण्डबद-रयोराधाराधेययोरिव प्रवृत्तिरनुमाने तुल्यकक्षत्वादुभयोरिति ।

**एवञ्च सपक्षे साध्यसाधनधर्मयोः सहभावदर्शनात् समन्वयवृत्त्या तथाप्रत्यक्षसम्ब-न्धित्वविवक्षया साधर्म्यदृष्टान्त उच्यते तथा प्रसिद्धस्य धर्मस्य साधनत्वादप्रसिद्धस्य साध्यत्वात् कुतो लिङ्गलिङ्गिव्यतिकरदोषाशङ्का? धर्मिण एवैकस्य लिङ्गत्वालिङ्गित्वाच्च नाग्निर्लिङ्गी न धूमो लिङ्गम् प्रत्यक्षेतरसम्बन्धित्वविवक्षितत्वान्न सङ्कीर्येयातां लिङ्गलिङ्गिनौ ।**

**एवञ्च सपक्ष इत्यादि,**[3] एवमेव चास्मदुक्तन्यायमुपोद्बलयति साधर्म्यदृष्टान्तप्रयोगो लोकप्रसिद्धो

सत्यार्थः, अत उक्तो दोष इति भावः । तदेव व्याचष्टे-**यत्र धूम इति,** भावरूपेणान्वयसहितः साधनार्थः सत्यः, तं विहाय त्वदिष्टः योऽधूमाभावान्याभावयोरभावरूपोऽन्वयस्तत्सहितः साधनार्थः न तथार्थः-असत्यः, तस्मादधुनैवोक्तो दोषः प्राप्नोतीति भावः । अथ परस्परसाध्यसाधनभावमाह-**अत एतर्हीति,** अत तद्भावदर्शनादेव प्रदेशादेरेकस्यैवाग्निर्धूमश्च भावः, यो ह्यग्नि-मत्प्रदेशः स एव धूमवान् भवति, तस्माद्धूमो यथा तद्भाववस्तथाऽग्निरपि, तद्भावलक्षणा वृत्तिरुभयत्राविशिष्टा, यत्र धूमस्तत्राग्निरिति सत्यभूतान्वयदर्शनाच्च संयोगिवद्वृत्तिरङ्गुल्योरिव, यथाऽङ्गुलेरन्यस्य करे यः संयोगः स एवापरस्याप्यङ्गुलेरेव करे साध्यसाधनधर्मयोर-विशिष्टा वृत्तिरिष्टा, न त्वाधाराधेययोः कुण्डबदरयोरिवेति भावः । संयोगिवद्वृत्तौ हेतुमाह-**प्रधानोपसर्जनभावेनेति,** धूमाग्न्योः संयोगिवद्वृत्तिः प्रधानोपसर्जनभावेन त्वेव प्रदेशे नियतभावत्वात्, एकस्यैव प्रदेशस्याग्निमद्धूमवत्तया विभागविवक्षाया साध्यसाधन-धर्मभावात्, स एव च प्रदेशोऽग्निमान् स एव धूमवान् यथा य एव शब्दादिः कृतकः स एवानित्यः, एकवस्तुधर्मत्वात् कृतकत्वानित्यत्वयोः गम्यगमकता तथैवात्रापीति भावः । दृष्टान्तमाह-**कृतकानित्यत्ववदिति,** शब्दो हि स्वोत्तरभाविशब्द-प्रागभावरूपः, स्वपूर्वोत्पन्नशब्दप्रध्वंसरूपः, यद्वा शब्दादिकार्यमभूत्वा भवति, अतः प्रागभावात्मकम्, भूत्वा च नावतिष्ठतेऽतः प्रध्वंसाभावरूपः अभूत्वा भवन् कृतक उच्यते य एव भावः स एव भूत्वाऽभवन्ननित्य उच्यते परस्पराश्रितत्वाच्चाधाराधेयतया परस्परं प्रधानोपसर्जनभावेन नियतत्वात् कृतकत्वानित्यत्वे साधनसाध्यधर्मभावं भजेते, न तु कुण्ड एवाधारः बदरमेवाधेयमित्याधारा-धेयभावेनेति भावः । दार्ष्टान्तिकमाह-**तथेहेति,** प्रदेशेन्धनादिर्भावः एकोऽग्निर्धूमश्च, अग्निमत्प्रदेश एव च धूमवान् भवति तस्मात्तस्यैवाग्निविशिष्टस्य धूमविशिष्टत्वेन साध्यत्वात् साधनत्वाच्च स्वयमात्मनैवात्मनः प्रधानोपसर्जनभावेन विवक्षाया लिङ्गित्व-लिङ्गत्वाधारत्वमाधेयत्वञ्च परस्पराश्रितत्वादिति भावः । **अनुमान इति,** अनुमाने हि साध्यं साधनं च समानश्रेणिकं दृश्यते न त्वाधाराधेयभावेन, किन्तु तयोरेकस्मिन् लिङ्गिनि प्रदेश एवाधाराधेयभाव इति भावः । उक्तं न्यायं दृष्टान्त उपोद्बलयतीत्याह-**एवञ्च सपक्ष इति ।** व्याचष्टे-**एवमेव चेति,** प्रतिबन्धप्रसाधकप्रमाणविषयसाध्यसाधनधर्माधिकरणीभूतो धर्मी साधर्म्य-दृष्टान्तो यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं वर्तते, तत्र हि यो यो धूमवान् यत्र यत्र वा धूम इति प्रत्यक्षादिप्रसिद्धसाधनधर्म-

---

१ सि. क्ष. डा. डे. निर्दिष्टानिर्दिष्ट० । २ सि. क्ष. डा. डे. तथाभा० । ३ सि. क्ष. सपक्षेत्यादि ।

न्यायशास्त्रे च, तद्यथा–यत्र धूमस्तत्राग्निः, यत्कृतकं तदनित्यमिति सपक्षे साध्यसाधनधर्मयोरग्निधूमयोः कृतकानित्यत्वयोश्च तद्वति देशान्तरे वस्त्वन्तरे वा घटादौ सहभावदर्शनात् समन्वयवृत्त्या साधर्म्यदृष्टान्त उच्यते, कस्मात् ? तथाप्रत्यक्षसम्बन्धित्वविवक्षया हेतोः प्रसिद्धस्य सा[धन]धर्मत्वेनाप्रसिद्धस्य च साध्यधर्मत्वेन विवक्षितत्वादित्यर्थः, यत्पुनरत्राशङ्क्यते त्वया लिङ्गस्य लिङ्गिनो वा लिङ्गित्वं[लिङ्गत्वञ्च] प्रसक्तमिति, एतस्या आशङ्काया अनुपपत्तिरेव, प्रसिद्धस्य धर्मस्य साधनत्वात् अप्रसिद्धस्य साध्यत्वात् कुतो लिङ्गलिङ्गिव्यतिकरदोषाशङ्का, लिङ्ग्यैकदोषाशङ्कानुपपत्तिरेवेत्यर्थः, धर्मिण एवैकस्य प्रदेशशब्दवाच्यस्य लिङ्गत्वाल्लिङ्गित्वाच्च, लिङ्ग्यैकदेशत्वाद्वा लिङ्गिनो धर्मस्यैव लिङ्गं लिङ्गी वेति कृत्वा नाग्निर्लिङ्गी न धूमो लिङ्गम्, तथा कृतकानित्यत्वे, तस्मादलिङ्गता धूमस्यापि नालिङ्गित्वादेव, अन्यालिङ्गित्वाच्चाग्ने[रलिङ्गिता]नालिङ्गत्वादेव [अन्यालिङ्गत्वाच्च]तस्मात् प्रत्यक्षेतरसम्बन्धित्वविवक्षितत्वान्न सङ्कीर्येयाता लिङ्गलिङ्गिनौ, अतः प्रसिद्ध-धर्मलिङ्गद्वारेणाप्रसिद्धधर्मलिङ्गिद्वारेण चैकस्यैव साधनत्वात् साध्यत्वाच्च व्यवस्थितमेव लिङ्गलिङ्गित्वमिति ।

**यत्पुनरिदं लिङ्गलिङ्ग्यैकरूपापादनं सम्बन्धिना द्वितीयसम्बन्धिरूपेण भवितव्यमिति, एषोऽन्यायः, प्रत्यक्षाप्रत्यक्षत्वविशेषदर्शनात्, न हि चैत्राश्वादिसम्बन्धिनां प्रत्यक्षाप्रत्यक्षाणां नियमोऽस्त्येकः प्रत्यक्ष इति द्वितीयेनापि प्रत्यक्षेण भवितव्यञ्चेति, तथा संयोगित्वसाध्यसाधकत्व ·· · ··· ················ ···यथैकः संयोगी तथा द्वितीय इति, अत एव चैवं वक्तुमयुक्तं यथा त्वया विश्रब्धमुच्यते–यथा हि सत्यपि द्विगतत्व इत्यादि यावत्तद्वदिह न भवतीति तन्न घटत इति ब्रूमः–ननु तद्वदेवेह संयोगिनोरपि लिङ्गलिङ्गिनोः, संयोगित्वात्. स्थाण्वादिसंयोगिवत्, यथा हि स्थाणुश्येनयोः संयोगः सकर्माकर्मकत्वाभ्यामतुल्यः तथा मल्लश्यङ्कुलाकाशादिसंयोगसंयोगिनाम् ।**

(**यत्पुनरिति**) यत्पुनरिदं सम्बन्धवादिनं प्रतीत्यापि यदेतल्लिङ्गलिङ्ग्यैकरूपापादनं, एषोऽन्यायः, कोऽयं ? नियमः [एक]सम्बन्धिना द्वितीयेन सम्बन्धिरूपेण भवितव्यमिति,–नैष नियमोऽस्ति, प्रत्यक्षाप्रत्य-

तत्रमुपदर्श्य साध्यधर्मेत्वना प्रदर्श्यते प्रधानोपसर्जनभावेन, संयोगिवत्परम्पराश्रनाधारधेयभावेन चेति भावः । तद्वति देशान्तरे महानसादौ, इदं यत्र धूम तत्राग्निरित्यस्य निदर्शनम्, वस्त्वन्तरे वा घटादावित्ति यत्कृतक तदनित्यमित्यस्य । कस्मात् साधर्म्य-दृष्टान्त इत्यत्राह–**तथा प्रत्यक्षेति** । लिङ्गलिङ्गिनो संयोगिवद्भूतो संयोगस्य द्विनिष्ठत्वाल्लिङ्गधर्मेण लिङ्गिनापि भवितव्यमिति यदाशङ्कनं तत्प्रसिद्धधर्मस्य लिङ्गत्वादप्रसिद्धधर्मस्य लिङ्गित्वाच्च न युक्तमित्याह **यत्पुनरत्रेति** । लिङ्ग्यैकदेशत्वशङ्कापि न, प्रदेशस्यैवैकस्य लिङ्गत्वाल्लिङ्गित्वाच्चेत्याह–**लिङ्ग्यैकेति** । इदमेव स्फुटीकरोति । **लिङ्ग्यैकदेशत्वाद्वेति**, लिङ्गिनो देशस्य ये धर्माः पर्वतत्वादयस्तेषां यथान्यलिङ्गत्वं लिङ्गित्वं वा तथा लिङ्गिधर्मयोर्धूमाग्न्योर्न लिङ्गलिङ्गिभावः, एवं कृतकत्वानित्यत्वयोरपि, तथा च धूमस्याप्यलिङ्गता, अलिङ्गित्वादन्यालिङ्गित्वाच्च, अग्नेरप्यलिङ्गिता, अलिङ्गत्वादन्यालिङ्गत्वाच्चेति भावः । एकस्य धर्मिण एव लिङ्गत्वे लिङ्गित्वे च सङ्करः स्यादित्यत्राह–**प्रत्यक्षेतरेति,** प्रत्यक्षसम्बन्धित्वविवक्षया लिङ्गत्वमितरसम्बन्धित्वविवक्षया चैकस्यैव प्रदेशस्य लिङ्गित्वमिति न सङ्करः इति भावः । लिङ्गलिङ्गिभावाव्यवस्थां निरस्यति–**अत इति** । साध्यसाधनयोः साहचर्यादिसम्बन्धिवादी मन्यते यदेकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति न्यायमवलम्ब्यैकसम्बन्धिना द्वितीयसम्बन्धिरूपेण भवितव्यमिति लिङ्गलिङ्गिनोरेकरूपतामापादयति तदपि न न्याय्यमित्याह–**यत्पुनरिदमिति** । व्याचष्टे–**यदिति**। सपक्षे दर्शनाद्विपक्षेऽदर्शनात् पक्षे एकदर्शने तत्सम्बन्धिना पक्षेणापरसम्बन्धिरूपेण भवितव्यमिति पूर्वपक्षाभिप्रायः । तन्मतं निराचष्टे–**नैष नियमोऽस्तीति** । हेतुमाह–

**१ सि. क्ष. दृष्टान्तच्यते । × × क्ष ।**

श्रत्वविशेषदर्शनात् धूमाग्न्यादिषु, तद्दर्शयति-न हि चैत्राश्वेत्यादि, स्वस्वाम्यादि सप्तविधसम्बन्धेषु चैत्राश्वादि-सम्बन्धिनां प्रत्यक्षाप्रत्यक्षाणां नहि नियमोऽस्ति एकः प्रत्यक्ष इति द्वितीयेनापि प्रत्यक्षेण भवितव्यश्चेति, तथा संयोगित्वसाध्यसाधकत्वेत्यादि गतार्थे यथासंख्यं निदर्शने यावद्यथैकः संयोगी तथा द्वितीय इति, न हीति वर्त्तते, उक्तादेव न्यायादयुक्तमेवं भवितुम्, अत एव चैवं वक्तुमयुक्तं यथा त्वया यत एवं विश्रब्धमुच्यते गुणदोषविचारणनिरपेक्षेण निःशङ्केन, कथमयुक्तमिति चेदिदं तद्दर्श्यतेऽस्माभिः यथा हि सत्यपि द्विगतत्व इत्यादि यावत् तद्वदिह न भवतीति, संयोगिनोस्तुल्य आधाराधेययोरिव न भवतीति, तन्न घटत इति, तत्र वयं तत्र घटत इति ब्रूमः, तद्यथा ननु तद्वदेवेह-आधाराधेयवदेव संयोगिनोरपि लिङ्गलिङ्गिनोर्धूमाग्न्योः न यथैकस्य प्रत्यक्षस्य संयोगस्तथा द्वितीयस्याप्रत्यक्षस्येति पक्षः, संयोगित्वादिति हेतुः, स्थाण्वादिसंयोगिवदिति दृष्टान्तः, यथा हि स्थाणुश्येनयोः संयोगिनोः स्थाणोरकर्मणः श्येनस्य सकर्मणश्च संयोगः सकर्माकर्मकत्वाभ्यामतुल्यः तथा मल्लद्वयकुल्लाकाशादिसंयोगसंयोगिनाम्, तथा चैत्राश्वादीनामप्यत्यन्तप्रियवाहनादित्वाद्युपलक्षितत्वे प्रत्यक्षाप्रत्यक्षादित्वेनैव विशेष इति ।

**यत्पूर्क्तं स्वत्वादिप्रत्यक्षत्वात् द्वितीयस्य स्वस्य स्वामिनो वा तेन सहैवावगतत्वात् अन्यापेक्षत्वाच्च सम्बन्धस्य शेषसिद्ध्यर्थं स्मृत्यानर्थक्यमितितदयुक्तमुक्तम्, अथान्यथा मन्येथास्तन्न तस्य प्रकारस्यानुक्तत्वात्, स्वस्वाम्यादिभावेन सम्बन्धादिति वचनादिति ।**

**यत्पूर्क्तमित्यादि** सम्बन्धवादिनमेव प्रति अन्यापोहिकेन पर्यनुयुज्य यदुक्तं दोषयुक्तं यदि स्वस्वा-

---

**प्रत्यक्षेति,** एकसम्बन्धिनो धूमस्य प्रत्यक्षेऽप्यपरसम्बन्धिनोऽग्नेरप्रत्यक्षात् तन्नियमो नास्तीति भावः । सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानमिति साङ्ख्यानामनुमानलक्षणम्, तत्र सप्तविधसम्बन्धस्तैर्विवक्षितः, एकस्मात् प्रत्यक्षात् अविनाभाविलिङ्गप्रत्यक्षादपरस्य लिङ्गिनः सिद्धिरिति तदर्थः, नासौ नियमो युज्यत इति दर्शयति-**स्वस्वाम्यादीति,** स्वस्वाम्यादिसप्तविधसम्बन्धेन सम्बन्धिनोर्नायं नियमोऽस्ति, न ह्यप्रतिबद्धात्मना चैत्राश्वादीनां क्वचित्सहदर्शनेऽपि सर्वत्रैकस्य प्रत्यक्षादपरेणापि प्रत्यक्षेण भवितव्यमित्यस्ति नियमः, एवं स्वस्वामिभावसम्बन्धाभिन्नेषु सम्बन्धेष्वपि नियमव्यभिचारो भाव्यः । तथैवाह-**तथा संयोगित्वेति ।** एवञ्च यथा हि सत्यपि द्विगतत्वे सम्बन्धस्य न कदाचिदाधार आधेयधर्मो भवति, नाप्याधेय आधारधर्मो, तथा न कदाचिल्लिङ्गं लिङ्गि भवति, लिङ्गि च लिङ्गम्, संयोगी तु यथैकस्तथा द्वितीय इति न तद्वदिहेति यत्त्वया निःशङ्कमुक्तं तन्न युज्यत इत्याह-**अत एव चैवमिति ।** तदीयाभिप्रायमेव दर्शयति-**संयोगिनोरिति,** व्याप्तिलक्षणः सम्बन्धः संयोगिनोस्तुल्यो न भवति, किन्त्वाधाराधेययोरिव भवतीति भावः । तन्निराकरोति-**तत्र वयमिति,** आधाराधेयभावलक्षणः सम्बन्धो द्विष्ठोऽपि नैकरूपया वृत्त्या द्वयोर्वर्तते, न हि यादृशी व्यापकधर्मे वृत्तिस्तादृश्येव व्याप्यधर्मे, संयोगस्य तूभयत्राविशेषादेष प्रसङ्गः स्यादिति न घटते संयोगोऽपि नैकरूपेण द्वयोर्वर्तते, एकत्र प्रत्यक्षसम्बन्धी, अपरत्र त्वप्रत्यक्षसम्बन्धीति भावः । आधाराधेयभावसाम्यमेवानुमानतो दर्शयति-**न यथैकस्येति** एकस्य साधनादेः प्रत्यक्षस्येत्यर्थः । हेतुं दृष्टान्ते घटयति-**यथा हीति ।** स्थाणुश्येनपक्षिणोः संयोगोऽन्यतरकर्मजन्यः, श्येनकर्मणा हि श्येनस्याकर्मणा स्थाणुना संयोगो भवति, अतः तत्संयोगो नोभयत्र तुल्यः, सकर्माकर्मगतत्वात्, सकर्मवृत्तिसंयोगवान् श्येनः, अकर्मवृत्तिसंयोगवान् स्थाणुरिति नोभयत्राविशिष्टः संयोगः, एवमुभयकर्मजसंयोगसंयोगिनोर्मल्लयोर्द्वयकुल्ययोरन्यतरकर्मजन्यसंयोगसंयोगिनोर्घटाकाशसंयोगिनोर्नैकविधत्वमूह्यमिति भावः । एवं चैत्राश्वादावपि चैत्रः प्रत्यक्षः स्वामी अश्वः तस्यात्यन्तप्रियभूतो वाहनरूपः स्वत्ववानित्यसमानता विशेषेत्याह-**तथेति,** प्रत्यक्षाप्रत्यक्षत्वादिनेवेत्यत्रादिना स्वस्वामिभावादिविशेषो ग्राह्यः । सम्बन्धवादिनं प्रति बौद्धेनोक्तं दोषं दूषयितुं तदुक्तिमुपन्यस्यति-**यत्पूर्क्तमिति ।** तदुक्तिं विशदीकरोति-**सम्बन्धवादिन-**

---

१ सि. क्ष. छा. घटदिति । २ सि. क्ष. डे. छा. यत्पूर्णमित्यादि ।

मिभावेन प्रत्यक्षतः सम्बन्ध्येकः ततो द्वितीयस्य स्वस्य स्वामिनो वा तेन सह[वा]धगतत्वात् अन्यापेक्षत्वाच्च सम्बन्धस्य शेषसिद्ध्यर्थं स्मृत्यानर्थक्यम्, दृश्यते च स्मृतिबलेन शेषसिद्धिः, तस्मात् स्वत्वादिप्रत्यक्षात्[इति] अयुक्तमुक्तम्, अथान्यथा—अथ मा भूदेष दोष इति स्वस्वामित्वादिभ्योऽन्येन केनचित्प्रकारेण प्रत्यक्षः सम्बन्ध्येकः, तत्सम्बन्धस्मरणात् अनुमानमिति मन्येथाः, तन्न भवति, तस्य प्रकारस्यानुक्तत्वात् 'स्वस्वाम्यादिभावेन सम्बन्धात्' [ ] इति वचनात्, स्वस्वामिभावेन वा प्रकृतिविकारभावेन वा कार्यकारणभावेन वा निमित्तनैमित्तिकभावेन वा मात्रामात्रिकभावेन वा वध्यघातकभावेन वा [सहचारिभावेन वा] कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षो भवति, तेभ्योऽतिरिक्तस्यावचनादेतेषामेव वचनादिति ।

एतस्मिन् परोक्तदोषजाते परिहारं ब्रूमः—

**अत्र ब्रूमः, न किञ्चिदत्र नोक्तम्, उक्तभेदात् सम्बन्धादनुमानम्, तच्च तत्सम्बन्धिप्रत्यक्षात् 'एकस्मात् प्रत्यक्षात्' ( ) इति वचनात् तेनैव प्रकारान्तरेणानुमानावतरणात्, द्वयोस्तु सम्बन्धिनोर्विशिष्टयोरुपलब्धसम्बन्ध्यन्यतरप्रत्यक्षोत्तरकालं यत्रायं प्रत्यक्षोऽश्वश्चैत्रो वा तत्रेतरोऽपीति या उपलब्धसहचरसम्बन्धानुसारिणी स्मृतिः किमित्यनर्थिका स्यात्? अग्न्यपेक्षधूमवत्, एवञ्च कृत्वोक्तं 'कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्षः......... अविशिष्टस्याग्नेरस्तित्वं प्रतिपद्यते' ( ) इति ।**

(**अत्रेति**) न किञ्चिदत्र नोक्तम्, वक्तव्यमशेषमुक्तमित्यभिप्रायः, यस्मादुक्तभेदात् सम्बन्धादनुमानम्, तच्च तत्सम्बन्धिप्रत्यक्षात्, 'एकस्मात् प्रत्यक्षात्' ( ) ति वचनात् तेनैव प्रकारेणानुमानावतरणात्, तद्व्याचष्टे द्वयोस्तु सम्बन्धिनोरित्यादि यावदग्न्यपेक्षधूमवत्—यथा धूमः प्रत्यक्ष एको बहलवर्तुलो-

**मचेति.** सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वात् स्वस्वामिभावादिसम्बन्धेन सम्बन्धिन एकस्य प्रत्यक्षे तदन्येनापि सम्बन्धिना प्रत्यक्षेण भवितव्यमित्येकस्यावगतत्वे सत्यपरोऽप्यवगत एव, अन्यथा सम्बन्धस्याप्रत्यक्षताप्रसङ्गः, एवञ्चापरस्य सिद्धये तत्स्मृतिर्या कल्प्यते सा व्यर्था, साध्यधर्मिणि सन्तं साधनधर्ममुपलब्धवतः तस्य साधनधर्मस्य साध्यधर्मेण प्रमाणेन प्रतिबन्धनिश्चयबलात् पूर्वमवगतस्याविनाभावस्य स्मरणे सति साध्यमेऽत्रैति प्रतीतिर्भवति, तस्मात् सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानमित्ययुक्तमिति भावः । **अन्यापेक्षत्वाच्चेति,** उभयसम्बन्धिप्रत्यक्षजन्यप्रत्यक्षविषयत्वात् सम्बन्धस्य पुनस्तत्स्मृतिः शेषसिद्ध्यर्था व्यर्था, शेषस्य प्रागेवावगतत्वादिति भावः । स्मृत्या च शेषसिद्धिरनुभूतेत्याह—**दृश्यते चेति ।** स्वस्वामित्वादिप्रकारेण चैत्राश्वादेरन्यतरस्याप्रत्यक्षत्वेऽपि प्रकारान्तरेण तत्प्रत्यक्षे सति तत्र तत्सम्बन्धस्मरणादन्यतरप्रतिपत्तिर्भविष्यतीत्याशङ्कते—**अथान्यथेति ।** स्वस्वाम्यादिभावेन सम्बन्धात् प्रत्यक्षादेकस्माच्छेषसिद्धिरित्येवोच्यते त्वया, सप्तसम्बन्धव्यतिरिक्तप्रकारो नोपदर्शितस्तस्मात्तथोक्तिरनुक्तिरेवेत्याशयेनोत्तरयति—**तन्न भवतीति ।** सप्तविधसम्बन्धानादर्शयति—**स्वस्वामिभावेन वेति ।** मात्रानिमित्तसंयोगिविरोधिसहचारिभिः । स्वस्वामिवध्यघाताद्यैः साङ्ख्यानां सप्तधाऽनुमा ॥ इत्यपि न्यायवार्तिकतात्पर्यटीकायां सप्तसम्बन्धा दृश्यन्ते मात्रामात्रिकभावः—परिच्छेद्यपरिच्छेदकभावः । तदेतं त्वया साङ्ख्यवादिमतं निराकृतं तत्रास्माभिस्तद्दोषजातं परिह्रियत इत्याचार्य आह—**अत्र ब्रूम इति ।** व्याकरोति—**न किञ्चिदिति,** तस्य प्रकारस्यानुक्तत्वादिति यदुच्यते त्वया तन्न युक्तम्, सर्वस्य तत्रोक्तत्वादिति भावः । तदेवाह—**उक्तभेदादिति ।** प्रोक्तसप्तप्रकारात् सम्बन्धादनुमानं भवति, तच्चानुमानमेकस्मात् सम्बन्धिनः प्रत्यक्षात्, अनेनैव प्रकारेणानुमानोदयादिति भावः । एतदेव विशदयति—**द्वयोस्त्विति ।** आदौ धूमोऽग्न्यविनाभाविभिर्बहलवर्तुलादिविशेषैर्विशिष्टः प्रत्यक्षीकृतः पुरोवर्तिनि देशविशेषेऽग्नि

१ सि. क्ष. छा. डे. प्रत्यक्षत्वात् । २ सि. क्ष. डे. छा. मात्रमातृकभावेन । ३ सि. क्ष. छा. डे. कश्चिदि० ।

ऋपाण्डुत्वादिविशेषेणाग्न्यविनाभाविरूपेण विशिष्टः प्रत्यासन्ने देशेऽग्निं गमयति, विशेषाणामविनाभाविनां गमकत्वात्, अश्वस्याभरणमर्दनप्रियत्वादिविशेषाश्चैत्राविनाभाविनः चैत्रं सम्बन्धादेव गमयन्ति तथा चैत्रस्य वा विशेषा आरोहकपोषकतद्गुणरक्तत्वादयश्चाविनाभाविनोऽश्वं गमयन्त्येवेत्युपलब्धसम्बन्ध्यन्यतर-प्रत्यक्षत्वोत्तरकालं यत्रायं प्रत्यक्षोऽश्वश्चैत्रो वा तत्रेतरोऽपीति या उपलब्ध[सह]चरसम्बन्धानुसारिणी स्मृतिः सा किमित्यनर्थिका स्यात्—नैवानर्थिकेत्यर्थः, किमिव ? अग्न्यपेक्षधूमवत्—यथाऽग्निजन्यात्मलाभो धूमः प्रोक्तविशेषयुक्तोऽग्नेः सम्बन्धस्मरणात् प्रत्यक्षोऽप्रत्यक्षस्य सम्बन्धिनोऽनुमानायालम्, अग्निर्वा प्रत्यक्षोऽप्रत्यक्षस्य, तत्परिणमद्भाविभूतदेशकालसम्बन्धी सम्बन्धिनः, एकैकस्य प्रत्यक्षत्वात्, 'सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानम्' (  ) इति वा पाठात् सम्बन्धिन एव प्रत्यक्षस्य सामानाधिकरण्योक्तेः, एवञ्च कृत्वोक्तमिति, अस्यैव लक्षणस्य भाष्यं ज्ञापकमाह—कश्चिदर्थः कस्यचिदिन्द्रियस्य प्रत्यक्ष इत्यादि, सामान्यवाचिना किंवृत्ते[न], यावदग्नेरस्तित्वं प्रतिपद्यत इति, अविशिष्टस्याविशिष्टश्चेति वा पाठः, अविशिष्टस्याप्रत्यक्षस्य अविशिष्टस्य दर्शनकालतुल्यस्यातद्देशवर्तिनो वेति शेषो गतार्थो ग्रन्थः ।

**यत्तु तेन प्रत्युच्यते परमतमाशङ्क्य लिङ्गग्रहे तुल्यमिति चेदिति तत्तथैव लिङ्गेऽपि, लिङ्गलिङ्गिनोरन्योऽन्यापेक्षत्वात्, अथ तत्र नेष्यते स्वस्वाम्यादिष्वपि मा भूदिति, अत्राहमप्येवं ब्रुवे लिङ्गिसम्बन्धित्वात् लिङ्गस्य उत्तरकालं स्मृतेरानर्थक्यं लिङ्गग्रहे हि लिङ्गी गृहीत इति, अथान्यथा ग्रहणं चेत्तन्नोक्तमिति लिङ्गेऽपि तथा, यत्तूच्यते मा मंस्था लिङ्गग्रहणतुल्यमिति लिङ्गित्वेऽस्ति विशेषः, न हि लिङ्गं सम्बन्धित्वमात्रेण गृह्यते, किं तर्हि? अनुमेयदेशस्थं धूमादित्वेन पूर्वं गृह्यते, पश्चात्तस्याग्न्यादिभिरविनाभावित्वं स्मर्यते इति सर्वत्र व्यापीति, तदिहापि तुल्यम्, अनुमेयस्थं अश्वत्वेन पूर्वं गृह्यते पश्चात्तस्य चैत्राविनाभावित्वं स्मर्यते न तद्देशसम्बन्धीति देशादिस्थाऽनग्निधूमवत् ।**

**यत्तु तेनेत्यादि,** स्वामिसम्ब[ि]न्धत्वात् स्वस्य स्वाम्यपेक्षमेव स्वत्वमित्युत्तरकालं स्मृते-

गमयति तद्विशेषाणामग्निप्रतिबद्धत्वेन तद्गमकत्वात्, एवं सम्बन्धिनश्चैत्राश्वयोरन्यतरस्याश्वस्य विशेषैश्चैत्राविनाभाविभिर्भरणमर्दनप्रियत्वादिभिश्चैत्रो गम्यते स्वस्वामिभावसम्बन्धप्रयुक्ताविनाभावादेव, एवमेव चैत्रस्य विशेषा आरोहकत्वपोषकत्वतद्गुणरक्तत्वादयो ऽश्वाविनाभाविनस्तस्मादेव सम्बन्धादश्वं गमयन्तीति संयोगस्वस्वामिभावादिसम्बन्धसम्बन्ध्यन्यतरधूमाश्वादिप्रत्यक्षोत्तरकालं समुपलब्धसम्बन्धानुसारिणी या स्मृतिर्यत्रायं चैत्रोऽश्वो वा प्रत्यक्षतो दृष्टस्तत्राश्वश्चैत्रो वाऽस्तीति सा निष्फला न भवतीति भावः । दृष्टान्तमादर्शयति **अग्न्यपेक्षधूमवदिति, प्रोक्तेति ।** बहलत्वतुलाक्षपाण्डुत्वादिविशेषयुक्त इत्यर्थः, सम्बन्धस्मरणात्—संयोगित्वस्य कार्यकारणभावस्य वा सम्बन्धस्य स्मरणादप्रत्यक्षस्याग्नेरनुमानाय क्षमो धूम इत्यर्थः । यदा चाग्निरेव प्रत्यक्षस्तदा सोऽप्रत्यक्षस्य धूमस्यानुमानायालमित्याह—**अग्निर्वेति,** स्वपरिणामभूतस्य भूतस्य भाविनो वा तद्देशवर्तिनो धूमस्य सम्बन्धिनो गमकः, एकस्य सम्बन्धिन एव प्रत्यक्षत्वात्, सम्बन्धादेकस्मात् प्रत्यक्षादित्यत्रैकस्मात् प्रत्यक्षादिति सामानाधिकरण्यात् प्रत्यक्षसम्बन्धिन एवैकस्य प्रतीतेः, न तु सम्बन्धशब्देनैकशब्दस्य प्रत्यक्षशब्दस्य वा सामानाधिकरण्यं प्रतीयत इति भावः । अत्रार्थे भाष्योक्तिमुपन्यस्यति- **कश्चिदर्थ इति,** कश्चिदर्थ इति सामान्येनोक्तं साध्यं वा साधनं वा ग्रहीतुं शक्यते, अग्निधूमयोर्मध्ये कश्चिदर्थ इत्यर्थः । **दर्शनेति ।** धूमदर्शनकालेऽन्यदेशवर्तिनोऽग्नेरस्तित्वं प्रतिपद्यत इति भावः । परमतोपरि बौद्धोक्तदूषणानि निराकरोति-**यत्तु तेनेति ।** व्याकरोति-**स्वामिसम्बन्धित्वादिति** स्वत्वं स्वामिसम्बन्ध्येव नान्यसम्बन्धि, अतः स्वत्वप्रत्यक्षात् स्वामित्वमप्य-

१ सि. क्ष. छा. डे. अश्वस्याहरण० । २ सि. क्ष. छा. डे. °मातावालामग्निर्वा । ३ सि. क्ष. छा. डे. परिणामद्भावि० ।

रानर्थक्यं प्राप्तमित्यत्र तेन अन्यापोहिकेन प्रत्युच्यते परमतमाशंक्य लिङ्गग्रहे तुल्यमिति चेत्–स्यान्मतं स्मृतेरानर्थक्यं स्वस्वाम्यादिसम्बन्धिप्रत्यक्षत्वादित्येतल्लिङ्गलिङ्गिनोः सम्बन्धाविशेषात् समानं दोषजातमिति, तत्तथैव यद्येष दोषः स्यात् स्वस्वाम्यादित्वे लिङ्गेऽपि स्यादेवायं लिङ्गलिङ्गिनोः अन्योन्यापेक्षत्वात्, अथ तत्र नेष्यते स्वस्वाम्यादिष्वपि मा भूदिति सुष्ठूच्यते, अहमप्येवं ब्रुवे,[1]×कस्मात्? लिङ्गिसम्बन्धित्वात् लिङ्गस्येत्यादि तत्तुल्यत्वप्रदर्शनं गतार्थं यावत् लिङ्गी गृहीत इति, अथान्यथा तन्नोक्तमिति×, [2]अथान्यथात्वमुद्घट्टयसि[स्व]स्वाम्यादित्वेनाग्रहणेऽन्यथा ग्रहणञ्चेत् त[3]न्नोक्तमिति, तथा वयमपि त्वामुद्घट्टयामोऽन्यथा लिङ्गे ग्रहणं स्वस्वाम्यादिष्वन्यथेति चेन्मन्यसे तन्नोक्तमिति, अत्र यत्तूच्यते त्वया मा मंस्था लिङ्गग्रहणतुल्यमिति, लिङ्गत्वेऽस्ति विशेषः, न तस्य सम्बन्धिना ग्रहणात्–नहि लिङ्गं सम्बन्धित्वमात्रेण गृह्यते, किं तर्हि? अनुमेयदेशस्थं धूमादित्वेन पूर्वं गृह्यते पश्चात्तस्याग्न्यादिभिरविनाभावित्वं स्मर्यते, आदिग्रहणात् शब्दस्थकृतकादित्वेन प्राग्ग्रहणं पश्चादनित्यत्वाविनाभावित्वेन स्मर्यत इति सर्वत्र व्यापीति, अत्रोच्यते तदिहापि तुल्यमित्यादि, तत्तुल्यत्वभाव[न]मनुमेयस्थमित्यादि यावन्न तद्देशसम्बन्धीति गतार्थम्, देशादिस्थानेऽग्निधूमवदिति दृष्टान्तः यथाग्निरभवन् धूमो देशादिस्थः प्राग् गृह्यते प्रत्यक्षे[णा]प्रत्यक्षाग्नेरन्यत्वात्, ततः पश्चादग्निरिहेत्यनुस्मर्यते, तथाश्वः स्वं चैत्रादन्यो गृह्यते ग्रामादिस्थः, ततः पश्चात्तत्रस्थः चैत्राविनाभावीति स्मर्यते इहाग्निरिति धूमसम्बन्ध्यग्निस्मरणवदिति तुल्यमिति।

यत्तूक्तमव्युत्पन्नस्य तद्वृतेरविनाभावित्वेन गृहीतस्वरूपस्य लिङ्गादेः कारणत्वम्, ज्ञाप-

व्यर्थमेवेति पश्चात् स्वाम्यपेक्षमेव स्वत्वमिति यत्स्मर्यते तद्व्यर्थमेवेत्यस्मिन् विषये परेणोक्तं पूर्वपक्षमन्यापोहिक उत्तरमाह–**लिङ्गग्रह इति,** परमतमिदम्, तद्व्याख्या–**स्यान्मतमिति,** यथा स्वस्वामिनो सम्बन्धित्वादेकस्य प्रत्यक्षत्वेऽपरमपि प्रत्यक्षमेवेति पश्चात्तत्स्मरणं व्यर्थमुच्यते तथैव लिङ्गलिङ्गिनोः सम्बन्धित्वादेकस्य प्रत्यक्षत्वेऽपरमपि प्रत्यक्षमेवेति पश्चात्तत्स्मरणं व्यर्थमेवेति समानं दोषजातमिति भावः। बौद्धस्योत्तरमाह **तत्तथैवेति**। इष्टापत्तिं करोति, स्वस्वाम्यादित्ववत् लिङ्गलिङ्गिनोरप्यन्योन्यापेक्षत्वेनैष दोषः स्यादेवेति भावः। लिङ्गलिङ्गिनोरेष दोषो यदि नेष्यते स्वस्वाम्यादिष्वप्ययं दोषो न स्यादित्याह–**अथ तत्रेति**। अत्राचार्य आह–**अहमपीति**। लिङ्गं हि लिङ्गिसम्बन्धि, अतो लिङ्गप्रत्यक्षे लिङ्गी गृहीत एवेति उत्तरकालं लिङ्गिस्मरणं व्यर्थमेवेत्यहमपि ब्रुवे इत्यर्थः। यदि त्वं स्वस्वामिभावादिभ्योऽन्येन केनचित्प्रकारेण स्वत्वस्य प्रत्यक्षता ततः स्मरणादनुमानमिति परेणोक्तं तथाविधप्रकारस्यावचनात्तन्न युक्तमिति निराकरोषि तर्ह्यहमपि लिङ्गेऽन्यथा ग्रहणं स्वस्वाम्यादिष्वन्यथेति तवोत्तरमपि तथाविधप्रकारस्यानुक्तेस्तन्न युक्तमिति प्रतिक्षिपामीत्याह–**अथान्यथेति**। तत्रान्यापोहिको लिङ्गग्रहणे विशेषमादर्शयति–**अत्र यत्तूच्यत इति**। विशेषं दर्शयति–**लिङ्गत्वेऽस्तीति,** लिङ्गं सम्बन्धित्वमात्रेण न गृह्यते प्रथममनुमेयदेशस्थं धूमादित्वेन गृह्यते पश्चाल्लिङ्गिसम्बन्धं तद्गतं प्राक् प्रतिपन्नं स्मर्यते एवं कृतकत्वादिरपि, शब्दनिष्ठकृतकत्वेन ग्रहणानन्तरं तन्निष्ठानित्यत्वाविनाभावसम्बन्धस्य प्रागनुभूतस्य स्मरणम्, एवं सर्वत्रेति लिङ्गग्रहणे विशेषात् न साम्यमिति भावः। विशेषोऽयं चैत्राश्वादावपि समान इत्युत्तरयति–**तदिहापीति**। अनुमेयदेशगताश्वत्वेन प्रथमं स्वो गृह्यते पश्चादनुमेयदेशस्थोऽश्वोऽनुस्मर्यते चैत्राविनाभावीति, यथा पूर्वं अग्निभिन्नो धूमः प्रत्यक्षेण गृह्यते ततश्च धूममुपलभ्येहाग्निरिति स्मर्यते तथेति भावः। स्वस्वाम्यादिभावेन सम्बन्धात् प्रत्यक्षाच्छेषसिद्धिरनुमानमिति लक्षणस्य यस्त्वया दोष उक्तस्तत्र वयं ब्रूम इत्याह–**यत्तूक्तमिति**। तन्मतनिराकरणाय प्रथमं तन्मतं दर्शयति–

१ सि. क्ष. छा. डे. अत्र। ×× छा. डे.। २ सि. क्ष. छा. यथान्यास्व०। ३ सि. क्ष. छा. डे. चेत्तन्नोक्त०।

**कत्वात्, नोत्पादकबीजादिवदिति, एतदप्ययुक्तम्, अविनाभावित्वस्य सहचारिभावसम्बन्धत्वात्, तस्मादपि यो निश्चयः सोऽपि स्वस्वाम्याद्यर्थव्युत्पन्नानामेव, तदादित्वात् सहचरितभावस्य ।**

**यत्तूक्तमित्यादि,** स्वस्वाम्यादिसम्बन्धेन सम्बन्धाच्छेषसिद्धिरनुमानमित्यस्य लक्षणस्य दोषः तेनोक्तः, अत्र ब्रूमः, अयुक्तमिदम्, कस्मात् ? अव्युत्पन्नस्य तद्गतेरित्यादि तन्मतप्रत्युच्चारणं यावत् ज्ञापकत्वादिति, स्वस्वाम्यादिसम्बन्धानभिज्ञा अपि धूमादग्निमविनाभावसम्बन्धाभिज्ञा प्रतियन्तो दृश्यन्ते, स च मा भूदगृहीतसम्बन्धान्निश्चयः, ज्ञानकारणत्वं हि ज्ञापकस्य हेतोर्लिङ्गादेर्गृहीतस्वरूपस्य, नोत्पादकबीजादिवदिति, एतदयुक्तम्, कस्मात् ? अविनाभावित्वस्य सहचारिभावसम्बन्धत्वात्-न विना भवति सह भवति सह चरतीत्यर्थः, तस्मादपि सहचरितभावसम्बन्धात् यो निश्चयः सोऽपि [स्व]स्वाम्याद्यर्थव्युत्पन्नानामेव भवति, नाव्युत्पन्नानाम्, कस्मात् ? तदादित्वात्-[स्व]स्वाम्यादित्वा[त्]सहचरितभावस्य, समानां सम्बन्धानामन्यतमत्वात्तस्यापि, तत्सहचारिभावोऽविनाभावो गृह्यमाण एवानुमानकारणं ज्ञातम्, ज्ञानोत्पत्तिहेतुत्वात् ज्ञापकस्य, तस्मादविनाभावसम्बन्धज्ञानं स्वस्वाम्याद्यन्तःपाति व्युत्पन्नानामेव, नाव्युत्पन्नानामिति ।

अथवा विनाप्यविनाभावित्वेन स्वस्वामित्वादिव्युत्पत्तेरनुमेत्यत आह—

**अविनाभावगम्यातिरिक्तार्थविषयत्वेन तु स्वस्वाम्यादिसम्बन्धव्युत्पन्नबुद्धेरेवानुमानं दृश्यते यथा काकभवनव्यापितस्वीकृततत्प्रसवकालतत्कृतनीडप्रसवोर्णभेदविवृद्धिपोषणसहचरणपृष्ठतो गमनादीनि धर्मान्तराणि व्यापित्वाविनाभाविरूपोपेततायामपि न कारणानि कोकिलत्वज्ञानस्य आ स्वस्वामिभावाप्रत्यवगमनाऽऽदरात्, पश्चात् तत्प्रतिपत्तिः स्वस्वामिभावादिसम्बन्धेन परित्यज्याविनाभाव्यमिमतान् तत्तद्धर्मान्, लोके प्रतिपत्तारो वक्तारश्च भवन्ति कोकिलशावकोऽयं न काकशावकः, स्वभाषासमन्वितत्वात् विशिष्टमाधुर्योपेतस्वरत्वादितरकोकिलवदित्येवं स्वस्वाम्यादिसम्बन्धा अनुमापकाः, अनुमेयव्यक्तिकाले तथोपलभ्यमानत्वात्, तत्प्रसिद्धलिङ्गवत् ।**

---

**अव्युत्पन्नस्येति ।** स्वस्वाम्यादिसम्बन्धपरिज्ञानरहितस्य पुंसो लिङ्गलिङ्गिनोरविनाभावसम्बन्धज्ञानाल्लिङ्गिगतेः सा च लिङ्गिगतिरविनाभावनिश्चयव्यतिरेकेण मा भूदिति तन्निश्चयविशिष्टहेतोरेव कारणत्वं युक्तम् । गृहीतस्वरूपं हि लिङ्गमनुमापकं भवति न तु स्वरूपसल्लिङ्गम् । अङ्कुरोत्पादकबीजादिवत्, लिङ्गस्य च स्वरूपमविनाभाव एव, तस्मान्न स्वस्वाम्यादिसम्बन्धेन शेषसिद्धिर्व्यापकलक्षणत्वादिति भावः । ज्ञानकारणं ज्ञानमेव ज्ञायमानं वा, न स्वरूपसदित्याशयेनाह-**ज्ञानकारणत्वं हीति,** लिङ्गिज्ञानकारणत्वं हीत्यर्थः । अयुक्ततायां हेतुमाह-**अविनाभावित्वस्येति,** अव्युत्पन्नस्य तद्गतेरित्यसिद्धम् । अविनाभावसम्बन्धज्ञानं विना तद्गत्यभावात्, अविनाभावश्च सहचारिरूपः, साहचर्यञ्च स्वस्वाम्यादिसप्तान्यतमसम्बन्धेन, तथा चाविनाभावज्ञानस्वस्वाम्यादिसम्बन्धरूपम्, अविनाभावस्य च गृह्यमाणस्यैव ज्ञानकारणत्वेन तज्ज्ञाने तज्ज्ञानस्यावश्यम्भावात् स्वस्वाम्यादिव्युत्पन्नानामेव तद्गतिः न त्वव्युत्पन्नानामिति भावः । सहचारिभावसम्बन्धाद्यो निश्चयः सोऽपि स्वस्वाम्यादिसम्बन्धज्ञानवतामेव भवति, सहचारिभावस्य स्वस्वाम्यादिसम्बन्धमूलत्वादित्याह-**तस्मादपीति ।** सहचारिभावोऽपि गृह्यमाण एव कारणं न स्वरूपसन्, ज्ञानोत्पत्तिहेतोर्ज्ञायमानत्वावश्यकत्वादित्याह-**तत्सहचारिभाव इति ।** अविनाभावित्वमन्तरेणापि स्वस्वाम्यादिपरिज्ञानादनुमानमिति वर्णयति-**अविनाभावेति ।** अविनाभावेन गम्यो योऽर्थस्तद्व्यतिरिक्तार्थान् लोके प्रतिपत्तारो वक्तारश्च दृश्यन्ते, यथा कोकिलशावकोऽयं न काकशावकः,

**अविनाभावगम्यातिरिक्तार्थविषयत्वेन त्वित्यादि** यावदितरकोकिलवदिति, साधनेनोपसंहारोऽस्यार्थस्य, 'व्यापको यः स एवांशो ग्राह्यो व्याप्यस्तु सूचकः। अनेकधर्मणोर्नान्यो ग्राह्यग्राहकधर्मणोः ॥' (        ) इत्येतल्लक्षणवैपरीत्येन सहचारिभावादृतेऽपि स्वस्वाम्यादिसम्बन्धव्युत्पन्नबुद्धेरेवानुमानं दृश्यते, तद्यथा–काकभवनेत्यादि समासदण्डको व्यापकव्याप्यत्वाभ्यां सहचारिभावप्रदर्शनो[1] याव[त्] व्यापित्वाविनाभाविरूपोपेततायामपीति, काकजन्मव्यापीनि[2] तत्स्वीकृतस्तत्प्रसवकालस्तत्कृतनीडप्रसवोर्णभेदो विवृद्धिः काकेन काक्या च पोषणं वात्सल्येन, तस्य द्वितीयेन काकशावकेन सहचरणं काक्याः पृष्ठतो गमनमित्येतानि पूर्वपूर्वकाणि व्यापकानि साध्यानि, उत्तरोत्तराणि व्याप्यानि साधकाभिमतानि अविनाभावसम्बन्धीनि धर्मान्तराणि सन्त्यपि न कारणानि तानि कोकिलत्वज्ञानस्य यावत् आ कुतः? स्वस्वामिभावाप्रत्ययगमनादरात्[3]–यावत् स्वस्वामिभावसम्बन्धं नावैति तावत् कोकिलत्वाप्रतिपत्तेः, पश्चात्तत्प्रतिपत्तिः स्वस्वामि[भावादि]सम्बन्धेन भवति–तत उत्तरकालं कोकिलशावकोऽयं न काकशावक इति, परित्यज्याविनाभाव्यभिमतांस्तांस्तान् धर्मान् व्यापकान् व्याप्यांश्च, तथा लोके प्रतिपत्तारो वक्तारश्च भवन्ति कोकिलशावकोऽयमभिमतो यतः स्वभाषासमन्वितः, भाषासमन्वितत्वात् विशिष्टमाधुर्योपेतस्वरत्वादितरकोकिलवदिति, आदिग्रहणात् प्रकृतिविकारादिशेषसम्बन्धा अपि व्युत्पन्नानामेवानुमानकारणम्. अतोऽत्र साधनं संहतार्थमुच्यते एवं स्वस्वाम्यादिसम्बन्धा अनुमापका इत्थमुक्तन्यायेन, कस्मात्? अनुमेयव्यक्तिकाले तथोपलभ्यमानत्वात्–अनुमेयस्याप्तिकोकिलानित्यत्वार्थस्य व्यक्तिकाले तेनैव स्वस्वाम्यादिप्रकारेणोपलभ्यमानत्वात्, किमिव? तत्प्रसिद्धलिङ्गवत्[4] तेन प्रकारेण प्रसिद्ध धूमादिलिङ्गं तस्य सम्बन्धिनोऽनुमापकमग्न्यादेः स्वस्वाम्यादिप्रकारेणैव सम्बन्धात्, तथा कोकिलशावकः तज्जातीयानुकारिस्वरेणैवेति।

स्वभाषासमन्वितत्वात्, विशिष्टमाधुर्योपेतस्वरवत्त्वात्, इतरकोकिलवदिति साधनेन प्रदर्शयतीत्याह–**इतरकोकिलवदितीति।** अनेकधर्मविशिष्टयोर्ग्राह्यग्राहकधर्मयोर्मध्ये य एवांशो व्यापकः स एव ग्राह्यः, योऽशश्च व्याप्यः स ग्राहक इति व्यवस्था दृश्यते तद्वैपरीत्येन विनापि सहचारिभावेन स्वस्वाम्यादिसम्बन्धपरिज्ञानवतः पुरुषस्यानुमानं दृश्यत इत्याह–**व्यापक इति।** कोकिलशावकविषये धर्माणां व्याप्यव्यापकभावमादर्शयति–**काकभवनेत्यादीति,** काकभवनव्यापिनो धर्मा एते–तत्स्वीकृतिः, तत्प्रसवकालः, तत्कृतनीडप्रसवः, ऊर्णभेदलक्षणा विवृद्धिः, काकपोषणं, काकशावकान्तरसाहचर्यं, काक्यनुगमनमिति, एष्वपि पूर्वपूर्वधर्मा व्यापकाः साध्यभूताः, उत्तरोत्तरधर्मा व्याप्याः साधनभूता इति। परस्पराविनाभाविन एते धर्माः काकशावकत्वव्यापिनो न कोकिलत्वज्ञानहेतवः कोकिले सन्तोऽपि यावत् स्वस्वामिभावसम्बन्धस्य प्रतिपत्तिर्न भवतीति। वर्णयति–**अविनाभावसम्बन्धीनीति।** अवगते च स्वस्वामिभावसम्बन्धे पश्चादयं कोकिलशावको न काकशावक इत्यविनाभाविभूतान् पूर्वोदितान् विहाय धर्मान् प्रतिपद्यन्ते लोका इत्याह–**पश्चादिति।** प्रतिपत्तिस्वरूपमाह–**कोकिलशावकोऽयमिति।** हेतुमाह–**यत इति,** स्वस्य–कोकिलस्य या भाषा–माधुर्योपेतस्वरः तेन समन्वित इत्यर्थः। स्वस्वाम्यादिसम्बन्धेनेत्यादिपदविवक्षितमाह–**आदिग्रहणादिति।** फलितमर्थमनुमानेन दर्शयति–**एवमिति।** कोकिलशावकाद्यनुमित्युत्पत्तिकालेऽविनाभावव्यतिरेकेणापि स्वस्वाम्यादिसप्तविधसम्बन्धान्यतमप्रकारेणैव तदुपलब्धेरिति हेतुमाह–**अनुमेयेति।** दृष्टान्तमाह–**तत्प्रसिद्धेति,** तेन स्वस्वाम्यादिना प्रकारेण प्रसिद्धं यल्लिङ्गं धूमादि तद्वत् तद्धि स्वसम्बन्धिनोऽग्न्यादेर्यथा स्वस्वाम्यादिप्रकारेणैवानुमापकं तथा तज्जातीयस्वरवत्त्वमपि तथैव कोकिलशावकत्वमनुमापयति सन्तमप्यविनाभावसम्बन्धमुपेक्ष्येति भावः। सम्बन्धवादिनं प्रति अन्यापोहिकेनोक्तं

१ सि. क्ष. छा. डे. प्रदर्शने। २ सि. क्ष. डे छा. काकाजन्मध्यापीतितत्स्वी०। ३ सि. क्ष. छा. डे. °गमनादारात्। ४ सि. क्ष. छा. °लिङ्गवत्त्वेन तेन।

किञ्चान्यत्—

**यदप्युक्तं न चावश्यं स्वस्वाम्यादिसम्बन्धादनुमानं भवति, तदव्यभिचारार्थं विशेषाकांक्षितत्वात्, तथा च त एव हि विशेषा अनुमापकाः स्युः, न स्वस्वाम्यादिसम्बन्धः, सत्यपि तस्मिन्ननुमानाभावादित्येतदपि न, शेषसिद्धिवचनेनाव्यभिचारिविधिवृत्तेरुपात्तत्वात् ।**

**यदप्युक्तमित्यादि,** सम्बन्धवादिनो दोषवचनम्, न चावश्यमित्यादि प्रत्युच्चारणम्, एतदुक्तं भवति स्वस्वाम्यादिसम्बन्धादनुमानं भवति, तदव्यभिचारार्थं विशेषाकांक्षित्वात्, उपलब्धेऽपि स्वे स्वामिनि वाऽश्वे चैत्रे वा स्वतंत्रजीवादत्यन्ता विशेषा आकांक्ष्यन्ते, तेषामेवाव्यभिचारात्, त एव ह्यनुमापकाः स्युः, न स्वस्वाम्यादिसम्बन्धः, सत्यपि तस्मिन्ननुमानाभावात् व्यभिचारीति, एवं प्रत्युच्चार्याचार्य उत्तरमाह–एतदपि न, शेषसिद्धिवचनेनाव्यभिचारिविधिवृत्तेरुपात्तत्वात्–'सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानम्' इत्यस्मिन् स्वार्थानुमानलक्षणे शेषसिद्धिवचनेन विधिवृत्तेरव्यभिचारिण एवोपात्तत्वात्, तस्मादयमदोषः ।

तत्कथमिति भाव्यत इति चेदुच्यते—

**इदं हि सर्वाभासव्युदासेन सम्बन्धिनोऽभिव्यञ्जकम्, प्रत्यक्षादितरः शेषः सम्बन्धी अनुमेयानुमानाभासभेदैः प्रत्यक्षादिविरोधैरविरुद्धार्थः, पक्षो धर्मधर्मिसमुदायाख्यः परार्थानुमाने साध्याभिधानमिति वक्ष्यमाणो निर्दोष एव शेषसिद्धिवचनेन गृहीतः, यथायोगं तेन तेन सम्बन्धेन सम्बद्धात् प्रत्यक्षात् प्रत्यक्षवद्वा प्रसिद्धात् पक्षधर्मस्य सम्बन्धात् प्रागुपलब्धादनुस्मर्यमाणाच्छेषेण शेषस्य सिद्धिरिति शेषसिद्धिवचनादेव विरुद्धासाधारणधर्मव्युदासः, शेषाय शेषे वा प्रत्यक्षादेकस्मात् सम्बन्धादित्येतावता सिद्धेः सिद्धिवचनं सिद्धिरेव नासिद्धिरित्यवधारणादसिद्धिर्व्यभिचारिधर्मता मा भूदिति, तद्यथा-स्वाम्यसम्प्रदान .............अतिप्रियसुतवत् ।**

**इदं हि सर्वाभासव्युदासेनेत्यादि,** पक्षहेतुदृष्टान्ताभासाः सर्वे तेनैव सम्बन्धानुमानविधानेन व्युदस्यन्ते, प्रत्यक्षादितरः शेषः सम्बन्धी स्वा[म्या]दिना विशिष्यमाणो देशादि सम्बध्यते, अनुमेयानुमाना-

दोषं प्रतिक्षिपति-**यदप्युक्तमिति** । व्याचष्टे-**सम्बन्धवादिन इति** । तात्पर्यमाह-**एतदुक्तमिति,** स्वभूतेऽश्वे स्वामिभूतं च चैत्रे स्वस्वामिभावानापन्नस्वतंत्राश्वमैत्रादितोऽविलक्षणे यद्यनुमानानुमेयभावः स्यात्तर्हि स्वतंत्राश्व मैत्रादावपि स्यादविशेषात्, न हि चैत्राश्वयोः स्वस्वामिभूतयोरपि स्वतंत्राश्वमैत्रादित किञ्चिद्वैलक्षण्यमनुभूयते, अतस्तद्व्यावर्तनाय तत्र कश्चिद्विशेषमाकांक्ष्यते तर्हि स एव विशेषोऽनुमापकः स्यात्, किमन्तर्गडुना स्वस्वाम्यादिभावसम्बन्धेनागमकेन, विशेषाणामेव गमकत्वादव्यभिचारित्वादिति भावः । तन्निराचष्टे-**एतदपि नेति,** सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानमिति लक्षणे शेषसिद्धिपदेनाव्यभिचारिण एव विधानान्न दोष इति भावः । तत्कथमित्यत्राह-**इदं हीति** । व्याचष्टे-**पक्षहेत्विति,** पक्षाभासा हेत्वाभासा दृष्टान्ताभासाश्च सर्वे सम्बन्धानुमानविधानेन निराक्रियन्त इत्यर्थः । तदेवोपपादयति-**प्रत्यक्षादितर इति,** स्वस्वामिभावादिसम्बन्धसम्बन्धिनोर्मध्ये यः प्रत्यक्षः तस्मादन्यः सम्बन्धी शेष उच्यते स्वाम्यादिना विशिष्यमाणो देशादिः धर्मधर्मिसमुदायरूपः पक्षः प्रतिज्ञादोषैः प्रत्यक्षादिविरोधैरविरुद्धार्थः, यः उत्तरत्र परार्थानुमानेऽवयवप्रकरणे स्वरूपेणार्थपरिच्छेदकरूपवीतानुमानप्रयोगविषयप्रतिज्ञालक्षणे

१ सि. क्ष. डे. छा. नेनोत्पद्यन्ते । २ सि. क्ष. छा. डे. अनुमेयानु० ।

भासभेदैः प्रत्यक्षादिविरोधैरविरुद्धार्थः पक्षो धर्मधर्मिसमुदायाख्यः, उत्तरत्रावयवविधाने परार्थानुमाने [1]वीताख्ये साध्याभिधानमिति वक्ष्यमाणो निर्दोष एवानेन शेषसिद्धिवचनेन गृहीतः, यथायोगं स्वस्वामिनिमित्तनिमित्तिकादिषु तेन तेन सम्बन्धेन सम्बद्धात् [2]प्रत्यक्षादिति-प्रत्यक्षात धर्मादुपलब्धात्, प्रसिद्धादिति यावत्, तत्रैव [3]च यः प्रत्यक्षः स पक्षधर्मः, शेषोऽनुमेयः, कृतकत्वाद्यप्रत्यक्षत्वादव्यापीति चेन् अत आह–प्रत्यक्षवद्वा प्रत्यक्षवत् प्रत्यक्षः–प्रसिद्धः, तस्मात् प्रसिद्धत्वात् सम्बन्धी, पक्षधर्मोऽश्वः स्वं तस्य पक्षधर्मस्य सम्बन्धात् प्रागुपलब्धादनुस्मर्यमाणात् शेषेण शेषस्य[वा] चैत्रस्य सिद्धिरिति शेषसिद्धिवचनादेव विरुद्धासाधारणधर्मव्युदासः, यत्र यत्राश्वः स्वं तत्र तत्र देवदत्तः स्वामी[त्य]त्यन्तावियोगादिसम्बद्धान्वययुक्तत्वात्, सपक्षे वृत्तिः विपक्ष एव व्यावृत्तिः कुतः? शेषाय शेषे वा, प्रत्यक्षादेकस्मात् सम्बन्धात् इत्येनावता सिद्धे सिद्धिवचनं सिद्धिरेव नासिद्धिरित्यवधारणान प्रमेयत्वान्नित्य इति साधारणनैकान्तिकवदसिद्धिर्मा भूदिति, का पुनरसिद्धिः? व्यभिचारिधर्मता, तद्यथा–स्वाम्यसम्प्रदानेत्यादि यावदतिप्रियसुतवदिति, चैत्रान्यथात्वं मरणं शेषं गतार्थम् ।

**इत्थं हि व्यभिचारिविशेषव्यावर्तनेनापि स एव सम्बन्धी गमकः सम्बन्ध्यन्तरस्य, न ते विशेषा व्यावर्त्या विधेया वा गमकाः, तत्समर्थनार्थत्वात्, न हि वात्या प्रसङ्गव्यावर्तनेन धूमस्याव्यञ्जकत्वम्, अधूमता वा धूमतैव हि सती वह्निताया: सम्बन्धिनी सम्बन्धिन्या व्यञ्जिकेति शेषसिद्धिवचनान्निरस्तव्यभिचाराशङ्कं सम्बन्धानुमानमेव, त्वयापीष्यत एवैतत्**

साध्यनिर्देशः प्रतिज्ञेत्येवंरूपे साध्यपदग्राह्यः प्रज्ञापनीयधर्मविशिष्टो धर्मी सिद्धस्यानुपपद्यमानस्य च साध्यस्य निवर्तकः स शेषसिद्धिवचनेन गृहीत इति भावः । **प्रत्यक्षादीति,** प्रत्यक्षविरोध आगमविरोध. प्रसिद्धिविरोध इत्यादिविरोधैरित्यर्थः । स्वस्वाम्याद्यन्यतरसम्बन्धेन सम्बद्धात प्रत्यक्षाद्धर्मादित्युक्त्या स एव प्रत्यक्षभूतो धर्मः पक्षधर्मो भवति शेषस्त्वनुमेयो भवतीत्याह–**यथायोगमिति** । ननु शब्दोऽनित्यः कृतकत्वादित्यादौ पक्षधर्मतयाऽभिमतं कृतकत्वादि न प्रत्यक्षमिति तत्रैव च शब्दोऽनित्य इत्यनुमाने लक्षणमिदमव्याप्तमित्याह–**कृतकत्वादीति** । सम्बन्धादेकस्मात प्रत्यक्षादित्यत्र प्रत्यक्षपदेन प्रसिद्धत्वरूपोऽर्थो विवक्षितः, प्रसिद्धधर्मस्य प्रत्यक्षतुल्यत्वादित्युत्तरयति–**प्रत्यक्षवद्वेति** । प्रत्यक्ष इव प्रत्यक्षवत्, प्रत्यक्षमस्य प्रसिद्ध इति यावत्, तथा च कृतकत्वं प्रत्यक्षसदृशत्वेन प्रसिद्धत्वात् सम्बन्धि भवतीत्याह–**तस्मादिति** । एवञ्च तथाविधस्य पक्षधर्मस्य स्वत्वभूतस्याश्वादेर्यः प्रागुपलब्ध इदानीञ्च स्मर्यमाण. सम्बन्धस्तस्मात शेषस्य सिद्धिरनुमानम्, अत्र शेषस्य सिद्धिरित्युक्तत्वात् सम्बद्धयोर्यः शेषः नान्यो विरुद्धधर्मः तस्य सिद्धिरिति विरुद्धव्युदास, प्रागुपलब्धादनुस्मरणादित्युक्ते सपक्षवृत्तितावगमात् सपक्षव्यावृत्तधर्मस्यासाधारणस्य व्युदास इत्याशयेनाह–**पक्षधर्म इति** । हेतुमाह–**यत्र यत्रेति,** चैत्राश्वयोरत्यन्तमवियोगादिरूपो यः सम्बन्धस्तत्सम्बद्धत्वे सति अन्वयेन युक्तत्वात, अन्वयेन युक्तत्वं व्यभिचरितहेतुकेऽप्यस्तीत्यत्यन्ताऽवियोगादिसम्बद्धेत्युक्तं तेन सपक्षवृत्तित्वं विपक्षव्यावृत्तिश्च लभ्यतेऽत एव विरुद्धस्यासाधारणस्य च व्युदास इति भाव. । सिद्धिपदप्रयोजनमाह–**प्रत्यक्षादिति** । नित्यः प्रमेयत्वादिति व्यभिचरितहेतोर्यथा न साध्यसिद्धिस्तथा न भवति किन्तु सिद्धिरेव भवतीति प्रदर्शनाय सिद्धिपदम्, तथा च व्यभिचारिधर्मव्युदासः इति भावः । एवञ्च स्वस्वाम्यादिसम्बन्धो न गमकः, सत्यपि तस्मिन्ननुमानाभावेन व्यभिचारित्वात्, तदव्यभिचारित्वाय च विशेषा आकाङ्क्ष्याः, तथाच त एव विशेषा गमकाः, अव्यभिचारात, न स्वस्वामिभावादय इति यदुक्तं तन्निरस्यति–**इत्थं हीति,** लक्षणमिदं सर्वाभासव्युदासेन सम्बन्धिव्यञ्जकत्वोपदर्शकमिति प्रदर्शितप्रकारेणेत्यर्थः । स्वस्वामिभावादिसम्बन्धव्यभिचारव्यावर्तकत्वेऽपि विशेषाणां सम्बन्ध्यन्तरस्याप्रत्यक्षस्य द्वितीयस्य गमकः स एव सम्बन्धी प्रत्यक्ष एको भवति

१ सि. क्ष. छा. डे. वान्ताख्ये । २ सि. क्ष. छा. डे. प्रत्यक्षस्य । ३ सि. क्ष. डे. छा. तत्रैवकायः ।

**प्रसिद्धसम्बन्ध्येवाप्रसिद्धसम्बन्धिनो गमकम्, तदव्यभिचारस्वरूपावधारणार्थं व्यभिचारविशेष-व्यावृत्तिरुच्यते यथा कृतकत्वस्यानित्यत्वाव्यभिचारप्रदर्शनार्थं यदनित्यं न भवति तत्कृत-कमपि न भवतीति व्यतिरेक उच्यते ।**

( **इत्थं हीति** ) इत्थं हि व्यभिचारिविशेषव्यावर्तनेनापि स एव सम्बन्धी-धूमादिरश्वादिर्वा गमकः सम्बन्ध्यन्तरस्य–प्रत्यक्षोऽनुमेयस्य, द्वितीयस्यैकः सम्बन्ध्यन्तरस्य, सम्बन्धित्वात्, न ते विशेषा व्यावर्त्या-विधेया वा गमकाः, तत्समर्थनार्थत्वात्, यथा–न हि वात्या प्रसङ्गव्यावर्तनेन धूमस्याव्यञ्जकत्वम्, अधूमो वात्यया न भवत्ययं धूम इति, वात्यायां निवर्तिता[या]मग्नेर्गमको भवति धूमः यत्राप्रदृष्टस्तद्व्यवच्छेद-मात्रेण यस्माद्बहव वात्याघटपटादि, न हि तद्वदग्नेरगमको धूमः न वा वात्यादि व्यञ्जकं गमकमग्नेर्भवितुमर्हति घटपटादि, धूमतायामसत्यामेव, किं तर्हि ? धूमतैव हि सती वह्निताया: सम्बन्धिनी सम्बन्धिन्यां व्यञ्जकतेति तस्माच्छेषसिद्धिवचनात् निरस्तव्यभिचाराशङ्कं सम्बन्धानुमानमेव प्रत्यक्षैकत्वविशेषणाभ्यां निरस्तसर्वाभा-सम्, किञ्चान्यत्–त्वयापीष्यत एतत् प्रसिद्धसम्बन्ध्येवाप्रसिद्धसम्बन्धिनो गमकम्, तदव्यभिचारस्वरूपाव-धारणार्थं व्यभिचारिविशेषव्यावृत्तिरुच्यत इति, अतस्त-प्रदर्शनार्थमाह–यथा कृतकत्वस्येत्यादिना, अनित्यः शब्दः कृतकत्वात्, यद्यत् कृतकं तत्तदनित्यमिति सम्बन्धं विधिना प्रदर्श्य कृतकत्वस्यैवानित्यत्वाव्यभिचार-प्रदर्शनार्थं यदनित्यं न भवति तत्कृतकमपि न भवतीति व्यतिरेक उच्यते ।

**यद्युपलब्धसम्बन्धस्य पुनरव्यभिचारित्वापेक्षमनुमानं न स्यात् व्यतिरेकवचनं पक्षधर्म-साध्यानुगतिसमर्थनार्थं न स्यात्, नापि च तस्यैवाभिव्यञ्जकत्वमापद्यते; तथा चास्मन्न्यायेन कृत-**

नान्य इति व्याकरोति-**इत्थं हि व्यभिचारीति** । विशेषास्तु व्यावर्त्या केवलं गमकस्य सम्बन्धिनः समर्थका एव न गमका इत्याह-**न ते विशेषा इति** । नहि केनचिद्विशेषेण वात्याया –पवनस्य प्रसङ्गस्य व्यावर्तनमात्रेण धूमादि न व्यञ्जकमग्नेः सम्बन्ध्यन्तरस्य, धूमादेरधूमता भवति किन्तु वात्यायां निवर्तितायां स एव धूमोऽग्नेर्गमको भवत्यनग्निप्रदेशव्यवच्छेदेन, न विशेषा, तेषां वात्याघटपटादिरूपतो बहुत्वात्, न हि वात्याघटपटादिरिव धूमोऽगमकोऽग्ने, नापि वात्याघटपटादि व्यञ्जकं गमकं वाऽग्नेर्धूमताया असत्त्व इति भावः । धूमस्याव्यञ्जकत्वं निराकरोति–**न हीति** । धूम एव गमक इत्याह–**वात्यायामिति** । विशेषाणां बहुत्वं गमकत्वमव्यञ्जकत्वञ्चाह–**यस्मादिति** । किं धूमताया एव सम्बन्धिन्याः स्वसम्बन्ध्यग्नितायां व्यञ्जकत्व व्यञ्जकतात्मकत्वं वेत्याह–**धूमतैव हीति** । एवञ्च शेषसिद्धिवचनेन प्रत्यक्षैकत्वविशेषणाभ्याञ्च निराकृतनिखिलाभासाशङ्कं सम्ब-न्धप्रयुक्तानुमानं भवतीत्याह–**तस्मादिति** । प्रसिद्धसम्बन्ध्येव गमकमिति तवापि सम्मतमेवेत्याह–**किञ्चान्यदिति** । गमकस्य प्रसिद्धसम्बन्धिनोऽव्यभिचारस्वरूपताव्यवस्थापनार्थं व्यभिचारविशेषस्य व्यावृत्ति त्वया क्रियत इत्याह–**तदव्यभिचारेति,** यदि प्रसिद्धसम्बन्धि गमकं न स्यात्, विशेषा एव गमकाः स्युस्तर्हि व्यभिचारिविशेषस्य व्यावृत्तिकरणं निष्फलं स्यादिति भावः । दृष्टान्तमत्रार्थे दर्शयति–**अनित्यः शब्द इति** साधर्म्यप्रयोगेण यत्कृतकं तदनित्यमित्यनेन विधिरूपतः सम्बन्धमुपदर्श्य यद्यन्वय एव साध्यप्रतिपादकस्तर्हि प्रमेयत्वादिरपि हेतुरन्वयात् प्रतिपादकः स्यादिति सम्बन्धस्याव्यभिचारप्रदर्शनार्थमुच्यते यदनित्यं न भवति तत्कृतकमपि न भवतीति व्यतिरेकः, प्रतिपादकस्तु प्रसिद्धसम्बन्ध्येवेति भावः । अन्यथा व्यतिरेकोक्तिरव्यभि-चारिसाधनसमर्थनार्था न भवेदित्याह–**यद्युपलब्धेति** । अनुमानं हि प्रसिद्धसम्बन्धेऽव्यभिचारित्वमपेक्ष्य भवति साधनस्य

१ सि. क्ष छा. डे. अधूमोवात्यासा । २ सि. क्ष. छा. डे. °ग्नेनमिको । ३ सि. क्ष. छा. डे. वात्येति । ४ सि. क्ष छा. डे घटपटाद्यधू° । ५ सि. क्ष. छा. डे. गमकमुदव्यभि० ।

**कत्वस्यानित्यत्वोपलब्धसम्बन्धस्य व्यतिरेके पुनरव्यभिचारापेक्षानुमितिर्युक्ता, तस्यैवाभिव्यञ्जकत्वव्यक्तेः, तथेहापि, चैत्राश्वोदाहरणमत्र स्वस्वामिसम्बन्धस्योपलक्षणार्थम्, अग्निधूमानित्यकृतकत्वादिषु तुल्यन्यायत्वात्, पक्षधर्मात् सोऽत्र तद्वत्सत्त्वात्, यत्र यत्र तद्वत्सत्त्वं तत्र तत्र सोऽस्ति पूर्ववत् ।**

(**यदीति**) यद्युपलब्धसम्बन्धस्य पुनरव्यभिचारित्वापेक्षमनुमानं न स्यात् व्यतिरेकवचनं पक्षधर्मसाध्यानुगतिसमर्थनार्थं न स्यात्, तत्तु दृष्टम्, नापि च तस्यैव व्यतिरेकवचनस्याभिव्यञ्जकत्वमापद्यते, तथाचैवञ्च कृत्वाऽस्मन्न्यायेन कृतकत्वस्यानित्यत्वोपलब्धसम्बन्धस्य व्यतिरेके पुनरव्यभिचारापेक्षानुमितिर्युक्ता, न तु त्वन्मतेन, किं कारणं ? तस्यैवाभिव्यञ्जकत्वव्यक्तेः—योऽसौ पुनरव्यभिचारः स तस्यैव पक्षधर्मस्याभिव्यञ्जकत्वमभिव्यनक्ति, न स्वयमेवानुमापकः तथेहापीति तत्साधर्म्यं योजयति, चैत्राश्वेत्यादि, यच्चैत्राश्वोदाहरणमत्रानुमानलक्षण[प]रभाष्ये तत्स्वस्वामिसम्बन्धस्योपलक्षणार्थं अग्निधूमानित्यकृतकत्वादिषु तुल्यन्यायत्वात्, [1]सोऽत्रेत्यत्र स इत्यप्रत्यक्षोऽग्निचैत्रानित्यत्वादिधर्मोऽत्रेति प्रदेशे प्रत्यक्षात् धूमाश्वकृतकत्वादेः पक्षधर्मात् साध्यार्थः पक्षोऽवगम्यताम्, तद्वत्सत्त्वादिति हेतुः—[2]सोऽस्मिन् सम्बन्धी वह्निचैत्रशब्दादिरस्तीति तद्वान्—धूमाश्वकृतकत्वादिः, स एव धर्मः सन्, तस्य भावात्—तद्वत्सत्त्वात्, यत्र यत्र तद्वत्सत्त्वं तत्र तत्र सोऽस्ति, पूर्ववत् यथा पूर्वोत्तरधूमादिरग्न्यादिना सम्बन्धात् तत्स्वामिक एव, तथेहापीत्येवमादीनामुपलक्षणार्थं चैत्राश्वोदाहरणमिति ।

अत्राह—

**नन्वेवमविनाभावोपवर्णनमेवेदम्, उच्यते-एवमेवैतत्, आधाराधेयसंयोगिवद्वृत्त्यभेदात्, अस्मदभिहितेस्तु पूर्वत्वादस्मन्मतोपजीवनमेव, यथात्वमविनाभावसम्बन्धं व्युत्पादयसि**

उपलब्धसम्बन्धस्य यदि तदव्यभिचारित्वापेक्षमनुमानं न स्यात्, तर्हि व्यतिरेकवचनं पक्षधर्मभूतसाधनं या साध्यानुगतिः—अव्यभिचारित्वं तत्समर्थनार्थं न स्यात् चैतं दृष्टम्, तस्मात् तद्वचनमावश्यकम्, न चैव तस्यैव साध्यव्यञ्जकत्वं शक्यम्, तस्याव्यभिचारित्वसमर्थन एवोपक्षीणशक्तित्वादित्याशयेन व्याकरोति-**यदुपलब्धसम्बन्धस्येति** । इदञ्चास्मन्मतेन सम्भवति या साध्यधर्मोपलब्धसम्बन्धस्य साधनधर्मस्य व्यतिरेके सत्यव्यभिचारापेक्षानुमिति, न तु त्वन्मतेन सम्भवति, तस्यैवानुमापकत्वेनाभ्युपगमादित्याह-**एवञ्च कृत्वेति** । कुतो सन्मते एव सम्भवतीत्यत्र हेतुमाह-**तस्यैवेति**, पक्षधर्मभूतसाधनधर्मस्यैव साध्यधर्माभिव्यञ्जकत्वव्यतिरेकवचनगम्योऽव्यभिचारं प्रकाशयति, न तु त्वदुक्तवत् स्वयमेवाऽनुमापको भवति येन स्वस्वाम्यादिसम्बन्धस्य वैयर्थ्यं स्यादिति भावः । सारव्यभाष्येऽनुमानलक्षणे चैत्राश्वोदाहरणं स्वस्वामिसम्बन्धविषयमन्यस्याप्युपलक्षणार्थमित्याह-**यच्चैत्राश्वेति** । अत्रोक्तन्यायस्य कार्यकारणभावाद्युदाहरणेषु अग्निधूमानित्यकृतकत्वादिषु समानत्वादित्याह-**अग्निधूमेति** । तमेव न्यायं घटयति-**सोऽत्रेतीति** । अस्मिन् प्रदेशेऽप्रत्यक्ष- साध्यधर्मः पक्षधर्मभूतप्रत्यक्षात् साधनधर्मात् गम्यत इति साध्यार्थः पक्ष इति भावः । हेतुमाह-**तद्वत्सत्त्वादिति** । दृष्टान्तमाह-**पूर्ववदिति** । पूर्वदृष्ट इदानीं पक्षे दृष्टश्च धूमादिः सर्वोऽग्न्यादिना सम्बद्ध एव, अत एव च स धूमादिरग्न्यादिस्वामिक एव तथा चैत्राश्वोदाहरणेऽपि समानमिति भावः । अथाव्यभिचारित्वापेक्षानुमानवर्णनेनाविनाभावस्यैव सम्बन्धस्य व्यावर्णनं कृतमित्याशङ्कते-**नन्वेवमिति** ।

---

१ सि. क्ष. डा. डे. °नुकंपा । २ सि. क्ष. छा. डे. सोऽत्रस इत्यत्र प्रत्यक्षो । ३ सि. क्ष. छा. डे. सा सो° । ४ सि. क्ष. छा. डे. तद्वानुमाश्च कृत° । ५ सि. क्ष. डे. छा. °र्मः स्वत्तस्य ।

**तत् सम्बन्धानुमानैकदेशस्यैवैतल्लक्षणस्य भाष्यमात्रम्, एवञ्च द्रव्यार्थासत्योपाधिसत्यार्थव्याख्यानुज्ञा कृता त्वया, तथा च लिङ्गिनो लिङ्गत्वं प्रसक्तमित्यस्याभावः ।**

(**नन्वेवमिति**) नन्वेवमविनाभावोपवर्णनमेवेदम्–नन्वित्थमविनाभावसम्बन्धो मदिष्ट एवाव्यभिचाराकांक्षानुमानत्वादित्यत्रोच्यते वयमपि ब्रूमः–एवमेवैतत्, अविनाभावसम्बन्धात् स्वस्वाम्यादिविकल्पादनुमानम्, कस्मात्? आधाराधेयसंयोगिवद्वृत्त्यभेदात्–आधाराधेयवद्वृत्तेः संयोगिवद्वृत्तेश्चाभेदात्, यत्त्वयोक्तं आधाराधेयवद्वृत्तिः तस्य संयोगिवन्नेति, तस्य व्यावर्त्तितत्वात्, किञ्चान्यत्–अस्मदभिहितेस्तु पूर्वत्वात्–दिङ्नवसुबन्ध्वादिभ्यो बुद्धाच्च पूर्वकालत्वात् कापिलस्य तंत्रस्यार्हतैकदेशनयमतानुमानानुसारित्वाच्च तदनुमानस्य, तच्चास्मन्मतोपजीवनमेव, त्वया न ज्ञातमनुमानस्वरूपं सत् मयाऽऽख्यातमिति, तद्व्याख्या–यथा त्वमित्यादि, भाष्यमात्रमेवेदमिति पक्षः, सम्बन्धानुमानैकदेशस्यैवैतल्लक्षणस्य भाष्यमात्रम्, यथा 'वृद्धिरितीय संज्ञा भवत्यादैज्वर्णानाम्, संज्ञाधिकारः संज्ञासम्प्रत्ययार्थः' ( ) इत्यादि 'वृद्धिरादैच्' (पा० १–१–१) इत्यस्य, तथेदं त्वदीयमविनाभावसम्बन्धव्युत्पादनमस्मज्ज्ञातस्य सम्बन्धानुमानैकदेशस्य भाष्यमात्रम्, तदपि सर्वं न विदितमित्यभिप्रायः, कापिलमपि चास्मदुपज्ञमेव द्रव्यार्थविकल्पैकदेशत्वादिति चाभिप्रायः, अत आह–एवञ्च द्रव्यार्थासत्योपाधिसत्यार्थव्याख्यानुज्ञा कृता त्वया, सामान्योपसर्जनो विशेषः शब्दार्थ इति द्रव्यार्थस्यानुज्ञानादभ्युपगतं भवति, द्रव्यार्थवादिमतानुमानं, लक्षणानुज्ञानात्, तथाच–असत्योपाधिसत्यार्थव्याख्यानुज्ञायां लिङ्गिनो लिङ्गत्वं प्रसक्तमित्यस्याभावः,–नहि लिङ्गिनोऽप्रत्यक्षस्य लिङ्गत्वं प्रत्यक्षत्वं प्रसञ्जयितुं शक्यं ऋद्धिमद्भिर्बुद्धबोधिसत्त्वादिभिरपि, यथोक्तोऽस्माभिरव्यतिकर इति ।

---

व्याचष्टे–**नन्वित्थमिति** । इष्टार्पणमाचार्य आह–**एवमेवैतदिति**, अविनाभावसम्बन्धस्यैव मम स्वस्वाम्यादिरूपाः विकल्पाः, तस्मादव्यभिचाराकाङ्क्षमनुमानं भवतीति भावः । तत्र हेतुमादर्शयति–**आधाराधेयेति**, साध्यसाधनधर्मयोर्लिङ्गिन्याधारे परस्परप्रत्ययाधाराधेयप्रधानोपसर्जनभावेनाविनाभावात् संयोगिवद्वृत्तेराधाराधेयवद्वृत्तेरभिन्ना संयोगिवद्वृत्तिरिति भावः । 'आधाराधेयवद्वृत्तिस्तस्य संयोगिवन्न तु इत्यनेन संयोगस्याभयत्र साध्यसाधनधर्मयोरविशेषादतिप्रसक्तयाऽऽधाराधेयवद्वृत्तिरिति त्वया यदुक्तं तत्पूर्वमेव निराकृतमित्याह–**यत्त्वयोक्तमिति** । मया प्रतिपादितोऽयं सिद्धान्तो वादपरमेश्वरस्य, न तु त्वामुद्दिश्य मयैवोच्यते तथा, तस्मादेव त्वदीयाचार्येभ्योऽपि पूर्वकालीनोऽयम्, न च वाच्यं सम्बन्धानुमानमिदं तत्पूर्वस्य कापिलस्य तंत्रस्येति, तदनुमानस्य आर्हतैकदेशभूतनयमतानुमानानुसारित्वात्, तेनास्मन्मताऽऽश्रितमेव तदनुमानमित्याह–**अस्मदभिहितेस्त्विति** । अनुमानस्वरूपं तु त्वया न ज्ञातमत एव मया तदाख्यानमित्याह–**त्वयेति** । किञ्च त्वयाऽविनाभावसम्बन्धस्य या प्ररूपणा कृता साऽस्मत्सम्मतसम्बन्धानुमानस्यैकदेशभूतनयसम्मतस्य भाष्यरूपैव, त्वदीयप्ररूपणमस्मदनुकूलमेवेति त्वया नैव ज्ञातम्, सम्बन्धानुमानैकदेशोऽपि न सम्यग् ज्ञात इति भावः । भाष्यमात्रताया निदर्शनं दर्शयति–**यथा वृद्धिरितीयमिति** । कापिलमपि अनुमानमेकदेशभूतस्य द्रव्यार्थनयस्यैकदेशमेवेत्याह–**कापिलमपीति** । असत्यभूतं द्रव्यार्थमुपसर्जनीकृत्य विशेषस्य सत्यार्थतास्वीकारादसत्योपाधिसत्यार्थव्याख्या त्वयाऽनुज्ञाता, अन्यापोहलक्षणसामान्योपसर्जनो विशेषः शब्दार्थ इति त्वया सामान्यमभ्युपगतमेव, अत एव च द्रव्यार्थवादिकापिलसम्मतानुमानलक्षणमप्यनुज्ञातमेवेति दर्शयति–**एवञ्चेति** । एतदभ्युपगमेऽप्रत्यक्षस्य प्रत्यक्षत्वप्रसञ्जनं यत् क्रियते लिङ्गिनो लिङ्गत्वं प्रसक्तमिति तन्न कर्त्तुं शक्यं युष्माभिरित्याह–**असत्योपाधीति** । इदं वैपरीत्यमस्माभिः प्रागेव प्रसिद्धस्य धर्मस्य साधनत्वादप्रसिद्धस्य च साध्यत्वात् कुतो लिङ्गलिङ्गिव्यतिकरदोषाशङ्केति निराकृतमेवेत्याह–**यथोक्त इति** । वैपरीत्यं

**तथापि स्याद्विवक्षाभेदात्तथा तथास्वस्वाम्यादिगम्यगमकत्वात्, यथा देवदत्तयज्ञदत्तयोरन्यतरकर्मणा योगः तयोश्चान्योन्यलिङ्गत्वं पर्यायेण विवक्षावशाद्भवति युगपद्वोभयकर्मजसंयोगित्वात् तथा स्वस्वाम्यादिषु, तथाहि............अग्निना धूमानुमानम्, न, संयोग्येकरूपत्वात्तत्काल एवायं व्यतिकरप्रसङ्गः, न, असम्भवात्, प्रत्यक्षत्वाद्धूमोऽसाध्यः साधनन्तु, साध्यस्त्वग्निरप्रत्यक्षत्वादसाधनम्, धूमोऽपि साध्यश्चेत् प्रत्यक्षमप्रमाणं स्यात्, तदप्रामाण्ये चानुमा निर्बीजा स्यादिति ।**

**तथापि स्यादित्यादि,** न हि लिङ्गस्य लिङ्गित्वे लिङ्गिनो वा लिङ्गत्वे कश्चिद्दोषोऽस्ति, विवक्षाभेदात्, तथा तथास्वस्वाम्यादिगम्यगमकत्वात्—स्वं वा गम्यत्वेन गमकत्वेन वा विवक्ष्येत स्वामी वा यदा तदा विवक्षितस्यान्यतरस्य गम्यत्वं गमकत्वं वा यथाविवक्षं दृश्यते, तद्यथा देवदत्तेत्यादि दृष्टान्तः, यथा कस्मिंश्चित् कालेऽन्यतरकर्मणा देवदत्तो यज्ञदत्तेन युक्तो भवति, यज्ञदत्तो वा देवदत्तेन, तयोश्चा[न्योऽ]न्यलिङ्गत्वञ्च पर्यायेण विवक्षावशाद्भवति युगपद्वा, उभयकर्मजसंयोगित्वात, तथा स्वस्वाम्यादिष्विति, तथा हीत्यादि, राज्ञो विशेषितस्य वाजपेयाचरणं तत्कारणाऽऽश्रयेत्यादि गतार्थमग्निना धूमानुमानमिति, अत्राह—न संयोग्येकरूपत्वादित्यादि, नाग्नेः पूर्वं पश्चाद्वा धूमःसयोगी न धूमाद्वाऽग्निरिति मत्वाऽनिष्टमापाद्यते, अग्निनापि धूमानुमितिप्रसङ्ग इति, किं तर्हि ? तत्काल एव च—अग्न्युपलब्धिकाल एव धूमोऽस्तीति भवत्येवानिष्टापादनमिति,[4] अयं व्यतिकरप्रसङ्ग इत्यत्रोच्यते—नासम्भवात् सम्बन्धाविशेषादग्निलिङ्गत्वं च प्राप्तम्, किं तर्हि ? प्रत्यक्षत्वाद्धूमोऽसाध्यः साधनन्तु, साध्यस्त्वग्निरप्रत्यक्षत्वादनुमेयत्वादसाधनम्,

---

लिङ्गिलिङ्गयोरभ्युपगम्यापि दोषाभावमाह—**तथापि स्यादिति** । व्याचष्टे—**न हि लिङ्गस्येति,** यथाविवक्षं वक्तुर्लिङ्गलिङ्गिभावान्न दोषः । एवमेव स्वस्वाम्यादिभावेषु विवक्षाभेदेन स्वस्य गमकत्वं गम्यत्वं वा स्वामिनश्च गम्यत्व गमकत्वं वा भवतु न काचित् क्षतिरित्याह—**तथा तथेति** । देवदत्तयज्ञदत्तयोः सयोगो यदाऽन्यतरकर्मप्रभव तदा विवक्षावशात् कदाचित् स सयोगो देवदत्ते यज्ञदत्तकर्मणा भवति, कदाचिच्च यज्ञदत्तसयोगो देवदत्तकर्मणा, यदा तूभयकर्मजन्य संयोग तदा युगपत्तौ युक्तौ भवतः, एवं पर्यायेण विवक्षाभेदाल्लिङ्गलिङ्गित्वं स्यादिति दृष्टान्तेन समर्थयति—**यथा कस्मिंश्चिदिति** । ननु लिङ्गे लिङ्गत्वस्य लिङ्गिनि लिङ्गत्वस्य चापत्त्याऽग्निना यो धूमानुमितिप्रसङ्ग उक्तः सोऽग्निधूमयोः सयोग. पूर्वोत्तरकालयोर्भवतीति मत्वा नोक्त येन कदाचिदेवं कदाचिच्चान्यथेति पर्यायेण लिङ्गलिङ्गित्वं स्यात्, किन्तु धूमस्याग्न्युपलब्धिकाल एव सत्त्वेन सयोगित्वात्तदानीमेवाग्नेर्लिङ्गत्वमापाद्यत इति शङ्कते—**न संयोग्येकरूपत्वादिति,** सयोगित्वस्योभयत्रैकरूपत्वादित्यर्थः । अग्निधूमयोः पूर्वोत्तरभावेन सयोग मत्वाऽनिष्ट नापाद्यत इत्याचष्टे—**नाग्नेः पूर्वमिति,** अग्ने. प्राक्काले उत्तरकाले वा धूम सयोगीति मत्वा नानिष्टमापाद्यते धूमात् पूर्वं पश्चाद्वाऽग्निः संयोगीति मत्वा वा नानिष्टमग्निना धूमानुमितिप्रसङ्गरूपमापाद्यते येनान्यतरकर्मादिजन्यसयोगप्रयुक्तविवक्षाभेदाश्रयकादाचित्कान्योन्यलिङ्गता भवेदिति भावः । तर्हि कदाऽऽपाद्यत इत्यत्राह—**तत्काल एव चेति,** अग्न्युपलब्धिकाल एव धूमः सयोगीति तदैव धूमादग्नेरिवाग्नेधूमस्यानुमितिप्रसङ्गः, कालभेदप्रयुक्तविवक्षायास्तदाऽसम्भवादिति भाव. । उत्तरयति—**नासम्भवादिति,** अग्नेर्लिङ्गत्वञ्च न सम्बन्धाविशेषात् प्राप्तम्, असम्भवादिति योजना, अग्नेर्लिङ्गत्वप्राप्तिर्न सम्बन्धाविशेषप्रयुक्ता प्रोच्यते तदानीं लिङ्गत्वसम्भवस्यायोगादिति भावः । तर्हि कथं ? तत्समर्थयति—**प्रत्यक्षत्वादिति,** तदानीं हि धूम. प्रत्यक्ष. अत एव न साध्यः, किन्तु साधनमेव, अग्निश्चा-

---

१ सि. क्ष. डे. छा. कर्मणो । २ सि. क्ष. डे. छा. संयोगित्वरू० । ३ सि. क्ष. छा. डे. धूमोद्वाग्नि । ४ सि. क्ष. छा. डे. 'मितीदं व्यति० ।

धूमोऽपि साध्यश्चेत् प्रत्यक्षमप्रमाणं स्यात्, तदप्रामाण्ये चानुमा निर्बीजा स्यादनुमितिरिति, अपिशब्देन परानुकरणं दोषश्चैषः स्यादिति ।

किञ्चान्यत्—

संयोग्येकरूपत्वानुमानाचानिष्टापादनमुपेक्षितार्थम्, संयोगित्व……यत्पुनरुक्तं यस्य त्वविनाभावित्वं…………………………………………………………अदोष इति, वयन्तु ब्रूमोऽत्र गुणदोषाभिमानः साध्यसाधनधर्मवद्देशाद्यनुमेयत्वमुक्त्वा पुनस्तस्यैव दोषाभिधानादप्रत्यभिज्ञातमग्न्यादिसम्बन्धिदेशस्य लिङ्गित्वं लिङ्गत्वञ्च, न धर्मयोरग्निधूमयोः धूमो लिङ्गं अग्निर्वा लिङ्गीत्युक्त्वा यत्पुनरिदमुच्यतेऽग्नितोऽपि धूमानुमितिप्रसङ्ग इति, वयं ब्रूमस्त्वां शिक्षां ग्राहयन्त इह देशसाध्यतामुक्त्वा लिङ्गलिङ्गितत्त्वव्यवस्थानवृत्तेरेवं वक्तव्यमग्निमतोऽपि धूमवदनुमानप्रसङ्गः…………………उभयतोऽपि, तथा-तथेष्टवद्वृत्तेः यदि धूमविषय एतदेव स्यात्, अग्निरेव वाऽनुमेयः तदाऽग्नितो धूमानुमानं धूमादग्न्यनुमानवत् स्यात् प्रसङ्गः, संयोगिनोरविशेषात् ।

(**संयोगीति**) संयोग्येकरूपत्वानुमानाचानिष्टापादनमग्नितोऽपि धूमानुमानप्रसंग इति यदेतद्भवत्साधनं एतदुपेक्षितार्थम्, तत्प्रदर्शनार्थं साधनं संयोगित्वेत्यादि गतार्थमनिष्टापादनम्, यत्पुनरित्यादि स्वपक्षे दोषाभावप्रदर्शनार्थं यदुक्तं त्वया यस्य त्वविनाभावित्वमित्यादि यावददोष इति, वयन्तु ब्रूमोऽत्र गुणदोषाभिमान इत्यादि, साध्यसाधनधर्मवद्देशाद्यनुमेयत्वमुक्त्वा पुनस्तस्यैव दोषाभिधानादप्रत्यभिज्ञातम्, अग्न्यादिसम्बन्धीत्यादि त्वयैवाभ्युपगतमिति दर्शयति—तस्यैव देशस्य [लिङ्गित्वं]लिङ्गत्वञ्च, न धर्मयोरग्निधूमयोरिति यावल्लिङ्गीति, त्वन्मतमेवेदमिति प्रत्यभिज्ञापयति, इत्थमुक्त्वा यत्पुनरिदमुच्यतेऽग्नितोऽपि धूमानुमितिप्रसङ्ग इति न्यायदिङ्मूढेन तदिति, कथं पुनरमूढा ब्रुवत इति चेत्—ब्रूमस्त्वां शिक्षां ग्राहयन्तः, तद्यथा—इह देशसाध्यतामुक्त्वा लिङ्गलिङ्गितत्त्वव्यवस्थानवृत्तेरेवं वक्तव्यमित्यादि तां न्यायव्यवस्थामनुवर्त्तमानेन त्वया

---

प्रत्यक्षोऽत एवानुमेयो न साधनमिति भावः । तदानीमपि यदि धूमः साध्यः स्यात् प्रत्यक्षमप्रमाणं स्यात्, अनिश्चितस्य निश्चयार्थं हि प्रमाणं प्रवर्त्तते, धूमे यद्यनुमानं प्रवर्तेत तर्हि प्रत्यक्षेण सोऽनिश्चित एव स्यात्, ततश्चानिश्चायकत्वात् संशयादिरिवाप्रमाणं स्यादिति भावः । भवत्वप्रमाणं किं नः छिन्नमित्यत्राह—**तदप्रामाण्ये चेति,** अनुमितौ हि अविनाभावो बीजम्, स च प्रत्यक्षेण निश्चीयते, यदि तु प्रत्यक्षमप्रमाणं कथमविनाभावनिश्चयः, अतो निर्बीजाऽनुमा भवेदिति भावः । धूमोऽपीत्यत्रापिशब्दस्य फलमाह—**अपिशब्देनेति,** तदानीं साध्योऽग्निः न तु धूमः त्वदुक्तिवशस्य तदानीं लिङ्गित्वे इति परमतस्यानुकरणमपिशब्देन क्रियते तत्र च दोष उक्त इति भावः । ननु अग्नितोऽपि धूमानुमानं प्रसज्यते संयोग्येकरूपत्वादिति यदनुमानमुच्यते तदुपेक्षितार्थमित्याह—**संयोग्येकेति,** व्याकरोति—**संयोगीति** । उपेक्षितार्थत्वमेव प्रसाधयति—**संयोगित्वेत्यादीति,** मूलमत्र मृग्यम् । अत्र वादिशंकां प्रदर्शयति—**यत्पुनरिति,** अत्रापि मूलं मृग्यम् । उत्तरयति—**वयन्तु ब्रूम इति,** गुणे दोषाभिमानस्ते अग्निविशिष्टदेशस्यैव लिङ्गित्वं लिङ्गत्वञ्च गुणभूतं प्रथममुक्त्वा पुनस्तत्रैव दोषोऽभिधीयते त्वया, न पुनः स्मर्यते पूर्वोदितम् धर्मयोरग्निधूमयोर्मध्ये न धूमो लिङ्गं नवाऽग्निर्लिङ्गीत्यभिधाय पुनरापाद्यतेऽग्नितोऽपि धूमानुमितिप्रसङ्ग इति, इदम मौढ्यमेवेति भावः । तर्हि कथं वक्तव्यमित्यत्राचार्यस्तं शिक्षयति—**तथथेति,** देशस्य साध्यतामुक्त्वा लिङ्गलिङ्गितत्त्वयोर्व्यवस्थामनुवर्त्तमान एवं वदेः धूमवतोऽग्निवदनुमानवत् अग्निमतोऽपि

इत्थं वक्तव्यमग्निमतोऽपि धूमवदनुमानप्रसङ्ग इत्यादुपदेशग्रन्थो यावदुभयतोऽपि तन्मतमुपन्यस्य तथातथेष्ट-प्रवृत्तेरिति तत्कारणोक्तिः, धूमविषय एतदेव स्यात्–धूम एव देशविशेषानपेक्षोऽनुमापकः स्यात्, अग्निरेव वाऽनुमेयः तदाग्नितो धूमानुमानं धूमादग्न्यनुमानवत् स्यात् प्रसङ्गः, संयोगिनोरविशेषात् ।

**अथ पुनर्देशस्य साध्यसाधनत्वान्नास्ति दोषगन्धोऽपि, धूमवत्त्वस्य हि लिङ्गत्वं युक्तम्, धूमवत्त्वेन सिद्धस्य देशस्य साधकत्वात्, अग्निमत्त्वविशिष्टदेशस्यैव लिङ्गित्वम्, न ह्यग्निमत्त्वस्य युक्तं लिङ्गत्वम्, साध्यत्वात्, साध्यत्वं लिङ्गित्वात्, लिङ्गित्वमसिद्धत्वात्, अस्मन्मतेन तु लिङ्गत्वमप्यग्निमत्त्वविशिष्टस्य देशस्यैव शक्यं भावयितुं कदाचित्, अत एव मया तत्प्रधान-मेवोच्यतेऽग्निमतोऽपि धूमवदनुमितिप्रसङ्ग इति ।**

(**अथेति**) अथ पुनर्देशस्य साध्यसाधनत्वान्नास्ति दोषगन्धोऽपीति, तद्भावयति–धूमवत्त्वस्य हीत्यादि, धूमवत्त्वधर्मविशिष्टस्य देशस्यैव लिङ्गत्वं युक्तम्, धूमवत्त्वेन सिद्धस्य तस्य साधकत्वात्, लिङ्गत्वमपि तद्देशविवक्षया हेतोः, अग्निमत्त्वविशिष्टस्य देशस्यैव लिङ्गित्वं युक्तम्, अग्निविषये तु देशे लिङ्गत्वं न युक्तम्, किं कारणं? न ह्यग्निमत्त्वस्य युक्तं लिङ्गत्वं साध्यत्वात्, साध्यत्वं लिङ्गित्वात्, लिङ्गित्वमसिद्धत्वात्, अस्मन्मतेन तु लिङ्गत्वमप्यग्निमत्त्वविशिष्टस्य देशस्यैव शक्यं भावयितुम्, अग्नि-प्रत्यक्षत्वे धूमाप्रत्यक्षत्वे च कदाचित्, अत एव मया तत्प्रधानमेव–देशप्रधानमेवोच्यतेऽग्नि[म]तोऽपि धूमानुमितिप्रसङ्ग इति ।

अत्राह—

**नन्वेवं देशमुपेक्ष्याग्नेरेव लिङ्गित्वं स्यात्, अनुमेयत्वात्, उच्यते, न चासौ लिङ्गी भवितु-मर्हति, लोके सिद्धत्वात्, तथा चोक्तं त्वयाऽस्मन्मतमेव 'न धर्मो धर्मिणा साध्यः सिद्धत्वात्तेन धर्म्यपि । धर्मेण धर्मः साध्यः स्यात् साध्यत्वाद्धर्मिणस्तथा ॥ (......) इति, न धर्मो धर्मिणः**

---

धूमवदनुमानं प्रसज्यत इति । तत्र कारणं दर्शयति–**तथातथेति,** तेन तेन प्रकारेण यथाभिलषितं वृत्तेरुक्तानुमानमपि प्रसज्यते विनिगमनाविरहादिति ब्रुवतेऽमूढा इति भावः । त्वदुक्तप्रसङ्गस्तु देशविशेषनिरपेक्षस्य धूमस्यानुमापकत्वेऽग्नेरनुमेयत्वे एव संयोगिनो-रविशेषात्, धूमादग्न्यनुमानवत्, अग्नेरपि धूमानुमानं स्यादिति वक्तुं युज्यत इति दर्शयति–**धूमविषय इति** । देशस्य च साध्यत्वे साधनत्वे च न कश्चिद्दोष इत्याह–**अथेति** । कथं दोषगन्धो नास्तीत्यत्राह–**धूमवत्त्वेति,** धूमवत्त्व प्रदेशधर्मस्तद्विशिष्टो देशो लिङ्गं, प्रसिद्धत्वात् प्रदेशस्य धूमवत्त्वेन, लिङ्ग्यपि देश एवाग्निमत्त्वविशिष्टः, एवमेव लिङ्गलिङ्गिभावो युक्त इति भाव । अग्निमत्त्वविशिष्ट-देशस्य लिङ्गत्वन्तु न युक्तमित्याह–**अग्निविषय इति** । हेतुमाह–**साध्यत्वादिति,** साधयितुं योग्यत्वादित्यर्थः, तच्च लिङ्गित्वात् ज्ञापकतया लिङ्गविशिष्टत्वात्, तदपि असिद्धत्वात्-निश्चयाविषयत्वादित्यर्थ., निश्चयाविषय एव हि ज्ञापकतया लिङ्गविशिष्टो निश्चय-विषयीक्रियते न तु कृतनिश्चय इति भाव. । तदेवं वादिनं शिक्षयित्वा स्वमतमादर्शयति **अस्मन्मतेन त्विति,** अग्निमत्त्वविशिष्टो देशो लिङ्गमपि भवितुमर्हति प्रतिपत्तृमत्यपेक्षया, अग्निर्यदा प्रत्यक्षो धूमोऽप्रत्यक्षस्तदाऽग्निमद्देशो लिङ्गम्, धूमवद्देशस्तु लिङ्गीति । अत एव मया देशप्राधान्येनैव त्वां शिक्षां ग्राहयतोच्यतेऽग्निमतोऽपि धूमवदनुमितिप्रसङ्ग इत्याह–**अत एवेति** । देशानपेक्षाग्निसाध्यतामा-

---

1 सि. क्ष. डे. तन्मतमुपन्यस्य० । 2 सि. क्ष. डे. °रणोक्तिः धूमविषय एतदेव स्यात् । 3 सि. क्ष. डे. छा. लिङ्गत्वं ।

**साध्यः यथाऽग्निर्धूमेन, सिद्धत्वात्, अग्नेः तद्धर्मत्वाभावाच्च, तेन धर्म्यपि, यथाऽस्ति प्रधानं भेदानामन्वयदर्शनादिति, धर्म्यसिद्धेरेव धर्मासिद्धेः पारिशेष्याद्धर्मेण धर्मः साध्यः, ननु धर्मयोरपि परस्परं धर्मत्वासिद्धिर्धर्मित्वाभावे, साध्यत्वाद्धर्मिणस्तथा–तेन प्रकारेण तथाऽनेकधर्मणो वस्तुनः सिषाधयिषितधर्मविशिष्टस्य साध्यत्वात्, तत्प्रसिद्धधर्मविशिष्टस्य साधनत्वात्, तथा चाह–'साध्यत्वापेक्षया चात्र धर्मधर्मिव्यवस्था, न गुणगुणित्वेनेत्यदोषः', ( ) इति, उपचारादेवेदमुच्यत इति चेत्तच्चायुक्तम्, यस्मात् अत्र हि तत्त्वं मृग्यते सुहृत्सूपचारः........................................................................ ...............साध्यत्वाद्धर्मिणस्तथेति।**

(**नन्वेवमिति**) नन्वेवं देशमुपेक्ष्य–अनादृत्याग्नेरेव लिङ्गित्वं स्यात्–भवितुं योग्यम्, **कस्मात्?** अनुमेयत्वादित्यत्रोच्यते–न चासौ लिङ्गी भवितुमर्हति–अग्निः, कस्मात्? लोके सिद्धत्वात्, अतोऽननुमेयत्वात्, तथा चोक्तं त्वया–यथाऽस्मन्मतं धर्मविशिष्टो धर्म्येव साध्यः, साधनंश्चेत्यत्र त्वद्वचनमेव ज्ञापकम्–'न धर्मो धर्मिणा' ( ) इत्यादि श्लोकः, न धर्मो धर्मिणा साध्यः यथाऽग्निर्धूमेन, सिद्धत्वात् अग्नेः तद्धर्मत्वाभावाद्धूमस्य, न धर्मो धर्मिणमतिवर्त्तते, यथाऽग्निनोष्णस्पर्शः सिद्धत्वात्तद्धर्मत्वैभावाच्च, तेन धर्म्यपि–तेन धर्मेणानन्तरनिर्दिष्टेन, विभक्ति[वि]परिणामनिर्देशाद्धर्म्यपि न साध्यः, यथाऽस्ति प्रधानम्, भेदानामन्वयदर्शनादिति, धर्म्यसिद्धेरेव धर्मासिद्धेः, पारिशेष्याद् धर्मेण धर्मः साध्यः, ननु धर्मयोरपि परस्परं धर्मत्वासिद्धिर्धर्मित्वाभावे, तस्मादयुक्तं साध्यसाधनत्वमिति, नेत्युच्यते–साध्यत्वाद्धर्मि-

---

शङ्कते–**नन्वेवमिति**। व्याकरोति–**नन्वेवं देशमिति**। साधनमाह–**अनुमेयत्वादिति**, अनुमातुं योग्यत्वादित्यर्थः। तत्रानुमातुं योग्यतैव नास्तीत्युपनयति–**न चासाविति**, न हि लोके कोऽपि न जानात्यग्निम्, यतोऽनुमेयो भवेत्, तस्मात् सार्वजनीननिश्चयविषयत्वान्नाग्निरनुमातुं योग्य इति भावः। हेतुमाह–**लोके सिद्धत्वादिति** सार्वजनीननिश्चयविषयत्वादित्यर्थः। अस्मन्निश्चयविषयधर्मविशिष्टधर्मिवर्त्तिनी साध्यत्वसाधनत्वे समर्थयति त्वद्वचनमिदमित्याह **तथा चोक्तमिति**। यथा हि धूमेनाग्निर्न साध्यः सिद्धत्वात्, धूमाग्न्योर्धर्मधर्मिभावानुपपत्तेश्च न ह्यग्निर्धूमस्य धर्मः नवाऽग्निधर्मो धूमस्तथैव धर्मधर्मिभावसत्त्वेऽपि धर्मिणा धर्मो न साध्यः यथोष्णस्पर्शो धर्मोऽग्निना धर्मिणा, यतः सिद्धः स इत्याशयेनाह–**यथाग्निरिति**। धर्मेण धर्म्यपि न साध्य इत्याह–**तेन धर्म्यपीति**। पूर्वोदितपरामर्शिना तच्छब्देन प्रथमान्ततया पूर्वमुक्तो धर्मस्तृतीयान्तया परामृश्यत इत्याशयेनाह–**तेन धर्मेणेति**। यथा प्रधानस्य धर्मिणः साध्यत्वे तद्धर्मभूतानां भेदानामन्वयदर्शनं न साधनम्, प्रधानसिद्धिमन्तरेण भेदानां तद्धर्मत्वासिद्धेः, तेषां धर्मत्वे सिद्धे ततो धर्म्यनुमानं स्यादित्याह–**यथाऽस्ति प्रधानमिति**, आध्यात्मिका हि भेदाः कार्यकारणात्मिका एकजातिसमन्विता दृश्यन्ते यथा घटादीनां मृदा समन्वयः, येन भेदानां समन्वयस्तस्य सत्त्वं दृष्टमिति प्रधानसत्त्वसिद्धिरिति भावार्थः। धर्म्यसाध्यत्वे हेतुमाह–**धर्म्यसिद्धेरेवेति**। शिष्यमाणे सम्प्रत्ययमन्यत्राप्रसङ्गादाह–**पारिशेष्यादिति**, धर्मेण धर्मः साध्य इत्यस्य सम्भवादिति भावः। साध्यसाधनयोर्धर्म्यभावे कथं धर्मत्वम् धर्मधर्मिभावस्य परस्परापेक्षत्वादित्याशङ्कते–**ननु धर्मयोरपीति**। नानाधर्मयुतस्य धर्मिणः साधनेच्छाविषयीभूतधर्माधारतया धर्मिण एव साध्यत्वं प्रमाणप्रतिपन्नधर्माधारतया च तस्यैव साधनत्वमतस्तौ धर्मौ, आधारश्च धर्मीति निरूपयति–**साध्यत्वाद्धर्मिणस्तथेति**, धर्मयोः साध्य-

---

१ सि. क्ष. छा. डे. ओत्यप्रत्याद्॰। २ सि. क्ष. छा. डे॰ धर्मिणोऽति॰। ३ सि. क्ष. छा डे. त्वामा॰। ४ सि क्ष. छा. डे. धर्मिणोऽनन्त॰। ५ सि. क्ष. छा डे. साध्यानुननु॰।

णस्तथा—तेन प्रकारेण तथा—अनेकधर्मणो वस्तुनः सिषाधयिषितधर्मविशिष्टस्य साध्यत्वात् तत्प्रसिद्धधर्मविशिष्टस्य साधनत्वात्, तथा चाह—'साध्यत्वापेक्षया चात्र धर्मधर्मिव्यवस्था, न गुणगुणित्वेनेत्यदोषः' (  ) इति, उपचारादेवेदमुच्यत इति चेत्—स्यान्मतं सत्यं[न]परमार्थतो लिङ्गलिङ्गिभाव एकस्य वस्तुनः सिद्धसाध्यधर्मविशिष्टस्य, तथाप्युपचारकृताद्धर्मभेदात् भिन्नमिवाभिन्नमप्युच्यत इत्येतन्नायुक्तम्, यस्मादत्र तत्त्वं मृग्यते सुहृत्सूपचार इत्यादि यावत् साध्यत्व[ात्]धर्मिणस्तथेति गतार्थं मव्याख्यानम्, तस्मात् सिद्धमग्निमत्त्वधूमवत्त्वविशिष्टस्यैव देशस्य लिङ्गत्वं लिङ्गित्वञ्च ।

तदुपसंहृत्य त्वां प्रति यदसिद्धं प्रस्तुतमग्निमद्देशलिङ्गत्वं तत्साधयामः, तद्यथा—

**एवन्त्वग्निमद्देशस्य लिङ्गत्वम्, धूमवत्त्वसाधकलिङ्गानन्यत्वात् धूमवत्त्वस्वात्मवदेव, ननु नाग्निमत्त्वस्य लिङ्गत्वम्, व्यभिचारात् प्रमेयत्ववदिति, न, धूमवस्तुत्वानुमानभूतपाण्डुत्वबहलत्वाविच्छिन्नमूलत्वादिरूपेण धूमत्वनिश्चयकरेण लिङ्गत्वस्य नियतत्वात्तत्र लिङ्गित्वदोषप्रसङ्गस्यावतार एव नास्ति, प्रत्यक्षत्वात्, तथाऽग्नेरपि प्रत्यक्षत्वे धूमस्य लिङ्गिनो लिङ्गित्वमव्यभिचारित्वोपपादनेन, यदि त्वग्निमत्त्वं प्रमेयत्ववद्धूमं व्यभिचरेत् ततो धूमस्य धूमत्वमेव सन्दिह्येत कुतोऽलिङ्गत्वम्?, अग्न्यविनाभावित्वेनैव तु धूमत्वसिद्धेः स्यात् पक्षधर्मत्वाल्लिङ्गत्वं तथाऽग्नेरपि धूमसिद्धौ लिङ्गत्वम् ।**

(**एवन्त्विति**) एवन्त्वग्निमद्देशस्य लिङ्गत्वमिति प्रतिज्ञा. हेतुः—धूमवत्त्वसाधकलिङ्गानन्यत्वादिति, दृष्टान्तः—धूमवत्त्वस्वात्मवदेव, यथा धूमवत्त्वस्वात्मा देशस्य तदनन्यत्वाल्लिङ्गम्, तथाऽग्निमत्त्वस्वात्मा तदनन्यदेशस्य लिङ्गमेव, तदनन्यत्वञ्च प्रतिपादितमेवेति, अत्राह—नाग्निमत्त्वस्य लिङ्गत्वं व्यभिचारित्वात्,

साधनभावादिव तदन्यथाऽनुपपत्त्या धर्म्यपि साध्य भवतीयर्थ । तद्व्यवस्थामाह—**अनेकधर्मेण इति** । अग्ने साध्यत्वेन तद्देशस्यापि साध्यत्वात्तयोर्धर्मधर्मिभावो न नु विशेषणविशेष्यभावलक्षणो गुणगुणिभाव इत्यादर्शक तद्वचनं प्रमाणयति—**साध्यत्वापेक्षया चेति** । स एव प्रदेशः साध्यः स एव च प्रदेशः साधनमित्येकस्यैव प्रदेशस्य साध्यसाधनभावो लिङ्गलिङ्गिभावो वोपचारत एव स्यान्न परमार्थतः धर्मभेदाद्धर्मिभेदाभ्युपगमात्, न नु वस्तुनो धर्मी भिन्न इत्याशयेनाशङ्कते—**उपचारादिति** व्याचष्टे—**स्यान्मतमिति** । यदत्र विषये तत्त्वं सुहृद्भावेन नेतुमिच्छसि तर्हि वदाम इत्याशयेनोत्तरयति **यस्मादत्रेति,** मूलं नोपलभ्यते । उपसंहरति—**तस्मादिति** । तदेवमेकस्यैव साध्यत्वसाधनत्वसमर्थनमुपसंहृत्य वादिनाभ्युपगतमग्निमद्देशस्य लिङ्गित्वं साधयतीति दर्शयति—**तदुपसंहृत्येति** । समुदायस्य साध्यत्वाद्धर्ममात्रे च धर्मिण्यमुख्येऽप्येकदेशत्वात् साध्यत्वमुपचर्यते । **अनुमानप्रयोगमाह—एवन्त्विति** । प्रतिज्ञाहेतुदृष्टान्तान् पृथग्दर्शयति—**एवन्त्वग्निमदिति,** अग्निमद्देशो धर्मी लिङ्गत्वं साध्यधर्मः, धूमवत्त्वसाधकं देशरूपं यल्लिङ्गं तदनन्यत्वादिति हेत्वर्थ, धूमवत्त्वस्वात्मा दृष्टान्तः । दृष्टान्ते साध्यसाधने घटयति—**यथेति,** धूमवत्त्वस्वरूपं हि धूमवत्त्वसाधको यो धूमवद्देशस्तदनन्यत्वात्तल्लिङ्गम्, धूमवतो हि लिङ्गत्वे धूमवत्त्वस्वात्माऽपि लिङ्गमेव धूमवद्धूमवत्त्वयोरभिन्नत्वात् तथैवाग्निमत्त्वस्वात्मापि धूमवत्त्वसाधकलिङ्गभूतधूमवद्देशानन्यत्वाल्लिङ्गमिति अग्निमत्त्वस्वरूपभूताग्निमद्देशस्य लिङ्गत्वं सिद्धमिति भावः । **अग्निमद्देशस्य** धूमवत्त्वसाधकलिङ्गभूतधूमवद्देशानन्यत्वमसिद्धमित्यत्राह—**तदनन्यत्वञ्चेति,** एकस्यैव देशस्य प्रसिद्धधर्मापेक्षया साधनत्वमप्रसिद्धधर्मापेक्षया च साध्यत्वमित्युपपादितमेवेति भावः । धूमवत्त्वसाधकलिङ्गानन्यत्वात् अग्निमद्देशस्य लिङ्गत्वं न सेत्स्यति, अयोगुडाङ्गारादग्निमद्देशस्य धूमवत्त्वाभावेन तन्निरूपितलिङ्गता नाग्निमत्त्वे, विनाभावात्, प्रमेयत्ववत्, नहि प्रमेयत्वं नित्यत्वलिङ्गं भवितुमर्हति नित्यत्वशून्यघटादिव्यक्तिवृत्तित्वात्, एवमग्निमत्त्वमपि धूमवत्त्वव्यभिचारि न लिङ्गम् धूमवत्त्वन्तु लिङ्गमग्निमत्त्वाव्यभिचारित्वादिति शङ्कते—**नाग्निमत्त्वस्येति** । समाधत्ते—**नेति** । अग्नित्वद्रव्यत्वसत्त्वाद्यवच्छिन्नोऽग्निः

१ × × क० ।

व्यभिचरति ह्यग्निमत्त्वं, प्रदेशस्य धूमवत्त्वादृतेऽपि[1] देशान्तरे कालान्तरे वा अयोगुडाङ्गारादिषु दृष्टत्वात्, किमिव ? प्रमेयत्ववत्—यथा नित्यः शब्दः प्रमेयत्वादाकाशवदित्युक्ते प्रमेयत्वं घटादावनित्ये विनापि नित्यत्वेन दृष्टम्, तथाऽग्निमत्त्वं धूमवत्त्वेनेति व्यभिचारित्वादग्निमत्त्वस्यासाधकत्वम्, धूमवत्त्वस्य तु भवत्यग्निमत्त्वेन विनाऽदृष्टत्वादित्यत्र ब्रूमः, न धूमवत्तुत्वानुमानेत्यादि- धूमस्य हि वस्तुत्वे आत्मलाभेनैव[2] अनुमानभूतेन- अन्यविनाभूतेन लिङ्गत्वं नियतम्, पाण्डुत्वबहलत्वाविच्छिन्नमूलत्वादिरूपेण धूमत्वनिश्चयकरेण तत्र लिङ्गित्वदोषप्रसङ्गस्यावतार एव नास्ति प्रत्यक्षत्वात्, सिद्धत्वादेव लिङ्गत्वात्, तथाऽग्नेरपि प्रत्यक्षत्वे धूमस्य लिङ्गिनो लिङ्गित्वमव्यभिचारित्वोपपादनेनेत्यादि—यदि त्वग्निमत्त्वं प्रमेयत्ववद्धूमं व्यभिचरेत् ततो धूमस्य धूमत्वमेव सन्दिह्येत तवापि नीहारादिभावेन अबद्धमूलादित्वात्, तस्मात् [3]सन्दिग्धासिद्धो हेतुः स्याद्धूमः कुतोऽस्य लिङ्गत्वम् ?[4] [5]अन्यविनाभावित्वेनैव तु बद्धमूलत्वादिरूपेण धूमत्वसिद्धेः स्यात् पक्षधर्मत्वाल्लिङ्गत्वम् तथा ।

इतर आह–

**अथात्र किं प्रतिपत्तव्यं धूमलिङ्गादग्निप्रतिपत्तिवदग्नेरपि धूमप्रतिपत्तिः स्यादिति ? अथ किं विषयः सम्प्रधारः ? दर्शितन्यायदेशसाध्यताया हेतोः, तस्माद्युक्तमेव लिङ्गस्य लिङ्गिनो वा लिङ्गित्वम्, धूमस्य लिङ्गित्वापत्तौ तु प्रमेयत्ववदग्निमत्त्वव्यभिचारालिङ्गत्वाभाव एव, धूमसंयोगित्वमेवाग्नेर्गमकं दृष्टम्, यत्र यत्र धूमः तत्र तत्राग्निरिति, तस्मादग्नेरन्यथा संयोगित्वम्, अन्यथा धूमस्य, न हि सर्वत्राग्नौ धूमो दृष्टः, मा भूदेष दोष इति देशसाध्यतेष्यते तस्याश्च सिद्धसाधनन्यायविरोधदोष इति ।**

( **अथात्रेति** ) अथात्र किं प्रतिपत्तव्यं धूमलिङ्गादग्निप्रतिपत्तिवदग्नेरपि धूमप्रतिपत्तिः स्यात् ? वस्तुनो लिङ्गलिङ्गित्वविशेषाप्रतिपत्तौ तु दृष्टोऽविशेष इत्यभिप्रायः, आचार्योऽत्राप्यविशेषमापादयितुकामः

---

धूमत्वपाण्डुत्वनार्णत्वपार्णत्वबहलत्वाद्यवच्छिन्नस्य धूमस्य जनकः, येनैव रूपेण तयोर्जन्यजनकभावस्तेनैव रूपेण गम्यगमकभावः- कारणाश्रितैरग्नित्वादिभिर्विना कार्याश्रितास्ते स्वभावा न भवन्ति तस्मात्तयोरविनाभावित्वम्, एवं कारणस्थैरग्नित्वादिभिर्योवञ्छि कार्यमविनाभावि भवति, कारणगततावद्धर्माणां हेतुः कार्यं गमकम्, कार्यस्य तदव्यभिचारित्वात्, तस्मात् पाण्डुत्वादिधर्म पुरस्कारेणैव धूमस्याग्निनाऽऽत्मलाभात तद्धर्मपुरस्कृते धूमे एवाग्निलिङ्गत्वं नियतमतो न तत्र लिङ्गित्वप्रसङ्गः, प्रत्यक्षत्वात् अत एव च तस्य लिङ्गत्वमेवेति भावः । प्रत्यक्षसिद्धस्य लिङ्गत्वादग्निर्यदा प्रत्यक्षो धूमोऽप्रत्यक्षस्तदा धूमस्य लिङ्गित्वं न हि सोऽग्निमत्त्वं व्यभिचरतीति कृत्वेत्याह-**तथाऽग्नेरपीति** । अव्यभिचारित्वमुपपादयति–**यदि त्विति**, यद्यग्निरहितेऽपि देशे धूमः स्यात् अनित्ये प्रमेयत्ववत्तर्हि तस्य धूमत्वे संशयः स्यात्, किं धूमोऽयं नीहारो वेति, अग्निकार्यभूतस्याविच्छिन्नमूलत्वादिधर्मावच्छिन्नस्याभावात्, इष्टश्चैष संशयस्तवापि, तस्माद्धूमः संदेहविषयत्वेन सन्दिग्धासिद्धः स्यादिति भावः । बद्धमूलत्वादिविशेषधूमस्य त्वन्यविनाभावित्वाद्धूमत्वसिद्धेः पक्षधर्मतया लिङ्गत्वमित्याह-**अन्यविनाभावित्वेनैवेति** । एवमग्नेरपि धूमानुमानलिङ्गत्वमित्याह-**तथेति** । धूमाग्न्योर्लिङ्गलिङ्गित्वेऽविशेषात् परस्परेण परस्परप्रतिपत्तिः किं विज्ञेयेत्याशङ्कते-**अथात्रेति** । अभिप्रायप्रदर्शनपूर्वकं व्याचष्टे-

---

१ छा. °दृतन्यत्वस्या० । २ सि. छा. क्ष. डे. °लाभेनैवनुमान० । ३ सि. क्ष. छा. डे. संदिग्धा सिद्धाहेतुः । ४ × × सि. । ५ सि. क्ष. छा. डे. °लिङ्गित्वावि० ।

तमेव वाचयितुमाह–अथ किं विषयः सम्प्रधार इति, इतर आह–दर्शितन्यायदेशसाध्यत[ा]या हेतोः–दर्शितोऽयं न्यायो देश एवाग्निमत्त्वेन साध्यः साधनं धूमवत्त्वेनेति, तस्माद्युक्तमेव लिङ्गस्य लिङ्गिनो वा लिङ्गित्वं न विरुध्यत एतत्, किन्तु धूमस्य लिङ्गित्वापत्तौ त्वित्यादि, सत्यपि संयोगित्वाविशेषे धूमसंयोगित्वमेवाग्नेर्गमकं दृष्टम्, यत्र यत्र धूमस्तत्र तत्राग्निरिति, धूमवत्त्वस्य लिङ्गित्वे प्रमेयत्ववदग्निमत्त्व[स्य]व्यभिचारात् लिङ्गत्वाभाव एव, तस्मादग्नेरन्यथासंयोगित्वं, अन्यथा धूम[स्य]स्यात्, न हि सर्वत्रेत्यादि, यत्र यत्राग्निस्तत्र तत्र धूम इत्यशक्यमनुमानम्, अनुगमाभावात्, सर्वत्राग्नौ धूमाभावात्, मा भूदेष दोष इति देशसाध्यतेष्यते तस्याश्च देशसाध्यतायामपि सिद्धसाधनन्यायविरोधदोषः, धूमादग्निरिति अग्नेः सिद्धत्वात् 'साध्यत्वेनेप्सितः पक्षः' इति लक्षणानवतारः प्रकाशितप्रकाशनवद्वैयर्थ्यमिति ।

अत्र ब्रूमः—

**अग्निसाधनवदेव हि धूमसाधने व्यभिचारः धूमो ह्यग्निं विना वासगृहेऽपनीताग्निके दृष्टः, अरणिनिर्मन्थने वा भूताग्निके, सम्भाव्यतेतु धूमदर्शनादग्निरत्रेति, अग्निदर्शनाद्वा धूमोऽत्रेति, अग्ने रन्धनगृहधूमवत्, वैधर्म्येण निजलवत्, धूमोऽग्नेरन्यत्र न सम्भवतीति, सम्भवार्थत्वेनेतरवत्, शक्यत एव प्रतीतिरपि तथा, अथ बालिशरुतवत्तु अलं क्रीडितेन ।**

**अग्निसाधनवदेव हीत्यादि,** अग्निधूमयोरविशिष्टगम्यगमकभावापादनग्रन्थो गतार्थः, वासगृहेऽपनीताग्निके विना दृष्टः, अरणिनिर्मन्थने वा भूताग्निके, तस्मात्तुल्यो व्यभिचारः, कथमनुमानसम्भवः ?

---

**अथात्र किमिति ।** अत्र किं विषया ते सम्प्रधारणेत्याचार्यः पृच्छति–**अथेति ।** तत्र स आह–**दर्शितन्यायेति,** प्रसिद्धाप्रसिद्धनिबन्धनदेशसाध्यतामुक्त्वाऽग्निमद्देशस्य लिङ्गत्वव्यवस्थापनाद्धेतोरित्यर्थः । एवं तर्हि युक्तमेवाविशेषाल्लिङ्गस्य लिङ्गिनो वा लिङ्गित्वं को विरोधोऽत्र, नास्त्येवेत्याह–**तस्माद्युक्तमेवेति ।** तदेवमविशिष्टतां प्रसाध्य अबुधत्वादिबालिशक्रीडितकं दर्शयति–**धूमस्य लिङ्गित्वापत्तौ त्विति,** केवलं धूमत्वेन धूमस्य लिङ्गत्वापत्तौ तु संयोगवशाद्गम्यगमकभावत्वेन प्रमेयत्ववदग्निमत्त्वं व्यभिचारि भवेत्, अतो न तस्य लिङ्गत्वम्, किन्तु धूमसंयोगित्वमेव गमकं संयोगित्वस्याविशिष्टत्वेऽपि, एवञ्च धूमसंयोगित्व विलक्षणमेव गमकम्, तच्च संयोगित्वमग्नावन्यादृक् धूमे चान्यादृक्, यतः यत्र यत्र धूमः तत्र तत्राग्निरित्यनुगतरूपतया धूमसंयोगित्वे एव गमकत्वस्य दर्शनात्, यत्र यत्र चाग्निस्तत्र तत्र धूम इत्यनुगमाभावात् नाग्निमत्त्वं लिङ्गम्, अग्निसंयोगित्वस्य विलक्षणत्वादिति भावः । संयोगित्वाविशेषेऽपि धूमवत्त्वं न लिङ्गमित्याह–**धूमवत्त्वस्येति ।** **संयोगित्वमुभयत्र** विलक्षणमिति दर्शयति–**तस्मादग्नेरिति ।** अग्निसंयोगित्वं न लिङ्गमित्याह–**यत्र यत्रेति ।** अथाग्नेरलिङ्गत्वापत्तिदोषवारणाय देशसाध्यत्वेऽभ्युपगम्यमाने तु अग्नेः सिद्धत्वेन धूमादग्निरिति माने सिद्धसाधनताप्रसङ्गात् साध्यत्वेनेप्सितः पक्ष इति न्यायावयवभूतप्रतिज्ञाविरोधः, अग्निरत्रेति वाक्यस्य साध्यत्वेनेप्सितपक्षबोधकत्वाभावादित्याह–**मा भूदेष इति ।** पक्षलक्षणमाह–**साध्यत्वेनेति,** साध्यत्वप्रकारकेच्छाविषयीभूतो यः स पक्षः, इत्यर्थः, अग्नेश्च सिद्धत्वेन पुनरग्निमत्त्वप्रकारकेच्छाविषयत्वे पक्षस्य क्रियमाणे प्रकाशितस्य पुनः प्रकाशनवद्वैयर्थ्यमेव स्यादिति भावः । यदुक्तं धूमवत्त्वस्य लिङ्गित्वे प्रमेयत्ववदग्निमत्त्वव्यभिचाराल्लिङ्गत्वाभाव, सोऽयं व्यभिचारो धूमस्य लिङ्गत्वेऽपि तुल्य एव इत्याशयेनाचार्य उत्तरयति–**अग्निसाधनवदेव हीति,** वासगृहेऽग्नावपनीतेऽपि धूमो दृष्टः, अरणिनिर्मन्थने भूतेऽप्यग्नौ धूमो दृष्ट इति यत्र यत्र धूमस्तत्र तत्राग्निरित्यनुगमाभावाद् धूमस्यापि व्यभिचारित्वमेवेत्याशयेन व्याकरोति–**अग्निधूमयोरिति ।** इत्थं व्यभिचारसंभवेऽपि धूमसंयोगित्वस्याग्निगमकत्वमिष्यते तर्ह्यविशेषादग्निसंयोगित्वस्यापि धूमगमकत्वं स्यात्, उक्तञ्च 'संयोग्यादिषु

---

१ सि. क्ष. छा. डे. तस्मादयु० । २ सि. क्ष. छा. डे. धूमत्वमि० । ३ सि. क्ष. छा. डे. इत्याशंक्यमनु० ।

सम्भाव्यते तु धूमदर्शनादग्निरत्रेति, अग्निदर्शनाद्वा धूमोऽत्रेति, तत्पुनः प्रमाणान्तर[ाव ]गते देशेऽग्नित एव धूमो बद्धमूलत्वादिभिः, धूमाद्वाऽग्निरिति, तत्र दृष्टान्तः–अग्नेः रन्धनगृहधूमवदिति–त्वरितपचनकरणार्थाज्ञप्ताग्निहस्तसूपकारके रन्धनगृहे धूमः सम्भवतीति, वैधर्म्येण यत्र धूमासम्भवस्तत्राग्नेरप्यसम्भवो निर्जलत्ववदिति, धूमोऽग्नेरन्यत्र न सम्भवतीति, अन्वयस्यार्थः सम्भवार्थत्वेन इतरवदिति, धूमवत्, यथा धूमोऽग्नौ सम्भवति स कदाचित् क्वचित्, तथाऽग्निर्धूमे सम्भवतीत्यन्वयार्थः, शक्यत एव प्रतीतिरपि तथा, अथ बालिशरु[त ]वस्त्विति, अलमियताक्रीडितेनेति ।

वस्तुतः प्रतिपत्तितश्च प्रतिपादितमपि किमर्थं न प्रतिपद्यसे ? अवयवनिरूपणेनापि प्रतिपादयिष्यामः–अग्निरत्रेत्यस्यां प्रतिज्ञायां अग्निरेवात्रेति नावधार्यते, तत्र पृथिवीत्वादि सद्भावात्, देशस्यैव वा भावात्, तथा च तयोरग्निधूमयोरप्यभावापत्तेः, नाप्यग्निरत्रैवेति, तत्प्रदेशव्यतिरिक्तेषु प्रदेशेष्वद्व्यभावात्, यत्र यत्र धूमस्तत्र तत्राग्निरिति न शक्यते वक्तुम्, नाप्यग्निरत्र भवत्येवेति, भवतिप्रयोगाव्यवहारेण हि भवत्यपि कदाचित्, तत्र कादाचित्काग्निव्युदासो निरर्थकः सततमग्निधूमयोरभावात्, तस्माद्विवक्षिते देशे काले च भवत्यग्निरिति प्रतिज्ञार्थः, अव्युत्पत्तिविध्यनवधृतः, रक्तमिदं करवीरपुष्पमित्यादिप्रतिज्ञावत् ।

(**वस्तुत इति**) वस्तुतः प्रतिपत्तितश्च प्रतिपादितमप्यस्माभिर्न प्रतिपद्यसे लिङ्गलिङ्गित्वाविशेषं किमर्थम् ? यद्यपि न प्रतिपद्यसे तथाप्यत उत्तरमवयवनिरूपणेनापि प्रतिपादयिष्यामः, अग्निरत्रेत्यस्यां प्रतिज्ञायामित्यादि, अग्निरेवात्रेति नावधार्यते तावत्, तत्र पृथिवीत्वादिसद्भावात् तदभावेऽग्नेरेव दुर्लभत्वात्

येष्वस्ति प्रतिबन्धो न तादृश । न ते हेतव इत्युक्तं व्यभिचारस्य सम्भवात् ॥ इति । तर्हि कथमनुमानं सम्भाव्यते इत्यत्राह–**सम्भाव्यत इति,** सम्भावना च याग्यत्वाभिमान, धूमदर्शनेनाग्निसम्भावना क्रियते भवत्वग्निरत्र धूमादिति, अग्निदर्शनाद्वा धूमः सम्भाव्यते भवतु धूमोऽत्राग्नेरिति, स च धूमो बद्धमूलत्वादिधर्मविशिष्ट, सम्भावकश्च केनापि प्रमाणेनात्र देशे परिज्ञातोऽग्निरिति भाव । अग्निदर्शनाद्वा धूमोऽत्रेति सम्भावनायामग्निधूमौ समीकरोति–**तत्पुनरिति**। धूमसम्भावनाया दृष्टान्तं साधर्म्यभूतमाह–**अग्नेरिति**। अग्ने प्रमाणान्तरावगतत्वं दर्शयति **त्वरितेति,** स्वामिना त्वरित पचेत्याज्ञप्तोऽग्निहस्तः सूपकारो यत्र तस्मिन् पाकगृहे धूमसम्भावना यथा भवति तद्वदित्यर्थः । महाह्रदादौ धूमसम्भवो नास्त्यत एवाग्निसम्भवोऽपि नास्तीति वैधर्म्यनिदर्शनमाह **वैधर्म्येणेति** । अत्र व्याप्त्यर्थमाह **धूमोऽग्नेरिति,** अग्निरहिते देशे धूमस्य सम्भावना नास्तीत्यर्थः, साध्याभावव्यापक साधनाभाव इति भाव., **इतरवदिति,** अग्निसाधकधूमवदित्यर्थ, अग्नौ सत्येव हि धूम. सम्भवतीति यथा तत्र व्याप्त्यर्थः तथा धूमसाधकाग्निरपि बद्धमूलत्वादविशिष्टे धूमे सत्येव भवतीति भाव. । एवं सम्भावनामाश्रित्य प्रतीतिरपि तथैव सम्भावनारूपैव भवितुं शक्यत इत्याह–**शक्यत एवेति,** प्रतीतिरपि धूमेनाग्निसम्भावनाया अग्निना धूमसम्भावनाया वा प्रतीतिरित्यर्थ । सर्वमिदं बालक्रीडनमेव न वस्तुभूतमत इदृशचर्चयाऽलमित्याह–**अथ बालिशेति** । युक्तिभिर्वस्तुभूतमर्थं निरूपितमपि यदि नाभ्युपगम्यते तर्हि प्रतिज्ञाघटकपदार्थनिरूपणेन प्रतिपादयिष्यामि लिङ्गलिङ्गित्वाविशेषमित्याह–**वस्तुत इति** । प्रचुरनिरूपणात्तिभिर्लिङ्गलिङ्गिभावाविशेषे प्रतिपादितेऽपि किमर्थं न त्वयाऽभ्युपगम्यते ? भवतु, प्रतिज्ञावयवनिरूपणेनापीदानीं प्रतिबोधयिष्यामीति वक्तव्यनिर्देशं करोति **वस्तुतः प्रतिपत्तितश्चेति,** वस्तुस्थितिप्रतिपादनेन युक्तिभिः प्रतिपादनेन चेत्यर्थ । प्रतिज्ञावाक्य हि अग्निरत्रेति, तत्र त्रिधाऽवधारण भवितुमर्हति अग्निरेवात्रेति अग्निरत्रैवेति, अग्निरत्र भवत्येवेति वा, तत्र न प्रथममवधारणं कर्तुं शक्यमित्याह–**अग्निरेवात्रेति** । यद्यपि शब्दप्रयोगस्य व्यवच्छेदफलत्वादवश्यमेवावधारयितव्यम्, परन्त्वग्निरेवात्रे-

१ सि. क्ष. छा डे त्वरिततरण ।

देशस्यैव वाऽभावात्, तथा च तयोरग्निधूमयोरप्यभावापत्तेः, नाप्यग्निरत्रैवेत्यवधार्यते, तत्प्रदेशाग्नितोऽन्येषाममीनामनग्नित्वाभ्युपगमे प्रत्यक्षादिप्रसिद्धिविरुद्धार्थत्वात् प्रतिज्ञादोषात, तत्प्रदेशव्यतिरिक्तेषु प्रदेशेष्वप्यभावात् यत्र यत्र धूमस्तत्र तत्राग्निरिति दृष्टान्तो न शक्यो वक्तुमतस्तन्निगमः, नाप्यग्निरत्र भवत्येवेत्यवधार्यते, भवतीतिप्रयोगाव्यवहारेण[हि] न भवत्यपि कदाचिदिति, किं कारणं ? सदाऽग्निधूमाभावात्, तत्र–तस्मिन् देशे कादाचित्काग्निव्युदासो निरर्थकः, सततमग्निधूमयोरभावात्, तस्माद्विवक्षिते देशे तस्मिंस्तस्मिन् काले भवत्यग्निरिति प्रतिज्ञार्थः, कस्मात् ? अव्युत्पत्तिविध्यनवधृतेः–विधिनैवाव्युत्पादिता[न]वधारणेनोक्तत्वात्, रक्तमिदं करवीरपुष्पमित्यव्युत्पन्नरक्तश्वेतविशेषणाय पुरुषायैव तन्निरूपणार्था रक्तमेव श्वेतमेवेत्यवधारणानपेक्षा प्रतिज्ञा ।

धूमश्च पक्षधर्मोऽनुबद्धरूप एवाग्निना भवति, किमर्थम्, अग्निसहचरितत्वाग्निनिमित्तत्वख्यापनार्थम्, इह क्वचित् सहचरिभावो यथा रूपस्पर्शयोः, क्वचित् निमित्तनैमित्तिकभावो यथा दण्डघटयोः, इह तु द्व्यवयवमेव लिङ्गम्, तत्राविनाभावी सहचरिभावः सहचरो यस्मिन् विद्यत इति सहचरी धूमस्याग्निः, इनिः सप्तम्यर्थे, अस्य त्रिविधोऽर्थः अस्मिन् विद्यत एव, न न विद्यत एव, न च न विद्यतेऽपि क्वचिदिति, तस्मिन् हि किल सति विद्यत एवाग्निः, न

त्यवधारणेऽपरव्यवच्छेदप्रतीत्या तत्र च पृथिवीत्वादीनामपरेषां धर्माणां प्रदेशे सद्भावात् पृथिवीत्वादीनां तत्राभावे चाग्नेरप्यभावः स्यात् तस्य पृथिवीत्वादिसामानाधिकरण्यनियमात्, पृथिवीत्वादीनां तत्राभावे देशोऽपि नैव भवेत् तस्य पृथिव्याद्यात्मकत्वादित्यादिदोषाऽऽसञ्जनान्न तथावधारणं युज्यत इति भावः । द्वितीयावधारणस्याशक्यत्वमाह–नाप्यग्निरत्रैवेति, अनेन हि अग्नेः स्थानान्तरवृत्तिता व्यवच्छिद्यते तथा च स्थानान्तरीयाग्नीनामनग्नित्वं प्रसज्यते, अत्र वृत्तेरेवाग्नित्वात् एवं सती तव प्रतिज्ञा प्रत्यक्षादिप्रसिद्धिविरुद्धार्था भवेत्, प्रत्यक्षादिभिरन्यत्र प्रसिद्धस्याग्नेर्व्यवच्छेदादिति भावः । दोषान्तरमप्याह–तत्प्रदेशेति । अग्नेरेतत्प्रदेशमात्रवृत्तित्वे प्रदेशान्तरावृत्तेः साध्यसाधनयोर्व्याप्तिप्रदर्शनाय यत्र यत्र धूमस्तत्राग्निः यथा महानसादिरिति दृष्टान्तोद्भावनमशक्यं स्यादिति नैतदप्यवधारणं चारु इति भावः । तृतीयावधारणासम्भवमाह–नाप्यग्निरत्र भवत्येवेति, अनेन हि प्रदेशेन सदाग्नेरसम्बन्धो व्यवच्छिद्यते, एवञ्चाग्निरत्रैवेत्युच्यते भवतिशब्दपरित्यागेन, ततश्च ज्ञायतेऽत्र कदाचिदग्निर्न भवत्यपीति, नहि सर्वदा प्रदेशोऽग्निमान् धूमवांश्च, किन्तु कदाचिदेव, अनेनावधारणेन च कादाचित्काग्नियोगस्य व्यवच्छेदो निरर्थको भवेत्, तस्मादिदमप्यवधारणं न युक्तमिति भावः । एवञ्च देशकालाद्यपेक्षयैव साध्यस्य प्रतिज्ञानमित्याशयेनाह–तस्माद्विवक्षित इति, उक्तञ्च परैरपि 'ततो देशाद्यपेक्षाग्निसाधने धूमवत्तया । गृह्यमाणस्य देशस्य धर्मिता न विरुध्यते' ॥ इति । ननु कस्मिन् वाक्येऽवधारणमिति न बुध्यामहे, अनवगतरक्तत्वश्वेतत्वादिविशेषणाय पुरुषाय तद्बोधनार्थं रक्तमिदं करवीरपुष्पमित्युपदिष्टे नावधारणस्य रक्तमेव श्वेतमेवेत्येवंविधस्य विषयं पश्याम, येन वाक्येनानेकार्थो गम्यते समानश्रुत्या तत्रातिप्रसक्तौ तद्वारणायावधारणं क्रियेत, अवगतस्य वा पुनर्विधाने नियमो युज्येत, अग्निरत्रेति च वाक्यं नानेकार्थगमकम्, अव्युत्पन्नं प्रति बोधनाय विहितमतोऽनवधारणं विधानमेव तदिति समाधत्ते–अव्युत्पत्तीति, नास्ति व्युत्पत्तिर्यस्य सोऽव्युत्पत्तिस्तस्मै विधेरवधृतिर्नास्ति यस्मिन् तद्वाक्यमव्युत्पत्तिविध्यनवधृतिरूपं तस्मादिति विग्रहः अव्युत्पन्नं पुरुषं प्रति अनवधारणपूर्वकमर्थविधायकं वाक्यमिदमिति भावः । तत्र दृष्टान्तमाह–रक्तमिदमिति । प्रतिज्ञामुक्त्वा हेतुमाह–धूमश्चेति । अग्निनाऽनुबद्ध एव धूमः पक्षधर्मो भवतीत्यत्र

१ सि. क्ष. छा. डे. तदा च ययोरग्नि० । २ सि. क्ष. छा डे. यत्राग्निस्तत्र० । ३ सि. क्ष. छा. डे. तत्रधूम इति ।
४ × × क्ष. प्रतौ इत आरभ्य यावत् ९३९ पृष्ठे × चिह्नं तावन्नास्ति।

**न विद्यते वात्यादिवत्, न च न विद्यतेऽपि धूमसहचरायोऽग्निधूमवत्, न वा सपक्षसहचरे न विद्यत एव, कृतकमिव नित्य इत्येवमसिद्धविरुद्धानैकान्तिकव्युदासः ।**

( **धूमश्चेति** ) धूमश्च पक्षधर्मोऽनुबद्धरूप एवाग्निना भवति, किमर्थम्? अग्निसहचरितत्वाग्निनिमित्तत्वख्यापनार्थम्, तद्व्याख्या—इह कचिदित्यादि, रूपस्पर्शयोः सहचरि[ भावः ] दंडादि निमित्तं घटादिर्नैमित्तिक इति निमित्तनैमित्तिकभावः तावेतौ सहचरिनिमित्तिनैमित्तकभावावयवौ, तदेव हि तत्, इह तु ह्यवयवमेव लिङ्गम्, तत्राविनाभावीत्यादि, सहचरिभावं तावदादौ निरूपयामः, सोऽविनाभाव एव, तद्व्याख्या निरूपणार्थो सहचर इत्यादि, सहचरो यस्मिन विद्यत इति सहचरी धूमस्याग्निरिति, इनिप्रत्ययः सप्तम्यर्थे, अस्य त्रिविधोऽर्थः, अस्मिन् विद्यत एव, अग्निर्धूमे, अग्नित एव चायमिति पक्षधर्मावधारणम्, न न विद्यत एवेति सपक्षाननुगतो विपक्ष एव सन्निति [ च ] विरुद्ध[ा]साधारणानैकान्ति[ कशं ]का मा भूदिति, न च न विद्यतेऽपि कचित् सहचरी धूम इति साधारणानैकान्तिकशङ्का मा भूदिति चे, तद्व्याचष्टे—तस्मिन् हि किल सतीति, पराभिमतस्य धूमे लिङ्गिन्यग्निलिङ्गत्वस्य व्युदासार्थम्, तदुदाहरणानि—सति विद्यत एवाग्निर्न न विद्यते, वात्यादिवदित्यसिद्धव्युदासेन, न च न विद्यतेऽपि धूमसहचर[ ाऽ ]योऽग्निधूमवदिति साधारणानैकान्तिकशङ्काव्युदासेन, न वाऽसपक्षसहचरे न विद्यत एव कृतकमिव नित्य इति विरुद्धासाधारणानैकान्तिकशङ्काव्युदासेन, एवमसिद्धत्याद्युक्तोपसंहारो गतार्थः ।

कारणमाह—**अग्नीति,** पक्षधर्मभूतो धूमोऽग्निना सहचरित एव, अग्निर्निमित्ताऽऽत्मलाभ एवेति प्रदर्शनार्थमग्निनानुबद्धरूप इत्युक्तमिति भावः । साध्यसहचरितत्वसाध्यनिमित्तत्वोभयविशिष्ट एव हेतुः साध्यानुबद्धरूप इत्याशङ्काव्यावर्तनाय व्याख्याति—**इह कचिदिति,** रूपेण स्पर्शानुमाने रूपस्पर्शयोः सहचरिभाव एव न निमित्तनैमित्तिकभावः । दण्डघटयोस्तु निमित्तनैमित्तिकभाव एव न सहचरिभावः, इमौ च द्वाववयवावविनाभावस्य, यतः सहचरिभाव एवाविनाभावः, निमित्तनैमित्तिकभाव एव चाविनाभावः, न ह्यवयवावयविनोरस्ति कश्चिद्भेदः, अग्निधूमोदाहरणे तु ह्यवयवमेव लिङ्गं भवतीत्युभाभ्यामग्निनाऽनुबद्धरूप एव धूमः पक्षधर्मो भवतीति भावः । अथ सहचरिभावरूपमविनाभावं निरूपयति **तत्राविनाभावीति** । सहचरिभावशब्दार्थमाह—**सहचर इति** । धूमेन सह चरत्यसावग्निरिति सहचरोऽग्निः, सोऽस्मिन्नस्तीति सहचरी 'अत इनिठनौ' इति मत्वर्थे इनिप्रत्ययः । अत्रावधारणत्रैविध्यात् त्रिविधोऽर्थो भवतीत्याह—**अस्य त्रिविधोऽर्थ इति,** अस्मिन्धूमे सहचरोऽग्निर्विद्यत एवेत्येकोऽर्थः, धूमे हि सति विद्यत एवाग्निर्धूमस्याग्नित एव भाव इति धूमस्य पक्षधर्मावधारणम्, तेन पक्षेऽसत्त्वरूपाऽसिद्धिर्व्युदस्तेति भावः । द्वितीयमर्थमाह—**न न विद्यत एवेतीति**, सति धूमेऽग्निर्न विद्यते एवेति नेत्यर्थः, यथा नित्यः शब्दः कृतकत्वादित्यत्र कृतकत्वे हि सति नित्यत्वं घटादौ न विद्यत एव, अत एवायं हेतुर्विरुद्ध उच्यते, तथा शब्दो नित्यः शब्दत्वादित्यत्र शब्दत्वे सति नित्यत्वमनित्यत्वं वा न विद्यत एव शब्देऽद्याप्यसिद्धत्वात्, अत एवायं हेतुरसाधारणानैकान्तिक उच्यते, अग्निस्तु न विद्यत एवेति न तस्मादनेनावधारणेन सपक्षाननुगतः—सपक्षावृत्तिरसाधारणानैकान्तिको विपक्ष एव च वर्तमानो विरुद्धो हेतुश्च व्यावर्तितावितिभावः । तृतीयमर्थमाह—**न च न विद्यतेऽपि कचिदिति,** सति धूमे सहचरोऽग्निर्न विद्यतेऽपि कचित्, अपिशब्दात् विद्यते न विद्यतेऽपि कचिदिति न चेत्यर्थः, अयोगोलकादौ सत्यपि धूमो न विद्यतेऽपि-अतोऽग्निः साधारणानैकान्तिक उच्यते, तद्व्यावृत्तिः कृता भवतीति भावः । सामान्येनार्थत्रयं सङ्गमयति—**तस्मिन् हि किलेति,** धूमे हि सत्यग्निर्विद्यत एव, न न विद्यते एव, न च न विद्यतेऽपि कचिदिति भावः । सङ्गमनप्रदर्शनप्रयोजनं प्रकाशयति **पराभिमतस्येति** । व्यावर्त्यहेतूदाहरणपूर्वकमर्थत्रयं दर्शयति—**सति विद्यत एवेति । असपक्षसहचर इति,** सपक्षभिन्ने पक्षे विपक्षे वा सहचरे हेतौ सति साध्यं न विद्यत एवेत्यर्थः, पक्षसहचरो हेतुः शब्दत्वं विपक्षसहचरश्च हेतुः कृत-

१ सि. छा. दे. चरावित्यादि । २ सि. छा. दे. वातद्व्यापद्दो ।

**नन्वेवं सहचरिभावादनुमानसिद्धौ किमर्थं निमित्तनैमित्तिकभावोपादानम्? एकावयवमेवास्त्विति, एतच्च न, अग्निवद्व्यभिचारित्वाद्धूमस्यापि, यदिह स सदा.........सत्यपि सहचरिभावे निमित्तभूतमग्निमन्तरेण विशिष्टधूमस्यैवाभावः, पाण्डूर्ध्वगतिबहलोत्सङ्ग्येकदेशबद्धमूलपुनःपुनरुत्थायिधूमस्याग्निमन्तरेणाभावान्निमित्तनैमित्तिकभाव एषितव्यः।**

**नन्वेवमित्यादि**, एवं तर्ह्यसिद्धविरुद्धानैकान्तिकव्युदासेन सहचरिभावा[द]नुमानसिद्धौ सत्यां किमर्थमनर्थकनिमित्तनैमित्तिकभावोपादानम्, तस्मादेकावयवमेवास्त्विति, एतच्च न, अग्निवद्व्यभिचारित्वाद्धूमस्यापि–यथाऽग्निर्धूमं व्यभिचरति, अ[यो]ग्न्यादावभावात् तथा धूमोऽप्यग्निमपनीताग्निकवामगृहादौ अरणिनिर्मन्थनादौ चेति समानम्, तद्व्याख्या–यदिह स सदेत्यादि, सदृष्टान्तोपनया सभावना गतार्था प्रागुक्तन्याया, सन्निहितनिमित्तसहचरिप्रख्यापनेन, विशिष्टधूमग्रहणं तस्मिन्नेव देशे काले च नानुत्पन्नो नानीतो नाप्यतीतो वाऽग्निरित्येतस्यार्थस्य प्रख्यापनार्थम्, सत्यपि सहचरिभावे निमित्तभूतमग्निमन्तरेण धूमस्यैवाभावान्निमित्तनैमित्तिकभाव एषितव्यः, ततस्तदवधारणार्थानि लिङ्गानि दर्शयन्नाह–पाण्डूर्ध्वगतीत्यादि, पाण्डुविशेषणं बाष्पनीहारादिव्युदासार्थम्, ऊर्ध्वगत्या बहलत्वेन च धूमिकाव्युदासः, उत्सङ्गिग्रहणात् सराऽऽकारोर्ध्वविस्तारित्वं सूच्यते, पार्श्वविस्तारित्वाद्धूमिकानाम् एकदेशबद्धमूलग्रहणात् अभूतापनीताग्निवात्यादिव्युदासः अनेकत्र भ्रमणादित्यानेषाम्, पुनः पुनरुत्थायिधूमग्रहणादपनीताग्नि-

कत्वं तस्मिन् सति साध्ये नित्यत्वं न विद्यत एव, असाधारणत्वाद्विरुद्धत्वाच्च तद्व्यावृत्तोऽग्निरिति भावः। उपसंहरति–**एवमसिद्धेति**। निमित्तनैमित्तिकभावरूपाविनाभावप्रयोजनं शङ्कते–**नन्वेवमिति**। निखिलहेत्वाभासव्युदास सहचरिभावादेव सजात, अतः तस्मादेवानुमानसिद्धौ निमित्तनैमित्तिकभावात्मकापरावयवाभ्युपगमो व्यर्थ इत्याशङ्कते–**एवं तर्हीति**। असिद्धविरुद्धानैकान्तिका एव त्रयो हेत्वाभासा तद्व्यावृत्ति सहचरिभावादेवेति भावः। धूमसामान्यस्याग्निवद्व्यभिचारित्वाद् धूमविशेष एवाग्निप्रतिबद्ध इति सूचनाय निमित्तनैमित्तिकभावोऽप्येषितव्य इत्युत्तरयति–**अग्निवदिति**, धूमस्यायोग्न्यादावभावप्रयुक्तोऽग्नेर्व्यभिचारो यथा तथा धूमस्याप्यपनीतवामगृहारणिनिर्मन्थनादावग्न्यभावसत्त्वप्रयुक्तोऽग्निव्यभिचार इत्यग्निधूमयोः परस्परव्यभिचारित्वे समानतेति भावः। तमेव व्यभिचारं अग्नि व्याख्याय पाण्डुत्वबहलत्वाविच्छिन्नमूलत्वादिविशिष्टधूमस्यैवाग्निजन्यत्वात् तथाविधधूमस्यैवाग्न्यविनाभावात् निमित्तनैमित्तिकभावोपग्रथसहचरिभावस्यैव ग्राह्यतया ह्यवयवत्वोक्तिर्युक्तेत्याशयेन व्याचष्टे–**यदिह स इति**, मूलमस्पष्टम्। व्यभिचारित्वेऽग्नि दृष्टान्तः, भावना च यथा धूमवानयमग्नेरित्युक्तेऽयोग्न्यादावग्निः विनापि धूमेन दृष्ट, तथा धूमोऽग्निं विनाऽपनीताग्निकवामगृहादावरणिनिर्मन्थनादौ चेति, प्रागुक्तन्यायश्च धूमवत्तुल्यानुमानभनपाण्डुत्वबहलत्वाविच्छिन्नमूलत्वादिरूपेण धूमत्वनिश्चयकरेण विशिष्टधूमस्य लिङ्गत्वान्न व्यभिचार इति। अत्र धूमस्यात्मलाभेऽग्न्यविनाभूताः पाण्डुत्वादिधर्मा इत्युक्तत्वात् सन्निहितनिमित्तभूताग्निसाहचर्यं धूमस्य प्रकटीकृतमित्याह–**सन्निहितेति**। विशिष्टधूमग्रहणप्रयोजनमाह–**विशिष्टधूमग्रहणमिति**। सामान्येन धूमाग्न्यो साहचर्ये सत्यपि पाण्डुत्वादिभिर्विशिष्टो धूमो न निमित्तभूताग्निव्यतिरेकेण भवितुमर्हति तस्मात् सोऽप्यविनाभावावयवत्वेनाभ्युपेय एवेत्याह–**सत्यपीति**। तादृशधूमगमकानि दर्शयति–**पाण्डूर्ध्वेति**, पाण्डुपदेनेषत्पाण्डुरूपो धूमरवर्णो ग्राह्य, तेन श्वेतभूतबाष्पनीहारादिव्यावृत्तिरित्याशयेनाह–**पाण्डुविशेषणमिति**। अल्पधूमव्युदासायोर्ध्वगतिबहलग्रहणमित्याह–**ऊर्ध्वगत्येति**, अल्पो धूमो धूमिका, अल्पत्वादेव पार्श्वविस्तारित्वात् किञ्चिदूर्ध्वगतिमत्त्वाच्चोक्तेऽपि विशेषणे न व्यावृत्तिरिति कृत्वा उत्सङ्गिग्रहणमित्याह–**उत्सङ्गिग्रहणादिति**। अन्यानि विशेषणानि स्फुटानि। एवञ्च यादृशं कार्यं यादृशात् कारणात् प्रत्यक्षानुपलम्भाभ्यां निश्चितं, तत् तच्च व्यभिचरति,

१ सि. मानग्निधूमं। २ सि. छा. डे. यदिहे स सदे०। ३ सि. छा. पाण्डूर्ध्वेतीत्यादि०।

कवासगृहारणिनिर्मन्थनावस्थाव्युदासः, तस्मात् सलिलबलाहकयोः सहचारिणोरिवाग्निधूमयोर्व्यभिचारदर्शनात् निमित्तनैमित्तिकभावोऽपीष्टः ।

सोऽपि निमित्तनैमित्तिकभावः सहचरिभावेन विना व्यभिचरत्येवेति दर्शयन्नाह–

**बलाकापताकावच्च निमित्तसद्भावेऽपि नैमित्तिकस्य स्थपतिकृतप्रासादादिवत् नैमित्तिकसद्भावेऽपि निमित्तस्य चाभावदर्शनात् सहचरिभावोऽप्येषितव्यः, धूमाग्न्योर्व्यभिचारदर्शनात् सहचरिनिमित्तत्वोपपत्तावपि देशान्तरासञ्चारितत्कालसन्निहिताग्निनिमित्तस्य विशेषणविशिष्टस्यैव धूमस्य सहचरिण्यग्नौ गमकत्वेन विशेषणार्थवत्त्वात्, इतरथाऽग्निमत्त्वमेव न गमयति उभयतोऽपि यस्मात् तस्मात् स यथाऽग्निमत्त्वं गमयति तथा सन्निहिताग्निनिमित्तत्वमपि, उभयत्राव्यभिचारात् ।**

**बलाकापताकावच्चेत्यादि** यावद्धूमाग्न्योर्व्यभिचारदर्शनादिति भावना गतार्था, नैमित्तिकसद्भावे निमित्ताभावदर्शनात् स्थपतिकृतप्रासादादिवदिति, तदुभयगतदोषपरिहारेण द्व्यवयवगुणप्रकाशनार्थं चाह– [सह]चरिनिमित्तोपपत्तावपीत्यादि यावद्विशेषणार्थवत्त्वादिति, उभयविशेषणसम्पत्तौ सत्यां काचिद्व्यभिचारदिक् न सम्भवति, तत्कथमिति तद्दर्शयति–देशान्तरासञ्चारीत्यादिना भावयन्, तत्कालसन्निहिताग्निनिमित्तत्वाद्धूमस्य व्यभिचारमलविशुद्धस्य तैर्विशेषणैर्विशिष्टस्यैव सहचरिण्यग्नौ गमकत्वम्, इतरथा धूमस्यापि अग्नेरिव धूमे व्यभिचारात् विशेषणसामर्थ्यादनुमानार्थत्वम्, विशेषणानुपादानेऽग्निमत्त्वमेव न गमयति, उभयतोऽपि सहचरित्वे निमित्तनैमित्तिकत्वे वा सति यस्मात्, तस्मात्, स यथाऽग्निमत्त्वं गमयति तथा सन्निहिताग्निनिमित्तत्वमपि, गमयतीति वर्त्तते–यथाऽग्निमत्त्वेन विना नास्ति धूम[व]त्त्वं तथा तन्निमित्तत्वमन्तरेण नास्तीत्यग्निमत्त्ववन्निमित्तत्वमपि गमयति उभयत्राव्यभिचारादिति ।

---

नान्यादृशात्तादृशं भवति, एवं निमित्तनैमित्तिकभावात्तयोरविनाभावः, न तु साहचर्यमात्रेण व्यभिचारित्वादिति भावः । निमित्तनैमित्तिकभावे सत्यपि नैमित्तिकमुत्पाद्य निमित्तेऽपनीते व्यभिचारदर्शनात सहचरिभावोऽप्यावश्यक इत्याह–**बलाकेति** । बलाका जलस्य पताका प्रासादादेर्निमित्तम्, तत्सद्भावेऽपि क्वचित् कदाचित् नैमित्तिकस्य जलादेरभावस्य दर्शनादिति भाव । क्वचिन्निमित्तसद्भावेऽपि नैमित्तिकस्य क्वचिच्च स्थपतिकृतप्रासादादिनैमित्तिकसद्भावेऽपि निमित्तस्य स्थपत्यादेरसद्भावस्येव धूमाग्न्योरपि निमित्तनैमित्तिकयोर्व्यभिचारदर्शनात् सहचरिभावोऽप्यावश्यक इति दर्शयति–**बलाकापताकावच्चेत्यादीति**। केवलं द्वयोरन्यतरपक्षग्रहे दोषदर्शनादुभयपरिग्रहे च गुणसद्भाव इत्याह–**तदुभयेति,** सामान्येनाग्निधूमयोरपि सहचरिभावस्य निमित्तनैमित्तिकभावस्य च सत्त्वाद्धूमे साध्येऽग्नेरिवाग्नौ साध्ये धूमस्यापि व्यभिचारित्वमस्त्येव, न हि धूमसामान्ये वह्निसामान्यं हेतु सहचारि वा, तथा च धूमस्य गमकताप्रयोजकाः विशेषा अप्यभ्युपेयाः, तथा गम्येऽग्नावपि देशान्तरासञ्चारितत्कालसन्निहितत्वरूपो विशेषोऽपि, तथा चोभयविशेषणसम्पत्तौ सत्यां न काचिद्व्यभिचारदिक् सम्भवतीति भावः । एतदेव दर्शयति–**देशान्तरासञ्चारीति,** निर्विशेषणे –पाण्डुत्वबहलोर्द्ध्वगतिबद्धमूलत्वपुन पुनरुत्थायित्वादिविशेषणैः । विशेषणानपेक्षायान्त्वाह–**इतरथेति,** उभयविशेषणासम्पत्तावित्यर्थः–उभयतोऽपि सहचरित्वे निमित्तनैमित्तिकत्वे वा सति उभयविशेषणासम्पत्तौ धूमस्याप्यग्नेरिव धूमे व्यभिचारात् विशेषणसामर्थ्यादनुमानार्थत्वम्, विशेषणानुपादाने सहचरिभावे निमित्तनैमित्तिकभावे वा सत्यपि धूमोऽग्निमत्त्वमेव यतो न गमयति तस्माद्विशेषणविशिष्टो धूमो यथाऽग्निमत्त्वं गमयति तथा तत्कालसन्निहिताग्निमत्त्वमपि गमयति, अग्नि-

---

१ सि. डे. छा. यावद्धूमोऽग्नेर्व्य० । २ सि. छा. डे. °व्यसामर्थ्यं ० त्वम् । ३ सि. छा. डे. °दानाग्निम० ।

स्यान्मतं लिङ्गत्वादग्निः प्रत्यक्षं प्रमाणान्तरमपेक्षते धूमवदिति तन्न भवति—

**एवञ्च बद्धमूलत्वादिविशिष्टधूमपरिग्रहेऽग्नेरपि गृहीतत्वान्न प्रत्यक्षादिप्रमाणान्तरमपेक्ष्यम्, कृतकत्वेनेवानित्यत्वस्य, कृतकमित्युक्ते तदेव ह्यनित्यमध्रुवमित्युक्तं भवति, उत्पादविनाशयोर-ध्रौव्याभेदात्, तथा धूमग्रहणेऽग्निग्रहणं प्रदेशात्माभेदात् स एव निमित्तमग्निर्धूमस्य सहचरश्च, न हि तस्य धूमस्याग्नितोऽन्यन्निमित्तं भवितुमर्हति परिणाम्यभेदपरिणामान्तरसाध्यत्वे परि-णामान्तरसाधनत्वात्, पूर्वप्रत्यक्षवदन्वयकाले सम्बन्धस्मरणादन्यतरविवक्षितहेतुनोपात्तस्येत-रस्य साध्यस्याभिव्यक्तिः क्रियते, अर्हत्तत्त्वस्याभ्युपगम्यमानत्वात् ।**

**एवञ्चेत्यादि,** एवं-उक्तबद्धमूलत्वादिविशिष्टधूमपरिग्रहेऽग्नेरपि गृहीतत्वान्न प्रत्यक्षादिप्रमाणा-न्तरमपेक्ष्यम्, किमिव ? कृतकत्वेनेवानित्यत्वस्य, तद्यथा–प्रागभावप्रध्वंसाभावाख्यमेकमेव वस्तु अनित्यं कृतकञ्चोच्यते, ध्रुव स्थैर्ये, ध्रुवं-स्थिरं 'त्यब्नेर्ध्रुवे' (वार्तिक १८६५) इति त्यप् नित्यं न नित्यमनित्यमिति कृतकमित्युक्ते तदेवानित्यमध्रुवमित्युक्तं भव[ति, उ]त्पादविनाशयोरध्रौव्याभेदात्, तथा धूमग्रहणेऽग्निग्रहणं प्रदेशात्माभेदात्, स एव निमित्तमग्निर्धूमस्य सहचरश्च, न हि तस्येत्यादि यावत् क्रियते[इ]त्यादि, नहि तस्य-धूमस्याग्नितोऽन्यन्निमित्तं प्रदेशपरिणामात्मकात् देशान्तरस्थाग्निपाषाणाम्बुकुम्भादि भवितुमर्हति सहचरं वा, तदसम्बद्धत्रैलोक्यलिङ्गत्वप्रसङ्गात्, परिणाम्यभेदपरिणामान्तरसाध्यत्वे परिणामान्तरसाधनत्वात् एवमस्यैव हेतुसद्भावभावनार्थमाह–पूर्वप्रत्यक्षेत्यादि, यथापूर्वं प्रत्यक्षकालेऽग्निना सम्बद्धो धूमोऽग्निश्च धूमेन, तथाऽन्वयकाले तस्य सम्बन्धस्य स्मरणात्–यत्राग्निस्तत्र धूमो यत्र धूमस्तत्राग्निरित्यन्यतरेण विवक्षितेन

सत्त्वमन्तरेण धूमवत्त्वाभावस्येव तत्कालसम्बन्धिनाग्निनिमित्तत्वमपि गमयतीति प्रघट्टकार्थः । ननु यद्यग्निर्लिङ्गं ततो धूमवत् प्रत्यक्षादि-प्रमाणान्तरमपेक्षेत, न हि स्वरूपेण धूमो लिङ्गं भवति, किन्तु प्रदेशे प्रत्यक्षादिप्रमाणान्तरेण गृहीत एव, तथाऽग्निरपि स्यादित्या-शङ्कायामाह–**एवञ्चेति** । स्यादेतं यद्यग्निर्न गृहीत, किन्तु बद्धमूलत्वादिविशेषणविशिष्टे धूमे गृहीते सत्यग्निरपि गृहीत एवेति न प्रत्यक्षादिप्रमाणान्तरापेक्षा तस्येत्याह–**एवमुक्तेति** । तत्र दृष्टान्तमाह–**कृतकत्वेनेवेति,** कृतकत्वं प्रागभावरूपं प्रध्वंसा-भावरूपञ्चानित्यत्वम्, तदुभयमप्येकवस्त्वात्मकम्, यदेव हि वस्तु कृतकं तदेवानित्यमुच्यते, एवञ्च कृतकत्वानित्यत्वयोस्तादात्म्या-द्वस्तुनः कृतकत्वनिश्चयेऽनित्यत्वमप्यैकात्म्यान्निश्चितमेवेति भाव । इदमेवाह–**ध्रुव स्थैर्ये इति,** ध्रुवधातुस्थैर्येऽर्थे वर्तते ध्रुवं स्थिरं नित्यमित्येकार्थो, नित्यमिति निशब्दात् त्यप् प्रत्यय स्थैर्येऽर्थे, 'त्यब्नेर्ध्रुव इति वक्तव्य'मिति वार्तिकात्, न नित्यमनित्यमध्रौव्य-मुत्पादविनाशशालीत्यर्थ, दार्ष्टान्तिकमाह–**तथा धूमग्रहण इति,** धूमाग्न्योरात्मैक्यात् धूमग्रहणे तदात्माभिन्नाग्नेरपि ग्रहणं भवत्येव, एवम्भूत एवाग्निर्धूमस्य निमित्तं सहचरश्चेति भाव । न हि धूमस्येदृशस्य स्वात्मभूतप्रदेशात्मकपरिणामभूतादग्नेरन्यो देशान्तरस्थोऽग्नि· पाषाणादिर्वा निमित्तं भवितुमर्हति, यत एकस्य वस्तुनः परिणामभूतयोर्धर्मयोर्मध्ये एकस्य सहचरस्य निमित्तस्य धर्मस्य साध्यत्वेऽपर· सहचरो नैमित्तिको धर्मो हेतुर्भवति, अन्यथा देशान्तरस्थाग्न्यादीनामपरिणामभूतानामपि साधनत्वे सर्वस्य सर्वं साधनं स्यादित्याह–**न हि तस्येति** । ईदृशस्यैवाग्नेर्धूमस्य वा हेतुहेतुमद्भावं दर्शयति–**यथा पूर्वमिति,** प्राक् क्वचित् प्रत्यक्षतोऽग्निसम्बद्धो धूमो धूमसम्बद्धोऽग्निर्वाऽवगत·, प्रदेशे धूमस्याग्नेर्वा दर्शनात् तयो· सम्बन्धस्य स्मरणं भवति, यत्र यत्राग्नि-स्तत्र तत्र धूमः, यत्र यत्र धूमस्तत्र तत्राग्निरिति ततः प्रतिपिपादयिषितेन हेतुनान्यतरेणापरस्य साध्यस्याभिव्यक्तिर्भवतीति भावः ।

**१ ×× १३५ पृष्ठादियदवधि क्ष. प्रतौ पाठस्त्रुटित. । २ सि. क्ष. छा. डे. न ध्रुवेत्यमनित्यं । ३ सि. क्ष. छा. डे. धूमो नाग्निश्च ।**

हेतुनोपात्तस्येतरस्य साध्यस्याभिव्यक्तिः, प्रत्यक्षकाल इव प्रत्यक्षवत्, स्यान्मतं धूमविज्ञानकालेऽग्निविज्ञानस्याभावात्? ..............................अनित्यत्वप्रयत्नानन्तरीयकत्वयोरन्योऽन्यव्याप्तिं प्रतिज्ञाय हेतुमाह—अर्हत्तत्त्वस्याभ्युपगम्यमानत्वात्, अन्यापोहाभ्युपगमात् स्ववचनादेव जैनेन्द्रं मतमभ्युपगतं त्वयेति वक्ष्यामः ।

**स्ववचनानपेक्षायामप्यनित्यं सर्वं प्रयत्नानन्तरीयकं न भवतीति ते वचनं न्यायापेतमेव, तान्यपि सिद्धप्रयत्नानन्तरीयकान्येव, लोकप्रत्यक्ष...............चेतनविहितवृत्तित्वात् कुड्यादिवत्, लोकप्रत्यक्ष............वातादीनामनण्वादित्वे स्पर्शादिमत्त्वाज्जीवशरीरत्वेऽपि तु नात्यन्तशरीरवत्ता.......... ...स्वयं प्रवृत्तत्वात्, स्थपतिवत् वातादिचैतन्ये सिद्धे चेतनविहितवृत्ति च विद्युदभ्रमेघशब्दादि..., सवितृगति...............तस्मात् विद्युदादीनि प्रयत्नानन्तरीयकान्यनित्यानि चेत्यन्योऽन्यगम्यगमकतेति ।**

**स्ववचनानपेक्षायामपीत्यादि,** यद्यपि स्वं वचनमनपेक्ष्यापि अनित्यं सर्वं प्रयत्नानन्तरीयकं न भवतीति ब्रूषे तथापि ते स्ववचनं न्यायापेतमेवेदम्, तद्यथा—तान्यपीत्यादि, तान्यप्यभ्रेन्द्रचापादीनि सिद्धप्रयत्नानन्तरीयकान्येवेति प्रतिज्ञा, लोकप्रत्यक्षेत्यादि समासदण्डको हेतुर्यावद्विहितवृत्तित्वादिति कुड्यादिर्दृष्टान्तः, तद्व्याख्या-लोकप्रत्यक्षेत्यादि, विशेषणप्रयोजनानि च पिण्डार्थेन...विद्युदादीनां तावच्चैतन्यं साध्यते जीवशरीरं वातादयः, अनण्वादित्वे स्पर्शादिमत्त्वात् गोवत्, तस्यापि गोर्मृतस्य जीवत्वाभावात् मा भूदनैकान्तिकते[ति] जीवशरीरत्वेऽपि तु नात्यन्तशरीरवत्त्वेत्यादि यावत् स्वयं प्रवृत्तत्वादिति, विशेषणव्याख्या, स्थपतिवदिति, स्थपतेश्चैतन्यवत् वातादिचैतन्ये सिद्धे चेतनविहितवृत्ति चेत्यादिना विद्युदभ्रमेघशब्दादीना चेतनवातप्रयत्नोत्थता दर्श्यते, सवितृगतीत्यादिना इन्द्रधनुषः, तस्माद्विद्युदादीनि प्रयत्नानन्तरीयकान्यनित्यानि चेत्यनित्यप्रयत्नानन्तरीयकत्वयोरन्योऽन्यगम्यगमकता, एवमविनाभावित्वकुतर्कस्य विनाभावेनाऽस्माभिः तद्भावदर्शनादेव साध्यसाधनधर्मयोः । विधेः संयोगिवद्वृत्तिर्यथाप्रतिज्ञमुक्ता ।

न त्वाधाराधेयवद्वृत्तिरिति प्रतिपादयिष्यामः—

**याऽप्याधाराधेयवद्वृत्तिः 'लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः । नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः ॥' (प्र. स.) यस्माल्लिङ्गे धूमे लिङ्ग्यग्निर्भवत्येव न नभवत्यपि तस्माद्युक्तं यदग्निवद्धूमो द्रव्यत्वादीनामस्ति प्रकाशको न तैक्ष्ण्यादीनाम्, यस्माच्च लिङ्गिन्येव लिङ्गं भवति नान्यत्र तस्माद्युक्तं यद्धूमो धूमत्वेनेव पाण्डुत्वादिभिरपि प्रकाशयति न द्रव्यत्वादिभिरिति**

अत्र **स्यान्मतं** धूमविज्ञानकालेऽग्निविज्ञानस्यासम्भवादिति ग्रन्थानन्तरं कियान् ग्रन्थस्त्रुटित इति परिज्ञायते, एवमनित्यत्वप्रयत्नानन्तरीयकत्वयोरिति ग्रन्थमारभ्य यावद्यथाप्रतिज्ञमुक्तेति ग्रन्थपर्यन्तमनित्यत्वप्रयत्नानन्तरीयकत्वयो परस्परव्याप्यव्यापकभावप्रसाधक प्रयत्नानन्तरीयकत्वरहितानां विद्युदभ्रेन्द्रचापप्रभृतीनां चेतनप्रयत्नानन्तरीयकत्वप्रसाधकश्च ग्रन्थोऽस्फुटत्वान्न व्याख्यायते। यदपि लिङ्गलिङ्गिनोः सम्बन्धस्य वर्णनमाधाराधेययोरिव, यथाऽऽधाराधेयभावसम्बन्धो द्विष्ठोऽपि उभयत्र नैकरूपया वृत्त्या वर्तते, सम्बन्धाभेदेऽपि न ह्याधारस्याधेयभावः, आधेयस्य वाऽऽधारभावः एवमेव लिङ्गलिङ्गिनोर्व्याप्तिरपि लिङ्गेऽन्यथा, अन्यथा च लिङ्गिनि, विशेषधर्मपुरस्कारेणैव लिङ्गं गमकम्, न सामान्यधर्मेण, सामान्यधर्मपुरस्कारणैव लिङ्गी गम्यः, न तु विशेषधर्मेण, अग्निरेव

१ सि. क्ष. कत्वानेवेति । २ सि. क्ष. °मुक्त्वा ।

**सामान्यस्य गमकत्वं लिङ्गिनि, न विशेषाणाम्, लिङ्गस्य च विशेषाणां केषाञ्चिद्गमकत्वं न सामान्यस्य, तदेतत्सर्वमविनाभावादाधाराधेयवद्वृत्तेरिति, एषामपि तद्भावदर्शनविधेरेव गमकत्वं, यत्र दृष्टः तद्गमयति न यत्र चादृष्टस्तद्व्यवच्छेदेन ।**

**याऽप्याधाराधेयवदित्यादि,** यामप्याधाराधेयवद्वृत्तिं मन्यसे 'लिङ्गे लिङ्गी भवत्येवे'त्यादिश्लोकः, तद्व्याख्या-यस्माल्लिङ्गे धूमे लिङ्गी-अग्निर्भवत्येव,[न] न भवत्यपि तस्मायुक्तमित्यवधारणार्थप्रदर्शनम्, यस्माच्च लिङ्गिन्येवेत्यादि यावद्द्रव्यत्वादिभिरित्यादि तद्विपरीतावधारणप्रदर्शनं गतार्थम्, सामान्यस्य गमकत्वं लिङ्गिनि न विशेषाणाम्, लिङ्गस्य च विशेषाणां केषाञ्चिद्गमकत्वं न सामान्यस्य दृष्टम्, तत्सर्वमविनाभावादाधाराधेयवद्वृत्तेरिति पूर्वपक्षः, अत्रोत्तरं–एषामपीत्यादि, इयमप्याधाराधेयवद्वृत्तिस्तद्भावदर्शनविधेरेव यत्र दृष्टस्तद्गमयति दर्शनबलेन, न यत्र चादृष्टस्तद्व्यवच्छेदेन व्यावृत्तिब[लि]नेति ।

अत्रापि–

**न हि योषिद्गण्डपाण्डुत्वं गमयत्यग्निम्, अभूताग्निधूमत्वात्, धूमभूतं तु पाण्डुत्वं गमयत्यग्निम्, धूमभूताग्नित्वाद्विधेरेव तद्भावस्य तद्भावत्वेनैव गमकत्वात्, यथा चेदं तथा द्रव्यत्वादिसामान्यमपि गमकमग्नेः धूमभूताग्नित्वात् पाण्डुत्ववत्, यत्तु धूमो दीप्त्यादीनां न प्रकाशक इत्युक्तं तदपि तद्भावदर्शनविधेरेव, तथा चान्यथा च दृष्टत्वात् व्यभिचारात् दर्शनविधेरेवानुमानलक्षणोपपत्तेश्च, 'तद्भावदर्शनानुबन्धेन हि बुद्ध्युत्पत्तिरनुमानम्', धूमवत्त्वं प्रदेशस्याग्निमत्त्वानुबद्धमेवेत्यैकान्तिकग्रहणेऽनुमानं भवति धूमादग्निरत्रेति, तस्यैकान्तेनैव**

गम्यो न धूमः, धूम एव च गमको नाग्निरिति मन्यसे तदपि न युक्तमिति वक्तुं प्रथमतस्तन्मतमुपन्यस्यति–**यामपीति** । प्रमाणसमुच्चयकारिकामुपदर्शयति–**लिङ्गे लिङ्गी भवत्येवेति,** अयोगव्यवच्छेदोऽयम्, तदेव दर्शयति–**अग्निर्भवत्येव, न न भवत्यपीति,** यत्र धर्मिणि धर्मस्य सद्भाव सन्दिह्यते तत्रायोगव्यवच्छेदो न्यायप्राप्तः, धूमेऽग्निर्न भवति इत्येव योऽयोगस्तन्नेत्यर्थः, अग्निसामान्यस्यायोगो यतो व्यवच्छिद्यतेऽत एव सामान्यधर्मेणाग्निर्गम्य इति लभ्यते, अत एवोक्तं मूले–**द्रव्यत्वादीनामिति,** द्रव्यत्वाद्यव्यभिचारित्वादग्नेरिति भावः । **यस्माच्च लिङ्गिन्येवेति,** अन्ययोगव्यवच्छेदोऽयम्, अग्नावेव धूमो भवति, लिङ्गमस्मिन्नस्तीति लिङ्गीति व्युत्पत्तिसामर्थ्यादग्नौ धूमस्यायोगशङ्का नास्त्येव, किन्तु यादृशो धूमोऽग्नेर्गमकस्तादृशो धूमः किमन्यत्रास्तीत्यन्ययोगशङ्का स्यादेव तद्व्यावर्त्तनायाग्नावेव तथाविधो धूमो नान्यत्रेत्यन्ययोगव्यवच्छेदो न्यायप्राप्तः, सामान्यतस्तु धूमोऽपनीताग्निके वासगृहे भूताग्निकेऽरणिनिर्मन्थनादावप्यस्ति तत्तु न लिङ्गम्, लिङ्गभूतस्तु धूमः पाण्डुत्वबहलत्वद्रुमलत्वादिधर्मविशिष्ट इति विशिष्टरूपेणैव गमको न सामान्यधर्मेण, अत उक्तं–**द्रव्यत्वादिभिरिति** । फलितमर्थमाह–**सामान्यस्येति,** लिङ्गिनिष्ठसामान्यानामेव गमको धूमो न विशेषाणामित्यर्थः । लिङ्गनिष्ठा विशेषा एव गमकाः, न सामान्यमित्याह–**लिङ्गस्य चेति** । सर्वमिदमविनाभावसम्बन्धस्याधाराधेयवद्वर्त्तनात् सिद्ध्यतीति भावं दर्शयति–**तत्सर्वमिति** । तदेव पूर्वपक्षं समुपन्यस्येदानीं निराकरोति–**इयमपीति,** आधाराधेयवद्वृत्तिरपि तद्भावदर्शनादेव नान्यथा, तथैवाधाराधेयभाव इत्यत्र नियामकान्तराभावात्, स एव ह्यग्निर्धूमो भवति, नान्यः, तेनैवाग्निना धूमेन भूयते, नान्येन, न चैषोऽग्निर्धूमो न भवति किन्तु भवत्येवेति तद्भावस्य दर्शनादेव विधिरूपेण गमयति, न तु यत्र न दृष्टस्तद्व्यवच्छेदेन, यथा त्वयाऽभ्युपगम्यतेऽधूमो न भवति यतस्तस्मादनग्निर्न भवतीति भावः । तद्भावदर्शनविधिं पाण्डुत्वादौ दर्शयति–**न हीति** । निखिलं पाण्डुत्वं नाग्नेर्गमकम्, न हि कामिनीगण्डस्थलभ्राजिष्णुपाण्डुत्वमग्नेर्गमक-

१ लिङ्गिनिवधि० । × × अ. । २ सि. बनयादृष्ट० ।

**ग्रहणमव्यभिचारात्, व्यभिचारात्त्वनुमानाभासं वृक्षक्षुपादिवत्, यथा वृक्षः क्षुपो वाऽत्र धूमादित्यनुमानाभासं व्यभिचारादर्शनबलेनैव तथाविधदर्शनबुद्ध्यनुबद्धमेवानुमानमपि ।**

**न हीत्यादि,** योषिद्गण्डपाण्डुत्वं न गमयत्यग्निम्, अभूताग्निभूमत्वात्, धूमभूतं तु पाण्डुत्वं गमयत्यग्निम्, धूमभूताग्नित्वात्, विधेरेव तद्भावस्य तद्भावत्वेनैव गमकत्वात्, यथा चेदमित्यादि, पाण्डुत्वादिविशेषस्य धूमभूतत्वेन गमकत्व[व]त् द्रव्यत्वादिसामान्यस्यापि धूमभूतेर्गमकत्वमग्नेरिति भावना यावत् पाण्डुत्ववदिति, एवं तावद्धूमभूतसामान्यविशेषधर्माणां गमकत्वं तुल्यं विधेः, एवं गम्यत्वनियमाविशेषः, तथाप्यग्नेरपि द्रव्यत्वसामान्यगतिरग्निभूतत्वात्, नोदकादितद्व्यतिरिक्तद्रव्यत्वगतिः, अतद्भूतत्वात्, यत्तु धूमो दीप्त्यादीत्यादि, दीप्तितैक्ष्ण्यादिविशेषागतिरपि तद्भावदर्शनविधेरेव तथा चान्यथा च–दीप्तितैक्ष्ण्यादिरूपेण तद्विरहितत्वेन च दृष्टत्वाद्व्यभिचारात्, नात्यन्तभूतशीतादिव्यभिचारादसम्बद्धादगतिः, किं तर्हि? सम्बन्धव्यभिचारादेव, किञ्चान्यत्–दर्शनविधेरेवानुमानलक्षणोपपत्तेः स एवैषितव्य इत्यत आह–तद्भावदर्शनानुबन्धेन हि बुद्ध्युत्पत्तिरनुमानमित्येतदनुमानलक्षणञ्च, तद्व्याचष्टे–धूमवत्त्वमित्यादि, यदा धूमवत्त्वं प्रदेशस्याग्निमत्त्वानुबद्धमेवेत्यैकान्तिकं ग्रहणं तदाऽनुमानं भवति, धूमादग्निरत्रेति, तस्याग्नेरेकान्तेनैव ग्रहणमव्य-

मिष्टम् । धूमगतं तु तद्गमयत्यग्निम्, तस्यैव धूमभूतत्वात्, योषिद्गण्डपाण्डुत्वं तु योषिद्गण्डभूतं न त्वग्निपरिणामजन्यधूमभूतमतोऽत्रापि तद्भावदर्शनविधेरेव तद्भावत्वेनैव रूपेण पाण्डुत्वं गमकम्, न तु पाण्डुत्वसामान्यरूपेणेत्याशयेनाह–**योषिद्गण्डपाण्डुत्वमिति ।** लिङ्गगता विशेषा एव गमका न सामान्यमिति यदुच्यते त्वया तन्न युक्तम्, तद्भावस्यैव गमकत्वे तत्त्वाद्विशेषा इव सामान्यमपि यदि तद्भावो भवेत्तर्हि कः प्रतिरुन्ध्यात् तस्य गमकतासामर्थ्यमित्याशयेन साम्यं सामान्यविशेषयोर्दर्शयति–**यथा चेदमित्यादीति,** द्रव्यत्वादीन्यपि तद्भावत्वेनैव रूपेण गमयन्त्यग्निं न तु सामान्यरूपेणेति भावः । तदेवं लिङ्गगतसामान्यविशेषयोस्तद्भावत्वेनैव गमकत्वेनाविशेषत्ववत् लिङ्गिगतसामान्यमपि न सामान्यरूपतो गम्यमपि तु तद्भावत्वेनैवेत्याह–**एवं गम्यत्वनियमाविशेष इति,** सामान्यमेव गम्यं न तु विशेषा इत्येवं विशेषो नास्ति गम्यताप्रयोजकतद्भावनियमस्योभयत्राविशिष्टत्वादिति भावः । अग्निगतसामान्यस्यापि तद्भावेनैव गमकत्वमाह–**अग्नेरपीति ।** यदेव द्रव्यत्वमग्निभूतं तदेव द्रव्यत्वं तद्भावत्वाद्गम्यम्, अग्निव्यतिरिक्तोदकादिगतं द्रव्यत्वं तु न धूमेन गम्यम्, अग्निभावत्वाभावात्तस्येति भावः । धूमस्य दीप्तितैक्ष्ण्यादीनामप्रकाशकम्, कारणस्थयावत्तद्भावैर्विना कार्यं न भवति तावत्स्वभावाना कारणं गमकं भवति अग्निस्थदीप्तितैक्ष्ण्यादिस्वभावैर्विनापि धूमो जायत इति न व्यभिचाराच्च गम्या इति यदुक्तं त्वया तदपि तद्भावदर्शनविधेरेवेत्याह–**यत्तु धूम इति ।** दीप्त्यादीनां क्वचिदग्नौ तद्भावदर्शनात् क्वचिच्चाभावतद्भावत्वेन दर्शनाच्च तद्भावदर्शनविधेरेव धूमात्तेषामगतिरिति भावः । तद्भावदर्शनमाह–**तथा चान्यथा चेति** दीप्त्यादिभिरग्नेस्तद्भावप्रतिबन्धो नास्ति व्यभिचारादिति भावः । ननु दीप्त्यादिविरहितत्वं क्व दृष्टम्? किमत्यन्तशीतभूतेऽग्नावग्निरेव भवति कुतो व्यभिचारः? सति ह्यग्नौ दीप्त्यादीनां विरहे स्याद्व्यभिचार इत्याशङ्कायामाह–**नात्यन्तेति,** न हि वयं तत्र व्यभिचारं ब्रूमः, तत्र तेषां सम्बन्धाभावात्, किन्तु यत्र क्वचिदग्नौ दीप्त्यादिसम्बन्धो नास्ति तत्र व्यभिचारो बोध्य इति भावः । तद्भावदर्शनविधेरभ्युपगम एवानुमानलक्षणं तद्भावदर्शनव्याप्त्या हि बुद्ध्युत्पत्तिरनुमानमित्येवमुपपद्यत इत्याह–**दर्शनविधेरेवेति ।** प्रदेशस्य धूमवत्त्वमग्निमत्त्वप्रतिबद्धमेव, न हि प्रदेशस्य धूमवत्त्वं तस्याग्निमत्त्वमन्तरेण सम्भवतीति यदैकान्तेन गृह्यते तदा तज्जन्यं विज्ञानमनुमानं धूमादत्राग्निरिति भवति तथाविधमैकान्तग्रहणं धूमवत्त्वस्याग्निमत्त्वव्यभिचारित्वाभावादिति व्याचष्टे–**यदा धूमवत्त्वमिति ।** यदा तु व्यभिचारो भवेत्तदा तदनुमानाभासं भवति यथा कश्चिदत्र वृक्षः, अत्र क्षुपो वा इति प्रतिज्ञाय यदि धूमादिति हेतुं प्रयुञ्ज्यात् तदिदमनुमानमाभासं भवति, तत्र ज्वलनतैक्ष्ण्यादिव्यभिचारदर्शनादग्निमत्त्वानुबद्धत्वाभावादित्यादि

१ सि. क्ष. डे. छा. धूम भूयते । २ सि. क्ष. छा. डे. विधिरेव । ३ सि. यत्तु धूमो दीप्त्यादित्यादि । ४ सि. क्ष. छा. डे. °दर्शने विधिरेव । ५ सि. क्ष. छा. डे. नात्यन्ताम्॰ । ६ सि. क्ष. छा. डे. विधिरेवा॰ ।

भिचारात्, व्यभिचारात्तु अनुमानाभासम्, तद्यथा–वृक्षक्षुपादिव[त्] ज्वलनतैक्ष्ण्यादिव्यभिचारेण यथा यदा तु वृक्षः क्षुपो वाऽत्र धूमादिति तदानुमानाभासं भवति, विनापि वृक्षादिना दृष्टत्वाद्व्यभिचारात् दर्शनबलेनैव, तदुपसंहारः–तथाविधदर्शनबुद्ध्यनुबद्धमेवानुमानमपीति गतार्थम् ।

**एवमनध्यवसायविपर्ययानुमानाभासावपि, तदतत्पक्षद्वयगतमेकान्तमनाश्रित्य ज्ञानमनवधृतार्थमनध्यवसायः, विपर्ययश्चाभूते भूतप्रत्ययो भूते चाभूतप्रत्ययः, एतावप्यनुमानाभासौ, तत्परिणामाव्यवच्छेदेन दृष्टवत्, त्वन्मत्या व्यावृत्तेस्त्वनुमानाप्रामाण्यापत्तिः, न भवति न भवतीत्यभवनपरमार्थत्वादर्थान्तरमभावो वा, अत्यन्ताज्ञानात्, अनध्यवसायवत्, ग्राह्यवृत्त्यननुरोधिप्रतिपत्तेर्वा विपर्ययवत्, तस्माद् दृष्टवदेवानुमानतदाभासौ, यथादृष्टज्ञानानुबद्धत्वादिति ।**

( **एवमिति** ) एवं–सन्देहानुमानाभास[वत्]चानध्यवसायविपर्ययानुमानाभासावपि, तद्यथा–तदतत्पक्षेत्यादि, स चासश्च पक्षौ तदतत्पक्षौ तयोर्द्वयं तद्गतमेकान्तं–भूतमेवाभूतमेवेति, अनाश्रित्य यथाऽग्निरत्रैव, अग्निरत्र भवत्येवैवमादि, अनिश्चितासन्दिग्धरूपं ज्ञानमनवधृतार्थमनध्यवसायः, विपर्ययश्चाभूते भूतप्रत्ययो भूते चाभूतप्रत्ययः, स्थाणौ पुरुषप्रत्ययवत्, एतावप्यनुमानाभासौ तत्परिणामाव्यवच्छेदेन–यथाविधिदर्शनबुद्ध्यनुबद्धमेवानुमानं दृष्टवत् तथैवानुमानाभासोऽपि, त्वन्मत्या व्यावृत्तेस्त्वनुमाना-

व्यभिचारात्त्विति, अग्निमत्त्वनिश्चायकज्वलनतैक्ष्ण्यादिविरहप्रयुक्तव्यभिचारदर्शनादिति भाव । एतदेव स्फुटयति–**यदा तु वृक्ष इति,** क्षुपः ह्रस्वशाखाशिफो गुल्मविशेष । तथा तथा दर्शनबलादत्रानुमानतदाभासयोर्भवनमित्याह **दर्शनबलेनैवेति ।** उपसंहरति–**तथाविधेति ।** अथ व्यभिचारादनुमानाभासं सन्देहानुमानाभास उच्यते, अग्निधूमसमानाधिकरणो धूमाभावसमानाधिकरणश्च प्रदेशे च धूमधूमाभावसमानधर्मदर्शनाद्विशेषादर्शनाच्च किमयं प्रदेशो रन्धनगृहवद्धूमवान्, किं वाऽयोऽग्न्यादिवद्धूमाभाववानिति सन्देहानुकूलत्वादग्निमत्त्वस्य, स्थाणुत्वतदभावसाधकोर्ध्वत्वादिवत्, एवमनुमानाभासमुदीर्यानध्यवसायविपर्ययानुमानाभासौ दर्शयति–**एवमिति ।** असाधारणानैकान्तिकहेतोरनध्यवसायानुमानाभासो विरुद्धहेतोर्विपर्ययानुमानाभासश्च तथाविधदर्शनबलादेवेत्याह–**अनध्यवसायेति ।** अनध्यवसायाभासं निरूपयति–**तद्यथेति,** तदतत्पक्षद्वयगतैकान्तानाश्रयेणानिश्चितासन्दिग्धरूपमनुमानमनध्यवसायाभासम्, यथा शब्दोऽनित्यः शब्दत्वादित्यादौ हि शब्दत्वं नित्यत्वेनानित्यत्वेन सह वाऽदृष्टं शब्दे च दृष्टं नित्यत्वानित्यत्वयोरन्यतरनिश्चयानाधायकमुभयसाहचर्याभावादेव संशयानाधायकञ्च सदनवधृतार्थज्ञानजनकं भवतीत्यसाधारणहेतुप्रयुक्तोऽनध्यवसायानुमानाभास इति भाव. । लक्षणसमन्वयं विधत्ते–**स चासश्च पक्षाविति,** नित्यत्वानित्यत्वपक्षौ तयोर्द्वयम्, नित्यत्वपक्षोऽनित्यत्वपक्षश्च तद्गतैकान्तः, नित्यमेवानित्यमेव वा शब्द इति, तमनाश्रित्य शब्दो नित्य **एवेति** अनित्य एवेति वा निश्चयरहितं शब्दो नित्यो न वेति संशयरहितमत एव चानवधृतार्थं ज्ञानमनध्यवसाय इति भाव । नित्यः शब्दः कृतकत्वादित्यत्र कृतकत्वेऽनित्यमात्रत्वनिश्चयसत्त्वात् शब्दे हेतुत्वेनोपन्यस्यमानः शब्दे नित्यत्वाभावमेव निश्चाययतीति विरुद्धानुमानाभासोऽपि तथाविधदर्शनबलेनैवेति दर्शयितुमाह–**विपर्ययश्चेति,** भूते वस्तुन्यभूतप्रत्ययोऽभूते वा भूतप्रत्ययो विपर्यय. यथाऽपुरुषभूते स्थाणौ पुरुषोऽयमिति प्रत्यय इति विपर्ययज्ञानसामान्यलक्षणम्, अनात्मन्यात्मेति प्रत्यय इति भाव. । एतावप्यनुमानाभासौ तथाविधपरिणाममन्तरेण न भवितुं शक्यावित्ति तथाविधदर्शनबलेनैव तावपि भवत, यथाविधदर्शनबुद्ध्यनुबद्धमनुमानं दृष्टं अनुमानाभासोऽपि तदनुगुणपरिणामदर्शनबुद्ध्यनुबद्ध एवेत्याशयेनाह–**एतावपीति ।** त्वन्मते तु अन्यव्यावृत्तिरूपतयाऽनुमानाभ्युपगमेनान्यस्य व्यावृत्तस्य चाभावपरमार्थतयाऽनुमानमप्रमाणमेव भवतीत्याह–**त्वन्मत्येति ।** तदेवाह–**न भवतीति,** यथाऽज्ञानमिते

१ सि. क्ष. डा. दृष्टवत्ये० ।

प्रामाण्यापत्तिः, न भवति न भवतीत्युभयतोऽप्यभवनपरमार्थत्वात् अर्थान्तरमभावो वा, अत्यन्तमदृष्टत्वात्, अग्निर्न भवत्युदकमनग्निः, स न भवति घटः खपुष्पं वेति अज्ञानमेवेत्यप्रामाण्यापत्तिः पूर्वोक्तन्यायेन, कस्मात्, अत्यन्ताज्ञानात्, अनध्यवसायवदित्यप्रामाण्यम्, तथा विपर्ययवदप्रामाण्यापादनार्थमाह—ग्राह्यवृत्त्यननुरोधिप्रतिपत्तेर्वा, विपर्ययवदिति—ग्राह्यस्याग्नेर्विधिरूपेण वृत्तिरभिभवनं, तदनुरोधिनी न भवति या प्रतिपत्तिः सा ग्राह्यवृत्त्यननुरोधिनी, तस्याः प्रतिपत्तेर्ग्राह्यवृत्त्यननुरोधिन्या हेतोरप्रामाण्यं ग्राह्यवृत्त्यनुमानस्य, पुरुषे स्थाणुप्रत्ययवदिति प्रागुक्तन्यायबलेनानिष्टापादनं गतार्थम्, तस्मात् दृष्टवदेवानुमानतदाभासौ, यथा-दृष्टज्ञानानुबद्धत्वादिति ।

**एवञ्च तदपि दूषणं यत्सम्बन्धानुमानलक्षणस्य प्रसक्तं न दूषणमेव, दृष्टविधिवृत्तेरनुमानोक्तेः ।**

**एवञ्च तदपीत्यादि,** अतिदेशेन सम्बन्धानुमानलक्षणस्य 'सम्बन्धादेकस्मात्' इत्यादेः 'अस्येदं कार्यं कारणम्' ( वै० ) इत्यादेश्च यत्किल दूषणं—सम्बन्धस्याविशिष्टत्वाद्धूमा[द]ग्निरित्यादिवत् दीप्तितैक्ष्ण्यादीनामपि गम्यत्वं धूमपाण्डुत्वादिविशेषगमकत्ववत् द्रव्यसत्त्वादिसामान्यस्यापि गमकत्वम्, अग्नेर्वा गमकत्वं धूमवत्, धूमस्य वाऽग्निवद्गम्यत्वमित्येते दोषाः प्रसक्ताः, दृष्टविधिवृत्तेरनुमानोक्तेः यथा दृष्टस्तथा सदेहानध्यवसायविपर्ययनिश्चयकृदित्यभ्युपगमादित्येतदपि न दूषणम्, उक्तविधिवृत्तिभावनात्वादनुमानस्येति ।

भवतीत्यनुमानं त्वदिष्टम्, अग्निर्न भवतीत्येकोऽभवनार्थ, अनग्निर्न भवतीत्यपरोऽभवनार्थ इत्युभयतोऽप्यभवनपरमार्थत्वम्, भवनार्थतायाः क्वाप्यभावादिति भाव । ततश्च किमित्यत्राह—**अर्थान्तरमभावो वेति ।** अभावप्रसङ्गे हेतुमाह—**अत्यन्तमिति ।** अर्थान्तरत्वमभावत्वञ्च निरूपयति—**अग्निर्नेति,** उदकादिरनग्नि, उदकादिर्न भवतीति घटपटाद्यर्थान्तरमेवानग्निर्न भवतीति स्यात, नन्वनग्निर्न भवतीत्यर्थान्तरमेव भवतीति न नियम, अग्निरपि स्यात्तनश्चास्माकमिष्टसिद्धिरित्यत्राह—**अज्ञानमेवेति,** सर्वस्याऽभवनरूपत्वेन खपुष्पतुल्यत्वादज्ञानमेव भवेदित्यप्रामाण्यापत्तिरिति भाव । भवनरूपस्यैव ज्ञानविषयत्वव्याप्यत्वादनग्निर्न भवतीति ज्ञानमनवधृतार्थत्वादनध्यवसायवदप्रमाणमेवेत्याह—**अत्यन्तेति ।** अभावस्यापि ज्ञानविषयत्वे वा भूतेऽभूतप्रत्ययत्वेन विपर्ययवदप्रमाणमित्याह—**विपर्ययवदिति ।** अनुमानप्राह्यो ह्यग्निर्भवनरूपेण प्रतीयते, प्रत्यक्षविषयवत तस्य चानग्निव्यावृत्तिविषयत्वे तज्ज्ञानं ग्राह्यविधिवृत्त्यनुरोधि न भवति, भावात्मन्यभावप्रत्ययत्वाद्विपर्ययवदप्रामाण्यमेवेति भावः । एवञ्च यज्ज्ञानं यथा दृश्यते तद्वदेव तदभ्युपेयमिति निगमयति—**तस्मादिति ।** इत्थं तद्भावदर्शनादेव साध्यसाधनधर्मयोर्विधिं व्यवस्थाप्य परोक्तसम्बन्धानुमानलक्षणस्य बौद्धेन प्रसञ्जितानि दूषणान्यप्यदूषणान्येवेति प्रतिपादयति—**एवञ्चेति ।** सम्बन्धादेकस्मात् प्रत्यक्षाच्छेषसिद्धिरनुमानमिति सांख्यस्यानुमानलक्षणम्, अस्येदं कार्यं कारणमित्यादिवैशेषिकलैङ्गिकलक्षणस्यातिदेशेन यद्दूषितं तदपि दूषणाभासमेवेति व्याचष्टे—**अतिदेशेनेति,** 'न च केनचिदंशेन न संयोगी हुताशन' । धूमो वा सर्वथा तेन प्राप्तं धूमान् प्रकाशनमि'ति संयोगेन गम्यगमकभावे धूमात सर्वप्रकारेण प्रकाशनं प्राप्तमतोऽग्ने· सामान्यधर्मा इव विशेषधर्मा अपि दीप्तितैक्ष्ण्यतार्णत्वपार्णत्वादयो गम्या· स्यु, कारिकायां संयोगीति पदेन संयोगित्वमात्रं न विवक्षितमपि तु सम्बन्धमात्रम्, तथा धूमस्य विशेषधर्मवत्सामान्यधर्मा अपि द्रव्यत्वादयो गमका भवेयु·, सर्वप्रकारेणैव तयो संयुक्तत्वात कार्यकारणभावाच्च धूमाग्न्यो· परस्परं गम्यत्वं गमकत्वञ्च स्यादित्येते दोषास्त्वयोक्ता न सङ्गच्छन्ते, संयोगित्वकार्यकारणभावादयो धूमाग्न्यादिसाध्यसाधनयोर्विधिरूपतो यथा दृष्टास्तथैव तेषां निश्चयः संशयोऽनध्यवसायो विपर्ययो वा भवन्ति नान्येन रूपेणेत्येवं प्रसाधितत्वादिति भावः । तदुक्तान दोषान् दर्शयति—**सम्बन्धस्येति ।** तेषामदोषत्वे हेतुमाह—**दृष्टविधीति,** दृष्टविधिवृत्तेरनुमानोक्तेस्त्वदुक्तं दूषणजातं न दूषणमिति भाव· ।

१ सि. क्ष. छा डे. अनुनमेयोत्पत्त० ।

किञ्चान्यत् 'लिङ्गे लिङ्गी भवत्येव' इत्यस्याः कारिकाया योऽर्थावधारणवैपरीत्येनानुमानमित्युक्तः तस्य दूषणार्थमाहाऽऽचार्यो 'लिङ्गेन म विना लिङ्गी'त्यादि श्लोकेन—

**यथाह**—न हि सर्वत्र लिङ्गिनि लिङ्गं सम्भवत्येवायोऽग्निवदिति, अत्रोत्तरं लिङ्गिनि देशेऽग्निमति धूमो भवन्नेव पक्षधर्मो भवति, नाभवन्, असिद्धत्वात्, लिङ्गिनि लिङ्गं भवत्येव, वात्यादिव्युदासेन, तस्य चाग्निगततैक्ष्ण्यादिलिङ्गत्वं न भवति, न दृष्टत्वाद्धूमे तैक्ष्ण्यादिना च विधिवृत्त्या, यथा वाऽऽह—यदा भवति लिङ्गं तदा नालिङ्गिनि भवत्युदकादौ धूम इति, तदपि न घटते नियमेन तस्य सद्भावे तत्रैवाग्नौ नान्यत्र लिङ्गत्वम्, अत्रशब्दवाच्यैतत्प्रदेशसम्बन्धिन्येवाग्नौ लिङ्गत्वात्, तस्मात् स एव तस्यैव लिङ्गम्, धूमगतद्रव्यत्वाद्यन्यप्रकाशनन्त्वस्मदिष्टदर्शनविधेरेव, तथाऽव्यभिचारात्।

**यथाऽऽहेत्यादि** परमतप्रदर्शनं यावदयोऽग्निवदिति, नियमविपर्ययेण सोदाहरणम्, अत्रोत्तरं लिङ्गिनि देशेऽग्निमति धूमो भवन्नेव पक्षधर्मो भवति, नाभवन्नासिद्धत्वात्, बद्धमूलत्वादिविशेषणावधृतपक्षधर्मस्यैव लिङ्गत्वाल्लिङ्गिनि लिङ्गं भवत्येव वात्यादिव्युदासेन, तस्य च—धूमस्याग्निगततैक्ष्ण्यादिलिङ्ग[त्वं] न भवति, न दृष्टत्वात् धूमे—धूमे तस्याप्रदृष्टत्वात्, तैक्ष्ण्यादिना च सह विधिवृत्त्येति, यथा वाऽऽहेत्यादि-लिङ्गिन्येवेत्यस्यावधारणस्य निरूपणम्—यदा भवति लिङ्गं तदा नालिङ्गिनि भवत्युदकादौ धूम इति, तदपि न घटते, कस्मात्? नियमेनेत्यादि, तस्य धूमस्य सद्भावे बद्धमूलत्वादिविशेषपरिच्छिन्ने तत्रैवाग्नौ नान्यत्रायोऽग्न्यादौ लिङ्गत्वम्, किं कारणम्? अग्निरत्रेत्यत्रशब्दस्याधिकरणवाचिनो धूमवैस्त्वस्य अत्रशब्द-

अथ 'लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः। नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः।' इति कारिकापूर्वार्धोक्तावधारणस्य वैपरीत्ये सति नानुमानम्, लिङ्गलिङ्गिनोरसम्बन्धादिति य उक्तस्त्वया तं दूषयतीत्याह—**किञ्चान्यदिति,** लिङ्गे लिङ्गी भवत्येवेत्येवावधार्यम्, न तु लिङ्गिनि लिङ्गं भवत्येवेति, अयोऽग्न्यादौ लिङ्गाभावात्, लिङ्गिन्येव लिङ्गमित्यवधार्यम्, न पुनर्लिङ्ग एव लिङ्गीति, लिङ्गाभावेऽप्ययोऽग्न्यादौ लिङ्गिदर्शनात् व्यभिचारादित्यवधारणवैपरीत्येऽनुमानाभाव उक्तः, तन्न युक्तमिति भावः। परमतमुपदर्श्य तन्निराकरोति—**यथाऽऽहेति,** लिङ्गे धूमे सति लिङ्ग्यग्निर्भवत्येव, न तु लिङ्गिन्यग्नौ सत्यवश्यं लिङ्गं भवत्ययोऽग्न्यादौ धूमाभावादिति परमतप्रदर्शनमित्याह—**परमतप्रदर्शनमिति**। लिङ्गिनि लिङ्गं भवत्येवेत्यवधारणं समर्थयति—**लिङ्गिनि देश इति**। अग्निमद्देशादिसम्बन्धेन तेनैवाग्निना धूमेन भवितं नान्येनायोऽग्न्यादिनाऽबादिना वा, न सोऽग्निर्धूमो न भवति किन्तु भवत्येव, एवञ्चाग्निमत्प्रदेशे भवन्नेव धूमः पक्षधर्मो भवति, नापनीताग्निको धूमः, असिद्धत्वात्, अव्यविनाभावित्वेनैव हि बद्धमूलत्वादिरूपेणाध्यवसितस्य धूमस्य धूमत्वसिद्धेः पक्षधर्मत्वाल्लिङ्गत्वम्, न वात्यादेस्तस्मात् लिङ्गिनि लिङ्गं भवत्येवेत्यप्यवधारणं युज्यत एवेति भावः। अग्निनिष्ठतैक्ष्ण्यादिविशेषा धूमस्य गम्या न भवन्ति, तैक्ष्ण्यादिना सहाग्नेर्धूमे विधिवृत्त्याऽदृष्टत्वादित्याह—**तस्य चेति**। लिङ्गिन्येवेतरत् पुनरिति पादार्थमाह—**यथा वाऽऽहेति,** भवल्लिङ्गं लिङ्गिन्येव नान्यत्रोदकादावित्यर्थः अत्रेत्यभिधेये प्रदेशे एव प्रधानोपसर्जनभावेन परस्परं नियमेन भवन्तावग्निधूमौ देशस्यैकस्य भेदविवक्षायां साध्यसाधने भवतः, तत्र च धूमवस्तुत्वं बद्धमूलत्वादिविशेषणविशिष्टमेव, तस्यैवाग्न्यविनाभावित्वेन लिङ्गत्वात्, ईदृशश्च धूमो नायोऽग्न्यादितो भवति, तस्माद्यादृशादग्नेस्तथाविधो धूमो भवति तं प्रत्येव तस्य लिङ्गत्वमत एतद्देशसम्बन्धिनि लिङ्गिन्येवाग्नौ धूमस्य लिङ्गत्वमित्याह—**तस्य धूमस्येति**। तत्र हेतुमाह—**अग्निरत्रेति,** अस्मिन्नित्यत्र, प्रत्यक्षविषयस्येदंशब्दस्य

१ सि. क्ष. छा. डे. भवतिन्नेवक्ष०। २ सि. क्ष. छा. डे भवन्धमूल०। ३ सि. क्ष. छा. धर्मत्वस्यैव। ४ सि. क्ष. छा. डे. यथावस्वे।

वाच्यैतत्प्रदेशसम्बन्धिन्येवाग्नौ लिङ्ग[1]त्वात्, अन्यथाऽनुमानदोष[2]भावस्योक्तत्वात्, तस्मात् स एव तस्यैव लिङ्गमिति सिद्धम्, यत्पुनः धूमगतद्रव्यत्वाद्यग्न्यप्रकाशनं तत्त्वस्मदिष्टदर्शनविधेरेव तथाऽव्यभिचारात्।

किन्तु—

**यथा च त्वयोच्यते लिङ्गे लिङ्गी भवत्येवेति तत्र लिङ्गे चेल्लिङ्गिनियमः तथा च धूमादग्निगतिवत् धूमावधारणकारणविशेषसहचाराग्निविशेषः तेभ्य एव किमिति नेष्यते ? यथा प्रचुरहरिततृणेन्धनोऽग्निः मशकनिवारणार्थं यत्र गोकुले क्रियते तत्रैवोक्तविशेषो धूमस्तार्णाल्पतादिविशेषानग्नेर्गमयति तथा बहलतुषावकीर्णे गृहाङ्गणगते मृत्पात्रकाराः शिल्पिनोऽग्निं कुर्वन्ति तत्रैव तौषस्तौषाग्निं गमयतीति विशेषाणामपि लिङ्गित्वदृष्टेर्लिङ्ग एव लिङ्गिनो भावः।**

(**यथा चेति**) यथा च त्वयोच्यते लिङ्गे लिङ्गी भवत्येवेति तत्र लिङ्गे चेल्लिङ्गिनियमस्तथा चेदं दोषजातं—तैक्ष्ण्यं किमिति नेष्यते ? धूमा[3]वधारणकारणविशेषाणां दीप्ततरमन्दप्रकाशनादिविशेषसहचरत्वात् धूमादग्निगतिवत् तदवधारणकारणविशेषसहचराग्निविशेषः कस्मान्नेष्यते ? तेभ्य एव—धूमावधारणकारणविशेषेभ्यः, स्यान्मतमदर्शनमिति चेत्तन्नेति दर्शनमस्तीत्युच्यते तद्यथा—प्रचुरहरितेत्यादि, यत्र दोग्धारः पुरुषा एव दो[4]हयन्ति ईतिविरहिताः, गोकुले हरिततृणावकीर्णे, न चाऽऽवासे, गवा मशकनिवारणार्थं हरिततृणेन्धनोऽग्निः क्रियते, तत्रैव तद्दण्डकोक्तविशेषो धूमः तार्णाल्पतादिविशेषानग्नेर्गमयति, तथा बहलेत्यादि न तैया[5]ऽऽभिवृद्ध्या विशेषः हस्त[न][6]र्मृत्पात्रकाराः शिल्पिनस्तद्गृहाङ्गणगतस्तौषस्तौषाग्निं गमयतीति विशेषाणामपि लिङ्गित्वदृष्टेर्लिङ्गे—धूम एव लिङ्गिनः—अग्नेर्भावः, तस्मान्नावधारणवैपरीत्येन लिङ्गलिङ्गिता, न च विशेषागम्यतेति।

सप्तम्यन्तनिर्देशात् प्रत्यक्षविषयधूमाधारप्रदेशसम्बन्धिन्येवाग्नौ धूमवत्त्वस्य लिङ्गत्वमन्यथाऽत्रशब्दवैयर्थ्यापत्तिः, अप्यनुमानासम्भवश्च, अग्नेः सामान्यस्य सिद्धत्वात्, न हि प्रसिद्धं साध्यते, अयोऽग्न्यादीनां त्वलिङ्गित्वं तत्र लिङ्गाभावात्, लिङ्गाभावश्चाप्रत्यक्षत्वात्, न हि ते लिङ्ग्यन्ते लिङ्गदर्शनात् तेषां लिङ्गनिरपेक्षप्रसिद्धेश्च, तस्माद्बद्धमूलत्वादिविशेषणविशिष्टो धूमः प्रत्यक्षविषयधूमाधारप्रदेशसम्बन्ध्यग्नावेव लिङ्गमिति भावः। धूमनिष्ठेन द्रव्यत्वादिसामान्यधर्मेणाग्नेः प्रकाशनं न भवति, अग्नित्वद्रव्यत्वाद्यवच्छिन्नकारणतानिरूपितकार्यतावच्छेदकत्वस्यातिप्रसक्ते धर्मे द्रव्यत्वसत्त्वादावभावात्, कारणस्थसामान्यधर्मैर्विना तेषां भवनादिति यौ तत्कार्यत्वनियमाश्रयेण गम्यगमकभावाभावावुच्येते तावपि तद्भावदर्शनविधेरेवेत्याह—**यत्पुनरिति**। अथ लिङ्गे लिङ्गी भवत्येवेत्यत्र दोषमाह—**यथा चेति**। यदि लिङ्गे लिङ्गिनोऽवश्यम्भावनियमस्तर्हि धूमोऽग्निगततैक्ष्ण्यादेः कुतो न गमक इत्याह—**तत्र लिङ्गे चेदिति**। लिङ्गे लिङ्गिनियमेन लिङ्गाद्धूमात् तत्सहचारिणोऽग्नेर्गतिवत् धूमनिर्णायकेभ्यः पाण्डुबहलोर्द्ध्वगत्युत्सर्पित्वादिभ्यो तत्सहचराणामग्निगतदीप्ततरमन्दप्रकाशादीनामपि विशेषाणां गतिः किं नेष्यते यत उच्यतेऽग्नेः सामान्यधर्मा एव गम्या न विशेषधर्मा इत्याह—**धूमावधारणेति**। धूमावधारणकारणविशेषाग्निविशेषयोः साहचर्यं न दृष्टमतो न गम्यगमकभाव इत्याशङ्कते—**स्यान्मतमिति**। साहचर्यं दृश्यत इति दर्शयति—**दर्शनमस्तीति**। क्वास्ति दर्शनमित्यत्राह—**तद्यथेति**। मशकनिवारणफलकदोग्धृपुरुषानुष्ठितप्रचुरहरिततृणादिकर्मकदाहवति गोकुले धूमे बद्धमूलपाण्डुबहलोर्द्ध्वगतितार्णपार्णत्वादिविशेषाः, अग्नौ च तार्णाल्पत्वादिविशेषसहचरा दृश्यन्त इति भावः। दृष्टान्तान्तरमाह—**बहलेत्यादीति**, मृत्पात्रपाकफलककुम्भकारकर्तृकबहलतुषकर्मकदाहवति गृहाङ्गणगते आमे धूमे बद्धमूलपाण्डूर्द्ध्वगतितौषादिविशेषाः अग्नौ च तौषादिविशेषाः सहचरा दृश्यन्त इति भावः। तदेवं धूमाग्निविशेषाणां गम्यगमकभावात् लिङ्ग एव लिङ्गिनो भाव इति त्वदुक्तावधारणविपरीतावधारणाभ्युपगमे न काचित् लिङ्गलिङ्गित्वक्षतिर्न वाऽग्निविशेषागम्यतेत्याह—**विशेषाणामपीति**। ननु लिङ्गिनो विशेषास्तौषकारीषादयो न गम्यन्ते, लिङ्गिव्यभिचारित्वात्, लिङ्गविशेषैः सहादृष्ट-

१ सि. क्ष. डे. लिङ्गित्वात्। २ सि. क्ष छा. डे. दोषाभाव०। ३ सि. क्ष. छा. डे. धूमत्वावकरण०। ४ सि. क्ष. छा. डे. दोहयन्तीति वि०। ५ सि. क्ष. छा. डे. नातायामि०। ६ सि. क्ष. छा. डे. हस्तकाग्र०।

**अथोच्येत तस्यैव व्यभिचारिणो विशेषा न तु गम्यन्त इति विशेष्योक्त एवेत्येतदपि न, तैक्ष्ण्यादिवचनात्, मया तत्रापि चोक्तमेव तद्भावदर्शनविधेरेव तदिति, तस्माल्लिङ्गे लिङ्गी भवत्येवेत्ययुक्तमुक्तम् ।**

**अथोच्येतेत्यादि,** स्यान्मतं मया विशेष्योक्त एवं तार्णतौपादिविशेषा न तु गम्यन्ते, केषाम् ? तस्यैव व्यभिचारिण इत्येतदपि न, तैक्ष्ण्यादिवचनात्—त्वया हि दीप्तितैक्ष्ण्यादयो विशेषा न गम्यन्त इति कारिकार्थं विवृण्वतोक्तत्वात्, तैक्ष्ण्यादीनाञ्च गम्यत्वस्य दर्शितत्वादिति, किञ्चान्यत् मया तत्रापि चोक्तमेव तद्भावदर्शनविधेरेव तदिति—तदपि च विशेषाणां गम्यगमकत्वं साध्यसाधनधर्मयोस्तद्भावेन दृष्टयोर्विधिरूपेण संयोगिवद्वृत्तेः दृष्टबलेनैव, न व्यावृत्त्येत्यभिहितमेव, तस्माल्लिङ्गे लिङ्गी भवत्येवेत्ययुक्तमुक्तम्, लिङ्गेन न विना लिङ्गीत्यादिश्लोकश्च साधूक्तः ।

यदप्युक्तं लिङ्गिन्येव लिङ्गमिति तदपि—

**न च लिङ्गिन्येव लिङ्गमिति नियमो वासगृहवत्, शक्यते च लिङ्गे धूमे नियमादग्निरिति वक्तुम्, असन्धुक्षितानग्नित्वात्, स ह्यसन्दीप्तेन्धनावस्थोऽरण्यवस्थो वाऽग्निरधूमकोऽधूमकत्वादनग्निरेव, भस्मच्छन्नस्यापि बाष्पोष्मपुद्गलनिश्चरणात् सेन्धनत्वं सधूमत्वञ्च परमार्थतः तत्परिणामात्, सर्वत्र धूमेऽग्निर्नियतः, तथाऽग्नौ धूमः, एवञ्च लिङ्गं लिङ्गिनि व्यापित्वादेव गमकत्वं भजते, कृतकानित्यत्ववत् ।**

**( न चेति )** न च लिङ्गिन्येव लिङ्गमिति नियमो वासगृहवत्—यथा वासगृहेऽपनीताग्निके लिङ्गिनाऽग्निना विना धूमस्य दृष्टत्वादरणिनिर्मथनावस्थस्येति[वा], शक्यते च लिङ्गे धूमे नियमादग्निरिति वक्तुम्, कस्मात् ? असन्धुक्षितानग्नित्वात्—स[१] ह्यसन्दीप्तेन्धनावस्थोऽरण्यवस्थो वाऽऽग्निरधूमकः, अधूमत्वा-

न्याय्येत्युक्तमेव विशिष्य विशेषाणामगम्यत्वमित्याशङ्कते—**अथोच्येतेति** । व्याचष्टे—**स्यान्मतमिति** । लिङ्गे लिङ्गी भवत्येवेति कारिकार्थं प्रकाशयता त्वया यदग्निवद्भूमो द्रव्यत्वादीनामस्ति प्रकाशको न तैक्ष्ण्यादीनामिति हि व्याख्यातम्, अस्माभिश्च तेषां गम्यत्वं प्रतिपादितमेवेत्युत्तरयति—**इत्येतदपि नेति** । त्वया तैक्ष्ण्यादीनामगम्यत्वं दर्शितम्, मया चाधुना धूमविशेषैस्तत्सहचरा अग्निविशेषा गम्यन्त इति दर्शितं तैक्ष्ण्यादीनां गम्यत्वमित्याह—**त्वया हीति** । तत्रैव स्वोक्तं स्मारयति—**मया तत्रापीति,** दीप्तितैक्ष्ण्यादिविशेषागतिरपि तद्भावदर्शनविधेरेव तथाऽन्यथा च दृष्टत्वादिति तत्राप्युक्तमेवेति भावः । विशेषाणां गम्यगमकभावोऽपि साध्यसाधनभूतयोस्तयोस्तद्भावदर्शनविधेरेव यत्र दृष्टस्तद्गमयति दर्शनबलेन, नतु यत्र च न दृष्टस्तद्व्यवच्छेदेन व्यावृत्तिबलेनेत्याह—**तदपि चेति** । निगमयति—**तस्मादिति** । अथ लिङ्गिन्येव लिङ्गमित्यप्यवधारणं वासगृहादौ भूताग्निके धूमवति व्यभिचरितमिति दूषयति—**न च लिङ्गिन्येवेति** । न चान्ययोगव्यवच्छेदः सम्भवी, भूताग्निके वासगृहादौ भविष्यदग्निकाया निर्मथनावस्थारणौ धूमस्य योगादित्याचष्टे—**न चेति** । अग्निव्यापित्वन्तु धूमस्य वक्तुं शक्यमिति दर्शयति—**शक्यते चेति** । यत्र यत्राग्निस्तत्र तत्र धूमः, न हि धूममन्तरेणाग्निरस्ति, असन्दीप्तेन्धनावस्थस्यारण्यवस्थस्य च प्रागभावलक्षणस्याग्नेरधूमकत्वेनानग्नित्वात, यतो हि स न दहति अत एवानग्निः, अदहनागमनलक्षणस्यानग्नित्वादुदकादिवदित्याह—**असन्धुक्षितेति,** असन्धुक्षितस्यानग्नित्वादित्यर्थः । अग्नि-

१ सि. क्ष. छा. डे. एवादोषस्यापि शेषानु । २ सि. क्ष. छा. डे. नद्य० ।

दनग्निरेव, अगि रगि लगि गत्यर्था इत्यङ्गनात्[1] गमनादग्निः, अनिन्धनो[2] न गच्छति न दहति, अगच्छन्नदहन्ननग्निरेव[3], भस्मच्छन्नस्यापि बाष्पोष्मपुद्गलनिश्चरणान्न सेन्धनत्वं सधूमत्वञ्च, परमार्थतः तत्परिणामात्–अग्न्यभिहतकाष्ठतृणादीन्धनानां सन्दीपनप्रज्वलनज्वालाङ्गारमुर्मुरभस्मच्छन्नोष्ममात्राद्यवस्थासु श्लक्ष्णधूमपरिणामाशून्यत्वात् सर्वत्र धूमेऽग्निर्नियतः, तथाग्नौ धूमः, एवञ्च कृत्वा प्रयोगः–लिङ्गं धूमो लिङ्गिन्यग्नौ व्यापित्वादेव गमकत्वं भजते–विधिवृत्त्यैवेत्यर्थः, कृतकानित्यत्ववदिति दृष्टान्तः, यथा कृतकत्वमनित्यतां व्याप्नुवद्गमयति तथा धूमोऽप्यग्निमिति, एवं[4] लिङ्गे लिङ्ग्यपि भाव्यम्।

**त्वन्मतिवद्भेदं कृत्वा साध्यधर्मस्य लिङ्गित्वे साधनधर्मस्य लिङ्गत्वेऽपि ब्रूमः 'यथा लिङ्गमपि व्यापि लिङ्गिन्यङ्गयपि तत्तथा। व्यापित्वादुभयोर्लिङ्गलिङ्गिता गोविषाणवत्। ( ग्रंथकृतः ) संयोगिवद्वृत्तौ साध्यसाधनयोः प्रदेशधर्मत्वात् प्रसिद्धाप्रसिद्धसम्बन्धित्वविवक्षया धर्मिण एवैकस्य लिङ्गत्वाल्लिङ्गित्वाच्च।**

**त्वन्मतिवदित्यादि,** अस्मन्मतेन साध्यं साधनञ्चैकमेवेत्युक्तत्वात् परस्परव्यापित्वाद्विधिरूपेणैवोभयतोऽपि गम्यगमकता न व्यावृत्त्येत्यत्र किं चित्रम्? त्वन्मतेनापि भेदं कृत्वा साध्यधर्मस्याग्नेर्लिङ्गित्वे[5] साधनधर्मस्य–धूमस्य लिङ्गित्वेऽपि ब्रूमः 'यथा लिङ्गमपि व्यापि' ( ग्रन्थकृतः ) इत्यादिश्लोकः, यथोच्यते

---

शब्दार्थमाह–**अगि रगीति,** अगिधातुर्गत्यर्थे, गत्यर्थाना ज्ञानार्थत्वम्, असन्दीप्तो हि न गम्यते न वा दहति, अज्ञायमानोऽदह्यमानश्च कथमग्निः स्यादिति भावः। ननु भस्मना प्रच्छन्नस्याग्नेः कथमग्नित्वमगमनादित्याशङ्कायामाह–**भस्मच्छन्नस्यापीति,** ततो बाष्पपुद्गलानामूष्मपुद्गलानाञ्च निःसरणमनुभवसिद्धमतोऽग्निर्ज्ञायते, एवं सेन्धनत्वं सधूमत्वं च परमार्थतोऽस्त्येव, धूमो हि परिणामोऽग्नेः, परिणामि चान्तरेण परिणामं न शक्नोति क्षणमपि स्थातुमिति भावः। तदेव व्याकरोति–**अग्न्यभिहतेति,** अग्निनाऽभिहतानि यानि काष्ठतृणादिरूपाणीन्धनानि तेषां सन्दीपनप्रज्वलनाद्या या अवस्थास्तास्वपि सूक्ष्मो धूमपरिणामोऽस्त्येव तस्मात् सर्वत्र धूमेऽग्निर्नियतः, एवं सर्वत्राग्नौ धूमोऽपि नियत एवेति भावः। प्रोक्तविषयफलभूतं प्रयोगमाचष्टे–**एवञ्च कृत्वेति।** लिङ्गं लिङ्गिनि गमकत्वं भजते–धूमोऽग्नौ गमकत्वं भजते, व्यापित्वादित्यर्थः, सर्वाग्निगत्वात्, न हि यस्सर्वानग्नीन् न व्याप्नोति सोऽग्निं गमयितुं शक्नोति, यदि हि धूममग्निर्व्यभिचरेत् तर्हि धूमस्य धूमत्वमेव सन्दिग्धेन, ततः संदिग्धासिद्धो हेतुः स्यादिति भावः। तत्रापि गम्यगमकभावो नान्यव्यावृत्तिरूपेण किन्तु विधिवृत्त्यैवेत्याशयेनाह–**विधिवृत्त्येत्यर्थ इति।** दृष्टान्तमाह–**कृतकेति।** एवमेव लिङ्गी लिङ्गे गमकत्वं भजते व्यापित्वादित्यपि बोध्यमित्याह–**एवं लिङ्ग इति।** इयञ्च लिङ्गलिङ्गिनोः परस्परव्यापित्वेन परस्परगम्यगमकोक्तिरेकस्यैव प्रदेशस्य साध्यत्वं साधनत्वं भजते कृतकानित्यत्ववत्, यथैक एव शब्दोऽभूत्वा भवन् भूत्वा चाभवन् कृतकोऽनित्यश्च तथैक एव प्रदेशेन्धनादिर्भावः साध्यत्वसाधनत्वव्यपदेशं लभत इत्यत्र न किमप्याश्चर्यम्, परन्तु त्वन्मतेन भेदं तयोरङ्गीकृत्यापि परस्परगम्यगमकभाव उच्यत इत्याशयेनाह–**त्वन्मतिवदिति।** त्वन्मतिवदितिपदप्रयोजनं दर्शयति–**अस्मन्मतेनेति,** साध्यं साधनञ्चास्मन्मते एक एव प्रदेशः, अत एव च परस्परव्यापिनी प्रदेशस्य विधिस्वरूपभावभूते साध्यसाधने परस्परं गम्यगमकरूपे भवतः, तव मते तु साध्यसाधनयोरेकान्तं भेदस्तथापि साध्यधर्मस्याग्नेर्लिङ्गित्वं साधनधर्मस्य धूमस्य लिङ्गित्वमपि प्रतिपादयाम इति भावः। श्लोकं कारिकया प्रतिपादयति–**यथा लिङ्गमपीति,** अत्रेत्थं कारिका स्यादिति सम्भाव्यते यथा 'यथा लिङ्गमपि व्यापि लिङ्गिन्यङ्गयपि तत्तथा। व्यापित्वादुभयोर्लिङ्गलिङ्गिता गोविषाणवत्॥' इति। त्वया त्वेवमुच्यत इति तदीयो

---

१ सि. क्ष. छा. डे. इत्यंगमाण्डमना०। २ सि. क्ष. डे. छा. नातित्वनो। ३ सि. क्ष. डे. छा. छन्नवद्दहन्नग्निरेव। ४ सि. क्ष छा डे. एवं लिङ्ग एवं लिङ्गी०। ५ सि. क्ष. छा. लिङ्गित्वे।

त्वया 'कामं लिङ्गमपि व्यापि लिङ्गिन्यङ्गि नु तत्त्वतः। व्यापित्वान्न तु तत्तस्य गमकं गोविषाणवत्' ॥ (प्रमा० स० ) इति, किमुक्तं भवति—सत्यपि किल कृतकानित्यत्ववत् संयोगिवद्वृत्त्याऽन्योऽन्यव्यापित्वे धूम एवाग्नेर्गमको नाग्निर्धूमस्य यथा गोत्वाद्विषाणीति गोत्वं विषाणित्वस्य गमकं न विषाणित्वं गोरिति विषाणित्वस्य गोगजवृषमहिषवराहादिषु व्यभिचारादिति, अत्रापि गम्यगमकनियमोऽस्मन्मतेनेत्येष श्लोकः यथा लिङ्गमपि व्यापीति, अस्य व्याख्या—संयोगिवद्वृत्तावित्यादि, प्रदेशधर्मत्वात् तस्यैव साध्यसाधनत्वोपवर्णनं प्रागुक्तमतिविश्य तथा लिङ्गमपि व्यापि, वात्यादिव्युदासेन, अग्निपरिणामत्वेन बद्धमूलत्वादेरुभयलिङ्गलिङ्गिताऽस्त्येव प्रागुक्ता स्मर्यतां को दोषः ? इति ।

तमेव न्यायं स्मारयति—

**अत एव च यत्तद्गोविषाणवदेकतो व्यभिचाराभावादुभयं लिङ्गं लिङ्गि वा, विषाणं हि प्रमेयत्ववत् व्यभिचारि, इतरवद्गौरव्यभिचारी कृतकानित्यत्वयोस्तूभयमव्यभिचारात्, अस्मदुक्तव्याप्तेर्विधिरूपाया एव गम्यगमकत्वात् 'विधेयार्थप्रचारेण यस्माद्व्याप्तिरपेक्ष्यते। लिङ्गे लिङ्गिनि च व्याप्तिः तस्मात् सत्येव कारणम्' ॥ (ग्रन्थकृतः) इति, न यथा त्वयोच्यते 'प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपोहते। लिङ्गे लिङ्गिनि च व्याप्तिस्तस्मात् सत्यप्यकारणम्' ॥ (प्र० स०) इति, विधेयो भावः नाभावः प्रतिषेध्यः तस्य प्रचारः नाप्रचारः, तदर्थगमनप्रकर्षेण चारः प्रचारः, अन्य न धूमसामान्याग्निमद्वृत्तिवत्, यस्माद्व्याप्तिरेवंविधा परस्परसंसृष्टाऽपेक्ष्यते गतादर्थस्य, अस्मदिष्टा वैविध्येन व्याप्तिरुभयाव्यभिचारात्मिका तस्मात् स्फुटमेवान्वयदृष्टान्तो नोच्यते यत्र यत्र धूमस्तत्र तत्राग्निः, यत्र यत्राग्निस्तत्र तत्र धूम इति, तस्मात् सत्येव साधनम्, तस्माद् दृष्टान्तलक्षणमपि 'साध्येनानुगमो हेतोः साध्याभावे च नास्तिता............... ॥' (प्र० स०) इत्यनर्थकमथवा भ्रान्तम् ।**

कारिकामुद्भावयति-**कामं लिङ्गमपीति**। अस्या अर्थमाह-**किमुक्तं भवतीति,** शब्दे हि कृतकत्वमनित्यत्वञ्च संयोगिवत्, संयुक्ताङ्गुलिद्वयवद्वर्तते, नाधाराधेयभावेन वर्तते, एवमग्निधूमावपि प्रदेशे संयोगिवद्वर्तेते, कृतकत्वानित्यत्ववदेव परस्परव्यापिनौ तथापि यथा कृतकत्वमेव लिङ्गमनित्यत्वमेव लिङ्गि कृतकत्वं ह्यभूत्वा भवनस्वरूपम्, अनित्यत्वन्तु भूत्वाऽभवनस्वरूपम्, उत्पत्त्यभिधानपूर्वकमुपसंहृतिर्यतोऽतोऽनित्यतैव कृतकत्वेनानुमातव्या, तस्यैव सदृशापरापरोत्पत्तिलक्षणभ्रमहेतुसद्भावेनानिश्चितत्वात्, तथा धूम एवाग्नेर्गमको न त्वग्निर्धूमस्येति भावः। तत्र निदर्शनं ददाति-**यथा गोत्वाद्विषाणीति,** विषाणित्वेन गोव्यापित्वेऽपि न तस्य गोगमकत्वम्, गजवृषभादौ तस्य सत्त्वेन व्यभिचारात्, व्यापित्वात्तु विषाणित्वं गोत्वस्य गम्यं भवतीति भावः। तत्कारिकाशब्दार्थस्तु लिङ्गिनि लिङ्गमपि यथेप्सितं व्यापि भवतु, परमार्थतस्तु लिङ्गी व्यापी भवति, व्यापित्वस्य गम्यतासमानाधिकरणत्वात्, अत एव व्यापित्वेन लिङ्गं लिङ्गिनो न गमकम्, गोविषाणवदिति गम्यगमकभावनियमो लिङ्गलिङ्गिनोरस्मन्मतेन सम्भवतीति कारिकया दर्शयति-**यथा लिङ्गमपीति,** तत्प्रदेशेन्धनादिसम्बन्धमुपगम्य स एवाग्निर्धूमो भवति तस्मात् प्रदेशधर्मौ तौ संयोगिवद्वर्तेते, तौ च विधिरूपावेव दृश्येते न त्वधूमव्यावृत्त्यनग्निव्यावृत्तिरूपौ, यत्र धूमाग्नी न दृष्टौ तयोस्तद्व्यवच्छेदमात्ररूपतायां निःस्वभावत्वे खपुष्पतुल्यत्वादनिष्टप्राप्तिः स्यात्, एवञ्च प्रदेशधर्मत्वात् संयोगिवद्वृत्तेः तस्यैव च प्रदेशस्य प्रसिद्धाप्रसिद्धलिङ्गलिङ्गिद्वारेण साध्यत्वात् साधनत्वाच्च यथा लिङ्गी व्यापी भवति तथा लिङ्गमपि वात्यादिपरिहारेण व्यापि भवति, यत बद्धमूलत्वादिविशेषणविशिष्ट एव धूमोऽग्नेः परिणामः, तथाविधौ च धूमाग्नी परस्परव्यापिनौ भवतस्तथा प्रसिद्धाप्रसिद्धसम्बन्धित्वनिबन्धनलिङ्गलिङ्गिता चेति प्रागुपपादितमेवेति भावः। अमुमेव न्यायं स्मारयति-**अत एव चेति,** उभयलिङ्गलिङ्गित्वादेव चेत्यर्थः। पूर्वं प्रतिज्ञात यत्त्वन्म-

**अत एव चेत्यादि** सहेतुकं प्रतिज्ञातं निगमयति यस्माद्गोविषाणवत्—यच्छब्दो यस्मादर्थे, तच्छब्दसन्निर्देशे, यस्माद्गोविषाणवदेकतो न व्यभिचरति तस्मादुभयं लिङ्गं लिङ्गि वेति ग्राह्यम्, तद्व्याख्या—विषाणं हीत्यादि, असाधर्म्यदर्शनं[1] गोविषाणयोः कृतकानित्यत्वयोश्च गतार्थं प्रमेयत्ववत् व्यभिचारि विषाणित्वम्, इतरो धूमः तद्वद्गौरव्यभिचारीति, किं कारणमित्थमिति चेत्—अस्मदुक्ताया व्याप्तेर्विधिरूपाया एव गम्यगमकत्वादिति, अत आह—'विधेयार्थे'त्यादि श्लोकः, अत्रापि न यथा त्वयोच्यते—प्रतिषेध्याप्रचारेणेत्यादि, तद्व्याख्या—विधेयो भाव इत्यादि, भावग्रहणमभावरूपायाः व्याप्तेर्निराकरणार्थम्, कस्माद् ? अर्थत्वादेव तस्य भावस्य नाभावः प्रतिषेध्यः, तत्राप्रचारः स चाप्रमाणफलं भवितुमर्हति, अर्थान्तरस्यात्यन्ताभावस्य वा विवक्षितत्वात्, प्रागुक्तदोषसम्बन्धाच्च, प्रकर्षेण गतिः प्रचारः—वस्तुयथाभावावगम इत्यर्थः, अनुत्पिञ्जलगमनिकेति[2], तदर्थगमनमन्यथागमनम् वैधर्म्येण, न यथा त्वदिष्टमिति दर्शयति, न धूमसामान्याग्निमद्गतिवदिति,

---

तिव द्वैद कृत्वा साध्यधर्मस्य लिङ्गत्वे साधनधर्मस्य लिङ्गित्वेऽपि गम्यगमकता ब्रूम इति तत्सहेतुकं निगमयतीत्याह—**सहेतुकमिति**। अत एव चेति पदेन हेतुरुपनिबद्ध, धूमस्याग्निपरिणामत्वेन बद्धमूलत्वादिविशेषणयुतस्यैव तस्य परिणामत्वेन तथाविधनत्सत्त्वेऽग्नेरग्निसत्त्वे च तथाविधस्य तस्य सद्भावेनाव्यभिचारादुभयलिङ्गलिङ्गित्वादेव गोविषाणवैधर्म्येणाग्निधूमोभयं लिङ्गत्वं लिङ्गित्वञ्च भजत इति भाव.। **यस्मादिति,** यस्माद्गो· साध्यत्वे विषाणित्व व्यभिचरति, न च विषाणित्वस्य साध्यत्वे गोत्वं व्यभिचरतीत्येकतो व्यभिचारि विषाणित्वं धूमाग्नी तु न तथा तस्मादुभयं लिङ्गं लिङ्गि वा यथाविवक्षं भवत इति भाव । उक्तमेव व्याख्यया पोषयति—**तद्व्याख्येति,** गो साध्यत्वे प्रमेयत्ववद्विषाणित्वं व्यभिचारि विषाणित्वस्य साध्यत्वे धूमवद्गोत्वमव्यभिचारीत्येकतो व्यभिचारः, कृतकत्वानित्यत्वयोस्तूभयथाऽपि न व्यभिचारः, इदमेव गोविषाणयो· कृतकानित्यत्वयोश्चासाधर्म्यमिति भाव.। ईदृशे वैविध्ये किं निबन्धनमित्यत्राह—**अस्मदुक्ताया इति,** तद्भावदर्शनाद्विधिरूपेण साध्यसाधनयोर्गम्यगमकभावस्योक्तत्वादिति भावः । इदमेव निबन्धनं कारिकया स्वया दर्शयति—**विधेयार्थेतीति** 'विधेयार्थप्रचारेण यस्माद्व्याप्तिरपेक्ष्यते । लिङ्गे लिङ्गिनि च व्याप्ति तस्मात सत्येव कारणम् ॥' इति कारिकाऽत्र सम्भाव्यते । त्वया लिङ्गे लिङ्गिनि च स्वलक्षणे सत्यपि व्याप्ति. कारणत्वेन नेष्यते तत्र प्रत्यक्षातिरिक्तप्रमाणप्रवृत्त्यनभ्युपगमात, तदतिरिक्तप्रमाणानाञ्च प्रतिषेध्येऽप्रवृत्त्या तदपोहलक्षणसामान्य एव प्रवृत्तिरभ्युपगम्यते, यत उच्यते त्वया 'प्रतिषेध्याप्रचारेण यस्माद्व्याप्तिरपोहते । लिङ्गे लिङ्गिनि च व्याप्तिस्तस्मात सत्यप्यकारणम् ॥' इति तदयुक्तमित्याशयेनाह—**अत्रापीति,** यथा त्वया कारिकयोच्यते न तथा, किन्तु सा कारिका परिवर्त्येत्थं पठनीयेति भाव·। कारिकां व्याचष्टे—**विधेयो भाव इति,** विधिरूपधर्मावच्छिन्नो भाव·, न तु व्यावृत्तिस्वरूपधर्मावच्छिन्नोऽभावरूप·, अर्थ्यमानत्वात, न ह्यर्थक्रियार्थं केनचिदप्यभावोऽर्थ्यते, विधेयात्मनो हि भावस्यैव याथात्म्येनावगम· प्रमाणैर्भवति, भावत्वव्याप्यत्वात् प्रमाणानाम्, किं तु वह्न्यादिशब्देभ्य प्रतिषेध्येऽनग्न्यादौ प्रमाणप्रवृत्त्यभावादपोहगता व्याप्तिरेवापेक्ष्यते यत्राधूमव्यावृत्तिस्तत्रानग्निव्यावृत्तिरिति न स्वन्वयभूतभावनिष्ठा व्याप्तिरपेक्ष्यते यत्र धूमस्तत्राग्निरिति तत्तु न शक्यमभ्युपगन्तुम्, अभावे प्रमाणाप्रवृत्त्याऽप्रमाणफलत्वापत्ते तस्माद्भावनिष्ठा व्याप्तिरपेक्ष्यत एवेति भावः। **नाभाव इति,** अभावो न प्रतिषेद्धुं योग्य· प्रतिषेध्यत्वस्य भावत्वव्याप्तत्वादिति भावः । यदि प्रतिषेध्येऽन्यस्मिन प्रमाणप्रवृत्त्यभावात् तदपोह एवापेक्ष्यते तर्ह्यनग्निव्यावृत्त्यधूमव्यावृत्तिभ्यामर्थान्तरस्याग्निधूमभिन्नस्य घटपटादेरत्यन्ताभावरूपस्य खपुष्पस्य वाऽग्निधूमाभ्यां गतिः स्यादित्यनुमानाप्रामाण्यापत्तिरित्याशयेनाह—**अर्थान्तरस्येति**। एवञ्च विधेयार्थस्य प्रकर्षेण गति.—वस्तु येन रूपेणाऽस्ति तथाभावावगमः विधेयार्थप्रचार इत्याह—**प्रकर्षेणेति**। **अनुत्पिञ्जलगमनिकेति,** शिष्टकारिकाया गमनिका—व्याख्या, अनुत्पिञ्जला-अत्यन्ताव्याकुला-परिस्फुटेत्यर्थ । प्रकृष्टगतिं दर्शयति—**तदर्थगमनमिति,** यत्र धूमस्तत्राग्निरिति गमनं तदर्थगमनम्, तद्विपरीतेन गमनमन्यथागमनं यत्र यत्राग्निस्तत्र तत्र धूम इति। न तु त्वदिष्टा गति· केवलं धूमादेवाग्निगति· प्रकृष्टगतिर्भवतीत्याह—**न धूमसामान्येति,**

---

१ सि. श्र. छा. डे. असाधर्म० । २ सि. डे. अनुत्पिञ्जगम० ।

एकतो व्याप्तिं त्रिधामित्यादिकल्पां दर्शयति, यस्माद्व्याप्तिरेवंविधा परस्परसंसृष्टाऽपेक्ष्यते गतावर्थस्य, तस्मात् सत्येव व्याप्तिः साधनमित्यभिसंभत्स्यते, विशब्दस्य [2]वैविध्यार्थत्वात् तद्दर्शयति–अस्मदिष्टा वैविध्येन व्याप्तिरुभयाव्यभिचारात्मिका तस्मात्किम् ? स्फुटमेवान्वयात्मको दृष्टान्तो नोच्यतेऽस्माभिः, यत्र यत्रेत्यादिरुभयव्याप्तिप्रदर्शनो गतार्थो यावत् सत्येव साधनमित्युक्त्युपसंहार इति, तस्मात् दृष्टान्तलक्षणमपि 'साध्येनानुगमो हेतोः' इत्यादिप्रयोगनियमाभिधानात्मकमनर्थकम्[3]अथवा भ्रान्तञ्च ।

अत्रान्वयिधूमः—

**यथाऽग्निसान्निध्यार्थविशेषणैर्धूमात्मलाभाद्धूमवत्त्वमग्निसान्निध्यसाधकं तथा शब्दकृतकत्वं, पूर्वपूर्ववर्णविनाशस्योत्तरोत्तरवर्णोत्पत्तेः कारणत्वात्, शिवकादिविनाशक्रमेण घटकृतकत्ववत्, अस्मादेव च न्यायाद्यदप्युक्तं त्वया 'नाशिनः कृतकत्वेने'त्यादि तदप्येवमव्ययं 'नाशिनः कृतकत्वेन व्याप्तेस्तत्कृतकं कृतम् । अनित्यत्वमभिव्याप्त्या कृतकेऽर्थे प्रदर्श्यते ॥ तद्व्याख्या चैवं.................. .... ..कृतकत्वस्यानित्यत्वमिति, एतस्मादेव न्यायात् यो ह्युक्तः 'विषाणित्वेन गौर्व्याप्तः' इत्यादिश्लोकः सोऽपीत्थं पठितव्यः, 'विषाणित्वेन गौर्व्याप्तो विषाणित्वं प्रसाधयेत् । गव्येवानियमात्तु न गवार्थप्रसाधनम् ॥' गोत्वाद्विषाणीति संयोगिवद्विधिवृत्तेः साधयेत् विषाणितां गोत्वम्, तेनैव नियतत्वात्, विषाणित्वं पुनरस्मादेव न्यायात् गवार्थं न साधयेत्, एवं तावदाधाराधेयवद्वृत्तिपक्षे दोषाः संयोगिवद्विधिवृत्तिपक्षे गुणाश्चेति द्वयमप्युक्तम् ।**

**यथेत्यादि,** एवं कृत्वा यथाऽग्निसान्निध्यार्थैर्विशेषणैः धूमात्मलाभादग्निसान्निध्यसाधकं [धूमवत्त्वं] तथा कृतकत्वं घटादौ घ[ कारा कार ]टंकाराऽकारविसर्जनीयानां पूर्वस्य पूर्वस्य विनाश उत्तरोत्तरोत्पत्तेः कारणं तत एव विनाशि, अनित्यत्वादुत्पत्तेः कृतकत्वस्यात्मलाभादनित्यत्वसान्निध्यं गमयतीत्युभयतो व्याप्तिः

सामान्यपदमन्यव्याप्तिद्योतकम् । कुत इत्यत्राह–**यस्मादिति,** अर्थस्य गतौ यस्मात् परस्परसंसृष्टा व्याप्तिरपेक्ष्यते तस्मादित्यर्थः । एवञ्च विद्यमानव्याप्तिः कारणमेव नाकारणमिति दर्शयति–**तस्मादिति** । कथं व्याप्तिः परस्परसंसृष्टेत्यत्राह–**विशब्दस्येति,** विविधप्रकारेणाभिव्याप्तिरित्यत्र वीत्युपसर्गस्य वैविध्यार्थत्वादिति भावः । कथं वैविध्यं विवक्षितमित्यत्राह–**अस्मदिष्टेति** । परस्परव्याप्तिरग्निपरिणामभूतबद्धमूलत्वादिविशेषणविशिष्टधूमस्याग्नेश्च प्रसिद्धाप्रसिद्धसम्बन्धित्वविवक्षयैकस्यैव प्रदेशस्य साध्यसाधनत्वयोरस्मदिष्टा, अत एव यत्र धूमस्तत्राग्निरिति यत्राग्निस्तत्र धूम इति दृष्टान्तो नोपदर्श्यते, व्याप्तिग्रहार्थं हि दृष्टान्तप्रदर्शनम्, व्याप्तिश्चाग्नितत्परिणामधूमविशेषयोः परिणामपरिणामिभावादेव परिस्फुटमवगतैवेति नार्थस्तेनेत्याशयेनाह–**स्फुटमेवेति** । एवं परार्थानुमानेऽवश्यं दृष्टान्तप्रयोगः कार्य इत्यपि नियमोऽनर्थकः, रन्धनगृहेऽस्मिन् धूमोऽन्वयीति नियमेनाभिधानं भ्रान्तमेव, दृष्टान्तमन्तरेणापि उभयाव्यभिचारात्मकव्याप्तिज्ञानसम्भवादित्याह–**तस्मात् दृष्टान्तेति** । अग्निधूमयोर्यथोभयाव्यभिचारात् परस्परसंसृष्टा व्याप्तिस्तथैव कृतकानित्यत्वयोरपीति दर्शयति–**यथेति** । सामान्यतो धूमे साध्येऽग्निरिवाग्नौ साध्ये धूमोऽपि व्यभिचारीत्युभयव्यभिचारवारणायाग्निपरिणामभूतस्य बद्धमूलत्वादिविशेषणविशिष्टस्यैव धूमस्य गमकत्वात् स यथाऽग्निमत्त्वं गमयति तथाऽग्नेः सन्निहितत्वं निमित्तत्वञ्च गमयति तद्वत् शब्दनिष्ठं कृतकत्वमपीत्याह–**एवं कृत्वेति,** अग्निसान्निध्यगमकैर्बद्धमूलत्वादिविशेषणैर्युतस्यैव धूमस्याग्नित आत्मलाभादग्निवदग्निसान्निध्यसाधकत्वं यथा तथा घटादिशब्दगतकृतकत्वस्यापि, तद्धि कृतकत्वं पूर्ववर्णविनाशमन्तरेण

१ सि. क्ष. छा. डे. गतावर्थस्य । २ सि. क्ष. छा. डे. द्वैविध्या० । ३ सि. क्ष. छा. डे. °कंमुवाभ्रांतं वाक्त्वापिधूमः । ४ सि. क्ष. डे. छा. सान्निध्यार्थैर्वि० । ५ सि. क्ष. छा. डे. °टाका० । ६ सि. क्ष. छा. डे. °दनित्यत्वसान्निध्यमेवानित्यत्वसान्निध्यं ।

सत्येव कारणम्, शिवकादिविनाशक्रमेण, एतदर्थभावना गतार्था, अग्निसान्निध्यार्थेत्यादि[1] यावद्धूमकृतकत्ववदिति, तथा शब्देऽपि भावयितव्यं प्रयत्नान्तरीयकत्वानित्यत्वयोरिति, अस्मादेव च न्यायाद्यदप्युक्तं त्वया 'नाशिनः कृतकत्वेन' इत्यादिकारिकया[2] एकतो व्याप्तिगमकत्वप्रदर्शनार्थं[3], तदप्येवमन्ययं 'नाशिनः कृतकत्वेन व्याप्तस्तत्कृतकं कृतम्। अनित्यत्वमभिव्याप्त्या कृतकेऽर्थे प्रदर्श्यते ॥' ( ) तद्व्याख्या चेय[4]मित्यादि यावत् कृतकत्वस्यानित्यत्वमिति, गतार्थम्, स्थापितमित्यनुवर्त्तनादिति, एतस्मादेव न्यायाद्यो युक्तः 'विषाणित्वेन गौर्व्याप्तः' इत्यादि श्लोकः सोऽपीत्थं पठितव्यः 'विषाणित्वेन गौर्व्याप्तो विषाणित्वं प्रसाधयेत्।' गोत्वाद्विषाणीति संयोगिवद्विधिवृत्तेः साधयेद्विषाणिनां गोत्वम्, तेनैव नियतत्वात्, विषाणित्वं पुनरस्मादेव न्यायात् 'गव्येवानियमात्तत्तु न गवार्थप्रसाधनम्' [ एवं ] तावदित्यादि भक्त्याऽर्थोपसंहारो द्वयमप्युक्तम्, अन्यापोहविशिष्टार्थैकदेशान्वयदर्शनादनुमानमभिधानं वा आधाराधेयवद्वृत्त्या न गमयतीत्युक्तम्, अत्र च पक्षे कांश्चिद्दोषानित्यादि[5]गाम यदीदृशं न पाठान्तरम्, संयोगिवद्विधिवृत्त्योभयतो व्याप्त्या गमयतीत्यत्र च पक्षे गुणानभ्यधामेत्येवंशब्देन स्मारयति।

न सम्भवति, यथा शिवकस्थासककोशकुशूलादिपूर्वपूर्वस्य भावाविनाशमन्तरेणोत्तरोत्तरस्वभावो नोत्पद्यत इति पूर्वस्वभावविनाश उत्तरस्वभावोत्पत्तेर्हेतुस्तथोत्तरवर्णोत्पत्तावपि पूर्वपूर्ववर्णविनाशो हेतुः, एवं पूर्वपूर्वस्योत्पत्तिं विना विनाशोऽपि न भवति, अत उत्पत्तिरपि हेतुर्विनाशस्य, विनाशोऽनित्यत्वं, उत्पत्तिः कृतकत्वम्, एवञ्च कृतकत्वे सति अनित्यत्वस्यावश्यम्भावस्य, अनित्यत्वे सति कृतकत्वस्याभिव्यक्तस्य चावश्यं भावादुभयतो व्याप्तिः कृतकत्वमनित्यत्वसान्निध्यं गमयतीति भावः। ननूभयतो व्याप्तिः सत्येव यदि कारणं तर्हि यत्रोभयतो व्याप्तिर्नास्ति प्रयत्नानन्तरीयकत्वानित्यत्वादिस्थले तत्र कथं प्रयत्नानन्तरीयकत्वस्य गमकत्वमित्याशयेनाह—**तथा शब्देऽपीति,** विद्युदभ्रादावपि प्रयत्नानन्तरीयकत्वं प्राक् साधितमेव, अत उभयतो व्यभिचाराभावात् परस्परस्पृष्टा व्याप्तिः सत्येव कारणमिति भावः। एवञ्चैकतो व्याप्तिगमकत्वप्रदर्शनपरकारिका त्वदीया किञ्चित्परिवर्त्य पठ्यमाना युज्यत इत्याशयेन तदीयकारिकां दर्शयति—**नाशिन इति,** अनित्यत्वस्याविनाभाविना कृतकत्वेन व्याप्तौ सत्यामपि प्रयत्नानन्तरीयकत्वव्याप्तिमताऽनित्यत्वेन प्रयत्नानन्तरीयकत्वं यथा नाऽनुमीयते तथा नानित्यत्वस्य गमकत्वम्, कृतकत्वस्याविनाभाविनाऽनित्यत्वेन व्याप्तिस्तु कारणमिति तत्कारिकाभावार्थ, परिवर्त्य पठति—**नाशिनः कृतकत्वेनेति।** अत्र व्याख्या न स्फुटाऽतो न व्याख्यायते। एकतो व्याप्तिर्गमकत्वे निदर्शनतया प्रोक्ता कारिका प्रदर्श्य तां परिवर्त्य पठति—**एतस्मादेवेति,** विषाणित्वेन व्याप्तो गौरविषाणिनिवर्त्तकः, तथाविवक्षितत्वात्, गोत्वेन व्याप्तं विषाणित्वं नागवार्थनिवर्त्तकमविवक्षितत्वादिति तदीयकारिकार्थः। परिवर्त्य पठितां कारिकां दर्शयति—**विषाणित्वेनेति।** गोत्वं विषाणित्वञ्च गवि संयुक्तकुण्डलिद्वयवदधिरूपेण वर्त्तते न त्वगोव्यावृत्तिरूपेणाविषाणिव्यावृत्तिरूपेण च, ययोश्च यथाभावेन दर्शनमस्ति तयोस्तथाभावेनैव सिद्धिर्भवति, गोत्वस्यैव विषाणित्वेन नियतत्वं दृष्टमतो गोत्वं विषाणित्वं गमयति, विषाणित्वस्य गोत्वेन नियतत्वं न दृष्टमपि तु अनियतत्वमेव दृष्टमतस्तन्न गवार्थगमकमिति भावमाह—**गोत्वादिति।** गव्येव विषाणित्वमस्तीति नियमाभावात्तन्न गोरूपमर्थं साधयितुमलमित्याह—**विषाणित्वं पुनरिति।** तथा दृष्टविधिवृत्तेरनुमानमित्यस्मादेव न्यायादनियतरूपत्वेनैव दृष्टत्वान्नानुमानमिति भावः। नन्वेवं तद्भावदर्शनविधेरेव गमकत्वागमकत्वे विभज्योपदर्शिते इत्युपसंहरति—**एवं तावदिति,** अधूमाग्निव्यावृत्ते पक्षेऽधूमव्यावृत्तिदर्शनादनग्निव्युदासेनाग्निप्रतीतिराधाराधेयवद्वृत्त्या भवतीत्यनुमानम्, शब्दोऽपि तथाऽनुमानमित्येवं यस्तव पक्षस्य न सम्भवतीति दोषा यथाऽस्माभिस्त्वदीयाः कारिकाः परिवृत्य प्रदर्शितास्तथाऽनभ्युपगमे प्रदर्शिता संयोगिवद्विधिवृत्त्योभयतो व्याप्त्या गमयतीत्यत्र च गुणा उक्ता इति भावः। नन्वभिधानाभिधेयसम्बन्धोऽनुमानानुमेयसम्बन्ध एव, यथैवान्वयव्यतिरेकाभ्यां धूमादग्न्यनुमानं तथैव शब्दादर्थानुमाने तावन्वयव्यतिरेकौ तुल्यातुल्ययोर्वृत्त्यवृत्त्यात्मकौ द्वारं भवतः

१ सान्निध्यार्थेवि० सि. क्ष. छा. डे. कारिकाया ए० । २ सि. क्ष. छा. डे. प्रदर्शनार्थं । ३ सि. क्ष. डे. छा अनित्यत्वत्वदभिव्याप्त्या कृतकोऽर्थे प्रदर्शिते । ४ सि. क्ष. छा. डे. जेय० । ५ सि. क्ष. छा. डे. °नितिद्दामयदीदृशान ।

किञ्चान्यत्—

**यत्पुनर्निरुक्तीकृत्यान्वयासम्भवं व्यतिरेकासम्भवमाशङ्क्योक्तं स्यादेतद्व्यतिरेकस्याप्यसम्भव इति, तद्युक्तमुक्तम्, उक्तसंयोगिवद्विधिवृत्तिमन्तरेणान्वयव्यतिरेकयोरभावात्, अन्वयव्यतिरेकौ हि प्रत्ययात्मकौ, न वस्तुगते तुल्यातुल्ययोर्वृत्त्यवृत्ती त्वदुक्ते, विशेषस्यैव वस्तुत्वात् ।**

**यत्पुनर्निरुक्तीकृत्येत्यादि,** त्वयाऽन्वयव्यतिरेकावर्थानुमाने द्वारमित्युक्त्वा गुणसमुदाये डित्थाख्येऽर्थे काणकुण्टाद्यवयवान्वयानभिधानादन्वयासम्भवं निरुक्तीकृत्यान्वयासम्भव[व]द्व्यतिरेकासम्भवमाशङ्क्योक्तं स्यादेतद्व्यतिरेकस्याप्यसम्भव इति तद्युक्तमेतत्त्वयोक्तम्, कस्मात्? उक्तसंयोगिवद्विधिवृत्तिमन्तरेणान्वयव्यतिरेकयोरभावात्, तयोरेव तावल्लक्षणम्, अन्वयव्यतिरेकौ हि प्रत्ययात्मकौ—समानभवनानुवृत्तिप्रत्ययोऽन्वयः, तद्विपरीतो व्यतिरेकः, न वस्तुगते तुल्यातुल्ययोर्वृत्त्यवृत्ती त्वदुक्ते, कस्मात्? विशेषस्यैव वस्तुत्वात्, अस्य नयस्य स्याद्वादेऽनेकात्मकत्वात् ।

तत्रान्वयाभाव उक्त एव त्वया, अस्माभिश्च त्वन्मतवत् व्यतिरेकाभावोऽधुनोच्यते—

**न च सम्भवोऽस्ति लिङ्गस्य सर्वान् व्यावर्त्यान् व्यतिरेचयितुम्, आनन्त्यात्, सर्ववृक्षार्थान्वयवत्, यत्तूच्यतेऽतुल्ये सत्यप्यानन्त्ये ततोऽन्यस्याभावमात्रं सामान्यतो व्यतिरेचनीयं लिङ्गेनेति, अत्र ब्रूमः, न दृष्टवल्लिङ्गं लिङ्गिनं यदि प्रकाशयेत् सर्वत्र लिङ्गिन्यदर्शनात्तल्लिङ्गं लिङ्गमेव न स्यात्, अगतिर्वा सर्वथा भवेत्, लिङ्गमपदेशः कारणं निमित्तमित्यादि, तत्र विशेषस्यैव वाच्यत्वादनुमेयत्वाच्च सामान्यस्यासत्त्वादेव पूर्वमदृष्टत्वे विशेषस्यैव दृष्टस्य कल्पितसामान्योपसर्जनद्वारेण वाच्यत्वम् शब्दस्यापि तथैव वाचकत्वम्, तथाऽनुमानेऽपि, भेदाविवक्षापादितैकत्वसामान्यलिङ्गभावापन्नधर्मस्तथाभावितैकत्ववाच्यलिङ्ग्यभेदात्तद्भावदर्शनादेव गम्यो गमकश्च ।**

---

तत्र तु तुल्ये नावश्यं सर्वत्र वृत्तिरन्वयः, अर्थस्य क्वचिदानन्त्य आख्यानासम्भवात्, न हि वृक्षशब्दस्य सर्वेषु वृक्षेषु दर्शनेनापि वृत्तेराख्यानसम्भवः, तस्मान्नानुमानमित्यन्वयाभावः, यद्यपि कर्चिद्रूपादिषु सम्भवोऽस्ति तथापि काणकुण्टादिगुणसमुदायरूपस्य डित्थादेः सर्वात्मनाऽप्रतीतेर्न तद्वारेणानुमानम्, अत एव व्यतिरेकस्यातुल्ये सर्वस्मिन्नवृत्तिस्वरूपस्याप्यसम्भव इति यदुक्तं त्वया तदपि युक्तमेवोक्तमिति प्रदर्शयितुं तन्मतमाह-**यत्पुनरिति** । व्याचष्टे-**त्वयेति,** व्याख्या स्पष्टा । तदुक्तियुक्ततासाधकमाह-**उक्तसंयोगिवदिति,** एकस्यैव प्रदेशस्य लिङ्गित्वाल्लिङ्गत्वाच्च साध्यसाधनवत्तया भेदाविवक्षायामङ्गुल्योरिव संयोगिवद्विधिवृत्त्याऽन्योऽन्यप्रधानोपसर्जनभावेन नियमेन भवन्तौ तावग्निधूमादिधर्मौ साध्यसाधने भवत इति पूर्वोदितसंयोगिवद्विधिवृत्तिमन्तरेण नान्वयव्यतिरेकौ भवत इति भावः । त्वया तुल्ये सर्वत्र वृत्तिरन्वयः, अतुल्ये सर्वत्रावृत्तिर्व्यतिरेक इति वस्तुनो धर्मभूतौ सामान्यस्वरूपावन्वयव्यतिरेकौ प्रदर्शितौ, अस्मिंश्चोभयनियमारेऽनेकात्मकवस्तुविषयस्याद्वादस्यैकदेशभूतानेकात्मकविशेषस्यैव वस्तुत्वाभ्युपगन्तरि त्वदुक्ततथाविधवृत्त्यवृत्त्यभावादन्वयव्यतिरेकौ ज्ञानस्वरूपावित्याशयेनाह-**तयोरेव तावदिति,** अन्वयव्यतिरेकयोरेव तावदित्यर्थः, समानभवनात्मा याऽनुवृत्तिस्तद्विषयज्ञानमन्वयः, असमानभवनरूपव्यावृत्तिविषयविज्ञानं व्यतिरेक इति तयोर्लक्षणमिति भावः । त्वदुपदर्शितौ पदार्थधर्मौ न ताविंत्याह-**न वस्तुगते इति** । अन्वयाभावस्य त्वयैवोपपादितत्वादधुना व्यतिरेकासम्भव एव मयोच्यत इत्यवतारयति मूलम्-**तत्रान्वयाभाव इति** । लिङ्गं शब्दो धूमादिसाधनं वाऽन्यान् व्यावर्त्यानपोढुमसमर्थमित्याह-**न च सम्भव इति** । तत्र शब्दात्मकं लिङ्गमुपादाय व्याकरोति-**वृक्षशब्दस्येति,**

१ सि. क्ष. छा. डे असाद्युक्त० ।

**न च सम्भवोऽस्तीत्यादि,** वृक्षशब्दस्य शक्तिर्नास्ति सर्वानवृक्षान् व्यतिरेचयितुम् कस्मात्? आनन्त्यात्, आनन्त्ये हि भेदानामित्यादिग्रन्थव्याख्यातन्यायवदवृक्षार्थानां घटपटादीनामानन्त्याद्व्यतिरेचनाभावे न्यायो द्रष्टव्यः, सर्ववृक्षार्थान्वयवदिति दृष्टान्तः यथा सर्वे वृक्षार्था आनन्त्यात् सम्बन्धाशक्यत्वादन्वयाभावेनानभिधेयाः तथा बहुतरव्यावर्त्यघटपटाद्यनन्तत्वादव्यतिरेकः, तथा धूमस्योदकादिसर्वानग्निव्यतिरेचने सामर्थ्याभावो वाच्यः, सर्ववृक्षानन्त्यादन्वयवदिति, अत्र परिहारस्त्वयोक्त आशंक्यते–यत्तूच्यत इत्यादि, अन्वयगतदोषेभावं व्यतिरेकगतगुणञ्च दर्शयति ग्रन्थः–अतुल्ये सत्यप्यानन्त्य इत्यादि, ततोऽन्यस्याभावमात्रं सामान्यतो व्यतिरेचनीयं तद्भेदरूपाण्यसंस्पृ[श]ता शब्देन लिङ्गेन वा, तस्माददोष इति परिहारः, अत्र ब्रूमः, न दृष्टवदित्यादि, यदि दृष्टवद्विधिरूपेण लिङ्गं लिङ्गिनं न प्रकाशयेत् सर्वत्र लिङ्गिन्यदर्शनात्तल्लिङ्गं लिङ्गमेव न स्यात्, अगतिर्वा सर्वथा भवेत् कस्यचिदप्यर्थस्येति पिण्डार्थः, एतद्व्याख्या–लिङ्गमपदेशः कारणं निमित्तमित्यादिपर्यायकथनम्, शब्दः परार्थः, धूमादिः स्वार्थः, वाच्यवाच-

---

वृक्षशब्दस्य ह्यर्थोऽवृक्षव्यावृत्तिमान् वाच्यः, तत्रावृक्षो वृक्षभिन्नो घटपटादिशब्दवाच्यो घटपटादिस्तथा च यथा सर्ववृक्षेषु वृक्षशब्दस्य शक्तिर्नास्ति तथा तान् घटपटादीन् व्यावर्त्तयितुमपि तस्य शक्तिर्नास्ति, आनन्त्याद्व्यावर्त्यानामिति भावः। तमेव हेतुमाह–**आनन्त्यादिति** । प्रागुक्तहेतुव्याख्यानमत्रातिदिशति–**आनन्त्ये हि भेदानामित्यादीति** । भेदानां ह्यानन्त्ये घटपटादीनां सम्बन्धः शब्देनाख्यातुमशक्यः, न चाकृतसम्बन्धस्तेषामभिधायको यथा तथैव व्यावर्त्यानां भेदानामानन्त्याच्छक्त्यग्राहितया न घटपटादीन् व्यावर्त्तयितुं क्षम इति भावः । दृष्टान्तमाह–**सर्ववृक्षार्थेति** । दृष्टान्तं विशदीकरोति–**यथा सर्वे इति** । दार्ष्टान्तिकमाह–**तथा बहुतरेति** । अथ साधनात्मकं लिङ्गमुपादाय व्याकरोति–**तथा धूमस्येति,** यथा निखिलानां वृक्षाणामानन्त्येन शब्देन सह सम्बन्ध आख्यातुमशक्यस्तथाऽनग्निव्यावृत्तिमद्गमकतयेष्टस्य धूमस्यानग्निभूतान् घटपटादीन् व्यावर्त्यान् शक्त्यग्राहितया व्यावर्त्तयितुं नास्ति सामर्थ्यमिति भावः । ननु भवतु वृक्षशब्देन सर्ववृक्षाणामभिधानासम्भवः सम्बन्धाशक्यत्वात्, व्यतिरेचनन्तु सम्भवति, नहि येऽवृक्षा घटपटादयो विशेषास्ते व्यावर्त्तनीयाः किन्त्ववृक्षसामान्यं व्यावर्त्त्यं शब्देन, लिङ्गेन चानग्निसामान्यमित्याशङ्कते–**यत्तूच्यत इत्यादीति** । यद्वस्तु येन रूपेण दृश्यते तत्तथाऽप्रतिबोधयल्लिङ्गं शब्दो वा कथं तल्लिङ्गं शब्दो वा स्यात्, ताभ्यां हि येन रूपेण बोध्यते वस्तु न तथा तद् दृश्यते तस्मात् कस्यचिदप्यर्थस्यावगतिर्नैव स्यादित्याशयेनोत्तरयति–**न दृष्टवदिति** । **सर्वत्र लिङ्गिनीति,** न हि सर्वत्र लिङ्गिनि लिङ्गस्य सम्भवोऽस्तीत्युक्तत्वात् सर्वलिङ्ग्यप्रकाशकत्वेन न तल्लिङ्गमिति भावः । अन्यापोहरूपेण वस्तुनोऽदर्शनात्तथा बोधनेऽगतिः पदार्थानामित्याह–**अगतिर्वेति** । लिङ्गपदेन शब्दहेत्वोर्ग्रहणे युक्तिमाह–**लिङ्गमपदेश इति,** लिङ्गं हेतुरपदेशः शब्द इति पर्यायत्वात् स्वार्थलक्षणं लिङ्गं परार्थलक्षणोऽपदेशरूपः शब्दश्च लिङ्गपदेन गृहीत इति भावः । हेतुमाह तयोरैक्येन ग्रहणे–**वाच्यवाचकेति,** अनुमानानुमेयसम्बन्धाभिधानाभिधेयसम्बन्धयोर्विशेषो नास्ति, अयं भावः शब्दस्यार्थेन सह जात्या व्यक्त्या वा संयोगादिसम्बन्धो न सम्भवति वास्तवः व्यक्त्यन्तरपरित्यागेन व्यक्त्यन्तरप्रवृत्त्ययोगात्, दृष्टश्च गामानयेत्युक्ते गोविशेषानयनम्, सर्वत्र जातेरसम्भवाच्च, व्यक्तीनामनित्यत्वेन तैनैव सहोत्पन्नस्य सम्बन्धस्यानुपकारिणि शब्देऽसमाश्रयत्वात्, अत एव योग्यतापि न सम्बन्धः, भेदाभेदविकल्पाभ्यां तदसम्भवात्, ननु तर्हि शब्दार्थयोः सम्बन्धाभावे शब्दादर्थप्रतीतिः कथमिति चेदुच्यते, वक्तुरर्थविशेषप्रतिपादनेच्छाजनितः शब्दः स्वप्रतिपादनाभिप्रायप्रकाशितमर्थं सूचयति तदभिप्रायादिदं वचनमागतमिति विदुषः, तथा च तदभिप्रायवचनयोः जन्यजनकभावात् शब्दादर्थप्रतिपत्तिरविनाभावात्, अन्यथा तथाविधार्थप्रतिपिपादयिषया तथाविधशब्दप्रयोगानुपपत्तेः । न चाविनाभावेन शब्दादर्थप्रतीतौ शब्दस्य धूमस्येव वाचकत्वं न स्यादेवमभेरिवार्थस्य वाच्यत्वमिति वाच्यम्, इममर्थं शब्देन प्रतिपादयामीति प्रतिपादनाभिप्रायाच्छब्दप्रयोगे कृते शब्दस्य वाचकरूपतयैवोत्पत्तेः, एवञ्चाविनाभावात् वाच्यवाचकभावादसावनुमानानुमेयसम्बन्ध एवेति लिङ्ग्यते गम्यते लिङ्गी अर्थो वाऽनेन लिङ्गेन शब्देन

---

१ सि. क्ष. छा. डे. भामास्यान. । २ सि. क्ष. छा. डे. दोषाभावं ।

कसम्बन्धस्यानुमानानुमेयसम्बन्धस्य चाविशिष्टत्वादैकध्येन द्विविधस्याप्यनुमानस्य ग्रहणम्, तत्र विशेषस्यैव वाच्यत्वादनुमेयत्वाच्चार्थस्य सामान्यस्यासत्त्वादभावो वाच्यः, खपुष्पवत्, तस्य-सामान्यस्यासत्त्वादेव पूर्वमदृष्टत्वे विशेषस्यैव दृष्टस्य कल्पितासत्यसामान्योपसर्जनद्वारेण वाच्यत्वात् शब्दस्यापि तथैव वाचकत्वात्—सामान्योपसर्जनोपायेन, तथाऽनुमानेऽपि विधिः, [अनं] तत्वान् लिङ्गं शब्दो धूमादि वा कथं गमकं भवति ? उच्यते-भेदानामविवक्षया सामान्यस्यैकत्वापादितं—[आपादितं]तेषामेकत्वं भेदानां यस्मिंस्तल्लिङ्गं भेदाविवक्षापादितैकत्वसामान्यं लिङ्गं तद्भावापन्नो धर्मो धूमशब्दादिः, तथा भावितैकत्वस्य—तेन शब्दधूमादिप्रकारेण भावितमेकत्वं शाखादिभिन्नावयववतस्तरोः तापादिभिन्नकर्मवतश्चाग्नेः लिङ्गिनश्च, वाच्यलिङ्गिभेदात् प्रागुक्तन्यायेनात्मनैवात्मनो वाचकः आत्मनैवात्मनोऽनुमेयः, तद्भावदर्शनादेव सामान्यस्य विशेषप्रतिपादनार्थत्वात् शिबिकावाहकयानेश्वरयानवद्गमक[त्व]म, तद्भावेनैवाग्नेरेव धूमत्वात् बहुमूलादिविशिष्टतया धूमस्यैवाग्नित्वादाविमध्यान्तेषु अरण्यादीन्धनसन्धुक्षणमुर्मुराद्यवस्थधूमादिपुद्गलाग्नित्वात्, एवमुक्तन्यायेन लिङ्गं गमकं लिङ्गी गम्यश्चेत्यदोष इत्यतीतं न्यायं स्मारयति ।

**यदि तु न तथा प्रकाशयतीतीष्टं किन्त्वन्यापोहेन, ततो नैव प्रकाशकं स्यात् सर्वस्यादर्शनात्, प्रतिद्रव्यमपोह्यस्यादर्शनात् किं तदर्थादन्यददृष्टमेव भवेद्यतश्च बुद्धेर्व्यावृत्तिरिष्टा ? न हि स वृक्षोऽग्निर्वा भवति ततोऽन्यो वा, अदृष्टत्वाद्वन्ध्यापुत्रवत्, दृष्ट एवायमत्र भवति न भवत्यन्यो वा ततः, न च तेन दृष्टेनातुल्यमतच्छब्दमतद्रूपमवृक्षोऽनग्न्यादि वा, तथा तथाऽदृष्टं हि प्रतिपत्तुमशक्यम्, अप्रतिपत्तेश्चान्यस्याभावात् कस्य कथं वाऽपोहः स्यात् ? ।**

वेति व्युत्पत्त्या गमकत्वैकरूप्येणात्र स्वार्थपरार्थलक्षणस्य द्विविधस्यानुमानस्य ग्रहणमिति । अर्थक्रियाया विशेष एव सम्भवेन तस्यैव प्रतिपादनेच्छया शब्दप्रयोगात् वाच्यत्वं तथाऽनुमेयत्वमपि, न तु सामान्यस्य, अर्थक्रियाऽसमर्थत्वेनासत्त्वादवाच्यत्वमननुमेयत्वं च खपुष्पवदित्याह-**तत्र विशेषस्यैवेति,** अस्य वाक्यस्यानेनैव विशेषेण विषयेण भवितव्यम्, अन्यस्यार्थस्याभावात्, स हि पूर्वमदृष्टः, नापि पूर्वदृष्टेन कश्चनार्थः, श्रोतुरज्ञातज्ञापनार्थत्वाच्छब्दस्य, स एव विशेषः सामान्योपसर्जनोपायेन शब्देन ज्ञाप्यते, अतः स एव वाच्य, शब्दोऽपि न सामान्यरूपो वाचकः, सामान्यस्यासत्त्वात्, किन्तु सामान्योपसर्जनद्वारेण विशेषशब्द एव, तथा चान्यव्यावृत्तिविशिष्टो विशेषशब्दोऽधूमव्यावृत्तिविशिष्टधूम इव वाचक, अन्यव्यावृत्तिविशिष्टश्चार्थविशेषोऽनग्निव्यावृत्तिविशिष्टाग्निरिव वाच्य इति भावः । विशेषस्यैव वाच्यत्वेऽनुमेयत्वे च तेषामनन्तत्वेनाविनाभावग्रहणानुपपत्तेः शब्दस्य धूमस्य वा गमकत्वं कथं स्यादित्याशङ्कते **अनन्तत्वादिति ।** विशेषगताना परस्परवैलक्षण्यानामविवक्षया तेषु सामान्यादेकत्वमापाद्य लिङ्गलिङ्गिवाच्यवाचकभावाविवक्षायां तद्भावदर्शनन्यायेन लिङ्गलिङ्गिनोर्वाच्यवाचकयोरभेदादत्रेत्यभिधेयप्रदेशधर्मत्वाच्च तयोः प्रत्यक्षाप्रत्यक्षसम्बन्धित्वविवक्षया प्रदेशस्यैवैकस्यात्मनैवात्मनः साध्यत्वात् साधनत्वाद्वाच्यत्वाद्वाचकत्वाच्च न गम्यगमकभावानुपपत्तिरित्युत्तरयति-**भेदानामविवक्षयेति । तथा भावितेति,** यथा शब्दधूमयोरेकत्वं भावितं तथैव वाच्यस्य तरोर्लिङ्गिनश्चाग्नेरेकत्वं भाव्यमिति भाव । अविवक्षितविशेषभेदमनेकविशेषात्मकं सामान्यं लिङ्गं तदेव च तथाविधलिङ्गिपरिणामभूतमीश्वरयानार्थशिबिकावाहकयानवद्विशेषप्रतिपादनफलमिति दर्शयति--**तद्भावदर्शनादेवेति,** पदमिदमतीतन्यायस्मारकमित्याह-**तद्भावेनैवेति ।** एवमभ्युपगमे दोषमाह-**यदि त्विति ।**

---

१ सि. क्ष. डे. छा० साम्यान्यस्यैकत्वापितं ।

**यदि तु न तथेत्यादि,** परमते दोषः, यदि येन प्रकारेण दृष्टः [शब्दो]येनैव प्रकारेण लिङ्गं दृष्टं तेनैव च प्रकारेण विधिना प्रकाशयतीतीष्टं न[ः]त्वया तु किमिष्टम्? अन्यापोहेनेति, ततः किं? ततो नैव प्रकाशकं स्यात, कस्मात्? सर्वस्यादर्शनात्, यथा विधेयमदृष्टं त्वन्मतेन तथा व्यावर्त्यमपि किंचिन्न दृष्टमवृक्षानग्न्याख्यम्, घटपटादिभेदानामानन्त्यात, द्रव्यं द्रव्यं प्रति प्रतिद्रव्यमपोह्यस्यादर्शनात् किं तद्वृक्षादग्नेरर्थादन्यत्–अवृक्षानग्न्याख्यमदृष्टमेव भवेत्, यतश्च बुद्धेर्व्यावृत्तिरिष्टा? न ह्यदृष्टाऽर्थमयं भवत्ययं न भवतीत्यन्वयव्यतिरेकौ भवितुमर्हतः, बुद्धेर्दृष्टानेव हि बुद्धिरन्वियादर्थान् तेभ्य एव च व्यावर्तयेत्, यथा देवदत्तोऽयं यज्ञदत्तो नेत्यादि, नात्यन्तादृष्टखपुष्पवन्ध्यापुत्रादिविषया, एतदर्थप्रकाशनार्थमाह–न हि स वृक्षोऽग्निर्वा भवति ततोऽन्यो वा घटादिः, अदृष्टत्वात, वन्ध्यापुत्रवत्, दृष्ट एवा[य]मत्र [भवति] न भवत्यन्यो वा ततः, न च तेन दृष्टेनातुल्यमतच्छब्दं–न स वृक्षशब्दोऽग्निशब्दो वा शब्दोऽस्य तदिदमतच्छब्दम्, अवृक्षोऽनग्न्यादि वा, तथा न तस्य रूपं रूपमस्य- अतद्रूपम, किं कारणं? यस्मात्तथा तथा–तेन तेन प्रकारेणादृष्टम्–घटपटकुड्यादिभेदप्रकारेणादृष्टत्वात्त प्रतिपत्तुमशक्यम, ततश्चाप्रतिपत्तेश्चेत्यादि, व्याख्यातार्थभेदरूपेणाग्रहणं तत एवान्योऽपि नास्ति, सति चाग्रहणेऽन्यस्य चाभावात् कस्य कथं वाऽपोहः स्यात्?–प्रागुक्तविधिना किं केन कुतोऽपोह्यत इत्यादि ग्रन्थो योज्य इति ।

अयं दोषोऽन्यापोहवादिमत इत्याह–**परमत इति।** तथा प्रकाशयतीति शब्दं शब्दलिङ्गयोराश्रयेण व्याचष्टे–**यदि येनेति,** यो यथा दृष्टः स तथैव प्रकाश्यो प्रकाशकश्चेति अस्माकमिष्टम्, तद्भावविधिरूपेण दृष्टस्तथैव प्रकाश्य. प्रकाशकश्चेति भाव । त्वया त्वेवं नाभिमतमपि त्वतद्रूपपरावृत्तिरूपेणेष्टमित्याह–**त्वया त्विति,** अन्यापोहेन प्रकाशयतीतीष्टमिति भाव । अन्यापोहेन तु शब्दो लिङ्गं वा प्रकाशकं नैव भवतीत्याह–**ततो नैवेति ।** हेतुमाह–**सर्वस्येति,** यथा तव मते विधिरूपेण वस्तु न क्वचिद् दृश्यते किन्तु घटादि वस्तु अघटव्यावृत्तिरूपेणैव दृश्यत इति मन्यते तथा व्यावर्त्यमघटभूतपटाद्यपि न दृष्टम्, यतो घटभिन्नं सर्वं जगत व्यावर्त्यम्, ते च पटादयोऽसर्वज्ञेन कथं दृश्यन्ते अत सर्वस्यादृश्यतेत्याह–**यथा विधेयमिति।** वृक्षशब्देन धूमलिङ्गेन च विधेयमित्यर्थः। घटपटादिप्रत्येकवस्त्वपोह्यानन्त्यप्रयुक्तं किं नदृष्टमेव, यत्प्रतियोगिकव्यावृत्तिविषयिणी बुद्धिरिष्टा? यद्येवं तर्हि व्यावृत्तव्यावर्त्ययोरदर्शनेऽयमर्थो भवत्ययन्तु न भवतीत्यन्वयव्यतिरेकौ कथं स्यातामित्याशयेनाह–**द्रव्यं द्रव्यं प्रतीति ।** अन्वयव्यतिरेकाभावे हेतुमाह–**बुद्धेर्दृष्टानेवेति,** दर्शनबुद्धिविषयीभूतानेवार्थान बुद्धिरन्वेति ततो व्यावर्त्तयति च, यथा प्रत्यक्षविषयीभूतोऽयं देवदत्त इति देवदत्तत्वविधानं नायं यज्ञदत्त इति यज्ञदत्तत्वव्यावर्त्तनश्च भवति, न त्वत्यन्तायोग्यान् बुद्धि स्पृशति, खपुष्पादीनिवेति भावः । **न हि स इति,** दर्शनबुद्ध्यविषयीभूत इत्यर्थ, वृक्षोऽग्निर्वा भवतीति शब्दलिङ्गाश्रयेणान्वयप्रदर्शनम्, ततोऽन्यो वा घटादिरिति व्यतिरेकप्रदर्शनम्. तदुभयमपि न भवतीति भाव. । अन्वयव्यतिरेकबुद्धिः क्व भवतीत्यत्राह–**दृष्ट एवेति,** दर्शनबुद्धिविषयभूतवस्तुन्येवेत्यर्थः। व्यावर्त्यं हि स्वेन रूपेण यदि न दृश्यते तर्हि व्यावर्त्यमिदं दृष्टेनाग्न्यादिनाऽतुल्यमतच्छब्दमतद्रूपञ्चेति न हि सुविज्ञेयमित्याह–**न च तेनेति,** अतच्छब्दमतद्रूपमिति, अवृक्षोऽनग्निर्वा घटपटादिः दृष्टस्य वृक्षस्याग्नेर्वा वाचको यो वृक्षशब्दोऽग्निशब्दो वा तेन न वाच्यः, तथा वृक्षस्याग्नेर्वा यत्स्वरूपं नासौ तत्स्वरूप इति दुर्विज्ञेयमिति भाव. । कारणमाह–**तथातथेति ।** तत्तद्व्यक्तिरूपेण घटपटादेरदृष्टत्वात्ततोऽतुल्यमतच्छब्दमतद्रूपमिति न हि प्रतिपत्तुं शक्यमिति भाव । यतश्च तथा नास्ति प्रतिपत्तिः वृक्षाग्न्यादेरन्यत्वमपि घटपटादौ नास्ति, व्यावृत्तव्यावर्त्ययोर्द्वयोरपि स्वरूपेण सिद्धौ उभयविषयमन्यत्वं सिद्ध्येत्, यदा च तस्यैवाग्रहणं तदा कोऽसौ तदन्यः? यदपोहादवृक्षादिव्यावृत्तिः स्यात कुतो वाऽसावन्य इत्याशयेनाह–**व्याख्यातार्थेति,** घटपटादीना घटत्वपटत्वादिना भेदरूपेणा-

१ सि. क्ष. छा. डे. तेनैव । २ सि. क्ष. छा. डे. नन्वथानु । ३ सि. क्ष. छा. डे. बुद्धिरन्वियादर्थांस्तेभ्यएवव्यावर्त्तितयथा ।

अपितृत्ववत् स्यादिति चेत्-यथा पितुरन्ये सर्वे पुरुषा अनाश्रितभेदरूपा अन्यत्वव्यावृत्तिबुद्धिमात्रेण निरवयवा एव प्रतीयन्ते तथाऽवृक्षाज्वलना वृक्षज्वलनपर्युदासेनानन्तभेदा अपि व्यावृत्तिबुद्धिमात्रेण निरवयवाः प्रतीयेरन् को दोष इति चेद्ब्रूमः, सर्वस्यादर्शनात्, सा हि पितरि अस्मद्दर्शनेन दृष्टे तत्पर्युदासेनान्यस्मिन् पितृविपरीतबुद्धेर्गृहीतेरेष पिता देवदत्तो नेमे वसुरातादय इति प्रत्ययोत्पत्तिरिति युक्तम्, त्वद्दर्शने पुनर्गुणसमुदायस्य न तु पितुरेवादर्शने, असति वा ।

(**अपितृत्ववदिति,**) अपितृत्ववत् स्यादिति चेत्-स्यादियमाशङ्का यथेत्यादि, तद्व्याख्या, पितुरन्ये सर्वे पुरुषा अनाश्रितभेदरूपाः तदन्वयादृतेऽपि दृष्टान् पितुरन्यत्वव्यावृत्तिबुद्धिमात्रेण स्वभेदानपेक्षा निरवयवा एव प्रतीयन्त इति दृष्टान्तः, तथाऽग्निवृक्षाभ्यामन्येऽवृक्षाज्वलनाः वृक्षज्वलनपर्युदासेनानन्तभेदा अपि व्यावृत्तिबुद्धिमात्रेण निरवयवाः प्रतीयेरन् को दोष इत्यत्र दोषकुतूहलश्चेद्ब्रूमः— सर्वस्यादर्शनान्न स्यात्, युक्तं पितुरस्मद्दर्शनेन विधिरूपेण दृष्टस्य 'अङ्गादङ्गात् सम्भवसि' (बृ. उ, ६. ४. ९.) इत्यादि न्यायात् स्वपुत्रस्य गुणसमुदायरूपस्य प्राणान् दत्तवतः पर्युदासेनान्यस्य भ्रात्रादेः स्वजनस्य पितृविपरीतबुद्धेरध्यासेन ग्राह्यस्यैष पिता देवदत्तो नेमे वसुरातादय इति पितुरपितुश्च व्यक्तग्रहणोत्तरकालं परजनस्य वान्यस्यापितृत्वं प्रतिपाद्यतेत्ययमेपोऽस्ति न्यायः, त्वद्दर्शने पुनर्गुणसमुदायस्य न तु पितुरेवादर्शने, युक्तमिति वर्त्तते,—न घटते पितुरेव ग्रहणासम्भवे, असति वा पितरि गुणसमुदायमात्रार्थग्रहणाभिधानाभावप्रकारेण उक्तेन, स[ा]हि पितरीत्यादिना दर्शनविधि पितुः पितृदर्शनाच्चापितॄणां तदितरभेदानाञ्च कथयति दर्शनविधि यावत् प्रत्ययोत्पत्तिरिति ग्रन्थेन, एषा दृष्टान्तवर्णना ।

ग्रहणादेवेत्यर्थः । अथ तत्तद्रूपेण ग्रहणाभावेऽप्यवृक्षानग्न्यादिरूपतो ग्रहणं स्यादेवेत्याशङ्कते-**अपितृत्ववदिति** । व्याचष्टे- **स्यादियमाशङ्केति,** पितृव्यतिरिक्तानां सर्वेषां पुरुषाणां तत्तद्रूपेण ग्रहणाभावेनानाश्रितभेदरूपाणां विधिरूपमन्तरेणापि पितुरन्यत्वरूपव्यावृत्तिबुद्धिमात्रेण निरवयवतया ग्रहणं यथा भवतीति भावः । दार्ष्टान्तिकमाह-**तथाऽग्निवृक्षाभ्यामिति,** अग्निना वृक्षशब्देन च व्यावर्त्या यद्यपि बहुविधास्तत्तद्रूपेण ग्रहीतुमशक्यास्तथापि तेष्वाग्न्यावृत्तिवृक्षव्यावृत्त्योः समानत्वात्तद्बुद्धिमात्रेणानपेक्षितावान्तरभेदाः प्रतीयेरन् को दोष इति भावः । तत्र दोषमादर्शयति-**सर्वस्येति,** तव मतेन पितृदृष्टान्तोऽपि न युज्यते, गुणसमुदायरूपो हि पितृरूपोऽर्थः, गुणाश्च सर्वे ग्रहीतुमशक्याः अत एव तत्समुदायरूपस्य पितुरग्रहणात्तदन्यस्य प्रतिपत्तिर्न भवेदेव, अस्मन्मते तु पिता विधिरूपेण दृष्टः, तत्कल्पाश्च स्वजना भ्रात्रादयः, पितृकल्पत्वादेव पितृविपरीतबुद्धेरध्यासेनैष मे पिता देवदत्तः, नेमे वसुरातादय इति ग्राह्याः, तदेवं पितुरपितुश्च स्फुटं परिज्ञानादनन्तरं परजनेषु पितुरन्यत्वं प्रतिपत्तुं शक्यत इति भावः । तदेव स्वमतेन प्रतिपत्त्यौचित्यं निरूपयति-**युक्तमिति** घटत इत्यर्थः, तव मते तु नैवं प्रतिपत्तिः सम्भवतीत्याह- **त्वद्दर्शने पुनरिति,** तव मते पिता गुणसमुदायरूपः, न हि सर्वेऽवयवा गम्यन्त इति पितुरदर्शनम्, ततः कथं तदन्यत्वप्रतिपत्तिर्युज्यत इति भावः । **गुणसमुदायमात्रेति,** पितृरूपोऽर्थः गुणसमुदायमात्रं, अत एव तस्य ग्रहणं केनचिच्छब्देनाभिधानं वा न सम्भवतीति ग्रहणाभावरूपेणाभिधानाभावरूपेण च पिताऽसन्निति भावः । सत्येन दृष्ट इत्यन्तेन पितुर्दर्शनविधिः व्यक्तग्रहणोत्तरकालमित्यन्तेनापितॄणां दर्शनविधिः शेषेण ग्रन्थेन तदितरभेदानां दर्शनविधिश्च सूच्यत इति दर्शयति-**सा हीति,** व्यावृत्तिबुद्धि-

१ सि. क्ष. छा० डे. °रध्यासेन । २ सि क्ष. छा. डे. वान्यस्य ।

दार्ष्टान्तिकं समासञ्जतेदानीम्—

**यथा त्विदं तुल्ये वृत्तिरतुल्येऽवृत्तिरिति व्याचक्षाणस्य तव मते पितृकल्पस्य दर्शनात् स्वार्थस्य परार्थस्य तदन्यस्य तदपोहस्य वाऽप्रतिपत्तिरिति, अथ वा यदि हि स्वार्थः सामान्योपसर्जनो विशेषः समस्तः शिंशपादिरभिहितः स्यात् तेनापोढश्च संपिण्ड्यायमन्योऽस्मादिति गृहीतः स्यात् तत एवं प्रतिपद्येतायं अयमेव भवति, ततोऽन्योऽयं न भवतीति, प्रत्यक्षत्वादुभयस्य, नात्यन्ताविदितवृक्षावृक्षशब्दतायां न चात्यन्तादृष्टवृक्षावृक्षस्वरूपतायां वा सा प्रतिपत्तुर्भवितुमर्हति, खपुष्पवन्ध्यापुत्रादिवत् ।**

**यथा त्विदमित्यादि,** यथा त्वयेष्टं तुल्ये वृत्तिरतुल्ये चावृत्तिरित्युद्ग्राहेण यावत् सर्वथाऽनुमानासम्भव इति ग्रन्थं व्याचक्षाणेनैव गतप्रत्यागतन्यायेन त्वदुक्तेनैव तथा सर्वस्यादर्शनात् पितृकल्पस्येत्यादिना दार्ष्टान्तिकवैषम्यापादनं गतार्थं यावत्तदपोहस्य वाऽप्रतिपत्तिरिति, त्वन्मतेन कस्यचिदेव स्वार्थस्य परार्थस्य चादर्शनादपि पितृत्वप्रत्ययाभाव एवेति पिण्डार्थः, अथवा सर्वस्यादर्शनादित्यादिना प्रकारान्तरेण दोषं ब्रूमः यदि हि स्वार्थ इत्यादि वृक्ष इत्युक्तेऽस्मदुक्तेन न्यायेन सामान्योपसर्जनो विशेषः समस्तः शिंशपादिरभिहितः स्यात्, तेनापोढश्चावृक्षः सभेदो घटपटादिः सम्पिण्ड्यायमन्योऽस्माद्वृक्षादिति गृहीतः स्यात् तत एवं प्रतिपद्येत—अयं वृक्षोऽयमेव-वृक्ष एव भवति, ततोऽन्योऽयं-घटापटादिरवृक्षो वृक्षो न भवतीति, किं कारणं? प्रत्यक्षत्वादुभयस्य, नात्यन्ताविदितवृक्षावृक्षशब्दतायां न चात्यन्तादृष्टवृक्षावृक्षस्वरूपतायां वा सा प्रतिपत्तुर्भवितुमर्हति, अयं वृक्षोऽयं न भवतीति, खपुष्पवन्ध्यापुत्रादिवदिति ।

---

मात्रेण प्रतीतिर्हीत्यर्थः । अथ दार्ष्टान्तिकं घटयति—**यथा त्विदमिति ।** ननु त्वया तुल्ये वृत्तिरतुल्ये चावृत्तिरिति ग्रन्थं व्याचक्षाणेन नहि सर्वत्र लिङ्गिनि लिङ्गस्य सम्भवोऽस्ति इति स्वार्थस्य न हि सम्भवोऽस्ति सर्ववृक्षेषु वृक्षशब्दस्येति परार्थस्य च दर्शनेन प्रतिपत्तिसम्भवो गुणसमुदायस्वरूपडित्थादिष्वपि काणकुण्टादिसर्वावयवानां शब्दागम्यत्वेनासम्भव एवातोऽन्वयासम्भवेन व्यतिरेकस्याप्यसम्भव इति सर्वथाऽनुमानाभावः, अतुल्ये सत्यप्यानन्त्येऽशक्यमदर्शनमात्रेणाख्यानम्, दर्शनस्य हि सर्वत्रासम्भवः, सत्यपि च दर्शने सर्वथाऽनुमानाभाव इत्येवं सर्वस्यादर्शनत्वनिरूपणात् पितृतुल्यः स्वार्थो धूमाग्न्यादिः परार्थः वृक्षादिशब्दस्तदर्थश्च तदन्योऽनग्न्यवृक्षादिः तदपोहो वाऽदर्शनान्नास्त्येव कस्यापि प्रतिपत्तिरित्याह—**यथा त्वयेष्टमिति ।** तात्पर्यार्थमाह—**त्वन्मतेनेति ।** सर्वस्यादर्शनादिति ग्रन्थं प्रकारान्तरेण व्याचष्टे—**अथ वेति ।** शब्देन यदि सामान्योपसृष्टो यावद्विशेषोऽभिधीयेत तदा सामान्यावच्छिन्नतावद्विशेषव्यतिरिक्तानामप्यनुगतरूपतो ग्रहणं स्यादयं भिन्नोऽस्माद्वृक्षादिति, ततश्चायमेव वृक्षो न घटादिः, घटादिरेव वृक्षादन्यो न वृक्षः कश्चिदाम्रादिरिति, यतो व्यावृत्तानां व्यावर्त्यानाञ्चान्यत्वप्रतियोग्यनुयोगिनां प्रत्यक्षग्राह्यत्वादिति भावः । एतदेव निरूपयति—**वृक्ष इत्युक्त इति,** वृक्षत्वावच्छिन्नत्वेन निखिलवृक्षाणां सति ग्रहणे तदवच्छिन्नप्रतियोगिताकभेदत्वेन निखिलघटपटादीनां ग्रहणसम्भवात्, वृक्षो वृक्षत्वावच्छिन्न एव, न तु वृक्षत्वावच्छिन्नप्रतियोगिकभेदवान्, घटपटादयश्च वृक्षत्वावच्छिन्नप्रतियोगिकभेदवन्त एव, न तु वृक्षत्वावच्छिन्ना इति प्रतिपत्तिः स्यात्, भेदप्रतियोग्यनुयोगिनोः प्रत्यक्षविषयत्वादिति भावः । वृक्षशब्दोऽवृक्षशब्दश्च नितरामज्ञातः शब्दान्तरापोहेन प्रतिपत्तुं न शक्यते, तथा वृक्षस्वरूपमवृक्षस्वरूपञ्च सुतरामदृष्टमर्थान्तरापोहेन प्रतिपत्तुं न शक्यत इत्याह—**नात्यन्तेति,** अत्यन्तमविदितौ वृक्षावृक्षशब्दौ, तद्भावस्तस्यामिति विग्रहः, एवमग्रेऽपि । इममर्थं दृढीकर्तुं निदर्शनमादर्शयतीत्याह—

---

१ सि क्ष डे. ग्रन्थोऽव्याचक्षाणस्य गतप्रागतं न्यायेन ।

एतदर्थनिदर्शनार्थं दृष्टान्तमाह—

**वृक्षशब्दादंह्रिपशब्दोऽनन्यत्वाद्वृक्षः तथा तदर्थोऽग्नेर्वह्न्यादिः, उभयत्र वा सत्त्वद्रव्यत्वादि सामान्यविशेषधर्मेभ्योऽनग्निरवृक्षश्चेति विदितसकलवृक्षावृक्षाद्यनग्निशब्दार्थस्यैव तज्ज्ञानं दृष्टम्, न हि कश्चिद्दर्शनमात्राद्वा तद्वृत्तिनियमौ भवतः, व्यभिचारात्, घटमानपादपतरुशाखिभेदवृक्षव्यभिचारात् वृक्षोऽवृक्षो घटोऽघटश्च, अन्योऽपि हि भवन्ननन्यो भवति, पीलुहस्तिवृक्षवत् सामान्यविशेषशब्दपर्यायशब्दार्थेभ्यः ।**[1]

(**वृक्षशब्दादिति**) वृक्षशब्दादंह्रि[प]शब्दोऽनन्यत्वाद्वृक्षः, तथा तदर्थः, अग्नेर्वह्न्यादिः, उभयत्र वा सत्त्वद्रव्यत्वादिसामान्यविशेषधर्मेभ्योऽनग्निरवृक्षश्चेति विदितसकल[वृक्षा]वृक्षाद्यनग्निशब्दार्थस्यैव तज्ज्ञानं दृष्टम, तथाऽऽकाशशब्दादिषु खगगनवियदादिसत्त्वद्रव्यत्वादिधर्मापेक्षं तदतत्त्वं योज्यम्, न हि कश्चिदित्यादि, न हि किञ्चिद्दर्शनमात्राद्वा[तद]तद्वृत्तिनियमौ वा भवतः, कस्मात्? व्यभिचारात्-वृक्षान्वयेऽपि[2] तक्षकपुरुषव्यभिचाराद्व्रश्चनधर्माभावव्यभिचारादवृक्ष एव, अवृक्षघटोऽपि घटमानपादपतरुशाखिभेदवृक्षव्यभिचाराद्वृक्षोऽवृक्षो घटोऽघटश्च, अन्योऽपि हि भवन्न[न]न्यो भवति, पीलुहस्तिवृक्षादिवत् सामान्यविशेषशब्दपर्यायशब्देभ्यः ।

**सामान्यशब्दार्थेषु तावत् सदित्यसच्च भवतीति, अत्र द्वयी वृत्तिः—अनङ्गीकृतार्थो-**

**एतदर्थेति** । पर्यायशब्दाना तदर्थानाञ्चानन्यत्वमाह—**वृक्षशब्दादिति** । अन्यानन्यत्वं प्रकाशयितुमादावनन्यत्वमेकार्थप्रतिपादकत्वादाह—**वृक्षेति**, अंह्रिपशब्दो वृक्षाख्यैकार्थवाचकत्वादवृक्षशब्दोऽपि सन् वृक्षशब्द उच्यते, उभयशब्दयोर्भिन्नानुपूर्वीकत्वेनांह्रिपशब्दोऽवृक्षशब्द इति भावः । अर्थानामप्यन्यानन्यत्वमाह—**तथा तदर्थ इति**, शब्दार्थ इत्यर्थः, वह्न्यात्मकोऽर्थोऽग्नेरनन्यः, एकार्थक्रियाकारित्वादिति भावः । अन्यत्वमाह—**उभयत्र वेति**, वृक्षशब्देऽवृक्षशब्देऽर्थे वृक्षेऽवृक्षे वा, अग्नावनग्नौ वा विद्यमानो धर्मः सत्त्वं द्रव्यत्वादि वा अन्य एव, न हि यदेव सत्त्वं वृक्षे तदेवावृक्षे वर्तते, एवं द्रव्यत्वादि, तस्मादुभयोरन्यत्वमपि, धर्मभेदादिति भावः । वृक्षादिशब्दस्य तदन्यस्य वृक्षार्थस्य तदन्यस्य च सामान्योपसर्जनद्वारा साकल्येन तदतत्त्वेन परिज्ञानवतामेवायं वृक्ष एव भवति, तदन्यो घटपटादिरवृक्षः वृक्षो न भवतीति तत्तदन्यज्ञानं भवितुमर्हतीत्याह—**इति विदितेति** । एवमेवान्यपर्यायशब्दतदर्थयोस्तदतत्त्वं यथायथं योजनीयमित्याह—**तथाऽऽकाशशब्दादिष्विति**, आकाशशब्दात् खशब्दोऽनन्यत्वादाकाशः, अर्थादाकाशादपि खमनन्यत्वादाकाशम्, उभयत्र च सत्त्वद्रव्यत्वादिधर्मेभ्योऽनाकाशश्चेत्येवं योज्यमिति भावः । न हि तुल्यातुल्ययोर्वृत्त्यवृत्तिदर्शनमात्रात्तदतच्छब्दतायाः तदतदर्थताया वा शक्यते नियमः कर्तुमित्याह—**न हि किञ्चिदिति**, न हीन्द्रदर्शनमात्रादित्यर्थः । नियमाभवने हेतुमाह—**व्यभिचारादिति**, व्यभिचारमेव दर्शयति—**वृक्षान्वयेऽपीति**, वृक्ष इति व्यवहारविषयेऽपि वृक्षत्वसामान्यावच्छिन्नेऽपि वेत्यर्थः, वृक्षान्वयोऽपीति पाठे वृक्षस्यान्वयो यस्मिन्निति विग्रहे वृक्षत्वसामान्यावच्छिन्नोऽपीत्यर्थः, वृक्षभूतः कश्चित्पनसादि वृक्षशब्दप्रवृत्तिनिमित्तेन व्रश्चनधर्मेण रहितत्वाद्व्यभिचारादवृक्ष एवेति स्वजनकल्पस्य पनसादेर्वृक्षत्वमवृक्षत्वञ्च, व्रश्चनधर्माभावे छेदकपुरुषाभावः कारणमिति दर्शयति—**तक्षकपुरुषव्यभिचारादिति**, अनेन वृक्षोऽपि सन्नवृक्षो भवतीत्युपदर्शितम् । अथान्योऽपि सन्ननन्यो भवतीत्युपदर्शयति—**अवृक्षघटोऽपीति**, अवृक्षभूतोऽपि घटः घटमानताया अभावे वृक्षपर्यायशब्दप्रवृत्तिनिमित्तधर्माक्रान्तो वृक्षो भवति तदेवं वृक्षोऽप्यवृक्षोऽपि वृक्षो घटोऽप्यघटोऽपि घटो भवतीति भावः । अत्र पर्यायशब्देषु तदतत्त्वमुक्तमेवमन्यत्रापि भाव्यमित्याह—**पीलुहस्तिवृक्षादिवदिति**, 'द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः ।' इत्यमरः, एतत्तत्त्वमग्रे व्यक्तीभविष्यति । अथ सामान्यशब्दार्थेषु तदतत्त्वं भावयति—**सामान्यशब्दार्थेषु तावदिति** ।

1 सि. क्ष. °नन्यत्वादवृक्ष० । छा. डे °नन्त्वादनुवृक्ष० । 2 सि. क्ष छा. डे. वृक्षान्वयोऽपिवृक्षक० ।

न्तरवृत्तिः सच्छब्दोऽङ्गीकृतार्थान्तरवृत्तिर्वा स्यात्, तत्र व्युदस्तभेदसामान्यमात्रवृत्तिरनङ्गीकृतार्थान्तरवृत्तिः शब्दोऽपोहः केवलो व्यावृत्त्यर्थो निर्निबन्धनः, सदित्युक्तेऽसन्न भवतीति, द्विर्नञ्प्रयोगाद्विध्यर्थ एव ज्ञायते, ततः सिद्धे सत्यारम्भो नियमार्थ इति नियम्यते सत्त्वमेव, यो न भवति यथा वा न भवतीति, तस्य द्विविधस्याप्यत्र सम्बन्धो नास्तीत्युक्तं भवति, स च प्रतिषेधो न विधिप्रधानपर्युदासः, प्रसज्यप्रतिषेधमात्रं तत्, ततश्च अयमस्मादन्य इत्यन्यस्याभावात् पर्युदासात्मकान्यशब्दार्थान्तरापोहस्वार्थाभिधानलक्षणाभ्युपगमत्यागदोषाः स्युः।

(**सामान्यशब्दार्थेष्विति**) सामान्यशब्दार्थेषु तावदुदाहरणं सदित्यसन्न भवतीति, अत्र द्वयी वृत्तिश्चिन्त्यते—अनङ्गीकृतार्थान्तरवृत्तिः सच्छब्दोऽङ्गीकृतार्थान्तरवृत्तिर्वा स्यात्, तत्र प्रथमं तावत्—व्युदस्तभेदसामान्यवृत्तिरनङ्गीकृतार्थान्तरवृत्तिः शब्दः, स कीदृश इति चेत्तन्निरूपणार्थमाह—अपोहः केवलो व्यावृत्त्यर्थो निर्निबन्धन उच्यते, तदुदाहरणं—सदित्युक्तेऽसन्न भवतीति, द्विर्नञ्प्रयोगात् प्रवृत्तावन्नभवत्येवेति विध्यर्थ एव ज्ञायते, ततः किं संवृत्तम्? सिद्धे सत्यारम्भो नियमार्थ इत्यसन्न भवतीति द्वाभ्यां प्रतिषेधाभ्यां नियम्यते विहितं सत्त्वमेव, तत्कथमिति चेदुच्यते यो न भवति खपुष्पादिः, यथा वा न भवति-घटपटादिप्रकारेण, तस्य द्विविधस्यापि—असम्भवतस्तत्र—वृक्षे सम्बन्धो नास्तीत्युक्तम्भवतीति, स च प्रतिषेधो[ न ] विधिप्रधानः पर्युदासः, ततोऽन्यत्र विधिः, असच्छब्दश्च तदर्थः, इत्थञ्चोक्तन्यायेनासच्छब्दार्थो विधिप्रधानपर्युदासात्मकः त्यक्तः स्यात्, स[ न ]एव वृक्षो भवति सत्त्वात्, सतोऽन्यस्यासतोऽत्यन्ताभावात् प्रसज्यप्रतिषेधमात्रम[ स ]त् प्रसक्तं प्रतिषिद्धमित्येषोऽर्थः स्यात्, तस्मात्—प्रसज्यप्रतिषेधमात्रार्थत्वात् ततश्चायमस्मादन्य इत्यन्यस्याभावादन्यापोहः शब्दा[ र्थः ] इत्यस्याभ्युपगमस्य त्यागः कृत इति

तदनन्तरं सदिति सामान्यशब्दार्थं भावयति—**सामान्येति**, सदिति शब्दार्थस्तावदसन्न भवतीति, तत्र किमयं सच्छब्दोऽर्थान्तरं प्रतिषेध्यमनङ्गीकृत्य तदपोहं विदधत् स्वार्थे वर्तते, उत प्रतिषेध्यमभ्युपगम्येति विचार्यमिति भावः। तत्र येन शब्देन भेदे सामान्ये वा वर्तनं तस्य निरस्यते स शब्दोऽनङ्गीकृतार्थान्तरवृत्तिः शब्द उच्यते इत्याह—**व्युदस्तेति**। यतोऽपोहो व्यावृत्तिरूपोऽत एव सामान्यरूपं विशेषरूपं वा निबन्धनं नास्तीत्याह—**अपोह इति**। तदेव निरूपणायोदाहरणमाह—**सदित्युक्त इति**, असन्न भवतीत्यसतोऽपोहः क्रियते, प्रतिषेधद्वयमर्थवदेव दृष्टमिति व्यावृत्तिप्रतिषेधः प्रवृत्तिरेवेति विध्यर्थ एवासन्न भवतीत्यनेन ज्ञायत इति भावः। तस्य फलमाह—**ततः किमिति**। नञ्द्वयं प्रकृतमर्थमेव प्रकाशयति, तस्य सिद्धत्वेन तदारम्भणवैयर्थ्यापत्तेः, किन्तु सिद्धे सत्यारम्भः प्रकृतमर्थं दृढयति नियमेन, यथा वृक्षः सन्नित्युक्तावसन्न भवति किन्तु सदेवेत्यर्थः स्यात्, अत्र सतोऽत्यन्ताभावस्य खपुष्पादेः, येन केनचिद् घटपटादिना सतोऽभावस्य चात्र वृक्षे सम्बन्धो नास्तीति, एवञ्चासतोऽयं प्रतिषेधोऽभावप्राधान्यात् प्रसज्यप्रतिषेधरूप एव स्यात् न पर्युदासरूप इति भावः। प्रसक्तस्य प्रतिषेधमादर्शयति **स न एवेति**, प्रसक्तमसत्त्वं प्रतिषिद्धमिति भावः। तथा च स्वाभ्युपगमत्यागप्रसङ्ग इत्याह **प्रसज्येति। असच्छब्दश्चेति**, सन्न भवतीत्यसच्छब्दार्थो यः खपुष्पादिः स न भवति, वृक्षः सत्त्वप्रकारेण भवन् घटपटादिप्रकारेण न भवति, असू अभावौ स्याताम्, एवञ्च सदभावस्य घटपटादिना सदभावस्य सति सम्बन्धो नास्तीत्यर्थः स्यात्, एवञ्चासच्छब्दार्थो विधिप्रधानपर्युदासरूपो न भवति, किन्तु प्रसज्यप्रतिषेधरूप एव स्यात्, तन्मात्रार्थत्वे चान्यापोह इत्यत्रान्यपदार्थस्यान्यत्वस्याभावः, असच्छब्दार्थस्य प्रसज्यप्रतिषेधरूपत्वात्, तथा चायं वृक्षादन्योऽवृक्षः, अयञ्चावृक्षादन्य इत्यन्यत्वस्याभावादन्यापोहशब्दार्थत्याग इति भावः, अन्यस्याभावादेवान्योऽर्थोऽर्थान्तरमित्यर्थान्तरमपि नास्ति, ततश्चार्था-

---

१ सि. क्ष. डा. छे. प्रवृत्त्यापान्नमेव० ।

दोषः स्यात्, किञ्चान्यत्–तत एवार्थान्तरापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इत्येतस्यार्थान्तरापोहेन स्वार्थाभिधानमिति लक्षणस्य त्यागः कृतः स्यात्, एषोऽप्यभ्युपगमत्यागदोषोऽपर इति, एवन्तावदनङ्गीकृतार्थान्तरवृत्तिः सदित्यसन्न भवतीति सामान्यशब्दार्थेऽन्यापोहो न युक्तः, विधिरेव युक्त इति ।

**अथैतेभ्य एव भयादङ्गीकृतार्थान्तरपोह इष्यते तत इदं विघटते सदित्यसन्न भवतीति, प्रतिस्वं सत् सर्वमपि घटादीति, सर्वमपि हि प्रतिस्वं प्रत्यात्म सदेवासदपि भवतीतरेतराभावादिभ्यः, अत्र प्रयोगः–असताऽपि हि तेन सता केनचिद्भवितव्यम्, प्रत्येकवृत्तित्वात्, यथा घटादन्यः पटो घटत्वेनासन्नेव पटत्वेन सन् दृष्ट इति, एवमङ्गीकृतार्थभेदत्वे सद्भवत्येवासत्, अभ्युपगतमपि चैतत्त्वयापि घट इत्यघटो न भवतीति वृक्ष इत्यवृक्षो न भवतीत्येवमाद्यन्यापोहशब्दार्थवादित्वादिति ।**

**अथैतेभ्य एवेति,** अथ मा भूवन्नेते पर्युदासात्मकान्यशब्दार्थान्तरापोहस्वार्थाभिधानलक्षणाभ्युपगमत्यागदोषा इति तेभ्य एव भयादङ्गीकृतार्थान्तरवृत्तिरपोह इष्यते तत इदं विघटते सदित्यसन्न भवतीति, कस्मात्? प्रतिस्वं सत् सर्वमपि घटादीति, इतिशब्दस्य हेत्वर्थत्वात् प्रतिस्वं सर्वस्य सत्त्वात्, सर्वं हि प्रतिस्वं प्रत्यात्म-प्रत्येकमात्मना सदेवासदपि भवति, न ह्यसन्न भवति, कुतः,? इतरेतराभावादिभ्यः प्राक्प्रध्वंसेतरेतर[ाभाव]संयोगसमवायप्रमाणसामर्थ्यादिभेदेन सदेवासद्भवतीति विस्तरत स्यनाङ्गिरेव प्रतिपादितमस्माभिः घटो घटात्मना सन् भवत्यसन्नेव पटात्मनेत्यादि, अत्र प्रयोगः–असताऽपि हि तेन सता केनचिद्भवितव्यमिति प्रतिज्ञा, यो भवति येन प्रकारेण च भवति तेन द्विविधेनाप्यसता भवितव्यमित्यर्थः, कस्मात्? प्रत्येकवृत्तित्वात्-प्रतिस्वमात्मरूपेण वर्तमानत्वात्, अथवा सत्त्वाद्यः सन् प्रत्येकं वा वर्तते

न्तरापोहं हि स्वार्थे कुर्वती श्रुतिरभिधत्त इति लक्षणस्यापि त्याग प्रसक्त इत्याह–**तत एवेति,** अन्यस्याभावादेवेत्यर्थः । अयमप्यभ्युपगमदोष एवेत्याह–**एषोऽपीति** । तदेवं सदिति सामान्यशब्दार्थे प्रथमा ह्यानङ्गीकृतार्थान्तरवृत्तिरूपा दूषितेत्याह–**एवं तावदिति** । उक्तविधनाऽन्याभावादभ्युपगमत्यागप्रसङ्गेनानङ्गीकृतार्थान्तरवृत्तित्वं सामान्यशब्दस्य न सम्भवतीति सामान्योपसर्जनद्वारेण विधिरूपो विशेष एव शब्दार्थ इत्याशयेनाह–**विधिरेवेति** । नन्वेतावता विधिवाचकत्वं शब्दस्य नाभ्युपगच्छाम किन्तु अङ्गीकृतार्थान्तरवृत्तित्वमुपेम इत्याह–**अथैतेभ्य इति** । व्याकरोति–**अथ मा भूवन्निति,** पर्युदासात्मकं यदन्यरूप शब्दान्तरमर्थान्तरञ्च तदपोहद्वारेण स्वार्थाभिधानरूपलक्षणस्य योऽयमभ्युपगम- तत्त्यागरूपदोषो मा भूदिति तद्दोषभयादनङ्गीकृतार्थान्तरवृत्तित्वमपहायाङ्गीकृतार्थान्तरवृत्तिपक्ष स्वीक्रियत इति भावः । तत्पक्षेऽपि सदित्यसन्न भवतीति न सङ्घटत इत्याह–**तत इदमिति** । जगति यावन्ति पदार्थजातानि तानि सर्वाणि प्रत्येकं सद्रूपाण्येव तेऽसदित्यभिमतान्यपीति सर्वं वस्तु सदपि असदपि भवति, नहि किञ्चिदसन्न भवतीत्याह–**प्रतिस्वमिति,** प्रतिस्वं सर्वस्य सत्त्वात् न भवत्यसन्निति कथं वक्तुं युज्यते प्रागभावप्रध्वंसाभावेतरेतराभावादिभ्य सत एवासत्त्वात्, स्थासक एव हि कोशकप्रागभाव, कोशक एव स्थासकप्रध्वंसाभावः, घट एव पटेतरेतराभाव, पटश्च घटेतरेतराभाव इत्येवं सत एवासद्रूपतेति भाव । अत्रार्थे दृष्टान्तमाह–**घटो घटात्मनेति ।** अनुमानेनापीदं साधयति–**अत्र प्रयोग इति,** सताऽसता भवितव्यम्, सत असदपि स्यादित्यर्थः, तथा केनचिद्रूपेण सताऽसतापि भवितव्यम्, नहि किञ्चित् सर्वथा सद्भवति तथा च येनकेनचिद्रूपेण यत्सत् तदपि असत् स्यादिति साध्यार्थः । एतमेवाह–**यो भवतीति,** सामान्यतः सदसदपीत्यर्थः, येन प्रकारेण भवति सत्त्वेन रूपेण सत असदपीत्यर्थः । हेतुमाह–**प्रत्येकवृत्तित्वादिति,**

१ सि. क्ष. छा. डे. उक्तहानि । २ सि. क्ष. छा. डे. सन्नभ० ।

सोऽसन्नपि केनचित्प्रकारेण दृष्टो भावः, यथा घटादन्यः पटो घटत्वेनासन्नेव पटत्वेन सन् दृष्ट इति तद्वदि-दमप्यसदेव सद्भवतीति तथा प्रत्येकवृत्तित्वादिति; एवं[1]मङ्गीकृतार्थभेदत्वे सद्भवत्येवासत्, अभ्युपगतमपि चैतत्त्वयाऽपि विस्मृतमधुना मया स्मार्यमेतत्, यथा घट इत्यघटो न भवतीति वृक्ष इत्यवृक्षो न भवतीत्येवमाद्यन्यापोहशब्दार्थवादित्वाद्भवतः, एष सच्छब्दसामान्यार्थ उक्तः।

**द्रव्यादिसामान्यशब्दार्थेष्वपि द्विविधा सैव, तत्र तावदनङ्गीकृतार्थान्तरतायां द्रव्यमित्युक्तेऽद्रव्यं[2] न भवतीति द्विर्नञ्प्रयोगात् द्रव्यमेव 'सिद्धे सत्यारंभो नियमार्थ' इति नियम्यते यो न भवति यथा वा न भवतीति तस्य द्विविधस्याप्यत्र सम्भवो न भवतीत्युक्तं भवति, स च प्रतिषेधो न विधिप्रधानः पर्युदासः, प्रसज्यप्रतिषेधमात्रं तत्, ततश्च भावितत्दभ्युपगमत्यागः, अर्थान्तरापोहतायां प्रतिस्वसङ्ख्यायात् यथायोगं तथैव योज्यम्।**

**(द्रव्यादीति)** द्रव्यादिसामान्यशब्दार्थेष्वपि द्विविधा सैव, अ [नङ्गीकृता] ङ्गीकृतभेदार्थवृत्तित्वात्, तत्र तावदनङ्गीकृतार्थान्तरतायामित्यादि, स एव न्यायः प्राक्तनोऽद्रव्यं न भवतीति [द्वि] र्नञ्प्रयोगात् द्रव्यमेवेति 'सिद्धे सत्यारम्भो नियमार्थो' यो न भवति येन न भवतीत्यादि स एव ग्रन्थो विधिप्रधानपर्युदासात्मकाद्रव्यशब्दार्थत्यागादिदोषापादनः प्रसज्यप्रतिषेधमात्रार्थत्वादित्येतदर्थातिदेशो गतार्थो यावद्भावितत्दभ्युपगमत्यागः, द्वितीयविकल्पेऽप्यर्थान्तरापोहतायामित्यादि तमेव न्यायमतिदिशति-प्रतिस्वसङ्ख्यायात्–प्रतिस्वद्रव्यत्वात् सर्वद्रव्याणां द्रव्यमित्यद्रव्यं भवति, इतरेतराभावादिभ्य इत्यादि यथायोगं योज्यं तथैव।

अत्राह—

**ननूच्यमानसच्छब्दवदेतत्सिद्धिः, यः सच्छब्दः स सतः शपनादाह्वानात्, अतो यथा सच्छब्द एव सद्वाची एवञ्च नासच्छब्दः तथा सद्वस्त्वपि स्यादिति, अत्र ब्रूमः—यदि सच्छ-**

सर्वं हि वस्तु यत आत्मरूपेण वर्ततेऽत एवापररूपेण न वर्तत इति सिद्ध्यतीति भावः। तदेवं सतोऽसत्त्वमुपदर्श्यासतोऽपि सत्त्वमाह–**अथ वेति** सत्त्वेन यः सन् य आत्मरूपेण वा वर्तते सः केनचित्प्रकारेणासन्नपि सन् दृष्टः, तेन प्रकारेण प्रत्येकवृत्तित्वादेव, यथा घटत्वेनासन्नेव पटः पटत्वेन सन् दृष्ट एवं केनचिद्रूपेणासदपि सद्भवतीति भावः। यदि त्वयाऽर्थान्तरमङ्गीक्रियते तर्हि तदेवार्थान्तरं भवतीति सत् असदपि भवत्येवेत्याह, **एवमिति**। इत्थं त्वयाऽप्यभ्युपगतमेवेदानीं विस्मृतोऽत एव मया स्मार्यमित्याह–**अभ्युपगतमपीति**। यत एवार्थान्तरमपोह्यतेऽत एवार्थान्तरमभ्युपगतमेवेति दर्शयति–**यथा घट इतीति**, त्वया हि अर्थान्तरापोहेन स्वार्थं शब्दोऽभिधत्त इत्यभ्युपेयते, वृक्षादिरवृक्षो न भवतीत्युक्तौ सत्येव वृक्षोऽवृक्षादिरूपेणासदपीति स्यात्, वृक्षो भवन्नवृक्षो न भवतीत्यर्थात् पर्युदासरूपात्, भवनस्वरूपप्रधानाभ्युपगमेऽवृक्षप्रतिषेधमात्रशब्दार्थतापत्त्याऽभ्युपगमादिदोषाः स्युरिति भावः। द्रव्यादिसामान्यशब्दार्थेषु प्रोक्तन्यायमतिदिशति–**द्रव्यादीति**। विकल्पोऽप्यत्रानङ्गीकृतार्थान्तरवृत्तिद्रव्यशब्दार्थोऽङ्गीकृतार्थान्तरवृत्तिर्वेति पूर्ववदेवेत्याह–**द्रव्यादिसामान्येति**। अद्रव्यं न भवतीति अर्थान्तरमनभ्युपेत्य द्रव्यशब्दार्थो यद्युच्यते तर्हि नञ्द्वयप्रयोगेण प्रकृतार्थस्य सिद्धस्य पुनरारम्भेण नियमनात् द्विविधाद्रव्यभवनप्रतिषेधमात्रलाभेन विधिप्रधानपर्युदासात्मकाभ्युपगमत्यागः पूर्ववदेव प्रसज्यत इत्याह–**तत्र तावदिति**। अङ्गीकृतार्थान्तरवृत्तिपक्षाभ्युपगमे तु सर्वस्य द्रव्याद्रव्यात्मकतयाऽद्रव्यं न भवतीति विघटते प्रतिस्वं सर्वस्य द्रव्यत्वादितरेतराभावादिभ्योऽद्रव्यत्वाच्च, घटादि केनचिद्रूपेण द्रव्यं भवदपररूपेणाद्रव्यमपि प्रत्येकवृत्तेरिति प्रागुक्तमेव न्यायमतिदिशति–**द्वितीयविकल्पेऽपीति**। ननु यथा प्रोच्यमानः, सच्छब्दः सदर्थमेवाह, नासदर्थम्, असच्छब्दोऽपि न सदर्थम्, तथा सद्वस्त्वपि सत्स्वरूपमेव नासत्स्वरूपमित्याशङ्कते–**ननूच्यमानेति**। सच्छब्दस्योच्यमानत्वविशेषणप्रयोजनं सूचयति–**सिद्धे**

१ सि. क्ष. छा. डे. एवमनङ्गी०। २ सि. क्ष. छा. डे. °द्रव्यं न भ०।

ब्दोऽसच्छब्दोऽपि भवति तत एव लोकेऽन्यापोहवादे च घटशब्दाद्युदाहरणमवकाशं लभते, सच्छब्द एव सन्नसच्छब्दो भवति, एवं सदेव शब्दयन् घटादिः पटाद्यशब्दतां गमनादसच्छब्दो भवत्येव, इतरथा सत्त्वाभावात् सङ्करादिदोषाच्च, एवमर्थतोऽसच्छब्दो न भवतीत्ययुक्तम् शब्दतोऽपि रूपसिद्धिकृतनानात्वात् सच्छब्दो भवन्नेव न भवतीति ।

**(नन्विति)** ननूच्यमानसच्छब्दवदेतत्सिद्धिः—सिद्धं सच्छब्दमसत्स्वरूपविनिर्मुक्तं मन्यमानश्चो-दयति—यः स[त्] शब्दः [स] सतः शपनादाह्वानात्, अतः शब्दाद्यथा सच्छब्द एव संद्वाच्येव[1] च, नासच्छब्दः, नासदर्थवाची वा, तथा सद्वस्त्वपि स्यादिति, घटशब्दादिरप्यविशेषशब्दः[2], तदर्थश्च, तथा न पटादिशब्दस्तदर्थो वा भवितुमर्हतीति, तस्मादयुक्तमुच्यते सन्नसन् भवतीति, अत्र ब्रूमः- यदि सच्छब्दोऽसच्छब्दोऽपीत्यादि, नाभ्युपगच्छाम एतत् [सच्छब्दोऽ] सच्छब्दो न भवतीति, तथोदाहरणत्वासम्भवात्, सच्छब्दासच्छब्दत्व एवोदाहरणत्वसिद्धेः, यदि हि सच्छब्दोऽसच्छब्दोऽपि भवति तत एव लोकेऽन्यापोहवादे च घटशब्दाद्युदाहरणमवकाशं लभते, अन्यथा कुतोऽस्य घटाद्युदाहरणस्यावकाशः, तद्व्याचष्टे— सच्छब्द एव हि सन्नसच्छब्दो भवति, एवं सदेव शब्दयन् घटादि पटाद्यशब्दतां[3] गमनादसच्छब्दो भवत्येव, इतरथा—घटस्य सतः पटाद्यसत्त्वाभावे सत्त्वाभावः, सत्त्वाभावात् सङ्करादिदोषाच्च, न त्वेकस्य[4] सतः शपनाच्छब्दः स्यात् शब्दोऽङ्गीकृतभेदार्थत्वे, तस्मादयुक्तमुक्तं सच्छब्दवदसन्न भवति सद्वस्त्विति, एवमर्थतः—सतः शब्दः सच्छब्द इत्यर्थद्वारेण सच्छब्दोऽसच्छब्दो न भवतीत्ययुक्तम्, शब्दतोऽपि चास्ति ।

**सच्छब्दमिति,** अभिधानात् प्राक् सच्छब्दोऽसिद्धोऽसत्स्वरूपश्चेति तदानीं सोऽसच्छब्दरूपोऽपीति न तत्र विवादः, उच्यमानसच्छब्दस्तु सिद्धोऽसत्स्वरूपविनिर्मुक्तश्चेति कथमसावसच्छब्दः स्यादित्याशयः । शप आक्रोश इति धातुना निष्पन्नः शब्दः सतः शब्दः सच्छब्दः सदभिधायीत्यर्थं इत्याह—**य इति ।** उच्यमानत्वेन शब्दस्वरूपात् सच्छब्दः सच्छब्द एव, नासच्छब्दः, सदर्थवाचित्वात्, असदर्थानाह्वानात् तथा सद्वस्त्वपि सद्रूप एव नासद्रूप इत्याह—**अतः शब्दादिति ।** एवं सामान्यशब्दार्थयोरेकान्तस्वरूपतामुक्त्वा विशेषशब्दार्थयोस्तामाह—**घटशब्दादिरपीति,** घटशब्दोऽपि घटः शब्द एव, घटस्यैवाह्वानात्, न विशेषशब्दो न व्यावृत्तिशब्दः, अघटशब्दः, नाघटस्वरूपपटादिवाचिशब्दः, तथा तदर्थोऽपि घट एव नाघटः पटादिः, एवञ्च सन्नसन् भवतीति यदुक्तं तदयुक्तमिति भावः । सच्छब्दो न भवत्यसच्छब्द इति न वयमभ्युपगच्छाम इत्याह—**अत्र ब्रूम इति ।** सच्छब्दमसच्छब्दं न चेन्मन्यसे सच्छब्दोऽयमित्युदाहर्तुं कथं पारयसि, सदसदात्मकत्वाद्वस्तुनस्तदभिधायकस्यैव शब्दत्वेन केवलं सतोऽभिधायकस्य व्यावृत्तेरपि वाच्यत्वाभ्युपगमपक्षे शब्दत्वाभावादिति दर्शयति—**नाभ्युपगच्छाम इति ।** कस्योदाहृतियोग्यत्वमित्यत्राह—**सच्छब्दासच्छब्दत्व एवेति,** सतोऽसतश्चाभिधायकत्व एव शब्दस्य सच्छब्दत्वे सत्यसच्छब्दत्वात् स्वरूपलाभेनोदाहरणत्वसिद्धेरिति भावः । तदेव स्फुटयति—**यदि हीति ।** व्याख्यया तदेव व्यक्तीकरोति—**सच्छब्द एव हीति ।** सद्रूपं घटादिवस्त्वभिधीयमान एव सच्छब्दरूपो घटादिशब्दोऽसद्रूपपटाद्यभिधानाक्षमत्वादसच्छब्दः घटाद्यशब्दो भवति, सद्रूपस्य घटस्य पटाद्यसद्रूपत्वात्, घटस्य यदि पटाद्यसद्रूपत्वं नेष्यते सद्रूपमेवेष्यते त्वया भेदार्थताया अप्यङ्गीकारात् सदेकरूपवस्त्वभाव एव, घटस्य पटादिस्वरूपापत्त्या च वस्तुसङ्करादिदोषः स्यात्, तथाविधैकरूपाभिधायकस्य शब्दत्वाभावाच्चायं घटादिशब्द इत्युदाहर्तुमनवकाश एव स्यादिति भावः । एवञ्च यदुक्तं त्वयोच्यमानसच्छब्दवत् सद्वस्तु असन्न भवतीति तदयुक्तमित्याह—**तस्मादिति ।** इदञ्च सदसद्रूपवस्त्वभिधायकत्वापेक्षया शब्दस्य सदसद्रूपत्वमुक्तमित्याह—**एवमर्थत इति ।** शब्दरूपेणापि तदाह—**शब्दतोऽपीति,**

1 सि. क्ष. सद्वाच्येवचनासच्छब्दोनाव० । 2 सि. क्ष. छा. °रपिरविशे० । 3 सि. क्ष. छा. डे. पटाद्यशब्दनामगमनादस० । 4 सि. क्ष. छा. डे. सत्वेकस्य ।

सच्छब्दः अस् धातोः शत्रन्तस्य सदिति रूपसिद्धेः, यः सच्छब्दः सोऽन्य एव, सदेर्धातोः क्विबन्तस्य यः सच्छब्दः सोऽप्यन्य एव सदिति सच्छब्दो न भवत्येवासिप्रकृतिसच्छब्दः, तस्मात् शब्दतोऽपि सच्छब्दो भवन्नेव न भवतीति।

**एवं द्रव्यादिशब्देष्वपि सत्त्वासत्त्वे द्रष्टव्ये, एवं तावन्महासामान्यापरसामान्यशब्दार्थेषु सर्वस्यादर्शनादयुक्तोऽन्यापोहः।**

**एवमित्यादि,** यथा सच्छब्दस्य रूपसिद्धिकृतनानात्वकृते सत्त्वासत्त्वे तथा द्रव्यशब्दस्यापि द्रष्टव्ये, तथा द्रोर्विकारो द्रव्यम्, द्रोरवयवो वा द्रव्यम्, द्रव्यञ्च भव्ये भवतीति भव्यं द्रव्यम्, द्रवतीति द्रव्यं द्रूयते वा द्रवणात् गुणानां गुणसन्द्रावो द्रव्यमित्यादिव्युत्पत्त्या पृथिव्यादिस्वभेदापेक्षया च द्रव्यशब्दः सन्नद्रव्यशब्दश्च, द्रव्यादिशब्देष्वित्यादिग्रहणात् पृथिव्युदकादिसामान्यशब्देष्वपि स्वभेदापेक्षेषु वाच्यमित्यतिदेशार्थः, एवमर्थेष्वपि द्रष्टव्यम्, एवं तावन्महासामान्यापरसामान्यशब्दार्थेषु सर्वस्यादर्शनादयुक्तोऽन्यापोहः।

**विशेषशब्दार्थेषु तु घट इत्यघटो न भवतीत्यत्रापि न भवत्यघटो भवत्यघटः, तद्यथा–आमच्छिद्रादिघटोऽघटः घटनसामर्थ्याभावादचेष्टत्वात्, अघटोऽपि च घटो भवति चेष्टार्थत्वात्, घटते घटयति वा तन्तुतन्तुवायगवाश्वादिरिति, तथा प्रत्यक्षसिद्धं हि वागादिषु वर्तमानस्य गोशब्दस्यैकत्वम्, अतोऽनन्यत्वमनाशङ्कनीयं किमन्योऽनन्यो गोशब्द इति, तच्छब्दविशेषानिरूप्यत्वात्, यदि हि विशेषरूपस्यानिरूप्यत्वान्नास्त्यनन्यत्वं ततः तत्सम्बन्धाशक्यत्वात् शब्दानामर्थप्रत्यायनमन्याय्यम्, तस्मादेकात्मकत्वं गोशब्दस्य, तस्मिंश्च सति शब्दस्य शक्तिभेदात् सम्बन्धिभिरभिव्यक्तात्तत्तदर्थप्रत्यायनशक्तयः प्रकल्प्याः, एकपुरुषपितृपुत्रादिवत्, प्रतिसम्बन्धमन्यथावृत्तेः, तस्मात्–वागादिभिन्नार्थवाचित्वाद्गौरेवागौर्भवति, अगौरपि गौर्भवति।**

**विशेषशब्दार्थेष्वित्यादि,** तुशब्दो भेदाङ्गीकरणाकरणविकल्पाभावं सामान्यशब्दार्थाद्विशेषशब्दार्थेषु दर्शयति, घट इत्यघटो न भवतीत्यत्रापि न भवत्यघटो भवत्यघट इति, तद्यथा आमच्छिद्रादीति,

---

असूधातुनिष्पन्न सच्छब्द सद्धातुनिष्पन्नसच्छब्दापेक्षयाऽन्यत्वादसच्छब्दः सच्छब्दोऽपि सन्निति भावः। एवं द्रव्यादिशब्देष्वपि भिन्नभिन्नप्रकृतिजन्यापेक्षया तदनत्त्वं भाव्यमित्याह–एवं **द्रव्यादिशब्देष्वपीति**। व्याचष्टे–**यथा सच्छब्दस्येति**। अर्थत शब्दतोऽपि द्रव्याद्रव्यशब्दतामादर्शयति–**द्रोर्विकार इति,** तिस्रो व्युत्पत्तय द्रुशब्दनिष्पन्ना, द्रवतीति द्रूयत इति वा द्रव्यम्, द्रुधातुनिष्पन्नम्, गुणसन्द्रावो द्रव्यमिति तु पारिभाषिकम्, अर्थतश्च पृथिव्याद्यन्यतमवाचित्वापेक्षया द्रव्यशब्दः सन्नपि तदन्यतमानभिधायकत्वापेक्षयाऽद्रव्यशब्दोऽपीति भावः। एवमेव पृथिव्यादिसामान्यशब्देष्वपि तदतत्त्वं भाव्यमित्याह–**द्रव्यादीति**। सामान्यशब्दार्थेषु तदनत्त्वनिरूपणमुपसंहरति–**एवं तावदिति**। विशेषशब्दार्थेष्वपि तद्दर्शयति–**विशेषशब्दार्थेषु त्विति**। तुशब्दग्रहणप्रयोजनं दर्शयति–**तुशब्द इति,** विशेषशब्दस्यान्त्यविशेषपरत्वेन तदवान्तरभेदाभावादङ्गीकृतार्थान्तरवृत्तित्वानङ्गीकृतार्थान्तरवृत्तित्वविकल्पयोः सामान्यशब्देष्विवात्रावकाशो नास्तीति तुशब्दो विशेषं द्योतयतीति भावः। घट इत्यघटो न भवतीत्ययुक्तम्, युक्तं तु घटोऽघटोऽपि भवतीति रूपयति–**घट इतीति**। घटस्याघटत्वं तावदाह–**आमच्छिद्रादीति,** अग्निपाकमनवाप्तो घटः, सरन्ध्रो

आमघटश्छिद्रघटो न भवति, आदिग्रहणात् चित्रलेप्यादिघट इत्यादयो घटा एवाऽघटाः, घटनसामर्थ्याभावाच्चेष्टत्वात्, घटत्वाद्घटः स्यात् प्रयोक्तृकर्त्तरि, तदभावादप्यघटो भवत्येवेति, किञ्चान्यत्—अघटोऽपि च घटो भवति चेष्टार्थत्वात् स्वतंत्रः प्रयोक्ता च, तद्दर्शयति—घटते घटयति वा तन्तुतन्तुवायग[वा]श्वादिरिति, प्रकृत्यन्तात् ण्यन्ताद्वा कर्त्तर्यपो विहितत्वात्, तथा प्रत्यक्षेत्यादि, गौरित्यगौर्न भवतीत्येतदपि न युक्तम्, यस्माद्गौरगौर्भवति, अगौरपि गौर्भवतीत्येतत् प्रदर्श्यते—तत्र हि द्वयी शब्दानां गतिः, एकः शब्दोऽनेकार्थोऽनेकः शब्द एकार्थो भवति, तत्र य एकोऽनेकार्थः स चिन्त्यते—गोशब्दस्य तावद्वागादिषु वर्त्तमानस्यैकत्वं प्रत्यक्षसिद्धम्, सकृदुच्चरितस्य वागादिर्भूरद्मीत्यादिषु दृष्टत्वात्, अतः प्रत्यक्षप्रसिद्धेरनन्यत्वं सिद्धम्, तत्रानाशङ्कनीयं—किमन्योऽनन्यो गोशब्द इति, तस्मादन्याप्यमनन्यत्वम्, स्यान्मतं भिन्नार्थगतेर्गोशब्दस्यान्यत्वम्, सादृश्यात्तु स एव भवतीत्येतच्च न, तच्छब्दविशेषानिरूप्यत्वात्, अयमुदात्तोऽनुदात्तः स्वरितो वा विवर्तते, यदि हीत्यादि, विशेषरूपस्यानिरूप्यत्वान्नास्त्य[न]न्यत्वं प्रत्यक्षस्यानुमानाद्बलीयस्त्वाच्च, ततः किं? नतस्तत्सम्बन्धाशक्यत्वम्, अनिरूप्यात्मरूपाणाममतां पृथगनुपलब्धानां[3] नानार्थैः सह च न शक्यः सम्बन्धः कर्त्तुम्, अकृतसम्बन्धानाञ्च शब्दानामर्थप्रत्यायनमन्याय्यम्, म्लेच्छप्रयुक्तशब्दश्रवणादप्यर्थप्रतीतिप्रसङ्गात्, तस्मादेकात्मकत्वं

---

घट. चित्र घट लेप्यादिरूपो घटश्चेते जलाहरणादिचेष्टाननुकूलत्वाच्चेष्टावद्रूपघटा न भवन्तीति घटत्ववन्तोऽप्यघटा भवन्ति भाव। एवं घटनक्रियाया कर्त्रन्तरानपेक्षकर्त्तरि घटत इति घट इति चेष्टाश्रये घटेऽघटत्वमुक्त्वा घटयतीति घट इति व्युत्पत्त्या कर्त्त प्रयोज्यकर्तृशक्त्यपेक्षप्रयोजयितु प्रयोक्तृकर्तु. तथाविधव्यापाराश्रयत्वाद्घटत्वेऽपि घटत्वलक्षणसामान्यविशेषस्याभावादघटत्वमपीत्याशयेनाह—**प्रयोक्तृकर्त्तरीति** । घटते चेष्टां करोतीति व्युत्पत्त्या यः कोऽपि चेष्टाश्रय कर्त्रन्तरानपेक्ष स्वतत्र तदपेक्षो वा प्रयोक्ता दण्डादि. तन्तुवायादिर्वा घटत्वसामान्यविशेषविरहितत्वेनाघटोऽपि घटो भवतीत्याह—**अघटोऽपि चेति** । घटत इति घट घटयतीति घट इत्युभयत्रापि घटधातोर्घटिधातोश्च कर्त्तरि प्रत्ययेनैकविधरूपसिद्धेस्तत्तत्क्रियाश्रय य कोऽपि घटो वा तद्भिन्नो वा घटकुलालतन्तुतन्तुवायादिर्घट उच्यत इत्यघटोऽपि घटो भवतीत्याह—**घटत इति** । एव गोशब्दोऽगोशब्दो भवतीत्येतद्दर्शनायाह—**गौरितीति** । अनेकार्थप्रतिपादकैकशब्दत्वमनेकशब्दप्रतिपाद्यैकार्थत्वमिति द्विधा दर्शनाच्छब्दे विकल्पं दर्शयति—**तत्र हीति** । तत्र प्रथमपक्षमुपस्थापयति—**तत्र य एक इति,** गवादिशब्द एक एव सन् सम्बन्धभेदादनेकेष्वर्थेषु वर्त्तत इति पक्षश्चिन्त्यत इत्यर्थः । स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजलादिषु अनेकेष्वर्थेषु वर्त्तमानोऽपि गोशब्द प्रत्यक्षेणैक. सिद्ध इत्येकानेकत्वशङ्कैव नास्तीत्याह—**गोशब्दस्येति** । एकधोच्चरितेनाप्यनेकार्थबोधदर्शनादित्याह—**सकृदुच्चरितस्येति** । ननु घटपटशब्दयोरिव भिन्नार्थबोधकत्वेन गोशब्दस्यापि भेद आवश्यकः, एकशब्दत्वव्यवहारस्तु वर्णानुपूर्वीसाम्यादित्याशङ्क्य समाधत्ते—**स्यान्मतमिति** । अयं गोशब्दोऽन्योऽयञ्च गोशब्दोऽन्य इति शब्द विशेषस्य निरूपयितुमशक्यत्वादेक एव गोशब्दो न त्वनेक इत्याह—**तच्छब्दविशेषेति** गोशब्दानां परस्परविशेषस्य निरूप्यत्वान्नान्यत्वम्, न चायं गोशब्द उदात्तोऽयमनुदात्तोऽयञ्च स्वरित इत्युदात्तानुदात्तस्वरितत्वादिभिर्विशेषैर्गवादिशब्दविशेषा निरूपितुं शक्या इति वाच्यम्, यद श्यामकोशकुसूलादीनामिवाङ्गुले ऋजुत्ववक्रत्वादेरिव वा गोशब्दस्यैकस्यैव ते भेदा उदात्तादयो विवर्त्तरूप, अतत्त्वतोऽन्यथाप्रथा विवर्त्त इत्युदीरित., परिणामरूपा एव वेति भावः । विपक्षे दोषमादर्शयति—**यदि हीति,** विशेषरूपस्यानिरूप्यत्वेऽप्यनन्यत्व न मन्यतेऽन्यत्वमेव मन्यते, अनेकत्वप्रत्यक्षस्यैकत्वगमकानुमानाद्बलीयस्त्वादिति चेत्तर्हि गोशब्दानन्त्यान्न सङ्केतोऽर्थेन सह शक्यते कर्तुम्, अनिरूपितस्वरूपाणां शशशृङ्गादिवदसत्त्वादिति भावः । तथापि गोशब्दस्य सत्त्वाभ्युपगमे तस्य प्रत्यर्थं पार्थक्येनानुपलम्भान्न कथमनेकैरर्थैस्सह तस्य सम्बन्धः कर्त्तुं पार्यत इत्याह—**पृथगिति** । एतदेवाह—**अनिरूप्येति** । अकृतसम्बन्धाच्च नार्थप्रत्यय इत्याह—**अकृतेति** ।

---

१ सि. क्ष. छा. कर्तुवचो० । २ डा. ति. वागिवमूरित्यादिषु । ३ सि. क्ष. छा. °नुपलब्धं ।

गोशब्दस्य, तस्मिंश्च—एकात्मकत्वे सति शब्दस्य शक्तिभेदात् सम्बन्धिभिरभिव्यक्तात् तत्तदर्थप्रत्यायनशक्तयः प्रकल्प्याः किमिव ? एकपुरुषपितृपुत्रादिवत्—यथैक एव पुरुषोऽनेकशक्ति[ः]सम्बन्धिभेदापेक्षया पिता पुत्रो मातुलो भागिनेय इत्यादि व्यपदेशभाग् भवति तथा गोशब्दोऽपि वागादिषु[1] कस्मात् ? प्रतिसम्बन्धमन्यथावृत्तेः—से[2] एव सम्बन्धं सम्बन्धं प्रति सम्बन्धिजनितैमन्यथा[3] वर्त्तते तस्मादेकत्वाद्गोशब्दस्य वागादिभिन्नार्थवाचित्वाद्गौरेव वागादिरगौर्भवति, अगौरपि गौर्भवति ।

स्यान्मतं निमित्तभेदाद्गोशब्दा भिद्यन्ते, तानि च निमित्तानि गदनगर्जनगमनगरणादीनि, पृषोदराद्याकृतिगणत्वाद्रूपसिद्धेरन्यत्वमेवेत्येतच्चोक्तविधिना न युक्तमप्यभ्युपगम्य—

**गदनादिविशेषनिरूप्यान्यत्वे वा गवान्तरवद्गौरेवेत्यस्मिन्नपि पक्षे गौरित्यगौर्भवतीत्यपि, वागादिगवाव्यतिरेकातिरेकवत्, अनेकशब्दैकार्थत्वेऽपि एकोत्तरशतनामत्वाच्चाम्भसो विषमविषं भवत्यविषमपि विषं जीवनात्मकमप्युदकादि मारणात्मकं दुःप्रयोगात्, तथा पीलुर्वृक्षोऽवृक्षत्वादपीलुर्भवति धनादिवत्, हस्तिवत् पीलुर्वा तथा विपर्ययेण, अतः पीलुरपीलुश्च, अपीलुरपि पीलुश्च, एवं हरिरामार्जुनादयोऽपि, शक्रसिंहवासुदेवमण्डूकवानरहयादिषु रम्यवर्णदाशरथिबलदेवजामदग्न्येषु तृणसुवर्णवृक्षपाण्डवकार्त्तवीर्येषु च दर्शनात् ।**

( **गदनादीति** ) गदनादिविशेषनिरूप्यान्यत्वे वा गवान्तरवत् गौरेव—यथाहि गोशब्दः साम्नादिमत्येकस्मिन्नप्यर्थे गमननिमित्ते वृत्तोऽपि खण्डमुण्डशाबलेयबाहुलेयसौरभेयादिषु गवान्तरेषु गौरेव, इति[ः]हेत्वर्थे, यस्मात् खण्डादिविशेषापेक्षया सामान्यशब्दो गोशब्दः, तस्मात पूर्ववदस्मिन्नपि पक्षे

---

अन्यथाऽनिष्टप्रसङ्गमाह—**म्लेच्छेति**, शब्दसंस्कारविरहिता म्लेच्छाः, ते हि अपभ्रंशशब्दानाहु, म्लेच्छो ह वा यदपशब्द इति श्रुतेः, अवाचका एवापभ्रंशशब्दाः, न ह्यपभ्रंशानामर्थेन कश्चित् सम्बन्ध इति भावः । उपसंहरति—**तस्मादिति** । ननु गोशब्दस्यैकात्मकत्वे तदुच्चारणात् सकृदेव यावत्तदर्थप्रतिपत्तिर्भवेदित्यत्राह—**एकात्मकत्वे सतीति,** प्रत्यर्थं शब्दाभेदेऽपि शक्तिभेदात् वक्तृविवक्षोपस्थापितार्थविशेषेणाभिव्यक्ता गवादिशब्दगता शक्तिस्तदर्थं प्रत्याययति नानार्थत्वेपीतिभावः । दृष्टान्तमत्राह—**एकपुरुषेति** । प्रोक्तमेव हेतुमाह **प्रतिसम्बन्धमिति,** तत्तत्सम्बन्धितानिरूपकसम्बन्धतापेक्षयैकगोशब्दस्याप्यन्यथा-अन्यार्थविषयकबोधजनकत्वेन वर्त्तनादिति भावः । तथा च किमित्यत्राह—**तस्मादेकत्वादिति,** एकत्वादेव वागाद्येकतमार्थवाचकत्वेन गौरेव सन् वागाद्यन्यतमावाचकत्वेनागौरपि भवति, तथा वागवाचकत्वेनागौरपि दिग्वाचकत्वेन गौरपि भवतीति भावः । अथ निमित्तानां शब्दप्रवृत्तिनिमित्तभूतानां गदनगर्जनादीनां भेदाद्गोशब्दोऽपि भिद्यते गद व्यक्तायां वाचि, गर्ज गर्जने, गम्लृ गतौ, गॄ निगरणे इत्यादिभिर्धातुभिर्निष्पन्नो गोशब्दः पृषोदरादित्वात्, उक्तञ्च हरिणा 'कैश्चिन्निर्वचनं भिन्नं गिरतेर्गर्जतेर्गमेः । गुवतेर्गदतेर्वापि गौरित्यत्रानुदर्शितम् ॥' इति, तस्मात प्रतिनिर्वचनं गोशब्दस्यान्यत्वमित्याशङ्कते—**गदनादिति** । भवतु गोशब्दविशेषस्य गदनगर्जनादिरूपेण निरूप्यता, तथापि गोशब्द एक एव, अर्थस्य हि नानाविधा अवस्था दृष्टाः, यथा गोः खण्डमुण्डशाबलेयबाहुलेयसौरमेयादयः, तदवस्थाभेदेन भेदेऽपि गमननिमित्तैक्यात् सर्वे गौरेव, तथाविधावस्थावाचकशब्दापेक्षयाः च गोशब्दः सामान्यशब्दो भवति, एवं तच्छब्दनिर्वचनभेदेऽपि तत्सहचारिभूतनिर्वचनविशेषगमनमवलम्ब्य गोशब्दस्वरूपमात्रमवलम्ब्य वाऽनन्य एव गोशब्दः, तथा च पूर्ववत् गौरपि अगौर्भवति, न त्वगौर्न भवतीत्याह—**गदनादिविशेषेति** । सामान्यवस्त्वभावे विशेषो न निरूप्यो भवत्यस्य विशेषोऽयमिति, तथा सामान्यशब्दाभावे विशेषशब्दा अप्यनिरूप्या एवेत्याशयेन व्याचष्टे—**यथाहीति** । गोरगोत्वे हेतुमाह—**वागादिगवा-**

१ सि. क्ष. छा. दे० । २ सि. सएव. छा. क्ष. डे. सएव । ३ छा. °जनितमन्यस्वमन्यथा ।

गौरित्यगौर्भवतीत्यभिमत[म्, क]स्मात्? वागादिगवाव्यतिरेकातिरेकवत्—तद्यथा गौरित्युक्ते वागादिषु न व्यतिरिच्यते गोत्वं, गोशब्दवागित्युक्ते दिगादिभ्यो व्यतिरिच्यते वाङ्न दिगिति, ततो गौरगौरपि भवतीति गतार्थमुदाहरणम्, एवं तावदनेकार्थैकशब्दत्वेऽन्यापोहाभावः, अनेकशब्दैकार्थत्वेऽपि तद्यथा—एकोत्तरशतनामत्वावाम्भस इत्यादि सलिलमुदकममृतं वा[रि]जीवनं विषमित्याद्येकोत्तरशतमुदकनामानि **निरुक्ते** पठ्यन्ते, ततो विषमविषं भवति, अविषमपि विषं भवति, अपानीयं ग्रन्थिसर्पादि विषं म[ा]रणात्मकं न जीवनात्मकं जीवनात्मकमप्युदकादि मारणात्मकं दुःप्रयोगादित्यादि गमनिका, आदिग्रहणात् घृतमघृतमित्यादि, |तथा पीलु[ः]वृक्षोऽवृक्षत्वादपीलुर्भवति धनादिवत्, हस्तिवत् पीलुर्वा हस्त्यपि पीलुरपीलुर्भवति हस्तित्वात् मनुष्यवत्, तथा विपर्ययेण—अहस्तित्वादपीलुर्भवति पीलुवृक्षः, अवृक्षत्वात् अपीलुर्हस्तीति, अत इत्युपसंहरति—पीलुरपीलुश्चापीलुरपि पीलुश्चेति, एवं हरिरामार्जुनादयोऽपीति व्यापितामस्य न्यायस्योदाहरणबाहुल्येन दर्शयति, शक्रसिंहवासुदेवमण्डूकवानरहयादिषु हरिशब्ददर्शनादहरिर्हरिश्च, रामो रम्यवर्णदाशरथिबलदेवजामदग्न्येषु, अर्जुनः तृणसुवर्णवृक्षपाण्डवकार्त्तवीर्येषु दर्शनादित्यादि, तत्रातत्र पूर्ववत्।

**एवं श्रुतिमात्रतत्त्वो गवादिरेकः शब्दोऽप्रतिलब्धविभागोऽनेकार्थगमकशक्तियुक्तः, एकादित्यानेकार्थकारित्ववत्, प्रत्यर्थवृत्तिव्यवस्थापका हेतवो यथोक्तं—'संसर्गो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥ (वाक्यप. का. २ श्लो. ३१७-३१८) सकरभा धेनुरकरभा धेनुः रामलक्ष्मणौ, रामार्जुनौ, अञ्जलिना जुहोति, सैन्धवमानय, अक्ताः शर्करा उपदधाति, अर्जुनः कार्तवीर्यः, अनुदरा कन्या, सीरासिमुसलैः, मथुरायाः प्राचीनाम-**

**व्यतिरेकेति।** व्याचष्टे—**तद्यथेति,** सामान्येन यदि गौरित्युच्यते तदा गोत्वं वागादिषु सर्वेष्वर्थेषु समानं न तु कस्मादपि विशिष्टम्, यदा च वागुद्देशेनेयं गोशब्दवाच्येत्युच्यते तदा गोशब्दस्य तत्रैव वृत्तेर्वाक् न दिगिति दिगादिभ्यो व्यतिरिच्यते, तस्माद्वाक् गोशब्दवाच्यत्वेन गौरपि सती गोशब्दवाच्यदिगादिव्यतिरिक्तत्वेनागौरपि भवति, तथा तद्गोशब्दोऽपि, तदेवमनेकार्थैकशब्दपक्षेऽन्यापोहो न सम्भवतीति भावः। एकोऽर्थः, अनेके शब्दा इति पक्षेऽप्यन्यापोहासम्भवं दर्शयति—**अनेकशब्देति।** तन्निरूपयति—**एकोत्तरेति,** एकोत्तरशतं सलिलनामानि निरुक्ते पठ्यन्ते, जीवनात्मकमप्युदकादि जलसविषं दुष्प्रयोगादिना मरणात्मकं विषं भवति, तथा विषमपि सुप्रयोगादिनाऽविषं भवतीत्येवं विभावनीयमर्थं शब्दे चेति भावः। एतदेव दर्शयति—**ततो विषमिति।** अनेकार्थैकशब्दपक्षदार्ढ्याय निदर्शनान्तराण्याह—**तथा पीलुर्वृक्ष इति** 'द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः' इत्यमरः, वृक्षभूतपीलुरवृक्षत्वाद्धनादिवदपीलुर्भवतीति पीलोर्मातङ्गार्थत्वेनावृक्षत्वं सिद्धम्, तथा स एवावृक्षत्वात् हस्तिवत् पीलुरपि भवति, हस्ती हि अवृक्षः पीलुशब्दवाच्यत्वात् पीलुरपीति भावः। इत्थं पीलुरपि हस्ती हस्तशालिमनुष्यस्यापीलुत्ववदपीलुरपि हस्तित्वाद्भवतीत्याह **हस्त्यपीति।** अपीलुरपि पीलुर्भवतीत्याह—**तथा विपर्ययेणेति।** न्यायस्य तदतत्त्वलक्षणस्य व्यापकत्वमादर्शयितुं प्रचुरनिदर्शनोपन्यसनमित्याह—**एवं हरिरामेति।** हरिशब्दानेकार्थमाह—**शक्रेति,** एकहरिशब्दार्थत्वेन हरित्वेऽपि तदन्यहरिशब्दार्थाभिन्नत्वेनाहरिरपीति बोध्यमेवं सर्वत्र। रामशब्दानेकार्थमाह—**राम इति।** अर्जुनशब्दानेकार्थमाह **अर्जुन इति।** एवमेकः शब्दोऽनेकार्थवाचकशक्तिः नास्ति शब्दस्य भेदः, श्रुतिविषयीभूतशब्दस्वरूपे विशेषाभावादित्याह—**एवं श्रुतिमात्रतत्त्व इति।** व्याचष्टे—**अनेनेति,** श्रुतिविषयीभूतगकारौकारान्तरूपतत्त्वापेक्षया गोश-

१ क्ष. °गौर्भवती°। २ सि. क्ष. डा. डे. °तिरेकवत्। ३ सि. क्ष. वाङ्नदिगिति।

**गरादागच्छामि, द्वारम्, ग्रामस्यार्धं लभेत, स्थूलपृषतीमालभेतेत्यादिषु निमित्तान्तरैरेकार्थस्यावच्छेदः ।**

**एवं श्रुतिमात्रेत्यादि,** अनेनोक्तन्यायेन श्रुतिमात्रतत्त्वो गवादिरेकः शब्दोऽ[प्र]तिलब्धविभागोऽनेकार्थगमकशक्तियुक्तः, किमिव ? एकादित्येत्यादि यावत् कारित्ववदिति गतार्थः प्रोक्तार्थोपसंहारः, स्यान्मतमेकस्यानेकार्थकारित्वे विभागप्रतिपत्त्यभावादव्यवच्छेदप्रसङ्ग इति, तन्न, प्रत्यर्थवृत्तीत्यादि यावत् 'विशेषस्मृतिहेतवः' इति यथासंख्यं सकरभाद्युदाहरणं भावितार्थं कारिकाद्वयं निमित्तान्तरादेकार्थावच्छेदाख्यानम्, आदिग्रहणात् गौणमुख्यस्तुतिनिन्दादिभावार्थकृतव्यवच्छेदादिति ।

**अथोच्येत ननूक्तमेव गुणसमुदायमात्रार्थस्य सर्वथा दर्शनासम्भवः सत्यपि च दर्शनेऽनुमानासम्भव इति पुनरिदानीं को विचारो दर्शनं स्यादिति ? स्थिते तु स्वार्थाभावे सामान्यरूपस्याभावमात्रस्य निवृत्तिः, अभावभेदासंस्पर्शात्, वृक्ष इत्यवृक्षो न भवति अग्निरित्यनग्निर्न भवतीत्यवृक्षानग्नी अभावभेदासंस्पर्शेनोच्येते, तस्मात् सर्वाभावभेददर्शनेन विनैवापोहो गमक इत्यत्रोच्यते अथ स्वार्थाभावाभावमात्रत्वे वृक्ष इति धूम इति तच्छब्दलिङ्गाभ्यामपोह्यौ घटादिभेदरूपाण्यसंस्पृश्य प्रसज्यप्रतिषेधेन तन्मात्रमेव च गम्येत, न वृक्षादिपर्युदासेन घटादिरर्थात्मा कश्चित्, अन्यस्यासत्त्वादविवक्षितत्वाच्च, स्वयमनवगतः कथमभावं विशेषयितुं शक्नुयात् अवृक्षो वृक्षाभावो न घटाभाव इति, तस्य भावलभ्यात्मलाभत्वात्, उभयत्र सपक्षासपक्षयोः न किञ्चित् केनचिद्विशेषयितुं शक्यम् ।**

---

न्दस्यैकत्वेन तद्विशेषस्य निरूपयितुमशक्यत्वात् स एव शब्दोऽनेकार्थबोधकशक्तिमानिति भावः । तत्रादित्यस्य प्रकाशोष्णतापङ्कजविकसनप्रभृत्यनेककार्यकारित्ववदनेकार्थबोधकशक्तियुतत्वमित्याह-**एकादित्येति ।** नन्वनेकार्थत्वेऽपि शब्दस्याभेदे विभागेन प्रतिपत्तेरभावात् गोशब्दादेरत्र कोऽर्थो ग्राह्य इत्यनवच्छेदस्य संशयस्य प्रसङ्गः, गोशब्दत्वलक्षणसाधारणधर्मदर्शनादन्यतरविशेषधर्मास्मरणाच्चेत्याशङ्कते-**स्यान्मतमिति ।** नास्ति शब्दार्थानवच्छेदः, अनवच्छेदकप्रतिबन्धकविशेषस्मृतेरुद्बोधकभूताः संसर्गादयो हेतवः सन्तीति दर्शयति-**प्रत्यर्थवृत्तीति,** अर्थमर्थं प्रति प्रत्यर्थं वर्तनं शब्दस्य, सद्व्यवस्थाविधायका नियतार्थावसायहेतुत्वाद्विशेषस्मृतिहेतवः संसर्गादय इति भावः । सकरभा धेनुः अकरभा धेनुरिति संसर्गविप्रयोगयोरुदाहरणम्, करभस्य संसर्गेण विप्रयोगेण च विशिष्टजातीयधेनोरवगतिः, रामलक्ष्मणाविन्य लक्ष्मणसाहचर्याद्दाशरथेः रामार्जुनावित्यत्रार्जुनसंसर्गेर्जामदग्न्यस्य, अञ्जलिना जुहोति अञ्जलिना सूर्यमुपतिष्ठते इत्यादौ जुहोतीत्यादर्थवशादञ्जलिशब्दस्य विभिन्नार्थवाचकत्वस्य, सैन्धवमानयेत्यत्र ग्रामभोजनप्रकरणाभ्यामश्वलवणार्थस्य, अक्ताः शर्करा उपदधातीत्यत्र तेजो वै घृतमिति स्तुतिलिङ्गेन घृतसाधनशर्कराकर्मकाञ्जिक्रियायाः, अर्जुनः कार्तवीर्य इत्यत्र कार्तवीर्यशब्दसन्निधानात् कार्तवीर्यार्जुनस्य, अनुदरा कन्येत्यादौ सामर्थ्यादुदरविशेषस्य, यश्च निम्बं परशुनेत्यत्रौचित्यात्समुचितच्छेदनक्रियापदाक्षेपस्य, मथुराया प्राचीनात्नगरादागच्छामीत्यत्र देशवशात् पाटलिपुत्ररूपनगरविशेषस्य, द्वारमित्युक्ते शिशिरे पिधेहीति ग्रीष्मे समुद्घाटयेति पदाक्षेपस्य, ग्रामस्यार्धं लभेतेत्यत्रार्धमिति व्यक्तिलिङ्गात् समार्धस्य, स्थूलपृषतीमालभेतेत्यादौ स्वरस्यान्तोदात्तस्य श्रवणात् कर्मधारयार्थस्य च निर्णयो भवतीति श्लोकयोरुदाहरणानि । स्वरादय इत्यत्रादिग्रहणप्राह्यान् दर्शयति-**आदिग्रहणादिति,** गौर्वाहीक इत्यादौ गौणमुख्यन्यायाद्भावार्थस्य विनिश्चयः, एवं क्वचिन्निन्दापरवाक्यात् स्तुतिरूपस्य स्तुतिपरवाक्यात् निन्दारूपस्य भावार्थस्य व्यवच्छेद इति भावः । नन्वर्थे गुणसमुदायरूपे, गुणानाञ्च यावतां ग्रहणासम्भवेन सर्वथाऽर्थस्यादर्शनमेव सत्यपि कथञ्चिद्दर्शने कार्त्स्न्येनाविनाभावाग्रहणादनुमानासम्भव एवेति प्रतिपादितत्वात् मम अमदपि दृष्टः द्रव्यमद्रव्यमपि दृष्टम् घटोऽघटश्च दृष्ट इत्यादि दर्शनविचारस्यावकाश एव नास्तीत्याशङ्कते-**अथोच्येतेति ।** तामेव शङ्कामादर्शयति-**ननूक्तमेवेति,** इति पदेनाप्रेतनेन सम्बन्धः, मूलतोऽर्थदर्शनमेव नास्तीति दर्शनाकांक्षाया एव निरासे सति ततो दर्शनविचारस्यावकाश एव नास्तीति भावः । तदेवं

**अथोच्येतेत्यादि,** अथ परेणोच्येत ननूक्तमेव गुणसमुदायमात्रस्य काणकुण्टादेर्दर्शनासम्भवः, सत्यपि च दर्शने सर्वथाऽनुमानासम्भवः, सर्वप्रकारेणादृष्टत्वादि[ति] निराकांक्षीकृते मूलत एव पुनरिदानीं को विचारो दर्शनं स्याविति ?, स्थिते तु स्वार्थस्याभावे सामान्यरूपस्याभावमात्रस्य निवृत्तिः, अभावभेदासंस्पर्शात्—वृक्ष इत्यवृक्षो न भवति, अग्निरित्यनग्निर्न भवतीत्यवृक्षानग्नी अभावभेदासंस्पर्शेनोच्येते, न वाऽभावस्य भेदाः सन्ति, तस्मात् सर्वाभावभेददर्शनेन विनैवापोहो गमक इत्यत्रोच्यते—अथ स्वार्थाभावाभावमात्रत्वे त्वदिष्टे कः शब्दार्थ इति पृच्छति—वृक्ष इत्यादि प्रत्युच्चार्य अत्राप्यपोहाभावमापादयितुकामः तच्छब्दो—वृक्षशब्दः परार्थेऽनुमाने, स्वार्थे धूमश्च लिङ्गं, ताभ्यामन्या[प]पोह्यौ—अवृक्षानग्नी घटादिभेदरूपाण्यसंस्पृश्येत्यभिमतार्थसूचनम्, प्रसज्यप्रतिषेधार्थे[न]वृक्षो न भवत्यवृक्ष इति तन्मात्रमेव च गम्येत, न च गम्यत इत्यभिप्रायः, वृक्षादन्योऽवृक्ष इति न वृक्षपर्युदासेन घटादिरर्थोऽस्माऽन्यः कश्चिल्लभ्यते, अन्यस्यासत्त्वादविवक्षितत्वाच्च वृक्ष एव व्याख्येयो विवक्षितत्वात्, स्वयमनवगतः कथमभावं विशेषयितुं शक्नुयात् ? अवृक्षो वृक्षाभावो न घटाभाव इति खपुष्पमिव वन्ध्यापुत्रः, कस्मात् ? तस्य—अभावस्य भावेन लभ्यात्मलाभत्वात्, सः स्वयमसन् कथमसतो विशेषणं स्यात्, उभयत्र च—अन्वये व्यतिरेके च घटादीनां भेदरूपाणां सपक्षासपक्षयोरस्पृशत्वेनेष्टत्वात् न किञ्चित् केनचिद्विशेषयितुं शक्यम् ।

नास्ति स्वार्थो नाम कश्चित्, तथा च शब्देन लिङ्गेन च स्वार्थाभावस्य सामान्यस्य निवृत्तिमात्रं क्रियते, यथा वृक्षशब्दः स्वार्थाभावेनावृक्षसामान्यस्य निवर्तक, न हि वृक्षसामान्याभावो घटपटादीनवृक्षान् स्पृशति, अभावस्य भेदाभावादित्याह—**स्थिते तु स्वार्थस्याभाव इति,** शब्दवाच्यस्य वृक्षादिभावरूपस्य स्वार्थस्य गुणसमुदायरूपस्याभावे निश्चितेऽवृक्षोऽपि वृक्षसामान्याभाव एव सामान्यरूपो न तु घटपटादिविशेषात्मको वृक्षाभाव, तस्य घटपटादिविशेषे संस्पर्शाभावात्, केवलं वृक्ष इति शब्देनापोह्यतया अवृक्षमात्रमुच्यते, अग्निरित्यनेन चानग्निमात्रमिति भाव । एवञ्चावृक्षभूताना घटपटादिनिखिलभेदानामपरिज्ञानेऽपि गमकत्वं सम्भवत्येवेत्याह- **तस्मादिति,** एवमपोह्यस्यादर्शनादयं भवत्ययं न भवतीत्यन्वयव्यतिरेकौ न भवितुमर्हतः, दृष्टानेव हि बुद्धिरन्वियात्तेभ्य एव च व्यावर्तयेत, नात्यन्तादृष्टान् खपुष्पवन्ध्यापुत्रादिविषयानित्यपासमिति भाव । अत्राचार्य आह-**अथ स्वार्थाभावेति,** स्वार्थाभावसामान्याभाव एव यद्यभीप्सित- तर्हि शब्देन न कश्चिदर्थो गम्येतेत्यभिप्राय । तमेव स्फुटयति-**वृक्ष इत्यादीति,** आदिना धूम इतीति ग्राह्यम्, वृक्ष इति शब्दः परार्थानुमानभूतो ग्राह्य धूम इति स्वार्थानुमानलिङ्गभूतश्च, अत आह—**तच्छब्द इति,** आभ्यामन्यौ हि अपोह्यौ भवत, वृक्षशब्देनावृक्ष धूमेनानग्निश्च, कथम् ? भेदरूपाणि घटपटादीन्यसंस्पृश्य, एवं तर्हि अवृक्षशब्दस्य वृक्षाभाव एवार्थो न तु वृक्षाभाववान् घटादि, एवमनग्निशब्दस्यापि, भवत्विति चेन्न तथा सति प्रसज्यप्रतिषेधेन वृक्षो न भवति, अग्निर्न भवतीत्यभावमात्रं गम्येत, न च तथा गम्यत इति भावः । गम्यते च पर्युदासेन वृक्षादन्योऽवृक्षो घटपटादिरर्थ, भवन्मतेन तु तथाविधोऽन्यरूपोऽर्थो नास्ति, गुणसमुदायरूपस्य तस्यादर्शनात्, कथञ्चित् सन्नपि सोऽर्थोऽत्र न विवक्षित, वृक्षस्यैव प्रतिपिपादयिषितत्वादित्याशयेनाह—**वृक्षादन्य इति** । ननु अन्यस्यासत्त्वं भवतु वृक्षस्य विवक्षितत्वादवृक्ष इति वृक्षाभावगतिश्च को दोष इत्यत्राह **स्वयमनवगत इति,** वृक्षो हि गुणसमुदायरूपत्वादनवगतः, एवञ्च वृक्षशब्देनापोह्योऽवृक्षो घटाद्यभाव एव कथं न स्यात्, अनवगतो हि वृक्ष स्वाभावं घटाद्यभावाद्व्यावर्तयितुं कथं शक्नुयात्, न ह्यनवगतो वन्ध्यापुत्र स्वं खपुष्पाद्व्यावर्तयितुं शक्नोति, स्वस्वरूपस्यैवासिद्धेरिति भाव. । तमेव हेतुमाह—**तस्येति,** अभावस्यात्मलाभो भावेन भवति, अयमभावो घटस्य, अयमभाव पटस्येति, यदा तु भाव एव स्वयमसन् तदा कथं सोऽभावस्य स्वरूपं लम्भयितुं क्षम स्यादिति भाव । एवञ्चायं वृक्षो भवति, अयमवृक्षो न भवतीत्यन्वयं व्यतिरेकं च वृक्षाभ्यादेः घटपटादेश्च भेदरूपस्यासंस्पर्शात् किं केन कस्माद्व्यावर्त्येत इति दर्शयति—**उभयत्र चेति** । एवम् वृक्षशब्दार्थेऽवृक्षो न भवतीत्येवं

१ सि. क्ष. डा. दे. तोऽर्थसूत्रं च । २ सि. क्ष. डा. दे. °भावोमदभाव० ।

**ततश्च वृक्ष इत्यवृक्षो न भवतीत्युक्ते इदमुक्तं भवेत् योऽभावाभावः स वृक्ष इति नान्यदभावनिवृत्तेः, ततो घटपटादीनां वृक्षतावत् वृक्षशब्दार्थत्वप्राप्तेः कुतोऽपोहस्तेषां स्यात्, सर्वथा वा गतिर्भवेत्, अतः सर्वदर्शननिराकाङ्क्षतायां सत्यां शब्दादनुमानाद्वाऽभावाभावमात्रवृक्षाग्नित्वाद् विशेषवचनप्रत्ययानर्थक्यम्, अभावाभावमात्रस्यैकत्वात्, भेदविषयवचनानुमानव्यवहारनिर्विषयत्वात्, अभूतभेदविषयत्वाद्वा खपुष्पादिवत्, अगतिरज्ञानं वा वृक्षशब्दोच्चारणाद्भवेत् सर्वथा, गंतव्याभावात्, अभावाभावमात्रवृत्तित्वाच्छब्दानुमानयोरिति ।**

**ततश्चेत्यादि,** अस्मादुक्तन्यायादेष शब्दार्थः सवृत्तः, वृक्ष इत्यवृक्षो न भवतीत्युक्ते इदमुक्तं भवेत् सम्भाव्येत, योऽभावेत्यादि, अभावस्याभावो वृक्ष इत्युक्तं स्यात्, नान्यदभावनिवृत्तेः, ततो घटपटादीनामभावनिवृत्तिमात्रत्वात् वृक्षतावत् वृक्षशब्दार्थवत्त्वं प्राप्तम्, कुतोऽपोहस्तेषां स्यात्? तत्संस्पर्शे हि स्यादपोहस्तेऽवृक्षो न भवतीति, इत्थमपोहाभावः, अनिष्टश्चैतत्, किञ्चान्यम्—सर्वथा वा गतिर्भवेत्—अभावाभावमात्रं हि वृक्षोऽग्निर्वा स्यात्, न सपक्षासपक्षभेदसंस्पर्शेन दृष्टवत्, अतः सर्वदर्शननिराकाङ्क्षता, तस्याञ्च सत्यां शब्दात्-वृक्षात् अनुमानाद्वा- धूमादभावाभावमात्रवृक्षाग्नित्वात् दृष्टभेदासंस्पर्शादेव त्वदुक्तात् वृक्षोऽग्निरिति च विशेषवचनप्रत्ययानर्थक्यं स्यात्, कस्मात्? अभावाभावमात्रस्यैकत्वादिति, स्वपरार्थानुमानयोः सामान्येन हेतुः खपुष्पादिवदिति दृष्टान्तः, विशेष्य वा हेतुः—भेदविषयवचनानुमानव्यवहारनिर्विषयत्वात्, अभूतभेदविषयत्वादिति, सामान्येन स एव दृष्टान्तः सर्वत्रान्तेऽभिहितत्वात्, अयमन्यो व्याख्याविकल्पः,

---

रूपे यथावृक्षो व्यतिरेको भेद न स्पृशति तथा तदपोहोऽन्वयोऽपि भेदं न स्पृशति तथाभावाभावमात्रं वृक्षशब्दार्थः स्यादित्याह—**ततश्चेति** । व्याचष्टे—**अस्मादुक्तन्यायादिति,** गुणसमुदायमात्रार्थत्वाभावसामान्यव्यावर्तनन्यायादित्यर्थः । वृक्षशब्दस्यावृक्षो न भवतीत्यर्थकत्वे किमुक्तं भवेदिति सम्भाव्यत इत्यत्राह—**योऽभावेत्यादीति,** योऽभावाभावः—अभावसामान्यस्याभावः स एव वृक्ष इत्युक्तं सम्भाव्यते, तथा सति सर्वं घटपटादि वस्तु अभावनिवृत्तिरूपत्वाद्वृक्षस्वरूपं प्राप्तम्, तद्वत् वृक्षशब्दार्थत्वमपि घटपटादीनां प्राप्तम्, वृक्षस्य वृक्षशब्दार्थत्वात्, तेषाञ्च वृक्षत्वात्, न ह्यभावनिवृत्तेरन्यो वृक्षः, तस्माद्वृक्षशब्देन न घटपटादीनामपोहः स्यादिति भावः । यद्यवृक्षो घटपटादिभेदरूपाणि संस्पृशेत्तर्हि तेषां व्यावृत्तिः वृक्षशब्दाद्भवेत्, नेष्यते च तथा, तस्मात्तदपोहो न स्यादेवेत्याह—**तत्संस्पर्शो हीति** । दोषान्तरमाह—**सर्वथा वेति,** वस्तुमात्रं ह्यभावाभावरूपमतोऽभावाभावमात्रेण सर्वेषां सर्वथाऽवगतिर्भवेत्, वृक्षशब्दादेव वृक्षवदग्निघटपटमठादेरवगतिः स्यात्, न त्ववृक्षा ये घटपटादयस्तद्भिन्नो वृक्ष एव वृक्षशब्दार्थः, नाग्न्यादिः, अनग्निर्ये घटपटादिस्तदन्योऽग्निरेव धूमेन गम्य इति लोकेन यथा दृश्यते तथा न स्यादिति भावः । एवञ्च लोकेन दृष्टानां विविधानां दर्शनानां त्वयाऽनाकाङ्क्षणाद्वृक्षोऽयं वृक्षशब्दवाच्यः, अग्निरयं धूमलिङ्गगम्य इत्येवं विशेषवचनानां प्रत्ययानाञ्च वैयर्थ्यमेव कृतं स्यात् शब्दगम्येऽनुमानगम्ये चाभावाभावे वैलक्षण्याभावादित्याह—**अतः सर्वदर्शनेति,** एकेनैव शब्देनानुमानेन वाऽभावाभावमात्रत्वेन निखिलवस्त्ववगतेः सर्वदर्शनानां निराकाङ्क्षतेत्यर्थः। भवतु तन्निराकाङ्क्षतेत्यत्राह—**तस्याञ्च सत्यामिति** । अभावाभावमात्रस्यैकत्वादिति हेतुर्विशेषवचनानर्थक्यलक्षणपरार्थानुमाने विशेषप्रत्ययानर्थक्यलक्षणस्वार्थानुमाने चैकहेतुरित्याह—**स्वपरार्थेति** । खपुष्पमप्यभावाभावमात्रमनर्थकञ्चेति दृष्टान्तमाह—**खपुष्पादीति** । उभयत्र विशेष्य हेतुद्वयमाह—**भेदविषयेति,** विशेषवचनमनर्थकम्, भेदविषयवचनव्यवहारनिर्विषयत्वात्, विशेषप्रत्ययोऽनर्थको भेदविषयानुमानव्यवहारनिर्विषयत्वात्, खपुष्पादिवदिति भावः । उक्तहेतुद्वयेनापि सामान्यहेतुं सिद्धमाह—**अभूतभेदविषयत्वादिति,** अविद्यमानभेदविषयत्वादित्यर्थः । सर्वत्र खपुष्पादिरेव दृष्टान्त इत्याह—**स एवेति** । तत्र हेतुमाह—**सर्वत्रेति** । सर्वथा वा गतिर्भवेदिति मूलमकारं प्रश्लिष्य सर्वथा वाऽगतिर्भवेदिति मत्वा प्रकारान्तरेण व्याचष्टे—**अयमन्य इति** । वृक्षादिशब्दोच्चारणे भेदनिर्विषयत्वादज्ञानमेव कस्यापि

तद्यथा–सर्वथा वाऽगतिर्भवेत् प्रश्नेयत्वभ्याकारत्वात्, अगतिरज्ञानं वृक्षशब्दोच्चारणाद्भवेत् सर्वथा, कस्मात्? गन्तव्याभावात्, गन्तव्याभावश्चाभावाभावमात्रवृत्तित्वाच्छब्दानुमानयोरिति ।

अत्रोच्येत न स्वभेदा अपोह्यन्ते नाप्यशेषभेदासंस्पर्शेनाभावमात्रम्, किन्तर्हि? स्वसम्बन्धिसामान्यधर्मानुबन्धिभेदेष्वविनाभाविषु दर्शनसंस्पर्शने तद्व्यतिरिक्तेष्वन्यापोहस्य प्रवृत्तिरिति नोक्तदोषाः, अत एव चेदं स्वसम्बन्धिभ्योऽन्यत्र[ा]दर्शनात्तद्व्यवच्छेदानुमानमिति, अस्य व्याख्या–यत्र दृष्टः सोऽत्र सम्बन्ध्यभिप्रेतो न त्वविनाभावित्वसम्बन्धेन, .........अवृक्षोऽनग्निर्वा न भवतीति, एवञ्च कृत्वा वृक्षशब्दाद्धूमाच्चानेकाविनाभाविनां पृथिवीद्रव्यत्वादीनामनुमानमुपपन्नं भवति, तद्दर्शनस्पर्शनवृत्तत्वात्, इतरथा त्वनुबन्धिनामन्यत्वादतुल्ये एव वृत्तेरपक्षधर्मत्वादनैकान्तिकत्वविरुद्धत्वानुमानाभासदोषाः स्युः, अनुबन्धिनां त्यागे च तदविनाभाविनः स्वार्थस्यासम्भव एव, ततः प्रत्याय्यप्रत्यायनयोरनुपपत्तिः, तस्मात् स्वसम्बन्धिभावाभावाभ्यां दर्शनादर्शनयोरभिप्रेतानुमानसिद्धिरिति ।

**अत्रोच्येतेत्यादि,** स्वभेदाभावव्यावृत्तिलक्षणान्यापोहेऽनन्त्वादसम्भवसम्बन्धाभिधानादिदोषा उक्ताः, सामान्याभावाभावमात्रे सर्वैकत्वानर्थक्यापोहाभावदोषा उक्ताः, तेषां पक्षद्वयानभ्युपगमात् परिहारः । नाप्यशेषेत्यादि, किं तर्हीति पक्षान्तरं श्रयते निर्दोषं मन्यमानः, स्वसम्बन्धि[नो]वृक्षस्याग्नेर्वा सत्त्वाद्रव्यत्वादिसामान्यधर्माः तदनुबन्धिनो भेदाश्च शिंशपादयः तेष्वविनाभाविषु दर्शनसंस्पर्शने तद्व्यतिरिक्तेषु घटादिष्वदर्शनसंस्पर्शने जलादिषु चान्यापोहस्य प्रवृत्तत्वान्न सम्भवन्त्युभयपक्षगता दोषाः, अत एव चेदमि-

स्यादित्याह–**अगतिरज्ञानमिति** । कथमज्ञानं भवेदित्यत्राह–**गन्तव्याभावादिति,** अर्थगत्यर्थो हि शब्दप्रयोगो न ह्यत्र पक्षे कश्चनार्थो गम्यत इति भावः । सोऽपि कथमित्यत्राह–**गन्तव्याभावश्चेति,** शब्दानुमानयोर्भेदनिरपेक्षाभावमात्रवृत्तेः ज्ञातव्यं प्राप्यं वा न किमप्यस्तीति भावः । ननु वृक्षादिशब्देन भेदानामभिधानपक्षे वृक्षार्थानामानन्त्यात् सम्बन्धाशक्यत्वादन्वयाभावाच्चानभिधेयतावत् व्यावर्त्यानामपि घटपटादीनामानन्त्यात् तेन तेन प्रकारेणाग्रहत्वादप्रतिपत्त्याऽपोहासम्भव इत्यादिदोषा उक्ताः, अन्वयव्यतिरेकयोर्भेदरूपाणामसंस्पर्शे चाभावाभवमात्रस्यैकत्वेन घटपटवृक्षाभ्यादीनां सर्वेषामेकत्वं विशेषवचनप्रत्ययवैयर्थ्यं सर्वेषां वृक्षत्वेनापोह्याभावादपोहाभावदोषा उक्ताः, तदिदं पक्षद्वयं परित्यज्य वादी शङ्कते–**अत्रोच्येतेति** । व्याचष्टे–**स्वभेदेति,** वृक्षादीनां ये भेदास्तदभावव्यावृत्तिस्वरूपान्यापोहपक्षे भेदानामनन्तत्वात् सम्बन्धाशक्यत्वादन्वयाभावाच्चापोहाभावदोषाः एवं व्यतिरेके भेदविवक्षणेऽपि विज्ञेयम् । भेदरूपासंस्पर्शपक्षे दोषमाह–**सामान्याभावेति,** घटपटवृक्षाग्न्यादीनामेकत्वं विविधवचनप्रत्ययानर्थक्यमपोह्याभावादपोहाभावदोषा उक्ताः प्राग्विस्तरेणेति भावः । उक्तदोषाणां परिहारश्चोक्तपक्षद्वयानभ्युपगमादित्याह–**तेषामिति,** उक्तदोषाणामित्यर्थः । शब्दलिङ्गापोह्यावृक्षानग्निमात्रं नापोह्यत इति द्वितीयपक्षं दर्शयति–**नाप्यशेषेत्यादीति** । वृक्षस्याग्नेर्वा ये सम्बन्धिनः सामान्यधर्माः तदनुबन्धिनो विशेषाश्च, एतेऽन्वयरूपा अत्र दर्शनं संस्पर्शनञ्च सम्भवति, एतद्व्यतिरिक्तेषु दर्शनस्य संस्पर्शनस्य चाप्रवृत्तेरन्यापोहः प्रवर्तत इति पक्षान्तरं दर्शयति–**स्वसम्बन्धिन इति** । **तेष्वविनाभाविष्विति,** एभिर्विना वृक्षादेरसम्भवः, एषु दर्शनं संस्पर्शनञ्च भवति वृक्षादिशब्दादे... न गुणसमुदायमात्रता विवक्षिता, दर्शनाद्यसम्भवादिति

१ सि. क्ष. छा. डे. तद्यथाविकल्पः सर्वथा । २ सि. क्ष. छा. डे. वृक्षान्त० । ३ सि. क्ष. छा. डे. संस्पर्शन । ४ सि. क्ष. छा. डे. संस्पर्शेन ।

त्यादि—एतत्पक्षसंश्रयदर्शनार्थं भाष्यग्रन्थमाह—स्वसम्बन्धिभ्योऽन्यत्रादर्शनादित्यादि, अस्य व्याख्याटीकाग्रन्थः—यत्र दृष्ट इत्यादि यावदवृक्षोऽनग्निर्वा न भवतीति गतार्थः, एवञ्च कृत्वेत्यादि यावदुपपन्नं भवतीति, अनेकाविनाभाविनां पृथिवीद्रव्यत्वादीनां वृक्षशब्दाद्धूमाच्चानुबन्धिनामनुमानं युज्यते, तद्दर्शनस्पर्शने, वृक्षत्वात् पृथिवी द्रव्यं सच्च, धूमत्वाच्च, वृक्षवदग्निवच्चेति, इतरथा त्वित्यादि, अत्यन्तव्यतिरेके सम्बन्धित्वाभावेऽनुबन्धिनां द्रव्य[त्वा]दीनामप्यन्यत्वादतुल्ये विपक्षे एव वृत्तेरपक्षधर्मत्वादनैकान्तिकत्वविरुद्धत्वानुमानाभासदोषाः स्युः, अनुबन्धिनां द्रव्य[त्वा]दीनां त्यागे तदविनाभाविनो वृक्षस्य स्वार्थस्यासम्भव एवेति च दोषः, ततः प्रत्याय्यप्रत्यायनयोः—अर्थशब्दयोरनुपपत्तिः, तस्मात् स्वसम्बन्धिभावेत्याद्युक्तोपसंहारः सम्बन्धिनोऽर्थान्तरस्य भावे दर्शनात् सम्बन्धिन एव भावाभावेऽदर्शनाच्चानुमानस्याभिप्रेतस्य सिद्धिरिति ।

अत्रोत्तरमुच्यते—

**एवं तर्हि यदि सत्त्वादीनि विशेषणानि वृक्षस्य वृक्षादभिन्नानि वृक्षो भवन्ति स वा वृक्षस्तानि भवति तेन तानि विशेष्यन्ते देवदत्तपाण्यादिवदेकभवनात्मना, तस्मिन्नेकभवने प्रयोगः शाखादिमति दर्शनमित्युच्यते, तत्स्वात्मवत्, ततोऽन्यत्वात् द्रव्यादिवृक्षभावदर्शनात्,**

भावः । **तद्व्यतिरिक्तेष्विति,** सत्त्वादिधर्मावच्छिन्नशिंशपादिभेदव्यतिरिक्तेषु घटपटादिषु यत एवानन्व्यादर्शनं संस्पर्शनञ्च न भवतोऽत एव तत्रान्यापोहस्य प्रवृत्तिरिति नात्र पूर्वोदितपक्षदोषा इति भावः । अयमेव पक्षोऽस्माकं सम्मत इति स्वाचार्यभाष्यग्रन्थं प्रमाणयति- **एतत्पक्षेति ।** सर्वत्र यतो दर्शनं न सम्भवति सत्यपि च क्वचिद्दर्शने नानुमानसम्भवोऽत एव यत्र यत्र वृक्षशब्दादिर्दृष्टः स एव स्वसम्बन्धिपदग्राह्यो वृक्षशब्दादिना ग्राह्य, न तु तं शिंशपादयो यैर्विना न संभवन्ति गुणादिभिः ते सर्वे सम्बन्धिन इत्याशयेन व्याकृतं भाष्यटीकाग्रन्थमुपन्यस्यति- **अस्य व्याख्याटीकाग्रन्थ इति ।** यत्र यत्र वृक्षशब्द धूमादिलिङ्गञ्च दृष्टं तत्रैव शब्दलिङ्गयोर्दर्शनादभिधेयत्वानुमेयत्वे, ततोऽन्यत्र शब्दलिङ्गयोरदर्शनात् तद्व्यवच्छेदानुमानमयमवृक्षो न भवत्ययमनग्निर्न भवतीति तद्ग्रन्थमुपदर्शयति—**यत्र दृष्ट इत्यादीति ।** यथा चाभिधेयानुमेयवृक्षाग्न्यादेरन्यत्र वृक्षशब्दधूमलिङ्गयोरदर्शनात्ताभ्यामवृक्षानग्निव्यवच्छेदानुमानं भवति तथैव पृथिवीद्रव्यत्वाद्यभावेऽपि वृक्षशब्दधूमलिङ्गयोरदर्शनात्ताभ्यां पृथिवीद्रव्यत्वाद्यनुमानं भवतीत्याह—**अनेकाविनाभाविनामिति,** अनेकैः सह शब्दलिङ्गैरविनाभाविनामित्यर्थः । **तद्दर्शनस्पर्शने इति,** पृथिवीद्रव्यत्वादेरनुमानाभिधाने इत्यर्थः । तदेवाह—**वृक्षत्वादिति ।** वृक्षाग्न्यादिभिः सह सत्त्वाद्रव्यत्वादिसामान्यधर्मा शिंशपादिभेदाश्च तादात्म्यादविनाभाविनः, अत एव च सम्बन्धिनः, यदि तेषां तादात्म्यं न स्यात्तर्हि अत्यन्तव्यतिरिक्ताः नैर्विना भवन्तोऽसम्बन्धिनः स्युः, एवञ्च द्रव्यत्वादयो वृक्षादात्यन्तोऽन्यत्रैव भवेयुः तथा चातुल्ये विपक्ष एव वृत्तेरपृथिव्यादिव्यवच्छेदानुमानं न स्यात्, अपृथिव्यादिव्यवच्छेदस्य पक्षस्य वृक्षाग्न्यादेर्धर्मत्वाभावात्, वृक्षशब्दादेरपृथिव्यादौ वृत्तेरनैकान्तिकत्वात्, अपृथिव्याद्यविनाभावित्वेन वृक्षशब्दादेर्विरुद्धत्वादनुमानासम्भव इत्याह—**अत्यन्तेति ।** वृक्षादिभिः सह द्रव्यत्वादेरत्यन्तभिन्नत्वेनासम्बन्धाद्यदि द्रव्यत्वादीनि त्यज्यन्ते तर्हि तदविनाभाविनस्तत्स्वरूपस्य वृक्षादेरेवासम्भवः स्यादित्याह—**अनुबन्धिनामिति ।** एवञ्च स्वार्थस्यैवाभावात् कोऽसौ प्रत्यायकः, प्रत्याय्यो वा भवेदित्याह—**ततः इति ।** एवञ्च स्वसम्बन्धिनः सत्त्वद्रव्यत्वाद्यवच्छिन्नवृक्षादेर्भावे दर्शनात् वृक्षशब्दादेस्तदभावे चादर्शनादवृक्षादिव्यवच्छेदानुमानं भवतीत्याह—**सम्बन्धिन इति ।** तदेवंवादिना सामान्यधर्मधर्मिणोस्तादात्म्याभ्युपगमेन स्वपक्षे दृढीकृते सत्त्वादीनां तादात्म्येन विशेषणे दोषमाहाचार्यः—**एवं**

१ सि. क्ष छा. डे. अञ्च । २ सि. क्ष स्पर्शेन, छा. तद्दर्शनस्पर्शेन । ३ सि. क्ष. डे. छा. वृक्षत्वादग्नि० । ४ सि. क्ष. छा. डे. सम्बन्धाभावे० ।

**द्रव्याद्यभावदर्शनानभ्यनुज्ञानादतिस्फुट एवायं विधिवादस्त्वयाऽभ्युपगतः, भवनपरमार्थाभ्युपगमात्, यः कोऽपि भवति वृक्षादिस्तदपि भवनमेव भवत एव भवनात् योऽप्यसौ व्यावृत्त्यभितः तदपि भवनमेव, भवत एव व्यावृत्तेः पर्वतादेः देवदत्तादेः व्यावृत्तिवत्, वैधर्म्येण खपुष्पवत्, एवं भवद्भवननिरूपणेऽयमस्य स्थित एवार्थः स चान्यश्चेत्यान्यापोहपरिग्रहोऽनुगमो विधिरेव, तस्मिंश्च सति सर्वथा वा गतिर्भवेदिति ।**

**एवं तर्हीत्यादि,** यदि सत्त्वादीनीत्यादि–सत्ताद्रव्यपृथिवीत्वादीनि विशेषणानि वृक्षस्य वृक्षादभिन्नानि सन्ति वृक्षो भवन्ति–तानि वृक्ष एवेत्यर्थः, स वा वृक्षस्तानि भवति. तेन तानि विशेष्यन्ते देवदत्तपाण्यादिवदेकभवनात्मनेत्येनदापन्नम्, तस्मिन्नेकभवने प्रयोगः शाखादिमति दर्शनमित्युच्यते, अस्यार्थः स एकभवनात्मकोऽर्थोऽस्य वृक्षशब्दप्रयोगस्य, किमिव? तत्स्वात्मवत्–सत्ताद्रव्यत्वादिवृक्षस्वात्मवत्, वृक्षस्य सत्ताद्रव्यत्वादिस्वात्मवदेकभवनात्मकत्वादित्यर्थः, कस्मात्? उक्तन्यायेन ततोऽनन्यत्वात्–तेभ्यस्तस्य, तस्माद्वा तेषामनन्यत्वात्, द्रव्यादिवृक्षभावदर्शनात्–वृक्षद्रव्यादिभावदर्शनादित्यर्थः, कस्मात्? द्रव्याद्यभावदर्शनानभ्यनुज्ञानात्–पृथिवीद्रव्यसत्त्वाभावे दर्शनं वृक्षस्य वृक्षाभावे वा पृथिव्यादिभावदर्शनं वृक्षात्मविषयत्वान्नाभ्यनुज्ञायते यस्मात् तस्मादेकभवनात्मकत्वानुज्ञानादन्याभावादतिस्फुट एवायं विधिवादस्त्वयाऽभ्युपगतः, पूर्वेष्वपि पक्षेषु स्फुट एव विधिवादः, अस्मिंस्त्वतिस्फुटः, कस्मात्? भवनपरमार्थाभ्युपगमात्–वृक्षशब्दस्य सद्द्रव्यपृथिवीमृदादिवृक्षैकभवनात्मकः परमार्थतोऽर्थ इत्यभ्युपगतत्वात् यः कोऽपि भवतीत्यादिना भवनमेवेति दर्शयति–यावद्वैधर्म्येण खपुष्पवदिति. योऽप्यसावित्यादि, व्यावृत्त्यभिमतोऽपि

**तर्हीति ।** सत्त्वादीनां वृक्षादिभिः सह तादात्म्यात्तद्विशेषणत्वेऽभिमतेऽत्यन्ताभेदात् सत्त्वादीनि वृक्षादीन्यत्र न व्यतिरिक्तानि स्युरथवा वृक्षादीन्येव सत्त्वादीनि स्युर्विनिगमकाभावादिति व्याचष्टे–**सत्ताद्रव्येति ।** सत्त्वादीनां वृक्षरूपतायां विशेषणत्वं वृक्षादीनां सत्त्वादिरूपतायां विशेषणत्वं मत वृक्षः, वृक्षः सन्नस्ति । वृक्षादीनां विशेषणत्वे दृष्टान्तमादर्शयति–**देवदत्तेति,** पाण्यादीनां देवदत्तो विशेषणम्, तदात्मकत्वात्तस्येति भावः । **एकभवभवनात्मनेति,** देवदत्तस्य पाण्यादेः, सत्त्वादेर्वृक्षादेश्च भवनमेकमेव, न पृथग्रूपम् तयोरत्यन्ताभेदादिति भावः । तेनैवैकभवनेन सह वृक्षादिशब्दस्य प्रयोगदर्शनादभेद, तदेवैकभवनं वृक्षादिशब्दाभिधेयं भवतीत्याह–**तस्मिन्नेकभवन इति ।** सत्ताद्रव्यत्वादिवृक्षाद्येकभवने वृक्षादिशब्दप्रयोग एव शाखादिमति वृक्षे वृक्षशब्ददर्शनमित्युच्यत इति भावः । दृष्टान्तमाह–**तत्स्वात्मवदिति,** सत्ताद्रव्यत्वादीनां वृक्षस्वात्मतावत्, यद्वा वृक्षस्य सत्ताद्रव्यत्वादिस्वात्मतावत्, तयोर्हि भवनमेकमेवेति भावः । एकभवनात्मकत्वे हेतुमाह–**उक्तन्यायेनेति,** स्वसम्बन्धिभावाभावाभ्यां दर्शनादर्शनतोऽन्यत्वात् सत्त्वादिभ्यो वृक्षस्य वृक्षात् सत्त्वादीनामिति भावः । उक्तन्यायमेव दर्शयति–**द्रव्यादीति,** द्रव्यत्वादिभावे एव वृक्षस्य दर्शनात्, वृक्षभाव एव तदात्मनो द्रव्यत्वादेर्दर्शनादित्यर्थः । व्यतिरेकमाह–**द्रव्यादीति,** स्वसम्बन्धिभ्योऽन्यत्रादर्शनाभ्युपगमादित्यर्थः । एवञ्चैकभवनात्मकत्वं तयोरुक्तन्यायं वदताऽभ्युपगतमेव स्यात्, ततश्च सत्त्वद्रव्यत्वपृथिवीत्वादिभ्यो वृक्षस्यैकभवनात्मकत्वेन सद्द्रव्यादितोऽन्यस्य कस्याप्यभावादन्यापोहासम्भवेन त्वदीयो वादोऽयं विधिवाद एवेत्यतिस्फुटमिति भावः । अतिशब्दप्रयोजनमाह–**पूर्वेष्वपीति ।** अतिस्फुटत्वे हेतुमाह–**भवनपरमार्थेति,** सामान्योपसर्जनविशेषविशिष्टमानशब्दार्थः परमार्थस्तस्याभ्युपगमादिति भावः । भवन्नेव भवति वृक्षादिः, नाभवन्, खपुष्पादीनामपि भवनप्रसङ्गात् व्यावृत्तित्वेनाभिमतोऽपि भवनमेव, नाभवनम्, भवत एव व्यावृत्तेः, अभवतोऽपि व्यावृत्तिः स्यात्, खपुष्पादेरपि व्यावृत्तिः स्यादित्याशयेनाह–**यः कोऽपीति ।** भवत एव व्यावृत्तिरित्यत्र भवत इति पदं

1 सि. क्ष. छा. डे. पृथिव्यादीनि । २ सि. क्ष. छा. डे. विषयत्वादभ्य० । ३ सि. क्ष. छा. डे. यत्कोऽपि ।

भवन[ म् ]परमार्थत इति दर्शयति–भवत एव व्यावृत्तेरिति हेतुः, भवन्नेव व्यावर्त्तते, कर्त्तरि षष्ठीविभक्त्युत्पत्तेः, पर्वते प्रतिहतस्य देवदत्तस्य व्यावृत्तिवत्, भवत एव व्यावृत्तेरित्यपादानलक्षणा पञ्चमी वा, यो भवति पर्वतादिः तस्माद्भवत एव पर्वतादेर्देवदत्तादेर्व्यावृत्तिवत्, न खपुष्पादिवदिति विधिवाद एव स्फुटीकृतः, ततः किं ? तत इदं–एवं भवद्भवनेत्यादि, इत्थं भवदेव भवतीति निरूपणेऽयमस्य स्थित एवार्थः, स चान्यश्चेत्ययमन्यापोहपरिग्रहः, तस्मिंश्च सति सर्वथा वा गतिर्भवेत्, अनुगमो विधिरेवेत्युपसंहरति ।

**अथवाऽनिर्वाहकव्याख्याविकल्पा एकान्तरूपा उपेक्ष्याः, सर्वथाशब्दो विमर्दरमणीयः परिनिष्ठितोऽयं पिण्डार्थ इत्येतदाख्यानार्थः, वाशब्दो विकल्पार्थः, विकल्पानां गतिः निश्चयः परिनिष्ठा, अनेकान्तः स एवैवं भवेत्, इत्थं सर्वन्यायपरिशुद्धफलत्वादस्य सर्वविकल्पाः विधिप्रतिषेधौ त्वद्वचनादेवापतितौ विधिविकल्पोऽपि सदाद्यात्मकार्थग्रहणात्, अपोहविकल्पोऽपि स्वसम्बन्ध्यन्यप्रतिषेधार्थत्वात्, तेन सर्वथा विकल्पानां गतिः स्याद्वादः, स च द्रव्यार्थपर्यायार्थौ, एकान्तत्यागरूपैकवाक्यमत्यात्मकौ, द्रव्यार्थतः............स्यादनपोह इत्यादि न च तेन..............सर्वेषामपि, ततश्चेदमपि दुरधीतमेवान्यापोहवादिना......... ।**

**अथवाऽनिर्वाहकेत्यादि,** ये त्वमी व्याख्याविकल्पाः कल्पिता विधिवादेऽन्यापोहवादे वा एकान्तरूपाः ते सर्वे न निर्वहन्तीत्युपेक्ष्याः, तत्प्रदर्शनात् सर्वथाशब्दो विमर्दरमणीयः परिनिष्ठितोऽतीतसर्वविचारस्यायं पिण्डार्थ इत्येतदाख्यानार्थः, कोऽसौ पिण्डार्थ इति चेदुच्यते वेति, वाशब्दो विकल्पार्थः विकल्पानां गतिरिति विकल्पानामेव ज्ञानं निश्चयः परिनिष्ठा–सर्वथा घटो घटोऽप्यघटोऽपीत्यादिनिश्चयः, का सा गतिः ? अनेकान्तः, स एव एवं भवेत–स एवानेकान्तो विमर्दक्षमो विचारपर्यवसानेऽवतिष्ठत, इत्थं सर्वन्यायपरि-

---

कर्तृषष्ठ्यन्तं व्याप्तस्य कृतिरित्यादिवदित्याह–**कर्त्तरि षष्ठीति,** 'कर्तृकर्मणोः कृति' ति षष्ठीविधानात्, भवनात्मा देवदत्तः पर्वतेन प्रतिरुद्धो हि व्यावर्त्तत इति भावः । भवत इति पदस्य पञ्चम्यन्तत्वमभिप्रेत्याह–**भवत एवेति,** भवनरूपात् पर्वतादेः भवनरूपस्यैव देवदत्तस्य व्यावृत्तिर्भवति, एवञ्च व्यावृत्तिप्रतियोग्यनुयोगिनोर्भावत्व एव व्यावृत्तिरत सापि भवनमेवेति स्फुटो विधिवाद इति भावः । एवञ्चोभयोर्भावरूपत्वे अन्यः तद्व्यावृत्तिरूपोऽपोहश्च यः स्वार्थ उच्यते सर्वमेतद्विधिरूपमेव सम्पन्नम्, तथा च सर्वथा गतिर्ज्ञानमवगतिर्भवेदेवेत्युपसंहरति–**इत्थं भवदेवेति** । सर्वथा वा गतिर्भवेदित्यस्य वाक्यस्य व्याख्यान्तरमाह–**अथवेति** । व्याख्याविकल्पानेव तावद्दर्शयति–**ये त्वमी इति** । इत्थं व्याख्याविकल्पानां प्रदर्शनादयं पर्यवसितोऽर्थस्तेषामिति प्रदर्शनाय सर्वथाशब्द उक्त इत्याह–**तत्प्रदर्शनादिति,** व्याख्याविकल्पानां प्रदर्शनादित्यर्थः । अनेकान्तस्यैकान्तविमर्दनक्षमत्वं विचारावसानावस्थायित्वञ्च विमर्दरमणीयः परिनिष्ठित इति पदाभ्यामादर्शितम्, एवञ्च वा गतिः सर्वथा भवेदिति योजनया वाशब्दस्य विकल्पार्थत्वात् षष्ठीबहुवचनान्तत्वाव्ययत्वात् व्याख्याविकल्पानां गतिः निर्णयः विमर्दनसमर्थविचारावसानावस्थाय्यनेकान्त एव भवेत् यथा घटोऽप्यघटोऽपि, गौर्गोरप्यगौरपीत्येवं निर्णयादित्याह–**वाशब्द इति** । अनेकान्तस्य विचारपर्यवसानस्थत्वमेवाह–**स एवेति** । स्याद्वादः परिशुद्धनिखिलन्यायानां फलभूतत्वात् सर्वे विकल्पाः तत्तन्न्यायावलम्बिनः कोटिद्वये संक्षेपेण विधिरूपे प्रतिषेधरूपे च विभक्ताः, तत्र केचित्सद्द्रव्यपृथिव्यादिभावार्थग्राहिणोऽत एव विध्यात्मकाः, अपरे चानुमेयाभिधेयसम्बन्धिसामान्यधर्मविच्छिन्नविशेषान्यप्रतियोगिकप्रतिषेधात्मकार्थग्राहिणोऽत एव प्रतिषेधात्मका इति सर्वविकल्पा गृहीता इत्याह–**इत्थं सर्वन्यायेति** , न्यायानां परिशुद्धिरेकान्तपरित्यागेनेति बोध्यम् । एवं च सर्वविकल्पानां पर्यवसानेऽवस्थायित्वात् स्याद्वादस्य

१ सि. क्ष., डे छा सत एव ।

शुद्धिफलत्वादस्य सर्वविकल्पाः संक्षेपेण विधिप्रतिषेधौ, तावुभावित्थं गृहीताविति दर्शयति–विधिविकल्पोऽपि सदाद्यात्मकार्थग्रहणादिति विधिं अपोहविकल्पोऽपि स्वमम्बन्ध्यन्यप्रतिषेधार्थत्वादिति प्रतिषेधमेतौ त्वद्वचनादेवापतितौ, तेन सर्वथा विकल्पानां [ गतिः ]वागतिः स्याद्वादः, स च द्रव्यार्थपर्यायार्थावैकान्तत्यागरूपैकवाक्यमत्यात्मकौ, तयोर्विषयविभागेन शब्दार्थमुपसंहृत्य दर्शयति यथासंख्यं द्रव्यार्थत इत्यादि गतार्थं सोदाहरणं यावत् स्यादनपोह इत्यादि, आदिग्रहणादन्यदपि यत्किंचिदन्यैरप्युद्ग्राहितं वस्तूदाहरणमेवास्य सर्वगतासर्वगतकारणकार्यत्वादीत्यभिप्रायः, न च तेनेत्यादि यावत् सर्वेषामपीति वादपरमेश्वरत्वप्रदर्शनं स्याद्वादस्य गतार्थम् । ततश्चेदमपि दुरधीतमेवान्यापोहवादिनेत्युक्तार्थानुसारेणातिदेशेन दूषयति कारिकाम्, अन्यापोहस्य केवलस्य दूषितत्वात्, दर्शनबलेनैव शब्दार्थप्रतिपत्तेर्व्याख्यातत्वात्, अन्ते वा स्याद्वादोपसंहारात्, एकान्तविधिवाददूषणस्य प्रकाशितप्रकाशनवद्वैयर्थ्यादिति ।

**यत्तूक्तं वृक्षो मझकः क्रियत इत्यत्र वृक्षशब्दोऽर्थप्रकरणशब्दान्तरसन्निध्यादिभिः शिंशपादिष्वपि दृष्टत्वात् सर्वत्र सर्वथा केवलोऽपि शिंशपावाची स्यात् अथ बहुषु पलाशादिषु दृष्टोऽयं वृक्ष इति सामान्यात् संशयो भवतीति चेदेवं सति वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वानि दृष्टानि तेषु निश्चयस्तु दृष्टः, अवृक्षनिवृत्त्यर्थाभिधानवदपृथिव्यद्रव्यासत्त्वव्यावृत्त्या वृक्षाभिधानात्, यथा हि वृक्षादिशब्दाः स्वावयवान् तदनुबन्धिनश्चार्थान् व्याप्नुवन्ति स्वार्थाभावे न वर्त्तन्त इति व्यावृत्तिबलेन निश्चयहेतवः, शिंशपादिस्वार्थाभावेऽपि पलाशादौ वृत्तेरन्वयं संशयहेतव इति वयन्तु ब्रूमो गुणे दोषाभिमानस्ते स्वपक्षरागात्, अन्वयद्वारेणादृष्टत्वात् केवलात् संशयः यथादर्शनमनुमानप्रवृत्तेर्विशेष एवार्थादिरपि निश्चयस्तु विशेषसहितस्य दृष्टत्वात्, सत्त्वद्रव्यत्वपार्थिवत्वादावपि निश्चयो दृष्टबलादेव ।**

**यत्तूक्तमित्यादि**, यत्परेण दोषजातमुपन्यस्तं विधिवादिनं प्रति तत्परिहर्तुकामः पूर्वपक्षयति–वृक्षो मझकः क्रियत इत्यादि, अर्थप्रकरणशब्दान्तरसन्निध्यादिभिः[1] शिंशपादिष्वपि दृष्टत्वात् सर्वत्र सर्वथा केवलोऽपि शिंशपावाची स्याद्वृक्षशब्दः, अनिष्टश्चैतत्, केवलस्याप्रत्यायनात्, अथ बहुष्वित्यादि, सोऽन्या-

परित्यक्तैकान्तद्रव्यार्थपर्यायार्थौ सर्वविषयविज्ञानजनकैकवाक्यमात्मत्वमित्याह–**तेन सर्वथेति** । द्रव्यार्थपर्यायार्थगोचरविभागेन सोदाहरणं शब्दार्थता दर्शयति–**तयोर्विषयविभागेनेति**, अत्र मूलं नोपलब्धम् । अन्येषाम् अन्यैरभ्युपगतानां सर्वगतत्वासर्वगतत्वादीनां वस्तूनामपि द्रव्यार्थपर्यायार्थयोरुदाहरणत्वं विज्ञेयमित्यादिना दर्शयति–**आदिग्रहणादिति** । नैं सर्वगतादिविषयविकल्पैः सह न स्याद्वादस्य विरोधः, स्याद्वादस्य निखिलविकल्पसमूहरूपैकस्य नाथत्वात्, न हि सर्वथा वादानां विरुद्धार्थं त्याजयित्वा साम्यतामापाद्य पालनं विना इत्याह–**न च तेनेत्यादीति** । अन्यापोहवाद्युक्तकारिकान्तरमतिदेशेन दूषयति–**ततश्चेदमपीति,** अत्र कारिका नावगम्यते, अथ वृक्षो मझकः क्रियत इत्यादौ सामान्येनोक्तस्य वृक्षशब्दस्य विशेषविषये संशायकत्वात् तन्निर्णयकार्यर्थप्रकरणशब्दान्तरसन्निध्यादिभिः शिंशपादिविशेषविषयत्वेन निर्णयात् सर्वत्र वृक्षशब्दः शिंशपावाच्येव स्यात्, न सत्ताद्रव्यत्वपृथिवीत्ववृक्षत्वादिविशिष्टाभिधायी स्यात् यदि दर्शनबलेन शब्दार्थप्रतिपत्तिः स्यादित्याशङ्कते–**यत्तूक्तमिति** । व्याचष्टे–**यत्परेणेति** । न चेष्टापत्तिः वृक्षशब्दस्य केवलशिंशपार्थप्रतिपत्तिजनकत्वाभावादित्याह–**अनिष्टश्चैतदिति** । तथाऽऽशङ्कान्तरं

1 सि. क्ष. छा. शिंशपादिभि. ।

पोहवाद्येव परमतमाशङ्कते–बहुषु पलाशादिषु दृष्टोऽयं वृक्षः, तस्मात् कतम एषां विवक्षितः स्यादिति सामान्यात् संशयो भवतीत्याशङ्कय तत्रापि दोषं ब्रूयादन्यापोहवादी एवं सतीत्यादि, वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वानि[ दृ ]ष्टानि तेषु निश्चयस्तु दृष्ट इत्यनैकान्तिकमेतत्, केन पुनर्न्यायेनेति चेत्–अवृक्षनिवृत्त्यर्थाभिधानवदपृथिव्यद्रव्यासत्त्व[ व्या ]वृत्त्या वृक्षाभिधानात्, व्यावृत्तिबलेनेत्यस्य च न्यायस्य गुणोपचयवर्णनं –यथा हि वृक्षेत्यादि गतार्थं यावत् संशयहेतवः इति, वयन्तु ब्रूमो गुणे दोषाभिमानस्ते स्वपक्षरागादिति, व्याख्या–अन्वयद्वारेणादृष्टत्वात् केवलात् संशयः, किं कारणं? यथादर्शनमनुमानप्रवृत्तिर्विशेष एवार्थादिरपि, शिंशपादिवद्विशेषादर्शनादेव पलाशादावपि वृक्षशब्दसामान्यात् संशयो भवत्यदृष्टत्व[ ा ]द्विशेषविरहितस्य, निश्चयस्तु विशेषसहितस्य दृष्टत्वात्, यदप्युच्यते सत्त्वद्रव्यत्वपार्थिवत्वादिषु कस्मान्निश्चयो भवतीति, तत्रापि दृष्टबलादेव ।

**एवमेव च वृक्षार्थभवनप्रतीतिवद्वृक्षशब्दात् पार्थिवद्रव्यसत्त्वानि प्रतीयन्ते तैर्विना वृक्षभवनस्यैवादर्शनात् विधिरूपेण दर्शनसामर्थ्येनैव वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येन त्रिद्व्येकार्थनिश्चयहेतवः प्रातिलोम्येन संशयहेतवः, एवङ्गम्यतामर्थप्रकरणादिसहिताद्वृक्षशब्दात् शिंशपाया वृक्षत्वतत्त्वाद्धवादिभ्योऽर्थेभ्योऽन्यस्याः शिंशपादिशब्दादिव गतिर्विशेषदर्शनादेवेति ।**

**एवमेव च वृक्षार्थेत्यादि,** यावद्वृक्षभवनस्यैवादर्शनादिति, एतदुक्तं भवति यथा वृक्षः स्वार्थभवनेन विना न भवतीति वृक्षशब्दात्तद्भवनं प्रतीयते तथा पार्थिवद्रव्यास्तित्वैर्विना वृक्षत्वस्य [ ाभवनात् वृक्षार्थभवन]-

विधत्ते–**बहुष्विति** । 'बहुधाऽप्यभिधेयस्य सामान्यात् संशयो भवेत् । शब्दात्तु निश्चयो दृष्टोऽवृक्षव्यावृत्तधीरिव ॥' वृक्षशब्दः पलाशसरलरसालपनसपिप्पलकदम्बनिम्बादिषु दृश्यते तस्मात् पलाशत्वतदभावसहचरितवृक्षत्वसामान्यज्ञानात् वृक्ष इत्युक्ते संशयः स्यात्, किं पनसो विवक्षित उत सरल इति, एवं संशयं परेणोद्भाविते अन्यापोहवादी तत्र समाधिमभिधत्त इत्याह–**बहुषु पलाशादिष्विति** । समाधिमेव निदर्शयति–**वृक्षार्थ इति,** सामान्यसामान्यस्य संशयहेतुत्वे व्यभिचारं, त्वया हि वृक्षशब्दार्थ सत्त्वद्रव्यत्वपृथिवीत्ववृक्षत्वविशिष्टो विशेष उच्यते तथा च सत्त्वाद्व्यत्वादेः वृक्षशब्दसामान्यस्य सत्त्वतदभावसहचरितस्य दृष्टत्वात् संशयः स्यात्, न च भवति, किन्तु निश्चय एव दृष्ट इति व्यभिचारः, वृक्षशब्दो हि सम्बन्धानुसार्यात्तज्जातीये दृष्टोऽर्थान्तरनिवृत्तिद्वारेणवाभिधायको दृष्टः, अवृक्षनिवृत्तिद्वारेणैव हि वृक्षशब्दो वृक्षस्याभिधायकः, तद्वदपृथिव्यद्रव्यासत्त्वव्यावृत्त्या वृक्षस्याभिधायक इति भावः । इतरव्यावृत्तिरूपेणैवाभिधायकत्वमिति न्यायमाह–**अवृक्षेति** । शब्दानामन्वयद्वारेणाभिधायकत्वे संशयो दोषः, व्यावृत्तिबलेनाभिधायकत्वे ऽवृक्षापोहस्य वृक्षतदवयवतदनुबन्धित्वात्तत्त्वेन तेषां सत्त्वादीनां निश्चयो भवतीति गुण इत्याशयेनाह–**व्यावृत्तिबलेनेति** । योऽयं गुणे दोषाभिमानस्ते केवलं स्वीये पक्षेऽनुरागादेव न वस्तुस्थित्या, अन्वयद्वारेणाभिधायकत्वे संशयो न सर्वत्र, किन्तु यत्र विशेषो न दृश्यते तत्रैव संशय इत्याशयेनाह–**वयन्तु ब्रूम इति** । **अन्वयद्वारेणेति,** अन्वयद्वारेण विशेषविरहितस्य सामान्यस्यादृष्टत्वात् अनुमानादिप्रमाणेन विशेषसहितस्यैव दर्शनाच्च केवलाद्वृक्षादिशब्दात् संशयो यवपनसशिंशपादिविषय स्यादिति भावः । इदमेवाह–**शिंशपादीति** । वृक्षादिशब्दवाच्यस्य सदादित्वेन न संशयोऽपि तु निश्चय एव, अव्यभिचरितत्वेन तेषां दर्शनादित्याह–**यदप्युच्यत इति** सदादीनामव्यभिचरितत्वमेव तावदुपपादयति–**एवमेव चेति** । वृक्षवृक्षार्थभवनयोर्यथाऽव्यभिचरितत्वं वृक्षार्थभवनेन विना वृक्षस्यादर्शनात्, अत एव च वृक्षशब्दात्तद्भवनं नियमेन प्रतीयते तथा वृक्षत्वस्य पार्थिवभवनाद्यव्यभिचरितत्वात् वृक्षशब्दात्तत्प्रतीतिर्नियमेन भवतीत्याचष्टे–**एतदुक्तं भवतीति** । व्यावृत्तिबलेनाभिधायकत्वे यद्गुणोपचयवर्णनं यथा हीत्यादिनोक्तं तन्निराकरोति

१ सि. छा. डे. निश्चयो न दृष्टः । २ सि क्ष. छा. डे वयन्त्वक्रमे । ३ सि. क्ष °णानष्ट० । ४ सि. क्ष पलाशाद्यपि । ५ अत्र क्षप्रतौ यावत्सार्धैकपत्रमत्रानुपयोगिपाठो दृश्यते सोऽस्माभिरितरत्र नवमेऽनुगुणत्वात् परिगृहीतः ।

प्रतीतिवत् पार्थिवद्रव्यसत्त्वानि प्रतीयन्ते, तैर्विना तस्यैवादर्शनादिति, यदपि च वृक्षशब्दात् पार्थिवद्रव्यसत्त्वत्र्यर्थगतिः, पार्थिवशब्दात् द्रव्यसत्त्वद्व्यर्थगतिः, द्रव्यशब्दात् सत्त्वगतिः आनुलोम्येन, सदादिप्रातिलोम्येन चोत्तरेषु पूर्वस्मात् संशय इति तदपि विधिरूपेण दर्शनसामर्थ्येनैव च वृक्षपार्थिवद्रव्यसच्छब्दा आनुलोम्येनेत्यादि तत्प्रदर्शनं गतार्थं यावत् संशयहेतव इति दर्शनस्यैव निश्चयसंशयहेतुत्वात्, एवं गम्यतामित्यादिरुक्तोपसंहारः तदर्थप्रकरणादिसहिताद्वृक्षशब्दात् शिंशपा[ याः ]वृक्षत्वतत्त्वाद्भवादिभ्योऽर्थेभ्योऽन्यस्याः शिंशपादिशब्दाद्विशेषात्मकादिव[ गतिः ]विशेषदर्शनादेवेति ।

**यदप्यनियतसंशयं ब्रवीषि सोऽपि विशेषाविशेषदर्शनेनैव, यथाऽविभातैकदेशधूमदर्शनादग्निसंशयो बद्धमूलत्वादिविशिष्टधूमदर्शनात्तु तन्निर्णयस्तथा वृक्षशब्दाद्विशेषदर्शनान्निर्णयोऽविशेषदर्शनाच्च संशयः, तद्भावदर्शनन्यायवत् । एवं वृक्षत्वस्य शिंशपादिविशेषेषु पृथिव्यादिसामान्येषु चानेकत्र वृत्तेस्तुल्यत्वेऽपि स्वार्थेन सहैव वृत्तेः पृथिवीत्वादिभिर्वृक्षादेरानुलोम्येन तथादर्शनात् प्रातिलोम्येन दर्शनाच्च निर्णयसंशयौ ।**

**यदप्यनियतसंशयमित्यादि,** योऽयं वृक्षशब्दोच्चारणे कदाचिच्छिंशपाया गतिः कदाचिन्नागतिरित्यनियमः, अविशेषदर्शनादगतिर्विशेषदर्शनाद्गतिः, तत्र निदर्शनम्—यथाऽविभातैकदेशेत्यादि धूमविषयं प्राग्वर्णितं दर्शनं संशयाय विशिष्टन्तु निश्चयायेति दृष्टान्तः, दार्ष्टान्तिकोऽर्थस्तथा वृक्षशब्दादित्यादि यावत्संशयः, केन पुनर्न्यायेन तदेवमिति तद्व्याचष्टे—तद्भावदर्शनन्यायवत्—यथोपवर्णितं प्राक् देशो वाऽग्निधूमात्मकस्तद्भावेन दृष्टो विधिनाऽऽत्मानमेवाऽऽत्मना साधयतीत्यादिः स एवात्रापीति, एवं वृक्षत्वस्येत्यादि प्रकृतोपसंहारः, शिंशपादिविशेषेषु पृथिव्यादिसामान्येषु च तुल्यमप्यनेकत्र वृत्तं स्वार्थेन सहैव वृत्तेः [ वृक्षः ] पृथिवीत्वादिभिः गम्यते त्रिभिरानुलोम्येन पृथिवीद्रव्यसत्त्वैः, पृथिवी द्रव्यसत्त्वाभ्यां [ द्वाभ्याम ] द्रव्यं सत्त्वेनत्येकमेवाऽऽनुलोम्येन तथा दर्शनात्, सत्त्वाद्युत्तरोत्तरसंशयस्तु प्रातिलोम्येन, दर्शनादेव तथेति यावन्निर्णयसंशयाविति गतार्थः ।

**यदपि चेति** । विधिबलेनाभिधायकत्वेऽप्यानुलोम्यप्रातिलोम्याभ्यां निश्चयसंशयौ भवत इत्याह—**विधिरूपेणेति,** यथा शिंशपादिविशेषशब्दाच्छिंशपादिविशेषार्थस्यावगतिस्तथैवार्थप्रकरणादिसामर्थ्यात् वृक्षशब्दादपि वृक्षभूतधर्मादिमत्याः शिंशपाया अवगतिस्तथादर्शनादेव भवतीत्याह—**तदर्थेति** । अथ संशयस्य यदनैयत्यमुदितं तदपि विशेषाविशेषयोर्दर्शनादेव भवेन्नान्यथेति निरूपयति—**यदपीति** । संशयानियममेव दृष्टान्तेनाचष्टे—**योऽयमिति** विशेषदर्शने वृक्षशब्देन शिंशपाया गतिरविशेषदर्शनाच्च तस्या अगतिरिति भावः । विशिष्टो धूमोऽग्निनिश्चायकः तदेकदेशविशेषणानामविभाते धूमोऽग्निसंशयहेतुरिति प्रदर्शयति-**यथाऽविभातेति** । पर्वतादिदेशेन्धनादिसामग्रीसन्निधानेऽग्निधूमरूपेण परिणमन् दृष्टो न तयोरग्निरवार्थेवेति तद्भावदर्शनेन यथा साध्यसाधनयोर्गम्यगमकता व्याख्याता तद्वदत्रापीति दर्शयति-**तद्भावदर्शनेति** धूमस्याग्निभवनदर्शनेत्यर्थः । तमेव न्यायं सूचयति—**यथोपवर्णितमिति** । पृथिवीत्वादिसामान्यधर्माव्यभिचारितया शिंशपात्वादिविशेषस्समानाधिकरणतया चानेकत्र दृष्टं वृक्षत्वं तस्माद्वृक्षशब्दः सद्द्रव्यपृथिवीवृक्षशिंशपादिरूपस्वार्थेन सहैव वृत्तेर्दर्शनात् त्रिभिः सद्द्रव्यपृथिवीत्वैर्न शिंशपादिवृक्षं गमयति, पृथिवीशब्दश्च सद्द्रव्यत्वावच्छिन्ना घटादिपृथिवी द्रव्यशब्दोऽपि सत्त्वावच्छिन्नं पृथिव्यादिद्रव्यं गमयति तथैव दर्शनात्, सदभिधायिसच्छब्देन तु तत्सत् किं द्रव्यं गुणादि वा पृथिवी जलादि वा वृक्षो घटादिर्वेति संशयो जायते तथैव दर्शनात्, तथा द्रव्यशब्देन किं पृथिवी जलादि वा तत्, वृक्षो घटादिर्वेति संशयः पृथिवीशब्देन किं वृक्षो घटादि वा सेति संशयो जायत इति वर्णयति-**एवं वृक्षत्वस्येति** । दर्शनतः निश्चयसंशयव्यव-

१ सि. क्ष. छा. डे. प्रातिलोम्येन सदाद्यानुलोम्येन । २ सि. क्ष °न्यस्मात् । ३ सि. क्ष. छा. नाद० ।

**अथ मन्येत तावेतौ न युक्तौ दर्शनादुभयतोऽपि, वृक्षदर्शनस्य धवशिंशपयोरविशेषो निश्चय एव वा स्यात्, मन्मते पुनः तौ युज्येते, अतुल्यत्वात् स्वार्थाभावे वृत्त्यवृत्त्योः, ते हि संशयनिश्चयहेतू, संशयहेतवस्तावत् वृक्षादिशब्दाः शिंशपादिस्वार्थाभावेऽपि पलाशादौ वृत्तेः, निश्चयहेतवस्तु वृक्षावयवान् तदनुबन्धिनश्च पार्थिवादीन् व्याप्नुवन्ति स्वार्थस्याभावे न वर्त्तन्त इति ते व्यावृत्तिबलेनैवेति।**

**अथ मन्येतेत्यादि,** परमतमाशङ्कते—तावेतौ—निश्चयसंशयौ न युक्तौ दर्शनात्, उभयतोऽपि वृक्षदर्शनस्य धवशिंशपयोरविशेषो निश्चय एव वा स्यात्, मन्मते पुनरन्यापोहे स्वार्थाभावे[ वृत्तेः ]संशयो युज्येत, अवृत्तेश्च निश्चयः, कस्मात्? अतुल्यत्वात् स्वार्थाभावे वृत्त्यवृत्त्योः, ते हि—स्वार्थाभाववृत्त्यवृत्ती यथासंख्यं संशयनिश्चयहेतू, तद्व्याचष्टे—संशयहेतवस्तावद्वृक्षादिशब्दाः शिंशपादिस्वार्थाभावेऽपि पलाशादौ वृत्तेः, सदादिशब्दाश्च द्रव्यादिस्वार्थाभावेऽपि गुणादौ वृत्तेः संशयहेतवः, निश्चयहेतवस्तु वृक्षावयवान् शाखादीन् व्याप्नुवन्ति पार्थिवमृद्द्रव्यादींश्चानुबन्धिनोऽर्थान्, स्वार्थाभावे न वर्त्तन्ते ततस्ते व्यावृत्तिबलेनैव निश्चयहेतव इति।

एतच्च—

**न, दर्शनोत्सर्गापवादाभ्यां वस्तुनोऽतुल्यत्वात् संशयनिश्चयौ, स्थाणुपुरुषविषयशकुनिनिलयनवस्त्रसंयमननियतोत्सर्गापवादभूतोर्द्धत्वसामान्यदर्शनवत्।**

(**नेति**) न, दर्शनस्यैवोत्सर्गापवादभूतत्वात्, वृक्षभवनदर्शनमेव हि पलाशशिंशपादिषूत्सर्गेण प्रवृत्तं शिंशपाभवननियनमपवादभूतं निश्चयाय, कस्मात्? वस्तुनोऽतुल्यत्वात्-वस्त्वेव हि विशिष्टमतुल्यं शिंशपापलाशाख्यं परम्परतस्तदुपकारित्वात् सामान्यवृक्षभवनस्य, सामान्यादुपसर्जनादित्युक्तन्यायत्वात्, किमिव? स्थाणुपुरुषेत्यादि दृष्टान्तो यावद्दर्शनवदिति, यथोर्द्धत्व सामान्यं स्थाणुः स्यात् पुरुषः स्यादिति

स्थापनमयुक्तम्, धवशिंशपयोरविशेषेण वृक्षदर्शनसद्भावादित्याशङ्कते—**अथ मन्येतेति**। व्याचष्टे—**परमतमिति,** अविशेषेण उभयत्र वृक्षदर्शनादेव संशयो वा निश्चय एव वा स्यादिति भावः। स्वमतेन तौ व्यवस्थापयति—**मन्मत इति,** अन्यापोहद्वारेण शब्दानां सन्निधायकत्वे यत्र पलाशादौ वृक्षशब्दार्थशिंशपाभाववति वृक्षशब्दस्य वृत्तेः संशयो भवति, एवं सदादिशब्दा अपि स्ववाच्यद्रव्याद्यभाववति गुणादौ वृत्तेः संशायकाः, अवृक्षाद्यपोहस्य च वृक्षतदवयवतदनुबन्धिषु व्याप्तत्वेन स्वार्थभूतेतदभावे वृक्षादिशब्दस्यावृत्तेर्निश्चायकाः त्वत्पक्षाद्यपोहस्य सर्वत्रातुल्यत्वात् स्वार्थाभाववद्वृत्त्यवृत्ती संशयनिश्चयविधायिन्याविति भावः। संशयनिश्चयविधायित्वमेव प्रकटयति—**संशयहेतव इति**। दर्शनमेव संशयनिश्चयहेतुः, उत्सर्गभूतं तत् संशयहेतुः, अपवादभूतश्च निश्चयहेतुरिति समाधत्ते—**न दर्शनेति,** दर्शनस्योत्सर्गापवादतायां वस्तुनोऽतुल्यत्वमेव बीजमिति मत्वा व्याकरोति—**वृक्षभवनेति,** वृक्ष एव शिंशपापलाशादिरूपेण भवन् दृष्ट इति तेषु वृक्षभवनदर्शनमुत्सर्गेण प्रवृत्तं संशायकं भवति, शिंशपाभवननियतन्तु वृक्षभवनदर्शनं तन्निश्चयाय भवतीति भावः। तत्र हेतुमाह—**वस्तुन इति,** सामान्यभवनस्य विशेषभवनमुपकारि भवतीति सामान्यविशेषौ वस्तुनी न तुल्ये, तस्माच्छिंशपापलाशादिवस्तु विशिष्टं सामान्यस्य वृक्षभवनस्योपकारि भवतीति भावः। दृष्टान्तमत्राह—**स्थाणुपुरुषेति,** अत्रोत्सर्गभूतं सामान्यमूर्द्धत्वदर्शनं संशयहेतुर्भवति, शकुनिनिलयननियतन्तु स्थाणुनिश्चायकम्, तथा वस्त्रसंयमननियतं पुरुषनिश्चायकं भवति, शकुनिनिलयनवस्त्रसंयमनादिवस्तूनां विशिष्टत्वात् तन्नियतमूर्द्धत्वसामान्यदर्शनमपवादभूत

संशयहेतुः, शकुनिनिलयनं स्थाणुरेवेति निश्चयहेतुः, विशिष्टत्वात्, वस्त्रसंयमनं वा पुरुष एवेति, तथैव वृक्षशिंशपादिष्वपि दर्शनादेव ।

अत्राह—

**ननूक्तं वृक्षादेरभावो ह्यवृक्षादिस्तत्रैवादर्शनम्, ततो व्यवच्छेद्यमानं यदवृक्षादि न भवतीति तदेव स्वार्थाभिधानमिति, एवञ्च सति क्व दर्शनं यत्त्वयेष्टम्? वयं ह्यानन्त्यव्यभिचारादिदोषाद्दर्शनपक्षेऽसपक्षादर्शनसाधनार्थमवृक्षाद्यभावो वृक्षादिशब्दार्थ इति कल्पयामः, दर्शनस्यैवाभावात्तद्दोषासंस्पर्शात्, अदर्शनमात्रस्याभिन्नत्वादित्यत्रोच्यते नन्वदर्शनादिति दर्शनस्यैव सिद्धिरेवम्, अदर्शनस्यादर्शनात्, यदि दर्शनमन्वयो नाभ्युपगम्यते न वृक्षो नाम कश्चित् स्यात् तत इदमदर्शनमेवाभावमात्रं खपुष्पादिवन्न किञ्चिदुक्तं स्यात्, अवृक्षस्यैव चाभावो वृक्षीभूतत्वात् सर्वस्य कुतस्तद्दर्शनम्, वृक्षदर्शनबलादेव वाऽवृक्षदर्शनसिद्धिः, वृक्षावृक्षदर्शनाच्चायं वृक्षोऽयं घटादिरवृक्ष इति सिद्धिर्नादृष्ट इति दर्शनमेवैवं सिद्ध्यति ।**

**ननूक्तमित्यादि,** वृक्षादेरभावो ह्यवृक्षादिः, तत्रैवादर्शनम्, ततो व्यवच्छेद्यमानं यत् तदवृक्षादि न भवतीति तदेव स्वार्थाभिधानमिति, एवञ्च सति क्व दर्शनं यत्त्वयेष्टं यतो दर्शनोत्सर्गापवादाभ्यां वस्तुनोऽतुल्यत्वात् संशयनिश्चयाविष्येयाताम्, तत्तु नास्ति दर्शनम्, वयं ह्यानन्त्यव्यभिचारादिदोषात् दर्शनपक्षेऽ[स]पक्षादर्शनसाधनार्थं[अ]वृक्षाद्यभावो वृक्षादिशब्दार्थ इति कल्पयामः, दर्शनस्यैवाभावात्तद्दोषासंस्पर्शाददर्शनमात्रस्याभिन्नत्वादिति, अत्रोच्यते—नन्व[दर्श]नादित्यादि, ननु दर्शनस्यैव सिद्धिरेवम्, अदर्शनस्यादर्शनात्, तद्व्याचष्टे—यदि दर्शनमन्वयो विधिर्नाभ्युपगम्यते वृक्ष इत्यत्रावृक्षस्याभाव एवोक्तः स्यात्, न वृक्षो नाम कश्चित् स्यात्, ततः किं? तत इदमदर्शनमेव—अवृक्षव्यतिरेक एवेत्यर्थः, ततश्चाभावमात्रमेव खपुष्पादिवदित्यादिप्रागुक्तवन्न किञ्चिदुक्तं स्यात्, अवृक्षाभावो वृक्ष इत्यभावमात्रत्वात्, तथाऽवृक्षस्यैवाभावो वृक्षीभूतत्वात् सर्वस्यावृक्षाभावस्य कुतस्तद्दर्शनं, अवृक्षस्य वृक्षदर्शनेनैव व्याप्तत्वात्,

---

नश्चायकमिति भावः । ननु गुणसमुदायमात्रत्वाद्घटादेर्दर्शनासम्भवात् स्वार्थस्य तदन्यस्य चादर्शनात् केवलं स्वार्थाभाव एव स्थितो न तु स्वार्थाभाववान् घटपटादि, तस्मात् सामान्यमात्रस्यावृक्षादेर्व्यवच्छेदो भवति अवृक्षादि न भवतीति, तदेव न वृक्षशब्दात् स्वार्थाभिधानम्, न तु स्वार्थो नाम कश्चिदभिधीयते येन दर्शनं त्वदिष्टं तद्वा तदर्शनरूपं भवेत् येन चोत्सर्गापवादाभ्यां निर्णयसंशयौ भवेतामित्याशङ्कते—**ननूक्तमिति** । तदेव व्याचष्टे—**वृक्षादेरभाव इति,** गुणसमुदायमात्रत्वाद्वृक्षादेरदर्शनम्, तथा तदन्यस्यापि घटपटादेः, केवलमपोहनया वृक्षादिशब्दादवृक्षादिमात्रमभिधीयते न घटपटादिविशेषाः, अभावस्य विशेषाभावात्, तस्मात् सामान्येन वृक्षभवनदर्शनस्य विशेषभवननियतवृक्षभवनदर्शनस्य चाभाव एवेति भावः । तत्र कारणमाह—**वयं हीति,** वृक्षाणामानन्त्यादेकाभिधानेऽपरानभिधानतो व्यभिचाराच्च शब्दादभिधानासम्भवात् दर्शनपक्षे वृक्षशब्दादसपक्षस्य दर्शनं नास्तीति प्रतिपादनायावृक्षाद्यभावस्य वृक्षादिशब्दार्थत्वं ब्रूमः, तस्माद्दर्शनपक्षीयानन्त्यव्यभिचारादिदोषा न सन्ति, अदर्शनस्याभावसामान्यस्य विशेषासंस्पर्शेनाभिन्नत्वादिति भावः । नन्ववृक्षादि त्वयाऽदर्शनमुच्यतेऽसपक्षे वृक्षशब्दादर्शनात् तद्व्यवच्छेदेनादर्शनस्यादर्शनं जातम्, स्वार्थस्याप्यदर्शनात्, एवञ्चादर्शनस्यादर्शनं दर्शनमेव भवेदिति समाधत्ते—**ननु दर्शनस्यैवेति** । प्रोक्तमर्थं स्फुटीकरोति—**यदि दर्शनमिति** दर्शनं हि विधिरुच्यते तस्यानभ्युपगमे वृक्षशब्दादवृक्षाभावमात्रमुक्तं भवेत्, न त्वन्वयरूपो विध्यात्मा वृक्षः, एवञ्चासपक्षादर्शन—

वृक्षदर्शनबलादेव वाऽवृक्षदर्शनसिद्धिः, वृक्षावृक्षदर्शनाभावायं वृक्षोऽयं घटादिरवृक्ष इति सिद्धिर्नादृष्टे तस्माद्दर्शनमेवैवं सिद्ध्यति नादर्शनमिति ।

**अपितृवदवृक्षादर्शनं व्यतिरेकत इति चेन्न, उक्तवत् पितृकल्पस्य दर्शनमत्रापि स्यात्, न चेत् प्रागुक्तवदेवानुपपत्तिः, व्यवस्थाकारिदर्शनेनायं वृक्षोऽयमन्योऽस्माद्घटादिरवृक्ष इति व्यवस्थिते हि विधेये वृक्षेऽदर्शने त्ववृक्ष इति स्यात् ।**

**( अपितृवदिति )** अपितृवदवृक्षादर्शनं व्यतिरेक[त] इति चेत्–स्यान्मतं पितुरन्योऽपिता सर्व इत्यादिप्रागुक्तवददर्शनमित्येतच्च न, उक्तवत् पितृकल्पस्य दर्शनं स्यादत्रापि, न चेत् प्रागुक्तवदेवानुपपत्तिः, प्रत्यक्षदर्शनबलेन ह्ययं वृक्षोऽयमन्योऽस्माद्घटादिरवृक्ष इति व्यवस्थिते विधिना दृष्टेऽन्यापोहलक्षणमदर्शनं स्यान्नान्यथेति, एतदर्थप्रदर्शनो ग्रन्थो व्यवस्थाकारीत्यादि यावत्[व्यव]स्थिते हि वृक्षे विधेयेऽदर्शने त्ववृक्ष इति स्यात्–विधिना दर्शनान्वये सति सिद्ध्यत्येतदिति दर्शयत्येष ग्रन्थः ।

व्यावृत्तिपक्षे त्वनिष्टापादनम्—

**स तु तव तदा स्याद्यदाऽनवस्थावारणाय व्यावर्त्यव्यावर्त्तकयोर्विधिना व्यवस्थापकं दर्शनं भवेत्, तच्च नेष्यत एव, विधिप्राधान्ये तु पृथिवीत्वाद्युत्तरभावा वृक्षादिपूर्वभवनविज्ञानविध्यापाद्याः दृष्टाः वृक्षाद्यात्मकत्वाद्वृक्षादिस्वात्मवत्, वृक्षादिपूर्वभावाः पृथिव्याद्युत्तरभवनविज्ञानविध्यापाद्याः तदनतिरिक्तात्मकत्वात् वृक्षमूलादिवदेवं विधिरूपेण दृष्टवदेवानुमानमभिधानञ्च युज्यते ।**

**स तु तव तदेत्यादि,** यावत्तच्च नेष्यत एव त्वयेति विभक्तिविपरिणामात्, घटादिभ्यो व्यावृत्तौ

मवृक्षव्यतिरेक एव वृक्षशब्दार्थः स्यात् अभावनिवृत्त्यात्मत्वस्य वृक्षादेरभावात् वृक्षोऽभावमात्रमिति वृक्षादिशब्दान्न किञ्चिदुक्तं स्यात्, एवमवृक्षः कोऽपि नास्ति तस्मादवृक्षस्यैवाभावः, घटपटादिनिखिलपदार्थस्यावृक्षाभावत्वेन वृक्षीभूतत्वात्, दृष्टे हि वृक्षे घटपटादिरवृक्षः स्यादिति भावः । कथमन्यापोहः स्यादित्यत्राह–**वृक्षदर्शनबलादेवेति,** स्पष्टम्, एवञ्चान्वयदर्शनमन्तरेण सर्वादर्शनमेव प्रसज्यत इति भावः । ननु पितुरन्ये पुरुषास्तत्त्वरूपेण पिता च पितृत्वेनादृष्टा सन्तोऽपि पितुरन्यत्वेनापितृव्यतिरेकेण च दृश्यन्त एव यथा तथा वृक्षादावपीत्याशङ्कते–**अपितृवदिति** । यथा पितुरन्ये सर्वे पुरुषा अनाश्रितभेदरूपा अन्यत्वरूपव्यावृत्तिबुद्धिमात्रेण निरवयवा एव प्रतीयन्ते पिता चापितृव्यतिरेकेण तद्वदत्रापीति व्याचष्टे–**स्यान्मतमिति** । पितरि तत्सदृशे भ्रात्रादौ विधिरूपेण तत्पर्युदासरूपेणैव मे पिता नेमे भ्रात्रादय इति गृहीते परजनेषु पितुरन्यत्वं प्रतिपत्तुं शक्यमिति प्रागुदितं स्मारयति–**उक्तवदिति** । अन्यथा सर्वस्यादर्शनादत्यन्तासत्पितृपितृत्वसम्पत्त्वादपितृव्यतिरेकेण दर्शनं नैवोपपद्यत इत्याशयेनाह–**न चेदिति** । तस्मादन्ययोर्व्यवस्थाकारि विधिरूपतो दर्शनम्, तथा च प्रत्यक्षतो विधिरूपेण वृक्षादौ दृष्टे विधिरूपेणैव च दृष्टे घटादाववृक्षत्वग्रहेऽयं वृक्षोऽयं घटादिर्वृक्षादन्योऽवृक्ष इति दर्शनेन विधेये वृक्षे व्यवस्थिते तददर्शने चावृक्ष इति स्यादित्याह–**प्रत्यक्षदर्शनबलेनेति** । एतद्ग्रन्थाभिप्रायमाचष्टे–**विधिनेति** । अन्यापोहलक्षणेऽदर्शने व्यतिरेकेऽनवस्थामापाद्यान्यापोहासम्भवप्रकारमादर्शयति–**स तु तवेति** । **त्वयेति,** तवेत्युक्तस्य युष्मच्छब्दस्य तृतीयान्ततया विपरिणमय्य नेष्यत एवेत्यनेन पदेन योजनं कार्यमिति भावः । अथ वृक्षादिशब्दादवृक्षव्यावृत्तिरूपेण वृक्षादिबोधस्तदा स्यात् यदा व्यावर्त्त्यघटादिप्रतियोगिकव्यावृत्तेः सिद्धिः स्यात् व्यावृत्तिप्रतियोगिनो घटादेर्व्यावर्त्त्यस्य सिद्धिस्तु वृक्षादेः सिद्धौ स्यात्, न हि वृक्षाग्रहणेऽवृक्षभूतघटादिसिद्धिस्तदसिद्धौ वा तद्व्यावृत्त्यसिद्ध्या वृक्षग्रहणमिति दूषयति–**घटादिभ्य** इति । परस्परसिद्ध्यधीनसिद्धिकत्वदोषस्तु दर्शनस्य व्यवस्थापकत्वेऽभ्युपगते न

सत्यां वृक्षादिसिद्धिः, तत्सिद्धौ घटादिव्यावर्त्त्यसिद्धिरित्यनवस्था परम्परतः स्यात्, सा मा भूदिति दर्शनं व्यवस्थापकमेषितव्यं विधिना[ व्यावर्त्त्य ]व्यावर्त्तकयोः—वृक्षादिमदावृक्षाद्यसदात्मेति, कथं पुनर्विधिप्राधान्ये तद्दोषाभावः ? उच्यते—विधिप्राधान्ये तु पृथिवीत्वाद्युत्तरेत्यादिसाधनं यावत् स्वात्मवदिति, वृक्षपृथिवीद्रव्यसन्तः, वृक्षशिंशपाकुड्मकुसुमानि, मूलस्कन्धशाखादयश्च वृक्षादयः पूर्वे चोत्तरे च भावा विधिना दृष्टाः, पार्थिवभवनं वृक्षभवनविज्ञानविध्यापाद्यमेव, वृक्षात्मकत्वात् ततोऽनन्यत्वात्, वृक्षस्वात्मवत्, वृक्षात्मकत्वञ्च पार्थिवत्वादीनां पूर्वमापादितम्, मूलाद्युत्तरभावानाञ्चैवतस्तदेकात्मकत्वसिद्धौ सत्यां साधनस्य साधीयस्त्वं तथा पृथिवीभवनमेव द्रव्यभवनं द्रव्य[भवन]मेव सद्भवनमिति, तथा वृक्षादिपूर्वेत्यादि साधनं तद्विपर्ययेणोत्तरधर्मभवनापादनम्, तदनतिरिक्तात्मकत्वात् ततोऽनन्यत्वात्, वृक्षमूलादीति दृष्टान्तः, शिंशपाद्युत्तरभवनविज्ञानविध्यापाद्यो वृक्षस्तदात्मकत्वात् मूलस्कन्धपलाशादिधर्मात्मना वृक्ष एव यथा भवन् दृष्टः तथा शिंशपाद्यात्मना वृक्ष एव भवतीति, एवं विधिरूपेण दृष्टवदेवानुमानं विधिप्राधान्ये युज्यतेऽभिधानञ्च ।

त्वन्मते—

**व्यावृत्तिप्राधान्ये तु दृष्टवत् पार्थिवत्वाद्यसिद्धौ वृक्षो नैव वृक्षादि स्यात् नाशवत्, पार्थिवं द्रव्यत्वेनासिद्धत्वात् पार्थिवं नैव स्याद्गुणवत्, एवं द्रव्यं द्रव्यं न स्यात् सत्त्वनासिद्धत्वात् खपुष्पवदिति, पार्थिवद्रव्यसत्त्वासिद्धयोऽसिद्धा इति चेन्न, व्यावृत्तिप्राधान्येऽन्यत्वात्, तथा सदपि न सत्, द्रव्यादित्वेनासिद्धत्वादेवं पूर्वं पूर्वं नात्मरूपभाक् स्यादुत्तररूपेणाभूतत्वादग्निवदिति ।**

---

सम्भवतीत्याह **सा मा भूदिति** वृक्षादिव्यावर्त्याश्रयभूतव्यावर्त्यसिद्धये घटादि [illegible]पेण किन्तु वृक्षादित्वेन विधिरूपेण दर्शनादेव, व्यावर्त्तकस्य व्यावर्त्तनप्रतियोगिनो घटादे [illegible] नावृक्षादित्वरूपेण अपि तु घटादित्वेन दर्शनादेवेति भावः । [illegible]मुमेव समर्थयति—**विधिप्राधान्ये त्विति । वृक्षपृथिवीति,** पृथिवीद्रव्यसन्तो वृक्षानुबन्धिनो उत्तरे भावा शिंशपाकुड्मादयो मूलस्कन्धादयश्च वृक्षावयवाः पूर्वे भावाः, वृक्षस्यैव पूर्वोत्तरभावत्वात्तया वृक्षात्मकत्वमिति मूलधारेण, पृथिवी वाद्युत्तरेत्याभिधानात् टीकाकृदभिप्रायेण तु पृथिवीत्वादयः पूर्वभावाः, वृक्षशिंशपाद्यः उत्तरे भावाः, पूर्वे चोत्तरे च भावा व्यक्तीरिति ध्येयम् । वृक्षादिभवने दृष्टे पार्थिवादिभवनस्यावश्यं निश्चयात् पार्थिवादिभवनं वृक्षादिभवनविज्ञानविध्यापाद्यं भवति अवश्यनिश्चयश्च पार्थिवभवनस्य वृक्षात्मकत्वादेव, नियमतः सहचरितत्वदर्शनात् तदात्मकत्वं वृक्षवृक्षस्वात्मवत्, एवं मूलादिपूर्वभावा अपि वृक्षाद्युत्तरभवनविज्ञानविध्यापाद्या, वृक्षादनतिरिक्तात्मकत्वात्, न ह्यवयवावयविनोर्भेदोऽस्ति मूलस्कन्धादिभवनस्यैव वृक्षभवनात्मकत्वात्, एवं शिंशपादिभवनमेव वृक्षभवनम्, शिंशपापनसमहकाराद्यव्यतिरिक्तत्वाद्वृक्षस्येति निरूपयति—**पार्थिवभवनमिति** पृथिव्याद्युत्तरभवनरूपेणैव वृक्षादिपूर्वभवनस्य, मूलस्कन्धादिपूर्वभवनरूपेणैव च वृक्षादिभवनस्य विज्ञानात् वृक्ष एव शिंशपाद्यात्मना भवतीति भावार्थः । वृक्षात्मकत्वं पार्थिवादीनां प्राक्प्रख्यातत्वान्नासिद्धमित्याह—**वृक्षात्मकत्वं चेति ।** पृथिव्यादिभवनानां तदुत्तरभवनात्मकत्वमाह—**तथेति ।** उत्तरभवनानां पूर्वभवनात्मत्वमाचष्टे—**वृक्षादिपूर्वेत्यादीति ।** वृक्षभवनं न किञ्चिदन्यत् अपि तु मूलस्कन्धपलाशादिपूर्वभावात्मैव दृष्ट इत्याह—**मूलस्कन्धेति ।** एवमेव शिंशपादिभवनात्मनैव वृक्षादिभवनमिति दार्ष्टान्तिकमाह—**तथा शिंशपाद्यात्मनेति ।** इत्थमनुमानमभिधानञ्च दर्शनविधिनैव विधिप्राधान्येन भवति न तु व्यतिरेकेणेत्याह—**एवमिति ।** व्यतिरेकप्राधान्यपक्षे दोषमाह—**व्यावृत्तिप्राधान्ये त्विति ।** अवृक्षाद्यभावस्याभावमात्रत्वेन पृथिवीत्वाद्यसस्पर्शात्तेषामन्यत्वेन पृथिवीभवनमेव वृक्षभवनमिति

**( व्यावृत्तीति )** व्यावृत्तिप्राधान्ये तु दोषः, तद्यथा–दृष्टवत् पार्थिवत्वाद्यसिद्धौ–पार्थिवद्रव्यसदेकात्मकभवनमेव वृक्षभवनमनिच्छतोऽस्मन्मतं ते वृक्षो नैव वृक्षः स्यात्, पार्थिवत्वेनासिद्धत्वात् तोयवत्, यथा तोयं पार्थिवत्वेनासिद्धं वृक्षो न भवत्येवं वृक्षोऽपि वृक्षो नैव स्यात्, तथा पार्थिवं द्रव्यत्वेनासिद्धत्वात् पार्थिवं नैव स्याद्गुणवत्, यथा गुणस्य द्रव्यत्वेनासिद्धत्वादपार्थिवत्वं तथा पार्थिवस्याप्यपार्थिवत्वं स्यात्, एवं द्रव्यं न द्रव्यं स्यात् सत्त्वेनासिद्धत्वात् खपुष्पवदिति, पार्थिवद्रव्यसत्त्वासिद्धयोऽसिद्धा इति चेन्न, व्यावृत्तिप्राधान्येऽन्यत्वात्–स्वार्थानुवृत्तिभेदानामपि व्यावृत्तित्वात् स्वार्थाभावाभावशब्दार्थत्वाभावात्, प्रसिद्धिविरोधदोष इति चेत्तवैव व्यावृत्तिप्राधान्याभ्युपगमाद्दोषो न ममेति, तथा सदपि न सत्, द्रव्यादित्वेनासिद्धत्वात्, खपुष्पवदिति वर्त्तते, एवं पूर्वं पूर्वं नात्मरूपभाक् स्यात्, उत्तररूपेणाभूतत्वादम्बिवदिति यथावद्वृतार्थमनिष्टापादनम् ।

**यदप्युक्तं 'गुणत्वगन्धसौरभ्यतद्विशेषैरनुक्रमात् । अद्रव्यादिव्यवच्छेद एकवृद्ध्योत्पलादिवत् ॥' इति व्यावृत्तिप्राधान्ये गुणवत्त्वादिभिरद्रव्यादिव्यवच्छेद एकवृद्ध्या युज्यते, विधिप्राधान्ये तु 'दृष्टवद्यदि सिद्धिः स्यात् शौक्ल्यरूपगुणाश्रितात् । क्रमवत्प्रातिलोम्येऽपि त्रिद्ध्येकार्थगतिर्भवेत् ॥' इति, तदपि 'दृष्टानुवृत्तेः . . . . . . . . . . . . . . . . . . . . . .'**

**तद्व्याख्या–दृष्टानुवृत्तेरेव, नादृष्टावच्छेदात् आनुलोम्यान्निश्चयः प्रातिलोम्याद्वा संशयः, यतस्तत्र तुल्येऽन्यत्वे शुक्लत्वाद्गुणे निश्चयो द्रव्यकर्मणोर्न, दर्शनादेव चैकानेकात्मभ्यामाश्रितगुणरूपादिभिर्गुणरूपशौक्ल्येषु संशय इति ।**

**( यदपीति )** यदप्युक्तं गुणत्वगन्धसौरभ्यतद्विशेषैरनुक्रमात् । अद्रव्यादिव्यवच्छेद एकवृद्ध्योत्पलादिवत् ॥' ( प्रमा स. ) इति व्यावृत्तिप्राधान्ये गुणत्वादिभिरद्रव्यादिव्यवच्छेद एकवृद्ध्या

दृष्टवदनभ्युपगमे वृक्षादिर्वृक्षादिरेव न स्यात्, तस्य पार्थिवत्वेनासिद्धत्वादिति व्याचष्टे–**दृष्टवदिति,** तद्भावो हि दृष्टः, वृक्षस्य पार्थिवत्वादिधर्मात्मनाभवनात् पृथिवीद्रव्यसत्त्वानां वृक्षस्वात्मत्वम्, पृथिवीद्रव्यसत्त्वानां वा वृक्षः स्वात्मेत्यस्मन्मतम्, तदनभ्युपगमात् वृक्षादेरसिद्धिः पार्थिवादीनां तदनात्मत्वेन तेन रूपेण तस्यासिद्धत्वादिति भावः । दृष्टान्तमाह–**तोयवदिति ।** एवं पार्थिवत्वासिद्धिमाह **तथा पार्थिवमिति ।** द्रव्यत्वासिद्धिमाह–**एवं द्रव्यमिति ।** पार्थिवादित्वेनासिद्धत्वादिति हेतुनामसिद्धत्वमाशङ्कते–**पार्थिवेति** सामान्यधर्माणां भेदानाञ्च स्वसम्बन्धित्वेन तादात्म्याभ्युपगमादिति भावः । तन्निराकरोति–**व्यावृत्तिप्राधान्य इति ।** स्वार्थस्य वृक्षस्य, अनुवृत्तेः–सामान्यधर्माणां भेदस्य शिंशपादेश्चान्यापोहरूपत्वेनाभावानाञ्च परस्परमभ्यासाभावादवृक्षाभावरूपशब्दार्थेन तेषां ग्रहणासम्भवाद्वृक्षादीनां पार्थिवत्वादिनाऽसिद्धत्वमेवेति भावः । ननु प्रसिद्धिविरोधोऽत्र दोषः वृक्षादीनां पार्थिवादितया प्रसिद्धत्वात्ततो नान्यत्वमित्याशङ्कते–**प्रसिद्धीति ।** न ममाऽयं दोषः, दृष्टवत् सिद्ध्यभ्युपगमात्, किन्तु दृष्टविरुद्धाया व्यावृत्तेः प्राधान्याभ्युपगन्तुस्तवैवेत्युत्तरयति–**तवैवेति ।** एवं पूर्वपूर्वस्य वृक्षादेरुत्तरोत्तररूपतोऽसिद्धत्वादभावमुक्त्वा सम्प्रत्युत्तरोत्तरस्य पूर्वपूर्वरूपतोऽसिद्धत्वादसिद्धिमाह–**तथासदपीति ।** ननु व्यावृत्तिबलेन वृक्षादिशब्दाः स्वावयवान् तदनुवृत्तिश्चार्थान् व्यामुवन्ति, अवृक्षनिवृत्त्यर्थाभिधानवदपृथिव्यद्रव्यासत्त्वव्यावृत्त्या वृक्षाभिधानात्, तस्माद्वृक्षार्थे सत्त्वद्रव्यत्वपार्थिवत्वानां निश्चयः, पृथिवीशब्दार्थे पृथिव्यर्थे सत्त्वद्रव्यत्वयोः द्रव्यशब्दार्थे द्रव्ये सत्त्वस्य निश्चयो ननु दृष्टवत्तादित्याशङ्कते–**यदप्युक्तमिति ।** व्यावृत्तिप्राधान्ये गुणं विधिप्राधान्ये दोषञ्च प्रदर्शयति–**गुणत्वगन्धेति,** इयं कारिका व्यावृत्तिप्राधान्ये गुणवर्णनपरा । विधिप्राधान्ये

युज्यते, विधिप्राधान्ये तु 'दृष्टवद्यदि सिद्धिः स्याच्छौक्ल्यरूपगुणाश्रितात्। क्रमवत् प्रातिलोम्येऽपि त्रिद्व्येकार्यगतिर्भवेत् ॥' ( प्रमा. स. ) इति, तदपि 'दृष्टानुवृत्तेः इत्यादि श्लोकः, क्रमेण त्रिद्व्येकार्थगतिवत् प्रातिलोम्ये त्रिद्व्येकार्थगतिर्न भवति, तथा दर्शनाददर्शनाच्चेति, तद्व्याख्या—दृष्टानुवृत्तेरेव—नादृष्टावच्छेदात्—नादृष्टानुवृत्तेरानुलोम्यान्निश्चयः, प्रातिलोम्याद्वा संशयः, कस्मात्- [1]यतस्तत्र तुल्येऽन्यत्वे शुक्लत्वाद्गुणे निश्चयो द्रव्यकर्मणोर्नेति तयोश्चापोहो न सत्त्वगुणयोः, शौक्ल्यरूपादीनामैकात्म्यान्निश्चयः, दर्शनादेव चैकानेकात्मभ्यामाश्रितगुणरूपादिभिर्गुणरूपशौक्ल्येषु संशय इति।

**तत्रानुबन्धितत्त्वदर्शनान्नैवान्यत्वमिति चेत् शुक्लं तर्हि नीलरक्तपीताद्यपि स्यात् रूपादनन्यत्वात्, शुक्लगुणस्वरूपवत्, एवमेव रसाद्यपि रूपं स्यात् गुणादनन्यत्वात्, गुणः कर्माद्यपि स्यात्, आश्रितानन्यत्वात्, आश्रितं द्व्यणुकाद्यपि उत्क्षेपणादि रूपादि च स्यात्, आश्रितत्वात् तथा चाऽऽश्रितादिना गुणादिसंशयो न स्यात्, शौक्ल्यैकात्म्यात्।**

( **तत्रेति** ) तत्रानुबन्धितत्त्वदर्शनान्नैवान्यत्वमिति चेत्—स्यान्मतं वृक्षात् पार्थिवद्रव्यसत्त्वानीव अनन्यानि शौक्ल्याद्रूपगुणाश्रितानुबन्धीनि, तस्मात्तत्र निश्चयोऽनपोहश्च, येऽन्ये तेषामरूपागुणानाश्रितानामपार्थिवत्वादिवद्वृक्षादपोह इत्यत्र ब्रूमः—शुक्लं तर्हीत्यादि, नीलरक्तपीताद्यपि शुक्लं स्यात्, रूपादनन्यत्वात् शुक्लगुणस्वरूपवत्, एवमेवेत्यादि गतार्थान्यनिष्टापादनानि यावद् द्व्यणुकाद्यपीति, द्व्यणुकं कार्यं द्रव्यमाश्रितं

दोषमाह—**दृष्टवद्यदीति**। रूपवाचकशुक्लादिपदेन रूपस्य गुणस्याश्रितत्वस्य च निश्चयो रूपस्य तथाविधत्वव्यवस्थात्, रूप गुणाश्रितत्वाभ्यां गुणश्चाश्रितत्वेन निश्चीयते अशुक्लादिव्यावृत्त्यर्थोऽभिधानवदरूपागुणानाश्रितत्वव्यावृत्त्या शुक्लार्थास्तथा क्रमवत् त्रिद्व्येकार्थगतिर्यथा भवति तथा व्युत्क्रमादपि त्रिद्व्येकार्थगतिर्विधिपक्षे स्यात्, सामान्येन विधिरूपेण दर्शनस्य समानत्वादिति भावः। तत्र समाधानमभिधत्ते—**तदपीति,** स्यादत्र कारिकैवम्-दृष्टानुवृत्तेः सिद्धिः स्यात् शौक्ल्यरूपगुणाश्रितात्। क्रमवत् प्रातिलोम्ये तु न त्रिद्व्येकार्थनिर्णयः ॥ इति। व्याचष्टे—**क्रमेणेति**। हेतुमाह—**तथा दर्शनेति**। तं व्याचष्टे—**दृष्टानुवृत्तेरेवेति**। **न सत्त्वगुणयोरिति,** शुक्लशब्देन सत्त्वगुणयोरपोहो न भवतीति भावः। भावार्थमाह—**शौक्ल्येति**। शौक्ल्यस्य रूपगुणाश्रितैरैक्यात् निश्चयो दर्शनादेव, आश्रितस्य च गुणरूपशौक्ल्यैरेकात्मताभावात् संशयः तेषामैक्याद्दर्शनादिति भावः। ननु शुक्लादिशब्दार्थः रूपगुणाश्रिता अनुबन्धिनश्च, अत एव तत्त्वभूता नान्ये, तस्मादन्यत्वे तुल्येऽपि शुक्लत्वाद्गुणे निश्चयो न द्रव्यकर्मणोस्तथा दर्शनादिति न युक्तमित्याशङ्कते—**तत्रानुबन्धीति**। व्याकरोति—**स्यान्मतमिति**। यथा वृक्षस्य सत्ताद्रव्यत्वपार्थिवत्वधर्माः सामान्यधर्माः तदनुबन्धिनो भेदाश्च शिंशपादयः, एते सर्वेऽविनाभावित्वादनन्ये, एवं शौक्ल्यात्सामान्यानि रूपादीनि नान्यानि तस्मात्तत्र निश्चय एव, आश्रितगुणरूपादिभिर्गुणरूपशौक्ल्येषु संशय एवेति भावः। वृक्षशब्दादपार्थिवाद्रव्यासत्तां यथाऽपोह तथाऽरूपागुणानाश्रितानामपोहस्तेषामेवान्यत्वादित्याह—**येऽन्ये तेषामिति**। यदि रूपादीनां शौक्ल्यादिनाऽनन्यता तस्माद्रूपादिर्नापोह्यते तर्हि नीलपीतादीनामपि रूपत्वाद्रूपशौक्ल्ययोरभेदान्नीलपीतादीनां शौक्ल्येनानन्यत्वं स्यात्, अरूपस्यैवापोहात्, एवं रसादिरपि रूपं स्यात्, रूपरसाद्योर्गुणाभेदेनानन्यत्वात् न हि रसादयोऽगुणाः येन रसादीनामपोहः स्यात्, एवं कर्माद्यपि गुणः स्यात्, आश्रिताभेदात्, न हि कर्मादेरनाश्रितत्वं येन तदपोहः स्यात्, एवमाश्रितं द्व्यणुकाद्यपि उत्क्षेपणादिरूपादि च स्यात्, आश्रितत्वादेव, न ह्यनाश्रितं तत्, येनापोहस्तस्य स्यात्, एवमाश्रितेन गुणकर्मणोः संशयो न स्यात्, गुणैकात्म्यात्, गुणेन रूपरसादिसंशयो न स्यात्, रूपैकात्म्यात्, एवं रूपेण शौक्ल्यनीलाद्योः संशयो न स्यात्, शौक्ल्यैकात्म्यादित्याशयेन समाधत्ते—**नीलरक्तपीताद्यपीति**। एवमेव कर्मणोऽवान्तरभेदा अपक्षेपणादय उत्क्षेपणं स्यात्, उभयोः कर्माभेदात्, गुणावान्तरभेदा

1 का. तेष्वासरूपा०।

परमाण्वोरुत्क्षेपणादि रूपादि च स्यादिति, आश्रितत्वादित्यस्माद्धेतोः संशयो न स्यात् कर्मगुणेषु सप्रभेदेष्वनुबन्धिवदनन्यत्वात् तदुपायप्रदर्शनं सर्वगुणादिपरिक्रमेण, कस्मात् ? शौक्ल्यैकात्म्यात्त्वदिष्टादिति ।

अत्राह —

**अनन्यत्वमेव तर्ह्यतुल्यं शौक्ल्यादेः, रूपादयो नान्ये शौक्ल्यादेः तद्रूपानुबन्धित्वात्, वृक्षादिपार्थिवत्ववत्, अरूपादित्वे तच्छौक्ल्यमेव न स्यात्, अरूपादित्वात्, उत्क्षेपणादिवत्, तस्मात्तेन सहानन्यत्वात् न तदपोहः, ये पुनरन्ये आश्रितादेस्तु गुणादयः ततः तेषामपोहानपोहाभ्यां संशयः, तद्यथा–गुणोऽयमाश्रितत्वादित्याश्रित एव नियमात्, आश्रितस्तु गुणः कर्म सामान्यं विशेषः समवायो वेत्यनियमः तस्मात्तेन सह तेषामन्यत्वादपोहोऽनपोहश्चेति संशयः स्यादिति ।**

( **अनन्यत्वमेवेति** ) अ[न]न्यत्वमेव तर्ह्यतुल्यं शौक्ल्यादेः–एवं तर्हि नान्यत्वं, किं तर्हि ? अ[न]न्यत्वमेव मा भूदेतदनिष्टमिति, तदर्थ्यत्राह–रूपादयो नान्ये शौक्ल्यादेः, कस्मात् ? तद्रूपानुबन्धित्वात्, वृक्षादिपार्थिवत्व[वत्,][3] किं कारणम् ? अनिष्टापत्तेः, किं तदनिष्टमिति चेत्–अरूपादित्वे शौक्ल्यस्य तच्छौक्ल्यमेव न स्यात्, अरूपादित्वात्, उत्क्षेपणादिवदिति, तस्मात्तेन सहानन्यत्वात्–शौक्ल्येन रूपादेः, न तदपोहः–न रूपाद्यपोहः, ये पुनरन्येऽपि ततस्तेषामपोहानपोहाभ्यां संशयः, तौ पुनस्त उच्येते[4]– आश्रितादेस्तु गुणादयः, तद्यथा–गुणोऽयमाश्रितत्वादित्याश्रित एव नियमाद्गुणो नानाश्रितोऽस्तीति, आश्रितस्तु गुणः कर्म सामान्यं विशेषः समवायो वेत्यनियमः, तस्मात्तेन सहाश्रितत्वेन तेषां गुणादीनामन्यत्वादपोहोऽनपोहश्चेति संशयः स्यादिति ।

---

रसादयोऽपि रूपं स्यात्, उभयोर्गुणाभेदादिदोषमनन्यता सर्वत्र भाव्येत्याह–**कर्मगुणेष्विति** । न हि सर्वत्र वयमनन्यत्वं तुल्यं वदामो येनोक्तानिष्टप्रसङ्गः स्यात्, किन्तु असदृशमनन्यत्वं वदाम इत्याशयेनान्यापोहित्वं शङ्कते–**अनन्यत्वमेवेति** । प्रोक्तानिष्टापत्तिवारणार्थमनन्यत्वमसमानं शौक्ल्यादेरभ्युपगम्यत इत्याह–**एवं तर्हीति** । शौक्ल्यादे रूपादीनां नान्यता किन्त्वनन्यतैव, तद्रूपाविनाभावित्वाच्छौक्ल्यादेः, यथा वृक्षादेः पार्थिवत्वाविनाभावित्वं वृक्षादेरभिन्नत्वं पार्थिवस्येत्याह–**रूपादय इति** । यदि शौक्ल्यादेः रूपादि भिन्नं स्यात्तर्हि शौक्ल्यादि शौक्ल्यमेव न स्यात्, तस्य रूपात्मकत्वाभावात्, यथोत्क्षेपणादि अरूपत्वाच्च शौक्ल्यमित्यनिष्टप्रसङ्गभयेन रूपादेः शौक्ल्यं प्रत्यनन्यतेत्याह–**किं कारणमिति** । एवञ्च रूपादीनां शौक्ल्याद्यनन्यत्वाच्छौक्ल्यपदेन न रूपाद्यपोह इत्याह–**तस्मात्तेन सहेति** । अथान्यत्वस्यागमान्तामेव दर्शयति–**ये पुनरन्येऽपीति**, शौक्ल्यस्य रूपगुणाश्रितेः रूपस्य गुणाश्रितान्यथा गुणस्य चाश्रितेनाभेदेऽपि आश्रितस्य गुणेन गुणस्य रूपेण रूपस्य शौक्ल्येन सह नानन्यता, यतो हि शौक्ल्यादि रूपमेव गुण एवाश्रितमेव च, आश्रितं तु न गुण एवापरेषामपि कर्मसामान्यविशेषसमवायानां सत्त्वात्, एवं गुणोऽपि न रूपमेव, रसादीनामपि सत्त्वात् रूपमपि न शौक्ल्यमेव, नीलादीनामपि सत्त्वात् कर्मापि नोत्क्षेपणमेव, अपक्षेपणादीनां सत्त्वात्, एतच्च गुणादेराश्रितत्वनियमेनानन्यत्वान्नाश्रितत्वापोहः किन्तु निश्चय एव, आश्रितस्य गुणानियमात् संशयः, आश्रितादन्यत्वेन यदाऽऽश्रितपदेन कर्म विवक्ष्यते तदा तेनैव सहानन्यत्वेन गुणादीनामन्यत्वादपोहः गुणस्य विवक्षायां कर्मादेरन्यत्वेनानाश्रितादपोहः, एवञ्चाश्रितादेः गुणादिभिः सहान्यत्वमनन्यत्वञ्चेति अपोहोऽनपोहश्च तेषामिति भावः । अत्रोत्तरमाहाचार्य –

---

१ सि. क्ष. डा. डे. सूपादित्वस्या० । २ डा. °वित्यस्मा० । ३ सि. क्ष. छा. डे. °पार्थिवत्वम् । ४ सि. क्ष. छा. डे. उच्यन्ते ।

आचार्य आह—

**अथैतदेव कुतस्त्वया प्रत्यवगतं तद्वक्तव्यम्, अस्मदिष्टवस्त्वन्वयदर्शनादेवैतत्सिद्धम्, तदभावे तदप्रसिद्धेः, एवं तावद्भेदपक्षे परं प्रत्युक्तयोरानन्त्यानुक्तिव्यभिचारदोषयोः सविशेषयोरन्यापोहपक्षेऽप्यस्तित्वं दर्शितम्।**

(**अथेति**) अथैतदेव कुतः–शौक्ल्यादिना रूपादिषु निश्चयः, आश्रितत्वाद्गुणादिषु संशय इति त्वया यतः प्रत्यवगतं तद्वक्तव्यं विशेषकारणं व्यावृत्तिप्राधान्यवादिना, विधिना दर्शनमन्तरेण वस्तुतो न शक्यम्, अस्मदिष्टवस्त्वन्वयदर्शनादेवैतत्सिद्धम्, तदभावे तन्नियमानियमाप्रसिद्धेः. एवं तावदित्यादि, भेदपक्षे परं प्रत्युक्तयोरानन्त्यानुक्तिव्यभिचारदोषयो'[र]दृष्टेरन्यशब्दार्थे' इत्यादिनाप्यपहतत्वात् सविशेषयोरन्यापोहपक्षेऽप्यस्तित्वं दर्शितमित्युपसंहारः।

**अनन्तरस्यापि चाभावः–तद्यथा 'व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता' असन्निवृत्तेः सर्वभेदव्यापित्वात्तैरभिन्नार्थत्वात् सामानाधिकरण्यमुपपन्नमित्येतन्न, यस्मात्–'असन्निषेधाभावत्वाद्विशेषार्थविभिन्नता' सामान्यशब्दस्य हि सदादेः स्वभेदाप्रतिक्षेपेणार्थान्तरव्युदासे कुतो व्यापारोऽवधारितः प्रागुक्तं विस्मृत्य, अत्र तु वयं ब्रूमः स स्वभेदाप्रतिक्षेपेणैवेति, तस्य सन्नियमार्थत्वात्, असत्प्रतिषेधस्याभावत्वात्, ततो भेदानां परस्परतः सदसत्त्वात् स्वभेदाः प्रतिक्षिप्ता एव, सन्तोऽप्यसंत एव न भवन्तीति प्राप्तम्, ततश्च भेदश्रुत्या सामानाधिकरण्यमनुपपन्नम्, असन्निवृत्तेरभावसाधनत्वात्, अभावेन वैकविभक्तित्वमनुपपन्नं भेदानाम्।**

(**अनन्तरेति**) अनन्तरस्यापि च[ा]भावः–यदप्युक्तमनन्तरस्यापि जातिसम्बन्धाभिधानपक्षयोरुक्तस्य समानाधिकरणाभावप्रसङ्गदोषजातस्य[ा]भाव इति, तद्यथा 'व्याप्तेरन्यनिषेधस्य तद्भेदार्थैरभिन्नता।'

**अथैतदेवेति**। शौक्ल्यादिना रूपादिनिश्चय, आश्रितादिना गुणादि संशय इति कथं विज्ञातं त्वया, व्यावृत्तिप्राधान्ये भेदलक्षणाविध्यसंस्पर्शेन सर्वस्यादर्शनादभावमात्रेऽविशेषादिलिङ्गकृतांशहितत्वात् न हि विधिरूपेण भेददर्शनमन्तरेण संशयनिश्चयवैलक्षण्यं सम्भवतीति व्याचष्टे–**शौक्ल्यादीति**। **तदभाव इति,** अन्वयरूपेण वस्तुना दर्शनाभावे गुणो नियमादाश्रित एव नानाश्रित, आश्रितस्तु गुणो वा कर्म वा सामान्यं वा विशेषो वा समवायो वेत्यनियम इति प्रसिद्धि कथं स्यात, नैव भवेदिति भावः। ननु भेदार्थतापक्षे भेदाना बहुत्वेन सम्बन्धाशक्यत्वान्नाभिधानं भेदानाम्, किञ्च सच्छब्दो यथा द्रव्ये वर्तते तथा घटादिष्वपीति व्यभिचार, तस्मान्न भेदोऽभिधीयते किन्तु दर्शनस्य सर्वत्रासम्भवात सम्भवे वा सर्वथाऽनुमानाभावात स्वसम्बन्धिन्योऽन्यत्र वृक्षादिशब्दादर्शनात तदवच्छेदानुमानादन्यापोहेन स्वार्थाभिधानमिति त्वया साधितम्। तदनन्तरं मतेऽपि दूषणं भेदानन्त्यात् गुणसमुदायमात्रत्वाच्च सर्ववृक्षार्थादर्शनात स्वार्थांशस्याप्यदर्शनात, स्वार्थांशत्वाभ्युपगमेऽप्यस्यापि गुणसमुदायमात्रत्वेन सम्बन्धकरणासम्भवादवृक्षव्यवच्छिन्नस्यापि च स्वार्थस्य समस्तानुमेयात्वनिश्चयेन नानुमानाय नाभिधानाय वा वृक्षशब्दः प्रभवति वनस्पतिचैतन्ये स्वापवदिति प्राग्विस्तरेणोक्तमित्याह–**भेदपक्ष इति**। जात्यादिपक्षे त्वया सामानाधिकरण्याभावदोषस्तत्रान्यापोहपक्षे तस्याभाव उक्तस्तदपि न युज्यत इत्याह–**अनन्तरस्यापि चेति**। जातिपक्षे भेदानन्त्यव्यभिचारप्रयुक्तावाचकत्वं शब्दस्योक्त्वा जात्यभिधायकत्वे वृक्ष शिंशपेति भिन्नप्रवृत्तिनिमित्तकत्वविशिष्टैकार्थप्रतिपादकत्वस्वरूपसामानाधिकरण्यासम्भव भेदाक्षेपासम्भवादुक्त्वा स्वमतेऽवृक्षव्यावृत्तिरूपस्य वृक्षशब्दार्थस्य निखिलेषु वृक्षप्रभेदेषु शिंशपापलाशादिषु व्याप्तेस्तैः सहाभेदाच्च सामानाधिकरण्यं संस्यतीति यदभिहितं तन्न सम्भवतीत्यभिधातुमादौ तदुक्तिमाह **अनन्तरस्यापि चाभाव इति**। वादी स्वमते तदभावमादर्शयति–**तद्यथेति, व्याप्तेरिति**। अन्यनिषेधस्य अवृक्षादिव्यावृत्ते व्याप्ते निखिलभेदव्यापनात् तद्भेदार्थैर्वृक्षभेदशिंशपाप-

( प्रमा० स० ) सदित्यसन्न भवतीत्यसतो निवृत्तिः सर्वद्रव्यगुणकर्मघटरूपोत्क्षेपणादिभेदव्यापिनी तस्या असन्निवृत्तेः सर्वभेदव्यापित्वात्तैरभिन्नार्थत्वात् सामानाधिकरण्यमुपपन्नमित्येतच्च, यस्मात् 'असन्निषेधाभावत्वात् विशेषार्थविभिन्नता ।' ( मूलकृतः ) तद्व्याख्या–सामान्यशब्दस्य हीत्यादि, सामान्यशब्दस्य हि सदादेर्योऽर्थान्तरव्युदासेऽसन्न भवतीति कुतो व्यापारः ? स त्वयेत्थमवधारितः स्वभेदाप्रतिक्षेपेणेति वाङ्मात्रेणोक्तं प्रागुक्तं विस्मृत्येति पूर्वपक्षप्रत्युच्चारणम्, अत्र तु वयं ब्रूमः–स स्वभेदप्रतिक्षेपेणैवेति, कस्मात् ? तस्य सच्छब्दस्य सन्नियमार्थत्वात्, असन्न भवतीति द्विःप्रतिषेधस्य प्रकृत्यापत्तेः सत्त्वेन नियतत्वादसत्प्रतिषेधस्याभावत्वात्, ततः किं ? ततो भेदानां परस्परतः सदसत्त्वादितरेतराभावत्वादसत्त्वं सन्नियमात् सत्त्वमतः स्वभेदाः प्रतिक्षिप्ता एव, सन्तोऽप्यसन्त एव न भवन्तीति प्राप्तं, ततश्च भेदश्रुत्या द्रव्यगुणादिकया घटपटादिकया च सह स[ा]मानाधिकरण्यमनुपपन्नमसन्निवृत्तेरभावसाधनत्वात्, अभावेन वैकविभक्तित्वमनुपपन्नं भेदानाम्, सद्द्रव्यं सन् गुणः सन् घट इत्यादि ।

न विभक्तिमात्रसामानाधिकरण्यानुपपत्तिरेव किं तर्हि—

पदस्याप्यनुपपन्नं सामानाधिकरण्यं विभक्तिभेदेनापि, सद्द्रव्यस्य गुणस्य वेत्यादि सम्बन्धस्यापि भेदैरभावस्यानुपपत्तेः सच्छब्देनाभिन्नासत्त्वनिवृत्तिमात्रोपादानात्, यथैव सुकरा हि..................द्रव्यस्य गुणस्य वा तथैव हि..................सामानाधिकरण्यं न स्यात्, यथा न हि सत्ता द्रव्यं गुणो वा भवति, तथा नहि सदसन्निषेधाभावः, किं

लाशाद्यर्थैरभिन्नता–अभेदो यतोऽतः सामानाधिकरण्याभावदोषजातं नास्तीति भावः । इदमेव सच्छब्दमुपादाय संघटयति निखिलद्रव्यादिभेदेषु–सदितीति । आचार्यस्तन्मतं दूषयति–असन्निषेधेति । अभिप्रायमादर्शयति–सामान्यशब्दस्य हीति, सदादिसामान्यशब्दाः स्वभेदान् विहाय यान्यर्थान्तराणि तानि व्यावर्तयन्तीति कथं त्वयाऽवधारितः, येनासतो निवृत्तिः सर्वद्रव्यादिव्यापिनी, अत एव तैरभिन्नेति स्यात् । स्वभेदाप्रतिक्षेपेणेति, सदादिशब्दो न स्वप्रभेदान् प्रतिक्षिपति, वृक्षशब्दो हि पृथिवीशिंशपादीन् प्रतिक्षिपत्यविरोधात्, विरोधाच्च पटादीनपोहत इति भाव । प्रागुक्तं विस्मृत्येति, भेदानाक्षेपादन्यापोहे चरितार्थत्वात् सामान्यशब्दानाम्, अन्यापोहकृच्छ्रुतिरित्युक्तं विस्मृत्येत्यर्थः । स्वभेदाप्रतिक्षेपेणार्थान्तरव्युदासो न भवति, किन्तु स्वभेदप्रतिक्षेपेणैवेति वयं ब्रूम इत्याचार्य आह–अत्र तु वयं ब्रूम इति । भेदप्रतिक्षेपं निरूपयति–तस्य सच्छब्दस्येति, सच्छब्देन यदसन्न भवतीति प्रतिपादयता सद्वस्तु सत्त्वेन नियम्यते, द्विःप्रतिषेधस्य प्रकृतार्थदृढीकरणात् सत नियमात् सद्भवति नासदिति प्राप्तम्, असत्प्रतिषेधस्त्वभावरूपः, भेदास्तु न सत्त्वेन नियताः, किन्तु सदसद्रूपाः, इतरेतराभावरूपत्वादसन्तः, सद्रूपत्वात् सन्तः, एवञ्च सामान्यशब्दाभिहितास्तु नियमात् सद्रूपाः, भेदशब्दाभिहिताश्च सदसद्रूपाः, न सद्रूपेण नियताः, अतः सामान्यशब्दः सदसद्रूपान् भेदान् प्रतिक्षिपत्येव, तस्माच्च तयोः शब्दयोरेकविभक्तिकत्वलक्षणं सामानाधिकरण्यं सद्द्रव्यं सन् गुणः सत्कर्मेत्यादिरूपं न सम्भवतीति भावः । किञ्च सामान्यशब्दस्यासत्प्रतिषेधोऽर्थः तस्यैकत्वात् भेदानामनेकत्वात् भेदवाचकशब्देनैकविभक्तिरप्यनुपपन्नेति भावः प्रतिभाति अभावेन वेत्यादिग्रन्थेन । सामान्यभेदपदयोरप्येकविभक्तिकत्वरूपसामानाधिकरण्याभावमादर्शयति–पदस्यापीति । विभक्तिभेदेऽपि नियमः भवन्मते आवश्यकः, सच्छब्दार्थो भवन्मते सत्ता, तत्सम्बन्धो वा न तु द्रव्यगुणादि, तथा च सत् द्रव्यं सत् गुण इति सत्पदद्रव्यपदयोरपि सामानाधिकरण्यं न भवतीति व्याचष्टे–पदस्येति, अत्र टीकाया अस्फुटत्वादाशयो न सम्यग्ज्ञा

१ सि. क्ष. छ. डे. सदादयोऽर्था० । २ सि. क्ष. छा. डे. व्युदासेऽस० । ३ सि. क्ष. छा. डे. कुतं । ४ सि क्ष. छा. °भावेनावे- क० ।

**तर्हि ? द्रव्यस्य गुणस्य वा भावाभाव इति, इयं व्याख्या त्वन्मतानुसारिण्येव, आह च 'विभक्तिभेदो नियमाद्गुणगुण्यभिधायिनोः । सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥' ( वा० तृ० वृ० ८ श्लो० ) इति ।**

**( पदस्येति )** पदस्याप्यनुपपन्नं सामानाधिकरण्यं विभक्तिभेदेनापि, सद्द्रव्यस्य गुणस्य वेत्यादि सम्बन्धस्यापि भेदैर्द्रव्यादिभिरभावस्यानुपपत्तेः कस्य वाऽसौ भेदः ? सच्छब्देनाभिन्नामसत्त्वनिवृत्तिमात्रोपादानात्, तस्मादपृथक्श्रुति दोषोऽस्त्येव, तद्व्याख्यानार्था टीका—यथैव सुकरा हीत्यादिका दृष्टान्तत्वेन गतार्था यावद् द्रव्यस्य गुणस्य वेति, तथैव हीति दार्ष्टान्तिकत्वेन त्वन्मतप्रदर्शनमेव यावत् सामानाधिकरण्यं न स्यात्, यथा न हि सत्ता द्रव्यं गुणो वा भवतीत्यादि तथा न हि सदसन्निषेधाभावस्त्वन्मतेऽसन्मतस्य प्रतिषेधद्वयविधेयस्य सतः सभेदस्यानभ्युपगमे द्रव्यं भवति गुणो वा, किं तर्हि ? द्रव्यस्य गुणस्य वा भावाभावः—सदसन्मात्रमित्यर्थः, इतीयं व्याख्या त्वन्मतानुसारिण्येवेति, आह चेति ज्ञापकमप्याह— 'विभक्तिभेदो नियमात्' इत्यादि ।

**यत्तु सत्तासम्बन्धाभिधानपक्षयोरपृथक्श्रुतिदोषोऽस्ति, नापोहपक्षे विशेषहेतुसद्भावात्, तत्र हि गुणौ सत्तासम्बन्धौ विशेषणत्वात्, तद्वस्तु गुणीत्यतः सामानाधिकरण्याभावो युक्तः, इह त्वर्थान्तरापोहो नासद्भावमात्रमेवोच्यते किं तर्हि ? अर्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यते यस्मिन् वस्तुन्यपोहः क्रियते, तच्च द्रव्यं शब्दार्थो नापोहमात्रम्, स चार्थः सच्छब्देन व्याप्तो न तु साक्षादुक्तः, तद्यथा सच्छब्दः साक्षान्न द्रव्याद्यभिधायी, संशयोत्पत्तेः तस्मात् सामानाधिकरण्यं विशेषार्थैः द्रव्यादिशब्दैः सच्छब्दस्य सद्द्रव्यं सन्गुण इत्यादि वाक्यार्थे युक्तं न पदार्थे ।**

**यत्तु सत्तेत्यादि,** सत्तासम्बन्धाभिधानपक्षयोरपृथक् श्रुतिदोषोऽस्ति नापोहपक्षे, विशेषहेतुसद्भा-

शक्य. । सद्द्रव्यगुणादीनां सम्बन्धोऽपि न सम्भवतीत्याह—**सद्द्रव्यस्येति,** सच्छब्दार्थोऽसद्व्यावृत्तिस्तस्याभेदेन द्रव्येण गुणेन वा सम्बन्धो न सम्भवति स न द्रव्यसम्बन्धि गुणसम्बन्धि वेति, अभावस्य नीरूपत्वेन सम्बन्धासम्भवादिति भाव । **यथैव सुकरा हीति ।** मूलं नोपलभ्यते । सच्छब्दस्य जात्यभिधायित्वे यथा सत्ता द्रव्यं सत्ता गुण इति न सामानाधिकरण्यं सत्ताद्रव्ययोः सत्तागुणयोर्वा भवितुमर्हति, तथा सच्छब्दवाच्यस्यासन्निषेधस्याभावरूपतैव न सद्रूपता त्वन्मते, तस्मात् सच्छब्दवाच्यं न द्रव्यं भवति गुणो वा, सभेदस्य सतोऽनभ्युपगमात् अस्मन्मते तु प्रतिषेधद्वयस्य विधिरूपतया भेदरूपस्य सत सद्रूपता भेदानां परस्परत इतरेतराभावरूपतयाऽसद्रूपता च तथा च सच्छब्दवाच्यं द्रव्यमपि भवति, गुणोऽपि भवतीति द्रव्यं भावाभावरूपं गुणोऽपि भावाभाव इत्याशयेनाह—**यथा न हि सत्तेति,** तथा च सामानाधिकरण्यं न तव मते सम्भवति, किन्त्वस्मन्मत एवेति भाव । [illegible] भवदीयवचनीयमेवानुसृत्येयं व्याख्या कृतेत्याह—**इयं व्याख्येति ।** ज्ञापिकां कारिकामाह—**विभक्तिभेदो नियमादिति,** गुणद्रव्ययोरभिधायकशब्दप्रयोगे पटस्य शुक्ल इत्यादौ गुणप्रधानभावस्य शाब्दत्वात् पटादिशब्द प्रधानोपकारपरिणतस्य स्वार्थस्याभिधायक., अत एव **गुणविभक्तिषष्ठ्युपादीयते,** शुक्लादिप्रधानशब्दस्तु स्वात्मन्येवावस्थितत्वेनापरोपकारित्वात् प्रथमया युज्यत इति विभक्तिभेदोव्यधिकरणविषये, वीरः **पुरुष** इत्यादिसमानाधिकरणविषये तु द्वयोरपि द्रव्यशब्दत्वेन स्वनिष्ठस्वार्थमात्राभिधानात् प्रथमैवोभयत्र, गुणप्रधानभावश्चात्र सामर्थ्यादिति कारिकाभावार्थ. । सत्तायास्तत्सम्बन्धस्य वा सच्छब्दवाच्यत्वे सद् द्रव्यमिति एकविभक्तिकत्वाद्या अपृथक्श्रुतिः सा न स्यात्, विभक्तिभेद एव स्यात्, सत्ताया द्रव्यस्य च व्यधिकरणत्वादित्याह—**यत्त्विति ।** अपृथक्श्रुतिदोषमादर्शयति—**सत्तासम्बन्धेति ।** अपोहपक्षे चायं दोषो नास्ति तत्र विशेषहेतोः सत्त्वात्, प्रोक्तमते तु नास्ति विशेषहेतुरित्यादर्शयति—**नापोहपक्ष इति ।** सत्तातत्सम्बन्धयोः शब्दाभिधेयत्वे सत द्रव्यं सन गुण इत्यादौ सच्छब्दार्थः सत्तासम्बन्धो वा गुणभूत एव,

---

१ सि. क्ष. डे. छा. कस्यचातो. । २ सि. क्ष. छा. डे. तथैव ।

वात्, तस्य विशेषहेतोः प्रतिपादनार्थमुक्तं—तत्र हीत्यादि, सत्तासम्बन्धा[भिधा]नपक्षयोर्गुणौ सत्तासम्बन्धौ विशेषणत्वात् तद्वत्तु गुणीत्यतः सामानाधिकरण्य[ा]भावो युक्तः, इह त्वर्थान्तरापोहः सदित्यसन्न भवतीति नासद्भावमात्रमेवोच्यते, किं तर्हि ? अर्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यते, यस्मिन् वस्तुन्यपोहः क्रियते तत्र द्रव्यं शब्दार्थो नापोहमात्रम्, स चापोहविशिष्टोऽर्थो द्रव्यादिः सच्छब्देन व्याप्तोऽपरित्यागात् न तु साक्षादुक्तः. तद्व्याख्या—तद्यथा—सच्छब्द इत्यादि, कस्मादनभिधानमिति चेत् संशयोत्पत्ते[:][स्व]रूपतत्त्वे सत्यनभिहिते संशयः स्यात्, तस्मात् सामानाधिकरण्यं विशेषार्थैः[1] द्रव्यादिशब्दैः सच्छब्दस्य वाक्यार्थे युक्तं न पदार्थे, तद्दर्शयति—सद्द्रव्यं सन्गुण इत्यादि, तथा हि स्वार्थाव्यभिचारो विशेषसहितस्येति विशेषशब्दप्रयोगः ।

कोऽसौ वाक्यार्थ इत्यत आह—

**यस्मादवयवशब्दार्थाभ्यामन्यः समुदायार्थः तस्य च वाचकौ तौ समुदितौ न विपरीतार्थौ—न तु सच्छब्दो द्रव्यार्थमाह न द्रव्यशब्दः सदर्थं कथमिदं तर्हि यत् सत्तद्द्रव्यं यद्द्रव्यं तत्सदिति ? उभयशब्दार्थव्युदासानुगृहीतस्य समुदायार्थस्यैकत्वात्, संहतशब्दद्वयाभिधेयात्, न तु सदर्थस्य द्रव्यशब्देनाभिधानादिति ।**

**( यस्मादिति )** यस्मादवयवशब्दार्थाभ्यामन्यः समुदायार्थः सद्द्रव्यशब्दार्थावयवावसद्द्रव्यद्रव्यस्य गुणस्य वा, विशेषणत्वात्, द्रव्यं गुणो वा विशेष्यम्, न हि धर्मभूतस्य च सत्तायाः सम्बन्धस्य वा द्रव्येण गुणेन वाऽभेदः येन सामानाधिकरण्यं सच्छब्दद्रव्यशब्दयोः स्यात्, एकार्थप्रतिपादकत्वाभावात्, किन्तु आधाराधेयभाव एव भेदव्याप्तः. सम्बन्धसत्तायाः द्रव्येण गुणेन वा सम्बन्धस्यापि ताभ्यां स्यात्, एवम् व्यधिकरणत्वात्तयोर्विशेष्यविशेषणयोर्व्यधिकरणविभक्तिरेव स्यान्न समानाधिकरणविभक्तिः, श्रूयते च सद्द्रव्यं सन्गुण इति, तस्मादपृथक्श्रुतिरेतन्मते दोष इति दर्शयति—**सत्तासम्बन्धाभिधानपक्षयोरिति ।** अन्यापोहपक्षे तु नायं दोष इत्याह—**इह त्विति ।** सच्छब्देनोच्यमानोऽर्थान्तरापोहः केवलमसन्निवृत्तिमात्रमेव न हि, किन्तु अर्थान्तरापोहविशिष्टं वस्तु, असदपोहवान् सच्छब्दार्थ इति भावः । तदेवोच्यते—**यस्मिन् वस्तुनीति,** स्वसम्बन्धिभ्योऽन्यत्र न सच्छब्दो दृश्यतेऽतोऽन्येषामपोहः स्वसम्बन्धिषु क्रियते, स च सम्बन्धिष्वेव द्रव्यादिसच्छब्दार्थः, स्वसम्बन्धित्वेन सर्वेषां द्रव्यादीनां परिग्रहात्, अत एव ते द्रव्यादयो द्रव्यत्वादिना साक्षान्नोक्ताः किन्तु व्याप्तत्वेनोक्ता इति भावः । सदित्युक्ते तत् किं द्रव्यं किं गुणः कर्म वा घटादि वेह इति संशयो जायते, एषोऽनुभवसिद्धः, यदि च सच्छब्दः द्रव्यादित्वेन द्रव्यादीन् साक्षाद्वदेत तर्हि नायं संशयः स्यात्, द्रव्यत्वलक्षणविशेषदर्शनात्, द्रव्यादेः स्वरूपभूते तत्त्वे—द्रव्यत्वादावनभिहिते सति संशयो भवति न त्वभिहिते तदा निश्चयस्यैवोदयादित्याशयेनाह—**सच्छब्द इत्यादीति ।** एवञ्च सदिति सामान्यशब्देनासदपोहवत उपस्थितौ द्रव्यमिति विशेषशब्देन द्रव्यादिरूपविशेषार्थोपस्थितौ तयोरेकार्थत्वेन तद्वाचकशब्दयोः सामानाधिकरण्यं युज्यते, तदेवं सामानाधिकरण्यं वाक्यार्थे विज्ञेयं न पदार्थे, पदार्थस्तु सच्छब्दस्यासदपोहवान् द्रव्यशब्दस्य च द्रव्यरूपो भेदोऽर्थः, केवलं सत्पदेन न द्रव्यरूपभेदस्याभिधानम्, असदपोहरूपेण द्रव्यस्येव गुणकर्मणोरपि बोधादिति व्यभिचारः स्यात्, स च द्रव्यपदप्रयोगे व्यावर्त्यतेऽतो विशेषपदसमभिव्याहृतसामान्यपदेन स्वार्थाव्यभिचार इत्याशयेनाह—**तस्मात् सामानाधिकरण्यमिति ।** वाक्यार्थं[2] तावद्दर्शयति—**यस्मादिति ।** सद् द्रव्यमिति हि वाक्यं तस्यावयवौ सच्छब्दद्रव्यशब्दौ, वाक्यस्य पदसमुदायरूपत्वात्, केवलानि च पदानि स्वार्थेनार्थवन्ति क्रमेणोच्चरितानि वाक्यम्, एवंविधाच्च वाक्यात् व्यतिरिक्तः संसर्गात्मकविशिष्ट एव वाक्यार्थोऽवगम्यत इत्याशयेन व्याचष्टे—**यस्मादवयवेति,** सद्द्रव्यमित्यादिवाक्यावयवीभूतसच्छब्दद्रव्यशब्दार्थाभ्यामसद्व्यावृत्ताद्रव्यव्यावृत्ताभ्यामन्यः समुदायार्थः सद्द्रव्यरूपः, तस्यार्थस्य तावुभावपि शब्दौ मिलित्वा वाचकौ भवतः, समुदायार्थस्य

1 सि विशेषार्थैर्द्रव्यादिशब्दैः, क्ष छा. विशेषार्थे द्रव्यादिशब्दैः । 2 सि. क्ष. छा डे. वाक्यार्थयुक्तं ।

निवृत्त्युपलक्षितौ ताभ्यामन्य उभयशब्दा[र्थ]व्युदासानुगृहीतः समुदायार्थः, तस्य च वाचकौ तौ समुदितौ न विपरीतार्थौ, तद्दर्शयति—न तु सच्छब्दो द्रव्यार्थमाह न द्रव्यशब्दः सदर्थमिति, यथोक्तं-'अपोह्यभेदात् भिन्नार्थाः स्वार्थभेदगतौ जडाः ॥ एकत्राभिन्नकार्यत्वाद्विशेषणविशेष्यकाः' (प्रमा० स० ) इति, अत्र चोद्यं कथं[इदं]तर्हीति, यत् सत्तद्द्रव्यं यद्द्रव्यं तत्सदिति भिन्नार्थत्वेन युक्तमित्यत्र तेनैवोच्यते—उभयशब्द[ार्थ] व्युदासानुगृहीतस्यासदद्रव्यनिवृत्त्यनुगृहीतस्य संहतशब्दद्वयानभिधेयस्य समुदायार्थस्यैकत्वात्तथोच्यते न तु सदर्थस्य द्रव्यशब्देनाभिधानादिति पूर्वपक्षः ।

उत्तरपक्षः—

**तत्रापि शक्यं वक्तुमपृथक्श्रुतिदूषणम्, द्रव्याद्यभावाभावस्य गुणित्वात् सदभावाभावस्य चाश्रितस्य गुणत्वात्, या त्वयोक्तोपपत्तिः सा जातियोगपक्षयोरपि क्रमते, इह तु जातियोगौ यस्मिन् वस्तुनि त्वयोक्तापोहनिवृत्तिवत् वर्त्तेयाताम्, सत्तैव सत्त्ववदिति, शेषस्त्वदुक्तोपपत्तिग्रन्थवत्तुल्यगमो यावच्छब्दद्वयाभिधेयत्वात् ।**

**तत्रापि शक्यमित्यादि,** सत्तायोगपक्षगतो विभक्तिभेदप्रसङ्गो दोषोऽत्रापि शक्यो वक्तुम्, आश्रितस्य गुणत्वात्, तद्यथा—सदभावाभाव आश्रितो द्रव्याद्यभावाभाव आश्रयः तयोश्च गुणगुणिनोर्भेदात्तदभिधायिनोः सामानाधिकरण्याभावस्तदवस्थः, या त्वयोक्तोपपत्तिः सापि जातियोगपक्षयोरपि क्रमत इत्यतस्तत्प्रदर्शनार्थमाह—इह तु जातियोगौ यस्मिन् वस्तुनीत्यादि, सत्तातः सच्छब्दस्तत्सम्बन्धाद्वा सति

सद्द्रव्यरूपस्यावयवशब्दार्थासद्व्युदासाद्रव्यव्युदासाभ्यामनुगृहीतत्वात् नहि सच्छब्दो द्रव्यशब्दार्थं द्रव्यशब्दो वा सच्छब्दार्थं वक्ति इति भावः । विपरीतार्थतां व्युदस्यति—**न त्विति ।** तत्रैव प्रमाणमाह—**अपोह्यभेदादिति,** अपोह्य यदि शब्दस्य ... गवाश्वादिशब्दानां शाबलेयादिशब्दानाञ्च सर्वेषां पर्यायता स्यात्, अपोह्ये भेदाभावात्, वृक्षपादपादिशब्दवदिति न युक्तं, अपोह्यभेदात् ते शब्दा भिन्नार्थाः गवादिशब्देनापोह्यो ह्यश्वादिस्तस्य भेदादगवाद्यपोहाना स... स्वतस्ते शब्दाः स्वार्थस्यापोहस्य यो भेदोऽपरस्मादपोहात्तद्गतौ जडा निर्व्यापाराः, तस्मान्न पर्यायता तेषाम्, अपोह्यभेदात् भिन्नार्थत्वेऽपि सच्छब्दो न द्रव्यं द्रव्यशब्दश्च न सद्वक्तीत्यर्थः, ननु तर्हि कथं तयोः सामानाधिकरण्यं यत् सत् तद्द्रव्यम्, यद् द्रव्यं तत् सदिति, तदेवाह—**कथं तर्हीति ।** समाधत्तेऽन्यापोहिकः—**उभयशब्दार्थेति,** सच्छब्दार्थोऽसन्निवृत्तिः, द्रव्यशब्दार्थश्च द्रव्यनिवृत्तिः ... समनुगृहीतः समुदायार्थ एकः, यत्रैव ह्यद्रव्यनिवृत्तिरस्ति तत्रैवासद्व्यावृत्तिरस्ति, अत उभयशब्दवाच्ययोर्निवृत्त्योरेकस्मिन्नर्थे वृत्तेरेकत्राभिन्नकार्यत्वात् सामानाधिकरण्यं विशेषणविशेष्यभावश्च स्यात्, न त्वेकशब्दाभिहितस्यापरशब्देनाभिधानादिति भावः । आचार्य उत्तरमाह **तत्रापि शक्यमिति ।** सत्ताभिधानपक्षे सत्सम्बन्धाभिधानपक्षे च यो दोषो विभक्तिभेदो नियमादिति, अपृथक् श्रुतिदोषश्चोक्तः, स दोषस्तवापि वर्तत एवेत्याख्याति—**सत्तायोगपक्षेति । आश्रितस्येति,** सद् द्रव्यमित्यत्र द्रव्यं विशेष्यमाश्रयः, सच्छब्दार्थोऽसन्निवृत्तिर्विशेषणं गुण आश्रितः, गुणगुणिनोः—विशेषणविशेष्ययोर्भेदादाधाराधेयभावबोधकाभिन्नविभक्तित्वपले न तन्मत्यार्थविरोधः स्यात्, न त्वभेदबोधकप्रथमाविभक्तिः, अत एव तयोः शब्दयोः सामानाधिकरण्यमपि न सम्भवतीति भावः । न वस्तुनोऽर्थान्तरापोहमात्रं नोच्यते किन्तु यावृत्तिमद्वस्तु वाच्यम्, यस्मिन् वस्तुनि क्रियतेऽन्यापोहः, तद्धि वस्तु सच्छब्देन व्याप्तमपरित्यागात्, किन्तु साक्षान्नोच्यत इति यापत्तिः पूर्वमुक्ता त्वया सापि जातियोगपक्षयोरपि वक्तुं शक्येत्याह—**या त्वयेति.** सत्तातः सच्छब्दः सति वर्तते, सत्तासम्बन्धाद्वा, यथ द्रव्यादि, नास्य परित्यागः, व्याप्तत्वान्न तु साक्षादुक्तः सगयानुपपत्तेः, तस्माद्वाक्यार्थे विशेषार्थे सामानाधिकरण्यं सद्द्रव्यं

१ सि. °स्त्ववावि० । २ सि. क्ष. डे. छा. गुणित्वात् । ३ पात्तरो० । ४ सि. क्ष. छा. डे. सतातः सच्छ० । ५ सि. क्ष. छा. डे. सदेव ।

वर्त्तते वस्तुनि द्रव्यादिभेदवति, सत्त्ववत्सदित्यभेदोपचारान्मतुब्लोपाद्वा त्वयोक्तापोहनिवृत्तिवत् वर्त्तेयातां जातियोगौ सदेव सत्त्ववदिति, शेषस्त्वयुक्तोपपत्तिग्रन्थवत्तुल्यगमो यावच्छब्दद्वयाभिधेयत्वादिति, गतार्थः, तस्मात्तद्वतस्य एवापृथक्श्रुतिदोषः ।

**पश्चिमस्यापि च दोषस्य भाव एव, नाभावः, यदुक्तं जातिमत्पक्षे 'तद्वतो नास्वतंत्रत्वाद्भेदाज्जातेरजातितः' इत्यादिदोषजातं तस्याभावोऽन्यापोहपक्षे, साक्षाद्वृत्तेरिति, तन्न भवति साक्षादवृत्त्यादिदोषजातस्य सातिशयस्योक्तत्वात् सच्छब्दोऽपोहमात्रस्वरूपोपसर्जनं द्रव्यमाह न साक्षादित्यादि सर्वं प्रागुक्तं जातिमद्वदपोहवानित्युपक्रम्य, तत्र दोषा यथा सङ्गतास्तथा प्रतिपादिता इति न पुनर्लिख्यते ।**

(**पश्चिमस्यापीति**) पश्चिमस्यापि दोषस्य भाव एव नाभावः, यदुक्तं जातिमत्पक्षे 'तद्वतो नास्वतंत्रत्वात् भेदाज्जातेरजातितः' इत्यादि दोषजातं तस्याभावोऽन्यापोहपक्षे साक्षाद्वृत्तेः, तत्र हि सच्छब्दः सत्तामुपादाय द्रव्ये वर्त्तमानस्तद्भेदान् घटादीना[क्षे]प्तुमसमर्थः, अत्र पुनरसत्प्रतिषेधेन साक्षाद्वर्त्तत इति तस्य ये विशेषास्तान् प्रतिक्षिपति, तस्मादिहानाक्षेपदोषो नास्ति, भाक्तदोषोऽप्यत एव नास्ति, न ह्यत्र मुख्या वृत्तिर्द्रव्यादिषूपचर्यते, नापि भेदानवस्थानादनभिधानदोषः, कस्मात्? अभेदात्, न ह्यर्थान्तरापोहो भेदेषु भिद्यते, अभावात्तन्मात्रञ्च शब्देनोच्यते, न भेदाः, तथा सामान्यदोषोऽपि

सत गुण इत्यादि, यस्मादवयवशब्दार्थाभ्यामन्य समुदायार्थं तस्य च वाचकौ तौ समुदितौ न विपरीतार्थौ, न तु सच्छब्दो द्रव्यार्थमाह-द्रव्यशब्द सदर्थम्, कथं तर्हि यत सत तद्द्रव्य यद्द्रव्यं तत सदिति, उभयशब्दार्थव्युदासानुगृहीतस्य समुदायार्थस्यैकत्वात सहतशब्दद्वयाभिधेयत्वादिति वक्तुं शक्यत्वादिति भाव । गतेव सत्त्ववदुच्यते, सत्त्ववति सत्ताया अभेदोपचारात, सत्तावदिति मतुबो लोपाद्वेत्याह-**सत्त्ववदिति** । उपसंहृत्य दोषमाह-**तस्मादिति** । जात्यादिपक्षेषु सामानाधिकरण्याभावदोषापादनप्रतिपादनावसरे जातिमत्पक्षोपरि 'तद्वतो नास्वतंत्रत्वाद्भेदाज्जातेरजातितः' इत्यादि यद्दोषजातमुक्तं तदन्यापोहपक्षेऽस्त्येवेत्याह-**पश्चिमस्यापि चेति,** अनन्तरस्यापि चेत्यर्थः । जातिमत्पक्षे सच्छब्दो जातिस्वरूपोपसर्जनद्रव्यमाह न साक्षादिति तद्गतघटादिभेदानाक्षेपादतद्भेदत्वे सामानाधिकरण्याभावप्रसङ्ग उक्तः सोऽत्र पक्षेऽपि भवत्येवेत्याह-**पश्चिमस्यापि दोषस्येति** । तदुक्तिमेवाह-**यदुक्तमिति** । **अपोहपक्षे साक्षाद्वृत्तेरिति,** ननु असदसच्छ्रुतिः सामान्यश्रुतिः, असदपोहः सर्वत्र सम्मानः, तद्भेदा घटादयः तत्र सच्छब्दोऽसत्प्रतिषेधेन साक्षाद्वर्त्तते न तान प्रतिक्षिपति, तस्मात सामानाधिकरण्यादि भवतीत्येवं तद्वतो नास्वतंत्रत्वादित्यस्य प्रकारान्तरव्याख्यायां सच्छब्दो मुख्यया वृत्त्या भूतार्थेन स्वरूपेण प्रकाशमानः शब्दस्वरूपमा[illegible] बुद्ध्या गृह्यमाणः सम्प्रति सद्वस्तुस्वरूपव्यवहितमाह स तत्र वृत्तः स्वरूपव्यवहितेऽर्थे सति व्यावृत्तेत्यादिरूपायां सच्छब्दोऽसामि[illegible] न करोति भूतार्थेन, किन्तूपचारादसदसत प्रवर्त्ततीत्यादि दोषोऽपि नास्तीत्याह-**भाक्तदोषोऽपीति** । भेदानन्त्यादनभि[illegible] दोषोऽपि नास्तीत्याह-**नापीति,** भेदानामनन्तत्वादनवस्थानम्, ततोऽनभिधानमशक्यसम्बन्धविधानादिति भावः । नैष दोषो[illegible] यतो हि अर्थान्तरापोहः प्रतिभेदं न भिद्यतेऽतोऽभेदाच्छक्यसम्बन्धविधानादभिधानसम्भव इत्याह-**अभेदादिति** । कुतो न [illegible] इत्यत्राह-**अभावादिति,** अभावत्वादेव न तस्य भेदोऽस्ति, तन्मात्रमेव शब्देनाभिधानं न तु तद्विशिष्टभेदानामिति भावः । [illegible] जातिपक्षे यदि सच्छब्देन भेदानामाक्षेपे आधारभेदेनाधेयभेदस्यावश्यकत्वाद्घटे विद्यमानं सत्त्वं पटादौ न स्यात, पटे च विद्य[illegible] सत्त्वं घटे न स्यादित्युक्तो दोषोऽन्यापोहपक्षेऽपि, घटे विद्यमानस्यासदपोहस्य पटादावभावात् भेदे सत्त्वमसत्त्वमा[illegible]

१ सि. क्ष छा. डे. तत्पुनः । २ सि. क्ष. छा. डे. भेदात् ।

नास्ति, यत्तूक्तं सर्वत्र घटादावर्थे न पटादिषु वर्त्तत इति,[न]साक्षाद्घटपटादिष्वसत् प्रतिक्षेपादिति, तन्न भवति, यस्मात् साक्षादवृत्त्यादिदोषजातस्य सातिशयस्योक्तत्वादस्माभिः, तदेव स्मारयन्नाह—सच्छब्दोऽपोहमात्रस्वरूपोपसर्जनं द्रव्यमाह, न साक्षादित्यादि मतं प्रागुक्तं जातिमद्वदपोहवानित्युपक्रम्य, तत्र च जातिमतीवापोहवत्यपि सर्वे दोषा यथा सङ्गतास्तथा प्रतिपादिता इति न पुनर्लिख्यते ।

स्यान्मतं जातिमद्वदपोहवत्त्वमप्ययुक्तमिति तदाशंक्यते—

**यत्तूक्तमन्यापोहवादिना परं प्रत्याशङ्क्य ततः 'अद्रव्यत्वाच्च भेदाच्च' इति कारिका या च तद्भाष्ये लिखिता तद्व्याख्या नाप्यर्थान्तरापोहो नामेत्यादि यावन्नास्ति सामान्यदोष इत्यपोहपक्षे जातिमत्पक्षगतदोषाभावप्रतिपादनं विशेषदर्शनादिति, वयमत्रोत्तरं ब्रूमः–'तद्वत्त्वञ्च त्वदुक्तवत्', ननु भावान्तरतैव सामान्यवत्तद्व्यावृत्तेरपि, तद्वतोऽन्यप्रत्ययात्मकत्वात्, अथ स्वमते तद्रूपे न सामान्यं न व्यावृत्तिमदिति कुतस्तद्विशिष्टवस्त्वभिधानम्? खपुष्पशेखरविशिष्टवन्ध्यापुत्राभिधानवत् ।**

(**यत्तूक्तमिति**) यत्तूक्तमन्यापोहवादिना परं प्रत्याशङ्क्य—तत्रश्च स्यादेतदपोहविशिष्टाम्न इत्यादि यावत्तुल्यं शब्दार्थस्य समानत्वम् शब्दस्य च समानत्वमर्थस्य चापोहपक्षेऽपीति वाक्यशेषः इत्यं पूर्वपक्षीकृत्योत्तरमाह—ततः 'अद्रव्यत्वाच्च भेदाच्च' इति कारिका या च तद्भाष्ये लिखिता तद्व्याख्या—नाप्यर्थान्तरापोहो नामेत्यादि यावन्नास्ति सामान्यदोष इत्यपोहपक्षे जातिमत्पक्षगतदोषाभावप्रतिपादनं विशेषदर्शनादिति त्वदभिप्रायं प्रदर्श्य वयमत्रोत्तरं ब्रूमः—तद्वत्त्वं च त्वदुक्तवत्—अस्य व्याख्या—ननु भावान्तरतैवेत्यादि, यदि परमताभ्युपगमात् सामान्यवत्पक्षे सत्सामान्यान्वयात् सामान्य[व]द्विशेषणस्य सामान्यस्यार्थान्तरत्वं पारतंत्र्यादि च ब्रूषे सामान्यवद्व्यावृत्तेरप्यर्थान्तरत्व विशेषणत्वं पारतंत्र्यादि च ननु तदवस्थमेव

अतन्न भवतीति न स्यादिति य आपादितं तन्न घटपटादिभेदान साक्षादपादाय तत्रासत्प्रतिक्षेपाभावस्योक्तत्वादिति दर्शयन्नाह-**यत्तूक्तमिति**। अपोहवादी समाधत्ते-**साक्षाद्घटपटादिष्विति**। आचार्य उत्तरमाह-**तन्न भवतीति**—अनन्तर्विशेषेण भेदे साक्षादवर्त्तत इति यदुच्यते तन्न भवतीत्यर्थः। कारणमाह—**साक्षादिति**, सच्छब्दः साक्षाद्भेदेषु न वर्त्तत इति 'अर्थशब्दविशेषस्य वाच्यवाचकतेष्यते। अस्य पूर्वमदृष्टत्वात् सामान्यादुपसर्जनात्' इत्यादिग्रन्थेन सविशेषमुक्तत्वादिति भावः। अथ जातिमद्वदपोहवत्त्व यदुक्तं तत्सम्बन्धेनाह—**यत्तूक्तमिति**। परं प्रति कृतामेवाशङ्कां दर्शयति—**स्यादेतदिति**, अत्र मलमाशपत्र न सुस्पष्टं ज्ञायतेऽतो न व्याकुर्मः। अन्यापोहवादी जातिमत्पक्षगतदोषाभावं वक्ति-**अद्रव्यत्वाच्चेति** मूलसूत्रम्। आचार्य आह—**यदि परमताभ्युपगमादिति** यत् सत्त्ववत्सामान्यपक्षे भेदानभिधानमानन्त्यव्यभिचाराभ्याम्, सत्त्वस्य सर्वभेदेष्वनुवर्त्तनात् सत्त्वसामान्यस्य विशेषणभूतस्य तस्यार्थान्तरत्वं पारतंत्र्यञ्च यदि ब्रूषे तर्हि तत्राप्यपोहवतः तथात्वं स्यात्, अपोहोऽपोहवांश्च परस्परं भिन्नौ, अपोहस्याशा व्यावृत्तेः व्यावृत्तिमत्प्रत्ययाद्भिन्नप्रत्ययात्मकत्वादिति भावः। तदेव साधनमाह-**तद्वत इति**, सामान्यवत व्यावृत्तिमतो वाऽन्यप्रत्ययविषयत्वात् सामान्यस्य व्यावृत्तेर्वा इत्यर्थः। यदि व्यावृत्तिमति तद्रूपे सामान्यं व्यावृत्तिर्वा नाभ्युपगम्यते तर्हि न तद्रूपं व्यावृत्तिमदिति तद्रूपविशिष्टवस्तुनोऽभिधानं न स्यात् तद्रूपस्य सामान्यरूपत्वाभावात् व्यावृत्तिमद्रूपत्वाभावाच्चामद्रूपतया खपुष्पशेखरविशिष्टवन्ध्यापुत्राभिधानवत्तद्रूपवि-

१ सि. क्ष. छा. डे. सत्त्वा घटादिरर्थो न पटादिषु नवर्त्तत इति । २ सि क्ष. छा. डे. शब्दाख्ये लिखितं ।
३ सि. क्ष. छा. डे. पारतंत्र्यादिषुक्त० ।

तद्वतोऽन्यप्रत्ययात्मकत्वात् सामान्यवत्तद्व्यावृत्तेरपि, अथ स्वमते तद्रूपे न सामान्यं न व्यावृत्तिमविति कुतस्तद्विशिष्टवस्त्वभिधानम्? खपुष्पशेखरविशिष्टवन्ध्यापुत्राभिधानवत्।

**अपि च भावान्तराभावान्तरत्वाभ्यां न किञ्चित् प्रयोजनमस्ति किन्तु बुद्धिस्थस्यान्वयव्यतिरेकद्वारेणावधारितस्यार्थस्यानुगुण्येन विधिप्रतिषेधयोर्भेदेन प्रत्ययः शब्दार्थसम्बन्धज्ञस्य शब्दप्रयोगादुत्पद्यते सामान्योपसर्जनविशेषशब्दार्थपक्षे वा द्वयोरपि च पक्षयोरुपसर्जनीकृतविशेषणत्वाद्भेदानाक्षेपादस्वातंत्र्यादनभिधानं तुल्यमित्येष विचारः प्रयासार्थः, यथा जातिस्वरूपापोहगुणा विशेषणानि पारतंत्र्यादेव श्रुतगुणभेदाभेदत्वाद्भेदानामनाक्षेपः, तथा यथाकथञ्चित्...........................स्वातंत्र्यहेतुत्वादिति।**

**अपि च भावान्तरेत्यादि,** यत्र प्रस्तुतार्थोपकारापकारानङ्गत्वाद्भावान्तराभावान्तरत्वाभ्यां न किञ्चित् प्रयोजनमस्ति, किन्त्विदमत्र प्रस्तुतार्थोपयोगिकम्- तद्यथा-बुद्धिस्थस्य-शब्दप्रयोगजनितज्ञानोपलक्षितस्यान्वयव्यतिरेकद्वारेणावधारितस्यार्थस्यानुगुण्येन-वशवर्त्तितयाऽयं भवत्ययं न भवतीति तयोर्विधिप्रतिषेधयोर्भेदेन प्रत्यय[ः]शब्दार्थसम्बन्धज्ञस्य शब्दप्रयोगादुत्पद्यते, सामान्योपसर्जनविशेषशब्दार्थपक्षे वा द्वयोरपि च पक्षयोरुपसर्जनीकृतविशेषणत्वात् भेदानाक्षेपादस्वातंत्र्यादनभिधानं तुल्यमित्येष विचार[ः] प्रयासार्थः, तद् दृष्टान्तेन दर्शयति-यथा जातिस्वरूपेत्यादिना तद्वत्पक्षवादिमतेन यावदनाक्षेप इति, दार्ष्टान्तिकेन च तथा यथाकथञ्चिदित्यादिना यावत् स्वातंत्र्यहेतुत्वादिति सुप्रुच्यते पश्चिमस्यापि दोषस्य सातिशयस्य भाव एवेति।

यदप्युक्तं-अर्थान्तरापोहोऽसद्घटनिवृत्तिः सन् घट इति, तस्मात् सामान्यदोषोऽपोहपक्षे नास्तीति, तदपि प्रत्यासन्नमात्मोक्तं विस्मृत्य त्वयाऽभिहितमिति बोधयितुकाम इदमेव तावत् प्रत्युच्चारयति-

---

शिष्टवस्त्वभिधानं स्यादित्याह-**अथ स्वमत इति।** सत्त्ववन्मात्रस्य भावान्तरत्वमभावान्तरत्वं वेत्यादिविचारोऽकिञ्चित्कर इत्याह-**अपि चेति।** यदा व्यावृत्ताद्भाव(व्या)वृत्तिर्नामान्या भवेत् तदा स्यात्तद्वत्पक्षोदितदोषप्रसङ्गो यावता व्यावृत्ताद्भावाद्भावात्मिकान्या व्यावृत्तिरस्ति, अपि तु व्यावृत्त एव भावो भेदान्तरप्रतिक्षेपमात्रजिज्ञासाया तथाऽभिधीयते, तेन यथा जातौ प्राधान्येन वाच्यायां पारतंत्र्येण तद्वतोऽभिधानात् तद्गतभेदानाक्षेपात्तेन सह सामानाधिकरण्याद्यभावप्रसङ्ग उक्तस्तद्वदपोहपक्षे नावतरति व्यतिरिक्तान्यापोहवतोऽनभिधानात्, भावान्तरत्वाभावान्तरत्वविचारस्य प्रस्तुतेऽर्थे शब्दार्थविषये उपकारापकारयोरनङ्गत्वादप्रयोजकत्वात्तेन विचारेण न किमपि प्रयोजनमस्ति, किन्तु शब्दार्थसम्बन्धस्याभिधानाभिधेयभावलक्षणस्य वेत्तुः शब्दप्रयोगादयमयं भवतीति विधिनाऽयं न भवतीति प्रतिषेधेन पार्थक्येन सामान्योपसर्जनविशेषप्रधानस्य वा बोधो भवति, शब्दप्रयोगेण हि तस्य तुल्यातुल्यवृत्त्यवृत्तिभ्यां तथैवार्थावधारणस्य निष्पन्नत्वात् पक्षद्वयेऽपीदमुपसर्जनीकृतविशेषणमतोऽस्वातंत्र्याद्भेदानाक्षेपाद्भेदानामनभिधानमिति विचारः प्रयासफल एवेति व्याचष्टे-**यत्र प्रस्तुतार्थेति।** अत्र दृष्टान्तदार्ष्टान्तिकावस्पष्टौ न व्याक्रियेते। ननु सन् घट इत्यादावर्थान्तरापोहोऽसन्निवृत्तिरघटनिवृत्तिश्च, उभे निवृत्ती भिन्ने, उभयनिवृत्तिमत एकस्य वाक्यार्थे भानम्, न पदार्थे, अतो न परस्परं सामान्यविशेषभूते तस्मान्न सामान्यदोषोऽपोहपक्ष इति शङ्कते-**यदप्युक्तमिति।** कथमिदं तर्हि यत् सत् तद्द्रव्यम् यद्द्रव्यं तत्सदिति? उभयशब्दार्थव्युदासानुगृहीतस्य समुदायार्थस्यैकत्वात् सहतशब्दद्वयाभिधेयत्वात्, न तु सदर्थस्य द्रव्यशब्देनाभिधानादिति, एतदर्थसूचकश्च ग्रन्थः-इह त्वर्थान्तरापोहो नामद्रव्यमात्रमेवोच्यते, किं तर्हि? अर्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यते, यस्मिन् वस्तुन्यपोहः क्रियते तद् द्रव्यं शब्दार्थो नापोहमात्रम्, स चार्थः सच्छब्देन व्याप्तो न तु साक्षादुक्त इत्येव

**यदि चार्थान्तरापोहो न भावान्तरमित्यपोहत्वानर्थः शब्दवाच्यो न भवत्यतो नापोहो विशेषणमिष्टं कथमिदं तर्हि यत् सत् तद्द्रव्यं, यद्द्रव्यं तत्सदिति ? उभयशब्दार्थव्युदासानुगृहीतस्य समुदायस्यैकत्वात् संहतशब्दद्वयाभिधेयत्वात्, न तु मदर्थस्य द्रव्यशब्देनाभिधानात् तथार्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यते यस्मिन् वस्तुन्यपोहः क्रियते तच्च द्रव्यं शब्दार्थो नापोहमात्रमिति, किमुक्तं भवतीति चेदुच्यते यदि द्रव्यं यद्यद्रव्यमर्थान्तरापोहः तद्वांस्त्वर्थः शब्दार्थत्वेन विवक्षितत्वादुच्यत एव, बुद्धिस्थान्वयव्यतिरेकार्थभेदप्रत्ययोत्पत्तिदर्शनादिति, तस्मादनपहृतः पश्चिमदोषोऽपीत्यलं प्रसङ्गेन ।**

**यदि चार्थान्तरापोहो न भ[ा]वान्तरमित्यादि,** अभावान्तरत्वादर्थान्तरापोहस्यापोहवानर्थः शब्दवाच्यो न भवत्यतो नापोहो विशेषणं नापोहवान् गोऽर्थ इति यदि त्वयेष्टमिति, अस्य विरोधापादनार्थमुच्यते कथमिदमित्यादि पूर्वपक्षिनमस्माभिर्योवन्न तु मदर्थस्य द्रव्यशब्देनाभिधानादित्येतस्य सूचनसूत्रेण यावन्नापोहमात्रमिति गतार्थम्, किमुक्तं भवतीति चेदुच्यते यदि द्रव्यं यद्यद्रव्यमर्थान्तरापोहस्तद्वांस्त्वर्थः शब्दार्थत्वेन विवक्षितत्वादुच्यत एव, बुद्धिस्थान्वयव्यतिरेकार्थभेदप्रत्ययोत्पत्तिदर्शनादित्युक्तं भवति, न हि लोके शब्दप्रयोगजनितप्रत्ययपरिच्छेद्यापलापेनान्यः शब्दार्थः शक्यः कल्पयितुम् सुदूरमपि गत्वा प्रतिपत्तिशरणावस्थनाद्वादानामिति नायं निःसरणोपायः, तस्माद[न]पहृतः पश्चिमदोषोऽपीति एतेनास्वातंत्र्याद्भेदाज्जातेरजातित्व इति सव्याख्या विकल्पा दोषहेतवोऽपरिहृता वेदितव्याः, तेषां त्वदुक्त-न्यायाध्वानतिक्रमात् परिहारहेतूनां तद्विकल्पानुसारित्वादित्यलं प्रसङ्गेन ।

प्रस्तुतनयमते शब्दार्थो विधीयते—

**अत्र च सङ्घातो वर्णपदवाक्यादीनां शब्दार्थ उत्पत्तावभिव्यक्तौ वा, यद्यप्यप्रासयोग-**

प्रत्यासत्तिमात्रमेकं विस्मृत्यैवोच्यत इति दर्शयति—**यदि चेति ।** अर्थान्तरापोहो न भावान्तरम् न द्रव्यरूपं न पयमप्रतियोगिरूपमिति यावत्, किन्त्वभावान्तरम्, तस्मात्तद्वतो योऽर्थो नापोहवान् तेनापोहो विशेषणमर्थः अपोहवान् नेति त्वङ्गते—**अभावान्तरत्वादिति ।** अयमभ्युपगमो विरुद्धः प्राक् द्रव्यार्थापोहवत् शब्दार्थवादिकाराद्, अस्माभिः पूर्वपक्षत्वया प्राक् प्रदर्शितमेतत्, तेन विरोध इत्याशयेन प्राचीनग्रन्थं स्मारयति—**कथमिदमित्यादीति ।** अस्य ग्रन्थस्येव सङ्ग्रहेण दर्शकस्य उत्तरग्रन्थस्य प्रदर्शयन्—**सूचनसूत्रेणेति,** इह त्वर्थान्तरापोहो न शब्दार्थत्वमभिमेवोच्यते, किं तर्हि अर्थान्तरापोहेन विशिष्टं वस्त्वेव सदित्युच्यत इत्यादि ग्रन्थेनेत्यर्थः । भावार्थमाख्यातुमाह—**किमुक्तमिति,** अर्थान्तरापोहो द्रव्य-भावान्तरं अद्रव्य-अभावान्तरं वा भवतु, तद्वानर्थः शब्दार्थत्वेन विवक्षितत्वाच्छब्देनोच्यत एव शब्दप्रयोगादन्वयव्यतिरेकात्मकार्थप्रतिषेधरूपार्थभेदविषयप्रत्ययोत्पत्तेरनुभवसिद्धत्वात्, अयमयं भवति, अयं न भवतीति, एवमुक्तं भवतीत्यर्थः । तदेवाह—**यदि द्रव्यमिति ।** हेतुं दर्शयति—**बुद्धिस्थेति ।** व्यतिरेकमुखेन हेतुं समर्थयति—**न हि लोक इति,** यात्पर्यिणी बुद्धिः शब्दप्रयोगादुपजायते तत्प्रत्ययपरित्यागेनान्यस्य शब्दार्थत्वपरिकल्पनमयुक्तम्, अनुभूयमानानुभवापलापस्यान्याय्यत्वात्, यावदुपर्यन्तमपि विचार्यापि अन्ततः सर्ववादिभिरनुभवस्यैवाश्रयणीयत्वात्, तस्मान्नैवायमप्युपायो दोषेभ्यो निःसर्तुं न क्षम इति भावः । तस्मात् पश्चिमदोषस्यापि भाव एव नाभाव इत्याह—**तस्मादनपहृत इति ।** तद्व्याचष्टे—**एतेनेति ।** त्वया जातिमत्पक्षाभ्युदितदोषाणामपोहवत्पक्षेऽपि दुर्वारत्वादित्याह—**तेषां त्वदुक्तेति ।** अपोहवाददूषणं परिसमापयति—**अलं प्रसङ्गेनेति ।** अथाभ्यासनैगमनये कोऽसौ शब्दो नाम तदाह—**अत्र चेति ।**

1 सि. क्ष. डा. डे. °पोहस्तद्वांस्त्वर्थः स्वशब्दार्थे० ।

पद्यानि पदानि तथापि कार्याल्लोकप्रसिद्धेरेव वा व्यवस्था, दृष्टो हि लोके तेषां शब्दानामर्थप्रत्यायनासम्भवादर्थप्रत्यायकस्तत्समुदायः समुदायिभ्योऽन्य इति केचित्, तस्मादेव कार्यात् तेषु तस्य प्रतिदेशं समस्तेषु वा वृत्त्यसम्भवान्न व्यतिरिक्त इत्यपरे, अन्त्यवर्णे संहृताशेषदेशावयवः समुदायोऽभिधाता पूर्ववर्णजनितबुद्धिपरिपाकादित्येके, सर्वावयवेषु तिरोहिताभिमतेषु वितत्य व्यवस्थितो बुद्धिसंस्कारपरिपाकसमुदाय इत्यपरे, समुदायात्मा शब्द एक एव, अनेक एव वा प्रत्यायक इत्यपरे किं न एतैः, यदि व्यतिरिक्तो यद्यव्यतिरिक्तोऽन्त्येऽशेषे वाऽभिन्नो भिन्नो वा प्रत्यायकः समुदायोऽवयवा एव वा योऽस्तु सोऽस्तु सर्वथाऽर्थप्रत्यायनात् समुदायः शब्दोऽनवस्थिततर्कत्वात् पुरुषाणाम्, यथोक्तं 'यत्नेनानुमितोऽप्यर्थः' इत्यादि, तथा 'हस्तस्पर्शादिवान्धेन' इत्यादि (वाक्यप० कां० १ श्लो० ३४, ४२) आगममात्रमेतत्।

(**अत्र चेति**) अत्र च–विधि[नियम]नियमे संघातो वर्णपदवाक्यादीनां शब्दार्थ उत्पत्तावभिव्यक्तौ वेति, यदि वर्णादयो जन्यन्ते यद्यभिव्यज्यन्ते कार्यनित्यपक्षयोर्द्वयोरप्यविरुद्धः संघातो वाक्यादिः शब्द इति, स्यान्मतमुत्पन्नमात्रप्रध्वंसित्वाद्वर्णादीनां यौगपद्याभावे कुतः संघात इत्यत्रोच्यते–यद्य[प्य]प्राप्तयौगपद्यानि पदानि कार्यात् प्रसिद्धा व्यवस्था लोके, किं तत् कार्यं? अर्थप्रतिपादनम्, तद्यथा वर्णादीनां तिरोहितानां परिणामान्तरमापन्नानां विनष्टानां वा बुद्धौ संस्कारमाधायावयोरभिधेयविज्ञानोत्पत्तिनिमित्तत्वं तदभावे तदभावात् प्रयोगानन्तरीयकत्वाच्च प्रत्ययस्यानुमीयते, लोकप्रसिद्धेरेव वा व्यवस्था, दृष्टो हि लोके तेषां वर्णपदादीनां शब्दानामर्थप्रत्यायनासम्भवादर्थप्रत्यायकस्तत्समुदाय इति शक्तिः [इति] प्रसिद्धः सन्निदानीं?

---

वर्णसंघातः पदम्, पदसंघातो वाक्यम्, वाक्यसंघातः प्रकरणमध्यायो वा प्रकरणसंघातोऽध्यायसंघातो वा ग्रन्थ इत्याह–**संघात इति**। संघातश्च समुदायः, स च वर्णानां नित्यत्वमनित्यत्वं वा स्यात्तथापि संघातरूपत उत्पत्तिरभिव्यक्तिर्वा पदवाक्यादेर्न विरुद्धेत्याह–**यदि वर्णादय इति**। ननु वर्णा उत्पत्त्यनन्तरक्षणे विनश्यन्ति, यथा गौरित्यादौ प्रथममुत्पन्नो गकार औकारोत्पत्तिकाले नष्टः सोऽपि विसर्गोत्पत्तिकाले, एवञ्च त्रयाणां वर्णानां युगपदवस्थितिरेव नास्ति कथं संघातः स्यादित्याशङ्कते **स्यान्मतमिति**। वर्णानां क्षणिकत्वेऽपि लोके शब्दव्यवहारदर्शनाद्वर्णसमुदायासम्भवेऽपि पदव्यवस्था परिकल्प्यत इत्याह–**यद्यपीति**, पदानामयौगपद्येऽपि नाव्यवस्था, अपि तु कार्यादर्थप्रतिपादनाद्व्यवस्थैवेति भावः। वर्णपदवाक्यादीनां संघातात् अर्थप्रतिपत्तिर्दृष्टा, देवदत्त! गामभ्याज शुक्लां दण्डेनेत्यादि, तत्र वाचां क्रमवर्तित्वादुत्तरवर्णादिश्रवणकाले पूर्ववर्णादीनां तिरोहितत्वात्, पूर्ववर्णादीनामेव वा वर्णान्तरत्वादिना परिणमनात्, यद्वा विनष्टत्वात् अनवस्थितानामपि वर्णादीनां तत्तद्वर्णादिविज्ञानजनितसंस्कारद्वारेणाभिधेयविज्ञानोत्पत्तौ निमित्तत्वम्, प्राक् तथाविधवर्णादीनामभावे तथाविधाभिधेयविज्ञानानुदयात्, तथाविधशब्दप्रयोगानन्तरमेव बोधोदयाच्च व्यवस्थाऽनुमीयत इत्यादर्शयति–**तद्यथेति**। कार्यव्यवस्थामभिधाय लोकप्रसिद्धव्यवस्थामाह–**लोकप्रसिद्धेरेव वेति**, वृक्ष इत्यादौ वकारादेः केवलं वर्णादेर्नार्थबोधजनकत्वं, अपरवर्णोच्चारणवैयर्थ्यापत्तेः तस्माद्वकारऋकारककारषकाराकारविसर्गसमुदायोऽर्थबोधजनकः स एव समुदाय इदानीं शक्तिरिति प्रसिद्धः, समुदायिभ्यो वकारादिप्रत्येकवर्णेभ्योऽन्यः, प्रत्येकवर्णेभ्योऽसम्भावितोऽर्थविशेषप्रत्ययलक्षणकार्यस्य दर्शनादिति केषाञ्चिन्मतमिति भावः। सोऽयं समुदायः कार्यस्यार्थप्रत्ययस्य निर्हेतुकत्वप्रसङ्गवारणाय प्रकल्प्यमानो न समुदायिभ्यो व्यतिरिक्तः, व्यतिरिक्तत्वे हि वर्णेषु समुदायस्य प्रतिवर्णमेकदेशेन कार्त्स्न्येन वा, समस्तेष्वेव वर्णेषु वृत्तिरनुपपत्तेः

---

१ तावनित्यत्वौ। २ सि. क्ष. त्वशब्दा०। २ सि. क्ष. छा. डे. प्रसिद्धावय०। ३ सि. क्ष. छा. डे. संस्कारमाचयोरभि०। ४ सि क्ष. छा. डे. वर्णभेदादीनां। ५ सि. क्ष. छा. डे. प्रसिद्धा स०।

समुदायः समुदायिभ्यो वर्णादिभ्यस्तदसम्भविकार्यान्तरदर्शनादन्य इति केचिदाहुः, तस्मादेव कार्यात् मा भूवद्हेतुकमर्थप्रत्यायनं तेषु तस्य प्रतिदेशं समस्तेषु वा देशैः सामस्त्येन वा वृत्त्यसम्भवान्न व्यतिरिक्त इत्यपरे, पूर्ववर्णज्ञानाहितसंस्कारापेक्षान्त्यवर्णे संहृताशेषदेशावयवः समुदायोऽभिधाता पूर्ववर्णजनितबुद्धिपरिपाकादित्येके, सिकतातोयवद्देशान्तरेष्वसतः समुदायात् कुतः सम्भवः प्रत्यायनस्य ? किन्तु तिलतैलवत् सर्वावयवेषु तिरोहिताभिमतेषु सूक्ष्मतामापन्नेषु वितत्य व्यवस्थितो बुद्धिसंस्कारपरिपाकसमुदायोऽभिव्यञ्जकः प्रत्ययस्येत्यपरे, समुदायात्मा शब्द एक एवाभिन्नः प्रत्यायकोऽर्थस्यैकप्रत्ययदर्शनात्, अनेक एव वा, प्रत्यवयवाहितसंस्कारबलाधेयार्थज्ञानत्वादित्येवमादीनि विचारान्तराण्येवैतानि पुरुषमतिसमुत्थापितशुष्कतर्कविषयत्वात्, किं न एतैः, यदि व्यतिरिक्तो यद्यव्यतिरिक्तोऽन्त्येऽशेषे समस्तेऽप्यभिन्नो भिन्नो वा प्रत्यायकः समुदायोऽवयवा एव वा योऽस्तु सोऽस्तु, सर्वथाऽर्थप्रत्यायनात् फलात् समुदायः शब्द इत्येतावदुपयुज्यते, किं कारणं ? अनवस्थिततर्कत्वात् पुरुषाणाम्, यथोक्तं 'यत्नेनानुमितोऽप्यर्थः' (वाक्य० का० १ श्लो० ३४) इत्यादि, तथा हस्तस्पर्शादिवान्धेन' (वाक्य० का० १ श्लो० ४२) इत्यादि,

---

स्यात्, तथा वृत्तिश्च न सम्भवति, दोषसम्भवादिति न समुदायो व्यतिरिक्त इत्यन्येषां मतमिति दर्शयति-**तस्मादेव कार्यादिति,** अर्थप्रत्यायनरूपात् कार्यादित्यर्थः, वर्णेषु प्रतिवर्णं देशेन समुदायस्य वृत्त्यसम्भवः, समुदायस्य देशाभावात्, सामस्त्येन प्रतिवर्णं वृत्तौ समुदायबाहुल्यम्, एकवर्णपर्याप्तसमुदायादेव बोधसम्भवेऽपरवर्णोच्चारणवैयर्थ्यञ्च, न वा समस्तेषु वर्णेषु वर्तते समुदायः, सामस्त्यासम्भवाद्वर्णानामिति न व्यतिरिक्तः समुदाय इति भावः। पूर्वपूर्ववर्णज्ञानजन्यसंस्कारसहकृतेऽन्त्ये वर्णेऽशेषान् स्वदेशान् अवयवभूतानुपसंहृत्य वर्तमानः समुदायो वाचकोऽर्थस्येत्याह-**पूर्ववर्णेति,** पूर्वपूर्वसंस्कारसहकृतायां प्राप्तयोग्यतापरिपाकायां बुद्धावन्त्यो वर्णः शब्दस्वरूपं समुदायं सन्निवेशयति स चाभिधाताऽर्थस्येति भावः। अन्त्ये वर्ण एव समुदायाभ्युपगमेऽपरवर्णेष्वसत्त्वात् सिकतायां तोयानुत्पत्तिवत् अर्थप्रत्यायनं तथाविधसमुदायान्न स्यात्, किन्तु तिलेषु तैलवत् प्रत्येकं वर्णेषु तिरोहितत्वात्सूक्ष्मतया वर्तमानेषु व्याप्यवृत्तिः समुदायः पूर्वोक्तोऽर्थप्रत्ययस्याभिव्यञ्जकोऽस्तीति मतान्तरमाह-**सिकतातोयवदिति।** प्रत्येकवर्णज्ञानजन्यसंस्कारसहकृतान्त्यवर्णज्ञानात् समुदायात्मैकः शब्दो जायते सोऽर्थप्रत्ययजनकः कार्यस्यैकत्वेन कारणस्याप्येकत्वावश्यकत्वादित्यन्यं मतं दर्शयति-**समुदायात्मेति।** समुदायावयवा एवानेके प्रत्यायकाः, प्रत्यवयवज्ञानजन्यसंस्कारबलेनार्थज्ञानस्य जायमानत्वादिति मतान्तरं दर्शयति **अनेक एव वेति।** इत्थमनेकधा विचारः प्रचरति, विचारमात्रमेव केवलमेतत्, तत्त्वन्तु दूर एव, केवलं निर्मूलपुरुषमतिभिरेते तर्का उत्थापिताः, फलरहितत्वाच्छुष्काः, नानेन विचारेणास्माकं किमपि प्रयोजनमस्ति किन्त्वर्थप्रत्ययलक्षणं फलं सर्वानुभवसिद्धम्, तच्च न कारणमन्तरेण भवितुमर्हति, तस्मात् कारणं समुदायात्मा शब्दोऽवश्यमभ्युपेयते, स व्यतिरिक्तो वा भवत्वव्यतिरिक्तो वा, अन्त्यवर्णे वा स्यात् समस्तेषु वा, एको वाऽनेको वा समुदायो वाऽवयवा एव भवतु, नात्र कश्चिद्विचार इत्याह-**इत्येवमादीनीति।** अत्र हेतुमाह-**अनवस्थितेति,** पुरुषाणां तर्का अनवस्थिताः, शास्त्राननुगतत्वे तेषां तर्काणामप्रमाणत्वात्, 'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः। अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते॥' इति कुशलेनैकेन तर्कितस्यापरेण धीमताऽन्यथाकरणात्, तस्याप्यन्येन धीमत्तरेणेतरथा तर्कणादनवस्थैव, अविरामादिति भावः। तत्र भर्तृहरिवचनं प्रमाणयति-**यत्नेनेति।** तस्यैव वचनान्तरमाह-**हस्तस्पर्शादीति,** 'हस्तस्पर्शादिवान्धेन विषमेऽभिधावता। अनुमानप्रधानेन विनिपातो न दुर्लभः॥' यथा कश्चिदन्धः विषमे दुर्गमे पथि दृष्टिमत्पुरुषावलम्बनव्यतिरेकेण त्वरया धावन् कथञ्चिदेव मार्गैकदेशं हस्तस्पर्शनावगम्यं समतिक्रान्तस्तथैवापरमपि गच्छन् पतनं लभते तथैवाऽऽगमनेत्रमन्तरेण तर्कमात्रावलम्बेन दृष्टफलेषु सम्प्राप्तप्रत्ययोऽदृष्टेष्वपि तथा प्रवर्तमानो विनिपातं लभ-

---

१ सि. क्ष. डे. °शेषदोषाव०। २ सि. क्ष. छा. डे °व्रसमेत्याकुकु०। ३ सि. क्ष छा. डे. °न्त्ये शेषसमस्ते०। ४ सि. क्ष. डे. °स्पर्शादिवरवेन, छा० स्पर्शादिवास्वेन,

किं तर्हि प्रतिपत्तव्यं आगममात्रं त्वेतत्। यथोक्तं 'जो हेउवायपक्खंमि हेउओ आगमे य आगमिओ। सो ससमयपण्णवओ सिद्धंतविराहिओ इयरो' ॥ (संम० कां० ३ गा० ४५) त्ति, ।

**पदसमूहो वाक्यम्, स चानियतानुपूर्व्यः पदसमूहः, तद्यथा-देवदत्त! गामभ्याजेति, कदाचिच्च देवदत्त! गामभ्याज शुक्लाम्, देवदत्त! महिषीं गृष्टिं कल्याणीमिति पात्रमाहर, आहर पात्रं सौवर्णञ्चेत्यादि, सर्वागमसमूहात्मकाऽऽर्हतागमो वा वाक्यम्, वाक्यार्थोऽपि तदभिधेयोऽर्थः।**

**पदसमूहो वाक्यमिति,** स चानियतानुपूर्व्यः पदसमूहः-अनुपूर्वभाव आनुपूर्व्यं, तदनियतं यस्य सोऽनियतानुपूर्व्यः पदसमूहः तद्यथा देवदत्त! गामभ्याजेति कदाचिच्च देवदत्त! गामभ्याज शुक्लाम् देवदत्त! महिषीं गृष्टिं कल्याणीमिति, पात्रमाहर आहर पात्रं सौवर्णञ्चेत्यादिव्याकरणसांख्यवैशेषिकबौद्धाद्यन्यतमग्रन्थमात्रम्, सर्वागमसमूहात्मकार्हतागमो वा वाक्यम्, वाक्यार्थोऽपि तदभिधेयोऽर्थः, उक्तः शब्दार्थः।

अयं पुनर्नयः कान्तर्भवति द्रव्यार्थे किं पर्यायार्थे? उच्यते—

**अयञ्च शब्दैकदेशत्वात् पर्यवास्तिकः, परिरुपसर्गः समन्तादर्थे; अव गत्यर्थे धातुः समन्ताद्द्रवति, कोऽसौ? भेदो भावोपसर्जनः, सोऽस्तीति यस्य[1] नयस्य मतिः स पर्यवास्तिकः।**

(**अयञ्चेति**) अयञ्च शब्दैकदेशत्वात् पर्यवास्तिकः 'मूलनिमेणं पज्जवणयस्स उज्जुसुअवयणविच्छेदो। तस्स उ सद्दाइया साहपसाहा सुहुमभेदा ॥' (सं. का. १-५) इति, आर्षेऽपि सप्तनयशताज्ञानात् पर्यवास्तिकभेदस्य शब्दनयस्य भेद इत्यर्थः, पर्यवास्तिक इति कः शब्दार्थः? उच्यते, परिरुपसर्गः

त्वेवेति तदर्थः। किन्तर्हि विज्ञेयमर्थप्रज्ञापकमित्यत्राह-**आगममात्रमिति**। आगमादेव गम्य एषोऽर्थ इति भावः। तत्र मानमाह-**यथोक्तमिति,** हेतुवादगम्यमर्थं हेतुनाऽऽगममात्रगम्यमर्थमागमेनैव यः प्रतिपादयति स स्वसमयप्रज्ञापकः, इतरस्तु सिद्धान्तविराधक इति भावः। वाक्यलक्षणमाह-**पदसमूह इति**। प्रतिनियतानुपूर्वीरहितः पदसमूहः, ईदृगानुपूर्वीविशिष्टमेव पदकदम्बकं वाक्यं भवति नान्यादृशमिति नियमो नास्तीत्याह-**स चेति**। आनुपूर्वीनियत्याभावे निदर्शनमाह-**तद्यथेति**। एवंविधपदसमूहो व्याकरणसांख्यादिग्रन्थरूप इत्याह-**इत्यादीति**। व्याकरणसांख्यादिसर्वागमसमूहो वाक्यमित्याह-**सर्वागमेति,** प्रत्येकं सर्वेषामागमानां नयात्मकानां समूहात्मक आर्हतागमो रत्नावलीवत् इति। वाक्यार्थमाह-**वाक्यार्थोऽपीति,** वाक्येन प्रतिपाद्योऽर्थः वाक्यार्थ इत्यर्थः। किमयं नयो द्रव्यार्थः पर्यायार्थो वा, कस्मिन्नस्य समावेश इत्यत्राह-**अयञ्चेति**। विधिनियमनियमनयोऽयं शब्दनयस्यैकदेशः, अत एव पर्यायार्थेऽन्तर्गत इत्याह-**अयञ्च शब्दैकदेशत्वादिति**। तत्र सम्मतिगाथां प्रमाणयति-**मूलनिमेणं इति**। विशेषविषयकप्रविच्छेदस्य ऋजुसूत्रवचनविच्छेदो मूलाधारः, ऋजुसूत्रस्य एवमसमर्थो नान्यथेति प्ररूपयतः वचनविच्छिद्यमानं यत् तत् मूलनिमेनम्, पूर्वापरपर्यायैर्विविक्ते एकपर्याये एव ऋजुसूत्रस्य प्ररूपयतो वचनं विच्छिद्यते, एकपर्यायस्यापरपर्यायासंस्पर्शात्, तस्य ऋजुसूत्रस्यैव शब्दसमभिरूढैवंभूताख्यो विकल्पाः शाखाप्रशाखाः सूक्ष्मभेदा इत्यर्थः। आर्षमपि प्रमाणयति **आर्षेऽपीति,** द्रव्यार्थपर्यायार्थनययोः प्रत्येकमार्षे सप्तशतं नया अभिहिताः तत्र पर्यायार्थिकभेदस्य शब्दनयस्य भेदोऽयमित्यर्थः। पर्यवास्तिकशब्दार्थमाह-परिरुपसर्ग इति समन्ताद्गतिमत् द्रव्यमिति व्युत्पत्त्यर्थः। समन्ताद्गतिमान् भेदो भवति, क्षणविनश्वरत्वात् स

1 सि. दे. छा. इत्यर्थेऽपि।

समन्तादर्थे, अव गत्यर्थे धातुः, परितोऽवनं समन्ताद्गमनं पर्यवः, तथाऽऽचष्टे—समन्ताद्भवति, इत्थमक्षरार्थमुक्त्वा वस्तुतो दर्शयति—कोऽसौ ? भेदो भावोपसर्जनः—यो भवति घटादिर्भेदः स भवनक्रियोपसर्जनपर्यवः सोऽस्तीति यस्य नयस्य मतिः स पर्यवास्तिक इति तद्धितप्रत्ययान्तार्थः प्रकृत्यर्थेन विशेषितो ज्ञेयः।

किमेताः स्वमनीषिका एवोच्यन्तेऽस्ति किञ्चिन्निबन्धनमस्यार्षमपीति अस्तीत्युच्यते, तद्यथा—

**निर्गमनवाक्यमप्यस्य 'दुवालसंगं गणिपिडगमेगं पुरिसं पडुच्च' (नन्दि० ४२) इत्यादीति विधिनियमनियमः।**

(**निर्गमनेति**) निर्गमनवाक्यमप्यस्य 'दुवालसंगं गणिपिडगमेगं पुरिसं पडुच्च' इत्याद्यार्षमन्थं साक्षित्वेनाहैतन्मतसंवादिनम्, यद्यप्ययमागमोऽनेकपुरुषान्वये सदा व्यवस्थितः तथापि प्रत्येकं पुरुषविशेषाश्रित एव निश्चयाय, क्रियासामान्योपसर्जनविशेषपरमार्थत्वात् भवत्यर्थस्य, तच्च द्वादशाङ्गं गणिपिटकं अत एव सादिसपर्यवसानञ्च क्षणिकमेवेत्यर्थः, इत्यादिग्रहणादन्यदपि, प्रकृतिस्थित्यनुभावप्रदेशबन्धादिप्ररूपणा एकसमयमात्रविषया मिथ्यादर्शनादिपरिणामाध्यवसायप्ररूपणा च द्रष्टव्या, इति धर्मसमाप्तौ, इत्थं विधिनियमयोर्नियम एव प्रदर्शितो गुणप्रधानभावेनायमष्टमोऽरः समासश्च द्वितीयो, मार्गो उभयविकल्पभेदोपदर्शने ॥

## – अष्टमोऽरः –

## –: समासः :–

भेदो भावोपसर्जनो ग्राह्य इत्याह–**भेद इति**। भावो हि क्रियाविशिष्टा घटादिभेदास्तु भवनक्रियासमन्विता ... भवनक्रियोपसर्जनश्च विशेषोऽस्य नयस्य विषय पर्यवोऽस्तीति मतिरस्यास्ति पर्यवास्तिक, 'आस्तिनास्तिदिष्टं मतिः' ... प्रत्ययान्त पर्यवास्तिप्रकृतिकतद्धितप्रत्ययान्तस्यार्थ इत्याह **यो भवतीति**। अस्य नयस्य निबन्धनमार्षं पृच्छति–**किमेता इति**। मूलभूतमार्षमाह–**निर्गमनेति**। अनेकपुरुषापेक्षया द्वादशाङ्ग गणिपिटकस्य नित्यत्वेऽपि ... उपसर्जनभावप्रधानस्य कथं निबन्धनं भवितुमर्हतीत्याशङ्कायामाह–**यद्यप्ययमागम इति**, एकपुरुषापेक्षया द्वादशाङ्गगणिपिटकस्य सादिसपर्यवसितत्वात् क्षणिकत्वेन निबन्धनं भवितुमर्हतीति भाव। अन्यदप्यागमोक्तिप्ररूपणामादिग्रहणेन ... सूचयतीत्याह -**इत्यादिग्रहणादिति**। अन्यदपीत्यागममेव दर्शयति–**प्रकृतीति**, एकसमयमात्रविषया प्रकृतिस्थित्यनुभावप्रदेशप्रभेदबन्धादीनां प्ररूपणा मिथ्यादर्शनादिपरिणामाध्यवसायप्ररूपणा च तथाविधा ज्ञातव्या भाव। एवं विधिनियमयोः सामान्यविशेषयो ... उपसर्जनप्रधानभावेन नियमप्रदर्शनपरोऽष्टमोऽरः। विधिनियमोभयाश्रयेण भङ्गानामुपदर्शको द्वितीयमार्गोऽथ निरूप्यत इत्याह–**इत्थमिति**।

इति विजयलब्धिसूरिविरचिते विषमपदविवेचने नयचक्रशास्त्रस्याष्टम उभयनियमनयारः समाप्तः।

1 सि. क्ष. छा. डे. °स्यार्षमपीति। 2 सि. क्ष छा डे सार्षग्रथं 3 सि. क्ष डे यस्याप्ययमागमो छा. यस्यप्यगमागमो०। 4 छा. सि. तदा। 5 सि. क्ष. छा. डे. मात्रसप०।

